श्रीमद्गोस्वामिकुलतिलक-आचार्यवर्य-श्रीमद्गोवर्धनलालजीमहाराज.



प्राकट्यसंवत् १९१७ श्रावण कृष्ण. १.

श्रीकृष्णाय नमः ।

श्रीमद्भागवततृतीयस्कन्धस्य विवृतिः

# श्रीसुबोधिनी ।

[illegible]

श्रीमद्वल्लभाचार्य्यचरणविरचिता ।

श्रीमद्गोस्वामिश्रीपुरुषोत्तमजीमहाराजप्रणीतप्रकाशसहिता ।

श्रीनाथद्वारस्थविद्याविलासिगोस्वामितिलक-
श्री १०८ श्रीगोवर्द्धनलालजी-
महाराजानामाज्ञया

भट्ट श्रीरमेशशास्त्रितनुजनुषा शीघ्रकवि-
नन्दकिशोरशर्मणा-
संशोधिता ।

विद्याविभागद्वारा-

श्रीनाथद्वारे, श्रीसुदर्शनयन्त्रालये मुद्रिता ।

संवत् १९८४ भाद्रपद कृष्ण १ रवौ

निर्मञ्छनं ६ रूपकाः

॥ श्रीहरिः ॥



# प्रस्तावना ।

विदितमिदं यदिह श्रुतिशास्त्रमदर्शितेषु सेतुषु बलीयसानेहसा भज्यमानेषु श्रीहरिस्तत्तदाचार्यरूपेणावतीर्य पुनस्तान् सन्धाय दृढीकरोतीति । यद्यपि भूयांसः सन्ति क्षेमङ्कराः पन्थानः, परं तत्र कर्मज्ञानयोः साधनानां दुष्करत्वेन श्रीहरिभक्तिरेवैका तरलतरतरङ्गरङ्गनटनेन भ्राम्यतामाचूडमामज्जतां महापोतायमाना समुज्जृम्भते । सम्प्रति कलिकलुषदूषितहृदयानसह्ययजन्मसु नानाभूमिकापरिग्रहेण कदर्थितान् स्वान् कृपया सद्यस्तरां पारेभवं प्रापय्य निजचरणसरसिजसौरभमास्वादयितुं श्रीपुरुषोत्तम एव साक्षात् 'यदा यदा हि धर्मस्य' "छन्नः कलौ यदभवस्त्रियुगोऽथ सत्त्वम्" इत्यादिवचनैः सतां चेतासि प्रत्याययमानः श्रीवल्लभाचार्यरूपेणावततारेत्यातिरोहितमेव विदुषाम् ।

महात्मनामोजस्तेजः प्रकृतिराकृतिः कृतिः स्वयमभिव्यक्ता भवति न तत्र भेरीघोषाऽऽवश्यकता । सकलमहाविदुषां मौलिमणयो महात्मनामादिगणनीयाः प्रभावशालिनां प्रथमे निरुपमदयासुधासिन्धवः श्रीवल्लभाचार्या आसन्निति तदभिज्ञानामभिव्यक्तमेव । तच्चरितग्रन्थाः सन्ति भूयांसः, परं तेभ्यो भारतमार्त्तण्डवेदान्तमहाचार्यैरस्मद्गुरुभिः श्रीगट्टूलालजीतिप्रसिद्धैः श्रीगोवर्द्धनभट्टमहाशयैः संक्षिप्य संगृह्य चतुस्त्रिंशद्वर्षेभ्यः पूर्वं स्वप्रकाशित आर्यसमुदायमासिकपत्रे मुद्रितं सुचरितमिहाक्षरशोऽनूद्यते—

"श्रीमद्वल्लभाचार्यचरणास्तु तैलङ्गवेल्लनाटीज्ञातीयस्यान्ध्रदेशगत—काँकरवाटग्रामवासिनः खम्भंपाटीवारु इत्युपनामवतः पूर्वपुरुषपरम्परया स्वयं च यद्सोमयाजिनः श्रीमल्लक्ष्मणभट्टदीक्षितस्य पुत्रतया पाण्डववैश्वानरशरशशधरमिते ( १५३५ ) विक्रमार्कशकवत्सरे पूर्णिमान्तगणनया वैशाखकृष्णपक्षेऽमान्तगणनया चैत्रकृष्णपक्षे एकादश्यां प्रादुर्भूताः कृतकाशीवाससंकल्पैः पितृपादैः सममेकादशाब्दीं स्ववयस आद्यां वाराणसीमध्युषितास्तत्रैवोपनयनोत्तरं कौमार एव वेदस्यैकादशशाखाः साङ्गाः षड्दर्शनादीनि च गुरोरधीत्य पूर्णसङ्कल्पैः स्वतातमहाशयैः समं स्वदेशं गन्तुं प्रवृत्ता मध्येमार्गं शेषाद्रौ तेषु भगवद्धाम गतवत्सु सत्सु स्वभ्रात्रा सत्रा मातरं गृहं प्रापय्य स्वयं तुङ्गभद्रातीरे विद्यानगरे सकलवैष्णवविद्रावकान्वद्धपणान्वादिगणान्विजित्य सायणमाधवद्वारा वेदभाष्यकारयितुर्वीरबुक्कराजस्य पौत्रं कृष्णदेववर्माणं महीदेवमुल्लास्य पृथ्वीपरिक्रमणमनायिनस्तीर्थविशेषे श्रीमद्वेदव्यासविष्णुस्वामिसंप्रदायचरमाचार्येण योगबलादनिलात्मकरूपं कृत्वा स्थितेन श्रीमद्बिल्वमङ्गलाचार्येण दीक्षापूर्वकं प्रत्तं तत्संप्रदायाचार्यपदं स्वीकृत्य षड्भिः षड्भिर्वर्षैरेकैको दिग्विजय इति त्रीन्दिग्विजयान् "तीर्थीकुर्वन्ति तीर्थानि स्वान्तस्थेन गदाभृता" "हरन्त्यघं तेऽङ्गसङ्गात्तेष्वास्ते ह्यघभिद्धरिः" एवमादिश्रीभागवतप्रभृतिवचनानुरोधात्सकलतीर्थसार्थपावनानि त्रीण्यशेषभारतभूमिपरिक्रमणानि च स्ववयसस्त्रिंशद्वर्षावधि विधाय दिग्विजयेष्वेव मध्ये श्रीपाण्डुरविट्ठलनाथाज्ञया वाराणस्यां स्वसजातीयस्य कस्यचिद्द्विजवरस्य सुतां महालक्ष्मीनाम्नीमष्टवर्षां ब्राह्मविवाहविधिना परिणीय मथुरामण्डले श्रीमद्गोवर्धनाख्यगिरिराजाधित्य·

कायां स्वयमभिव्यक्तं साक्षादानन्दमयाकारं श्रीमद्गोवर्धनोद्धरणसामयिकं भगवत्स्वरूपं तदनुज्ञया विधापितनूतनमन्दिरविशेषे प्रतिष्ठाप्य एवंविधानि विविधानि लोकोत्तरकर्माणि विदधानास्त्रिर्नानादिग्देशविजयोत्तरं स्वदेशान्मातृचरणान्वाराणसीतः स्वधर्मपत्नीश्चानीय प्रयागसमर्यादे ( अडेल ) इतिप्रसिद्धेऽलर्कपुरे कृतनिवासा आहितश्रौताग्नयः प्रतिवसन्तं ज्योतिष्टोमेनापरैश्च क्रतुवरैः श्रीवरं यजमाना आरब्धचरानन्यान्पूरयन्तो नवांश्च रचयन्तो मध्ये मध्ये प्रयागकाशीमध्यपातिनि चरणाद्रौ कादयां मथुरामण्डले श्रीमद्गोवर्धनोपत्यकायां च निवसन्त आचार्यपदेरीकारमारभ्यानारतं तत्र तत्र सर्वत्र दर्शनान्तरमतान्तरनितान्तरतवादिमदावलमदावलेपलोपने तामसोच्छेदनेऽमूलमापणपुरःसरदैवपरित्राणे अधर्माभ्युत्थानप्रतिविधानधर्मस्थापनादौ च दर्शितहरिभावा मुनिदर्शनशरधरणिमिते ( १५६७ ) नयनमुनिपाण्डवमृगाङ्कमिते ( १५७२ ) च विक्रमार्कशकवर्षे क्रमात्प्रकटीभूतयोस्तनुजनुषोः श्रीमद्गोपीनाथविठ्ठलनाथाभिख्ययोः स्वविधित्सितशुद्धाद्वैतनिर्गुणभक्तिमार्गप्रचारधुरन्धरतां निरीक्ष्य प्राकट्यतो यथोचितं चीर्णाश्रवर्णानुरूपसंपूर्णाश्रमतद्द्वितयधर्माः प्रोत्तीर्णाखिलर्णाः भगवदाज्ञानुरोधात्सर्वशास्त्रसंमतं त्रिदण्डमात्राज्यं परिगृह्य गृहं बाह्यं चाखिलं तृणाय मन्यमानास्तूर्णं वाराणसीमुपव्रज्य मुनिवसुबाणावनिमिते ( १५८७ ) विक्रमार्कशकहायने शुचि शुचिदले द्वितीयादिने तात्कालिकतृतीयायां हनुमत्तीराभ्यर्णे सुरसरिदन्तर्वर्तिभैरवतीर्थे श्रीहरिचरणारविन्दमरन्दं ब्रह्मद्रवं प्रविश्य दिवाकरद्वारेण भगवद्धामाभिन्यविशन्निति तेषां चरित्रसंक्षेपः ।

द्विपञ्चाशतमब्दानि द्वौ मासौ सप्त वासरान् ।
श्रीमदाचार्यचरणैर्महीतलमलंकृतम् " इति ।

श्रीमद्वल्लभाचार्यचरणाः पूर्वोत्तरमीमांसयोर्भाष्ये तत्त्वार्थदीपनिबन्धं समग्रश्रीमद्भागवतस्य सूक्ष्मटीकानाम्नीं व्याख्यां च व्यदधुः । श्रीमद्भागवतस्य विशिष्टव्याख्यानरूपा श्रीसुबोधिनीं नाम विवृतिमाद्यस्कन्धत्रयस्य समग्रदशमस्कन्धस्य, एकादशस्कन्धाद्यचतुरध्याय्याः किञ्चिदधिकायाः प्रादुर्भावयाञ्चक्रुः । एवं खण्डव्याख्याने भगवदाज्ञैव हेतुः—उक्तं च स्वयमेव " आज्ञा पूर्वं तु या जाता गङ्गासागरसङ्गमे । याऽपि पश्चान्मधुवने न कृतं तद्द्वयं मया ॥ देहदेशपरित्यागस्तृतीयो लोकगोचरः " इति । श्रीसुबोधिन्यां तत्त्वार्थदीपे च सप्तधार्थाः समर्थिताः " शास्त्रे स्कन्धे प्रकरणेऽध्याये वाक्ये पदेऽक्षरे । एकार्थं सप्तधा जानन्नविरोधेन मुच्यते " इति प्रथमस्कन्धोक्तेः ।

एषां मध्ये चत्वारोऽर्थास्तत्त्वार्थदीपनिबन्धे, श्रीसुबोधिन्यां तु स्कन्धाद्यर्थत्रयस्य पुनः परिशीलनपुरस्सरं मुख्यतया वाक्यादित्रयार्था एव व्यवारिषत । उक्तं च श्रीसुबोधिन्यारम्भे " अर्थत्रयं तु वक्ष्यामि निबन्धेऽस्ति चतुष्टयम् "

तत्तन्महानुभावकृतासु सतीषु रसवतीषु बहुषु विवृतिषु मार्मिकवैष्णवविद्वन्मधुकरैर्विगालितवेयान्तरमियमेव समाम्नायते । अन्या अपि सन्ति बह्व्यो व्याख्यास्तत्र प्रथमादिस्कन्धेषु प्रकाशलेखौ, श्रीदशमस्कन्धे श्रीविठ्ठलदीक्षितकृता टिप्पणी लेखप्रकाशौ बालकृष्णदीक्षितविरचितयोजना चेत्यादयस्तावत्तावद्भागेषु समुल्लसन्त्येव । काव्यकाव्यरत्नाकरशुद्धाद्वैतभूषणेन विदुषा श्रीवल्लभद्रेण महता परिश्रमेण संशोध्य प्रथमद्वितीयस्कन्धयोः प्रकाशितयोस्तृतीयस्कन्धरसमास्वदितुं रसिकानां महतीमुत्कलिकामालोच्य नाथद्वारस्थविद्याविलासिगोस्वामितिलकश्री१०८श्रीगोवर्द्धनलालजीमहाराजचरणैर्मुद्रयितुमाज्ञप्तम् ; ततस्तदीयपुस्तकालयस्थपुस्तकचतुष्टयसाहाय्यतो मुद्रितोऽयं स्कन्धः । नासीदिह लेखपुस्तकम् । प्रकाशद्वयपुस्तकसत्त्वेऽपि तस्य वर्णचणपाणिप्रमादपूरिततया प्रथमं मूलमात्रमेवारभ्यत मुद्रयितुम् । आद्यपञ्चाध्याय्यामाङ्कि-

॥ श्रीहरिर्जयति ॥

श्रीमद्भागवतटीका

# श्रीसुबोधिनी ।

## श्रीमद्वल्लभाचार्यविरचिता

## ( तृतीयस्कन्धः )

अधिकारिषु साङ्गं हि श्रवणं सुनिरूपितम् ।
स्कन्धद्वयेन, शेषेषु क्रियते विषयाभिधा ॥ १ ॥
त्रयस्त्रिंशदथाऽध्यायास्तृतीये सर्गवर्णने ।
स्वाभिप्रेते सविशेषे हरेर्माहात्म्यसूचके ॥ २ ॥
लोके सर्गविसर्गौ हि यादृशौ नेह तौ मतौ ।
किन्तु तौ लीलया वाच्यौ तेन स्कन्धद्वयं ततम् ॥ ३ ॥
भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः ।
ब्रह्मणो गुणवैषम्यादिति सर्गस्य लक्षणम् ॥ ४ ॥
अत्रार्थो द्विविधोऽप्यस्ति विवक्षित इति स्फुटः ।
ब्रह्मतो जायते सर्गो ब्रह्मार्थं क्रियते परः ॥ ५ ॥
अतोऽत्र द्विविधः सर्गः श्रुतिमाहात्म्यानुसारतः ।
भूतमात्रेन्द्रियधियः प्रथमे त्रिविधा मताः ॥ ६ ॥
अधिकारे हरौ कार्ये सत्त्वादिगुणभेदतः ।
अतश्चतुर्णामुत्पत्तौ द्वादशाध्यायवर्णनम् ॥ ७ ॥
ततोऽत्रैव युक्तरूपस्य ब्रह्मणो विनिरूपणम् ।
गुणवैषम्यकथनं षडध्याय्या निरूप्यते ॥ ८ ॥
कर्मादिमार्गा वेदोक्ताः फलैस्ते यदि स्थिराः ।
सर्गोऽत्र नैव जायेत ततस्तन्नाश उच्यते ॥ ९ ॥
कामेन कर्मनाशः स्यात् क्रोधेन ज्ञाननाशनम् ।
लोभेनापि च भक्तेर्हि धर्मिज्ञानीश्वरैः कृताः ॥ १० ॥

---

१ दशसु स्कन्धेषु इति प्रकाशः २ शुकव्यासयोराशयगोचरे प्र ३ अव्याकृतगुणक्षोभात् (१२स्क. ७अ ११श्लो) इति द्वादशस्कन्धोक्तमहापुराणसामान्यलक्षणयो विशेषस्तन्माहित्ये प्र ४ अत्रार्धेन सूक्ष्मलक्षणानुवाद. प्र ५ ब्रह्म इति सम्बन्धषष्ठी, तेन रूपेण कर्तृत्वतादर्थ्ययोरुभयोरपि सङ्ग्राहिका, तेन भगवदुपादानको भगवदर्थश्च द्वौ सर्गौ प्र ६ भगवदुपादानकसर्गप्रकरणे प्र. ७ अधिकारादिपदेषु तादर्थ्ये सप्तमी प्र. ८ हरिशब्द पुरुषावतारवाचक प्र ९ कर्मशब्दो मौतिकसृष्टिपर प्र १० त्रयोदशेऽध्याये प्र ११ क्रियाशक्तिमद्ब्रह्मस्य वराहरूपस्य लक्षण प्र १२ आदिना भक्ति ज्ञाने प्र १३ फलमोक्षपर्यायकतया प्र. १४ कामक्रोधलोभा क्रमेण धर्मज्ञानाख्ये (कश्यप मनकादि हरवाले) कृता प्र

ततो गुणानां वैषम्यं तमःसत्त्वरजस्त्वतः।
एवमेकोनविंशत्या हरिकर्तृक ईरितः॥ ११॥
चतुर्दशभिरध्यायैर्हरये सर्ग उच्यते।
गुणवैषम्यमेकेन भगवद्भोगसिद्धये॥ १२॥
भूतमात्रेन्द्रियधियां जन्म भोगाय देहतः।
चतुर्भिरुच्यतेऽध्यायैर्नवभिश्च गुणास्त्रयः॥ १३॥
यादृशैर्भगवद्भोगस्तेषां सर्गो निरूप्यते।
कथायां त्वधिकारोऽत्र चतुर्भिः करणं परैः॥ १४॥
सर्गस्य सविभूतेश्च सर्वत्रैवानुवर्णनम्।
उत्तमे त्वधिकारे हि लीलामात्रं फलाय वै॥ १५॥
किं पुनर्दशधा लीलेत्येवं वैदुरिकी कथा।
तत्राऽधिकारे प्रथमे देहवैशिष्ट्यकारणम्॥ १६॥
भूतानां संस्कृतानां हि त्रेधा सर्गो निरूप्यते।
तीर्थसङ्गगुणस्मृत्या पञ्चधा वा निरूप्यते॥ १७॥
तीर्थद्वयेन हरिणा भक्तैस्तत्कथयाऽपि च।
अस्मिन् भागवते शास्त्रे पूर्वदेहस्य नाशनम्।
नापेक्ष्यते यतः सर्वे भक्तिमार्गाधिकारिणः॥ १८॥

एवं पूर्वाध्यायान्ते 'तद्वोऽभिधास्ये शृणुत' इत्युक्तम्। शुकोऽपि सर्गे विदुरकथैव युक्तेति तत्कथाक्षेपार्थं विदुरेणैव प्रश्नः कृत इत्याह श्लोकद्वयेन—

## श्रीशुक उवाच।

**एवमेतत्पुरा पृष्टो मैत्रेयो भगवान्किल।**
**क्षत्त्रा वनं प्रविष्टेन त्यक्त्वा स्वगृहमृद्धिमत्॥ १॥**

एवमिति। यथा त्वया बहवः प्रश्नाः कृताः पूर्वपक्षपुरस्सरम्। एतत् सर्वमग्रे वक्ष्यमाणम्। एवमेव विदुरेण पृष्टो मैत्रेय आहेति नोच्यते। नहि सर्वे पदार्थाः पृष्टा वक्तव्याः। यदेव तस्योपकारि भवति तदेव वक्तव्यमिति भावः। कियतीं भगवत्कथां श्रुत्वा तस्या हृदयं गतायाः तद्दार्ढ्यार्थं विशेषं पृच्छति सर्वाऽपीति कार्यसिद्धिः श्रोतुर्निरूप्यते। अन्यथा व्युत्थितस्य शङ्कया न वक्तव्यं स्यात्। भगवत्त्वमत्र शास्त्रे द्विविधम्, नित्यं कार्यं च। तद्भगवति नित्यम्। तत्प्रसादविषयेषु कार्यम्। तस्याऽधिकारार्थमुपदेशादिषु गुरुत्वज्ञा-

१ सुबोधिन्याम् प्रकाश. २ अष्टभिरध्यायैः प्र ३ तत्त्वाधिकारस्य प्रथमस्कन्ध एवोक्तत्वात् पुनः कथनस्य किं प्रयोजनमत आह उत्तमे त्विति प्र ४ तु ख, ग च ५ विदुरमैत्रेयसंवादरूपा कथा प्र ६ अर्थनिरूपणप्रस्ताव प्र ७ अधिकारप्रकरण प्र ८ अध्याय प्र ९ [illegible] मुख्यप्राणस्यापहतपाप्मत्वात् [illegible] नापेक्ष्यत इति [illegible] इत्यत्रैवोक्तम् प्र १० 'पृथिव्यापस्तेजोवाय्वाकाशा मे शुद्ध्यन्ताम्' इति विरजा [illegible] प्र। ११ विदुरस्य प्र १२ शङ्कायाम् इ. १३ मैत्रेयस्य प्र

नित्वालिसिद्धयर्थमिहोच्यते । अतो मैत्रेयस्यापि प्रमेयसञ्चारणसामर्थ्यार्थं सर्वसन्देहवारणसामर्थ्यार्थं च भगवत्त्व निरूप्यते । मित्राया पुत्र इति जन्मत एव तस्य सर्वोपकारित्व सूचितम् । अग्रे भगवच्छब्दाच्च न तथा दूषणम् । किलेति प्रसिद्धिरुभयत्र, भगवत्त्वे प्रश्ने च । अन्यथा स्वस्य तदन्वयप्रवेशाभावात् कथनमयुक्त स्यात् । क्षत्ता नाम अन्त पुराध्यक्षः सर्वथा जितेन्द्रिय । तादृशाभावे नपुंसकोऽपि क्रियते । अतो विदुरस्य जितेन्द्रियत्व वक्तु क्षत्तृत्वमाह—क्षत्रेति । वनं प्रविष्टेनेति तादृशस्य सर्वपरित्यागपूर्वकवनस्थिति, प्रश्नाधिकारो निरूपित । वनस्यैवेप्सितत्वात् कर्मत्वम् । अकर्मस्तत्रैव देहत्यागविवक्षया । त्याज्यस्योत्कृष्टत्वमधिकारसूचकमिति तदाह—स्वगृहमृद्धिमदिति । अगम्याधीनत्व सर्वसम्पत्तिश्च उद्वेगाभावाय । चित्तोद्वेगेन यत क्रियते कर्तव्यत्वसहितेनाऽपि न तत्फलायेति ॥ १ ॥

[1] ननु ज्ञानमार्ग एव परित्यागोऽङ्गम्, गृहस्य तद्विरोधित्वात्, भक्तिमार्गे तु गृहस्योत्कृष्टत्वकथनादुद्वेगादेव तस्य गमनमाशङ्क्य निवारयति—

यद्वा अयं मन्त्रकृद्वो भगवानखिलेश्वरः ।
पौरवेन्द्रगृहं हित्वा प्रविवेशात्मसात्कृतम् ॥ २ ॥

यद्वा अयमिति । यद् गृहं भगवता आत्मसात्कृतम् । भगवान् विदुरगृह स्वगृह लोकप्रतीत्या मन्यते । न केवलमभिमतिमात्रम्, किन्तु व्यवहारोऽपि तत्र भगवदीय एवेत्याह—प्रविवेशेति । हेत्वन्तराणि निवारयति—पौरवेन्द्रगृहं हित्वेति । दु शासनगृह भगवत्स्थित्यर्थमिन्द्रगृहादप्युत्तम ते प्रार्थ्यमानमपि हित्वा । उचित च दु शासनगृहे गन्तु मन्त्रार्थमागतस्य । तत्रापि भक्ताना कार्यसाधकस्य, तत्रापि भगवत सर्वोत्कृष्टपूर्णगुणवत, उत्कृष्ट एव स्थाने स्थातुमुचितम् । किञ्च । अभक्तत्वदेत्यत्वादि धर्मा न शङ्कनीया. यतोऽयमखिलेश्वर सर्वस्यापि स्वामी सर्वनियन्ता । अतो यथा भगवद्गृहे देवाल्याद्यो स्थितिरचिता, तथा तस्य स्वगृहेऽपि । तथापि गृहमिति त्यक्तव्यमेव । गृहस्थितेरुत्कृष्टत्व न भगवदीयत्वमात्रेण, किन्तु भगवता सह स्थित्या भगवत्कार्यार्थं वा; अन्यथा न स्थातव्यमिति स्थिति ॥ २ ॥

प्रश्ने कृते नूत्तर देयम न त्वन्यस्य वचन तत्र वक्तव्यमित्याशङ्क्य तत्रत्यो देशकालावुत्कृष्टौ भविष्यत इति तौ पृच्छति—

राजोवाच ।

कुत्र क्षत्तुर्भगवता मैत्रेयेणाऽऽस संगमः ।
कदा वा सह संवाद एतद्वर्णय नः प्रभो! ॥ ३ ॥

कुत्रेति । अनुवादे[2] पूर्वोक्तपदाना कीर्तनम् । तदुक्तार्थपरिज्ञानबोधकम् । प्रश्ने हि सङ्गमोऽपेक्ष्यते । महता सङ्गमनिमित्तो देश उत्कृष्ट एव भवतीति आस सङ्गम इति । समागम इति पाठेऽपि ऽस्त्येत्यादिप्रयोग सिद्ध एव । कदा वेति कालस्यानादरणीयत्वम् । सह संवाद इति साक्षात् राज्ञा बहुपृष्टमिति प्रश्नक्रमेणैवोत्तर वक्तव्यमित्याशङ्क्य निवारयति—एतद्वर्णयेति । न इत्यस्मभ्यमुपकारित्वात् । प्रभो इति सामर्थ्यं पूर्वोत्तरमत्रैव सङ्क्रामयितुम् । अनेनैव वा तत्सन्देहनिवारण कर्तुं सूचितम् ॥ ३ ॥

---

१ तथा च सर्वोपकारित्वात् तस्य मित्रत्वम्, न तु जाबाल्यादिवत् प्रभाग पुत्रकृतु तु तथानेपाठ २ जितेन्द्रियत्वमत्व च ख ३ क्षत्रियत्वमित्यपिपाठ प्रकाशे ४ अपात्यावेरम् क ५ एतत्प्रश्नात् पूर्वम् ग

पृच्छामेक्षयाऽपि मुख्यतयैतच्छ्रवणे हेतुमाह—

**न ह्यल्पार्थोदयस्तस्य विदुरस्याऽमलात्मनः ।**
**तस्मिन्वरीयसि प्रश्नः साधुवादोपबृंहितः ॥ ४ ॥**

**न ह्यल्पार्थोदय इति** । खण्डश पदार्थश्रवण खण्डमेव फल जनयति । इद तु खण्डमपि अखण्डमेव फल जनयिष्यति; सबन्धिवैशिष्ट्यात्, देशकालपात्रविशेषे जलादिदानवत् । तदाह—अल्पस्याऽर्थस्य उदयो यत्र । तादृश स प्रश्नो न भवतीति हीत्यनेन तादृशस्य वैयर्थ्यापत्तिरिति युक्तिरुक्ता । सबन्धिनो वैशिष्ट्य माह—**विदुरस्याऽमलात्मन इति** । परमनीतिज्ञस्य निर्मलान्त करणस्येत्यर्थ । वय त्वनीतिज्ञा शापादिना च न शुद्धान्त करणा । अतो यत् किञ्चित् पृच्छाम इति भाव । ततोऽपि तद्गुरुरत्युत्कृष्ट इत्याह—**वरीयसीति** । **साधुवादोपबृंहित इति** । अन्तरुत्साहो हेतुरुक्त फलावश्यभावाय । अत एव तेन उपबृंहितोऽधिक पुष्ट कृत इति ॥ ४ ॥

अत्र देशकालपरित्यागहेतवस्त्रय पृष्टा , तत्र प्राथमिकत्वात्परित्यागहेतुर्वक्तव्य । स च साक्षाद्भगवत्कथारूपो न भवतीति शुकेनाऽवर्णनीयत्वमाशङ्क्य तादृशवर्णनाया हेतुमाह सूत—

## सूत उवाच ।

**स एवमृषिवर्योऽयं पृष्टो राज्ञा परीक्षिता ।**
**प्रत्याह तं सुबहुवित्प्रीतात्मा श्रूयतामिति ॥ ५ ॥**

**स एवमिति** । ऋषयो हि मन्त्रद्रष्टार । येन मन्त्रेण भगवदज्ञाना मध्ये उत्कृष्टेन शीघ्रमस्य हृदय शुद्ध भविष्यतीति तदुपकारार्थं शुकप्रवृत्तिं बोधयति । **वर्यपदेन** स्वहानिर्निवारिता । **अयमिति** पुर स्थितत्वेन तस्य भगवत्त्व फल जातमिति परोपकारनिरतत्व सूचितम् । **राज्ञेति** लोके तत्प्रश्नोत्तरमावश्यकम् । **परीक्षितेति** तस्य बीजसस्कार सूचित । अत इद तदुपकारीति **प्रत्याह** । सर्वतत्त्वपरिज्ञापनार्थं **सुबहुविदिति** । मुख्यभगवत्त्वेनोपस्थितत्वात् **प्रीतात्मा** । अत्रापि शङ्कान्तर न कर्तव्यमिति **श्रूयतामित्याह**।५।

अस्य परित्यागो भगवन्निमित्त भगवतैव कृत इति निरूपयितुम् , भगवत्पक्षपातिनो भगवद्विमुखै सह स्थितिरनुचितेति वक्तुम् कौरवाणा भगवद्विमुखत्वमाह चतुर्भि —

## श्रीशुक उवाच ।

**यदा तु राजा स्वसुतानसाधून्पुष्णन्नधर्मेण विनष्टदृष्टिः ।**
**भ्रातुर्यविष्ठस्य सुतान्विबन्धून्प्रवेश्य लाक्षाभवने ददाह ॥ ६ ॥**

यदा त्विति । विदुरस्य गृहत्यागे दशभिर्हेतुरुच्यते । चतुर्भिरपराधोक्तिरेकेन हि समागमः । त्रिभिर्मन्त्रोक्तिरपरे निषेधननिवारणे ॥ १ ॥ धर्मशास्त्रविरुद्ध लोकशास्त्रविरुद्ध नीतिविरुद्धमीश्वरवचनोल्लङ्घनमित्यपराधा । यद्यपि धृतराष्ट्रेणैव न कृतम्, तथापि 'अप्रतिषिद्धमनुमत भवति' इति न्यायादपराधित्व भवति,

---

१ मन्त्रस्य ग्रवा

प्रयोजकत्वात् । स एव कथ्यते । नैमित्तिकत्वाच्च निमित्तपरित्यागकथनं न दोषाय । अत्र मुख्यापराधो भगवद्वाक्योल्लङ्घनम्, तत्स्वभावतो जीवस्य न घटत इति दोषत्रयसंनिपातस्तद्धेतुत्वेन वक्तव्यः । न हि संनिपाताभावे कश्चिद्भगवद्वाक्यं न मन्यते । तत्र प्रथमं तामसं दोषमाह—यदेति । राजेत्यदीर्घदर्शित्वम् । तुशब्दो विदुरस्य पूर्वस्नेहव्यावृत्तिसूचकः । स्वसुतानिति औरसत्वादत्यागः । असाधुसंवर्द्धनं दोषायेति तदधर्मेण सुतरामन्तर्दृष्टिरपि गता । तदाह—विनष्टदृष्टिरिति । भ्रातुर्यविष्ठस्येति संबन्धकृतधर्मोऽपि नास्तीति सूचितम् । विबन्धूनिति सर्वथा दयाभावः । कनिष्ठभ्रातुः पाण्डोः पुत्रान् पाण्डवान् राज्यस्पर्द्धादिशङ्कारहितान् स्ववशान् पितृहीनान् सर्वथा परिपालनीयान् लाक्षाभवने प्रवेश्य विश्वासघातं[1] कृत्वा ददाहेत्यर्थः । अनेनास्य क्रिया संपूर्णेति पाण्डवानाममरणेऽपि वधदोषो जात एवेति भावः ॥ ६ ॥

राजसं दोषमाह—

**यदा सभायां कुरुदेवदेव्याः केशावमर्शं सुतकर्म गर्ह्यम् ।**
**न वारयामास नृपः स्नुषायाः स्वास्रैर्हरन्त्याः कुचकुङ्कुमानि ॥ ७ ॥**

यदेति । भगवता संरक्षितानां तेषां राजसूयेन राजत्वयुक्तानां राज्याकाङ्क्षां परित्यज्य तूष्णीं स्थितानां बलादपराधकरणं सर्वनाशकम् । युधिष्ठिरस्य कुरुदेवत्वात् राजपत्नीकेशाकर्षणं सर्वनाशायेति जानन्नपि न वारयामास । सभायामिति परलोकनाशोऽपि सूचितः । 'सभां वा न प्रवेष्टव्यम्' इति स्मृतेः । अवमर्शं आकर्षणम् । उत्पादकस्य परिपालनमावश्यकमिति सुतपदम् । परलोकसाधकत्वाभावात् न पुत्रपदम् । कर्मेति । दुरदृष्टजनकम् । गर्ह्यमिति लोकेऽपि निन्दाजनकम् । "ब्राह्मणः समदृक् शान्तो दीनानां समुपेक्षकः । स्रवते ब्रह्म तस्यापि भिन्नभाण्डात्पयो यथा" इति । सम्बन्धरहितानां ब्राह्मणानामप्येतदुचितम् । तदपि न कृतवानित्याह—न वारयामासेति । अनेन क्षत्रत्वं तस्य गतमिति सूचितम् । नृप इति सामर्थ्यम् । स्नुषाया इत्यतिलोकविरोधः । अस्रैः कुचकुङ्कुमानि हरन्त्या इति दयाहेतुत्वममङ्गलत्वं च सूचितम् । स्वशब्देनाश्रूणामलौकिकसामर्थ्यं सूचितम् । कुचकुङ्कुमानीत्युपरि वस्त्राभावः । कुङ्कुमानामपि गमनेऽतिलज्जा । इतररागाभावार्थं तथा करणम् । एवं प्रत्यक्षतोऽपि क्रौर्यं निरूपितम् ॥ ७ ॥

सात्त्विकं दोषमाह—

**द्यूते त्वधर्मेण जितस्य साधोः सत्यावलम्बस्य वनागतस्य ।**
**न याचतोऽदात्समयेन दायं तमो जुषाणो यदजातशत्रोः ॥ ८ ॥**

द्यूते त्विति । तुशब्देन अस्मिन् कृते पूर्वं कृता अपराधा अपि अकृता भवन्तीति सूचितम् । पूर्वं तेषां राज्यापहरणं केवलमधर्मेणैव । तदपि सोढ्वा महद्दुःखमनुभूय स्वकीयं दायं शास्त्रतो लोकतश्चाविरुद्ध समयेन मर्यादया याचतो याचयतः । याचमानाय वा, पदव्यत्ययश्छान्दसः । अदाने हेतुस्तमो जुषाण इति मोहं जुषाणः । अजातशत्रोरिति विपरीतशङ्काभावः । स्वकृतनियमोल्लङ्घनान्मोहः[2] ॥ ८ ॥

एवं त्रिदोषव्याप्तो भगवद्वाक्यं नाङ्गीकृतवानित्याह—

---

१ विश्वासपातकम्. क. ग. ङ. च. छ. २ आनिकार्यम् ख. ग. घ. च. छ.

**यदा च पार्थप्रहितः सभायां जगद्गुरुर्यानि जगाद कृष्णः ।**
**न तानि पुंसाममृतायनानि राजोरु मेने क्षतपुण्यलेशः ॥ ९ ॥**

यदा च पार्थेति । पृथासम्बन्धात्प्रेषण नात्यन्तानुचितम् । स्वतो न दत्तवानेव । यदा च न दत्तवान् तदा पार्थेन युधिष्ठिरेण प्रहितः प्रेषित (स) भगवान् यानि जगाद तानि नोरु मेन इति सम्बन्ध । सभाया मित्युक्तेर्लोकप्रतीत्याऽपि नाऽन्यथाकथनम् । जगद्गुरुरिति सर्वेषा हितोपदेशकर्तृत्वात् परमार्थतोऽपि नाऽन्यथाकरणम् । यानि जगादेति । सन्ध्यनुगुणतया अविरोधवाक्यानि जगद्गुरुत्वप्रतिपादनार्थं धर्मान्तरेणान्यथावचनव्यावृत्त्यर्थम् । सर्वेषामेव तानि वाक्यानि सर्वदु खनिवर्तकानीत्याह—अमृतायनानीति । अमृतस्य अयनानि स्थानभूतानि अमृतकुण्डिका इत्यर्थ । यथा क्षीरसागर मथित्वाऽमृतकलशमुद्धृतवानेव सर्वशास्त्राणि मथित्वा तानि वाक्यान्युद्धृत्य व्याहृतवानित्यर्थ । राजत्वादज्ञानपोष । पूर्वं जीवनसुकृतम् राज्यभोग सुकृतम्, जीवत्पुत्रसुकृत चेति लेशत्रय स्थितम् । तन्मध्ये क्षता पुण्यलेशा यस्य स तथोक्त । उरुसमाननाया न कश्चनापकारो भवेदिति भाव । जीवन विद्यमानमपि गतप्राय सूचितम्, पुण्याशस्य गतत्वात् । केवल पापांशेन जीवतीति भाव ॥ ९ ॥

एव पुत्रस्नेहेन भगवद्वाक्योल्लङ्घने कृते, तत्प्रभृति स्वतस्तद्गृहे अगच्छन्नपि यदा उपहूत आकारितस्तदा भवन प्रविष्ट इत्याह—

**यदोपहूतो भवनं प्रविष्टो मन्त्राय पृष्टः किल पूर्वजेन ।**[1]
**अथाऽऽह तं मन्त्रजुषां वरीयान् यन्मान्त्रिणो वैदुरिकं वदन्ति ॥ १० ॥**

यदेति । तदनन्तर मन्त्रार्थं पृष्ट । किलेति वचन म्वस्य तथाऽनुसन्धाने व्यर्थगूढार्थभावकत्वात् अनात्मविस्त्व स्यादिति तन्निराकरणार्थमुक्तम् । पूर्वजेनेति कथनावश्यकत्वम् । तथा भिन्नक्रमेणोक्तवानित्याह—अथाहेति । सम्बन्धादिकमनपेक्ष्य भयादिकमप्यनपेक्ष्य अथ स्वतन्त्रतया आह । तस्य मन्त्रस्य प्रसिद्धिमाह—तमिति । तादृशकथने हेतु —मन्त्रदृशा वरीयानिति । यथा वेदे ‘स एतं मन्त्रमपश्यत्’ इति बृहस्पतिप्रभृतयो मन्त्रद्रष्टारो भवन्ति, तथा नीतिशास्त्रेऽपि ये मन्त्रद्रष्टारस्तेषा मध्ये वरीयान् । किञ्च । अस्य मन्त्रस्य सर्वलोकप्रसिद्धिरस्तीत्याह—यन्मान्त्रिण[3] इति । विदुरेण प्रोक्त वैदुरिकमिति । तेन प्रोक्तमित्यधिकारसिद्धत्वात् सर्वजनीनप्रसिद्धि ॥ १० ॥

मन्त्रमेवाऽऽह—

**अजातशत्रोः प्रतियच्छ दायं तितिक्षतो दुर्विषहं तवाऽऽग. ।**
**सहानुजो यत्र वृकोदराहि. श्वसन्रुषा यत्त्वमलं बिभेषि ॥ ११ ॥**

अजातशत्रोरागिति । इति उपायचतुष्टयमध्ये दानमेव मन्त्र । दायमिति न हीनता । अजातशत्रोरिति विपरीतशङ्काभाव । तस्याजातशत्रुत्व न केवल नामत , किन्तु कार्यतोऽपीत्याह—अन्यैर्दुर्विषहमपराध सहत इति । अजातशत्रुत्वादेवाऽदानमास्त्वित्याशङ्क्य भीममुपस्थापयति । सहानुज इति अनुजै सह वर्तत इति ।

---

१ मा ग्राग क   २ पृथा द्दीपत्रयेण पाि नमुक्तनमध्ये प्रकाश   ३ य म मयत्वम म

सादेशाभाव । अर्जुनादीनामपि तूल्ल सूचितम् । यत्र यस्य राज्ञो निकटे रुषा श्वसन् वृकोदरनामा आहिरस्ति । न हि सर्पवैरं कार्यमकृत्वा निवर्तते । तस्मात्तत्सन्तोषार्थं दाय देयमित्यर्थः । ननु ते चत्वार किं करिष्यन्ति, मम तादृशा शत पुत्रा सन्तीत्याशङ्क्याऽऽह—यस्त्वमलं बिभेषीति । यस्मात् भीमादेकस्मादपि त्वमल निभेषि । आक्रोशस्यार्णाश्रवणादेक एव भीम सर्वान्मारयिष्यतीति शतमप्यप्रयोजकम् । विपरीतशङ्काऽपि निवारिता । अदन्त इत्यर्थात् । अनेन भेदो दण्डश्च निवारित । दायस्याच्च अदाने न साम ॥११॥

सहायाभावमाशङ्क्य एकसहायेनैव त्रैलोक्यजयसामर्थ्यं भवतीति त विशिनष्टि—

**पार्थांस्तु देवो भगवान्मुकुन्दो गृहीतवान् स क्षितिदेवदेवः ।**
**आस्ते स्वपुर्यां यदुदेवदेवो विनिर्जिताशेषनृदेवदेवः ॥ १२ ॥**

**पार्थांस्तु देव** इति । सहायार्थं प्रार्थनापि नापेक्ष्यते । तु पुन स्वयमेव गृहीतवान् । पार्थानिति सम्बन्धेन बहुवचनेन च सर्वथा तदुद्योगो लक्ष्यते । न हि बहून् स्वकीयान् गृहीत्वा कश्चित्तूष्णीं तिष्ठति । देवत्वान्न मानुषैर्जेतु शक्य । अत एव दुर्योधनस्य दैत्यत्वान्मारणमपि गम्यते । देवदैत्यानामजेयत्वाय **भगवानिति** । अनेन प्रारब्धकर्मापि चेद्विपरीत भवेत् , तदप्यन्यथा कुर्यादिति सूचितम् । कालजयाय **मुकुन्द** इति । अन्येषामपि तु ख दूरीकृत्य मोक्षदातु कालजयः किं वक्तव्य इत्यर्थ । अनेन राज्यदान चावश्यकमिति ज्ञापितम् । किञ्च । स भगवान् क्षितिदेवदेव इति । क्षितिदेवा ब्राह्मणास्तेषामपि देवस्तद्धितकर्तृत्वात् । अतो यत्र भगवांस्तत्रैव ब्राह्मणा इति तव ब्राह्मणा अपि न सहाया । किञ्च । **आस्ते स्वपुर्यां यदुदेवदेव** इति । यो भगवान् स्मृतो ध्यातो वा सर्वमनिष्ट निवार्य राज्यादिक प्रयच्छति । तत्र साक्षादेव भक्ताना हितार्थ भक्तपुर्यामास्ते । किञ्च । यदुदेवा यादवा यदोर्वंशे उत्पन्ना देवा इति तेषामपि देव इति यत्र भगवांस्तत्रैव यादवा इति । तव बन्धुसहायोऽपि नास्तीत्युक्तम् । किञ्च । **विनिर्जिताशेषनृदेवदेव** इति । नृदेवा राजानस्ते सर्वे विशेषेण निर्जिता येन । तमपि विजिगीषत इति जरासन्धादजेयत्वेन सर्वे राजानस्तद्वश्या । अतस्तव राजसहायोऽपि नास्तीत्युक्तम् । नृदेवदेवा जरासन्धादयस्ते वा निर्जिता येन । अतो निर्बलस्य तव जये कः प्रयास इति भाव ॥ १२ ॥

दुर्योधनो न मन्यत इति चेत्तत्राऽऽह—

**स एष दोषः पुरुषद्विडास्ते गृहान् प्रविष्टो यमपत्यमत्या ।**
**पुष्णासि कृष्णाद्विमुखो गतश्रीस्त्यजाश्वशु चैनं कुलकौशलाय ॥ १३ ॥**
**इत्यूचिवांस्तत्र सुयोधनेन प्रवृद्धकोपस्फुरिताधरेण ।**
**असत्कृतः सत्स्पृहणीयशीलः क्षत्ता सकर्णानुजसौबलेन ॥ १४ ॥**

**स एष दोष** इति । स प्रसिद्धश्छिद्रदोषोऽयमेव । **दोष** इति वचनात् तदनङ्गीकारो न बाधकः । दोषः सर्वैरुपायैस्त्याज्यो न तु दोषानुरोधेन औषध त्याज्यमिति भाव । तस्य दोषत्वे हेतुमाह—**पुरुषद्विडिति** । य पुरुष द्वेष्टि स दोषः । अन्यथा तस्यैव शरीरे तन्नियम्ये स्वय स्थित कथ त द्वेष्टि । यस्य राज्ये ग्रामेऽपि स्थितस्त न द्वेष्टि, तत्र तच्छरीरे विद्यमानो रोगभूते कथ द्विष्यात् । अतः पुरुषद्वेषाद्दोष

इत्यवसीयते । तत्याग उपपत्तिरूपो निदानामित्यर्थः । आस्त इति शीघ्र तस्य प्रतीकार कर्तव्यः । साम्प्रत स्वकार्यमकृत्वैव तूष्णीं तिष्ठति । उपेक्षितस्तु कुलमेव नाशयिष्यतीति भाव । काऽस्तीत्याकाङ्क्षाया माह–सर्वत्रैव तव–गृहान् प्रविष्ट आस्ते । ममत्वात्सर्वगृहप्रवेशने निवारणाशक्ति । अयमिति दूरे स्थित मङ्गुल्या निर्दिशति। तथाप्यन्धत्वात्त न द्रक्ष्यतीति प्रकारान्तरेण बोधयति। यमपत्यमत्या त्व पुष्णासि। आपद्भयस्त्रायत इत्यपत्यम्। तन्मतिरेव । किञ्च । त्व च कृष्णाद्विमुख , यत पुष्णासि । अत एव गतश्रीश्च भविष्यसि। तस्मादस्य सर्वानर्थमूलत्वात् ' त्यजेदेक कुलस्यार्थे ' इति न्यायात् एन त्यज। चकारात्कृष्ण वैमुख्य च त्यजेत्यर्थ । यदा एवमाक्रोशपूर्वकमाज्ञारूपेणोक्तवान् । तदा असत्कृत इत्यूचिवानिति सबन्ध । इत्यूचिवानिति वा भिन्नम् । तत्र स्थाने आगतेन भ्रातुरन्तिके वा । सुयोधन इति तस्यापकर्षार्थं वचनम् । ननु पितृव्यतिरस्कार कथ कृतवानित्याशङ्क्य अन्त क्रोधेन, बहिर्दुष्टैराक्रान्तत्वादिति तृतीयान्त विशेष णद्वयम् । प्रवृद्धो य कोपस्तेन स्फुरितमधर यस्य । अनेन क्रोधेन लोभ एव स्फुरित इति तदुक्तो दान रूप उपायोऽप्यसमत इति सूचितम् । असत्कारो धिक्कार , अग्रे वक्तव्यो वा । एवमप्रियकथन धर्मनीतिवि रुद्धम्, ' सत्यं ब्रूयात् प्रिय ब्रूयात् ' इति स्मृते। प्रधानपरित्यागश्च नीतिविरुद्ध । सोऽपि सन्मानेनैव बोधनीयो भवति। तथाप्येव वचन परित्यागार्थमेव, भगवद्विमुखैः सह स्थातुमयुक्तत्वात् । स्नेहश्च न स्थाप नीय । चित्तस्याऽतिदुष्टत्वात् सर्वथा परित्यागमपि न सहते । अत एव वचनमेतदभिसन्धायाऽऽह–सत्स्पृहणी येति । सद्भि स्पृहणीय शील यस्य । एवमेवासद्भि सह स्थितौ तत्परित्यागार्थमेव कर्तव्यमिति सत्स्पृहणी यता । क्षत्तेति विश्वासपात्रत्व सूचितम् । दुष्टचतुष्टयमध्ये दुर्योधनो मुख्यः । कर्णदु शासनशकुनयस्तु सहाया । तदाह तै सहित इति । अथवा । ननु मन्त्रस्य स्वहितत्वादङ्गीकारमेव कथ न कृतवानित्याह सद्भिरेव स्पृहणीय शील यस्येति । तस्य सपरिवारस्यासत्त्वादिति भावः ॥ १३ ॥ १४ ॥

**क एनमत्रोपजुहाव जिह्मं दास्याः सुतं यद्बलिनैव पुष्टः ।**
**तस्मिन्प्रतीपः परकृत्य आस्ते निर्वास्यतामाशु पुराच्छ्वसानः ॥ १५ ॥**

**क एनामिति** । लोकोक्त्या अधिक्षेप । पित्रा समाहूतत्व ज्ञात्वा अयुक्तकरणात्तमप्याक्षिपतीति ज्ञायते । स्वभावजातिक्रियादुष्टस्य मन्त्रानर्हत्वात् । अय तु तादृश इति विशेषणत्रयम् । द्वय सिद्धम्, क्रियैवं तृतीया । जिह्म कुटिलश्छिद्रान्वेषी । मया कापट्येन स्थातव्यम्, विश्वास जनयता स्वावसरेऽपकर्तव्यमिति जिह्मलक्ष णम् । तदद्य विदुरे स्पष्ट जातम् । स्वाधिकारानुसारेण भगवान् सर्वत्र तथा स्फुरतीति सैत्त्वादीनामापेक्षि कत्व ज्ञापितम् । दास्या सुतामिति जातिदोषः । क्रियादोष वक्तु कृतघ्नतामाह–यद्बलिनैव पुष्टस्तस्मिन् प्रतीप इति । यथा आश्रितत्वाच्चण्डालादिभ्यो बलिर्दीयते तथाऽयमपि पतितः । ब्रह्मबीजस्य शूद्राया जातत्वात् । अन एवैवकार । बलिपुष्टाश्च काका एवमेव भवन्तीति ज्ञापितम् । पोष एव तथाभावे हेतु । परेषा शत्रूणा कृत्ये आस्त इति क्रियादोषः । दण्डो निर्वास्यतामिति । आश्रितेति यावंश्चिचे तदुक्त न प्रविशति । तेषामपि तेनाऽपि वधस्यानुचितत्वात् परित्यागस्यैवोचितत्वात् निर्वासन दण्ड । श्वसान प्राणमात्रावशेष । असता दृष्ट्या प्रा णहरणापेक्षयाऽधिकोऽय दण्डः । श्मशान इति पाठे यत्र स्थास्यति तेषाममङ्गल भविष्यतीत्यर्थ । यमलेन

१ अन्धत्वादिने ख २ तेनाच्छेदनकारणम् प्रकाश ३ नाशयति क ह ४ एव इत्यस्याघाने‌ऽश ग
५ इत्यत आह स ६ परहस आस्त इति क्रिया ग ७ सदसद्गुणानादिभावनात् ग ८ प्रतीप ग
९ धृतराष्ट्रचित्ते ग

मृतोपजीवित्वाद्वा । अत एव पुरान्निर्यास्य इति केवलं वचनमुक्तवान् । एवं दशभिः श्लोकैः पूर्वावस्थापरित्यागहेतुरुक्तः । अनेन पूर्वदेहसम्बन्धिनोऽपि त्यक्ता इव ॥ १५ ॥

परित्यागमाह—

**स इत्थमत्युल्बणकर्णबाणैर्भ्रातुः पुरो मर्मसु ताडितोऽपि ।**
**स्वयं धनुर्द्वारि निधाय मायां गतव्यथोऽयादुरु मानयानः ॥ १६ ॥**

स इत्थमिति । अत्युल्बणत्वं शीघ्रकार्यकरणात् । उक्ता वाणाः कर्णद्वारा हृदयं प्रविष्टाः । कुत्स्यमाणस्थानेषु मर्मसु ताडितोऽपि । भ्रातुः पुर इति मृत्युसन्निधाविव बाणानां प्राणहारकत्वं दृष्टान्तीकृतम् । ताडितोऽपि गतव्यथः । तत्र हेतुः—मायामधिकं मानयानः। धनुर्द्वारि निधायेति प्रतिपक्षगमनशङ्का निवर्तिता । निःसारणात्पूर्वमेव अयात्, स्वकर्तृकस्यैव परित्यागस्य हेतुत्वात्, अन्यथा 'सर्वान् बलकृतानर्थानकृतान् मनुरब्रवीत्' इति विरोधः स्यात् ॥ १६ ॥

एवमपमानतो निर्विण्णस्य[1] तीर्थादिजनितसुकृतपरिपाकेन पृथिवीजलयोः संस्कृतत्वादधिकारिदेहद्वयसम्पत्तिं निरूप्य तेजोनिरूपणार्थं सत्सङ्गो जात इत्याह—स निर्गत इत्यष्टभिः । चतुर्भिर्भूमिसंस्कारस्तथाऽन्यैश्च जलस्य च । उत्तरोत्तरशेषत्वात्पञ्चेऽप्युच्यते स्फुटः ॥ १ ॥ पुण्यदेशार्थगमनं पुण्यदेशे तथैव च । तदङ्गानि फलं चेति चतुर्द्धा भूमिसत्क्रिया ॥ २ ॥ जले सामान्यसम्बन्धो विशेषश्चापि तद्गतः । साधनं च फलं चेति जलोक्तिश्च चतुर्विधा ॥ ३ ॥ मन्त्रगृहान्निर्गतो न स्वगृहं गतः, किन्तु पुरादपि निर्गत इत्याह—

**स निर्गतः कौरवपुण्यलब्धो गजाह्वयात्तीर्थपदः पदानि ।**
**अन्वाक्रमत्पुण्यचिकीर्षयोर्व्यां स्वधिष्ठितो यानि सहस्रमूर्तिः ॥ १७ ॥**

स निर्गत इति । कौरवपुण्यलब्ध इति पूर्वजोपार्जितसुकृतेन[1] प्राप्तः निर्गतश्चेद्वंशस्थापकत्वमुक्तमेव तद्द्वारा निर्गतमिति सूचितम् । पुण्यलब्धत्वं भगवत्स्थानगमनेऽपि हेतुः । सर्वतीर्थानि पादे यस्येति । तस्य स्थानेष्विति तीर्थेष्वपि विशेषः, वैष्णवस्थानेष्वेव गत इत्यर्थः । अन्वाक्रमत् मध्ये स्थानानतिक्रमेणाऽऽक्रान्तवान् । राजनिवेशनवत्स्थानमात्रम्, किन्तु नानामूर्त्या अभिमानेनाऽनुभावं प्रदर्शयन् स्वयमधिष्ठाय येषु स्थितः । तानि तीर्थानीति पूर्वेण सम्बन्धः । पुण्यचिकीर्षयेति तत्त्वाज्ञानादुक्तम्, परमेश्वरप्राप्तिसाधनत्वाद्वा । अथवा । उर्व्यां पुण्यचिकीर्षया, पुण्येन पृथिवीं संस्कर्तुमिति । दैत्याधिष्ठिते स संस्कारो न भविष्यतीति, उर्व्यां यानि सहस्रमूर्तिर्भगवानधिष्ठाय स्थित इत्युक्तम् । अनेन संस्कृते देवाधिष्ठानात्पञ्चाभिविधानवद्भगवन्मूर्तित्वेन तस्य संस्कारः प्रदर्शितः ॥ १७ ॥

विशेषमाह—

**पुरेषु पुण्योपवनाद्रिकुञ्जेष्वपङ्कतोयेषु सरित्सरस्सु ।**
**अनन्तलिङ्गैः समलंकृतेषु चचार तीर्थायतनेष्वनन्यः ॥ १८ ॥**

---

१ गमनमित्यनुपदम्य प्रस्ताव   २ संस्कारादुच्यते मेऽप्यधिक न्यूनत्वाज्ञानि प्र   ३ करस्वतीसम्बन्ध प्र
४ सरस्वतीगत प्र   ५ कर्मितीर्थमवनम् प्र   ६ जन्मस्कारोऽपि प्र   ७ क्षत्रादिस्थाम् प्र   ८ भूतल इत्यधाद् प्र

पुरेष्विति मधुरादिनगरेषु, परमेश्वरक्रीडास्थानत्वात् । गोकुलनिकटवृन्दावनानि उपवनानि । अद्रि-गोवर्द्धनादिः । कुञ्जानि लतागृहाः सर्वाण्येतानि भगवत्सम्बन्धात्पुण्यजनकान्यपि भक्तिजनकानि। अपङ्क-तोयेष्विति कृष्णजलक्रीडादियोग्येषु । सरितां सरस्सु कालियादिह्रदेषु । तेषु पर्यटने निमित्तम्, अनन्तमूर्तेः रासादिक्रीडाचिह्नैः सम्यगलङ्कृतेषु । जलस्थलप्रधानेषु एकाकी चरति स्मेत्यर्थः । अनन्यो भक्तो वा । अनेन पञ्चगुणा पृथिवी संस्कृतेति ज्ञापितम् । तत्र पृथिवी द्विविधा मृत्पाषाणभेदेन, पुरेष्वद्रिष्विति । उपवनेन गन्धः, कुञ्जेषु स्पर्शः, सरस्सु रसः, अनन्तलिङ्गसमलङ्कृतत्वेन रूपम्; कुञ्जेषु वा शब्दः, अप-ङ्कतोयेष्विति रसः, सरस्सु इति स्पर्शः । अनन्यत्वेनैव मौनं सिद्धम्, तेन वा शब्दः संस्कृतः ॥ १८ ॥

साधनान्याह—

**गां पर्यटन्मेध्यविविक्तवृत्तिः सदाऽऽप्लुतोऽधःशयनोऽवधूतः ।**
**अलक्षितः स्वैरवधूतवेषो व्रतानि चेरे हरितोषणानि ॥ १९ ॥**

गां पर्यटन्निति । एते सप्तत्वगादिधातुसंस्काराः । व्रतान्यन्तःकरणसंस्कारकाणि । एकाकिपरिभ्रमणं भग-वच्चरित्रस्याऽतिगोप्यत्वात् । एवं दर्शनेन किञ्चिद्भक्त्युत्पत्तेः कृष्णप्राप्त्यभावाद्विरहेण तत्प्राप्त्य एव व्रतानि कृतवान् । अत्रैवं क्रमः । अन्वेषणार्थं प्रथमं पर्यटनम्, ततोऽन्तर्बहिर्नियमाः, ततोऽपि व्रतानि । तत्र मेध्ये एकान्ते ध्यानाद्यर्थमुपवेशनादिरूपा स्थितिर्यस्येति । पवित्रैकरात्रान्तरिताऽऽहारादिजीविका यस्येति वा । त्रिकालस्नानभूशयनाभ्यङ्गवर्जनादयस्त्रयो गुणा दोषत्रयनिवारकाः । नन्वेवंकरणे बन्धुभिः कथं न बद्धः ? तत्राऽऽह—अलक्षितः स्वैरिति । तत्र हेतुः—अवधूतवेषः कृत्रिमवेषधारी । व्रतानि चत्वारि; एकादश्युप-वासः, सर्वभूतदया, यथालाभसन्तोषः, सर्वेन्द्रियोपशमश्चेति । एतानि भगवत्तोषहेतुभूतानि ॥ १९ ॥

फलमाह—

**इत्थं व्रजन् भारतमेव वर्षं कालेन यावद्गतवान् प्रभासम् ।**
**तावच्छशास क्षितिमेकचक्रामेकातपत्रामजितेन पार्थः ॥ २० ॥**

इत्थमिति । शुद्धो हि देवदेशे तिष्ठतीति पूर्वकामनाऽपि संपूर्णा । ज्ञापकं चैतत्फलस्य । यथा असदधि-ष्ठानं भूमौ गतम्, तथा शरीरेऽपीति । पुण्याधिक्याद्भारत एव पर्यटनं बहुनाऽपि कालेन । यावत्प्रभासपर्यन्तं गतवांस्तावदन्यथा सर्वमासीदित्याह—तावदिति । एकस्य चक्रं सैन्यं यस्याम् । सैन्यं वा, राजचिह्नं वा अन्यस्य नास्तीत्यर्थः । भारतमेव वर्षं यावत्प्रभासं तावच्छब्देनोच्यते । तावदित्यर्थविशेषे वा । अस्य तीर्थ-पर्यटनमेव भगवद्भक्तानां भगवता राज्योपलम्भने हेतुः । अजितेनेति सामर्थ्यम् । पार्थ इति हेतुः ॥२०॥

[१]एतत्तु पूर्वं जातमप्यसम्भावनया जिज्ञासाभावान्न ज्ञातवान् । प्रभासे तु, अधिकारिणो देहपरित्यागार्थं तत् स्थानमिति, तत्र गतो बहिश्चित्त इव जातः । ततः शुश्रावेत्याह—

**तत्राऽथ शुश्राव सुहृद्विनष्टिं वनं यथा वेणुजवह्निसंश्रयम् ।**
**संस्पर्धया दग्धमथाऽनुशोचन् सरस्वतीं प्रत्यगियाय तूष्णीम् ॥ २१ ॥**

तत्राथेति । अथेति भिन्नक्रमे । सुहृदां विनष्टिं श्रुतवान् । तस्य शोकहेतुत्वाय विशेषणम् । सुहृद्विनष्टि

१ पवनस्य. प्रभासः   २ सुहृत्पदम् ग.

मेव निरूपयति—**संस्पर्द्धया दग्धमिति**। अनुवादे धर्मप्राधान्यम्, निरूपणे धर्मिण इति वैपरीत्यमवस्थाभेदेन । औदासीन्यशोकनिरूपणार्थं उपपादन एव विशेषणम्[1] । **वनं यथा वेणुजवह्निसंश्रयमिति** । वेणुजो वह्निः सम्यगाश्रयो यस्य, सम्यक् श्रयते यमिति वा अर्थः । संस्पर्द्धया दग्धमित्यन्यायनाशः । तत्र प्रभासे । संस्पर्द्धिनां भवतु नाशः, तत्संबन्धात्सर्वेऽपि सुहृदो नष्टा इति शोकः । नाशे दृष्टान्तः । वेणुभ्यां जातो वन्हिर्न तावन्मात्रं नाशयति, किन्तु वनमेव सर्वम् । तद्वत् कौरवपाण्डवसंस्पर्द्धयेति नाशे हेतुः । अनेनाऽनुपयोगनाशः सूचितः । अत एवाऽनुशोकः । **सरस्वती धर्महेतुर्जलसंस्काररूपिणी । भक्तिहेतुस्तु यमुना सरसङ्गात्तैजसी स्मृता । ज्ञानहेतुस्तु गङ्गा स्यात् बुद्धिसंस्कारकत्वतः ॥१॥** प्रत्यक् स्रोतोऽभिमुखम् । तूष्णीं शोचन्नित्यप्रकटत्वाय । द्वारकागमनाभावायैवमुक्तम । ॥ २१ ॥

ननु भगवद्वासभूतद्वारकात्यागेन वृथाऽन्यत्र गत इत्याशङ्क्य, तत्र कृष्णस्मारकाणि बहूनि सन्तीत्याह । **तस्यामिति** द्वयेन—

**तस्यां त्रितस्योशनसो मनोश्च पृथोरथाग्नेरसितस्य वायोः ।**
**तीर्थं सुदासस्य गवां गुहस्य यच्छ्राद्धदेवस्य स आसिषेवे ॥ २२ ॥**

**तस्यां** सरस्वत्यामेकादशतीर्थानि प्रसिद्धानि । अत्र व्युत्क्रमो जलप्राधान्याज्जलक्रमानुरोधेन । तत्र सरस्वत्यामेव त्रितकूपमस्ति । तत्प्रथमं निर्दिशति, कूप्यानामेवाऽपां प्राथम्यात् । एवमन्यान्यपि ज्ञातव्यानि । उशनसादीनां (?) तपःस्थानानि तानि । मनुः स्वायम्भुवः । पृथुर्वैन्यः । तीर्थचतुष्टये सेविते शोकादयः सर्वे व्यावृत्ताः । त्रितस्तु कूपे पतितस्तस्मात्सङ्कटान्निस्तीर्णः, तथाऽयमपि शोकसङ्कटान्निस्तीर्णः । उशनास्तत्र मृतसञ्जीविनीं विद्यां प्राप्तवान्, तथाऽयं मृतो जीवितः । मनोस्त्विष्टसिद्धिर्ज्ञानरूपा, अस्याऽपि शोकनिवृत्तिर्ज्ञानोत्पत्तिस्तत्र । पृथुस्तु पूर्वजातसर्वदोषनिवर्तकः । एवं चतुर्भिः पूर्वावस्था गता, तेन प्राप्ता । अतः परमथ भिन्नक्रमेण विशोकस्तीर्थानि कृतवानित्याह—**अग्नेरिति**। असित ऋषिः, वायुर्देवता, **सुदासो** राजा, **गवाम्** गोसत्रस्थानं गोतीर्थम्, **गुहः** कुमारः, **श्राद्धदेवो** वैवस्वतमनुः । एतानि सप्ततीर्थान्यवश्यं सप्तधातुशोधकानि ॥ २२ ॥

अन्यानि प्रकीर्णकानि प्लक्षजातपर्यन्तं निरन्तरं कृतानि सर्वशोधकानि जातानीत्याह—

**अन्यानि चेह द्विजदेवदेवैः कृतानि नानाऽऽयतनानि विष्णोः ।**
**प्रत्यङ्गमुख्याङ्कितमन्दिराणि यद्दर्शनात्कृष्णमनुस्मरन्ति ॥ २३ ॥**

**अन्यानि चेति** । एतानि तपःकरणाल्लोके तथा ख्यातानि नित्यान्येव । अन्यानि तु द्विजदेवैर्ब्राह्मणैर्देवैश्च कृतानि, अत एव **नानाऽऽयतनानि** नानास्थानानि येषु तीर्थेषु । किञ्च । तेष्वायतनेषु **विष्णोः प्रत्यङ्गमुख्याङ्कितमन्दिराणि** सन्ति । प्रत्यङ्गान्यायुधानि, तेषु मुख्यं सुदर्शनम् । चक्राङ्कितानि चक्रेणोपरिचिह्नितानि भगवन्मन्दिराणि भवन्ति । किं तावतेत्यत आह—**यद्दर्शनात् कृष्णमनुस्मरन्तीति** । भगवत्स्मरणं बहुजन्मसुकृतेन भवति । तदत्र चिह्नदर्शनेनैव भवतीति तीर्थानामाधिक्यम् । साङ्गस्य भगवतस्तत्र स्थितिरित्यपि । अनेन स्मारकदर्शनाच्चिरं स्थित्वा तत्र तत्र गत इति लक्ष्यते । अत एव कालविलम्बात् यदुकुलनिवृत्तिरपि जाता ॥ २३ ॥

---

१ विशेषणार्थम ख. ग घ. च छ.　　२ नागधवणादृना प्रकाश"

एवं तीरगमनेनैव सर्वे देशा अतिक्रान्ता इत्याह—

**ततस्त्वतिव्रज्य सुराष्ट्रमृद्धं सौवीरमत्स्यान् कुरुजाङ्गलांश्च ।**
**कालेन तावद्यमुनामुपेत्य तत्रोद्धवं भागवतं ददर्श ॥ २४ ॥**

ततस्त्वतिव्रज्येति । ऋद्धमित्यनेन तत्र भगवानस्तीति ज्ञापितम् । सौवीरदेशो गुर्जरदेशः, मत्स्यास्ततोऽर्वाक् । कुरुजाङ्गलदेशः कुरुक्षेत्रदेशः । सर्वत्र ग्रामैकरात्रविधिना समागमने षट्त्रिंशद्वर्षा जाता । तदाह—कालेन तावदिति । यावत्कालं भगवान् स्थितः, मौशलं च जातम्, तावद्यमुनामुपेत्य तावता कालेन यमुना गतस्तत्रोद्धवं ददर्शेति सम्बन्धः । दर्शने हेतुः—भागवतमिति । इदं दर्शनं प्रत्ययजनकम् । यावतोद्धवः प्राप्तस्तावता स्वयमपि तत्र गत इति ॥ २४ ॥

अतः परं सत्सङ्गेन अग्निसंयोगवत् स्वस्याऽपि तेजःप्राप्तिरिति तं विशिनष्टि—

**स वासुदेवानुचरं प्रशान्तं बृहस्पतेः प्राप्तनयं प्रतीतम् ।**
**आलिङ्ग्य गाढं प्रणयेन भद्रं स्वानामपृच्छद्भगवत्प्रजानाम् ॥ २५ ॥**

स वासुदेवानुचरमिति । भगवद्भक्तत्वेऽपि सेवकत्वं विशेषः । वासुदेवसेवकत्वान्मोक्षोपयोगित्वं तद्दर्शनस्य । अनेन सम्भाषणीयत्वं सूचितम् । प्रकटेऽपि नीतिज्ञत्वादन्यं न बोधयिष्यतीति विशेषणम् । बृहस्पते प्राप्तनयमिति । बृहस्पतेः सकाशात् प्राप्तो नयो नीतिशास्त्रं येन । प्राक्तनयमिति पाठे पूर्वमुद्धवः पुत्रत्वेन स्थित इति देवगुरुरभिज्ञः । प्रशान्तत्वात् स्वयमासज्जते । प्रतीतत्वात् परिहारः सम्भवति । आलिङ्ग्य गाढमित्युभयोर्भगवदीयत्वात् पूर्वस्नेहः सूचितः । प्रणयेनेत्युभयत्र । स्वानां भद्रत्वे हेतुः—भगवत्प्रजानामिति । भगवत्परिपाल्यानाम्, भगवताऽवतारेणोत्पादितानां वा । तस्मिन् दृष्टे स्वयमपि भगवत्सम्बन्धी जात इति, तदीयानां स्मरणेन पञ्चभूतेषु वायुः संस्कृतः ॥ २५ ॥

भगवदीयानां कुशलं द्विविधम्, सामान्यविशेषरूपेण । तत्र सामान्यं भगवत्पोष्याणां कुशलं भगवत्स्थितिसाध्यमिति प्रथमं हेतुभूतां भगवत्स्थितिं पृच्छति—

**कच्चित्पुराणौ पुरुषौ स्वनाभ्यपद्मानुवृत्त्येह किलाऽवतीर्णौ ।**
**आसात उर्व्याः कुशलं विधाय कृतक्षणौ कुशलं शूरगेहे ॥ २६ ॥**

कच्चिदिति । अवतारावेशाभिप्रायेण द्विवचनम्, स्वगतभेदाभावाद्भगवन्मूर्तीनाम् । पुराणाविति पुरुषोत्तमौ। श्रीसंकर्षणयोर्वाक्यम् । अविशेषेण कार्यमाह—नाभौ भवे पद्मे आविर्भूतो ब्रह्मा स्वनाभ्यपद्मः, तस्यानुवृत्तिः प्रार्थना। किलेति पुराणादौ तथा प्रसिद्धत्वात् । भूम्याः कुशलं भारावतरणं कृत्वा, सर्वेषां कुशलं यथा भवति तथा दत्तावसरा कृतक्षणौ, निश्चिन्ततया स्वानन्दानुभवे निमितक्षणौ वा । वसुदेवगृहे किमासाते ? इति प्रश्नः । अनेन सर्वेषां साधारणं कुशलं पृष्टम् ॥ २६ ॥

विशेषं पृच्छति—

**कच्चित्कुरूणां परमः सुहृन्नो भामः स आस्ते सुखमङ्ग ! शौरिः ।**
**यो वै स्वसॄणां पितृवद्ददाति वरान् वदान्यो वरतर्पणेन ॥ २७ ॥**

---

१ [illegible] २ [illegible] ३ [illegible] ४ [illegible]

कच्चित्कुरूणामिति । प्रथमं वसुदेवकुशलप्रश्ने हेतुः—कुरूणां सुहृत् नो भामश्च । 'भामस्तु भगिनीपतिः'। प्रतिविवाहसम्भावनया देवक्यपि स्वभगिनीत्यभिप्रायेणोक्तम् । कौरवगृहे वा तस्याऽन्यो विवाहः। पृथापेक्षया वसुदेवस्य ज्येष्ठत्वात् देशन्यायेन कनिष्ठभगिनीभर्ता शालक इति भावुकत्वम् । किञ्च । न सम्बन्धमात्रं वसुदेवे, किन्तु उपजीव्य इत्याह—यो वै स्वसॄणामिति । शूरः श्वशुरो ददात्येव, स्वयमपि भगिनीनां ददाति । वरानभिलषितार्थान् । अविहितत्वात्र चतुर्थी । अधिकदाने हेतुः—वदान्य इति । *भगिनीनां भर्तृतर्पणमपि कृत्वा* ॥ २७ ॥

यादवानां मध्ये सर्वत उत्तमं प्रद्युम्नं पृच्छति—

**कच्चिद्वरूथाधिपतिर्यदूनां प्रद्युम्न आस्ते सुखमङ्ग ! वीरः ।**
**यं रुक्मिणी भगवतोऽभिलेभे आराध्य विप्रान् स्मरमादिसर्गे ॥ २८ ॥**

कच्चिदिति । वरूथाधिपतिः सेनापतिः । यदूनां मध्ये वीरः । यदूनां वा वरूथाधिपति.। स्वतो वीरः, सेनातो जन्मपरम्परया च । तदाह—प्रद्युम्न इति । प्रकृष्टधनात्मक । अतो राजापेक्षया प्रथमं पृष्ट. । किञ्च । स पूर्वं सर्गहेतुः कामः । यं रुक्मिणी भगवन्तं प्रार्थयित्वा, वंशजननार्थं विप्रानाराध्य, धर्मसिद्ध्यर्थं तपः कृत्वा ( रुक्मिणी तं ) लेभे । आराध्य विप्रानिति तदर्थं शक्त्यतिशयाधानं कृतं गम्यते । भगवत्त इति पुत्रार्थमेव यत्नः ॥ २८ ॥

**कच्चित्सुखं सात्वतवृष्णिभोजदाशार्हकाणामधिपः स आस्ते ।**
**यमभ्यषिञ्चच्छतपत्रनेत्रो नृपासनाशां परिहृत्य दूरात् ॥ २९ ॥**

कच्चित्सुखमिति । राज्ञो राज्यं तु काकतालीयन्यायेनाऽऽगतमित्याह—यमभ्यषिञ्चदिति । मृतपुत्रस्य दुःखाभावेन राज्यस्वीकारे हेतुः—शतपत्रनेत्र इति । दृष्ट्यैव सर्वतापहारी कमलनयनः । दूरादिति पुत्रपौत्रद्वाराऽपि ॥ २९ ॥

निरतिशयस्वरूपसामर्थ्यसद्भावात्साम्बादीन्, माहात्म्यस्वरूपे वदन्, पृच्छति—

**कच्चिद्धरेः सौम्य ! सुतः सदृक्ष आस्तेऽग्रणी रथिनां साधु साम्बः ।**
**असूत यं जाम्बवती व्रताढ्या देवं गुहं योऽम्बिकया धृतोऽग्रे ॥ ३० ॥**

कच्चिद्धरेरिति । संबोधनानि तत्र तत्र कथने हेतुभूतानि । हरेरेव सदृक्षो रथिनामग्रणीः साधु आस्त इति । साम्बपदेन च पार्वत्या सहितो महादेव एवाऽवतीर्ण इति ज्ञायते । अत एव तस्य जननं न प्राकृततया शक्यमित्याह—असूत यं जाम्बवती व्रताढ्येति । जाम्बवान् बले भगवत्तुल्यो भक्तश्च, तस्य कन्या ततोऽपि व्रताढ्या । तस्य स्वरूपतः सामर्थ्यमाह—देवं गुहमिति । गुहस्य देवत्वमुत्कर्षो भूतगणमध्यपातित्वाभावाय । अम्बिकया अग्निपत्न्यामन्तर्भूतया । अयमपि तस्योत्कर्षः ॥ ३० ॥

शूरानुक्त्वा शूरभक्तमाह—

**क्षेमं स कच्चिद्युयुधान आस्ते यः फाल्गुनाल्लब्धधनूरहस्यः ।**
**लेभेऽञ्जसाऽधोक्षजसेवयैव गतिं तदीयां यतिभिर्दुरापाम् ॥ ३१ ॥**

---

१ पूर्वबद्वरराभवो मा भूदित्यतदर्थं तथा कृतमित्यर्थ., म.

२ एतन्नास्ति क ध इ.

क्षेमं स कच्चिदिति । युयुधानः सात्यकिरर्जुनशिष्यः । गतिं परमभक्तिं फलरूपाम् । तत्र साधनं भगवत्सेवैव, न तु ज्ञानमपीत्याह—यतिभिर्दुरापामिति ॥ ३१ ॥

परमभक्तमाह—

**कच्चिद् बुधः स्वस्त्यनमीव आस्ते श्वफल्कपुत्रो भगवत्प्रपन्नः ।**
**यः कृष्णपादाङ्कितमार्गपांसुष्वचेष्टत प्रेमविभिन्नधैर्यः ॥ ३२ ॥**

कच्चिद् बुध इति । अत एव बुधः । अनमीवो नीरोगः । कृष्णसेवायोग्यत्वाय तथा प्रश्नः । श्वफल्कपुत्रोऽक्रूरः । भगवत्प्रपन्नः शरणागतः । तस्य भक्तिर्लोके प्रसिद्धेत्याह—यः कृष्णपादाङ्कितेति । मार्गपांसुरत्यन्तमपवित्रः, सोऽपि कृष्णपादाङ्कित इति गङ्गापेक्षया तस्योत्तमत्वं मत्वा तत्र लोटनं कृतवान् । अचेष्टतेति भक्त्यावेशेन लौकिकपदार्थज्ञानाभावः सूचितः । प्रबोधितोऽपि भक्त्याविष्टो न प्रबुद्ध इत्याह—प्रेमविभिन्नधैर्य इति । धीरो हि सर्वग्रहणे समर्थः ॥ ३२ ॥

यद्भक्त्या पुत्रत्वमपि प्राप्तो हरिः, तामतिभक्तां पृच्छति—

**कच्चिच्छिवं देवकभोजपुत्र्या विष्णुप्रजाया इव देवमातुः ।**
**या वै स्वगर्भेण दधार देवं त्रयी यथा यज्ञवितानमर्थम् ॥ ३३ ॥**

कच्चिच्छिवमिति । भोजेति वंशनाम । देवक एव भोजः । पुत्रत्वमघटमानमाशङ्क्य दृष्टान्तः, अदितिर्यथा वामनमाता । विष्णुरेव प्रजा यस्याः । देवानां मातेति सर्वदेवास्तस्यामाविर्भूता इति भगवानपि स्वयमाविर्भूतः । पुत्रत्वं च गर्भस्थितिमात्रेण, न जननात् । तदाह—या वै स्वगर्भेण दधार देवमिति । धारणमपि सर्वलोकार्थं तदाह—त्रयी यथेति । गर्भस्थितिमात्रेण जनकत्वं वारयन्माहात्म्यमुक्तं[1] भवति । अर्थमिति सहजसम्बन्धरूपत्वादन्तर्यामितया विद्यमान एव प्रादुर्भूत इति सूचितम् ॥ ३३ ॥

अनिरुद्धे जीवस्योत्कर्षाभावेनाऽऽविष्टस्य भगवत एव माहात्म्यं वदन् स्तौति—

**अपिस्विदास्ते भगवान् सुखं वो यः सात्वतां कामदुघोऽनिरुद्धः ।**
**यमामनन्ति स्म ह शब्दयोनिं मनोमयं सत्त्वतुरीयतत्त्वम् ॥ ३४ ॥**

अपीति । भगवाननिरुद्धः । सात्वतां वैष्णवानां सर्वकामपूरकः । अनिरुद्ध एव हि पालकः । स हि मनसोऽधिष्ठात्री देवता । अत एव यं शब्दयोनिमामनन्ति । स्मेति प्रसिद्धे । 'मनः पूर्वरूपं वागुत्तररूपम्' इति श्रुतेः । हेत्याश्चर्यम्, तादृशस्याऽवतार इति । यतोऽयं मनोमयः, तद्देवतात्वेनैव प्रसिद्धः ; अत एव न केनाऽपि रोद्धुं शक्यत इत्यनिरुद्धः । किञ्च । सत्त्वस्याऽन्तःकरणस्य तुरीयं यन्मनस्तस्य परमार्थतत्त्वम् । अनेन सर्वात्मत्वं तस्य लोकसिद्धमपीत्युक्तम् ॥ ३४ ॥

एवं कतिपयान् विशेषेण पृष्ट्वा, अन्यान् सर्वानेकेन पृच्छति—

**अपिस्विदन्ये च निजात्मदैवमनन्यवृत्त्या समनुव्रता ये ।**
**हृदीकसत्यात्मजचारुदेष्णगदादयः स्वस्ति चरन्ति सौम्य ! ॥ ३५ ॥**

---

१ गर्भान्तर्गतेनोक्तं भवति. प्रकृतः

अपि स्विदन्ये चेति । निजश्वासावात्मा च चैतन्यरूपः, तस्याऽपि यो देवस्तादृशम् । अनन्यवृत्त्या सर्वभावेन ये तदेकनिष्ठा हृदीकादयः । सत्यात्मजाः सत्यभामापुत्राः । चारुदेष्णः प्रद्युम्नभ्राता । गदादयो भ्रात्रादयः । आदिशब्देन सर्वे संगृहीताः । तेषां चरित्रमपि किं समीचीनमिति प्रश्नः ॥ ३५ ॥

युधिष्ठिरस्य कुशलं पृच्छति—

अपि स्वदोर्भ्यां विजयाच्युताभ्यां धर्मेण धर्मः परिपाति सेतुम् ।
दुर्योधनोऽतप्यत यत्सभायां साम्राज्यलक्ष्म्या विजयानुवृत्त्या ॥ ३६ ॥

अपि स्वदोर्भ्यामिति । असाध्यसाधने हेतुः—विजयाच्युताभ्यामिति । तौ हि नरनारायणौ, अनिरुद्धांशौ धर्मरक्षकौ । राजा च धर्मः । बाहुभ्यां चाऽऽत्मा रक्ष्यते, अत उक्तं स्वदोर्भ्यामिति । विजयोऽर्जुनः । अच्युतो भगवान् । सेतुं मर्यादां परम्परागताम् । धर्मेण विहितप्रकारेण । किं परिपालयतीति प्रश्नः । धर्मत्वेन धर्मतः परिपालनं सिद्धमेव, किमिति पुनः पृच्छयत इत्याशङ्क्य सिंहासनस्याऽनर्थहेतुत्वमाह—दुर्योधन इति । विविधो जयो विजयस्तस्य परम्परा यस्याम्, तादृशलक्ष्म्या । विजयोऽर्जुनस्तदनुवृत्त्या सेवया साम्राज्यलक्ष्म्या च यत्सभायां दुर्योधनोऽतप्यतेति भिन्नं वा । राज्ञस्तु गुणद्वयमधिकमस्तीति सुतरां तापः सम्भवतीति भावः ॥ ३६ ॥

भीमं पृच्छति—

किं वा कृताघेष्वघमत्यमर्षी भीमोऽहिवद्दीर्घतमं व्यमुञ्चत् ।
यस्याऽङ्घ्रिपातं रणभूर्न सेहे मार्गं गदायाश्चरतो विचित्रम् ॥ ३७ ॥

किं वेति । कृतापराधेषु अमर्षी भीमोऽघमतिः किमिति प्रश्नः । अघमत्या अमर्षी किमिति वा । अघमतिः पापमतिर्मारक इत्यर्थः । अघमत्या मारयिष्यामीति बुद्धया । अघमपराधं दण्डरूपम्, अत्यमर्षी भीम इति वा । अत्यमर्षित्वे दृष्टान्तः । दीर्घतमं दीर्घकालचिन्तितम्, पुत्रादिपरम्पराविषयमपि वा । अनेन प्रविष्टा भीमेन पालिता न वा, अर्जुनेन वा ते मारिता[1] इति प्रश्नः । अशक्यं तु तस्य नास्तीत्याह—यस्येति । यस्य भीमस्याङ्घ्रिपातं रणभूः कर्कशाऽपि न सेहे सोढुमशक्ता । अङ्घ्रेः पात उत्प्लुत्य पतनात्मकः । तस्याऽवसरमाह—मार्गं गदायाश्चरत इति । गदाया विविधशिक्षाप्रकारं कर्तुं चरतः । गदायुद्ध एव उत्प्लुत्यादिप्रकाराः ॥ ३७ ॥

अर्जुनं पृच्छति—

कच्चिद्यशोधा रथयूथपानां गाण्डीवधन्वोपरतारिरास्ते ।
अलक्षितो यच्छरकूटगूढो मायाकिरातो गिरिशस्तुतोष ॥ ३८ ॥

कच्चिदिति । रथयूथपानां यशोधा यशोधारकः । यशोहेति पाठे सर्वेषां यशो दूरीकरोतीति । तत्र सामर्थ्यं—गाण्डीवधन्वेति । यशोधाः कीर्तिधारी । सर्वेषां कीर्तिं तन्मारणेन स्वयमेव बिभर्तीति तथा, तन्मध्ये वा । अनेन स्वतः परतश्च सामर्थ्यं सूचितम् । गाण्डीवधन्वेति तस्य त्रिषु लोकेष्वप्यरीणां विद्यमानत्वात् । उपरतारिर्जातो न वेति प्रश्नः । सामर्थ्यमाह—अलक्षित इति युद्धमन्वन्वार्थम् । मायाकिरातः,

---

१ राजसूयकृता साम्राज्यलक्ष्मीरर्जुनकृता सेवा च प्रकाशः　　२ अघमतिपद ' सुपां सुलुक्......' इत्यनेन लुप्तविभक्तिकमित्याशयेनाह —अघमति किमिति. प्र

अत एवाऽलक्षितः । अत एव यच्छरकूटेन आच्छन्नः । एतादृशसामर्थ्यवतो जये विलम्बकारणं नास्ति. प्रतियोगिप्राप्त्यभावव्यतिरेकेण । अतः संदेहः, किं सर्वे प्रतियोगिनः प्राप्ता न वेति ? ॥ ३८ ॥

यमौ पृच्छति—

**यमावुतस्वित्तनयौ पृथायाः पार्थैर्वृतौ पक्ष्मभिरक्षिणीव ।**
**रेमात उद्दाय मृधे स्वरिक्थं परात्सुपर्णाविव वज्रिवक्त्रात् ॥ ३९ ॥**

यमाविति । मातृभ्रातृसंमाननशत्रुजयसन्देहाभावेऽपि स्वतो रमणमस्ति नवेति सन्देहात्पृच्छति । माद्रीपुत्रावपि पृथायां समर्पणात्सुतौ । परात् उद्दाय आच्छिद्य । सुपर्णाविवेति सम्भावनया गरुडदृष्टान्तः । वज्रिवक्त्रादिति पीयमानमप्यमृतमाच्छिद्य नेतुं समर्थौ यथा गरुडौ । परादिति वैकल्पिकः, छान्दसो वा । तेन शत्रुं जित्वा अजित्वा वा धनमानयत इति ज्ञापितम् ॥ ३९ ॥

कुन्ती पृच्छति—

**अहो पृथाऽपि ध्रियतेऽर्भकार्थे राजर्षिवर्येण विनाऽपि तेन ।**
**यस्त्वेकवीरोऽधिरथो विजिग्ये धनुर्द्वितीयः ककुभश्चतस्रः ॥ ४० ॥**

अहो इति । पृथाऽपि ध्रियते अर्थात् प्राणान् । अथवा, अर्भकश्च अर्थश्च अर्भकार्थे । छान्दसो नपुंसकभावः । तेन राजर्षिवर्येण पाण्डुना विनाऽपि । भर्त्रा सहितावेव धनपुत्रौ रक्षणीयौ, तदभावेऽपि रक्षणादाश्चर्यम् । तस्य सामर्थ्यमाह—यस्त्वेकवीर इति । यस्य सहायापेक्षाऽपि नास्ति शत्रुजये । वीर इति स्वयमेव युद्धकर्ता । अधिरथ इति रथवद्भ्यः सर्वेभ्य एवाऽधिकः । चतस्रः ककुभो विजिग्ये विजितवान् । सहायो धनुरेव, अन्यथा मन्त्रादिना सिद्ध्या वा जयः सिद्धो भवेत्, तच्च नाश्चर्यकारि । अत उक्तं धनुर्द्वितीय इति ॥ ४० ॥

एतावता कालेन पूर्वं येषु येष्वनुरागः स्थितः स सर्वोऽप्युक्तः । साम्प्रतं द्वेषमनुवदति । तत्र प्रथमं धृतराष्ट्रं शोचति—

**सौम्याऽनुशोचे तमधः पतन्तं भ्रात्रे परेताय च दुद्रुहे यः ।**
**निर्यापितो येन सुहृत् स्वपुर्या अहं स्वपुत्रान् समनुव्रतेन ॥ ४१ ॥**

सौम्यानुशोच इति । सौम्येति संबोधनं मित्रत्वज्ञापनाय । अन्यस्य स्थाने अवक्तव्यं न वक्तव्यमिति, स एव स्वयमधःपतन् शोचति । तमन्वहमपि शोचामि । शोके हेतुः—अधः पतन्तमिति । पाते हेतुः—भ्रात्रे परेताय च दुद्रुह इति । जीवदशायामप्यपकृतः । मरणानन्तरमपि तत्पुत्रद्रोहेणाऽपकृतः । जीवन् भ्राता ऽहमप्यपकृत इत्याह—निर्यापित इति । मया त्वपकारो न कृत इत्याह—सुहृदिति । स्वनगरादेवाऽहं निर्यापितः । पुत्रद्वाराऽपि कृतं स्वकृतमेव, यतः पुत्रान् स्वयमनुसृतः । एवं जीवन्मृतभ्रातृद्रोहादधःपातः । शोचे इतीदानीमपि शोचामि । तत्र कारणमस्ति नवेति प्रश्नः । एवमपकृतगृहे स्थित्वा जीवतीति ॥ ४१ ॥

ननु यथा पुत्रापराधेन समर्थोपेक्षया धृतराष्ट्रस्याऽपराधित्वम्, तथा तवाऽप्युपेक्षादोषाद्दुष्टत्वमित्याशङ्क्य धृतराष्ट्रभीष्मद्रोणादीनां वासुदेवमोहितानां प्रतिपक्षशङ्कया स्वहितमेव कृतवानहमित्याह—

**सोऽहं हरेर्मर्त्यविडम्बनेन दृशो नृणां चालयितुर्विधातुः।**
**नान्योपलक्ष्यः पदवीं प्रसादाच्चरामि पश्यन् गतविस्मयोऽत्र ॥ ४२ ॥**

**सोऽहमिति।** सोऽहमेवं धृतराष्ट्रादिभिरपकृतो विधातुः प्रसादात् गतविस्मय एव चरामि। अत्राप्यर्थे संदेहः, किं युक्तमयुक्तमिति। सर्वदुःखहर्ता भगवान्। न हि यथासुखं सर्वानभ्युदयनिःश्रेयसादिषु योजयति। तत्र ये प्रवृत्त्या सुखाधिकारिणो निवृत्त्या सुखमिच्छन्ति, तान् व्यामोहयति भगवान्। **नृणां** मर्त्यान्धि यत् मर्त्यं देहस्तस्य विडम्बनेन अनुकरणेन। **नृणां** विधातुरिति वा। कपटमानुषचेष्टया **नृणां दृशश्चालयितुः।** यदि न व्यामोहयेत् तदा तेषां सृष्टिं कथं कुर्यात्? पुनः पुनः सृष्ट्यर्थं तान् व्यामोहयतीत्यर्थः। यथा भगवान् केनाऽपि न ज्ञातस्तथाऽहमपि नाऽन्योपलक्ष्यः। अत एव तत्प्रसादो मय्यस्तीति ज्ञायते। अन्तस्तत्प्रसादसूचको विस्मयाभावः बहिस्तत्प्रसादसूचको लोके ज्ञानाभावः। अत एवाऽन्ये बद्धा मारिताः, अहं विचरामीति। **नृणां** भीष्मादीनामन्तःकरणवर्तीश्रामयतः। प्रसादात्कृतमप्यपराधादिकं तदिच्छयेति जानन् गताभिमानस्तत्प्राप्त्युपायतीर्थाटनं करोमीत्यर्थः॥ ४२॥

ननु सर्वसमर्थः परमेश्वरः कथमुपेक्षितवानित्यत आह—

**नूनं नृपाणां त्रिमदोत्पथानां महीं मुहुश्चालयतां चमूभिः।**
**वधात्प्रपन्नार्तिजिहीर्षयेशोऽप्युपेक्षताऽघं भगवान्कुरूणाम् ॥ ४३ ॥**

**नूनमिति।** यद्यपि भगवान् दुष्टनाशार्थमेवाऽवतीर्णः, तथापि यत् दुर्योधनादीन् न हतवांस्तत्प्रपन्नार्तिजिहीर्षया। शरणागतधर्मादिप्रतिज्ञापूरणार्थमित्यर्थः। त्रिमदाः विद्याधनाभिजनाख्याः। 'विद्यामदो धनमदस्तथैवाभिजनो मदः।' इति। तेन त्रिमदेनोत्पथानां नृपाणां वधात्। ल्यब्लोपे पञ्चमी। वध कृत्वाऽपि कुरूणां वधादुपेक्षां कृतवान्। यत ईशः, भक्तद्वाराऽपि मारयितुं समर्थः॥ ४३॥

एवं भगवच्चरित्रं सर्वमेवाऽहं तत्प्रसादाज्जानामीति स्वज्ञानं निरूप्य, भगवत्स्वरूपमपि जानामीत्याह—

**अजस्य जन्मोत्पथनाशनाय कर्माण्यकर्तुर्ग्रहणाय पुंसाम्।**
**नन्वन्यथा कोऽर्हति देहयोगं परो गुणानामपि कर्मतन्त्रम् ॥ ४४ ॥**

**अजस्येति।** अजस्य अकर्तुश्च जन्मानि कर्माणि च उत्पथानां दुष्टानां नाशाय, सतां शिक्षणाय च। न हि सूर्योत्पत्तिव्यतिरेकेणाऽन्धकारो नश्यति, न हि भगवदाचरणव्यतिरेकेण कश्चिद्धर्ममाचरति। अतो दुष्टनिग्रहशिष्टपरिपालनार्थं भगवतो जन्मानि कर्माणि विरुद्धान्यपि जायन्ते. अन्यथा कर्मपारतन्त्र्यरहितः कथं जन्म स्वीकुर्यात्। अनेन साधारणपक्षो ज्ञायते, स्वेच्छया जनिते देहे अभिवद्भगवदावेश इति। **गुणानामपि पर** इत्यनेन गुणजनितकर्मपरतन्त्रः कथं भवेदिति महद्वैलक्षण्यं सूचितम्। देहमात्रस्यैव कर्मपरतन्त्रत्वं मन्यते। यथा सर्वमेव काष्ठमनित्यम्, तत्र प्रविष्टोऽग्निरपि सततगमनित्याविर्भावो भवतीति

१ विदुरेण प्रकाश

भावः । यथा वा भार्यादेहो भर्तृवशोऽपि भार्याजीवाधीन एव, तथेश्वरपरिगृहीतोऽपि देहः कर्माधीन एवेति केषाञ्चिन्मतम् । तथाऽयमपि मन्यते । तदग्रे दूषयिष्यत्युद्धवः ॥ ४४ ॥

एवं स्वस्य सर्वबुद्धिमुक्त्वा, तेनाऽधिकारिदेहहेतुभूतवायुसंस्कारं निरूप्य, संस्कृताकाशसिद्ध्यर्थं भगवच्चरित्रं पृच्छति—

**तस्य प्रपन्नाखिललोकपानामवस्थितानामनुशासने स्वे ।**
**अर्थाय जातस्य यदुष्वजस्य वार्तां सखे ! कीर्तय तीर्थकीर्तेः ॥ ४५ ॥**

तस्येति । प्रपन्नाखिललोकपानाम् । प्रपन्नाश्च ते अखिललोकपाश्च, सर्वे हीन्द्रादयो भगवत्प्रपन्नास्तदाज्ञाकारिणश्च । अतस्तेषां कार्यार्थमाविर्भूतस्य यदुकुले, वस्तुतो जन्मरहितस्य । वार्तां कथयेति तृतीयः प्रश्नः । तीर्थयात्रार्थं कृतसङ्कल्पः कथमन्यच्छ्रोष्यतीत्याशङ्क्याऽऽह—तीर्थकीर्तेरिति । तीर्थरूपा कीर्तिर्यस्य । सखे ! इति संबोधनं युक्तमयुक्तं वा पृष्टं वक्तव्यमेवेति ज्ञापनार्थम् । एवं भगवच्चरित्रे भगवदीयानां चरित्रे शुश्रूषुः, प्राप्तसत्सङ्गः, तीर्थायतनैः कृतपुण्यपुञ्जः, योग्यं देहं प्राप्याऽधिकारी भवति—इति भगवदधिकारसर्गे भूतसर्गो निरूपितः ॥ ३५ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां
तृतीयस्कन्धे प्रथमाध्यायविवरणम् ॥ १ ॥

---

## द्वितीयाध्यायविवरणम् ।

अधिकारार्थसर्गे हि भूतसर्गो निरूपितः ।
मात्राणामेव सर्गोऽत्र द्वितीये विनिरूप्यते ॥ १ ॥
मुख्याधिकारिणो भक्तौ क्रियाज्ञानविभेदतः ।
अलौकिकचरित्रेण माहात्म्यं विषयो मतः ॥ २ ॥
क्रिया तु भगवत्येव नाऽन्यत्रेति निरूप्यते ।
षड्भिस्तु मनसा तानि षट्कर्माणीन्द्रियैर्यतः ॥ ३ ॥
षड्गुणैश्वर्यसम्पन्नो भगवानेक एव सः ।
सप्ताधिकेन विंशत्या तावन्तो भगवद्गुणाः ॥ ४ ॥
तत्त्वतो विषयाः प्रोक्तास्ते देवाः सर्व एव हि ।
कथायां त्रिभिरध्यायैरधुनोत्तरमुच्यते ॥ ५ ॥

---

१ भगवच्चरित्रस्मृत्या सस्नेहदयाश्रुप्रवर्तनार्थम् प्रश्नः २ पक्षा प्र ३ अन्योन्यगतानां सर्वं एव यादवा देवा महकृता प्र ४ प्रश्नोत्तरात्मके संवादे प्र

सामान्यकुशले तत्र त्रेधाऽप्युत्तरमुच्यते।
लोकद्वये च भक्तौ च दुर्भाग्या यादवा इति॥ ६॥

तत्र प्रथमं विदुरेण पृष्ट उद्धवो नोत्तरमुक्तवानित्याह षड्भिः। भक्त्युद्रेकोद्धवे पश्चिस्तादृशोक्तं फलाय हि। अशक्तिर्भक्तिलिङ्गं हि हेतूक्त्या तस्य साधनम्॥ १॥ सर्वव्यापाररा‍हित्यं भक्तिलिङ्गस्य दर्शनम्। तथापि कृष्णमाहात्म्यकथनाय समुद्यमः॥ २॥ तत्र प्रथमं तस्याऽशक्तिरुच्यते—

श्रीशुक उवाच।

इति भागवतः पृष्टः क्षत्रा वार्तां प्रियाश्रयाम्।
प्रतिवक्तुं न चोत्सेह औत्कण्ठ्यात्स्मारितेश्वरः॥ १॥

**इति भागवत इति।** इतिशब्देन पूर्वाध्यायार्थं प्रकारविशेषादवक्तव्यत्वाय संगृहीतः। तत्र हेतुः—भागवत इति। एतादृशीं कथामन्यो वक्तुं शक्तः, न तु भागवतः। तथापि पृष्टश्चेद्भगवानिव स्वयमप्यन्तर्हितशक्तिरेव भवति। तत्राप्यङ्गेन कुशलेन पृष्टः। तदाह—**पृष्टः क्षत्रेति।** सा हि वार्ता प्रियाश्रिता, उत्तरे तु निराश्रया, न हि निराश्रया केनचिद्वक्तुं शक्या। तदाह—**प्रियाश्रयां प्रतिवक्तुं नोत्सेह इति।** चकारान्निपेधेऽप्यशक्तो न प्रष्टव्य इति। इन्द्रियसामर्थ्ये विद्यमानेऽपि ज्ञानांशसहायेऽपि क्रियांशे मन उत्साहात्मकं तत्र न जातमिति नोत्सेह इत्युक्तम्। प्रत्युत कथाश्रयान्वेषणार्थं प्रवृत्तं चित्तं भगवन्तं स्मारयितुमुत्कण्ठामुत्पादितवत्। अनेन भक्तिर्वचनप्रतिबन्धिका जातेत्युक्तं भवति। ईश्वरत्वाच्च न प्रणोद्यम॥ १॥

एवमशक्तिं निरूप्य तस्या भक्तिलिङ्गत्वं वदन् हेतूक्त्या तां साधयति द्वाभ्याम्—

यः पञ्चहायनो मात्रा प्रातराशाय याचितः।
तन्नैच्छद्रचयन् यस्य सपर्यां बाललीलया॥ २॥

**यः पञ्चहायन इति।** पञ्चवार्षिको हि सेवायामधिकारी। बालस्य प्रातर्भोजनं संपूर्णदिवसे बलजनकम्, मात्रा लालनमुत्साहजनकम्, तद्द्वयं तस्य पूर्वमेव नासीत्। बलं तु सपर्ययैव। उत्साहस्तु लीलयैव। बालत्वं तु तदानीन्तनं कीर्तितम्। तदुभयमिदानीं नास्तीति न बलम्, न प्रोत्साहः। अत एवाऽशक्तिर्भक्तिलिङ्गम्। अनेन हस्तव्यापारो भगवत्येवेति निरूपितम्। मनोव्यापारस्तु प्रथमे स्पष्टः। **मात्रा याचित इति।** लौकिकवैदिकधर्मापेक्षाऽपि निराकृता। इच्छाभावेन भगवदीयानां पदार्थानां लौकिकापेक्षया अतिनर्लीयस्त्वं निरूपितम्। यस्येति कृष्णस्य। सपर्या परिचर्या। क्रीडार्थं भगवदधिष्ठानं परिकल्प्य तत्र राजोपचारैः क्रीडनं बाललीला॥ २॥

एवमशक्तेर्भक्तिलिङ्गत्वं निरूप्य प्रकृते हेतूक्त्या अशक्तिं साधयति—

स कथं सेवया तस्य कालेन जरसं गतः।

---

१ पूर्वाध्याये सामान्यकुशलं विशेषकुशलं भगवच्चरित्रं चेति त्रयं क्रमेण पृष्टम्, तत्र सामान्यकुशलं स्पष्टादर्शाभिधानमित्यर्थः। तथा सति दिष्टा अष्टान्ता चरित्रप्रश्नोत्तरभूता इत्यर्थः प्रकाश। २ भक्त्युद्रेककुलं उद्धवे म। ३ भावकथननाऽस्मन्नैस्साधनम् म। ४ अवक्तव्ये म।

**पृष्टो वार्तां प्रतिब्रूयाद्भर्तुः पादावनुस्मरन् ॥ ३ ॥**

**स कथमिति** । तस्य बाल्य एव तथात्वं न, किन्त्वाजन्म भगवदीयैरेव सामर्थ्यम्, यत मेवंयव मह जरां प्राप्तः । अनेन तस्य सेवा जराभावाधर्थमपि न व्यापृता । आनुषङ्गिक तु न जातम्, कालस्य बलीयस्त्वादित्याह—**कालेनेति** । जरसं वार्द्धक्यम् । पूर्वसिद्धस्य शक्तिहेतोरभावात्कथमिति शक्त्यर्थं प्रश्न । अत एव वार्तां कथं ब्रूयात्? अग्रेऽपि वार्तां पृष्टो माहात्म्यं कथयिष्यति । तत्तु सर्वदा साश्रयमेव, अलौकिकत्वात् । वार्ता तु लौकिकी । न चात्र भक्तिविरोध, प्रकारान्तरेण भक्ते क्रियमाणत्वात् । तदाह—**भर्तुः पादावनुस्मरन्निति** । भर्तृपदेन तस्यैवं लीला श्रुतिसिद्धा युक्तेति सूचयति । '**भर्ता सन् भ्रियमाणो बिभर्ति**' इत्यादिश्रुतेः । **पादाविति** द्विवचनं भक्तिमार्गस्थापनाय । **अन्विति** उपदेशानतिक्रमाय । अनेन बहिर्वागिन्द्रियविषयनिवृत्तिरुक्ता ॥ ३ ॥

असक्तिर्न केवलं वागिन्द्रिये, किन्तु सर्वत्रैवेति सर्वव्यापारराहित्यमाह—

**स मुहूर्तमभूत्तूष्णीं कृष्णाङ्घ्रिसुधया भृशम् ।**
**तीव्रेण भक्तियोगेन निमग्नः साधु निर्वृतः ॥ ४ ॥**

**स मुहूर्तमिति** । मुहूर्तमात्रमेव भगवति स्थितः । स हि कलरूपः, पादस्मरणेन च पादान्तिकं नीतः । **तूष्णीमिति** सर्वेन्द्रियव्यापारराहित्यम् । तस्य सद्योमुक्तिमाह—**कृष्णाङ्घ्रिसुधया निर्वृत इति** । ब्रह्मानन्दं प्राप्त इत्यर्थः । सुधापदेन च तत्र प्राणलयाभाव सूचितः, स्मरणे तदानन्दाविर्भावाभावात् । तदर्थमुपायमाह—**तीव्रेण भक्तियोगेन साधु निमग्न इति** । **तीव्रेणेति** बहिर्व्यापारोच्छेदनसामर्थ्यं सूचितम् । भक्तिरत्र प्रेमलक्षणा । स चोपायभूतःसर्वदा विद्यमानः । न हि योगेन निमग्नः शीघ्रमुत्तिष्ठति । अनेन क्रियारूपैस्पर्शेन्द्रियव्यावृत्तिरुक्ता । विपर्ययोऽपि भक्तानामनेन निरूपितः ॥ ४ ॥

एवं सर्वव्यापारराहित्यं निरूप्य तस्य भक्ति लिङ्गजनकत्वम्, अन्यथा तद्बद्धर्थमिति तदाह—

**पुलकोद्भिन्नसर्वाङ्गो मुञ्चन्मीलद्दृशाऽशुचः ।**
**पूर्णार्थो लक्षितस्तेन स्नेहप्रसरसंप्लुतः ॥ ५ ॥**

**पुलकोद्भिन्नसर्वाङ्ग इति** । पुलकैः रोमोद्गमैरुद्भिन्नानि सर्वाङ्गानि यस्य । अनेनाऽऽनन्दः पूर्णो मध्ये जात इत्युक्तम् । बहिरपि निर्गच्छतीत्याह—**मुञ्चन्मीलद्दृशाऽशुच इति** । मीलदिति अन्तर्भोगो निरूप्यते, न तु जलनिमग्नवत् केवलमन्तःपूर्णता । अशुच आनन्दाश्रूणि । अनेन शोकं निवार्य स्वयं निर्गच्छन्तीति सूचितम् । एवं रोमोद्गमादीनां भक्तिलिङ्गानामुत्पत्तिमुक्त्वा तेषां लिङ्गत्वमाह—**पूर्णार्थो लक्षित इति** । अर्थो भगवानानन्दरूपः पूर्णो यस्मिन् । तेन विदुरेण, नेत्रोदकादिना वा । तस्य भक्तिदर्शनेन स्वस्याऽपि भक्तिर्जाता । स्वात्मानं विकलीकरोतीति, भक्तेरतिपूरेणायं बहुदूरं प्लावित इत्यपि लक्षितः । भक्तेः प्लावकत्वं

---

१ 'अत्र प्रवयसोऽप्यासन् ...' इति श्लोकोक्त सर्वेषाम् फलम् स्वाहाः. २ तैत्तिरीयारण्यकपञ्चमप्रश्नेऽयमनुवाकः । अ मर्वोऽपि तद्गाधस्य येथोर्थो मया विद्वन्मण्डनविवरणे व्याख्याय व्युत्पादित इति ततोऽवधेयः प्र. ३ अग्निमानुवा-बगह्र. प्र ४ आनन्दकिग्गनिरूपकस्पर्शेन्द्रियमपर्यस्तरयान्तग्मुग्यानित्यर्थः. प्र ५ उक्तेन्द्रियविषयो भक्तिरूप. प्र.

न सम्भवतीति स्नेहस्य प्रसर उक्तः। सा हि शास्त्रतो जायमाना यावत्कार्यमेव जायते। अनेन विसर्जनक्रिया निरूपिता। एवमेव सर्वेन्द्रियाणां भगवद्विषयत्वम् ॥ ५॥

तादृशोऽपि भगवन्तं दृष्ट्वा लब्धाश्रयो भगवन्माहात्म्यकथनार्थं विदुरं कृतार्थीकर्तुं भगवदिच्छया भगवन्तमाश्रयभूतं गृहीत्वैव सावधानतया समागत इत्याह—

**शनकैर्भगवल्लोकान्नृलोकं पुनरागतः ॥**
**विमृज्य नेत्रे विदुरं प्रत्याहोद्धव उत्स्मयन् ॥ ६ ॥**

**शनकैरिति।** शनकैरिति सावधानत्वम्। न तस्य स्मरणमात्रं जातम्, किन्तु व्यापिवैकुण्ठे गत्वा समागत इत्याह–**भगवल्लोकान्नृलोकं पुनरागत इति।** पुनःपदेन च पूर्वमप्युद्धवो वैकुण्ठादेव समागत इति ज्ञायते, अन्यथा '**स्वधाम नय मामपि**' इति तस्य कामना प्रतिहता स्यात्। पूर्वं तु भगवदाज्ञापरिपालनार्थं समागतः, इदानीं तु भक्तस्य। **नेत्रे विमृज्येति** निद्रापर्यालोचितत्वं सूचितम्। स्वस्य पूर्णत्वेन महत्त्वमल्पेऽप्यागतं गर्वाय भवतीति तन्निवृत्त्यर्थमाह–**उत्स्मयन्निति।** उच्छब्दो विवृतिवाची हासजन्मुखविकासं बोधयति। तादृशो भूत्वा प्रत्याह ॥ ६ ॥

एकेन साधारणमुत्तरम्—

**उद्धव उवाच**

**कृष्णद्युमणिनिम्लोचे गीर्णेष्वजगरेण हि ॥**
**किं पुनः कुशलं ब्रूयां गतश्रीषु गृहेष्वहम् ॥ ७ ॥**

**कृष्णद्युमणीति।** कृष्णो हि सदानन्दः सर्वदा द्युमणिरेव। न हि कदाचिदपि सूर्यो भूमौ समायाति, तत्र स्थित एव परमिदं जगत् प्रकाशयति, तथा भगवान् व्यापिवैकुण्ठ एव स्थितोऽस्मदादिरूपां पृथ्वीं प्रकाशितवान्। स इदानीमनहिर्मुखान् अस्मत्परभागस्थितान् प्रकाशयितुं निम्लोचति। तस्य निम्लोचे सति सर्वमेव जगत् पूर्वं तत्प्रकाशितमन्धकारेण गृह्यते। सह्यन्धकारोऽजगर आधिदैविकः। इदं हि लोके परिदृश्यमानं तम आधिभौतिकम्। '**हृतरूपं तु तमसा वायौ ज्योतिः प्रलीयते**' इत्याध्यात्मिकम्। '**आत्मप्रस्वापनं तम**' इत्याधिदैविकम्। महत्तत्त्वं तु मुख्यो ब्रह्मा। अजस्य गरणं गिलनं येनेति। '**गृ निगरणे**' इति धातोः। येन महत्तत्त्वमपि भक्ष्यते, भगवत्प्रकाशावसाने तेनैवैते भक्षिताः। स हि अमुक्तानामभक्तानां च भक्षको नियतः। तदाह–**हीति।** हेति पाठे भगवदीयानामेतन्महदाश्चर्यम्। कुशलं हि विद्यमानमुच्यते। एतावत्तु ज्ञातम्, अतः परं किं कुशलमिति न जान इत्याह–**किं पुनः कुशलं ब्रूयामिति।** किञ्च। कुशलं सर्वं लक्ष्मीकार्यं भगवत्कार्यं च। तत्र भगवता न तेषु किञ्चित् कुशलं कृतम्। लक्ष्मीकृतं गृहे स्त्रीषु च भवति, तल्लक्ष्म्यामपि गतायां गतश्रीषु गृहेषु सत्सु किं कुशलं ब्रूयामिति सर्वकुशलनिवृत्तिः। अहमित्यहमेवोर्वरित एतादृशः, अतो मां दृष्ट्वैव ज्ञातव्यं यज्ज्ञातव्यम्। वक्तव्यं तु नाऽवशिष्यत इत्यर्थः ॥ ७ ॥

---

१ पुलकोद्गदकथनेन, प्रकाश। २ 'सवंत्रा विसर्गाणां पायुरेकायनम्' इति श्रुत्युक्ता विसर्जनक्रिया निरूपितेत्यर्थः प्र। ३ सन्निधाप्येत्यर्थः प्र। ४ यथा सुषुप्तौ सति भगवन्निशापाये जातो बहिरायाति तद्वदागमनत्वमित्यर्थः प्र। ५ निवृत्तिवाची वाढवत्, स ग घ ट च छ। ६ तथा चैतेन नरवाचिवयवायस्मुख्यभक्तिप्रतिबन्धकाभूतगर्वस्याऽभावः सूचितः। ७देव विद्यमाना नृत्याविद्यास्तस्य प्र। ८भौतिकेन तेजसा प्रस्थमानत्वात् प्र। ९भूतस्पर्शेनाग्राह्यत्वादाध्यात्मिकत्वमित्यर्थः प्र।

ननु भगवता ते कथं नोपकृताः ? तत्राऽऽह—दुर्भगेति त्रिभि —

**दुर्भगो बत लोकोऽयं यदवो नितरामपि ।**
**ये संवसन्तो न विदुर्हरिं मीना इवोडुपम् ॥ ८ ॥**

तामसादिगुणैस्ते भगवन्त न जानन्ति । सामान्यतोऽज्ञानम्, अन्यथाज्ञानम्, विरुद्ध च ज्ञानमस्तीति भगवता ते नोपकृता । तेषा सामान्यतोऽज्ञान सहेतुकमुपपादयति । अयं लोको मूर्लोक , दुर्गत भाग्य यस्य तादृश । बतेति खेदे । न हि भाग्ये विद्यमाने स्वय तिष्ठति भगवति गते । अभाग्य तु नास्ति, कियत्काल भगवदनुभवात् । यथा दुर्भगा तथाऽय लोक । एतावता वर्त्तत एव दुर्भगता परमन्यस्याम् । अयमिति जनात्मक । तथा स्वयं भगवति व्यवहृतवान्, येन दुर्भगो जात । यादवास्तु सुतरामेव तथा जाता । ये चक्षुष्मन्तोऽप्यन्धा इव कूपे पातिता । सर्वतोमृत्युरय लोक , यादवास्त्वन्योन्यघातेन तथैव जाता इति भाव । अन्धत्वमाह—ये सम्यगेकत्र वसन्तोऽपि न विदुरिति । ज्ञाते किं स्यादित्याशङ्कय दृष्टान्तेन विपरीते फलाभावमाह—मीना इवोडुपमिति । पूर्वं समुद्रे मत्स्याश्चन्द्रश्चैकत्र स्थिता । ते चेच्चन्द्र प्रार्थयेयुस्तदा अमृतपानेन अमरा भवेयु । स ह्यमृतमय , अमृत च दातु शक्तः । मत्स्याश्च सर्वतोमृत्यवो ज्ञातिघातिन श्च । तेषामप्रार्थनायामज्ञानमेव मूलम् । तथा यादवा भगवदज्ञानान्न मुक्ताः, किन्तु सर्वतोमृत्यवो जाता इत्यर्थ । तस्य दानसामर्थ्यमाह—उडुपमिति । तदमृतलेशेनैव नक्षत्राणि प्रकाशन्ते तत्तिरोभावेऽपि, एव भगवत्तिरोभावेऽप्येते प्रकाश प्राप्नुयुर्यदि जानीयु , सर्वदुःखहर्तृत्वाद्भगवत ॥ ८ ॥

किञ्च । मीनाना ज्ञानसामर्थ्यमपि नास्ति, एते तु ज्ञानसमर्था अपि न ज्ञातवन्त इत्याह—

**इङ्गितज्ञाः पुरु प्रौढा एकारामाश्च सात्वताः ।**
**सात्वतामृषभं सर्वे भूतावासममंसत ॥ ९ ॥**

**इङ्गितज्ञा** इति । भगवतश्चेष्टितमपि जानन्ति, कदाचिद्भगवान् किञ्चिच्चिकीर्षया दिगादिकमपि पश्यति, तदैव जानन्त्येतत् करिष्यतीति । एव ज्ञानशक्तिरुक्ता । पुरु अधिक प्रौढा अतिक्रियाशक्तियुक्ताः । अत एव ज्ञानक्रियाशक्तियुक्तत्वादेकारामाः, भगवता सह एकत्रैवाऽऽरामो येषाम् । शक्तिद्वयस्य फलमेतत् । सात्त्वता इति वैष्णवा । एव लौकिकप्रकारेण ज्ञानक्रियातत्फलभक्तियुक्ता अपि न जानन्तीत्याह—सात्त्वतामृषभमिति । समस्तवैष्णवाना स्वामिनम्, मुक्तानामपि कामपूरकम् । भूतेष्वावासो यस्य । पाञ्चभौतिकदेहे स्थितम्, कारणभूतदेहे स्थित वा । अमंसत ज्ञातवन्त । अनेन विपरीतज्ञान तेषा स्थितमतो ज्ञातुमपि न यतन्त इति भाव ॥ ९ ॥

एव श्लोकद्वयेन अज्ञानम्, स्वसाधारण्येनाऽन्यथाज्ञान चोपपादयन् रागमुपपाद्य द्वेषमुपपादयति—

**देवस्य मायया स्पृष्टा ये चाऽन्यदसदाश्रिताः ।**
**भ्राम्यते धीर्न तद्वाक्यैरात्मन्युप्तात्मनो हरौ ॥ १० ॥**

देवस्येति । देवस्य ज्ञानात्मकस्य मायया व्यामोहिकया केचन स्पृष्टा आत्मान पर च न जानन्ति,

---

१ स्वस्य यादवेषु स्नेहम् प्रकाश

पशुवद्भगवति व्यवहरन्ति । ये च पुन मायया सम्यग्व्याप्ता शिशुपालादयस्ते असद् द्वेषमेवाश्रिता । यदसदन्य द्रवति, भगवत्सम्बन्ध दूरीकरोति । अथवा । केचिदन्यदेवाश्रिता , येन भगवता भिन्ना भवन्ति । अहङ्कार गर्वसहितमित्यर्थ । अन्ये पुनश्चकारोक्ता सर्वथा तत्तदायोग्या अपि पाषण्डा असद्भगवन्निन्दामेवाऽऽश्रिता । अनेन ये केचिज्ज्ञातुमपि यतन्ते तानपि ते नाशयन्तीति भाव । तर्हि सर्व एव नष्टा , तथा सति भगवदवतारफल न जातमित्याशङ्क्याऽऽह—भ्राम्यते धीरिति । न हि सवषा बुद्धिं ते भ्रामयितु शक्ता । ये तद्वाक्य मन्यन्ते अदृढमूला शास्त्ररहितास्त एव भ्रान्ता भवन्ति, ये त्वस्मदादय आत्मरूपे भगवति उप्तात्मानस्ते न भ्रमन्ते । एकवचन दुर्लभाभिप्रायेण । उप्त आत्मा येनेति । कृ यादिना भूमिं भित्त्वा सर्वत सस्कृत्य शुद्ध बीज यदुप्यते, तद्वाज जाताङ्कुर वायुना न गच्छति, अमूल पतित तृणादिकमेव गच्छति । आत्मशब्देन च अन्त करणस्य शुद्धता उक्ता । भगवांस्तु स्वय स्वचरणयोरुप्त चित्त केषामपि न दूरीकरोति, सर्वद् स्वहृत्त्वात् । इत्याह—हरामिति ॥ १० ॥

अत एव भगवान् ज्ञापनार्थमागत प्रायेण सर्वानेवाऽनाधिकारिणो ज्ञात्वा स्वरूपमुपसहृतवानित्याह—

**प्रदर्श्याऽतप्ततपसामवितृप्तदृशां नृणाम् ।**
**आदायाऽन्तरधाद्यस्तु स्वबिम्बं लोकलोचनम् ॥ ११ ॥**

**प्रदर्श्येति** । स्वोपेक्षादोषाभावाय प्रकर्षेण दर्शयित्वा । इन्द्रियाणा बहिर्मुखत्वेन दर्शनकरणायोग्यत्वेऽपि स्वसामर्थ्यं दत्त्वा प्रदर्शन प्रशब्दार्थ । तेषा दृष्टीना साधनान्तराभावमाह—अतप्ततपसामिति । ' अतप्ततनूर्न तदामोऽश्नुते ' इति श्रुते । येन न तप्त तप स त्वामोऽपक्व , नहि स जलधारो भवितुमर्हति । जलनिकटे स्थितेऽप्यामघटे न जल प्रक्षिप्यते, स्वरूपनाशशङ्कया । तथा भगवानपि स्वरूप तेषा दृष्टौ न स्थापितवान्, तपोव्यतिरेकेण भगवत्यन्यथाबुद्धिसम्भवाचन्नाश एव स्यात् । तर्हि तावत्काल कथ स्थापितवा स्तत्राऽऽह—अवितृप्तदृशामिति । न विशेषेण तृप्ता दृष्टिर्येषाम् । वस्तुसामर्थ्यात् वस्तुविचारमकृत्वैव रूपमेव पश्यन्त स्थितास्तृप्तप्राया जाता । सर्वथा तृप्ताश्चेदन्यथा जानीयु । अत एवं उपसहृतवानित्यर्थ । **नृणामिति** राजसत्वम् । आदायेति धर्मद्वारा तेषा दृष्टिषु प्रविष्ट तत आच्छिद्य स्वयमप्यन्तर्हितवान्, मध्ये वा स्थापितवान् । अविद्यन्मेपवद्वा तृप्तादृष्टिर्येषाम् । तेऽधोमुखा नीचहृदय । अत एवाऽऽदाने सुग मता । **स्वबिम्बमिति** स्वयमादित्यो बिम्ब रूपम् । अनेन विदुरज्ञान परास्तम् । यथा तेजोरूप बिम्बम्, तथाऽऽकृति सच्चिदानन्दरूपेति । किञ्च । तद्रूप लोकाना लोचन ज्ञानरूपम् । न हि पदार्थबोधव्यतिरेकेण चक्षुषा किञ्चिज्जानाति । 'चक्षुषश्चक्षु ' इति श्रुतेर्लोचनमेतदेव । न हि लोचन दृश्य भवति, निमिषमात्रेण च तिरोभवतीति तस्य तिरोभावो युक्त इत्यर्थ । तुशब्देन रूपान्तरेण तिष्ठतीति सूचितम् ॥ ११ ॥

तद्रूप सच्चिदानन्दरूपमिति निरूपयितु सदुत्कर्ष चिदुत्कर्षमानन्दोत्कर्ष चाऽऽह त्रिभि —

**यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम् ।**
**विस्मापनं स्वस्य च सौभगर्द्धेः परं पदं भूषणभूषणाङ्गम् ॥ १२ ॥**

---

१ दोषारोपपुरस्सर जानीयु प्रकाश २ एतदर्थम ग ३ 'एव' इति नास्ति ख ग ङ, ट ४ अन्तर ग्राम इति पदा स्वयन्तर्धा नेति दृष्टऽसिवद्भगवन्तवत ... ज्ञानम् ग ५ इतिर्हिते ग

**यन्मर्त्यलीलौपयिकमिति** । इदं हि भगवतो रूपं सद्रूपम् । पञ्चभूतप्रकारेण पञ्चभूतसमनापि पञ्चभूतेभ्यो विशिष्यत इति सदुत्कर्षं । तत्र पृथिव्युत्कर्षमाह—**यन्मर्त्यलीलौपयिकमिति** । मृद्भावमापन्ना मर्त्या, मृद्भावं त्यजन्तीति वामर्त्या । पृथिव्या ये भवन्ति, तेषां या लीला स्वरूपक्लेशव्यतिरेकेण सर्वमनोहरत्वे ष्टारूपा, तस्या औपयिकं योग्यम् । मर्त्यानां न लीलाधारत्वम्, अमर्त्येषु मर्त्यलीलाभाव तथापि पार्थिवानां न योग्यता । अतोऽलौकिकमेव यन्मनुष्यरूपसदृशं शुद्धं सद्रूपं तदेव लीलायोग्यम्, कार्यदोषराहित्यात् । किञ्च, **स्वयोगमायाबलं दर्शयता गृहीतम्** । स्वस्याऽसाधारणरूपा साधनभूता सर्वभवनसमर्था या कारणरूपा माया, तस्या बलम् परीक्षार्थं बलिना यथा महत् कर्म कार्यते, तथा सतोऽनन्तरूपकर्त्र्या सर्वसामर्थ्यमेकत्र व्यापृतं प्रदर्शनीयमिति तादृशं रूपं निर्मितम् । नानाविधानि रूपाणि जलं स्वच्छतया गृह्णाति । तस्य जलस्योत्कर्षो माया । वैकुण्ठस्थितमपि रूपं गृह्णातीति जलभावेऽपि जलोत्कर्षं । किञ्च, स्वस्याऽपि विस्मापनम् । स्वयं हि तेजोमयं सर्वप्रकाशकं सर्वमेव स्वरूपमन्येभ्यः प्रदर्शयति, तस्य न किञ्चित् विस्मयम्, तादृशस्याऽप्येतत् विस्मापनं विस्मयजनकम्, अहो मयैतादृशमपि लोके प्रदर्शितं इति । तेजोरूपं सर्वतेजसोऽप्युत्कृष्टम् । किञ्च, **सौभगर्द्धेः परं पदम्** । सौभाग्यस्यर्द्धेरणिमाद्यष्टैश्वर्यस्य च परमं स्थानम् । प्राणस्य योगस्य च कार्यमेतद्द्वयम्, तेन वायुरूपं सद्वायोरुत्कृष्टम् । सौभगमत्र सौन्दर्यातिशयं सर्वपुरुषरोचकत्वम् । ऋद्धिः समृद्धिः । पुरुषोत्तमस्याऽपि रुचिजनकमतः, एवैतद्रूपं भगवतोऽतिप्रीति, प्राणादप्यधिका । किञ्च, **भूषणभूषणाङ्गमिति** । भूषणानां भूषणभूतानि अङ्गानि यस्य । भूषणान्यङ्गदादीनि कौस्तुभान्तानि, तेषां भूषणमङ्गमेव । यथेन्द्रनीलमणिः स्वर्णमणीनाम् । अनेन नभस्तले विमानविद्युदादय इव भगवद्रूपे आभरणानि शोभन्त इत्याकाशतुल्यमप्याकाशादुत्कृष्टम् ॥ १२ ॥

एवं सदुत्कर्षं निरूप्य चिदुत्कर्षमाह—

**यद्धर्मसूनोर्बत राजसूये निरीक्ष्य दृक्स्वस्त्ययनं त्रिलोकः ।**
**कार्त्स्न्येन चाऽद्येह गतं विधातुरर्वाक्सृतौ कौशलमित्यमन्यत ॥ १३ ॥**

**यद्धर्मसूनोरिति** । धर्मे हि ज्ञानमभिव्यक्तं भवति । धर्माज्जातं धर्मादप्युत्कृष्टम् । तस्याऽपि राजसूययागो धर्मोत्कर्षरूपः । तादृशीमवस्थां स्मृत्वा धर्मेणाऽऽहृ । बतेति हर्षे । सर्वेऽपि यत् भगवद्रूपं दृष्ट्वा एव ज्ञातवन्तस्तद्रूपं वर्णयति—**दृक्स्वस्त्ययनमिति** । दृशीनां स्वस्ति कल्याणरूपमयनं स्थानम् । सर्वेऽपि विषया दृशीनां नाशकाः, येऽपि भगवद्विषयास्तेऽपि स्वरूपतः कल्याणरूपा न । किं बहुना, विषयमात्रमेव तदृष्टिव्ययजनकम्, न तु पोषकम् । ज्ञानमेव तु दृष्टिपोषकम् । ज्ञानेन्द्रियाणां च तदेवायनम् । सजातीयं एव प्रविष्टं सजातीयं वर्द्धते । तेन विषयपक्षेऽपि 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' इति न्यायेन यदा ज्ञानमेव पश्यति चक्षुस्तदा स्वस्त्ययनं भवति । 'चक्षुषश्चक्षुः' इति श्रुतेश्च । तदा त्रिलोकस्य या बुद्धिर्जाता तामाह—इदं चिद्रूपे भगवच्छरीरे—कौशलं विधातुर्जगत्कर्तुर्गतम् । अर्वाक्सृतावेव कौशलम् । इतोऽर्वाक् सत्त्वमृष्टवैव जगत्कर्तुः सामर्थ्यम् । अथवा, अर्वाक्सृतिर्मनुष्यसृष्टिरर्वाक्स्रोतस्त्वात्, तत्र यत्कौशलं तदिह गतम् । अर्वाक्सृतिकौशलेन इदं कर्तुं न शक्यत इत्यमन्यत । तेन स्वस्य यत्नत्वात्, सर्वलोकप्रतीतिसिद्धत्वात्, सत्त्वमृष्ट्यतिरिक्तमेतच्चिद्रूपमिति ॥ १३ ॥

१ पृथिव्यंशस्यापि सर्वत्र प्रकाशः २ भावविकाररहित्यात् प्र ३ स्वस्वरूपस्य प्रमादयति प्र ४ निलाऽऽहृ ।
नत्वैव विशेष—मरणपूर्णार्थं ।

आनन्दरूपतामाह—

**यस्यानुरागप्लुतहासरासलीलावलोकप्रतिलब्धमानाः ।**
**व्रजस्त्रियो दृग्भिरनुप्रवृत्तधियोऽवतस्थुः किल कृत्यशेषाः ॥१४॥**

**यस्यानुरागेति** । स्त्रियो ह्यानन्दप्रधानाः, तासां दृष्टिरानन्द एव भवति। यत आनन्दार्थमेव प्रयतन्ते, साधने वा । प्रकृते साधनत्वाभावात् निरुपाधिकस्त्रीदृष्टिविषयत्वेन आनन्दत्वमुच्यते । यस्य भगवतोऽनुरागेण प्लुतो यो हासः, प्लुतो निमग्नोऽधिको वा, तत्सहितो यो रासः रससमूहात्मको बहुनर्तकीयुक्तो नृत्यविशेषः; तत्र यल्लीलावलोकनम्, तेन प्रतिलब्धो मानो याभिः । पूर्वमभिमानं परित्यज्य भक्तिमार्गानुसारेण भगवन्तं प्रपन्नाः। तत्र सम्यपर्यन्तं भगवद्भजने जाते अनुरागः प्रवृद्धः। हाससहितो रासो भावोद्गारी हृदये भगवदैक्यं प्रापयति । तत्र हास्यांशः काममध्ये प्रविष्टः भेदमपि बोधयदित्यनुरागेण प्लुतः कृतः परमप्रेमात्मको जातः। उत्साहजनकत्वात् हासोऽप्यपेक्षितः। रासो वश्यतापादकः । अत एव तत्र वशीभूतस्य भगवतो यल्लीलावलोकनम्, तेन पूर्वं त्यक्तोऽपि मानो भगवता स्थापितो दृष्टिद्वारा दत्त इति प्रतिलब्धमाना भवन्ति । अनेन दीनतया भक्तिरस आक्षिप्तः । स्वतन्त्रा एव ता भगवदानन्दानुभवे समर्था जाता इत्यर्थः । **व्रजस्त्रियो** गोकुलस्त्रियः। व्रजतीति व्रजः, सर्वैकत्र स्थितिरहितः । तादृशीनां स्तब्धतयैकत्र रसास्वादनं स्वभावेन विरुद्ध्यत इति स्वभावविजयी भगवानानन्दमयः। कामसाधकत्वाभावमाह—**दृग्भिरनुप्रवृत्तधिय इति** । दृग्भिः सह अनुप्रवृत्ता धियो यासाम् । यथा दृष्टिर्भगवति प्रविष्टा, तत्सङ्गे चेतनाऽपि तत्रैव गता । अतो न स्वशरीरे तासां कामभोगापेक्षा, भगवत्स्वरूप एवानन्दानुभवात्। न कामेनानन्दो न वा स्वस्मिन् जातस्याऽऽनन्दस्याऽनुभवः, अन्तःकरणादीनां तत्रैव व्यापृतत्वात् । नाऽऽस्मन्यानन्दजननसामर्थ्येन । अस्मिन्नर्थे न सन्देहः कर्तव्य इत्याह—किलेति । किञ्च । कृत्यशेषा एवाऽवतस्थुः । कृत्ये शेषो यासाम् । प्रतिक्षणं भगवदात्मकतामेव प्राप्नुवन्तीति गृहकृत्ये तासां कृत्यशेष एव तिष्ठति, देहस्मरणाभावात् । अतोऽपि स्वस्मिन्नानन्दोत्पत्तिः। यथा दूरे स्थितं दृष्टिर्विपर्यीकरोति, तथा दूरे स्थितं भगवन्तमप्यानन्दरूपं दृष्टिर्विपर्यीकरोति,[1] अन्यथा आनन्दप्रेप्सूनामेवं स्थितिर्न स्यात ॥ १४ ॥

एवं सच्चिदानन्दत्वं स्वरूपस्योपपाद्य, तत्र जीवस्येव भगवतोऽपि स्थितिर्वक्तव्येत्याशङ्क्य, तत्रैव सच्चिदानन्दरूपेऽक्षरे स्थितस्य पुरुषोत्तमस्याऽग्निवत्तत्र प्रादुर्भाव इत्याह—

**स्वशान्तरूपेष्वितरैः स्वरूपैरभ्यर्द्यमानेष्वनुकम्पितात्मा ।**
**परावरेशो महदंशयुक्तो ह्यजोऽपि जातो भगवान् यथाऽग्निः॥१५॥**

**स्वशान्तरूपेष्विति** । अक्षरस्यैवंप्रकारेणाविर्भावः, तत्र भगवदाविर्भावश्च निर्निमित्तं न भवति । अन्यद्वारा तमर्थं कारयन् विषमो भवेत्। अतः पुत्रशिक्षावत् भगवान् दैत्यान् मारयतीत्याह—स्वस्य शान्तेषु स्वरूपेषु देवादिरूपेषु अशान्तैरितरैः स्वरूपभूतैरेव दैत्यैरर्द्यमानेषु सत्सु दयाविष्टचित्तः मर्यादयाऽप्यज उभयसमाधानार्थं स्वयं साक्षरः पुरुषोत्तम आविर्भूतइत्यर्थः । कालकर्मादिप्रेरणाभावार्थमाह—**परावरेश इति** । परः कालादिः, अवरः कर्मादिः, तेषां नियन्ता । ननु पुरुषो नारायणः प्रथमपुरुषो वा स्वानन्देन गत्याऽऽविर्भावं लभताम्, किं पुरुषोत्तमाविर्भावेनेत्यत आह—**महदंशयुक्त इति** । महानंशो यस्य प्रथमपुरुषस्य,

[1] उत्कृष्टानन्दरूपताम्. प्रकृतः. [2] तदभावार्थम्. प्र. [3] अभावार्थम् [4] 'गोऽप्युते ... [5] युक्ताः स्वरूपः प्र. [5] आविर्भावनिमित्तभूतमर्थम्. प्र. [6] महत्तरम्. प्र.

तत्युक्त[1] । सृष्ट्यर्थं स्वस्मिन प्रकृतिपुरुषमन्तर्भाव्येवाऽऽविर्भवति । अत एव स्वस्मिन यशोदादिभिर्जगदुपल भ्यते । एतदेव हि ब्रह्मलिङ्गम् । अन्येन्यावृत्त्यर्थमाह—भगवानिति । यथाऽग्निरिति व्याख्यातम् ॥१५॥

एवमक्षरपुरुषोत्तमत्व भगवद्देहात्मनोरुपपाद्य लोकप्रतीतिविरोध भगवद्वाक्यविरोध च परिहर्तुमाह द्वयेन—

**मां खेदयत्येतदजस्य जन्मविडम्बनं यद्वसुदेवगेहे ।**
**व्रजे च वासोऽरिभयादिव स्वयं पुराद्व्यवात्सीद्यदनन्तवीर्यः ॥१६॥**

**मां खेदयत्येतदिति** । भगवान् लोकवञ्चनार्थं प्राकृतदेहत्व स्थापयितुं वसुदेवपुत्रत्वादिविडम्बन यत करोति, तद्विडम्बनमपि तस्य सर्वथा अयुक्तमिति किं सर्वसमर्थस्य वञ्चनेनेति तथाकरण मा खेदयतीत्याह—**अजस्य जन्मविडम्बनमिति** । तत्रापि **वसुदेवगेहे** वसुदेवस्य भार्याया देवक्याम् । एतदपेक्षया स्तम्भ इव, जल इव, ब्रह्मणो हृदयादिव आविर्भावविडम्बन समीचीनमिति मा खेदयति । किञ्च, **व्रजे च वासो** मा खेदयति । कुत्र व्यापिवैकुण्ठवासी, लौकिकानामपि वासायोग्ये गोकुले किमित्यवात्सीदिति । किञ्च । **अरिभयादिव** जरासन्धादेर्भीत इव पुरान्मथुरातो व्यवात्सीदिति यत, पुरात् पलाय्य स्थानान्तर गतमिति यत् । विवाम परदेशवासः अयुक्तत्वे हेतुः—**अनन्तवीर्य इति** । व्रजे चेति चकारो गुरुकुलादिसग्रहार्थः । **अरिभयादिति** भयाभावादिवेत्युक्तम् । न हि सर्वात्मनोऽस्य सन्ति, न वा तस्य भयम् । अन्येषा भयनिवर्तकत्वाच्च । **स्वयमिति** नाशद्वारा ॥ १६ ॥

वाक्यविरोध परिहरति—

**दुनोति चेतः स्मरतो ममैतद्यदाह पादावभिवन्द्य पित्रोः ।**
**ताताऽम्ब ! कंसादुरुशङ्कितानां प्रसीदतं नोऽकृतनिष्कृतीनाम् ॥ १७ ॥**

**दुनोति चेत इति** । पित्रोः पादावभिवन्द्य कसवधानन्तर देवकीवसुदेवपादावभिवन्द्य भगवानेवमाह—**हे तात**[2] हे अम्ब[2] **कंसादुरुशङ्कितानां** किं करिष्यतीति शङ्कया अतिभीतानामस्माकमुपरि प्रसीदत प्रसन्नौ भवतामिति । यत्तद्वाक्य तत्स्मरतो मम चेत, दुनोति दु खित करोति । अनेन सर्वाण्येव भगवद्वाक्यानि ' मानुषीं तनुमाश्रितम् ।' ' वदन्ति वासुदेवेति वसुदेवसुतं हि माम् ।' इत्यादिवाक्यानि लोकव्यामोहार्थमिति व्याख्यातानि । यदा भगवद्वाक्यानामेवैषा गतिः, तदा तैर्व्यामोहिताना वाक्याना किं वक्तव्यमिति भाव ॥ १७ ॥

एव सर्वविरोध परिहृत्य, साक्षात्पुरुषोत्तमत्वमुपपाद्य तस्य गुणकर्माणि निरूपयिष्यन् भक्तिमार्गसिद्धये आदौ भजनीयान् गुणान् निरूपयति—

**को वा अमुष्याङ्घ्रिसरोजरेणुं विस्मर्तुमीशीत पुमान् विजिघ्रन् ।**
**यो विस्फुरद्भ्रूविटपेन भूमेर्भारं कृतान्तेन तिरश्चकार ॥ १८ ॥**

**यो वेति** । भजनीय स एव स्यात्, यः स्वयमभय, महद्भ्यपि प्रपन्न सर्वतो भयान्मोचयति, ऐहिकामुष्मिकीं च ऋद्धिं मोक्ष च प्रयच्छति, भजनसन्देहेऽपि अनुपङ्गादपि यो मुक्तिं प्रयच्छति, स्वय च निर्दोषपूर्णगुणविग्रह, अनधिकारिणोऽपि गतिं प्रयच्छति, परार्थं स्वकृतनियममपि विरुद्ध न मन्यते—एव यः

---

1 अन्तर्भावान्त र्गीति प्रवाह 2 अ यथा क प 3 अक्षरपुरुषव्यावृत्त्यर्थम् प 4 लोक अकृपानाम् प
5 दाहम्, प

सप्तगुणो भवति, षडङ्गसहितभजनोपयोगिमहागुणवान् स भजनीय इति। सप्तस्वपि गुणेषु हेतुभूत गुणत्रय-मन्यच्चेत्, भवत्यतिसामर्थ्यम्,स्वरूपत एव सर्वोत्कर्ष ,परमा दया च, स सर्वेषामुपास्यो भवति। तदाह—सप्तभिः श्लोकैः। प्रत्येकमेकैकेन सप्तगुणा। द्वाभ्या त्रिभिस्ततो द्वाभ्या तैरेव स्थूलगुणा निरूप्यन्ते। तत्र प्रथममतिसामर्थ्यं निरूपयन्नाश्रितसर्वदु खदूरीकर्तृत्वमाह—को वेति। सर्वे हि प्राणिन सर्वानेव भजन्ते। तद्गतगुणदोषैरनुरक्ता विरक्ताश्च भवन्ति। एवमत्र निर्द्धार। भजनीयदोषव्यतिरेकेण सेव्यमान न त्यजन्ति। लोके हि सर्वेषामेव देवाना मनुष्याणा वा सेवकास्तत्परित्यज्य भगवदीया जायन्ते न भगवदीया कदाचिदप्य-न्यस्य। यस्त्विम शास्त्रार्थमन्यथाकरिष्यामीति भगवन्मार्गे समागत्य त त्यक्तुमिच्छति कौतुकादपि, सोऽपि तथा कर्तुं न शक्नोति। तदाह—अमुष्याङ्घ्रिसरोजरेणुं सकृदपि विजिघ्रन् को वा निस्मर्तुमीशीतेति। अतः स एव ईश, यस्त्वीशितव्यान् वशीकरोति। रेणुर्घ्राणमार्गेणान्तर्गतः पूर्वोक्तस्तस्य सङ्घात भगवदीयमेव करोति। स तदर्थोत्पादितसङ्घातः सर्वतो व्याप्त त रेणु विस्मर्तु न समर्थो भवेत्। ननु क्लिष्ट सङ्घातमपि विस्मरति, क्लेशनाशकमेवाऽधिमन्यत इति चेत्। तत्राऽऽह—यो निस्फुरादिति। अय हि कल्पतरु, यस्य भ्रू पर्णसहिता काचिच्छाखा। अनन्तशाखस्य सा एका शाखा सहारकर्त्री स्वभावत। सतुष्टा तु सापि परमैश्वर्य प्रयच्छति। अतस्तादृशशाखाया विद्यमानत्वात् स्वानिष्टनाशे का शङ्का? यतो भूमेरेव सर्वाधारभूताया कृतोऽन्तो येन। विशेषेण स्फुरता। यत्र भारसम्भावनाऽपि तत्र स्वय गत्वा दूरीकरणस्वभावेन भ्रूविटपेन भारमपि तिरश्चकार। यदर्थं सर्वेषामपि देवादीना महान् यत्न। यावत्ते दूरीकर्तुमायान्ति, तावत्स भारः पूर्वमेव तिरो भवति। यथा प्रथमोद्गतैः सूर्यकिरणैरेव सर्वतमोनाशः सूर्यस्तु तम पश्यत्यपि न, तथा भगवान् भक्तानामित्यर्थः॥ १८॥

इष्टफल तु भक्ताना न वक्तव्यमेव। यतो द्विषन्नपि भगवन्तमसुरोऽपि लोभाभिभूत सर्वधर्मप्रतिपक्षो भगवत्सम्बन्धमात्रेणैव निषिद्धेनापि ज्ञानिनोऽपि दुर्लभं सायुज्य प्राप्तवान्। अय चार्ऽथ सर्वजनीनस्तदाह—

**दृष्टा भवद्भिर्ननु राजसूये चैद्यस्य कृष्णं द्विषतोऽपि सिद्धिः।**
**यां योगिनः संस्पृहयन्ति सम्यग्योगेन कस्तद्विरहं सहेत॥ १९॥**

दृष्टेति। कृष्ण द्विषतोऽपि चैद्य य शिशुपालस्य राजसूयसभाया सर्वैरेव राजभिस्तत्र सेवाया नियमागताया या सिद्धि सायुज्यरूपा, सा भवद्भिरेव दृष्टा। नन्विति सबोधन समस्त्यर्थम्। या सिद्धिम्। योगिन स्वभावत उत्तमा फलपर्यवसायिना सर्वसाधनसहितेनाऽपि योगेन वाञ्छामेव केवल कुर्वन्ति, न तु भगवत्सम्बन्धव्यतिरेकेण ता प्राप्नुवन्ति। अत को वा तत्सम्बन्धाभावरूप भगवद्विरह सहेत? भगवत्सम्बन्धो हि कोटिकल्पवृक्षादप्याधिक। स प्राप्त केन वा त्यक्तु शक्य इत्यर्थः॥ १९॥

एवमिष्टसिद्धिहेत्वनिष्टनिवारकभगवद्गुण निरूप्य, स्वरूप निरूपयन् सम्बन्धव्यतिरेकेणाऽपि केवलस्वरूपसम्बन्धेनैव पूर्वोक्तादप्यधिक फल प्रयच्छतीत्याह—

**तथैव चाऽन्ये नरलोकवीरा य आहवे कृष्णमुखारविन्दम्।**
**नेत्रैः पिबन्तो नयनाभिरामं पार्थास्त्रपूता· पदमापुरस्य॥ २०॥**

---

१ प्रकारेण · पाप नाश · २ निस्मर्तुमीश्वरः। · सर्वैरानन्यमार्गे वर्तमानवद्वा। ' प

तथैवेति । ये नरलोके वीराः, अन्ये भगवत्संबन्धरहिताः, भगवन्तं जानन्त्यपि न; तेऽप्याहवे स्वरूपसौन्दर्येणैव व्यामुग्धाः, नेत्रैः, नयनाभिरामं लावण्यामृतपूरं कृष्णमुखारविन्दं पश्यन्तो भगवत्सायुज्ये प्रतिबन्धकरूपमशुद्धं देहं निराकृत्य पार्थास्त्रैः पूता बहव एव व्यापिवैकुण्ठं तच्चरणारविन्दं प्रापुः ॥ २० ॥

एतादृशे का फलचिन्ता ? अत्र परमेकमेव बाधकम्, व्यामोहिका भगवल्लीला; तयाचित्त व्यामुग्धः । सा हि भगवतः सर्वोत्तमत्वादिगुणान् भजनीयतां च शास्त्ररहितानां बुद्धौ स्थितामपनयति । तत्र सावधानेन भाव्यमित्याह द्वाभ्याम्—

**स्वयं त्वसाम्यातिशयस्त्र्यधीशः स्वाराज्यलक्ष्म्याऽऽप्तसमस्तकामः ।**
**बलिं हरद्भिश्चिरलोकपालैः किरीटकोटीडितपादपीठः ॥ २१ ॥**

**स्वयं** त्विति । एषा लीला व्यामोहिका, या स्वयमीश्वरो भूत्वा सर्वोत्तमः सर्वाधमस्य स्तब्धस्य, स्वयं तं तादृशं विधाय, कैङ्कर्यं करोतीति । येन ( भ्रान्तानां हृदये ) अयमेतादृश एवेति भ्रान्ता मन्यन्ते । तत्र प्रथमं तस्य सर्वोत्तमत्वमाह—**स्वयमिति** । तु शब्दो भ्रान्तप्रतीतिव्यावृत्त्यर्थः । न विद्यते लोके वेदे वा साम्यमतिशयश्च यस्य । यस्मात् स्वरूपतो गुणतश्च प्रसिद्धाऽपि त्र्यधीशः । किञ्च । अपेक्षितमपि किमपि नाऽवशिष्यते, यल्लौकिकन्यायेन कैङ्कर्यहेतुर्भवति । तदाह—**स्वाराज्यलक्ष्म्या** । स्वस्मिन्नेव यद्राज्यम्, सर्वमेव हि जगत् स्वस्मिन्नेव वर्तते; यः स्वस्मिन् राज्यं करोति । स सर्वस्मिन्नेव करोति । तत्र या लक्ष्मीः निरतिशयानन्दरूपा, तयैव प्राप्ताः सर्वे कामा येन । '**अस्यैवाऽऽनन्दस्य अन्यानि मात्रामुपजीवन्ति**' इति श्रुतेः । किञ्च । लोकेऽपि तस्यैश्वर्यं सिद्धम् । यतो बलिं हरद्भिश्चिरकालीनैर्लोकपालैः किरीटकोटिभिरीडितं स्तुतं पादपीठं यस्य । यथा पदार्थकरणपक्षस्तथा किरीटैरपि पीठस्य स्तोत्रम् । स्वयमपकृष्टभावेन नम्राः स्वसंबन्धिनं सर्वोत्कृष्टत्वेन बोधयन्ति । घट्टनोद्धतशब्देनेति केचित ॥ २१ ॥

एतादृशः स्वसिंहासने स्थितः स्वानन्दलक्ष्मीमनुभवन्नेव स्थातुं योग्यः, न तु कैङ्कर्यं कर्तुं योग्य इत्याह—

**तत्तस्य कैङ्कर्यमलंभृतान्नो विग्लापयत्यङ्ग ! यदुग्रसेनम् ।**
**तिष्ठन्निषण्णं परमेष्ठ्यधिष्ण्ये न्यबोधयद्देव ! निधारयेति ॥ २२ ॥**

**तत्तस्य कैङ्कर्यमिति** । किङ्करस्य भावः कैङ्कर्यम् । तदिति प्रसिद्धम् । तस्येति पूर्वोक्तस्य । ननु करोतु किमपि भगवान्, किं तवाऽनेन विचारेणेत्याशङ्क्याऽऽह—**अलं भृतान्** इति । वयमत्यर्थं भगवता भृताः । भृताः पोषिता वा । सेवार्थमेव वयं पोषिताः । यदि भृत्या इव सेवापि भगवते कर्तव्या स्यात्, तस्मिन्नपि पक्षे वयं मुख्यसेवार्थमुत्पादिताः, अस्मद्द्वारैव कारयतु । तदर्थमस्मानुत्पाद्य पुनः स्वयमेव करणात्कैङ्कर्यमस्मान् ग्लापयति । स्वयं ग्लायति, अस्मानपि ग्लापयति । ग्लायवतीति पाठे, ग्लैधातुर्लोपार्थः । **अङ्गेति** स्वदुःखस्थापनयोग्यमिवस्य संबोधनम् । **उग्रसेनमिति** । उग्रा सेना यस्य । कंसपिता, तम् । परमेष्ठ्यधिष्ण्ये महत्स्थाने । अधिष्ण्य धिष्ण्यमिति पर्यायः । तस्मिन्निषण्णम् । स्वयं तिष्ठन् समागतान् सर्वा-

१ [illegible] । २ [illegible] प्र. ३ गुणतश्चैवं [illegible] प्र. ४ [illegible] । [illegible] प्र. [illegible] । ५ [illegible] प्र. ६ [illegible] प्र.

नेव न्यवेदयत् । हे देव ! अग्रमागतो नमस्करोति, पश्येति न्यवेदयत् । इदं द्युतिदीनदौवारिककृत्यम् । यद्यपि सर्वं कृत्यं भगवत्कर्तृकमेव, तथापि रूपान्तरमेव कृत्वा करोति । यदि स्वयमेव कर्तव्यम्, तदा विपरीतं किं न करोतीति चित्तक्लेशः । देवसभायां यत्र ब्रह्मा उपविशति, तद्राजासनमिति परमेष्ठ्यधिष्ण्यमुक्तम् । अनेन ब्राह्मणेष्वपि तस्याऽनभ्युत्थानं निरूपितम् । अप्रतीकार्यश्चाऽयं क्लेशः ॥ २२ ॥

एवं रूपं मोहनं चोक्त्वा, तस्याभिप्रायापरिज्ञानादज्ञस्य तव क्लेश इत्याशङ्क्य, तदभिप्रायमपि जानामि, तथापि क्लेश इति वक्तुं तस्य दयां निरूपयति । क्लेशस्तु बुद्धिकृतो न भगवत्कृतः । स हि भगवान् सर्वानेव भक्तान् सेवकानात्मनोऽप्यधिकत्वेन ज्ञापयति । तत्रान्यासहनमयुक्तम् । उग्रसेनोऽपि न वक्तव्यः, भगवतैव तथा क्रियमाणत्वात् । विपरीतं च करोति, पूर्वश्लोके तथैव कथनात् । तस्मात् प्रमाणबलमतिक्रम्य प्रमेयबलेन तथा करोतीति तस्य प्रमेयबलं निरूपयन् भजनीयत्वं स्थापयति—

**अहो बकीयं स्तनकालकूटं जिघांसयाऽपाययदप्यसाध्वी ।**
**लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेम ॥ २३ ॥**

**अहो इति ।** यथा भगवतः साधनं सर्वाश्चर्यकरम्, फलपूर्णस्य[1] तुच्छफलसाधकम्; तथा तुच्छस्य साधनरहितस्याऽपि पूर्णफलदानमित्यहो आश्चर्यम् । बकस्य भगिनी दैत्यबकरूपा, तद्वृत्त्या सन्तोऽपि न मुक्ता भवन्ति । **इयमिति** बुद्ध्या भगवत्सङ्गे साऽप्युपस्थिता । **स्तनकालकूटमिति ।** स्तने विद्यमानं कालकूटम्, कालानां कूटं समूहः । सहस्रं हि काला मृत्यवः सन्ति, ते सर्वे तस्याः स्तन्ये एकीभूताः । अतः कालानां कूटं यत्र, तादृशं स्तन्यमपाययत् । ज्ञानहेतुपक्षेऽपि[2] तस्यां दुष्टत्वमाह—**जिघांसयेति,** हन्तुमिच्छया । पूर्वमपि तस्या दुष्टत्वमाह—**असाध्वीति ।** अनेन दैत्यधर्मोऽपि तस्यां नास्तीत्युक्तम्, ते हि जितेन्द्रियाः । तथाप्याकृतिक्रिययोर्यशोदातुल्यत्वात् तद्गतं दोषमविचार्यैव[3] क्रियाफलं दत्तवान् । अनेन भगवत्स्वरूपं यथाकथञ्चिदपि संबद्धं साधनान्तरनिरपेक्षं फलं साधयतीत्युक्तम् । भगवांश्च गुणानेव गृह्णाति न दोषान् । अतः परमदयालुरित्याह—**कं वा दयालुमिति ।** अन्यस्तु दयालुर्दैन्यमपेक्षते, नम्रतां वा, दोषाभावं वा । अयं तु किमपि नापेक्षत इति **ततोऽन्यं कं वा दयालुं शरणं व्रजेम ।** । शरणपदेन च सेवाभक्त्यादिकमपि निवारितम् ॥ २३ ॥

ननु ' निबन्धायाऽऽसुरी मता ' इति आसुर्यां संपदि जाताः कथं मुच्यन्ते ? ' तानहं द्विषतः क्रूरान् ' इति भगवतैवाऽन्यथाप्रतिज्ञानात् । तत्राऽऽह—

**मन्येऽसुरान् भागवतांस्त्र्यधीशे संरम्भमार्गाभिनिविष्टचित्तान् ।**
**ये संयुगेऽचक्षत तार्क्ष्यपुत्रमंसे सुनाभायुधमापतन्तम् २४ ॥**

**मन्येऽसुरानिति ।** असुरानहं भागवतानेव मन्ये, **' मामप्राप्यैव '** इति वचनात् । ये प्राप्नुवन्ति भगवन्तं दृष्ट्यादिनाऽपि, तेषामधमगत्यर्थमप्राप्त्यभावात् मुक्ता एव भवन्ति । ये तु **' मामात्मपरदेहेषु प्रद्विषन्तः '** इति द्वेषसाधना भगवदप्राप्तिसाध्या निरूपिताः, ते जगद्रूपमेव भगवन्तं द्विषन्ति, न तु साक्षात् । ये तु साक्षात् द्विषन्ति ते प्राप्नुवन्त्येव । केनचिदन्तःकरणधर्मेण[4] ते भगवत्संबन्धिन इति भागवताः । ये तु

---

१ फलेन निरवध्यानन्देन पूर्णस्य प्रकाशः   २ भगवानविनाशी, तत्रैतद्दोषस्य सबन्धो न भविष्यतीति ज्ञानस्य हेतुत्वपक्षे. प्र   ३ अस्मिन् वाक्ये भगवद्दोषेरभावात् प्र   ४ बुद्धिवृत्तिविशेषेण प्र.

सहजा दानवा ' दानवास्तु तमोलयाः ' इति वैष्णवैर्निरूपिताः, ते वेदेऽपि देवप्रतिपक्षत्वेन निरूपिता न मुच्यन्त इति केचित् । ततश्च मुच्यमानेषु पूतनादिषु न सहजासुरत्वम्, किन्त्वसुरावेशः । स तु भगवत्सम्बन्धे गच्छतीति तेषां युक्तिर्युक्तेति । एतदर्थं भेदवाद वैनाशिकीं च श्रुतियाम्, मोहकवाक्यवत् स्वविरुद्धं भगवद्वाक्यं वेदवाक्यानि च मन्यन्ते, ते बहुवाक्यविरोधाच्चिन्त्या । भक्त्यर्थं वा तथा वदन्तीति लोकशिक्षार्थं वा । असुराणां भगवत्प्राप्तावुपायमाह—**संरम्भमार्गाभिनिविष्टचित्तानिति** । क्रोधसंरम्भ एव भगवत्प्रापको मार्गः, तत्राऽभिनिविष्टं चित्तं येषाम् । क्रोधमार्गेण तेषां चित्तं भगवति प्रविशतीत्यर्थः । ज्ञानेच्छाप्रयत्नानामिव भगवद्विषयत्वेन क्रोधस्यापि भगवन्मार्गत्वम् । भगवतः परमदयालुत्वसिद्ध्यर्थं क्रोधस्याऽपि मुक्तिहेतुत्वं निरूप्यते, अन्यथा दयालुत्वं न स्यात् । तस्माद्वैष्णवैरेकमङ्गीकर्तव्यम्, दैत्यानां मुक्त्यभावो वा, भगवतो दया वा । तत्राऽपि बलिष्ठा दयेत्याह—**ये संयुगेऽचक्षतेति** । ते हि युद्धे मर्तुं समायान्ति । तेषु चेद्भगवतो दया न भवेत्, तदा परोक्षे स्थितोऽन्येन वा मारयेत्, न तु स्वयं प्रत्यक्षो भवेत् । ननु तथा सति भक्तिमार्गविरोध इति चेत्तत्राऽऽह—**तार्क्ष्यपुत्रमिति** । असे सुनाभं चक्रमायुधं यस्य तादृशं गरुडं पश्यन्ति । अंसेसुनाभायुधमित्यलुक्समासः । एतावान् भेदो भक्तदैत्ययोः, भक्ताः सर्वरूपं सर्वदा भगवन्तं पश्यन्ति, गरुडाधिरूढं च, अन्यैः सह संयुगे च, दैत्यास्तु संयुग एव गरुडमेव पश्यन्ति । परं भगवदारूढम्, भगवानारूढो यस्मिन्निति । अयमर्थः । कालात्मको गरुडः, तदुपरि च भगवान्, अतः कालं प्राप्य भगवन्तं प्राप्नुवन्ति, न तु जीवन्त इति विशेष इति ॥ २४ ॥

एवं भगवतः स्वरूपगुणानुक्त्वा, विदुरस्य तद्विषयकमज्ञानं दूरीकृत्य, पृष्टकथायामुत्तरं वदन् पश्चाऽपि मात्रा निरूपयति दशभिः श्लोकैः—वसुदेवस्य देवक्यामित्यादिभिः । गन्धो भगवतः स्थानं रसः क्रीडाऽपि बालकैः । रूपं त्रिभङ्गि ललितं सर्वदोषनिवारकम् ।१। मृत्योरमार्गतो रक्षा तस्य स्पर्शोऽभिधीयते । लोकवेदविरोधेन मनोवागनुसारतः ।२। प्रपञ्चे भगवल्लीला तु स्वाभावसुखात्मिका । स शब्दो नाऽन्य इत्येषमात्रा रूपोऽधिकारकृत् । ३ ।—

**वसुदेवस्य देवक्यां जातो भोजेन्द्रबन्धने ।**
**चिकीर्षुर्भगवानस्याः शमजेनाऽपि याचितः ॥ २५ ॥**

**वसुदेवस्य** भार्यायां देवक्याम् । भोजेन्द्रस्य कंसस्य बन्धनं यस्मिन्, तादृशे गृहे । वसुदेवस्य देवकीनिमित्तं भोजेन्द्रबन्धने जाते वा । तात्पर्यस्य निरूपितत्वाद्यथालोकसिद्धां कथां निरूपयति, सर्वभावविकाराणां तुल्यत्वाय । अस्याः पृथिव्याः शं कल्याणं चिकीर्षुः । पृथिवीसुखार्थं भगवदवतार इति प्रयोजनम् । ब्रह्मप्रार्थनेनाऽपि भक्तोद्धारार्था । अपिशब्देनाऽन्येषामपि प्रार्थना सर्वोद्धारार्था ॥ २५ ॥

**ततो नन्दव्रजमितः पित्रा कंसाद्विबिभ्यता ।**
**एकादश समास्तत्र गूढार्चिः सबलोऽवसत् ॥ २६ ॥**

**ततो** मथुरायां जननान्तरम्, पित्रा वसुदेवेन कंसाद्विशेषेण बिभ्यता नन्दव्रजमितः प्राप्तः । तत्र चोप

---

१ तन्त्रे प्रकाशः २ द्विविधानां मुक्त्यमुक्त्यव्यवस्थार्थम् प्र ३ पञ्चमी प्र ४ लोकाविरोधेन भगवन्मनेऽनुसारतः प्रपञ्चविरमकूटवरूपं, वेदविरोधेन भगवद्वागनुसारतः प्रपञ्चविषयकश्रवणाद्यागमने बोध्या प्र ५ सर्वमुक्त्यभावाय लोकबंधनरूपस्य प्र ६ भक्तानां प्रतीयमानानामेषां बंधनकारणत्वाय प्र

संहृततेजा भूत्वा, एकादश समा एकादशवर्षाणि, बलभद्रसहित, स एव निजसहाय इति तत्सहितोऽवसत् । एते हि दश प्राणात्मकाः, द्वौ द्वौ च विषयात्मकौ । जनने हेतुत्रयम्; गोकुलसमागमने हेतुद्वयम् । अजेनाऽपीत्यनुपङ्गात् । इदं च न प्रयोजनमध्ये प्रविशति, भिन्नतया स्वातन्त्र्येण निरूपणात् । इदं चान्तरिक्षस्थानमिव । अत एव रुद्रप्रीत्यर्थमेकादशसमा अवसन् । वायोस्तुल्यरूपतया प्रीत्यर्थं गूढार्चिष्ट्वं सबलत्वं च । समा वर्षाः ॥ २६ ॥

एवं मिश्रतया स्थितस्य पूर्वोक्तप्रयोजनाभावात्, शिरोभूतवासुदेवरूपेण क्रीडा कृतवानित्याहाऽष्टभिः । 'सप्त वै शीर्षण्या प्राणा' इति श्रुतेः । तत्र श्रोत्रे आह—परीत इति द्वाभ्याम्—

**परीतो वत्सपैर्वत्सांश्चारयन् व्याहरद्विभुः ।**
**यमुनोपवने कूजद्द्विजसंकुलिताङ्घ्रिपे ॥ २७ ॥**

वक्त्रमेतद्द्वयम्, स्कन्धार्थत्वेन । श्रोत्रमेतद्द्वयम्, प्रकरणार्थत्वेन । वत्सपैर्गोपालैर्बालकैर्वेष्टितो वत्सांश्चारयन्निति । क्रिययैव वायोः प्राणानां च, व्याहरत् विहारं कृतवान्. बालैः सह क्रीडितवानित्यर्थः । बाधाभावायाऽऽह—यमुनोपवन इति । यमुनायाः समीपवने । चित्तोद्वेगाभावायाऽऽह—कूजद्भिर्द्विजैः संकुलिता अङ्घ्रिपा यस्मिन् । भगवद्भक्ता वेदकल्पवृक्षेषु स्थिता भक्तिमाश्रित्य भगवन्तं गायन्तीत्युक्तं भवति॥२७॥

वने क्रीडामुक्त्वा सन्ध्यादिपु व्रजे क्रीडामाह—

**कौमारीं दर्शयंश्चेष्टां प्रेक्षणीयां व्रजौकसाम् ।**
**रुदन्निव हसन्मुग्धबालसिंहावलोकनः ॥ २८ ॥**

**कौमारीं दर्शयंश्चेष्टामिति** । कुमारसम्बन्धिनी पञ्चवर्षपर्यन्तं जायमाना । पञ्चाऽपि लीलाः पञ्चवर्षे. क्रियमाणा व्रजवासिनां पञ्चाविधानात् । त्रिविधाः पुरुषाः, द्विविधाः स्त्रियः । न हि सात्त्विक्यः स्त्रियः सन्ति । अतः सर्वेषामेव प्रेक्षणीयां चेष्टां प्रदर्शयन् व्याहरदिति संबन्धः । समर्थो हि स सर्वं कर्तुम् । दर्शयन्नित्यनेन स्वयं तथा न कृतवानेव । तत्र प्रथमं रुदन्निव, तामसस्तथैव तुष्यन्ति, रुद्रप्रीत्यर्थं च । हसन्निति राजस्यः । मुग्धभावेन तामसाः, बालभावेन राजसाः, सिंहावलोकनेन सात्त्विकाः । अत्राऽप्यागतः पूर्वं भक्तान् स्मरतीति रुदन्निव । हसन् मुग्धो यो बालः सिंहस्तद्वदवलोकनं यस्य ॥ २८ ॥

पौगण्डलीलामाह—

**स एव गोधनं लक्ष्म्या निकेतं सितगोवृषम् ।**

---

१ समुदायेन दशभिः प्रत्येकं द्वाभ्यां निरूपणस्य तात्पर्यमाहुः—एत इत्यादि । प्रकाश. २ भ्रात्रादिसुखचिकीर्षा प्रार्थनाद्वयं च. प्र ३ पितृभय ब्रह्मप्रार्थना च प्र ४ प्रार्थितपूरणम् प्र ५ अन्तरिक्ष यथा रुद्रदैवतं 'तेन्तरिक्षमजयन्' इति श्रुत्या बोध्यते, तथा व्रजोऽपि रुद्रस्य पशुपतित्वाद्रुद्रदैवत इति तथेत्यर्थः . प्र ६ वायुवद्गूढासंगेन प्र ७ स्कन्धार्थो हि सर्वसर्गः, स च बलं विना न संभवति । बलं च प्राणधर्मः, प्राणश्चापोमय, ताश्च रसप्रधानाः, तद्ग्राहकं मुखम्, अतोऽत्र मुखे रसनिरूपणम् प्र ८ प्रकरणार्थोऽत्र श्रोतुराधिकारः । श्रोता श्रोत्रप्रधानोऽतस्तथेत्यर्थः प्र ९ अत्र वत्सचारणस्य पापक्रियात्वं द्व्यनयनात्मकत्वेन बोध्यम् प्र १० प्राणविधास्तु तु कूजनग्रहणानुकूलतया प्र ११ तथा च जलस्य रसप्रधानत्वात् सामीप्येन रसदत्वमित्यर्थः प्र १२ श्रोत्रत्वसमर्थनायाहु—भगवदित्यादि प्र १३ प्रथमवर्षे प्र १४ ततः प्राकाट्याभावात् भक्तान् प्र

**चारयन्ननुगान् गोपान् रणद्वेणुररीरमत्॥ २९ ॥**

स एवेति। शिष्टेषु षट्सु वर्षेषु षड्भिः श्लोकैर्विशेषतः। तास्ता लीला इहोद्दिष्टाः क्रमो नाऽत्र विवक्षित.।१। स एव, यः पूर्वमुक्तः। गोधनं गवा समूहम्। लक्ष्म्या निकेतमतिसुन्दरम्, चारणे हेतुः, सिता गावो वृषा यत्रेति। धर्मप्राधान्यं निरूपितम्, अतस्तच्चारणं धर्मकरणमेवेत्युक्तम्। अन्यान् स्वाज्ञया धर्मकर्तॄन् शीघ्रमेव फलसम्बद्धान् कृतवानित्यभिप्रायेणाऽऽह—अनुगान् स्वस्य पश्चाद्भावोपजीविनो गोपालान्, वेणुवादनं कृत्वा, ब्रह्मामृतं पाययित्वा, परब्रह्मानन्दे अरीरमत् रमयामास ॥ २९. ॥

तत्र बाधकांस्तु लीलयैव दूरीकृतवानित्याह—

**प्रयुक्तान् भोजराजेन मायिनः कामरूपिणः।**
**लीलया व्यनुदत्तांस्तान् बालः क्रीडनकानिव ॥ ३० ॥**

प्रयुक्तानिति। भोजराजेन कंसेन प्रेषितान्, नानारूपधारिणो दैत्यान्, व्यामोहनार्थं समागतान्, लीलयैव क्रीडारूपयैव, विशेषेणाऽनुदत् दूरीकृतवान्। तांस्तानिति प्रसिद्धान्। श्रमाभावायाऽऽह बालः क्रीडनकानिवेति। वस्त्रपुत्रिका, काष्ठादिक्रीडासाधनानि वा। द्वयमेकवर्षकृत्यम् ॥ ३० ॥

सप्तमवर्षकृत्यमाह—

**विपन्नान् विषपानेन निगृह्य भुजगाधिपम्।**
**उत्थाप्याऽपाययद्गावस्तत्तोयं प्रकृतिस्थितम् ॥ ३१ ॥**

विपन्नान्विषपानेनेति। कालियह्रदे विषतोयपानेन विपन्नान् मृतान्, भुजगाधिपं निगृह्य, तन्मारकं दण्डयित्वा, तान् सजीवानुत्थाप्य, तदेव तोयं गाश्चाऽपाययत्। गाव इति गाः। भुजगाधिपः कालियः। तत्तोयं कालियह्रदतोयम्। प्रकृतिस्थित विषरहितम् ॥ ३१ ॥

**अयाजयद्गोसवेन गोपराजं द्विजोत्तमैः।**
**वित्तस्य चोरुभारस्य चिकीर्षुः सद्व्ययं विभुः ॥ ३२ ॥**

अयाजयदिति। सप्तमान्तलीला। गोसवेनेतीन्द्रयागं भङ्क्त्वा। वैश्यस्तोमम्। गावः सूयन्तेऽनेनेति गोसवं गोवृद्धिकरम्। वैश्यस्तोमात्मकं गोपराजं नन्दम्। द्विजोत्तमैरिति तेषां याजकत्वम, न स्वस्येति ज्ञापितम्। इन्द्रयागभङ्गेन तथाकरणे हेतुः—वित्तस्येति। कोट्यवधिद्रव्यस्य भाररूपेण स्थितस्य सद्व्यय चिकीर्षुः। पूर्वस्थितस्याऽन्यथाकरणे सामर्थ्यं विभुरिति ॥ ३२ ॥

अष्टमवर्षादिकृत्यमाह—

**वर्षतीन्द्रे व्रजः कोपाद्भग्नमानेऽतिविह्वलः।**
**गोत्रलीलातपत्रेण त्रातो भद्राऽनुगृह्णता ॥ ३३ ॥**

वर्षतीन्द्र इति। देवताप्रधानपक्षो मुख्य इति स्थापयितुमिन्द्रेण वृष्टिं कारितवान्। पुष्टिलीला च स्थापयितुं गोवर्द्धनोद्धरण च कृतवान्। व्रजविषयककोपाद्धेतोरिन्द्रे मेघद्वारा वर्षति सति, व्रजनाशमार्ग-

---

१ निकेतमिति. ख. ग. इ २ प्रकृत्या. ख. ३ गोसवश्च नामान्तरम् प्रकाश॰ ४ वै॰यराजस्तत्तत्समुदायात्मकम् ग ५ विषद्रवती देवतैव यत्र मुख्येति पक्ष॰. ग ६ एहिकामुष्मिकरूपा लीलाम् ग ७ विकल्पदलान्पयम् ग.

उक्य स मजो रक्षितः । इन्द्रस्य कथमेव करणमित्याशङ्क्याऽऽह—मखो मानो यस्य तस्मिन् सति, पश्चाद्दर्पेति मति । गोत्र पर्वतः स एव लीलातपत्रम् । पृथिवीरक्षका अपि धर्मिष्ठत्वाद्भगवता उद्धृता । लीलया आतपत्रमिव लीलातपत्रम् । छत्राक वा । त्रातो रक्षित. । भद्रेति स्तोत्रवनमुक्तविश्वासाय, गवानपि तथा रक्षित इति ज्ञापनार्थं वा । अन्यथाऽपि पालयितु समर्थ , स्वस्य परममनुग्रह व्रजविषयक लोके ख्यापयितु पर्वतोद्धरण कृतवानित्यभिप्रायेणाऽऽह–अनुगृह्णतेति ॥ ३३ ॥

वर्षचतुष्टयकृत्यमाह—

शरच्छशिकरैर्मृष्टं मानयन् रजनीमुखम् ।
गायन् कलपदं रेमे स्त्रीणां मण्डलमण्डनः ॥ ३४ ॥

शरच्छशिकरैर्मृष्टमिति । मत्यग्रोदितचन्द्रकिरणैर्मृष्टमुज्ज्वलित रजनीमुखं मानयन् रेमे । रजनी स्त्री, शशी भर्ता । स हि बहुकालेन समागतो मानिनीं सामन्तस्तापेन क्लिष्टा स्वकरैर्मृजन् मानापनोदन करोति, न तावता तस्या मानोऽपगच्छति । सा हि देवता निष्कलङ्केन रमणमेच्छते । स हि भर्ता शशी, शश कलङ्कयुक्त । अत उभयसमाधानार्थं स्वयमुपाय कृतवान । रजनीं स्त्रीसहस्ररूपा कृत्वा, चन्द्रं स्वमनोमन विधाय, तस्य मनोऽधिष्ठातृदेवतात्वसिद्ध्यर्थं शब्दब्रह्मोद्गिरन्, परमा रतिक्रीडा कृतवान् । शरत्कालीनः शशीति, वर्षाकाले रजनीमुखे वृष्टिर्भवतीति, रुदतीव सा । अत एव तदनन्तरकाले उत्पन्ना स्वकैर्मार्जनं करोतीति युक्तम् । नह्यन्ये रजनीमुखं मानयन्ति, मह्ता तस्मिन् काले क्रीडाभावात् । दोषस्तु रसात्मक एव न भवति । निर्दोषतया मानन भगवदेकनिष्ठतयैव । स्त्रीणा मण्डल मण्डनं यस्य, मण्डलस्य वा मण्डनभूत , सुवर्णे नीलमणिवत्, कषपाषाणे वा सुवर्णरेखा ॥ ३४ ॥

इति श्रीभागवतसुबोधिन्यां,श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे द्वितीयाध्यायविवरणम् ॥ २ ॥

---

## तृतीयाध्यायविवरणम् ।

तृतीये मध्यचरितं कृष्णस्य विनिरूप्यते ।
इन्द्रियाणां तथा सर्गमधिकारस्य पोषकम् ॥ १ ॥
आविर्भूतो हि भगवांस्तत्त्वान्येव प्रवर्तयन् ।
सर्वा सृष्टिं वितनुते तावन्तोऽत्र ततो गुणाः ॥ २ ॥
दशेन्द्रियाणि, चत्वारि मनआदीनि, देवताः ।
अष्टाविंशतिरूपाणि निरूप्यन्ते ततोऽत्र हि ॥ ३ ॥

---

१ आतपत्रपदतात्पर्यम् प्रकाश २ ' म- पदो बाहुलर ' इतिश्रुतौ -र्थे म - ममस्मरम म

पूर्वाध्याये मथुरायामुत्पत्तिमुक्त्वा, तत्र कर्तव्यचरित्रे वक्तव्ये, मध्ये गोकुलवासादिकं निरूपितम्; इदानीमाविर्भावकार्यं निरूप्यते। तत्र प्रथमं गोकुलात्समागत्य कंसं हतवानित्याह—

## उद्धव उवाच।

**ततः स आगत्य पुरं स्वपित्रोश्चिकीर्षया शं बलदेवसंयुतः।**
**निपात्य तुङ्गाद्रिपुयूथनाथं हतं व्यकर्षद्व्यसुमोजसोर्व्याम् ॥ १ ॥**

तत इति। ततो गोकुलात्स भगवान् स्वपुरं मथुरामागत्य, स्वपित्रो. शं चिकीर्षयोभयोः कार्यसिद्ध्यर्थम्, बलदेवेन संयुतो रिपुयूथानां नाथं कंसं तुङ्गान्मञ्चान्निपात्य, तदुपरि स्वयं पतित्वा, मृते तस्मिन् पित्रोः प्रियचिकीर्षया हतमपि तं व्यकर्षत्, विकर्षणं कृतवान्। एवं हि तेषां कामना स्थिता, क एनमित्थं करिष्यतीति। ओजसेति। यथा तस्याऽवयवा विशीर्णा भवन्ति, तथा महाप्रयत्नेन विकर्षणं कृतवानित्यर्थः। इदमेव भक्तानां मनः। भक्तानां मनसि स्थितं दैत्यं हत्वा तन्मनः स्वस्थं कृतमिति। एतादृशे चरित्रे कृते तेषां हृदये यज्जायते—अस्माभिरप्येवं कर्तव्यम्, भगवदपेक्षया स्थातव्यम्; भगवानेव चित्ते स्थितं दोषं परिहृत्य मनः स्थिरीकरिष्यतीति ॥ १ ॥

एवं दुष्टनिग्रहं निरूप्य शिष्टपरिपालनं वक्तुं सतां शिक्षार्थं स्वयमाद्यं ब्रह्मचर्यलक्षणं धर्मं संपूर्णं कृतवानित्याह—

**सान्दीपनेः सकृत्प्रोक्तं ब्रह्माऽधीत्य सुविस्तरम्।**
**तस्मै प्रादाद्वरं पुत्रं मृतं पञ्चजनोदरात् ॥ २ ॥**

सान्दीपनेरिति। सन्दीपनस्य पुत्रः सर्वज्ञः, तस्य सकाशात् ब्रह्म वेदमधीत्य। सकृत्प्रोक्तमित्यतिसौबुद्ध्यं लोकप्रतीत्या निरूप्यते, विधिपरिपालनार्थं वा। सुष्ठु विस्तरमिति अर्थावबोधाङ्गादिसहितम्। अधीत्य, विद्यां समाप्य, गुरवे दक्षिणां दत्तवान्। सा दक्षिणा वररूपा, सोऽपि पुत्ररूपः, सोऽपि पूर्वं मृतरूपः। पूर्वं पञ्चजनोदरं प्राप्य मृतं पुत्रम्, मरणात् पूर्वावसरे स्थितरूपम्, तस्मै प्रादात्। भगवदाज्ञया कालेन मरणक्षणमारभ्य सर्वतत्त्वसमूहस्य सङ्घातस्य प्रतिक्षणं यो विकारो जातः, तं सर्वमेव विकारं काल उद्गिरणं कृतवान्; तदा स सर्वोऽपि सङ्घातः पूर्वस्थित एव भवति। इयमेव मनोधिकारिदेवता; चन्द्र एव हि क्षीणो वर्द्धते, शब्दहेतुश्च भवति ॥ २ ॥

एवमाचारेण शिष्टपरिपालनमुक्त्वा, द्वितीयाश्रमलक्षणं धर्ममाचारेण प्रवर्तयन् कृतवानित्याह—

**समाहुता भीष्मककन्यया ये श्रियः सवर्णेन बुभूषयैषाम्।**
**गान्धर्ववृत्त्या मिषतां स्वभागं जह्रे पदं मूर्ध्नि दधत्सुपर्णः ॥ ३ ॥**

समाहुता इति। भीष्मककन्ययैषां बुभूषया, श्रियः सवर्णेन रुक्मिणा, ये समाहुतास्तेषां मूर्ध्नि पदं दत्त्वा गान्धर्ववृत्त्या तां हृतवान्। 'गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ' इति प्रथमविवाहे तदुभयं विधातुम्, रुक्मिण्यंशे गन्धर्वता, इतरविषये प्रसह्य कन्याहरणात् राक्षसत्वमिति गान्धर्व-

१ चतुर्व्यूहरूपेणाविर्भावकार्यम्.प्रकाश.. २ यस्मात् प्र ३ कालोद्गीर्णगतपुत्रदेहरूपा प्र ४ बुभूषेतिपद भूप्राप्तावित्यस्य प्र.

धृत्या जह्न इत्युक्तम्। तेषां **मूर्ध्नि पदं दधादिति**। बन्धुभिर्यैस्तेभ्यो दत्तम्, तदेका बहुभ्यो दातुमशक्येति, यो रोचते, यो वा महांस्तस्मै देयमितीच्छाया जातत्वात्, तत्सिद्ध्यर्थं सर्वेषां मस्तके स्वपदं सर्वानुकल्परूपं दत्तवान्। अनेन तेषामिच्छापि समर्थिता, सर्वप्रतिरूपत्वाद्भगवतः। श्रियः समानवर्णेन रुक्मिणीरूपेण ये **समाहृताः** इति वा पाठः। रूपेण व्यामुग्धाः समागता इति, तेषां मस्तके पददानेन, तस्मिन् पक्षे तेषां मोहो निराकृतः। भीष्मककन्यया कर्त्र्या, श्रियः सवर्णेन करणेन, गान्धर्ववृत्त्या बुभूषया ये समाहृता इत्यर्थे, अनियतत्वात् सर्वप्रतिरूपतया गान्धर्वत्वम्। प्रसह्य कन्याहरणं तु सर्वत्र तुल्यमेव। **मिषतामिति** चौर्यं निवारितम्, सर्वेषां बलहानिर्वा निरूप्यते। **स्वभागमिति** न वैधो दोषः। **सुपर्ण इति** *गरुडभावमापन्नो भगवानेव। तथा सत्यमृतमिव तां हृतवान् मातुः प्रियचिकीर्षया। स्वभागमिति वचनादियं* ज्ञानशक्तिः। एवैव बुद्धिरधिकारिणो या *भगवदेकपरा, भगवतैव सर्वान् दोषान् दूरीकृत्य, स्वार्थमेवात्मसात्कृता भवति* ॥ ३ ॥

*एवं सोमवंशे विवाहमुक्त्वा सूर्यवंशे सोत्सवं विवाहमाह—*

**ककुद्मिनो विद्धनसो दमित्वा स्वयंवरे नाग्नजितीमुवाह ।**
**तद्भग्नमानानपि गृध्नतोऽज्ञाञ्जघ्नेऽक्षतः शस्त्रभृतः स्वशस्त्रैः ॥ ४ ॥**

**ककुद्मिन इति**। ककुद्मिनो वृषभान् पणत्वेन स्वीकृतान्, **विद्धनसः** कृत्वा नासिकां भित्त्वा, तत्र रज्जुं निपात्य, समाकर्षणेन **दमित्वा** भग्नवीर्यान् कृत्वा। तत्रापि **स्वयंवर** एव, न त्वाहूय दानम्। अनेन स्वधर्मोऽप्युक्तो गान्धर्वः। नग्नजितः पुत्रीं सत्यामुवाह। तस्यां राक्षसत्वमप्याह—**तद्भग्नमानान्**. पूर्वं स्वयंवरार्थमागतान्, समयबन्धरूपैस्तैरेव वृषैर्भग्नो मानो येषाम्। तथाभूतानपि तन्मारकवृषभजेतुः भगवतः सकाशात्तां हर्तुं **गृध्नतो**ऽधिकाकाङ्क्षावतः, अत एव **अज्ञान्**, स्वयमक्षत एव स्वशस्त्रैस्तान् शस्त्रभृतो जघ्ने। अनेन तान् हत्वा नयनात् राक्षसत्वं निरूपितम्। इयमेव हि बुद्धिदेवता मन्त्ररूपा। *तस्या दोषा द्विविधाः नियता अनियताश्च। नियता मायाकृताः सप्तव्यसनात्मकाः; अनियतास्तु अनन्ता* एव। तानुभयविधानपि भगवान् दूरीकृत्य, नग्नान् पाषण्डान् जयतीति वेदो धर्मो वा, तज्जनिकां देवतां स्वनिष्ठामेव कृतवानिति, न स्वभावतोऽपि भगवदीयानां बुद्धिरन्यविषया भवति ॥ ४ ॥

*एवं विवाहमुक्त्वा तत्र रमणमासक्तिव्यतिरेकेण न भवतीति तदासक्तिकार्यमाह—*

**प्रभुः प्रियं ग्राम्य इव प्रियाया विधित्सुरार्च्छद्द्युतरुं यदर्थे ।**
**वज्र्याद्रवत्तं सगणो रुषाऽन्धः क्रीडामृगो नूनमयं वधूनाम् ॥ ५ ॥**

**प्रभुरिति**। प्रियायाः सत्यभामायाः ग्राम्य इव प्रियं विधित्सुर्द्युतरुमार्च्छत् पारिजातमाहृतवान्। *स्वर्गस्थितियोग्यं देवोपभोग्यमिति पारिजातमर्यादा; तां भङ्क्त्वा, प्रियार्थम्, यथा ग्रामीणः कामरसाविष्टो मर्यादां भङ्क्त्वा रसमनुभवति, तथा दिव्यभोगं कृतवानित्यर्थः। पारिजातस्य स्वर्गेऽपि दुर्लभतां ख्यापयितुमाह-* **यदर्थ इति**। *यस्य पारिजातस्य अर्थे, **वज्री** इन्द्रो, वज्रं गृहीत्वा सर्गार्थे ब्राह्मणवधमप्यङ्गीकृत्य, यो*

---

१ भावे क्तः. प्रकाशः. २ दानं कर्तव्यम् प्र. ३ प्रतिशब्दस्य मूलस्वरूपवाचकत्वं प्रतिपुस्तकादिपदे प्रसिद्धम् प्र
४ श्रीरुक्मिणीरूपविषयिका आसक्तिः. प्र. ५ पक्षत्रयेऽपि प्र. ६ तस्माद्वेदाद्धर्माद्वा जनिर्जननं यस्याः सा तथा। बुद्धिजनिकामिति च म.

ब्राह्मणं वृत्रं हतवान् तादृशत्वं वज्रिपदेन सूच्यते, भगवताऽपि सह कलहार्थं सगणो देवादिसहितः, विचारानुत्पत्तये रुषाऽन्धः आद्रवत् आभिमुख्येन युद्धार्थमागतः । अनेन सर्वस्मादपि स्वर्गात् पारिजातोऽधिक इत्युक्तम्, यदर्थमिन्द्रादयोऽपि मर्तुं समुद्यता इति । नन्विन्द्र सर्वज्ञो देवो बृहस्पतिशिष्यः कथमेवम्? नीतिविरुद्धं सर्वप्रकारेणोपजीव्येन भगवता कथं विरोधं कृतवानित्याशङ्क्याऽऽह—**क्रीडामृगो नूनमयं वधूनामिति** । अयमिन्द्रो वधूनामिन्द्राण्यादीनां निश्चयेन क्रीडामृगो वानरः । वानरो यथा यथोक्तमेव करोति न तु किञ्चिदपि विचारयति । वधूशब्देन च ता एव गृहपतय उक्ताः । तद्रक्षार्थमेवेन्द्रादीनामुपयोग इत्ययमहङ्कारो निरूपितः । भगवद्भक्तानां भगवतैव स्थापितोऽहङ्कारः फलयेति । अस्याऽभिमानिनी देवता रुद्रः । तद्भक्तनिराकरणेन भगवानेव तद्रूप इति भक्ताहङ्कारनिर्वाहकं रूपमुत्तरत्र वर्ण्यते ॥ ५ ॥

भगवतो भोगोऽपि भक्तेष्टसिद्ध्यर्थमेवेति, तस्य दयां प्रतिपादयन्, दुष्टनिग्रहपूर्वकं भक्तानां सर्वमेवेष्टं प्रयच्छन्, भोगं करोतीत्याह—सुतं मृध इत्यादि चतुर्भिः—

**सुतं मृधे खं वपुषा ग्रसन्तं दृष्ट्वा सुनाभोन्मथितं धरित्र्या ।**
**आमन्त्रितस्तत्तनयाय शेषं दत्त्वा तदन्तःपुरमाविवेश ॥ ६ ॥**

सुतं नरकासुरं भगवता हतं दृष्ट्वा धरित्री भगवन्तं प्रार्थितवती शेषरक्षार्थम् । कृते करणाभावात्, तदा तथा **आमन्त्रितस्तत्तनयाय** भगदत्ताय, शिष्टं सर्वमेव राज्यं दत्त्वा, तत्पुत्रोपयोगाभावपदार्थग्रहणार्थं **तदन्तःपुरमाविवेशे**त्यन्वयः । भगवान् सर्वेषां स्वकीयानां सर्वमेव कार्यं स्वयं करोतीति भगवच्चरित्रमुक्तम् । इदमेव रूपमहङ्कारदेवतायाः । नरकासुरवधहेतुः—**खं वपुषा ग्रसन्तमिति** । वृत्रतुल्यता निरूपिता । ब्रह्मणा हि कृतं जगत् परिपालयितुं समुद्यतो विष्णुः, रुद्रप्रसादान्महाभूतग्रसनसामर्थ्यं प्राप्तवन्तं स्थित्यर्थं स्वपुत्रमपि हतवान् । पौत्रस्थापनं तु भार्याप्रार्थनया । दोषाभावाय मृध इत्युक्तम् । संग्रामे हननं क्षत्रियाणां न दोषाय । शून्यं हि वस्तुना पूरितं भवति, स्वमाकाशं शरीरेण पूरितमिति तेन ग्रासो निरूप्यते । **ग्रसन्तमिति** वर्तमाननिर्देशेन प्रतिक्रियाकालोऽयमिति सूचितम् । सुनाभं सुदर्शनम् । उन्मथनं खण्डशश्छेदनम् । तच्छरीरं मथित्वा तत्र स्थितं जीवमुद्धृतवानिति वा । तदन्तःपुरप्रवेशात् तमात्मनि सायुज्यं प्रापितवानिति लक्ष्यते । अत एव न दोषोऽपि केनाप्यंशेन । ताश्च देवस्त्रिय इति च । संबन्ध एव वरमास इत्यप्यकश्यापप्रसादाभ्यामवगम्यते ॥ ६ ॥

तत्र ताभिर्वृत इत्याह—

**तत्राहृतास्ता नरदेवकन्याः कुजेन दृष्ट्वा हरिमार्तबन्धुम् ।**
**उत्थाय सद्यो जगृहुः प्रहर्षव्रीडानुरागप्रहितावलोकैः ॥ ७ ॥**

---

१ धीमत्सर्भावनय । ग्र सम्यार्थैन निरूपित इत्यर्थः. प्रकाश.. २ अहङ्कारदेवतायाः. प्र. ३ पौत्रे नामहनने, पुनरहनन-स्याभावादित्यर्थः. प्र. ४ स्ववर्गीणामभक्तान्तःपम प्र. ५ ननु वामनावताग्पुत्र नाम कृतो हतवानित्याहु —नरकेत्यादि. ६ पापस्य गिरणा भवन्त्यानुगमवायंत्वाय, मकृते स्वभावेन, वर्तुं करणकर्मणामनुपपत्तिमाशङ्क्याहुः—शून्यमित्यादि । तथा च गौण्या अनिप्रेतत्वान्नानुपपत्तिरित्यर्थः. प्र. ७ छान्दोग्ये 'प्राणः पिता प्राणो माता' इति निर्धारणादस्य सुतत्वम् । मथन च उद्धरयंन्तम् । तस्य चाञ्चल्यमपि नाग्राहिद्गम, अतोऽत्रोन्मथनेन जीवोद्धारोऽर्थादेव प्राप्यत इति तथेत्यर्थः. प्र. ८ स्वागच्छ एवरागो पात्यान्तहारे प्र. ९ ननून्मथनस्य जीवपर्यन्तं वमर्थोऽस्तु, उद्धारस्य न तत प्र सिरिस्याहाङ्कायामाहुः—तदन्तरित्यादि । परोक्षवादत्वाभाव स्पष्टत्वात् प्र. १० स्वस्य भूरनया, पादान्त.पुरस्य पारवयनया प. प्र

**तत्राहृता इति ।** ताः पूर्वोक्ता देवस्त्रियः, साम्प्रतं नरदेवकन्याः कुजेन नरकासुरेण आहृताः, तत्रान्तःपुरे, सर्वदुःखहर्तारमैहिकपारलौकिकदोषदूरीकरणसमर्थम्, स्वभोगार्थं तथा करोतीत्याशङ्कानिवृत्त्यर्थमार्तबन्धुमार्तानां तदीयत्वे बन्धुवद्धितकर्तारम्, दृष्ट्वा उत्थाय सद्य एकवारमेव तं पतित्वेन जगृहुः । हरिमार्तबन्धुमिति विशेषणं न ज्ञातमुपयुज्यते, किन्तु स्वरूपसदेव। अत एव भगवद्दर्शनमात्रेण बन्दीक्लेशबन्धुत्यागादिसर्वदुःखानामपुनःस्मरणं विस्मृतत्वात् । स्वगृहे पुष्टा इव कामकलापूर्णाः कन्दर्पकोटिलावण्यं भगवन्तं भोगेच्छया गृहीतवत्य इत्याह—**प्रहर्षव्रीडानुरागप्रहितावलोकैरिति ।** भगवन्तं हस्तेन दीनतया शरीरेण वा बन्धुमिव न गृहीतवत्यः । किन्तु हर्षेण, व्रीडया, अनुरागेण च प्रहितानि यान्यवलोकनानि, आनन्दचित्तसद्भावदृष्टयः । प्रथमतो भगवन्तमानन्दमयं दृष्ट्वा प्रकृष्टो हर्षो जातः, तेनानन्दानुभवार्थं दृष्टिः प्रथमं प्रेषिता । ततोऽधिभुज्यमाने भगवति पतिस्त्रीरूपं चेतनभावमापन्ना, व्रीडया भोगं निवार्य, तदीयत्वख्यापिका दृष्टिः प्रेषिता । ततोऽन्तःकरणे भगवति परमप्रेमोत्पत्तौ, भगवतोऽपि स्वस्मिन् दृष्टिपाते, अनु पश्चादुद्गतो रागो जातः । तेन परमवैषयिकभोगार्थं भगवति सा दृष्टिः प्रेषिता। तान्येवाऽवलोकनानि, भगवद्ग्राहकाणि । अनेन भगवदीयानामेवं चित्तं भगवतोत्पादित इत्युक्तम् ॥ ७ ॥

तासां भगवत स्वीकारमाह—

**आसां मुहूर्त एकस्मिन्नानागारेषु योषिताम् ।**
**सविधं जगृहे पाणीननुरूपः स्वमायया ॥ ८ ॥**

**आसां मुहूर्त एकस्मिन्निति ।** समुदायेन भोगः स्त्रीणां सुखकरो न भवतीति, तासां कालत इच्छाबाधनाभावाय भगवाननुरूपो भूत्वा, लौकिकवाच्यतानिवृत्त्यै, सविधं विधानपूर्वकम्, समानफलसिद्ध्ये भगवत्त्वख्यापनाय च, एकस्मिन् मुहूर्ते पाणिं जगृहे विवाहं कृतवानित्यर्थः । स्वमायया जगत्कर्तुः करणभूतया। केवलसच्चिदानन्देऽपि भोगार्थं तद्ग्रहणयोग्यत्वाय स्वरूपमाच्छादयतीति, मायायाः करणत्वम्। यथा सर्वमेव जगत् भगवद्रूपं चिदंशमायया व्यवहितं सर्वैर्यथेष्टं व्यवह्रियते, तथा भगवान् स्वमायया तासामभिलषितभोगार्थमनुरूपो जात इत्यर्थः । योषितामिति भोगदशा प्रदर्शिता । **नानागारेष्विति** पूर्णरसाविर्भावाय । अत्र विधिर्गान्धर्व इति प्रतिभाति, क्षत्रियाणां मुख्यत्वात् । एवं ग्रहणमेव चित्ताधिष्ठातृवासुदेवस्य भक्तान् प्रति चित्तप्रेरणमित्युक्तम् ॥ ८ ॥

तासां फलमाह—

**तास्वपत्यान्यजनयदात्मतुल्यानि सर्वशः ।**
**एकैकस्यां दश दश प्रकृतेर्विबुभूषया ॥ ९ ॥**

**तास्वपत्यान्यजनयदिति ।** अपत्यानि कन्यापुत्ररूपाणि। तासामधिकरणत्वेन तत्तुल्यापत्यजननं निवारितम् । तथा सति भगवदिच्छया प्रकृतिपुरुषसंबन्धेनैव तासां पुत्रा जायेरंस्तद्व्यावृत्त्यर्थमात्मतुल्यानीत्याह। **सर्वश इति** पञ्चधा। शरीरत इन्द्रियतः प्राणतोऽन्तःकरणतः स्वरूपतस्तत्सर्वधर्मतश्चेति । **एकैकस्यां दश दशेति** विध्यर्थः परिपालितः । ‘दशास्यां पुत्रानाधेहि’ इति श्रुतेः । प्रकृतेर्विशेषभवनेच्छयेति करणं

---

१ स्कन्धार्थविचारणाहुः—अनेनेत्यादि. प्रकाशः. २ निश्चयात्मकवृत्तिकमन्तःकरणम्. प्र ३ यतः. क. ख. घ. ङ. च. छ. ४ गान्धर्वेण भक्तपाणिग्रहणम् प्र. ५ स्वरूपत इति पदं शरीरत इत्यादीनां विशेषणं ज्ञेयम्. प्र.

सङ्ख्यायाम् । सा ह्येकमेव पुरुषं सकृदुपलभ्य महत्त्वकार्यं कृतवती, पुनः सम्बन्धे प्रयोजनाभावात् सकामैव स्थिता । इदानीं भगवांश्चेदनन्तरूपो भवति तदा तद्भोगार्थं पुनः पुनः पुरुषसंबन्धं प्राप्य कार्याणि जनयिष्यतीति । तस्या विबुभूषा सिध्यति । यागैकरणताऽस्याः । भगवदिच्छया व्याप्टता बहुधा जननं साधयतीति । अनेन साङ्ख्यवत् भगवद्भक्तानामिन्द्रियैप्रवृत्तिरिति दशसङ्ख्यया बहिरिन्द्रियाणां स्वरूपमुक्तम् । ते ह्यमे न बीजभावं प्राप्नुवन्ति, भोगश्चान्येच्छयेति; तत्रापि न भोगेच्छाकारणम्, किन्तु भवनेच्छैव कारणम् ॥ ९ ॥

एवं कामलीलामुपपाद्य क्रोधलीलां सोपपत्तिकामुपपादयति—कालमागधेत्यादि सप्तभिः—

**कालमागधशाल्वादीननीकै रुन्धतः पुरम् ।**
**अजीघनत्स्वयं दिव्यं स्वपुंसां तेज आदिशत् ॥ १० ॥**

कामजनकानि चत्वार्येव बहिरिन्द्रियाणि । इन्द्रियं, स्पर्शः, श्रोत्रं, चक्षुरिति । रक्ष्यते च चतुर्भिः क्रोधांशैः संवर्तरुद्रपालकसूर्यैः । कामक्रोधौ समौ कर्तुं सप्त सप्त निरूपिताः । यद्वोभे गुणसङ्ख्यास्ते निवृत्तिः सप्तधा ततः । १ । ततो मध्ये चतुर्मूर्तेः प्रद्युम्नादेर्निरूपिताः । वासुदेवाद्भक्तरक्षा तृतीया सा निरूप्यते । २ । तत्र प्रथमं सर्वपरिपालनार्थं भूभाररूपान् शत्रूनत्युत्कटान् प्रथमं मारयतीत्याह । कालेति । त्रयो ह्युद्धताः स्वयमागत्य भक्तद्रोहं कृतवन्त इति तान् हतवान् । तत्र कालमागधौ मथुरापुरनिरोधकौ । शाल्वो द्वारकाया निरोधकः । कालः कालयवनः । मागधो जरासन्धः । कालस्य प्रथमत उपादानमग्रे जरासन्धवधात् । आदिशब्दस्त्रिष्वपि संबध्यते । तेन सप्तमहास्ते त्रय एवोक्ता भवन्ति तामसादिगणाध्यक्षाः । अनीकैरिति सेनानां रोधे करणत्वम् । अनेन तज्जयस्य दुर्लभता वा सूचिता । तथाप्यजीघनत् । स्वयमिति । भिन्नतया स्वोद्योगे, नतु तदुद्योगे । स्वपुंसां मुचुकुन्दभीमप्रद्युम्नबलभद्रादीनां तेज आदिशत् । अनेन प्रतिष्ठार्थं तान्मारकत्वेनोपस्थापितवान् । ते हि मार्गत्रयस्था लौकिकादिप्रकारेण ब्राह्मणब्रह्मशिवप्रपन्ना भक्तकामनाविक्षेपका भवन्ति । तन्निवारको भगवान् त्रिमूर्तिरपि त्रिविधकामनियन्ता ॥ १० ॥

एवमुद्धतान् त्रिविधान् हत्वा स्वतोऽनुद्धतान् अन्यद्वारैव कांश्चिन्मारितवानित्याह—

**शम्बरं द्विविदं बाणं मुरं बल्वलमेव च ।**
**अन्यांश्च दन्तवक्रादीनवधीत्कांश्च घातयन् ॥ ११ ॥**

शम्बरमिति । शम्बरः प्रद्युम्नेन मारितः । द्विविदो बलेन । बाणः छिन्नभुजो भगवतैव कृतः । बल्वलोऽपि बलेनैव । दन्तवक्रादयो भगवतैव । आदिशब्देन विदूरथादयस्तत्पक्षपातिनः । एतान् कांश्चित् घातयन् कांश्चिदवधीत् । हस्तौवुक्तौ । भगवदीयैर्भगवत्कर्तव्यं भगवदाज्ञया कर्तव्यमिति ॥ ११ ॥

---

१ यावत्फलसमापन स्वल्पसतीत्यर्थः. प्रकाश २ पर्येन. प्र ३ आनन्दजनकेन्द्रियप्रवृत्तिः. प्र. ४ साङ्ख्यजीवा. प्र. ५ भोगेपि प्र. ६ महादेवताकमिन्द्रियम्. प्र. ७ त्वक्. प्र ८ अत्र कालहा मुचुकुन्द इति सत्त्वरसात्मकः, मागधादिहन्तृषु रुद्रात्मकः पाण्डवेषु पालकात्मकः, सूर्यास्तवे यादवा स्फुटा एवेति. प्र ९ श्लोकाः. प्र. १० क्रोधलीलायाम् ११ कालमागधशाल्वाः. प्र. १२ क्रमेण प्रवाहमर्यादापुष्टिस्थाः. प्र. १३ कालो गर्गपुत्रत्वाल्लौकिकप्रकारेण ब्राह्मणप्रपन्नः, द्वितीयो मर्यादया वेदप्रपन्नः, तृतीयः पुष्ट्या शिवप्रपन्न इति तथेत्यर्थः. प्र. १४ मुचुकुन्दभीमप्रद्युम्नमूर्तिरपि सात्त्विकादीनां त्रयाणां कामपूरकः. प्र. १५ रासाख्यौ हस्तौ. प्र.

एवं दोषनिर्हारार्थमुचताननुचतांश्च दैत्यान् हत्वा शस्त्रसंन्यासं विधाय भूमिभारं निराकृतवानित्याह– अथेति द्वाभ्याम् —

**अथ ते भ्रातृपुत्राणां पक्षयोः पतितान् नृपान् ।**
**चचाल भूः कुरुक्षेत्रं येषामापततां बलैः ॥ १२ ॥**

भक्तानामेव यद्दुःखं दोषरूपं न्यवारयत्। भूमेस्तु देहजो भारो न शस्त्रेण निवार्यते। १। उत्तारितस्तु भूभारः कण्डूयां जनयेद्ध्रुवम्। ततस्तस्या निवृत्त्यर्थं नखरूपैर्हि पाण्डवैः। २। अयत्नप्रेरितैर्बाधां स्वयमेव न्यवारयत्। अन्तरन्यां च तामेव पूर्वस्पर्शसमुद्भवाम्। कृमिकण्टकरूपां तां तन्नाशेनाऽवधीत्पुनः। ३। अथेति प्रक्रमान्तरे सारथ्यभावेन। ते भ्रातृपुत्राणां पाण्डवानां दुर्योधनादीनां च पक्षयोः सहाययोः पतितान् धर्ममनपेक्ष्य स्नेहाग्रहभावेन पतितान् पातयन्निति पूर्वेण संबन्धः। तेषामाधिक्यमाह– चचालेति। कुरुक्षेत्ररूपा भूः। धर्मक्षेत्रे हि तेऽधर्मभावं प्रापिताः। चलनमधर्मात् ते सर्वेऽप्यधर्मैकनिष्ठा ज्ञातिघातिनः। अत एव येषां बलैर्भूश्चचालेति। देवेन्द्रकार्यं कृतवानित्यर्थः ॥ १२ ॥

किञ्च। अप्रधानवधमुक्त्वा प्रधानवधमाह—

**सकर्णदुःशासनसौबलानां कुमन्त्रपाकेन हतश्रियायुषाम् ।**
**सुयोधनं सानुचरं शयानं भग्नोरुमुर्व्यां न ननन्द पश्यन् ॥ १३ ॥**

सकर्णदुःशासनेति। ननु जीवनादृष्टे विद्यमाने कथं सर्वे संभूय मृताः। नह्येकमदृष्टं सर्वेषामित्याशङ्क्य दुर्योधनपक्षपातेनैव सर्वेषामायुः क्षीणमित्याह–सकर्णो दुर्योधनः कर्णसहितः। दुःशासनो भ्राता। सौबलिः शकुनिर्मातुलः। एते चत्वारो दुष्टाः एतेषां कुमन्त्रस्य यः परिपाकस्तत्कुमन्त्रे ये स्थिताः, तेषां श्रीः, आयुश्च पाकेनैव हतमित्याह–हतेति हता श्रीरायुश्च येषामिति। येषामिति विशेषणम्। दुर्योधनमपि हतवानिति संबन्धः। अनुचरसहितो भग्नोरुः शयानः पश्यतिकर्म। एवं सर्वं कार्यं कृत्वापि भारनिवृत्तये समागतो निवर्तकैर्भारं जनयन् पूर्वभारं दूरीकृत्यापि न ननन्द सन्तोषं न कृतवान्। स्पर्शरूपता निरूपिता। भगवदीयानां स्पर्शनेन्द्रियं ज्ञानहेतुरेव न सुखहेतुरिति ॥ १३ ॥

द्वितीयं भारं दूरीकर्तुमनन्दनमेवाऽऽह—

**कियान् भुवोऽयं क्षपितोरुभारो यद्द्रोणभीष्मार्जुनभीममूलैः ।**
**अष्टादशाक्षौहिणिको मदंशैरास्ते बलं दुर्विषहं यदूनाम् ॥ १४ ॥**

कियानिति। क्षुद्रनिराकरणार्थं क्षुद्रग्रामे यदि महाराजः समायाति सदा तत्सेनयैव ग्रामो नश्यति। तत्रत्यः क्षुद्रस्त्वल्पमेव नाशयति, सैनिकास्तु सर्वमिति न्यायेनाऽऽह–भुवः कियान् वा भारो मया क्षपितः मदंशैः करणैर्दूरीकृतः। तानंशानाह–यद्द्रोणभीष्मार्जुनभीममूलैरिति। द्वयं द्वयमुभयत्र। तेषां मूलभूतैः स्वतेजोभिरेव। एवं चतुर्विधैरपि तेजोभिश्चतुरङ्गसेनारूपोऽष्टादशाक्षौहिणिकस्तावदक्षौहिणीभिर्जातो भारो यस्माद् दूरीकृतस्ततोऽप्यधिको भारोऽस्तीत्याह–आस्ते बलमिति। आधिक्ये हेतुः–दुर्विषहमिति

१ स्तोयमेन न्यवारयत्. प्रकाशः. २ राजादिदेहज'. प्र. ३ 'कियान्---'इत्यादिश्लोकं तु चिन्तिताम्. प्र. ४ कीटक. ग ड छ ५ यदुकुलनादेन. प्र. ६ पूर्वश्लोकोक्त' येषाम्...' इत्यादिक दुर्योधनादीनां विशेषणमित्यर्थः.प्र. ७ पायोः कर्म. प्र. ८ ' क्षपित इति भिन्नं पदम्, तत्र सोऽलुक्. प्र. ९ अक्षौहिणिपदे ह्रस्वत्वमार्षम्. प्र.

केनापि सोढुमशक्यम् । [1]दुर्विषहत्वे हेतुः—मदंशैरिति । सर्वस्यापि भगवदंशत्वेऽपि यदूनां संबन्धिभिर्मदंशैरिति भक्तपक्षपातादनिवार्यत्वं निरूपितम् । वायुरत्र बलाधिष्ठाता भगवत्संबन्धिनीमेव स्पर्शबुद्धिं जनयति तत्र सुखं पूर्णम्, न तेन परिच्छिन्नेन ग्रहीतुं शक्यत इति परिच्छिन्नतुल्यतया ज्ञानं न भगवदभिप्रेतमिति स्पर्शदेवतानिर्णयः ॥ १४ ॥

[2]तस्याऽपि भारस्य निवृत्त्युपायमाह—

**मिथो यदैषां भविता विवादो माध्व्या मदाताम्रविलोचनानाम् ।**
**नैषां वधोपाय इयानतोऽन्यो मय्युद्यतेऽन्तर्दधते[3] स्वयं स्म ॥ १५ ॥**

**मिथो यदेषामिति** । यत्र यदा एषां यादवानां मिथो विवादो भविता । सोऽपि विवादो विवेकरहितो मौढ्यान्नाशपर्यवसायी जात इत्यभिप्रायेणाऽऽह—**माध्व्या मदा ताम्रविलोचनानामिति**। माध्वी मदिरा बहुपानसिद्ध्यर्थं मधुररसां तामुक्तवान् । तया यो मदः गर्वो देहविवेकादिविस्मरणात्मकः । तेन आताम्राणि विलोचनानि येषाम् । नन्वन्योन्यघातेन मदिरया निषिद्धमरणेन च भगवत्सहायार्थमागतानां भगवदीयानामयुक्ततेत्याशङ्क्य प्रकारान्तराभावादेवं क्रियत इति आह—**नैषां वधोपाय इयानतोऽन्य इति** । एषामियानेव वधोपायो नत्वन्यः । तत्र हेतुमाह—**मय्युद्यत इति** । अन्यस्तूपायः सांशे मय्युद्यते स्वयमेवान्तर्दधते । न हि सूर्याणां निराकरणं तमसा भवति । तुल्यत्वाच्च नैकेन । स्मेति प्रसिद्धे । यदा यदा यादवनाशार्थं मागधादयः प्रवृत्ताः, तदाऽहमुद्यतस्तान् हन्तुम् । तदा मयि उद्यते, अन्ये उपाया अन्तर्दधते । ननु केयं भगवतो लीला यत्स्वकीयान सेवकान् स्वसङ्गे समागतान् अनन्यशरणान् स्वयमेवमन्यायेन नष्टान् करोतीति । उच्यते, सर्गार्थमेवमिति । स्वात्मना सह च तुल्यता, अतो नात्यन्तभक्तिविरोधः । स्वतस्तेषामाविर्भावसामर्थ्याभावात् माययैव आविर्भावतिरोभावौ । खेदाभावाय तथावस्था । उत्पत्तिलीलार्थमिति न लीलाविरोधः । यथाऽस्य सर्गहेतुत्वं तथाऽग्रे वक्ष्यते । न च तेषां दुर्गतिः । मुक्तावेतदर्थमेवोक्तत्वात् सर्गाद्यैः[4] मुक्त्यन्ते चोक्तत्वात् । सर्वत्र तान् विना नाश्रयो निरूपयितुं शक्य इति सूचितम् । तस्मात्स्वाविर्भावे तेषामाविर्भावं कारयन्, स्वतिरोभावे च तांस्तिरोभावयन् स्वसमानान करोतीति न भक्तेषु कापि तिरस्कारलीला । एवं विसर्गो[6] निरूपितः ॥ १५ ॥

तत्र देवतां मिश्रं निरूपयन् प्रद्युम्नं निरूप्य वासुदेवं निरूपयति षड्भिः । यदापातततो भक्तानामहितप्रतिभानम्, तद्भक्तिमार्गस्य तथात्वख्यापनाय[7] । दशलीलापरे व्यापिवैकुण्ठे नित्यवत् स्थितिः । रूपान्तरेण भजनं स्वामिसेवकयोर्हि वै । १ । स्वामित्वं सेवको हन्ति सेवकत्वं तथापरः । अन्यथा सफलो न स्याद्भक्तिमार्गः ससाधनः । २ । सेवादशायां चेत्स्वामी विरसः सिद्ध्यभावता । पश्चाच्चेत्सेवकत्वं स्यात्फलमीशश्च नो भवेत् । ३ । यावत्साधनमात्मानं सर्वशास्त्रविरोधिनम् । कृत्वाऽन्ते पूर्वधर्मस्य नाशं च कुरुते फले । ४ । अतः स्थितिदशायां हि तद्विचिन्त्य हरिः स्वयम् । स्वानभिप्रेतविषयान् भोजयत्येव नान्यथा । ५ । तदाह—

---

१ भगवति. प्रकाशः. २ तस्याः भुग्राजनत्वानिर्णयः. प्र. ३ एकवचनपक्षे 'दधते' इति 'दध धारणे' इत्यस्य रूपम्. प्र. ४ एतस्मात्नि. क ग. घ. ५ एतस्मान्. ह. ६ विसर्गपदं करणव्युत्पन्नम् । तथा च स्मृतभेतद्रूपमनेन प्रकारेण विसर्गजनकेन्द्रियमवतारमुक्तमित्यर्थः. प्र. ७ नित्यस्थितिविरुद्धत्वख्यापनाय.

**एवं संचिन्त्य भगवान् स्वराज्ये स्थाप्य धर्मजम् ।**
**नन्दयामास सुहृदः साधूनां वर्त्म दर्शयन् ॥ १६ ॥**

एवं प्रकारेण सम्यक् विचारयित्वा तथाकरणसामर्थ्यं तस्यैवेति भगवानित्याह । स्वराज्ये पितृपैतामहे, स्वस्यैव राज्ये वा, 'शास्त्रफलं प्रयोक्तरि' इतिन्यायेन भगवद्राज्ये वा । धर्मजमिति तथा स्थाने स्थापनाधिकारो दर्शितः । नन्दयामासेति सर्वानेव सुहृदः सर्वप्रकारेणानन्दयुक्तांश्चकार । न केवलं लौकिकविषयैरेव पूर्णान् करोति, किन्तु वैदिकमार्गेणाऽपीत्याह—साधूनां वर्त्म दर्शयन्निति । सतां मार्गो वैदिकस्तद्धर्मनिष्ठा । तद्दर्शयन् स्वयं यज्ञादिधर्मान् कुर्वन् वैदिकमार्गेणाऽपि नन्दयामासेत्यर्थः । अनेन प्रवाहमर्यादा च स्थिरीकृतवानित्युक्तम् ॥ १६ ॥

पुष्टिमार्गमपि तावत् स्थिरीकरोतीत्याह—

**उत्तरायां धृतः पूरोर्वंशः साध्वभिमन्युना ।**
**स वै द्रौण्यस्त्रसञ्छिन्नः पुनर्भगवता धृतः ॥ १७ ॥**

उत्तरायामिति । पूरोर्वंशोऽभिमन्युना उत्तरायां शास्त्रानुसारेण धृतः । स्वभार्यायामर्जुनपुत्रो यथाशास्त्रं गर्भं धृतवान् । इमां मर्यादां प्रवाहो दूरीकृतवानित्याह—स वै द्रौण्यस्त्रसंछिन्न इति । निश्चयोऽत्र तदस्त्रस्याऽमोघत्वात्, अत एव सम्यक् छिन्नः । अग्रे सन्ततिश्छिन्ना । पुनश्छेदनानन्तरं स एव वंशो भगवता धृतः । छिन्नो हि पूर्वभागो नोत्तरं निर्भार्ति । वंशः प्रदीपसन्ततिवद्भवति । यथा निरन्तरमुत्पद्यमानास्तेजोवयवा अङ्गुल्यग्रपरिमिता दीपशिखा स्वप्रवेशनिर्गमाभ्यां समां स्थापयन्ति तैलं वर्तिकां च निमित्तमाश्रित्य, तथा पूर्वदेहे अन्नायुषी समासाद्य शरीरोत्पादकावयवा स्थूलतया परिदृश्यमानरूपं प्रवेशनिर्गमाभ्यां सममेव स्थापयन्तो यन्त्रवत् सूक्ष्मावान्तरत्वात् तन्मध्य उत्तरोत्तरं गुणान्तराणि सप्तावरणानि सूक्ष्मसूक्ष्माणि कुर्वन्ति । ततोऽन्तः सूक्ष्ममावरणं प्रशिथिलावयवं सूक्ष्मयन्त्रवत् स्थितं योषाभिमन्थात् सर्वत आकृष्टं पिण्डीभूतमिव योनौ प्रविशति । तत्राप्यन्नायुषी निमित्तमाश्रित्य पूर्ववत्तत्रापि सप्तधा तून् सृष्ट्वा अन्तः सूक्ष्मसूक्ष्मान् रूपविशेषान् कुर्वन्तीत्याब्रह्मतृणस्तम्बानां व्यवस्था । तत्र तस्याः सन्ततेर्विच्छेदे पूर्वसाधितस्य पिण्डस्य विनाशकेन विघाते उत्तरोत्पादनासामर्थ्ये भगवान् स्वयं प्रविष्टस्तां सन्ततिं तथैव रक्षितवान्, न तु कृष्यादिवद्वीजान्तराधानेन संतत्यन्तरमेव । शास्त्रतोऽभ्यनुज्ञानात् पूर्वसततिं कृतवानित्यर्थः । अनेन पुष्टिमार्गप्रवृत्तिः प्रवाहेण मर्यादाभङ्ग एवेति सूचितम् ॥ १७ ॥

स चेत्पुष्टिमार्गो मर्यादां यथास्थानस्थितां न कुर्यात्, प्रवाहवत् तस्यापि बाधकत्वमेव स्यादिति तद्यावृत्त्यर्थमाह—

**अयाजयद्धर्मसुतमश्वमेधैस्त्रिभिर्विभुः ।**
**सोऽपि क्ष्मामनुजैः रक्षन् रेमे कृष्णमनुव्रतः ॥ १८ ॥**

अयाजयद्धर्मसुतमिति । अन्ते ब्राह्मणानां स्वतः प्रवृत्त्यभावात् भगवत्प्रेरणयैव याजनं कुर्वन्तीति

---

१ विचारमाश्रण. प्रकाश २ भूम्भाग प्र ३ पितृशरीर प्र ४ स्थाणु क ट ५ पितृणा र ३प ■
६ मर्यादाभङ्गे सति प्र ७ अत क ख ग घ

भगवानयाजयदित्युक्तम्। मन्त्रसहितदेवतासान्निध्यकरणाद्वा। त्रिभिरिति कायिकादिसर्वपरिहारार्थम्। 'तरति मृत्युं तरति पाप्मानं तरति ब्रह्महत्याम्' इति श्रुतेस्त्रिविधफलसिद्ध्यर्थमाहारपृथक्त्वन्यायेन त्रयोऽश्वमेधाः कृताः। याजनादिसामर्थ्यार्थमाह—विभुरिति। एवं निर्दुष्टस्याऽग्रिमकार्यमाह—सोऽपीति। क्ष्मां पृथ्वीमनुजैर्भ्रातृभिः सह रक्षन् द्विविधधर्मसम्पन्नः कृष्णभक्तो जात इत्यर्थः। सदेवौ पादौ निरूपितौ ॥ १८ ॥

एवं भगवान् भक्तहितं विधाय धर्मस्थापनफलमिव स्वार्थं कृतां सृष्टिं बुभुजे इत्याह त्रिभिः—

**भगवानपि विश्वात्मा लोकवेदपथानुगः।**
**कामान् सिषेवे द्वार्वत्यामसक्तः सांख्यमास्थितः ॥ १९ ॥**

**भगवानपीति**। भगवत्सेवको युधिष्ठिरादिरपि भगवद्दत्तं राज्यं बुभुजे। भगवानपि कामान् सिषेवे। विषयान्नानाविधान् बुभुजे इत्यर्थः। तस्य स्वार्थसृष्टस्य जगतो भोगे जीवतुल्यता स्यादत आह—**विश्वात्मेति**। न हि भगवान् विश्वं विषयत्वेन भुक्तवान्, किन्त्वात्मत्वेन। सहि विश्वात्मा त्रिविधपरिच्छेदाभावेन, न तु केवलं विश्वरूपेण। ननु तस्य विषयभोगः सर्वत्र स्वत एव सिद्धः किमिति विशेषाकारेणोच्यत इत्यत आह—**लोकवेदपथानुग इति**। स हि सर्वदा ब्रह्मत्वेन सर्वान् विषयान् भुङ्क्ते। अत्र तु लोकानुसारेण लौकिकसाधनेन लौकिकक्रियारूपेण लौकिकान् विषयान् भुङ्क्ते। वेदानुसारेण तु वैदिकक्रियया वैदिकान् पुत्रानुत्पाद्यताननुभवति। अतोऽत्र प्रकारत्रयेणाप्यनुभवतीत्यर्थः। कामभोगे हि निर्गमनमार्गो नास्तीति तस्य सर्वावरकत्वात् कथं भगवान् जीववत् कामान् सिषेव इत्यत आह—**द्वार्वत्यामिति**। अनेन कर्मविरोधः परिहृतः। यथा निस्तारणोपायं कुर्वाणः कर्मफलमुपभुङ्क्ते तद्वदिति। ज्ञानविरोधाभावाय—**असक्त इति**। असक्त्या भोगो हि ज्ञानविरोधी। स्वार्थं कृतसृष्टिमनुभवतीति ज्ञापयितुमाह—**साङ्ख्यमास्थित इति**। संख्या हि तत्त्वानाम्। यत्र भिन्नतया गणना सोंऽक्षित्वे पर्यवस्यतीति सर्गभेदे हेतुर्निरूपितः। अनेन भक्तिविरोधोऽपि परिहृतः। भगवान् भुङ्क्ते जीवोऽपि भुङ्क्ते। जीवद्वारा भगवान् भुङ्क्त इति पक्षे भक्तिमार्गविरोधो भवति। प्राणं निरूपितम् ॥ १९ ॥

रमणं पुरुषोत्तमरूपेण पुरुषरूपेण चेति, द्वितीये भोगं वदन् रमयामासेत्येतद्विस्तारयति—

**स्निग्धस्मितावलोकेन वाचा पीयूषकल्पया।**
**चरित्रेणाऽनवद्येन श्रीनिकेतेन चाऽऽत्मना ॥ २० ॥**
**इमं लोकममुं चैव रमयन् सुतरां यदून्।**
**रेमे क्षणदया दत्तक्षणः स्त्रीक्षणसौहृदः ॥ २१ ॥**

**स्निग्धस्मितावलोकेनेति**। चतुर्भिश्चतुर्विधानां भूतानां भोगो निरूप्यते। चतुर्विधान्यत्र भूतानि। त्रिविधा जीवा मार्गत्रयवर्तिनो व्यापिवैकुण्ठवासिनश्च। तत्र भगवानिमं लोकं स्निग्धस्मितावलोकेन रमया-

---

१ वैदिकधर्मभगवद्धर्मसम्पन्नः. ग.रा.रा. २ विश्वात्मेत्यत्र कर्मधारयबोधनाय —त्रिविधेत्यादि प्र. ३ अथोच्यते इत्यर्थः. प्र. ४ तत्त्वानां समानतया पारार्थ्येन सातत्यर्थं. प्र. ५ एव जीवेश्वरसाधारणपारार्थ्यबोधनेन. प्र. ६ भगवद्धर्मत्वाभावात् प्र

मास । अत्र हि द्विविधा जीवाः 'द्वौ भूतसर्गौ लोकेऽस्मिन्' इति । तत्र दैवाः स्निग्धावलोकेन प्रेमदृष्ट्या रतियुक्ताः कृताः, आसुरास्तु स्मितेन मन्दहासेनार्द्धमायामोहेन । सर्वथा मुग्धाः शुद्धदैत्या भवन्ति, ते दोषमलात्मकाः । अर्द्धमुग्धास्तु लौकिका भगवत्प्रसादेन सर्वानेव विषयान् प्राप्नुवन्तीति तत्र स्मितावलोकस्य हेतुत्वम् । आमुष्मिकान् वाचा पीयूषकल्पया रमयामास । ते हि मर्यादावन्तो वैदिकफलभोक्तारः । ताद्धि स्वर्गापवर्गाख्यम् । तद्भगवद्वाचा वेदेन स्वर्गाख्यं भवति । अमृतकल्पेन च उपनिषद्भागवतादिना आमुष्मिकं फलं प्राप्नुवन्ति । अनवद्येन चरित्रेण सर्वानेव पुष्टिमार्गस्थितान् भक्तान् यदूंश्च सुतरां रमयामास । चरित्रेणैव हि भक्ता रज्यन्ते । लोकनिन्दारहितेन तु कुलीना यादवाः सुतरां रज्यन्ते । वैकुण्ठस्थिताः श्रीनिकेतेनाऽऽनन्दयुक्तेन आत्मना सच्चिदानन्दरूपेण । चकारात् श्र्यादिविभूत्या । क्षणदया दत्तक्षणो रात्र्या दत्तावसरः । स्वप्नसुषुप्तिसुखं निद्रया भवतीति रात्रेः क्षणदात्वं लौकिकम् । ततोऽत्र विशेषं वक्तुं स्त्रीणां सम्बन्धिनि क्षणे सुखे सौहृदं यस्येत्युक्तम् । वैकुण्ठसुखं हि निष्प्रपञ्चे स्वरूपे स्थितो रमते । रात्र्यामवतीर्णोऽपि तथा स्त्रीसुखे । एवं चतुर्भिः सर्वेषां रमणमुक्तम् । स्निग्धेति प्राणदेवता । इममिति वाक् । अत एव तस्यैवमित्यग्रिमः ॥ २० ॥ २१ ॥

सङ्कर्षणचरित्रमाह—

> तस्यैवं रममाणस्य संवत्सरगणान् बहून् ।
> गृहमेधेषु योगेषु विरागः समजायत ॥ २२ ॥

तस्यैवमिति । एवं प्रकारद्वयेन रममाणस्य विरागो भोगप्रतिबन्धात्मा षष्ठो भगवदीयो गुणः प्रादुर्भूतो जात इत्याह । द्विविधा हि विरक्तिः, भोग्यपरित्यागेन दोषदर्शनसहितेन शास्त्रदृष्ट्या साधरणी, लौकिकानामतिभोगेन च । भगवतो विशिष्टा सा जातेति वक्तुं तद्धेतुमाह—संवत्सरगणान्बहूनिति । संवत्सराणां गणाः प्रभवादिसमूहाः । तेऽपि बहवो बहुरूपेण रमणात् । वैराग्यस्य विषयमाह—गृहमेधेषु योगेष्विति । उपायेषु वैराग्यम्, न तु स्वरूपभोगे । उपायो द्विविधः पूर्वमुक्तो लौकिको वैदिकश्च । तत्र सुतरां लौकिकेष्विति । गृह एव मेधा बुद्धिर्येषामिति । विरागो रागाभावरूपो रागनिवर्तको वा ॥ २२ ॥

रागस्य हि उभयं निवर्तकम्, असाध्यताज्ञानमनिष्टज्ञानं च । तत्राऽनिष्टज्ञानं लौकिकेषु विहितेषु शास्त्रतः परमार्थतश्चेति तुल्यबलत्वाभावादकार्यताज्ञानं लोके निवर्तकं मन्यमानो भगवति वैराग्यमुक्त्वा पुरुषरूपेऽपि कैमुतिकन्यायेन वैराग्यमाह—

> दैवाधीनेषु कामेषु दैवाधीनः स्वयं पुमान् ।
> को विस्रम्भेत योगेन योगेश्वरमनुव्रतः ॥ २३ ॥

दैवाधीनेष्विति । यत्र स्वप्रयत्नसाध्यता नास्ति तेनाऽप्यंशेन तत्र रागो न जायते । दृष्ट एव प्रयत्नसाध्यता, नाऽदृष्टे । सर्वमेव चाऽत्राऽदृष्टरूपकर्मसाध्यम् । तत्र देहो भोगाधिष्ठानम्, विषयास्तदाधारा भोग्याः, भोक्ता च तदभिमानी—त्रयमपि दैवाधीनम् । स्वयं पुमान्, अनेनाऽऽक्षिप्तो देहो वा । स्रगादयश्च विषयाः । ततः किमत आह—को विस्रम्भेतेति । को वा विश्वासं कुर्याद्भोगो भविष्यतीति । घुणाक्षरन्यायेन कदाचिद्-

१ वाक्सन्निधानात् प्रकाशः. २ लौकिकेन वैदिकेन च प्र ३ अनिभोगजा प्र

यति। न ह्येतावता घुणकीटोऽक्षराणि लिखितु जानातीति घुणभक्षितकाष्ठेऽक्षराणि वाचयितुं कश्चिद्विचारयति। तथा दैवगत्या स्वप्नवत् कदाचिद्भोगे जाते सर्वदा भविष्यतीति को वा विश्वास कुर्यादित्यर्थः। ननु जगदेव विश्वासं करोति, कुतो निषिध्यत इत्याशङ्क्याऽऽह—**योगेन योगेश्वरमनुव्रत इति**। शास्त्रोक्तप्रकारेण शास्त्र बुद्ध्वा विहितभक्तिमार्गेण उपायेन योगेश्वर सर्वोपायप्रवर्त्तकं य सेवते सर्वभावेन, स विश्वास न करोतीत्यर्थ ॥ २३ ॥

एव वैराग्यमुक्त्वा सत्यसङ्कल्पत्वाय तदनुगुणं बहिर्वैराग्यजनक शाप निरूपयति—

**पुर्यां कदाचित् क्रीडद्भिर्यदुभोजकुमारकैः।**
**कोपिता मुनयः शेपुर्भगवन्मतकोविदाः ॥ २४ ॥**

**पुर्यामिति**। पुर्यां द्वारकायाम्। सामीप्ये सप्तमी। कदाचिदिति भगवद्विचारितकाले। **क्रीडद्भिरिति** न तेषा स्वभावतो दुष्टत्वम्। यदुभोजकुमारकैरिति उपजीव्याः सर्व एव भगवदीया बालका, तत्रापि कुमारा, 'न वै शिशूनां गुणदोषयोः पदम्' इति दोषाभाव सूचित। ते कोपिता **मुनयो** मननशीला ब्रह्मर्षयः शेपु शाप दत्तवन्त। तत्र हेतुः—**भगवन्मतकोविदा इति**। भगवदभिप्राय जानन्तीति सर्वदोषाभाव ॥ २४ ॥

तत परित्यागत्रयमाह—तत कतिपयैरिति त्रिभिः—

**ततः कतिपयैर्मासैर्वृष्णिभोजान्धकादयः।**
**ययुः प्रभासं संहृष्टा रथैर्देवविमोहिताः ॥ २५ ॥**

गृहपरित्याग, प्रवाहपरित्याग, सर्वस्वपरित्यागश्चेति, रागाभावद्वयस्य तद्धेतुभूतशापस्य च त्रिषु पर्यवसानात्। तत्राऽऽद्यमाह—कतिपयैरेव **मासै** त्रिभिर्मासै सर्वेऽपि यादवा निर्गता इति। वृष्णिभोजान्धकाः सात्त्विकराजसतामसा निर्दिष्टाः। तदादयः सर्वेऽपि त्रिष्वेवाऽन्तर्भवन्तीति। अत एव **सहृष्टा ययुः**। न हि भगवदभिप्राय सगुणा जानन्ति। प्रकर्षेण भानस्थान सहर्तु सङ्कर्षणस्य स्थान प्रभासः। **रथैरिति** युद्धसाधननयन सूचितम्। एव गमने हेतुर्देवरूपेण भगवता मोहिता इति। मनुष्यभाव परित्यज्य देवभ्रामत्य इति। अनेन शापोऽत्र विपरीतो निरूपितः ॥ २५ ॥

शापो हि हीनभाव नयति, न तूत्कृष्टभावम्। एते तु शापाद्देवभाव प्राप्स्यन्तीति लौकिकक्रियापरित्यागार्थमाह—

**तत्र स्नात्वा पितॄन् देवानृषींश्चैव तदम्भसा।**
**तर्पयित्वाऽथ विप्रेभ्यो गावो बहुगुणा ददुः ॥ २६ ॥**

**तत्र स्नात्वेति**। अयमेव वा विशेषमोह। ते हि भगवद्भक्ता भगवद्भक्त्यैव सर्वसमाधान कर्तुमुचितास्तथापि स्नानादिकमेव कृतवन्त। तत्र सरस्वत्यामग्निकुण्डे वा स्नात्वा देवर्षिपितृतर्पण विधाय विप्रेभ्यो बहुगुणा गावः। बहुदोहसारल्यक्षमाशुल्वादयो षड्वो गुणा। अनेनाध्यात्मिकाधिदैविकाधिभौतिकताप सम्पादित इत्युक्तम् ॥ २६ ॥

धनत्यागमाह—

**हिरण्यं रजतं शय्यां वासांस्यजिनकम्बलान् ।**
**हयान् रथानिभान् कन्यां धरां वृत्तिकरीमपि ॥ २७ ॥**

**हिरण्यमिति** । हिरण्यं सुवर्णम् । हिरण्यं रजतमिति देवपितृप्रीत्यर्थं दक्षिणाविषमः । **शय्यां वासांसि** इति रात्रिदिनसुखकराणि । अजिनकम्बलानिति आस्तरणपरिधेयानि । त्रिविधान्येतानि सत्त्वरजस्तमोभेदेन साधारणानां देयानि । हयान् रथान्, केवलाः सहिताश्चाश्वाः । इभा हस्तिनः स्वतन्त्राः । **कन्यां धरा**मिति राजसं दानम् । हयाः सात्त्विकाः । वृत्तिकरीमपीति भूमिमात्रम् । पूर्वं धरा ग्रामादिरूपा । किं बहुना, येषां यदस्ति, यत्किञ्चिन्नीतम्, तत् सर्वं ब्राह्मणद्वारा परित्यक्तमित्यर्थः ॥ २७ ॥

एवं परित्यज्य शुद्धा भूत्वा भगवत्प्रीतिकरं कर्म कृतवन्त इत्याह—

**अन्नं चोरुरसं तेभ्यो दत्त्वा भगवदर्पणम् ।**
**गोविप्रार्थासवः शूराः प्रणेमुर्भुवि मूर्धभिः ॥ २८ ॥**

**अन्नं चोरुरसमिति** । अनेकव्यञ्जनयुक्तमन्नं पूर्वोक्तेभ्य एव ब्राह्मणेभ्यः कृष्णप्रीत्यर्थं दत्त्वा निवृत्तपापा भक्त्यावेशेन सात्त्विकभावं प्राप्ताः स्वधर्मोद्बोधेन राजसमिश्राः सात्त्विका जाता इत्याह—**गोविप्रार्थासवः शूरा इति** । गवां विप्राणामेवार्थे असवः प्राणा येषामिति सात्त्विकत्वम् । **शूरा** इति राजसाः । तादृशानां सर्वप्रायश्चित्तमाह—**प्रणेमुर्भुवि मूर्धभिरिति** । य एव शापं दत्तवन्तस्तेभ्यस्तदीयेभ्यो वा भूमौ साष्टाङ्गप्रणामं कृतवन्तः । शिष्टेषु शिष्टानि । एवं मर्यादया चतुर्विधं भगवच्चरित्रमत्र निरूपितम्, इन्द्रियाणां ज्ञानकर्मभेदो विहिताविहितभेदश्च । अष्टभिः सप्तभिश्चैव षड्भिः सप्तभिरेव च । चतुर्मूर्तेर्भगवतश्चरित्रं खमिहोच्यते । १ । एतद्रूपाणीन्द्रियाणि नान्यं गृह्णन्ति च क्वचित् । सर्गार्थं हेतवश्चोक्ता जन्महेतुस्वभावतः । २ ।—॥ २८ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे तृतीयाध्यायविवरणम् ॥ ३ ॥

---

## चतुर्थाध्यायविवरणम्

चतुर्थे ह्यधिकारार्थं बुद्धिर्भगवतोच्यते ।
पञ्चधा साऽत्र सम्प्रोक्ता पञ्चपर्वाधिकारिणाम् ॥ १ ॥
स्वरूपं च गुणाः प्रोक्ताः फलमत्र निरूप्यते ।

---

१ इन्द्रियम् प्रकाश   २ स्मृति-निश्चय-संशय-विपर्ययद्वयरूपेण पञ्चधा तत्र हेतु प्रकाश.

एतादृशे हि पुरुषे भगवानाविशेषतः ॥ २ ॥
तदैव तद्गताः सर्वे बुद्ध्यन्ते नाऽन्यथा यथा ।
अतो भगवतः सर्गे हेतुश्चाऽयं निरूप्यते ॥ ३ ॥

तत्र प्रथमं स्मृत्यात्मिका बुद्धिर्भगवदिच्छयोत्पन्नेत्याह—अथेत्यादित्रिभिः—

## उद्धव उवाच ।

**अथ ते तदनुज्ञाता भुक्त्वा पीत्वा च वारुणीम् ।**
**तया विभ्रंशितज्ञाना दुरुक्तैर्मर्म पस्पृशुः ॥ १ ॥**

तामसी राजसी चैव सात्त्विकी चेति सा क्रमात् । पूर्वमेतादृशा अपि सर्वदोषविनिर्मुक्ताः । भगवदिच्छया श्रमापनोदनं कर्तव्यमिति तेषां मतिरुत्पन्ना । ततः पूर्ववासनया तेषामसद्बुद्धिरुत्पन्नेत्याह—अथ भिन्नप्रक्रमेण । ते पूर्वोक्ता ब्राह्मणैरनुज्ञाताः । भुक्त्वेत्यन्तं पूर्वसम्बन्धि । वारुणीं पीत्वेति निषिद्धाचरणम् । तस्याः फलमाह—तया विभ्रंशितज्ञाना इति । सर्वं हि साधनं व्यर्थं यदि बुद्धिर्विनश्यति । अकर्तव्यं तदा नाऽस्ति महतामपि निश्चितम् । १ । तस्मादेवं न कर्तव्यमिति बुद्धिरिहोच्यते । अतोऽत्र शास्त्रे सर्वत्र ह्यप्रामाण्यं स्मृतेः सदा । २ । बुद्धिभ्रंशफलमाह—दुरुक्तैर्मर्म पस्पृशुरिति । दुरुक्तानि दुर्वाक्यान्यपकर्षबोधकानि । यस्य यन्नोचितं तत् प्रमादाज्जातं मर्मेत्युच्यते । अपकर्षवाक्यैस्तादृशमुक्तवन्त इत्यर्थः । ज्ञानं चाऽत्र शास्त्रे स्थिरम्, न त्रिक्षणावस्थायि । घ्राणेन गन्धवन्मनसा तस्य ग्रहणे स्फुरणम् । तद्भगवति नित्यमेव, अन्येषां तु जन्यम् । शरीरस्याऽन्नमिव लोकशास्त्रादिकं तस्य पोषकम् । इन्द्रियाणि जनकानि, अभ्यासो दार्ढ्यहेतुः । तच्च त्रिविधम्, सात्त्विकादिविभेदेन । देशादयश्च पदपदार्था निषिद्धास्तस्य नाशकाः, विहितास्त्वन्तःकरणशुद्धिहेतवः पोषकाः । तत्र जीवस्य प्रयत्नेन स्थापितं तिष्ठति, गृहे पदार्था इव । शब्दा विषयाश्चोद्दीपका जनितस्य, अजनितस्योत्पादन एव सामग्रीरूपाः । तदेव बुद्धिचेतनादिवाच्यम् । तदेकं भगवद्रूपम् । तस्योत्पत्तिरनेकधा । आनन्त्येऽपि दशधा तन्निरूप्यते, लीलावत् । आश्चर्यरूपं मुख्यमविकृतं सर्वोपास्यं सर्वात्मभूतं च । तदेव प्रकाशकधर्मरूपेणाऽऽविर्भूतमविकृतमेव भगवद्गुणत्वेनोच्यते । तदेव पुनः सृष्ट्यर्थं वेदशरीरं गृह्णाति । तदपि रूपं विराडियाऽनन्तम् । पश्चाद्बीजतामप्यापद्यते शरीरविशिष्टम् । तदा व्यष्टय इव विकृताः सर्वे शब्दा भवन्ति । तदेव पुनः प्रमातारं प्रमेयं चाऽऽश्रयते । तत्र प्रमेयाश्रयं प्रमेयानन्त्यादनन्तमेव । परं प्रमेयरूपतया एकविधमिति तदेकमेवोच्यते । प्रमातरि तु पञ्चधा तद्भवति, अन्तःकरणेन्द्रियाश्रयणात् । अन्तःकरणे तु चतुर्धा, इन्द्रिये त्वेकधा । विशेषास्तु विषयाश्रयज्ञानद्विगुणतया पुष्टा भवन्ति । तत्र[13] मनसा जनितं संशयात्मकं भवति, विशेषास्त्वत्राऽपि विषयकृताः । अहङ्कारो बुद्ध्या सहितः स्वापं पश्यतीति स्वप्नज्ञानमहङ्काराश्रितम् । शरीराभि-

१ यथावत्. प्रकाशः. २ निरूपितः. ग. घ. च. ३ निषिद्धाचरणनिषेधिका बुद्धिरिह श्लोके सूच्यते प्र. ४ अन्तःकरणे.प्र. ५ स्थानस्पर्शादिना.प्र. ६इह प्रकारान् स्फुटीकुर्वन्ति—आश्चर्येत्यादि प्र. ७ कारणभूतम्.प्र. ८ गुणरूपम्. प्र. ९ नामसृष्ट्यर्थं वैदिकसृष्ट्यर्थं वा.प्र. १० ' अनन्ता वै वेदाः ' इति श्रुतेरनन्तम्. प्र. ११ अंशप्रकाशकत्वेन लोके मक्षीभावेतु तदुभयमपीति-इति. प्र. १२ निर्विशेषत्वेनैकधा. प्र. १३ सर्वान्तःकरणं पञ्च चतुर्दत्यारहस्यायां तत्राऽऽकारभेदेन भेदानाहुः-तत्र मनःप्रभृत्यारभ्य चित्तपर्यन्तमित्यन्वम

मतिस्तु अहङ्कारेण कृता बुद्ध्याश्रया । चित्त त्वात्मानमेव सुषुप्तौ पश्यत्यन्यदा लीनमतो निर्विषयक ज्ञान चित्ताश्रितम् । तस्य च स्थितिर्निरूपिता शास्त्रादिभिरिति नाशोऽपि विशेषेण रूप्यते । पूर्वोक्तमर्यादाभाव एव सामान्यतो नाशः । तत्र हेतुर्माया, ज्ञानस्यैव तिरस्करिणी । तस्या षडाश्रयभूताः कालादय । कलिर्मगधमद्यादिर्दैत्यशास्त्रनिषिद्धक्रिया । ते यथायथं स्वरूपत , स्थानतो, गुणतश्च ज्ञानस्यागतो नाश कुर्वन्ति । येषु ज्ञानं जायते तेष्वेव नश्यति । अतोऽत्र मदिरया, तेषा यज्ज्ञान पूर्वस्थित प्रमातरि बुद्ध्याश्रयम्, तदधस्तात्पतितमिति विभ्रंशितज्ञानत्वम् । मायया चाऽविद्यमानाः पदार्था बुद्धावेवोपस्थाप्यन्ते । तद्विषयमहङ्कृत बुद्ध्याश्रित ज्ञान स्मृतिरूप भवति । तया कृत्वा तद्विषयसम्बन्धीनि वाक्यानि दुरुक्तानि भवन्ति । तानि च विषयसहितानि विषयाश्रयाधार मर्म स्पृशन्ति । 'मृङ् प्राणत्यागे' इति धातोरावश्यकमरणार्थ धातोर्द्विर्भावे कृते 'इन्'–प्रत्यये कृते ममेति भवति । तत्राऽप्यल्पोऽप्याघात शब्दकृतोऽपि महतीं व्यथा जनयति । मत्तत्वात् स्पर्शमात्रमुक्तम्, न त्वाघात ॥ १ ॥

एव स्वरूपविस्मरणपूर्वकविपरीतपदार्थस्मरणैः शब्दस्पर्शेण क्षोभं जनयित्वा, शास्त्रादिभिरपि स्पर्श कृतवन्त इत्याह—

**तेषां मैरेयदोषेण विषमीकृतचेतसाम् ।**
**निम्लोचति रवावासीद्वेणूनामिव मर्दनम् ॥ २ ॥**

**तेषामिति** । **मैरेयेण** द्रव्येण पूर्वज्ञाननाशपूर्वकविपरीतज्ञानजननलक्षणदोषेण स्वस्थाऽपि चेतनात्मिका बुद्धि स्नेहेनाऽतिसमापि विषमा जाता । विषयाश्रितमपि ज्ञान तेजःप्रकाशापेक्षमिति, तदभावे तदपि नेन्द्रियपोषक जातमित्यभिप्रायेणाऽऽह–**निम्लोचति रवावासीदिति** । सर्वत्र दोषः समानो जात इत्याह–**वेणूनामिवेति** । **मर्दनं** नाश ॥ २ ॥

एव तेषा पूर्वस्थितिं साधनसाध्यभावेन तिरोभाव प्रापयित्वा, स्वस्याऽप्यनीश्वरत्व तिरोभावयितु साधनं साध्यं चाऽऽह—

**भगवान् स्वात्ममायाया गतिं तामवलोक्य सः ।**
**सरस्वतीमुपस्पृश्य वृक्षमूलमुपाविशत् ॥ ३ ॥**

**भगवानिति** । अनैश्वर्यतिरोभावे हेतु । स्वस्य य आत्मा चिद्रूप , तस्य मायाया गति प्रवृत्तिं कार्यकरणमिति यावत् । तां पूर्वोक्ताम् । अवलोक्येत्युत्तरत्र साधनम । स इति तदर्थ प्रवृत्त । अनैश्वर्यतिरोभावो द्वयेन भवति, वेदैर्वैष्णवैश्च । तदुभय कृतवानित्याह–**सरस्वतीमुपस्पृश्य वृक्षमूलमुपाविशदिति** । सरस्वती वेदात्मिका, सैव नदी, तदुपस्पर्शनं स्नानम् । अनेन वेदेषु स्वात्मानं स्थापितवानित्युक्तम् । द्वितीयमाह–**वृक्षमूलमिति** । 'वैष्णवा वै वनस्पतय ' इति श्रुतेः । तस्य मूल येन रूपेण विष्णुना ते जनितास्तद्बीजात्मकं मूलम् । तत्र विष्णौ बीजात्मकेऽर्थांशं स्थापितवानित्यर्थ । एवमैश्वर्यादिगुणानेकत्र, स्वरूपं चैकत्र स्थापयित्वा आश्रयाभावेनाऽनैश्वर्यं निराकृतवानित्यर्थ । ननु भगवान् बीजे किमिति स्था-

१ हेतुबाधनपूर्कमु यत प्रकाश  २ मर्यादाभाव, सामान्यतो नाशे वा भ  ३ शरीराभिमानरूपम्, भ  ४ बुद्धम लिनभाग तामसोऽशत पतितम् भ  ५ विषया दोषस्तदाश्रय पुरुष , स आधारो यस्य तत्तथा भ  ६ तद्रूपमाहि काया मायाया भ  ७ 'मिथ्र यदि (३ ३–१५) त्यत्र विचारितमग्नरूपाम् भ  ८ शुद्धसत्त्वाविर्भूतेऽक्षरात्मक भ

पितवान्? बैकुण्ठे हि स्थापनीयम्। तत्राऽऽह—उपाविशदिति। उप समीपे वैकुण्ठे स्थितेन सर्गलीला कर्तुमशक्या, अतस्तत्समीप एव आ सर्वत सर्वभावेन तत्र प्रविष्ट सृष्टयर्थम्। एतदर्थमेव प्रथमत इय कथा कथिता। यथा भगवान् ऐश्वर्येण बीजे प्रविशति। अयमेव चाऽधिकार। माहात्म्यम्, (स्व)रूपम्, लीला, विषयं, चरित्रम्, इन्द्रियाणि, स्वाशेन कारणप्रवेशः, बुद्धिरिति बीजरूपोऽय सर्ग। विष्णोर्जाता वैष्णवा, विष्णोरिमे इति च। अतो भगवान् स्वय वृक्षमूले उपविश्य सृष्टिकारणबीजमुपपाद्य मोक्षकारणबीजमप्युपपादयितु वैष्णवमुद्धवं पूर्वमेव विचारितवान्। नैवमु लीलामु प्रथमा मया कर्तव्या, अन्तिमा त्वनेन, मध्यमास्तु कालादिभिरिति। उद्धवस्य च कामना 'स्वधाम नय मामपि' इति। तचदा यत्र तिष्ठति तत् स्वधाम। इदानीं बीजात्मके कारणरूपे विष्णौ स्वय स्थित। त चै कारणरूपे अमृतदर्यात्मकबदर्यामानन्दानुभवार्थं मोक्षैकसाधनतप सनिधाने तिष्ठत्विति विचारितवान्॥ ३॥

तस्याऽपि पूर्वस्थितिविनाश एव भवतीति, विनाशस्थाने प्रभासे समागच्छत्विति चेच्छा कृतवान्। अतो द्वितीय बीज निरूपयन् निश्चयरूपा बुद्धिमेकोनविंशतिश्लोकैराह। अष्टादशविद्यास्थानातिक्रमे हि बुद्धिर्निश्चयमवलम्बते। तत्र सप्ताऽङ्गानि मीमासया सहितानि, द्वादशात्मा स्वतन्त्रतया प्रकाशकत्वात्। अनेनैव पूर्वावस्था गच्छतीति ज्ञापितम्। मुक्तौ तु कारणस्याऽवक्तव्यत्वादिमामेव लीलामन्यथोक्तवान्। बीजात् फले विस्तारो भवतीति च। अतः प्रथमं भगवदुक्तमाह—

**अहं चोक्तो भगवता प्रपन्नार्त्तिहरेण ह।**
**बदरीं त्वं प्रयाहीति स्वकुलं संजिहीर्षुणा॥ ४॥**

**अहं चोक्त इति।** स्वकीया अन्येऽपि प्रभासगमनार्थमुक्ताः, अह चोक्त **बदरी त्वं प्रयाहीति।** चकारात् प्रभासे गत्वेति हृदयम्। **भगवतेति** कार्यसिद्धयावश्यकता तद्वाक्ये सूचिता। ननु किमित्येवमुक्तवानित्याशङ्कयाऽऽह—**प्रपन्नार्तिहरेणेति।** प्रपन्नानामार्ति सर्वक्लेशं सृष्टौ सर्वैश्वर्यदानेन दूरीकरिष्यामीति तथोक्तवान्। हेत्याश्चर्यम्, विपरीतेन साधनेन साध्यमिति। बदर्यप्यरण्यात्मिका, फलार्थममृतरूपा च। यस्याऽमृतस्य दरी बदरीति। त्व प्रयाहीति विशेषतया निर्दिष्टम्। प्रकर्षेण गमन पदार्थाविस्मरणात्। अन्यत्तु, स्वकुलं स्वसमूहः। ते सृष्टावेवोपयुज्यन्ते, अत स्वार्थं सम्यक् जिहीर्षुः, अन्यथा अनन्तविधा सृष्टिर्न स्यात्॥ ४॥

यद्यपि भगवता मुक्त एवमुक्तम्, तथापि प्रभासे समागत्य गन्तव्यमिति हृदयाभिप्राय। अन्यथा पूर्वावस्थापरित्यागो न स्यात्। तदाह—

**अथापि तदभिप्रेतं जानन्नहमरिन्दम!।**
**पृष्ठतोऽन्वगमं भर्तुः पादविश्लेषणाक्षमः॥ ५॥**

---

१ बुद्धिरप प्रकाश २ भूतानि प्र ३ माशा प्र ४ एता लीलास्तु बीजरूपेणाऽनुभाव्यमाना ज्ञेया। प्र ५ चोऽप्यर्थे प्र ६ अशोकत्वेन पुनरवक्तव्यत्वात् प्र ७ वैराग्येण गोविचरणपूर्वकम् प्र ८ 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके' इति श्रुते, 'अरनामाऽमृतनाम्भोऽर्णवनामाऽमृतसागर' इति स्मृतेश्च ब्रह्मलोकत्वेन सदात्मिका प्र ९ बदरीपदयौगिकार्थाविस्मरण विधाय प्र

**अथापीति** । तदभिमतं पूर्वोक्तम् । **जानन्नहमिति** उपदेशज्ञानेन सर्वज्ञताया जातत्वात् । भगवत्कृपया तदपि ज्ञातम्, परं मयैव । **अरिन्दमेति** संबोधनमभिप्रायज्ञानार्थम् । राजनीतावपि प्रभोरभिप्रेतमपि कर्तव्यम्, नैतावता वाक्योल्लङ्घनम् । तथापि सह न गतम्, प्रथमतयैव बदरिकाश्रमयात्रा कृता । गिरिदुर्गपर्यन्तं समागत्य पश्चात्प्रभासं गत इति लक्ष्यते । अभिप्रायस्य सन्देहेऽपि पूर्वावस्थाया विद्यमानत्वात् स्नेहादपि गत इत्याह—पादयोर्विश्लेषणं वियोगः, पूर्वावस्थाया वा परित्यागः, तत्राऽहमक्षमः॥ ५ ॥

अभिमेतोऽर्थस्तर्कितोऽपि प्रमितो जात इत्याह—

**अद्राक्षमेकमासीनं विचिन्वन्दयितं पतिम् ।**
**श्रीनिकेतं सरस्वत्यां कृतकेतमकेतनम् ॥ ६ ॥**

**अद्राक्षमिति** । तदा भगवत ऐश्वर्यस्य प्रादुर्भूतत्वात् पोडशाऽपि कलास्तदा भगवति दृष्टाः । स पूर्णो भवति । अतोऽत्र भगवतः षोडश विशेषणानि । एतान्येव गुणोपसंहारे षोडशाधिकरण्या प्रतिपादितानि । एवं सर्वार्थस्य सर्वगुणविशिष्टस्य साक्षात्कारो जात इत्यद्राक्षमित्युक्तम्, ब्रह्मसाक्षात्कारादेव पूर्वावस्थापरित्यागात् । तत्र प्रथमं भगवतोऽयमसाधारणो गुणः—यत्सर्वमपञ्चातीतः सर्वमुपसंहृत्य एको भवति, कारणरूपश्च भवति । किञ्च भगवानासीनो भवति सर्वत्रैव, विशेषतो वैष्णवानां समीपे । अन्यमत्वाय चोक्तम्, कार्याभावात् । उपविष्ट एव हि सृष्टिं करोतीति च ज्ञापितम् । अनेन लोकेष्ववयवोपसंहारश्च ज्ञापित. । भगवतोऽपि दर्शनं भगवदिच्छयैव जातमित्याह—**विचिन्वन्निति** । सर्वत्र सरस्वतीतीरे गरुडध्वजादिरथान्वेषणेन काऽस्तीति विचारयन् यत्रोपविष्टः स्थितस्तत्र दृष्ट इत्यर्थः । अनेन विचारदशायां सर्वभूतस्थितमेकमेव विचारयेत् । तदनन्तरं स प्रियत्वेनाऽऽत्मत्वेन पर्यवस्यति, ततोऽपि ब्रह्मवित्त्वे ब्रह्मात्मभावे जाते पतित्वेन पर्यवस्यति, अक्षरस्यापि पुरुषोत्तमः पतिरिति । एवं चतूरूपं प्रमेये निरूपितम्, साधनफलभेदेन । प्रमाणे तस्य रूपत्रयमाह—अर्थशब्दफलानां तत्र प्राधान्यात् । तत्रार्थः **श्रीनिकेतः**। अनेन प्रपञ्चयशःसौभाग्ययुक्त इत्युक्तः । **सरस्वत्यां कृतकेतमिति** वेदैकसमधिगम्यता । **अकेतनमिति** फलम् । सर्वाश्रयराहित्येन स्वरूपस्थित इति, स्वरूपे तादृशस्यैवोक्तत्वात् । श्रीवत्से लक्ष्मीश्चाऽत्रोपविष्टा दृष्टा । सरस्वतीतीरे च शुद्धे उपदेशनार्थं स्थितो दृष्टः । अनाश्रितत्वेन सर्वे हेतुवादा विरोधाश्च परिहृताः, गृहरथासनाद्यभावश्च । एवमेकेन प्रमाणप्रमेयनिर्णयः । चतुर्मूर्तिस्त्रिमूर्तिश्चोक्तः । एकः सङ्कर्षणः, आसीनो वासुदेवः, दयितः प्रद्युम्नः, पतिरनिरुद्ध इति । श्रीनिकेतो विष्णुः, इतरौ ब्रह्मशिवौ ॥ ६ ॥

एवं प्रमेयप्रमाणे निरूप्य फलरूपं भगवन्तं पञ्चरूपमाह—

**श्यामावदातं विरजं प्रशान्तारुणलोचनम् ।**
**दोर्भिश्चतुर्भिर्विदितं पीतकौशाम्बरेण च ॥ ७ ॥**

**श्यामावदातमिति** । श्यामश्चासाववदातश्चेति । मध्यन्दिनसवितृमण्डलमध्यस्थदृशवत् भासत इत्यर्थः ।

---

१ 'धृतव्रत' इतिपदेनाजहत्स्वार्थया बोध्यते. प्रकाश. २ स्वकृतस्वाहारस्य . प्र ३ चतुर्लक्षण्यास्तृतीयाध्यायस्य तृतीये पादे. प्र. ४ निर्भयतया आसीनत्वेन प्र ५ प्रमेयाविरोधप्रतिपादके द्वितीयाध्याये. प्र. ६ भूमस्वरूपे 'स्वे महिम्नि प्रतिष्ठितः' इत्यनेन स्वमात्रनिष्ठितताया एव श्रवणादित्यर्थः प्र. ७ 'तन्मध्ये यत् कृष्ण तदन्नस्य' इति श्रुतेः पार्थिवयत् कृष्णम्, तत्सदृशं यद्धिरण्मयपुरुषस्य भास्वरं श्यामरूपं तद्वादित्यर्थ . प्र.

' आदित्यवर्णं तमसः परस्तात् ' इति श्रुतेः। अनेन सारूप्यरूपा मुक्तिरप्युक्ता भवति। विरजं निर्मलम्, व्यापिवैकुण्ठे रजोऽभावः। अनेन सालोक्यमप्युक्तम्, उत्पादकसंस्कृतभूताभावश्च; तेन सालोक्येऽपि पुनरुत्पत्तिर्निवारिता। मुक्त्युपदेष्टारमेनं प्रति तथाविधमात्मानं प्रदर्शयति फलत्वाय। अनेन षोडशकलोऽयं मनोमयो वेदात्मा सूचितः। प्रशान्तारुणलोचनमिति। प्रकर्षेण शान्ते अरुणे लोचने यस्य। ज्ञानशक्ति-क्रियाशक्ती लोचने यस्येत्युक्तम्। प्रकर्षः साधनसाहित्यम्, अनेनं सार्ष्टिरुक्ता। समानैश्वर्यम्। इदमेव हि सामीप्यम्, ज्ञानक्रियाशक्तिमत्त्वस्यैव तथात्वात्। अनेन वेदार्थोऽप्येतावानेवाऽत्र प्रसिद्ध इति सूचितम्। दोर्भिश्चतुर्भिर्विदितमिति। विदितं ज्ञातम्। अनेन सायुज्यमुक्तम्, उभयोर्बाहुचतुष्टयं ज्ञापितमिव। अत्र यत् पदत्रयम्, क्रियया, भक्त्या, ज्ञानेन च सायुज्यं भवतीति ज्ञापयितुम्। दोर्भिः क्रियाभिः, चतुर्भिः पादसेवनादिभिः। विशेषेण दितं यस्मादिति सर्वाज्ञाननिवर्तकं ज्ञानं कालनिवर्तकं वा, अन्यथा चतुर्भुजमित्येवोक्तं स्यात्, प्रकटचतुर्भुजार्थं वा। पीतकौशाम्बरेण चेति। पीतं कौशं कौशेयं यदम्बरम्, तेन च विदितम्। अनेन ब्रह्मभावेऽपि ज्ञानमङ्गमिति तदेव विशेषणमाह—पीतमिति, अहन्ताममताभाव.। कौशामिति कुशसंबन्धिनो यमनियमादयः। अम्बरमिति अवस्थात्रयपरित्यागेन निर्लेपता। एतानि ब्रह्मभावे ज्ञानसाधनानि। ' वैराग्यं च तपश्चैव समाधिरिति साधनम्। ' एकमेवैतत्, न प्रत्येकपर्यवसायि। चकारोऽनुक्तसर्वफलसमुच्चयार्थः। सर्वफलरूपो भगवानित्यर्थः ॥ ७ ॥

एवं फलरूपं निरूप्य साधनरूपं चतूरूपं निरूपयति—

**वाम ऊरावधिश्रित्य दक्षिणाङ्घ्रिसरोरुहम् ।**
**अपाश्रितार्भकाश्वत्थमकृशं त्यक्तपिप्पलम् ॥ ८ ॥**

वाम ऊराविति। वामे ऊरौ दक्षिणाङ्घ्रिसरोरुहमधिश्रित्य स्थितम्। दक्षिणमङ्घ्रिसरोरुहं यस्येति वा। भक्तिरनेन साधनत्वेनोक्ता। वामौ मनोहरा ये भगवत्प्रतिच्छायरूपाः, तेषु भगवद्भक्तिमार्गः कमलवत्सुन्दरः सर्वाप्यायकश्च स्थापितः। सरोरुहत्वेन प्रेम्णैव तदुद्गच्छतीति सूचितम्। दक्षिणपदेन भक्ति-मार्गे त्रीणि विशेषणानीति सूचितम्। चातुर्यं, दक्षिणो देशः, पाषण्डाभाव एव च। भक्ते चोरुपदं स-कुटुम्बस्य भक्तिपरत्वाय, स्त्रीपुत्रादिस्थानेऽपि भक्तिरेवेति वा। अधिश्रयणं पाकार्थं यथा सर्वोपयोगि भवति। वैष्णवैः संस्कृतो भक्तिमार्गः साधनमिति। एवं भक्तिं साधनत्वेन निरूप्य, कर्माणि साधनत्वेन निरूपयति—अपाश्रितार्भकाश्वत्थमिति। अपाश्रित आश्रितोऽर्भकाश्वत्थो येन। आश्रितः पश्चादिति वा। अर्भाणां कं सुखं यस्मात्, बालकसुखदायी। अर्भकरूपः कोमलोऽश्वत्थो वा। तस्यैवाऽरणी भवतः। कर्माणि सर्वाणि तत्साधनान्येव। अपाश्रयपदेन च साधनत्वेनैव कर्मणामपेक्षा, न तु तद्गतं फलमप्यपेक्षत

१ अनादित्यतुल्यवर्णत्वस्य ब्रह्मणि बोधनादादित्यान्तःस्थितेऽपि तद्वर्णतास्तीति तथेत्यर्थः. प्रकाश. २ उत्पादक रजः, तज्जन्य कर्म चादृष्टरूपम्, तत्संस्कृतभूताभावः. प्र. ३ उपदेशार्थं तादृग्रूपप्रदर्शनेन प्र ४ प्रकर्षबोधनेन. प्र. ५ प्रकृष्टज्ञानक्रियाशक्तिमान्, न तु ततोऽधिको रसात्मा प्र. ६ ज्ञातत्वकथनेन. प्र. ७ वामदक्षिणभागयोः. प्र ८ भावे क्तः। ज्ञापनमित्यर्थः. प्र. ९ असमस्त पदत्रयम्. प्र १० एतत त्रय समुच्चितमेव साधनमित्यर्थः प्र. ११ अधिश्रित्येत्यस्य ल्यबन्तत्वादङ्गीकारेऽध्याहारापत्तिरिति तन्निवृत्त्यर्थं पक्षान्तरमाहुः—दक्षिणमित्यादि तथाच अधिश्रित्यपद क्यबन्तम्, तेन नाध्याहार इत्यर्थः. प्र. १२ वामोरौ दक्षिणचरणस्थापनकथनेन. प्र. १३ अत्राङ्घ्रेर्गतिसाधनत्वेन मार्गत्वम्। जले स्नेहान्वयगुणवत्त्वेन सरोरुहपद प्रेमजन्यश्रवणादिपर बोध्यम्. प्र. १४ छायार्थमाश्रित. प्र. १५ अयमर्थः श्रीधरव्याख्यातः संगृहीतः. प्र.

इति सूचितम् । अपाश्रिता अर्भका यस्मिन्निति बालाधिकारः कर्माणि सूचितः । अकृशमिति ज्ञानम्, पूर्णत्वात्, अन्येषां परिच्छेदरूपत्वात् । अनेन पूर्णमेव ज्ञानं साधनमिति, न तु खण्डब्रह्मज्ञानानि शारीरकादीनि । सर्वेषां भक्तानामुपसंहृतत्वाद्दौर्बल्यमाशङ्क्य निराकृतम्, भक्तानां तत्रैव प्रवेशात् । अनेनाऽन्येऽपि दैहिका धर्मा निवारिताः । उत्पत्तिकार्यतपस्यादीनि चाऽक्षरसाम्यान्निवारितानि । 'असं भुवि' 'डुकृञ् करणे' 'शम उपशमे' इति धात्वादयो गृहीताः। प्रपञ्चकर्मज्ञानानि वा ज्ञानसाधनानि; ततः ससाधनं ज्ञानमुक्तं भवति । त्यक्तपिप्पलमिति । त्यक्तं पिप्पलं कर्म फलं येन । वैराग्यमेतत् । पिप्पाँल्लातीति पिप्पलम् । पिपः पान्तीति पिप्पाः । पिबतीति पिः कालः, अविशेषेण सर्वभक्षकत्वात् । तद्रक्षकाणि कर्माणि, कालविशेष एव विहितत्वात् । कर्माणि च फलमेवाऽऽददते, फलकामनयैव कर्मकरणात् । तत्रैकवचनं सर्वं त्याज्यत्वेनैकरूपमिति । अनेन वैराग्ये लौकिकानि, दैहिकानि भक्तिमार्गस्थानि वा विरक्तस्य न निषिद्धानि, न वा नित्यानि, फलेन तेषामप्यनाकर्षात् । नैमित्तिकानि चार्द्धनिषिद्धानि, कालपोषकत्वात् । अग्निहोत्रादीन्यपि नियतकालकर्तव्यानि नैमित्तिकान्येव । सर्वदा कर्तुं शक्यान्येव नित्यानि । योगेनाऽऽत्मदर्शनम्, दानादि परार्थक्रिया, भगवद्भजनमित्यादि; एतेषां न कालपरिपालकत्वम् । अतो वैराग्ये नित्यानि कर्तव्यान्येव, नैमित्तिकानि विकल्पन्ते; काम्यानि तु त्यक्तव्यान्येवेति सूचितम् । गीतायां यद्भगवद्वचनम्— 'यज्ञदानतपः....' इति । तत्रापि यज्ञा नित्याः, जरामर्यादादयो वा । दानमपि ज्ञानोपदेशादयः सर्वदा दातुं शक्याः, अक्षयत्वात् । तपोऽपि नित्यमेव यत्सम्भवति, ऊर्ध्वरेतआदिरूपम्, न तु कृच्छ्रादि; तेषां सर्वदा कर्तुमशक्यत्वात् । एवं षोडशकलं भगवन्तं दृष्टवान् । प्रमेये साधने चैव चतुर्मूर्तिः फले पुनः। पञ्चात्मकस्त्रिमूर्तिस्तु प्रमाण इति निश्चयः ॥ ८ ॥

यदैव मया भगवान् दृष्टः, तदैव मैत्रेयोऽपि समागतः, विदुरोद्धारार्थं तदानयनात् । अत एव मुख्यं भागवतं मैत्रेयोक्तमपि भवति, अक्षसमानत्वात्, साक्षाद्भगवता त्रयाणां स्थाने निरूपितत्वात् । अतः शुकोक्तत्वमपि पृष्ठतः कृत्वा मैत्रेयोक्तत्वमेवोत्कर्षम् । एकान्तरितत्वाल्लीलाद्वयेन कृतार्थता विदुरस्य, एवमुद्धवोक्तेऽपि भविष्यति कल्पान्तरे । अक्षोद्धवमैत्रेयाणां सूक्ष्मलीलामात्रश्रवणेनैव कृतार्थता । सा च लीला आश्रयरूपा, 'परमां स्थितिम्' इति वचनात् । तस्याऽप्यागमनं भगवदिच्छया । पूर्वमपि स वेदव्यासतुल्यः, शुकतुल्योऽपि, नारदतुल्योऽपि । अतो ब्रह्मपरम्परायां यावन्तस्ते सर्वे, मैत्रेय एक एवेति, न परम्पराद्वमस्याऽल्पमपि वैलक्षण्यमिति । तादृशरूपो मैत्रेयः समागत इत्याह—

**तस्मिन् महाभागवतो द्वैपायनसुहृत्सखा ।**
**लोकाननुचरन् सिद्ध आससाद यदृच्छया ॥ ९ ॥**

तस्मिन् महाभागवत इति । तस्मिन् देशे काले च। भगवद्भक्तानामपि कृतार्थकरणसामर्थ्यान् महा-

---

१ 'रघोः कुलेऽखिल राति राजतेजो मह्यां स्थितः । स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः ।' इति रामतापनीयमन्त्रे आद्याक्षरमात्रेण धात्वर्थग्रहणदर्शनादत्रापि तथार्थोक्तौ न दोष इत्यर्थः. प्र. २ अत्र पिप्पल पि.पलमिति द्विधा प्रयोगो दृश्यते । तत्र पकारद्वयपक्षे पिप् कालः, विसर्गपक्षे पिः कालः । तत्रैकस्मिन् पक्षे पिपः पान्तीति; अन्यस्मिन् पीन् पान्तीति; तत्र सकारागमश्च बोध्यः. प्र. ३ अत्र पिप्पानि च लानि चेति पिप्पलम्, एकवद्भावो विग्रहे बोध्यः. प्र. ४ कर्मेति मिश्रपदम्. प्र. ५ अर्थस्य तौल्येन. प्र. ६ प्राणधारणोपयोगीनि भिक्षाटनादीनि. प्र. ७ ब्रह्मणे यथा याज्ञवल्क्योपदिष्टा तपोद्वयावेदानामुपदेष्टव्येति तच्छ्रवणाधिकारित्वेन तथात्वात् प्र ८ व्यासपादैस्त्रोरनिबद्धम्. प्र ९ वा ग.

भागवतत्वम् । **द्वैपायन** इति तदर्थमेव पुष्ट्या भगवदवतारः, तथाऽयमपीति ज्ञातव्यम् । तस्य सुहृत्, तस्यापि हितकारी सखा च, पराशरशिष्यत्वात् । अनेन पुराणमेव व्यासवत् परम्परया पराशरादवगतम्, न तु भागवतमिति सूचितम् । व्यासोऽपि नारदादेव भागवतं ज्ञातवान् । अनेन मैत्रेयस्याऽपि भगवदाज्ञया पुराणकथनं न व्यासस्याऽधिकारिणो विरोधहेतुः; तत्पुत्रोपदेशाच्च । एतदर्थं मित्रत्वमुक्तम् । **लोकाननुचरन्निति** शुकवत्स सिद्ध उक्तः । शुको ह्याचरन्नेव सिद्धो जातः । **आससाद यदृच्छयेति** नारदतुल्यता निरूपिता, स हि यादृच्छिकः ॥ ९ ॥

एवं भगवान् सर्वसंविधानं विधाय पूर्वावस्थां त्याजयितुं स्वस्य कृपामसाधारणं कारणं स्वयमेव सम्पादितवानित्याह—

**तस्याऽनुरक्तस्य मुनेर्मुकुन्दः प्रकृष्टमोदानतकन्धरस्य ।**
**आश्रृण्वतो मामनुरागहाससमीक्षया विश्रमयन्नुवाच ॥ १० ॥**

तस्याऽनुरक्तस्येति । ननु ' गोप्या दयोपदेशश्च, उपदेशो न हि द्वयोः । भिन्नप्रकारयोर्जात्या स्वरूपेण गुणेन च' । १ । इत्याशङ्क्याऽऽह—**अनुरक्तस्येति** । अनुरक्तस्य प्रसिद्धस्य मैत्रेयस्य आश्रृण्वतो मामाहेति सम्बन्धः । अन्यत्र कथनाभावाय मुनेरिति । कृपाकथने हेतुः—**मुकुन्द** इति । स हि मोक्षदाता सर्वेषाम्, यथा जगत्कर्ता; अतस्तथोक्तवान् । तदुभयोः प्रधानत्वं कथं नोच्यते ? तत्राऽऽह—**प्रकृष्टमोदानतकन्धरस्येति** । प्रकृष्टो यो मोदस्तेन आनता कन्धरा यस्य । स हि प्रेमभरेण गृहीतो ज्ञानाधारमधः कृत्वा, प्रेमाश्रु मुञ्चन्, चरणमेव पश्यन्, स्थितः । अतः साक्षादुपदेशानधिकारी, भक्त्या च कृतार्थः । अतस्तस्य श्रृण्वत एव सतो मामुद्दिश्यैवाऽऽह । स्वस्थे हि चित्ते उपदेशो घटते । स्वास्थ्यं च देशकालवैपरीत्यदर्शनात्, श्रमादिना च न सम्भाव्यते । अत आह—**अनुरागहाससमीक्षयेति** । अनुरागाद्भयनिवृत्तिः, न ह्यनुरक्तो भगवान् मारयति । हासेन च मोहः । भगवता पूर्णं कृतं पश्यन्नपि भानुसन्धत्ते । सम्यगीक्षा समीक्षणं दयासहितम्, तेन देशकालभयानि सर्वाण्यपि निवृत्तानि । विशिष्टेन श्रमाभावः । अनुरागपूर्वको यो हासस्तत्सहिता समीक्षेति ॥ १० ॥

पूर्वम् **'अतिव्रज्य गतीस्तिस्रो मामुपैष्यसि केवलम्।'** इति भगवता प्रोक्तम्, तदुद्धवस्य सर्वथा हितमिव भवति । स हि भगवन्तमेव प्राप्तुमीष्टे, निरन्तरं च निकटे स्थातुम् । साधनानि च न कर्तुं वाञ्छति । तादृशस्य बदरिकाश्रमप्रेषणं नाऽत्यन्तमभीष्टमिति तदिच्छामनुवदन् देयान्तरमाह । अस्मिन् दत्ते तदेतच्चाऽन्यार्थं भविष्यति । अहमेव तथा करिष्यतीत्यभिप्रायेणाऽऽह—

## श्रीभगवानुवाच ।

**वेदाऽहमन्तर्मनसीप्सितं ते ददामि यत्तद्दुरवापमन्यैः ।**
**सत्रे पुरा विश्वसृजां वसूनां मत्सिद्धिकामेन वसो ! त्वयेष्टः ॥ ११ ॥**

वेदाहमिति । ते यदन्तर्मनसीप्सितं तदहं वेद । इदं वाक्यमनुवादकम्, तत् फलं दास्यामीत्येतदर्थम् । एवमुक्ते प्रथमत एवाऽऽश्वासो भवति, अन्यथा काकतालीयशङ्का स्यात्, अन्यथाभिप्रायशङ्का च ।

---

१ रिहेणी. प्रवासः. २ भावनकरण बदरिकाश्रमप्रेषणं च. प्र

ननु तद्भगवदात्मकं लोकवेदतोऽदेयं कथं दास्यतीत्यत आह–ददामि यत्तदिति । यत्त्वया मनसि कृतं तदेव दास्यामीत्यर्थः । तस्याऽसाधारणत्वमाह–दुरवापमन्यैरिति । त्वद्व्यतिरिक्तैः सर्वैरेव दुरवापम् । तां कामनां विस्मृतामिव स्मारयति–सत्रे पुरेति । ' विश्वसृजः प्रथमाः सत्रमासत ' इति श्रुतौ सहस्रसमयागे विश्वसृजां मध्ये वसवोऽपि स्थिताः, तन्मध्ये त्वमेको मत्सिद्धिकामः, न हि सर्वे । ' एतेन वै विश्वसृज इदं विश्वमसृजन्त ' इति श्रुतेः, 'ब्रह्मणः सायुज्यं सलोकतां यन्ति' इति श्रुतेश्च विश्वसामर्थ्यम्, ततो विश्वं सृष्ट्वा ब्रह्मसायुज्यं प्राप्नुवन्तीति सर्वेषां फलम् । तदधिकारिविशेषप्रयुक्तं विश्वकरणसामर्थ्यं यागस्य । स्वतः सामर्थ्यं हिरण्मयशकुनिरूपब्रह्मोत्पत्तिः । तदा ते विश्वं सृष्ट्वा ब्रह्मसायुज्यं प्राप्ताः । भवांस्तु तदुभयं न काङ्क्षितवान्, किन्तु सद्भानुरोधेन यागे प्रवृत्तो मत्सिद्धिमेव काङ्क्षितवान् । मम सिद्धिर्मद्भावः ' पुरुषोत्तमो मम भवतु, अहं वा भवामि ' इति; तच्च सर्वथा दुर्लभं यागात् । अतो याग. कामितत्वाभावान्न नियतं फलं दत्तवान् । एनच्च दातुमसमर्थस्त्वामेवंरूपमुत्पाद्य मत्सेवां कारितवान् । अतो मया सेवाफलं बदरीस्थाने पुरुषोत्तमप्राप्तिरूपं यथा सिद्ध्यति तथोपाय उक्तः । यागफलं तु न दत्तम्, तदिदानीं दास्यामीत्यर्थः । वसो इति सम्बोधनमेतदर्थानुसन्धानं भगवत्कृपया तस्य जातमिति ख्यापनार्थम् । फलार्थमेव याग इति त्वयाऽहमेवेष्टः ॥ ११ ॥

तर्हि किं दातव्यम् ? कथं दातव्यम् ? इत्याकाङ्क्षायामाह—

**स एष भावश्चरमो भवानामासादितस्ते मदनुग्रहो यत् ।**
**यन्मां नृलोकान् रह उत्सृजन्तं दिष्ट्या ददृश्वान् विशदानुवृत्त्या ॥ १२ ॥**

स एष इति । स एष भावो जन्म, ते भवानां चरमः । यदीदानीं न दत्तं स्यात्, तदा तवाऽग्रे जन्माभावात्फलं न भवेदेव । ततः किमत आह–यद्यस्मिन् जन्मनि मदनुग्रहः प्राप्तः । ममानुग्रहः फलसूचकोऽनन्तिमजन्मनोऽप्यन्तिमत्वं साधयति । एवमन्तिमे जन्मन्यनुग्रहो जात इति फलमावश्यकम् । किञ्च, न योग्यता मात्रम्, किन्तु फलमुखमेव तज्जातमित्याह–यन्मां नृलोकान् रह उत्सृजन्तमिति । नृलोकान् सर्वानेव एकान्ते स्थित्वा उत्सृजन्तं मां ददृश्वान् दृष्टवानसि ॥ १२ ॥

एतच्च दर्शनं निर्मलया सेवया जातम्; अतः ससाधनत्वात्तत् स्थिरम्, न काकतालीयम् । उत्सृजन्तमित्यनेन त्यजन्तमूर्ध्वं सृजन्तं चेत्यर्थद्वयं विवक्षितम् । तेन यागप्रयोजनं मद्भावश्च एकरूपो भवति । मद्भावेप्येतद् द्वयं कर्तव्यम्, गुप्ततया स्थित्वा विश्वजननं सर्वलोकपरित्यागश्च । त्वज्जन्मनश्चरमत्वादेव परित्यागः सिद्धः । मद्भावेन जगज्जननमवशिष्यते । तत्र मत्सायुज्ये जगज्जननमन्यथासिद्धं भवति, एकीभावश्रुतेः । ' यथा सर्वासामपां समुद्र एकायनम् ' इति । भिन्नतया ब्रह्मभावे ' जगद्व्यापारवर्जम् ' इति न्यायान्न जगत्कर्तृत्वम् । अतः सर्वाविरोधेन मद्भावेन जगज्जननं यथा सिध्यति, तथा वक्ष्यामीत्यभिप्रायेण, ब्रह्मणोऽप्येतदेव मयोक्तमित्येतदर्थज्ञानेन यथा ब्रह्मा मद्रूपो भूत्वा मद्रूपं जगत्कृतवान्, क्रियया तस्य तथाऽधिकारात्; त्वमप्येतज्ज्ञानान्मद्रूपो भूत्वा मद्रूपं जगत् ज्ञानेन करिष्यसीत्याशयेन तज्ज्ञानमाह—

**पुरा मया प्रोक्तमजाय नाभ्ये पद्मे निषण्णाय ममाऽऽदिसर्गे ।**

१ श्रुतिस्तु तैत्तिरीयाणां ब्राह्मणे तृतीयाष्टकद्वादशप्रपाठकसप्तमानुवाकस्था प्र २ बदरीगमनकरः. प्र

**ज्ञानं परं मन्महिमावभासं यत्सूरयो भागवतं वदन्ति ॥ १३ ॥**

पुरेति । एतद्वक्ष्यमाणं ज्ञानम्, मम नाभ्ये पद्मे निषण्णाय अजाय आदिसर्गे प्रोक्तम् । तत्र हि सर्वे कृतयुगे ब्रह्मविदो ब्रह्मरूपाः । मच्छिक्षया ब्रह्मा पुरुषोत्तमरूपान् कृतवान् । '**यदा विवेकनिपुणा आदौ कृतयुगे युगे**' *इति भगवद्वाक्यात् । नाभौ भवं नाभ्यम् । अज इति योनिद्वारा न जात इति । असंबन्धेन देहे संबन्धेन वा ।* समष्टिव्यष्ट्युभयरूपत्वाभावात् । तस्य स्वरूपमग्रे वक्तव्यम् । '**रजोभाजो भगवतो लीलेयम्**' इत्यतोऽयमजः । यदुक्तं तत्किमित्याकाङ्क्षायामाह—**ज्ञानं परमिति** । ज्ञानमध्यात्मरूपमपि भवति, तद्व्यावृत्त्यर्थमाह—**परमिति** । तदौपनिषदमपि भवतीति ततोऽप्युत्कृष्टमाह—**मन्महिमावभासमिति** । *मन्महिम्नोऽवभासो यत्रेति, यस्मिन् ज्ञाने मम पुरुषोत्तमत्वं भासते ।* माहात्म्यप्रतिपादका गुणाः, कर्माणि, शक्तयश्च, अलौकिकं च सामर्थ्यम्; एतत्सर्वं यत्र भासते तद्भागवतमिति लोके प्रसिद्धम् । सूरयस्तथा वदन्तीत्यतोऽस्मिन्नपि शास्त्रे वादिनामपि वाद एव ॥ १३ ॥

तत्कथयिष्यामीति तु नोक्तम्, वस्तुनिर्देश एव परं कृतः । '**नाऽपृष्टः कस्यचिद् ब्रूयात्**' इति *शास्त्रमर्यादा । वस्तुनिर्देश एव पृच्छेत्यस्य ज्ञापकः । अतोऽधिकारी भगवदभिप्रायं ज्ञात्वा पृष्टे वक्तव्य*मिति पृष्टवानित्याह—

**इत्यादृतोक्तः परमस्य पुंसः प्रतिक्षणाऽनुग्रहभाजनोऽहम् ।**
**स्नेहोत्थरोमा स्खलिताक्षरस्तं मुञ्चन् शुचः प्राञ्जलिराबभाषे ॥ १४ ॥**

इत्यादृतोक्त इति । आदृतश्चासावुक्तश्च । '**वसो**' इत्यादिसंबोधनपूर्वकं पूर्वकृतसेवानुवादादादृतः, वस्तुनिर्देशादुक्तश्च । आदृत एव वा उक्तः, '**प्रष्टव्यम्**' इति । अन्यथोत्तरस्य वाग्व्ययरूपस्य क्लेशरूपत्वाद्भक्तस्य प्रश्नो न घटेत । आज्ञायां तु सर्वथा कर्तव्य एव । तदुक्तमुक्त इति । आदरस्तु स्फुरणार्थः । अनेन प्रमाणबलं प्रमेयबलं च दत्तमित्युक्तम् । ततः किं जातमित्यत आह—**परमस्य पुंसः प्रतिक्षणानुग्रहभाजनोऽहं** जात इति । अहमेतावत्कालं कालस्य स्थितः, इदानीं परमस्य जातः । ननु कालोऽपि पर एव । तत्राऽऽह—**पुंस इति** । ज्ञानेनाऽक्षरभावो वा परशब्देन प्राप्तः पुरुषशब्देन निवार्यते । किञ्च । न संबन्धित्वमात्रम्, किन्तु *प्रतिक्षणानुग्रहभाजनः ।* भक्तं दृष्ट्वा भगवदनुग्रहस्य तरङ्गा उद्गच्छन्ति, तेषां भाजनं पात्रमहमेव जातः, न त्वचेतने समुद्रे तरङ्गाणां लय इव भगवत्येवाऽनुग्रहो लीन इति, निरन्तरं मद्विषयक एव जात इति वा । तदा भगवदनुग्रहस्य कार्यं मयि जातमित्याह—**स्नेहोत्थरोमेति** । अन्तर्भक्तिरसः पूर्णः । तदा स्नेहेनोत्थितानि सर्वाण्येव रोमाण्यवयवशः । *सर्वत्रैवाऽङ्गे लोमशो देवताः सन्ति, ते भगवति संतुष्टे सर्वे सन्तुष्टा एवोत्थिताः ।* तत्रापि स्नेहेन, महदस्य सुखं कर्तव्यमिति । स्खलिताक्षरश्च जातः; पदवाक्योच्चारणं दूरे, अक्षराण्यपि उच्चारयितुं प्रवृत्तानि क्षरन्तीति । अनेन मर्यादा सर्वथाऽपि शान्ता, वाचः प्रयत्नपरित्यागात् । किञ्च, **मुञ्चन् शुचः** । नेत्राभ्यां शोकाश्रूणि मुञ्चन् । अनेन ससाधनं ज्ञानं पूर्वस्थितं निवृत्तमिति ज्ञापितम् । प्रकृष्टोऽञ्जलिर्यस्य । अञ्जलिमेव पुरतो निधाय विज्ञापितवान् । अनेन तस्य प्रश्नाधिकारः सूचितः । आ ईषद्भाषे, यथा कथञ्चिन्मुखाद्वर्णा निःसृता इत्यर्थः ॥ १४ ॥

१ पुरुषोत्तमरूपाः. ख.ग.घ. २ विद्वत्त्वमनत्वात् ग. ३ परम् अस्य इति पदच्छेदः. ग ४ एकदाभिप्रायेणार्थान्तरमाह:—ज्ञानेनेत्यादि. । ग. ५ कार्यमपि ख. ग. घ.

उद्धवः स्वामीप्सितं प्रार्थयितुमन्यनिषेधं तत्र हेतुं चाऽऽह त्रिभिः। तत्र ब्रह्मणे मया भागवतं प्रोक्तमिति श्रवणे प्रायेणाऽयं मां ब्रह्माण्डान्तरे ब्रह्माणं करिष्यतीति प्रतिभातं निवारयति—

**को न्वीश ! ते पादसरोजभाजां सुदुर्लभोऽर्थेषु चतुर्ष्वपीह ।**
**तथापि नाऽहं प्रवृणोमि भूमन् ! भवत्पदाम्भोजनिषेवणोत्सुकः॥ १५ ॥**

**को न्वीशेति।** ईशेति संबोधनं सर्वसामर्थ्यबोधनाय। ते पादसरोजभाजां संबन्धिषु चतुर्ष्वप्यर्थेषु को नु दुर्लभः ? चरणरूपा पृथिवी, ब्रह्माण्डमपि पृथिव्यात्मकमेव, तत्तु प्राप्य दुग्धपानवत्सेवते। तत्रापि सरोरुहं जलोद्भवं पद्मम्, जलस्यापि फलरूपम्। अनेन सर्वमेव ब्रह्माण्डे स्थितं फलम्, तापापनोदश्च स्वद्भजने स्वतः सिद्धः। अत्र तीर्थैकदेशे मुक्तिः प्रसिद्धा, लक्ष्म्येकदेशेऽर्थः प्रसिद्धः, फलत्वेन सेवनया कामः प्रसिद्धः, विहितत्वाद्धर्मः सिद्ध एव। अतस्तेषां को वा दुर्लभः ? ईशेति संबोधनादसाध्यमपि सिद्ध्यति। **चतुर्ष्वपीति** निर्द्धारवचनम्। अवान्तरभेदेन सर्वे एवैतेष्वन्तर्भवन्तीति सूचितम्, तथापि सूक्ष्मतया प्राप्तमपि स्थूलतया प्राप्तव्यमिति चेत्तत्राऽऽह—**तथापि नाऽहं प्रवृणोमीति।** यदि भगवदिच्छा तथैव भविष्यति, तदा केन निवारयितुं शक्या। तथापि तन्नास्मदभिप्रेतम्, न वा याचनीयम्। किञ्च। न च ब्रह्मत्वं दुर्लभम्, बहव एव ब्रह्माणो जायन्ते, यतो भूमा भगवान् ब्रह्माण्डकोटिविग्रहः। तत्र किमेकस्मिन् ब्रह्माण्डे स्थितेन ब्रह्मणा कार्यं भविष्यतीति, संपूर्णं परित्यज्य कोट्यंशग्रहणात्। अतोऽहं भवत्पदाम्भोजनिषेवणोत्सुक एव। चिन्तामणिवत्सर्वसाध्यापेक्षया साधनमेवाऽधिकम्। न हि चिन्तामणिर्वस्त्रं प्रयच्छतीति कश्चित् चिन्तामणिं परित्यज्य वस्त्रमिच्छति। तस्मात्किं ब्रह्मत्वेनेत्यर्थः॥ १५ ॥

तर्ह्येवं सति न किञ्चित्प्रार्थनीयमित्यायाति तत्राऽऽह—

**कर्माण्यनीहस्य भवोऽभवस्य ते दुर्गाश्रयोऽथारिभयात्पलायनम्।**
**कालात्मनो यत्प्रमदाऽयुताश्रयः स्वात्मन् रतेः खिद्यति धीर्विदामिह १६**

**कर्माण्यनीहस्येति।** अत्र चरणभजने एकं प्रार्थनीयम्, दोषाभाव इति। तत्र दोषो द्विविधः। भगवद्भजने क्रियमाणे स्वत एको दोष उत्पद्यते, भगवता चापरः क्रियते। तदुभयं यथा न भवति तथोपायो वक्तव्यः। तच्चेद्भागवतं भविष्यति, तदा तद्वक्तव्यमिति। प्रथमतो दोषद्वयमनुवदति। दोषानिवर्त्तकत्वे भागवतेनाऽपि न कृत्यम्, न हि भगवच्चरणारविन्दादन्यत् फलमस्ति। तत्सेवमानानां तद्बाधकनिवृत्तिरेव प्रार्थनीया। तच्च बाधकं सर्वैरेव पोष्यते, न तु बाध्यते। तदेतदत्यभीष्टमिति ज्ञापयितुं प्रथमं फलादाह—**कर्माण्यनीहस्येति।** अनेनाऽयमुत्तमोऽधिकारीति ज्ञापितम्। भगवतो विरुद्धानि कर्माणि स्वबुद्धौ स्फुरितानि बाधकानि। सामान्यदूषणद्वयम्, विशेषेण दूषणत्रयमिति भगवतः सेव्यत्वसिद्धये स्वस्य जन्मादिदुःखनिवृत्त्यर्थमभव. सेव्य इति भगवानभवोऽङ्गीकर्त्तव्यः। स्वस्य कर्मणा नानाविधक्लेशा भवन्ति, तदभावाय सेव्यो भगवानिति तस्य तदभावोऽङ्गीकर्त्तव्यः। तच्च प्रत्यक्षेण भजनहेतुना विरुध्यते, वसुदेवस्य गृहे जननात्, निरन्तरं कर्मकरणाच्च। प्रत्यक्षं तु युक्तिरूपानुमानाद्बलिष्ठम्। चरणभजनं तु स्वतोऽतिरसं प्रयच्छतीति फलतो महत्त्वं च प्रत्यक्षसिद्धम्। पर्यवसाने तु बाधः। यत्र भगवानेव जायते, एवं च क-

---

१ फलरोनन स्वरूपज्ञान वा, तस्माज्ञात दोषमाद्देत्यर्थः. प्र २ बाधकानिवृत्तिप्रार्थनेन। भजनहेतुभगवत्त्वम् तेन म.

रोति, तत्र तदाश्रयाणामस्माकं का वार्ता ? भगवानेव हि फलदाता, यद्यन्ततः स एव भविष्यामस्तथाप्येवंरूप इति । जननादिक्लेशस्य विद्यमानत्वात् किं भजनेनेत्यनास्था प्रतिभाति । किञ्च, साधारणेश्वराद्प्यन्यथा प्रतिभाति । वस्तुतो ब्रह्मादीनामप्युपास्यत्वस्य प्रत्यक्षसिद्धत्वान्महानेवाऽयमिति प्रतिभाति, तथापि त्रयो दोषा बुद्धौ स्फुरन्ति । कथं भगवान् स्वकीयं स्थानं मथुरां परित्यज्य शत्रुभयात्पलायितो द्वारकाख्यं दुर्गमाश्रितः ? कथं वा कालयवनात्पलायते ? कथं वा स्वरूपानन्दः स्वभोगार्थं स्त्रीसहस्रं परिगृह्णाति, उपभुङ्क्ते च ताः? अतो यावज्जन्मैवाऽन्यथाप्रतिभानाद्भजनबाधकमभगवत्त्वमेव प्रतिभाति । अथ यदि मोहनार्थमेवं करोतीत्यभिप्रायः कल्प्येत, तथापि यावदवतारं मोहकत्वात् कथमुपास्यो भवेत् । अथोपासकं न व्यामोहयतीति कल्प्येत, तदपि न सम्भवति । स्वयं सर्वज्ञोऽसर्वज्ञ इव मन्त्रेषु मामुपहूय कर्तव्यं पृच्छति, उक्तं च करोति । अतः केनाऽपि प्रकारेण चरित्रादिदर्शनेन भगवद्भजनबुद्धेर्नाश एव दृश्यते । व्यामुग्धानां वचनानि तु किं वक्तव्यानि ? यद्येतानि दूषणानि भागवते परिहृतानि भवन्ति, तदा तद्वक्तव्यमित्यभिप्रायेण, अन्तिमां लीलां पश्यन्नेव भ्रान्तं दूषणान्येव सिद्धानीति तां दशां पश्यन् पूर्वदूषणान्येवाऽनुवदति । दूषणत्वाय स्वरूपं च कीर्तयति, सिद्धान्तसम्भावनार्थं च । **कर्माणि** पूतनास्तुपयःपानादीनि । **अनीहस्य** पूर्णब्रह्मणः । **अभवस्य** निर्विकारस्य । **भवः** सर्वविकारहेतुर्जननात्मा । सर्वसंहर्तुः सर्वनियन्तुश्च **काला**-**त्मनः** स्वरक्षकत्वेन, दुःखगतिहेतुं दुर्गादिकं स्वरक्षकत्वेन मन्यते । **अथेति** भिन्नप्रक्रमेण । अनेन दुर्गाश्रयेऽपि पलायनं स्वतन्त्रतयाऽपि पलायनं सूचितम् । आत्मारामस्य च प्रमदायुताश्रयणम् । एतल्लीलापञ्चकम् । ब्रह्मत्वेन त्वां जानताम्, लीलापञ्चकं च पश्यतां सङ्कटे पतिता धीः खिद्यति । **इहे**त्यस्मिन्नर्थे १६

स्वकायिकेन व्यामुग्धोऽहं वाचिकेनाऽपि मुग्धो जात इत्याह—

**मन्त्रेषु मां वा उपहूय यत्त्वमकुण्ठिताखण्डसदात्मबोधः ।**
**पृच्छेः प्रभो ! मुग्ध इवाऽप्रमत्तस्तन्नो मनो मोहयतीव देव ! ॥ १७ ॥**

**मन्त्रेष्विति** । जरासन्धवधार्थं राजप्रार्थनायाम्, यागार्थं युधिष्ठिरप्रार्थनायां च स्वयमुपायं जानन्नेव मामुपहूय । मन्त्रेष्विति बहुवचनेन कालान्तरेऽपि स्यमन्तकादिषु दृष्टमपीति प्रतिभाति । वेत्यनादरे । **आहूयेति** प्रासङ्गिकत्वं निषिद्धम् । **त्वमि**ति नाऽत्र तिरोहितं किञ्चिदिति सूचितम् । सर्वशास्त्रानुसारेण न कुण्ठितः । तीक्ष्णतामप्यपरित्यज्य स्वकार्यकर्ता अकुण्ठितः । अखण्डस्तैलधारावदनवच्छिन्नः, न कालादिना शङ्कितभङ्ग आत्मबोधो यस्य । पृच्छेरामन्त्रणेन पृष्टवानसि । विधिप्रयोगात् परिहर्तुमप्यशक्य इति सूचितम् । **प्रभो इति** संबोधनं पूर्वस्थितिमपि नाशयेदिति, भयादपि कथनं सूचितम् । **मुग्ध इवेति** तदानीन्तनचेष्टया न जानातीत्येव प्रतीतिरुत्पन्ना, अन्यथा न सोपपत्तिकं वदेत् । बहूनामपि वाक्ये युक्त्या बलिष्ठत्वज्ञानेऽपि पक्षान्तरे स्वाभिमतमेव करोतीत्यप्रमत्त इत्युक्तम् । अतस्त्वैतादृशं चरित्रम्, **नोऽ**स्माकमेव सर्वेषां भक्तानां **मनो मोहयतीव** । सान्निध्याद्भजनाच्च माहात्म्यं प्रतिभातीतीवप्रयोगः । **देवेति**संबोधनं [ च ] पूर्वपक्षसमाप्तिसूचकम्, देवचरित्रं मनुष्यबुद्ध्या निर्द्धारणाशक्यमिति सूचनात् ॥ १७ ॥

तस्मात्तदर्थं भागवतं कथयेत्याह—

---

१ जनमतानि. क.

**ज्ञानं परं स्वात्मरहःप्रकाशं प्रोवाच कस्मै भगवान् समग्रम् ।**
**अपि क्षमं नो ग्रहणाय भर्तर्वदाऽञ्जसा यद् वृजिनं तरेम ॥ १८ ॥**

**ज्ञानं परमिति** । पूर्वोक्तोऽस्माकं यो मोहः सोऽज्ञानकृत इति । ज्ञानेनैव तन्निवर्तते, अतो ज्ञानैकप्रतिपादयितादृशं भागवतं कथनीयम् । ननु जाग्रत्स्वप्नवत् ज्ञानाज्ञाने अन्योन्यविरोधिनी, तथा चोभयतुल्यत्वादन्योन्योपमर्दसम्भवात् किं ज्ञानेनेत्यत आह—**परमिति** । प्रकृत्यादिनियन्तृ, अज्ञाननिवर्तनसमर्थम् । ननु भगवदिच्छायाः प्रधानत्वादस्य ज्ञानं नश्यत्वितीच्छया, भगवत्प्रेरितमायया वा अज्ञानादिनिवर्तकमपि ज्ञानं नश्येदेव । ' ज्ञानिनामपि चेतांसि देवी भगवती हि सा । बलादाकृष्य मोहाय महामाया प्रयच्छति ' इति वाक्यात् परेणाऽपि ज्ञानेन किं प्रयोजनमित्याशंक्य पुनर्विशिनष्टि—**स्वात्मरहःप्रकाशमिति** । स्वकीयानां मायादिशक्तीनामात्मनो भगवतश्च रहो यन्मर्म, बन्धनमोचनलीलायां कीदृशो भगवदभिप्रायस्तदीयानां चेति; यत्र ज्ञाने इदं रहः प्रकाश्यते, तादृशज्ञानरूपं ब्रह्मणे भगवता प्रोक्तमिति श्रुतम् । **कस्मा इति** व्यर्थवचनात् न ज्ञायते कस्मै प्रोक्तम्, अन्यथा स एव पृष्टः स्यादिति गम्यते । तत्राऽप्यवान्तरभेदाः सन्ति, भगवदभिप्रायाणामनन्तत्वात् । अतः सर्व एवाऽभिप्रायो यत्र गम्यते, तत्समग्रम् । **भगवानित्यचिन्त्यैश्वर्यतया** कदाचित्तादृशमपि ज्ञानं भवेद्वृद्धेद्वेति सम्भावना । तत् ज्ञानं पुरुषविशेष एव भवतीति चेत्तत्राऽऽह—तत् ज्ञानं नोऽस्माकं **ग्रहणाय क्षमं** चेत्तदा वक्तव्यम् । अपीति सम्भावनायाम्, कृपाविषयत्वान्मम । वस्तुनिर्देशाच्च मय्यपि तत्सम्भावितम् । ननु तत् ज्ञानं मद्रूपं कथमन्यस्य सम्भवति ? स तु ब्रह्मा मदवतार इति चेत्तत्राऽऽह—**हे भर्तः** । अनधिकार्यपि भार्यारूपं पतिं,तद्गतं च धर्मं बिभर्ति । अतोऽस्माकं त्वं भर्तेति स्वरूपत्वेऽपि तद्युज्यते । अतस्तत्सर्वथा वक्तव्यमित्याह—**वदेति** । प्रार्थनायां लोट् । आग्रहे हेतुः—**अञ्जसा यद् वृजिनं तरेमेति** । वृजिनं पूर्वोक्तदुःखम्, तदनायासेनैव तरेमेति ॥ १८ ॥

एवं स्वाभिप्राये प्रकटिते अधिकार्ययं भवतीति भगवांस्तदाहेत्याह—

**इत्यावेदितहार्दाय मह्यं स भगवान् परः ।**
**आदिदेशाऽरविन्दाक्ष आत्मनः परमां स्थितिम् ॥ १९ ॥**

**इत्यावेदितहार्दायेति** । हार्दं हृदयस्थितम्, अभिप्रेतमिति यावत् । तदा तत् ज्ञानं भगवान् मह्यमादिदेश । सिद्धमेव वस्तु यथा किञ्चिदादिश्यते—इदमिति । आज्ञाया अपि दत्तत्वात् स्वपरव्यवहारोपयोगि भविष्यति, अन्यथा केवलनिर्देशो व्यर्थः स्यात् । भगवति स्थितमेव तत् ज्ञानमुद्धवेन व्यवहर्तव्यम्, न तु यथा ब्रह्मणे दत्तं तथाऽस्मै दत्तम्; तथा सामर्थ्यात् । तर्हि सर्वस्य प्रदर्शितं कथम् ? तत्राऽऽह—**अरविन्दाक्ष इति** । अरविन्दवदक्षिणी यस्य । अनेन तापहारित्वेन दृष्ट्यैव, तदनधिकारो निवारितः । भगवद्विचारेण सिद्धं तत्किंरूपमित्याकाङ्क्षायामाह—**आत्मनः परमां स्थितिमिति** । यस्माश्रयरूपा भगवतः स्थितिः, न ततः परमन्यत्, सा परा काष्ठा ॥ १९ ॥

ततस्त्वया किं कृतमित्याकाङ्क्षायामाह—

१ अत्र प्रतिपादीति पदच्छेदः प्रकाश २ ' अतो मद्भुनम् .' इति विचारणकयोर्धितायाः . प्र ३ उद्धवेगुणादेनस्याऽभावेन भगवत्स्थितज्ञानव्यवहारसामर्थ्यात्, प्र.

स एवमाराधितपादतीर्थादधीततत्त्वात्मविबोधमार्गः ।
प्रणम्य पादौ परिवृत्त्य देवमिहाऽऽगतोऽहं विरहातुरात्मा ॥ २० ॥

स एवमिति । एवंप्रकारेण भगवता ज्ञापितार्थोऽहं—पादौ प्रणम्य परिवृत्त्य विरहातुरात्मा इहागत इति संबन्धः । इहाऽऽगत्य वा विरहातुरात्मा जात इति । तद्भागवताख्यं शब्दब्रह्म मया स्वाधीनं कृतम् । तच्च गुरुसेवाव्यतिरेकेण न भवतीति, प्रभुत्वेन सेवितोऽपि भगवान् गुरुत्वेनाऽपि सेवितस्तदाह—आराधितपादतीर्थादिति । आराधितपादश्चाऽसौ तीर्थरूपश्च । तीर्थशब्देन गुरुरत्रोच्यते । आराधितौ पादौ यस्येति, गुरोश्चरणसेवा कृतेति गम्यते । तादृशतीर्थाद्भगवतोऽधीतो विबोधमार्गो येन । ते च विबोधमार्गा बहव इति प्रतीकादिव्यावृत्त्यर्थमात्मेत्युक्तम् । आत्मविषयको विबोधमार्ग इति । तत्रापि शारीरादिपक्षाः सन्तीति तद्व्यावृत्त्यर्थमाह—तत्त्वेति । तत्त्वं परमार्थरूपम्, तस्य यः सहजो भाव इति । स्वरूपेणैव प्रादुर्भूत इति स्वरूपमेवाऽत्राऽऽत्मशब्देनोच्यते । विशेषबोधः पूर्वसन्देहवारकः । तदनन्तरं विद्यासमाप्तौ पादौ प्रणम्य, पुनस्तां गुरुत्वबुद्धिं परित्यज्य, देवं स्वामिनमुपास्यं तं परिवृत्त्य प्रदक्षिणीकृत्येहैवागतः । भगवत्प्रदक्षिणानन्तरमेवात्र ममात्मलाभो जातः, 'अयमहम्' इति । किं भगवदिच्छया तत एकेनैव पदा अत्रागतः, क्रमेण वेति न जानामि । परं प्रदक्षिणा, इदं च स्थानं स्मर्यते । अत एवेदानीं विरहातुरात्मा जातः, अन्यथैतावद्दूरमागमनमेव न स्यात् । अनेनाऽग्रिमवार्ताऽपि तत्रत्या न ज्ञायत इत्युक्तं भवति । इदानीं तु विरहेण आतुर आत्मा अन्तःकरणं विद्यते ॥ २० ॥

तर्हि किमतः परं कर्तव्यमित्याकाङ्क्षायामाह—

सोऽहं तद्दर्शनाह्लादवियोगार्तियुतः प्रभोः ।
गमिष्ये दयितं तस्य बदर्याश्रममण्डलम् ॥ २१ ॥

सोऽहमिति । तस्य दर्शनेनाऽऽह्लादः, वियोगेन च आर्तिः; उभययुतः सन् । सर्वसन्देहानां भगवता निवारितत्वात्, प्रभोर्भगवत आज्ञा अवश्यं परिपालनीयेति, द्वारकापेक्षयाऽपि दयितं प्रियमत्यन्तम्, बदरीस्थानमेव भगवत ऋषिरूपस्य आश्रममिति बदर्येवाश्रमम्, गमिष्यामि । तत्राऽधिकं विशेषमाह—मण्डलमिति । यथा सवितृमण्डलमध्यवर्ती नारायणः, तथा बदर्याश्रममण्डलमिति तत्र भगवतो नित्यसन्निधानं बोधितम् ।२१।

उपपादयत्यपि—

यत्र नारायणो देवो नरश्च भगवानृषिः ।
मृदु तीव्रं तपो दीर्घं तेपाते लोकभावनौ ॥ २२ ॥

यत्रेति । यत्र बदरिकाश्रमे उभयरूपेण भगवानस्ति । आश्रमे ऋषिः, नरश्च । चकाराद्भगवान् । नरप्राधान्येन ऋषिर्भगवानाश्रमे, नारायणप्रधानो देवो नरसहितो मण्डले । अतः सूर्यमण्डलापेक्षयाऽपि तत् स्थानं मर्मार्चीनमित्युक्तं भवति, उभयोर्भगवत्त्वमृषित्वं देवत्वं च । अतो मृदु तीव्रं दीर्घं तपस्तेपाते । देवत्वात् मृदु तपः कुर्वाते, ते हि सात्त्विका नात्युग्रतपोयोग्याः; भगवत्त्वात्तीव्रं कुर्वाते; ऋषित्वाद्दीर्घम्, ते ह्याजन्म तपः कुर्वन्ति । भगवांस्तु शीघ्रफलकं कर्म करोति, विलम्बे कारणाभावात्, अतस्तीव्रमित्युक्तम् । तपोऽत्र समाधिरूपमाहारपरित्यागपूर्वकम् । नन्वेनादृशतपःकरणे को हेतुस्तत्राऽऽह—लोकभावना-

विति । लोकं भावयतः । लोकास्तु त्रिविधाः, अतः सर्वहितार्थं त्रिविधं तपः करोतीत्यर्थः ॥ २२ ॥

एवं निश्चयां बुद्धिं निरूप्य, विपर्ययस्याऽत्राऽप्रयोजकत्वात् त्याज्यत्वेन तद्वदेव संशयमाह । इत्युद्धवादिति त्रिभिः—

## श्रीशुक उवाच ।

**इत्युद्धवादुपाकर्ण्य सुहृदां दुःसहं वधम् ।**
**ज्ञानेनाऽशमयत्क्षत्ता शोकमुत्पतितं बुधः ॥ २३ ॥**

अत्र प्रथमं सुहृदां वधं श्रुत्वा, भगवदिच्छां च श्रुत्वा, द्वयोः फले जाते शोके तदपगमे च, ततो बुधो भूत्वा सन्देहनिवृत्त्यर्थं तमेवाऽर्थमुद्धवं पृच्छतीति स्वाधिकारकवक्तृवाच्यनिरूपणाद्वाक्यत्रयम् । सन्देहस्याऽनिवृत्तत्वादग्रिमवाक्यं सन्देहस्थापकमिति नेयं बुद्धिर्निश्चयरूपा, पदार्थस्याऽनिर्द्धारितत्वात् । उपायनिर्द्धारणपक्षे तु संशयस्याऽप्रयोजकत्वात् साधननिश्चयात्मक एव स निरूप्यते । इत्थं पूर्वोक्तप्रकारेण मदिरापानादिना सुहृदां वधमुद्धवादुपाकर्ण्य, श्रोतुमप्यशक्यं शोकादि स्वकार्यावश्यम्भावि दुःसहमुद्धवात् श्रुतमिति. विपरीतशङ्काभावात्, दूराद्वह्निरिव तस्य हृदये शोक आपतितः । तत उत्प्लुत्याऽत्रैवागत इत्यर्थः । तं शोकं ज्ञानेनाऽशमयत । तत् ज्ञानं तस्य पूर्वसिद्धमित्याह—क्षत्तेति । येन ज्ञानेन पूर्वमिन्द्रियजयेन रागो निवार्यते, तेनैव शोकोऽपि निवारितः । कामादस्य विशेषमाह—उत्पतितमिति । उद्यतो हि कामस्तेन न निवारितः, परमनुत्पत्त्यर्थमेव यत्नं कृतवान्, शोकं तूत्पतितमपि निवारयामास; यतोऽयं बुधः । भगवत्स्मरणेन तस्य ज्ञानोत्पत्तेर्मनसा भगवतैवाऽयमुपदिष्टः ॥ २३ ॥

एवं भगवच्छिष्योऽपि भूत्वा, शोकं निवार्य विशेषाकारेण कथनार्थं तं पृच्छतीत्याह—

**स तं महाभागवतं व्रजन्तं कौरवर्षभ ! ।**
**विश्रम्भादभ्यधत्तेदं मुख्यं कृष्णपरिग्रहे ॥ २४ ॥**

**स तमिति** । महाभागवतत्वात् प्रार्थना । भगवदनुगृहीतो भगवानिव वक्तव्यो भवति । स तमिति पदाभ्यां भगवतैवैतत्संघट्टनं कृतमिति प्रायेणैतद्द्वारैव विशेषं वक्ष्यतीति प्रश्ने हेतुः । व्रजन्तमिति सेवादिना मनोनुरञ्जनानन्तरं प्रष्टव्यमिति पक्षो निवारितः । स्वस्याऽधिकारनिरूपणार्थं कौरवर्षभेत्युक्तम् । एकस्वामिसेवकत्वात् पूर्वस्नेहाच्च पृष्टे वक्ष्यतीति कृतो विश्रम्भो विश्वासः, स्नेहनिश्चयो वा । इदं वक्ष्यमाणमभ्यधत्त । तथापि भगवद्भक्तः कथमन्यं प्रार्थयत इत्याशङ्क्याऽऽह—मुख्यं कृष्णपरिग्रहे इति । भगवता यावन्तः सेवकाः परिगृहीताः, तत्रोद्धवो मुख्य इति, तादृशप्रार्थने न कोऽपि भक्तिविरोध इत्यर्थः ॥ २४ ॥

प्रष्टव्यं पृच्छति—

---

१स्कन्धार्थविचारेणाऽग्रे कावा बुद्धिरुत्पन्न इत्याकाङ्क्षायामाह.–एवमित्यादि.प्रबन्धः. २ मुख्यत्वेनोक्त्वा.प्र. ३ अधिकारेऽनुकूलत्वात्. प्र ४ द्वयोः फलस्य विवरणं शोके तदपगमे चेति. प्र. ५ ' सुखाय कर्माणि..., इत्यादिश्लोकद्वयोक्तसन्देहनिवृत्त्यर्थम्. प्र. ६ बुद्धिवृत्तिविशेष' प्र. ७ परीक्षितः. प्र.

## विदुर उवाच ।

ज्ञानं परं स्वात्मरहःप्रकाशं यदाह योगेश्वर ईश्वरस्ते ।
वक्तुं भवान्नोऽर्हति यद्धि विष्णोर्भृत्याः स्वभृत्यार्थकृतश्चरन्ति ॥ २५ ॥

ज्ञानं परमिति । पूर्ववद्व्याख्यानं पदत्रयस्य । एतादृशं यद्भगवांस्तुभ्यमाह, तद्भवान् नोऽस्मभ्यं वक्तुमर्हतीत्यन्वयः । ननु बहव एव सन्ति ज्ञानिनो व्यासादयः, किमिति मामेव प्रार्थयसे, इत्याशङ्क्यैतन्न कोऽपि जानातीति हेतुभूतं पदद्वयमाह—योगेश्वर ईश्वर इति । साधनतः स्वरूपतश्च यः सर्वेश्वरः, स च तुभ्यमेवमप्रकारेणोक्तवांस्तदतिदुर्लभम् । न हि व्यासादय ईश्वराः, नवाऽनिरुद्धादयो योगेश्वराः । उभयभावमवलम्ब्याऽपि यद्भगवान् तुभ्यमुपदिष्टवान्, तेनाऽवश्यमेतद्वक्तव्यमिति । तदाह—वक्तुं भवान्नोऽर्हतीति । यथा भगवान् भवान्, तथा भवानहम् । अतो यथा तादृशे योगे भगवानवक्तव्यमप्युक्तवान्, एवं त्वमपि वदेत्यर्थः । ननु भगवान् भक्तोद्धारार्थमेव यतते, स्वतन्त्रश्च, अत उपदेशं करोतु नाम । अस्माभिस्तु तत्कथं कर्तुं शक्यमित्यत आह—भृत्याः स्वभृत्यार्थकृतश्चरन्तीति । यद्यस्मात् विष्णोर्भृत्याः । स्वामिसमानधर्मत्वात्सेवकानाम् । यथा स्वामी सेवकोद्धारकः, एवं भृत्या अपि स्वभृत्यार्थमेव कृतं येषाम्, तादृशा एव भूत्वा स्वभृत्यानन्वेष्टुं चरन्ति, अन्यथा भगवदीयत्वेनैव कृतार्थाः सन्तः किमिति परिभ्रमेयुः । भगवत्स्मरणाच्चोद्धव उपदेशार्थऽमेव रक्षित इति हृदये प्रतिभातम् । अतो भगवदाज्ञयैवाऽऽगच्छन्तमप्युद्धवं स्वभृत्यार्थकृतश्चरन्तीत्युक्तवान् ॥ २५ ॥

विदुरोक्तमभिप्रायमङ्गीकृत्य, सामान्यन्यायोऽयमेवेति मत्वा, विदुरे भगवत्कृतो विशेषोऽस्तीति भगवद्वाक्यपरिपालनार्थं भिन्नप्रकारेणोपदिशति—

## उद्धव उवाच ॥

ननु ते तत्त्वसंराध्य ऋषिः कौषारवोऽन्ति मे ।
साक्षाद्भगवताऽऽदिष्टो मर्त्यलोकं जिहासता ॥ २६ ॥

ननु ते इति । तत्त्वोपदेशस्तु भगवता कृत एव, केवलम् ' आचार्यवान् पुरुषो वेद ' इति विधिपरिपालनार्थं यदि कश्चिद्गुरुः सेव्यः, तदा भगवतैव निर्दिष्टः कौषारवो मैत्रेयस्ते तव तत्त्वज्ञानार्थं संराध्य । यतः स ऋषिः, भगवदीयत्वेऽपि ऋषित्वं तत्राऽधिकमित्यर्थः । भगवता च निर्दिष्ट इति सोऽवश्यं तुभ्यं वक्ष्यति । तदाह—साक्षाद्भगवताऽऽदिष्ट इति । तादृशे समये आज्ञप्तः, सन्देहो वा पुनः प्रश्नो वा यत्र नोत्पद्यत एव । तदाह—मर्त्यलोकं जिहासतेति । अतः परमस्मिन् लोके स्थितस्तदाज्ञा चेन्न कुर्यात्सोऽपि लोकवत्त्यक्तव्य एव स्यात्, अतः सर्वांस्त्यजन् भगवांस्त्वं परिगृह्याऽऽह ' विदुर उपदेष्टव्यः ' इति । अतः सर्वथा स उपदेक्ष्यति । भगवदाज्ञा च पुनस्त्वया मयाऽपि कर्तव्या, अतस्तत्र गच्छेत्यर्थः ॥ २६ ॥

एवं विदुरमुक्त्वा स गत इति वक्तुम्, प्रसङ्गादन्या कथामुपसंहारव्याजेन कथयति—

## श्रीशुक उवाच ।

इति सह विदुरेण विश्वमूर्तेर्गुणकथया सुधयाऽऽप्लुतोरुतापः ।

## क्षणमिव पुलिने यमस्वसुस्तां समुषित औपगविर्निशां ततोऽगात् ॥२७॥

इतीति । सन्ध्याकाले यमुनातीरे दृष्ट उद्धवः प्रातःकालपर्यन्तं भगवत्कथामेव कथितवान्, यथा यथा यस्मिन्नवसरे पुष्ट्यादिलीलया स्वस्मिन् कृपां कृतवान् । एवं विदुरोऽप्युद्धवं प्रति भगवत्कृपाकथां कथयति स्म । तदाह—सह विदुरेणेति । इतीत्युपसंहारः । प्रसङ्गादन्यामपि कथां कथयन्तौ भविष्यत इत्याशङ्क्य तन्निराकरणार्थमाह—विश्वमूर्त्तेरिति । विश्वमेव मूर्त्तौ यस्य । अनन्तमूर्तिर्वा भगवान्, तेन प्रासङ्गिक्यपि कथा भगवद्विषयिकैव भवति । अतस्तस्याऽनन्तगुणस्य सर्वोत्तमत्वप्रतिपादका ये धर्मास्तत्कथयैव क्षुत्पिपासाश्रमादि-सर्वे तावा उभयोरपि निवृत्ताः । ननु कथया कथं क्षुत्पिपासादिकं निवर्त्तते, स्वाभाविकत्वाद्दोषाणाम् ; कथायाश्च तन्निवर्त्तकत्वेन लोके प्रसिद्धभावादस्वाभाविकत्वम्, अतः कथं निवर्त्तकत्वमिति चेत्तत्राऽऽह—सुधयेति । अमृतरूपा हि सा । अमृतं हि तथा भवतीति लोकसिद्धम् । सा कालकृतमपि निवर्त्तयति जरामरणादिकम्, किमुत कालाधीनकर्मस्वभावकृतनिवर्त्तकत्वम् । किञ्च, अल्पयाऽपि कथया सुधया लोका अमरा जायन्ते, अत्र तु महानमृतपूरः; येन आ समन्तात् प्लुत उरुतापो यस्य । अत एव कालोऽपि तेन न ज्ञात इत्याह—क्षणमिवेति । देशकृतोऽपि दोषस्तस्य न स्फुरितइत्याह—पुलिने यमस्वसुरिति । यमभगिनी हि कालिन्दी मकरादिसर्वदुष्टजन्तुसमाश्रिता, तस्याः पुलिने रात्रौ सर्वदोषाः सम्भवन्ति, तेऽपि न स्फुरिताः । अत एव तां निशां सम्यगुषितः । ननु निद्रया पीडितः कथं वार्त्तां कृतवांस्तत्राऽऽह—औपगविरिति । उपगोरपत्यमौपगवः, तस्याऽपत्यमौपगविः । अथवा, 'एको गोत्रे' इति निर्बन्धे बाह्वादित्वादिञेव । उप समीपे गावो यस्य स उपगुरिति, गोरक्षकत्वाद्रात्रौ जागरणाभ्यासः । तस्य चाऽयमपत्यम्, तत्स्वभाव एव । अतस्तां निशां वार्त्तयैव समुषितः । प्रातःकाले तस्मात् पुलिनात् बदरिकाश्रमं गत इत्यर्थः । भगवद्वियोगेऽपि भगवत्कथया स्थित इति सम्यगुषितः । स एव निवासः समीचीनः, यो विषयान्तराभावेन भगवत्कथयैव गच्छतीति सिद्धान्तः ॥ २७ ॥

विपर्ययबुद्धिं मायां चैकीकृत्य प्रश्नोत्तररूपेण निरूपयति—निधनमुपगतेष्वितिपद्भिः—

## राजोवाच ।

### निधनमुपगतेषु वृष्णिभोजेष्वधिरथयूथपयूथपेषु मुख्यः ।
### स तु कथमवशिष्ट उद्धवो यद्धरिरपि तत्यज आकृतिं त्र्यधीशः ॥२८॥

विपर्ययः प्रश्न एव, माया सिद्धान्तगोपने । सिद्धान्तकथनेऽप्यस्य बुद्धिः पैर्यवसानगा [1] । [1] । कथामात्रं शुको राज्ञे कथयिष्यतीति सिद्धान्ताद्, न सप्रार्थौ राज्ञा बुद्धा । न वा एते शब्दाः, किन्तु शब्दान्तरैरेतैश्च यथासम्भवं कथैव श्रुता । अतोऽस्य भगवत्स्वरूपाज्ञानादेवंप्रश्नो युक्त एव । स हि शापादेव सर्वं जातमिति मन्यते, यथा स्वतक्षकम् । ततः पृच्छति—निधनमुपगतेषु निधनं मरणं प्राप्तेषु । वृष्णिभोजेष्विति पदद्वयेन यादवेषु द्वौ बहुवचनान्तौ निर्दिष्टौ, षण्णां सात्त्विकादित्वस्थापनाय । वृष्णिभोजेषु निधनमुपगतेषु सत्स्वुद्धवः कथमवशिष्टः ? इति प्रश्नः । नन्वप्रयोजका बहव एव तिष्ठन्ति; शापश्च प्रधान-

१ स्कन्धार्थविचारेणाऽग्रिमग्रन्थे का बुद्धिरुच्यत इत्यपेक्षाया तामाहुः—विपर्ययबुद्धिमित्यादि. प्रकाशः.　२ घोऽप्यर्थे.प्र.
३ परिदृश्यमाननिधनरूपपदार्थग्राहिका. ■.　४ अथ सिद्धान्तः प्रथमस्कन्धनिबन्धादवगन्तव्यः. म.　५ अनीश्वरा
ऽभवत्वकाऽऽत्मत्वाऽऽत्मारामत्वाऽकुण्ठिताखण्डसदात्मबोधत्वामत्तत्वदेवत्वरूपा. प्र

पर, अत एव भगवद्वाक्यम्, 'स्त्रियो बालाश्च वृद्धाश्च' इति। तथाऽयमपि सन्यासी उर्वरित इति चे-त्तत्राह—अधिरथयूथपयूथपेषु मुख्य इति। अधिरथानां यूथपा सेनापतयो महामात्रतुल्या, तेषा यूथं पान्तीति महाराजा (नो) जरासन्धप्रभृतय, क्षत्रियाणा बलेनैवाऽऽधिक्यात्, तेष्वपि मुख्यो महाबल इत्यर्थ। अत स कथमवशिष्ट ? यस्मान्नाम्नैव स तादृश इत्याह—उद्धवो यादिति। यस्मादुद्धव, ऊर्ध्वं हवो यस्य। सर्वापेक्षया तस्य सङ्ग्राम उच्चैर्भवतीति। उत्सवपरत्वेऽपि क्षत्रियाणा युद्धादेवोत्सवो भवति। प्रायिकमेतदिति चेत्, तथा सति शापवैयर्थ्यापत्तेः। उद्धतपरमिति चेत्तत्राऽऽह—हरिरपीति। औद्धत्यशङ्काऽपि यत्र नाऽस्तीत्यर्थ। यादवाकृतिम्, यथा नरवानरादेरेकाब्जबीजत्वेऽपि पूर्वबीजसन्ततिपाताज्जात्यैव भेदो भवति, एवं ब्राह्मणक्षत्रिययोर्यादवायादवयोश्च। अतो यादवेषु कश्चन धर्मो वर्त्तते येन त इति ज्ञायन्ते, तन्निवृत्त्यर्थमेव शाप। अतो यादवत्वख्यापनार्थं भगवांस्तल्लक्षण स्वरूपे प्रदर्शितवान्, तदेवाऽऽकृतिशब्देनोच्यते, ता तत्यज इति स्वबुद्धि। त्र्यधीश इति गुणत्रयस्वामी, सर्वमन्यथाकर्तुं समर्थ। तादृशोऽपि शापं नाऽन्यथा कृतवानित्यर्थ ॥ २८ ॥

शुकस्तद्बुद्धिमनुसृत्यैव, भगवानिव ता बुद्धिं लोके स्थापयितुम्, प्रकारान्तरेण समाधानमाह—

## श्रीशुक उवाच।

ब्रह्मशापापदेशेन कालेनाऽमोघवाञ्छितः।
संहृत्य स्वकुलं नूनं त्यक्ष्यन् देहमचिन्तयत् ॥ २९ ॥
अस्माल्लोकादुपरते मयि ज्ञानं मदाश्रयम्।
अर्हत्युद्धव एवाऽद्धा सम्प्रत्यात्मवतां वरः॥ ३० ॥
नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः।
अतो मद्वयुनं लोकं ग्राहयन्निह तिष्ठतु ॥ ३१ ॥

ब्रह्मशापापदेशेनेति। ब्रह्मशाप इत्यपदेशमात्रम्, किन्तु स्वाज्ञाकारिणा कालेन सर्वं कुलं संहृत्य आज्ञामपीच्छयैव कृतवान्। पश्चात्स्वयमेव सर्वमेव लोक त्यजन्, बीजभावेन प्रवेश कुर्वन्, एवमचिन्तयत्। तदाह—अस्माल्लोकादिति। निश्चयेन मया अय लोकस्त्यक्तव्य। तत्र गुणपञ्चकाना कार्यस्य जातत्वात् ज्ञानकार्यमवशिष्यते। तत्तु न ग्रन्थमात्रेण भवति, प्रत्यक्षसन्देहाना तत्राऽनिराकरणात्। अतः केनचित्पुरुषेण तत्प्रवर्त्तकेन स्थातव्यम्। तत्र ममाऽनन्तगुणत्वेऽपि, प्रचार्यमाणे ज्ञाने, अह वा, उद्धवो वा प्रचारणसमर्थो भवति। यतस्तत् ज्ञान मद्विषयकमेव, न ह्यन्यो मा जानाति। अहं वा जानामि, 'भक्त्या मामभिजानाति' इति ज्ञानपूर्णभक्तो वा। अत उद्धव ज्ञानपूर्णं भक्त ज्ञात्वा स्वस्थाने त स्थापितवान्। किञ्च, तत् ज्ञानं मदाश्रयम्, मामेवाऽऽश्रित्य तिष्ठति, भगशब्दवाच्यगुणमध्यपातात्। शब्दाश्रित तु ज्ञान वाक्यश्रवणात् सर्वस्यैवाऽधिकारिणो भवति, इद तु मय्येव हृदि स्थिते मत्सङ्गेन समायाति। नारदादयोऽपि शास्त्राश्रितमेव ज्ञान समाश्रिता, इदं तु पुष्ट्यात्मकम्। अह तु स्वस्मिन् वा भक्ते वा तिष्ठामि, अतो भक्तोत्तमत्वात्

१ आश्रितैः प्रकाश २ मायाज्ञानेनो नियतव्यञ्जक म ३ राज्ञो विपर्ययबुद्धि म ४ अधिकारिबुद्धौ प्रवेश कुर्वन्। पोतस्वादयाद 'उद्भूत्'—शब्दार्थत्वाच ना०त्र लक्षणादोष म

साक्षादुद्धव एवाऽर्हति। ननु सन्ति ज्ञानिनोऽन्येपि भक्ताश्च, कोऽस्मिन् विशेष इत्याशङ्कयाऽऽह—**सम्प्रत्यात्मवतां वर इति** । सम्प्रति मज्ज्ञानधारकः कोऽपि नास्ति। अत्राऽङ्गत्रयमपेक्ष्यते; ज्ञानम्, भक्तिरजितेन्द्रियता च,। तद्वयं कस्याऽपि नास्ति, एकेन द्वयेन वा नेदं ज्ञानं तिष्ठति । अयं च कालः सर्वानेवाऽजितेन्द्रियानेव करोति, तस्मादुद्धव एव सम्प्रत्यात्मवतां वरः ॥ २९ । ३० ॥

किञ्च, **नोद्धवोऽण्वपि मन्न्यूनः**। ज्ञानाधारत्वार्थं ये गुणा अपेक्ष्यन्ते, ते मय्येव; उद्धवेऽपि सर्वे सन्ति सर्वप्रकारेण । अतोऽणुमात्रमपि मत्तो न्यूनो न भवति । तत्र प्रमाणमाह—**यद्गुणैर्नार्दित इति** । मज्ज्ञाने स एवाऽधिकारी यस्य गुणक्षोभो न भवति । गुणा हि बहुधा हृदये क्षोभमुत्पादयन्ति । किं बहुना, तत्क्षोभरहितो ब्रह्माऽपि न भवति, अतोऽयमेव गुणैर्नार्दितः । तत्र हेतुमाह—**प्रभुरिति** । प्रभुः समर्थः स्वभावनियन्ता, स एव शूर इत्युच्यते। शूर एव हि लोके प्रभुर्भवति । तथाऽस्मिन् शास्त्रे य एवं स्वभावं जयति, स एव प्रभुः। तादृशश्चोद्धवः। क्षत्रियः, शूरः, संबन्धी, पितृव्योऽपि भूत्वा नीचादपि नीचभावेनैव सेवते, अयमेव हि स्वभावजयः। इदमेव प्रभुत्वं भगवद्वगतम्। अतो **मद्वयुनं** मज्ज्ञानम्, **लोकमधिकारिणं** ग्राहयन्, भक्तिज्ञानोपदेशेन जितेन्द्रियत्वं च शिक्षयन्, इह लोके तिष्ठतु । एवमचिन्तयदिति संबन्धः ॥ ३१ ॥

ततो भगवता आज्ञप्तस्तथैव कृतवानित्याह—

**एवं त्रिलोकगुरुणा संदिष्टः शब्दयोनिना ।**
**बदर्याश्रममासाद्य हरिमीजे समाधिना ॥ ३२ ॥**

**एवं त्रिलोकगुरुणेति** । एवमेव प्रमेयं बोधयित्वा त्वं तिष्ठेत्याज्ञप्तः, '**आज्ञा गुरूणां ह्यविचारणीया**' इति ममैतदसाध्यमिति ज्ञात्वाऽपि, जगद्गुरुवाक्यं स्वशक्त्यनुसारेण कर्तव्यमिति कृतवान् । ननु भगवानेव सर्वानेवाऽनधिकारिणो ज्ञात्वा किमित्युद्धवं स्थापितवानित्याशङ्क्याऽऽह—**शब्दयोनिनेति** । स हि वेदकर्ता, सर्वाधिकारेण पदार्थान् वदति । यत्रैव तदधिकारेणाऽऽविशति, स्वयं स एवाधिकारी भवतीति, नास्याऽधिकाराऽनधिकारविचारः कश्चन । '**प्रजापतिरात्मनो वपामुदखिदत्**' इत्युपक्रम्य '**स एतं प्राजापत्यमजं तूपरमालभेत**' इत्याह । न ह्येतादृशस्तूपरः केनचिदुत्पादयितुं शक्यते । तथापि सर्वप्रकारेण क्रीडां कुर्वन्, एतत्कर्मणि यमेव यजमानं कृत्वा क्रीडितुं वाञ्छति, तमेव स्वप्रवेशेन तथा करोति। अतोऽत्रापि शब्दयोनिनोपदिष्ट इति, बदरिकाश्रमे गत्वा, भगवदुक्तार्थसिद्ध्यर्थं साधनान्तरमलभमानः, सर्वदुःखहर्तारं भगवन्तं स्वमनःक्लेशमपि निवारयिष्यतीति समाधिना तमीजे । अतो भगवदाज्ञया स्थित इति न शापो[1]देर्बाधकत्वम्, न वा साधकत्वम्[2] । यादवभावत्यागोऽपि न परमार्थतः, इदानीमपि भगवतो यादवत्वात्, तथैव भक्तानामनुभवात् । लोकप्रतीत्या[3] लीलायामपि स्वेच्छयैव तथात्वम् ॥ ३२ ॥

एवं प्रासङ्गिकं परिहृत्य प्रस्तुतमाह—

**विदुरोऽप्युद्धवाच्छ्रुत्वा कृष्णस्य परमात्मनः ।**

---

१ नार्थते क. ख. ग. च. छ. २ शापस्य न स्थितिबाधकत्वम्, कालस्य न स्थितिसाधकत्वमित्यर्थः. प्रकाशः.
३ लोकप्रतीत्येत्यस्य यथार्थमित्यनेनाऽन्वयः. प्र.

क्रीडयोपात्तदेहस्य कर्माणि श्लाघितानि च ॥ ३३ ॥
देहन्यासं च तस्यैवं धीराणां धैर्यवर्धनम् ।
अन्येषां दुष्करतमं पशूनां विक्लवात्मनाम् ॥ ३४ ॥
आत्मानं च कुरुश्रेष्ठ ! कृष्णेन मनसा धृतम् ।
ध्यायन् गते भागवते रुरोद प्रेमविह्वलः ॥ ३५ ॥
कालिन्द्याः कतिभिः सिद्ध अहोभिर्भरतर्षभ ! ।
प्रापद्यत स्वःसरितं यत्र मित्रासुतो मुनिः ॥ ३६ ॥

विदुरोऽपीति । सिद्धान्तस्याऽनुक्तत्वात् विपर्ययमायासबन्धस्तत्राऽपि सिद्ध । अतस्तच्छेषत्वेन विदुरकथाऽपि कथ्यते । अत एवाऽग्रे विदुरोऽन्यथा वक्ष्यति ' एष भगवान् कालः सर्वेषां नः समागतः ' इति । यथोद्धवो बदरिकाश्रम गतः, एव विदुरोऽपि 'प्रापद्यत स्वःसरितम्' इति सबन्धः । मध्ये स्वस्य सम्यक् ज्ञान नास्तीति ज्ञापयितुम्, भागवते उद्धवे निर्गते स्वय प्रेम्णा विह्वल सन् रुरोद । रोदनहेतवश्च भगवच्चरित्रश्रवणम्, भगवन्मोहकलीलाश्रवणम्, भक्तेषु भगवत्कृपाश्रवण च । सात्त्विकमेतत् । आद्य राजसम् । अतस्त्रिभिरपि त्रिविधप्रेमोद्गमात् रोदनम् । उद्धवमुखाच्छ्रुतत्वात् नाऽन्यथाभावशङ्का । लोकप्रसिद्ध्यनुसारेण च पदार्थान्निरूपयति—कृष्णस्येति । चरित्राणा भक्तिजनकत्वाय स्वरूपमाहात्म्यमाह—परमात्मन इति । विदुराधिकारेणैवमुक्तम्, स्मृत्यनुसारेणैव तस्य भगवत्स्वरूपज्ञानात् । परमात्मा पुरुषोत्तमः । आत्मा भूत्वा स एव परम । चिन्तामण्यादेलोकप्रतीत्या परमत्वेऽपि नाऽऽत्मत्वम्, न वा जीवस्य परमत्वम्; अत उभयप्रकारेण भगवानेव ज्ञायत इति तथोक्तम् । क्रीडया बालकनटवत् कपटमानुषवेष कृतवान्, तदेवोपात्तदेहत्वेनोच्यते । तादृशस्य सर्वैरेव श्लाघितानि कर्माणि भूभारहरणादीनि, गोवर्द्धनोद्धरणादीनि वा । चकारात् गुप्तान्यपि, अद्भुतचरित्रं गोपिकारमणं वा ॥ ३३ ॥

देहन्यासमिति । देहस्य न्यास कारणे स्थापनम्, शब्दच्छलेन नटवत् त्यागो वा । एवमिति श्रुतप्रकारेण । धीराणां वैराग्यानुसन्धानानाम् । धैर्यं साहसम्, सर्वपरित्यागेनैव योगेनैवैतत्त्याज्यमिति । स्वरूपे गत इति फलप्रदर्शनादवान्तरक्लेशो नाऽनुसन्धेय इति धैर्यवर्द्धनम् । अन्येषामविवेकिना देहात्ममानिनां दुष्करतमम्, न ह्येवं कश्चित् कर्तुं शक्त । तत्रापि पशूनामप्रिमहिताहितविवेकानुसन्धानरहितानाम् । तत्रापि विक्लवात्मनाम्, विक्लव आत्मा येषाम्, वैक्लव्यमेव येषामन्त करणधर्मः सहजः । मौर्ख्येणाऽपि येषां साहसाभावस्ते पशुभ्योऽपि विशिष्यन्ते ॥ ३४ ॥

किञ्च, आत्मानं च भगवता मनसा धृतमिति श्रुत्वा । कुरुश्रेष्ठेति संबोधन तत्पूर्वजे कृतानि पुण्यान्येवं वर्शायेषूपतिष्ठन्त इति ज्ञापनार्थम् । चकारादुपदेशनार्थं मैत्रेयाज्ञापनम् । न केवल स्मरणमात्रम्, किन्तु मनसि स्थापितम् । 'ये यथा मां प्रपद्यन्ते ' इति न्यायव्यतिरेकेणाऽपि बहिर्मुखेऽपि भक्ते पलायमानमपि मनसा धृतम् । तादृशं कृपापात्रमात्मान ध्यायन्, गुणान्तरकथनाभावात् गते भागवते रुरोद । प्रेम्णा च विह्वलो जात', मूर्च्छितोऽभूदित्यर्थ ॥ ३५ ॥

---

१ विपर्ययशेषत्वेन. प्रपाठ २ या श्लोके ५.

ततो मूर्च्छायां भगवान् समागत्य सर्वमुपदिश्य गत इति सिद्ध एव मूत्वा, ज्ञानादिसम्पन्नो मूर्च्छांतताय, कालिन्द्यास्तीरात् निधिस्थानात् प्राप्तपुरुपार्थः कतिभिरेवाऽहोभिः स्वःसरितं प्रापद्यत । अयं भावो मानुषाणामेव, न तु देवानाम । देवत्वप्रापिका च गङ्गा, अतोऽत्र विद्यमानाऽपि स्वःसरिदेव । तर्षभेति सम्बोधनं फलपर्यवसायिविवेकस्य प्राप्तत्वान्न तस्य मायामोह इति सूचकम् । अहोभिः कतिभिरिति प्रतिबन्धककालापगमार्थमुक्तम् । प्रकर्षेणाऽपद्यतेति मध्ये क्लेशाभाव उक्तः । तत्र गमने हेतुमाहत्र मित्रासुतो मुनिरिति । जगन्मित्रायाः पुत्रोऽपि तादृशः, स्वस्वभावादेव सर्वान् कृतार्थान् करिष्यतीति । तस्याऽन्यत्रगमनशङ्कां वारयति—मुनिरिति । स हि मननशीलः, जानाति च विदुरः समायास्यतीति । एतादृश एव देशो वक्ता च भगवत्कथायां फलसाधक इति ज्ञापितम् ॥ ३६ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां
तृतीयस्कन्धे चतुर्थाध्यायविवरणम् ।

---

# पञ्चमाध्यायविवरणम् ॥

चतुर्णां सर्ग आद्योऽत्र ह्यधिकारे निरूपितः ।
पुरुषत्वाय कृष्णस्य चतुर्भिः सर्ग ईर्यते ॥ १ ॥
स एव भगवल्लीलां श्रोतुमर्हति तत्त्वतः ।
अन्यथाऽन्यो हि मनुते ह्यधिकारस्ततो हितः ॥ २ ॥
कृष्णार्थसृष्टौ भूतानि जातान्येवेति निश्चयः ।
वेदे पञ्चभिरेवाऽस्य पुरुषत्वकथोदिता ॥ ३ ॥
त एव बहुधा व्यस्तास्तस्मात्तत्त्वानि तानि वै ।
भोग शरीर एवेति मात्रास्तत्र निरूपिताः ॥ ४ ॥
नानाविधानि शास्त्राणि तैः सन्देहविनिश्चयौ ।
मनो भगवतो युक्तं तेनैवेन्द्रियसंकथा ॥ ५ ॥
बुद्धिर्भगवतो ब्रह्मा तत्कार्यं च निरूप्यते ।
स्तुतिर्प्रसादौ कार्याणां भूतानीत्येष निर्णयः ॥ ६ ॥

---

१ अत्यन्तमावश्यक. प्रकारः. २ तथा च भूतत्वमत्र जातत्वेनैव विवक्षितम्, नतु पृथिव्याद्यन्यतमत्वेनेत्यर्थः प्र. ३ आकाशादिभिः प्र ४ त्रयोविंशतितत्त्वरूपेण. प्र. ५ ब्रह्माण्डात्मके. प्र. ६ अध्याये प्र ७ पदार्थाः (इन्द्रिय). प्र. ८ अत्र शास्त्राण्युद्भूयानि, मनो विधेयम्; तयो युक्ति- सन्देहनिश्चयाविति. प्र. ९ उभयेन्द्रियप्रेरकेण मनसैव. प्र. १० 'क एष योऽसौ...' इत्याद्युक्तालोचनरूप बुद्धिकार्यम् प्र. ११नवमाध्यायोक्तौ प्र. १२ ब्रह्माण्डान्तर्वर्तिव्यष्टीनाम्. प्र. १३ सूक्ष्मेक्षिक्रया निर्द्धार. प्र.

ततस्तेषां शरीराणि मात्रा एव हरेर्यथा ।
काल एवेन्द्रियाण्येषां तत्राऽऽसक्तो म्रियेत वै ॥ ७ ॥
बुद्धिस्तेषां महात्मानो वेदा मन्वादयस्तथा ।
तैरुक्तैरेव यद्युक्तमुक्तं तेषां हिताय तत् ॥ ८ ॥
कार्योपयोगितत्त्वानां पञ्चमे विनिरूप्यते ।
उत्पत्तिर्योद्देशैः कार्यं तद्भावश्च निरूप्यते ॥ ९ ॥
प्रश्नाभिनन्दने चाङ्गं सर्वत्रैव हरेः कृतौ ।
अतोऽत्र भगवत्प्रश्नः पड्विधो विनिरूप्यते ॥
वैराग्यादिः, सृष्टिमार्गे विपरीतप्रवेशतः ॥ १० ॥

तत्र प्रथमं तयोः कथार्थं संबन्धमाह—

## श्रीशुक उवाच

**द्वारि द्युनद्या ऋषभः कुरूणां मैत्रेयमासीनमगाधबोधम् ।**
**क्षत्तोपसृत्याऽच्युतभक्तिशुद्धः पप्रच्छ सौशील्यगुणाभितृप्तः ॥ १ ॥**

द्वारीति । सर्वेषां देवत्वसिद्ध्यर्थं या देवनदी प्रवृत्ता, सा प्रथमत एव समीचीनं कार्यं करिष्यतीति भगवदाज्ञया मैत्रेयस्तत्रैव स्थितः। गङ्गाद्वारि ब्रह्मकुण्ड एवेति मे मतिः, अन्तर्वेद्यां भगवत्सान्निध्यात्। कुरूणामृषभ इति महानुद्योगः फलपर्यवसायी तस्य लक्ष्यते । मैत्रेयो हितकर्ता । आसीनोऽव्यग्रः । अगाधो बोधो यस्येति स्वबुद्धेस्तत्र निमज्जनं संभविष्यतीति सूचितम्, अन्यथा न सर्वसन्देहनिवृत्तिः । क्षत्ता प्रथमत एव जितेन्द्रियो विचक्षणश्च । अच्युता या अच्युते भक्तिः, तया शापाधिकारादिर्बीजपातयोनिदोषादिसर्वाशुद्धिनिवृत्त्या शुद्धः । उपसृत्य समीपे गत्वा, विध्यनुसारेण वा । मैत्रेयस्याऽऽर्जवकरुणादयः सौशील्यगुणास्तैरभितृप्तः । कथं वक्ष्यति नवेति सन्देहरूपा क्षुद् गुणैर्निवृत्तेति तादृशो भूत्वा पप्रच्छेत्यर्थः ॥ १ ॥

षट्प्रश्नेषु वैराग्यार्थं क उपायः कर्तव्यः ? इति प्रश्नं कुर्वन् स्वभावतो वैराग्यहेतोरप्रयोजकत्वमाह—

## विदुर उवाच ।

**सुखाय कर्माणि करोति लोको न तैः सुखं चाऽन्यदुपारमं वा ।**
**विन्देत भूयस्तत एव दुःखं यदत्र युक्तं भगवान् वदेन्नः ॥ २ ॥**

सुखाय कर्माणीति । फलं लोके द्विविधम्, दुःखाभावः सुखं वा । दुःखस्य सुखप्रतिबन्धकत्वेन वा दुःखाभावः सुख एव हेतुः । अतो लोकः सुखार्थमेव सर्वं व्यापारं करोति, तेन च पुनः कदापि सुखं न प्राप्नोति । लोक इति प्रमाणनिर्देशः । चकारात् पूर्वसुखमपि गच्छति । किञ्च । अन्यदुपारमं वा दुःखा-

१ यद्यस्मात् तत्राप्याप उक्तैर्वेदादिभिः 'नैतत्पूर्वैः कृतं कर्म' इत्यादिकम् तेषां कार्याणां हिताय युक्तमुक्तम्, ततस्माद्वेदोक्ते महात्मान एव बुद्धिरूपा इत्यर्थः. प्रकाशः. २ विराजः शरीरम्. प्र. ३ तादृशसामर्थ्यम्. प्र. ४ भगवद्गुणानां विपरीतप्रवेशात् । विरक्तो जिज्ञासते, ज्ञानी श्रयते, खिन्नो यशः श्रद्धत्ते, यशस्यतृप्तो वीर्याणि जिज्ञासते, ज्ञातवीर्यस्तमीश्वरत्वेनाऽनुसन्धत्ते. प्र. ५ 'उपारमम्' इत्यत्र वर्णागमः. प्र. ६ वाशब्दावाच्यर्थौ. प्र. ७ दुःखाभाव इत्यर्थः, निष्क्रमाशिष्यम् प्र.

भावो वा न भवति, प्रतिबन्धकाभाव एव क्वचित् साधनपर्यवसानस्य दृष्टत्वात् । तत्परमपि न जातम्, तथा सति सहजं वा सुखं भवेत् । किञ्च, प्रत्युत तैरेव दुःखं भवति । भूयः - सहजादप्यधिकम् । तत एवेति साधनान्तरनिवृत्तिः, साधनान्तरस्याऽदृष्टत्वात् । 'तदुदितः स हि यो यदनन्तरः' इति सुखसाधनस्यैव दुःखसाधकत्वम् । साधनताज्ञानं-त्वन्वयपरम्परया । अनिवृत्तिः स्वाग्रहात्, अस्मदीयैस्तथैव कृतमिति । भूयो व्यभिचारदर्शनमपि परम्पराश्रद्धा बाधते । एतादृशेऽर्थे फलविपर्ययं दृष्ट्वाऽपि यदि न निवर्तन्ते, तदा वाक्यमात्रेण कथं निवर्तेरन् ? तस्माद्वैराग्यार्थं किं कर्तव्यमिति प्रश्नः । अथवा, येनैवाऽव्यभिचारि सुखं भवति, तद्वा वक्तव्यमिति लोकादतिरिक्तप्रमाणत्वं तस्याऽऽह—भगवन्निति । अस्माकं तु भगवदुक्तमेव प्रमाणम्, अतोऽस्माभिः स्वार्थमेव पृच्छ्यत इति नाऽप्रकृतत्वम् । वदेदिति प्रार्थनायाम् ॥ २ ॥

नन्वस्माकं भगवदाज्ञा तत्त्वोपदेशार्थं, न त्वेतादृशार्थकथनार्थं इत्याशङ्क्याऽऽह—

**जनस्य कृष्णाद्विमुखस्य दैवादधर्मशीलस्य सुदुःखितस्य ।**
**अनुग्रहायेह चरन्ति नूनं भूतानि भव्यानि जनार्दनस्य ॥ ३ ॥**

जनस्य कृष्णाद्विमुखस्येति । भवत्सु द्वयमस्ति, भगवतः सामान्याज्ञा विशेषाज्ञा चेति । इदं सामान्ययाऽऽज्ञया वक्तव्यम्; यतो भगवान् भवत एतदर्थमेव सृजति, अन्यथा भगवदीया नोत्पद्येरन्, स्वार्थं तेषां प्रयोजनाभावात् । अत एव तेषु भूतवद्प्रयोगः, जातानीत्यर्थः । शब्दच्छलेन ते लमाः स्वसमानं कुर्वन्तीति ज्ञाप्यते । यदि लोकानां तथा भाग्यमपि न भवति, तथापि त एव भाग्यरूपा भूत्वा तान् स्वसमानान् कुर्वन्तीति भव्यानीत्युक्तम् । अतो लोकोपकारार्थं समागतानां भवतामेतदावश्यकमिति । जनस्य प्राणिमात्रस्य । जन्मत एव ज्ञायते भगवद्विमुखोऽयमिति, अन्यथा जन्मैव न स्यात् । प्रवृत्त्याचाऽवसीयेत । कृष्णादिति मूलसच्चिदानन्दवैमुख्यं महदाश्चर्यमिति । तथापि विमुखस्य, जननानन्तरमपि दैवात् प्राचीनासुरकर्मणो विमुखस्य, दैवादेवाऽधर्मशीलस्य, स्वभावत एवाऽधर्मो रोचत इति । न हि स्वाभाविकं केनचिन्निवर्तयितुं शक्यते । अत एव सुदुःखितस्य, अन्यथा तदनुग्रहमपि न मन्येत । इहाऽस्मिन् लोके न ततोऽन्यो दुःखनिवारणहेतुः, नूनं निश्चितम् । सन्देहाभाव उभयत्र । भगवदीयैरेव दुःखाभावो नाऽन्यैरिति। तत्र हेतुर्जनार्दनस्येति । जनां सर्वलोकजननीमर्दयतीति, जनाधा वा अर्दनं यस्मादिति । स हि मूलजननं निवारयति, तदीयाश्च तत्साधकाः ॥ ३ ॥

अस्योत्तरं 'भगवद्भजनं कर्तव्यम्' 'तदव्यभिचारिसुखहेतुर्भवतीति यदि, तदा, तत्रोपायं कथयेति पृच्छति—

**तत्साधुवर्याऽऽदिश वर्त्म शं नः संराधितो भगवान् येन पुंसाम् ।**
**हृदि स्थितो यच्छति भक्तिपूते ज्ञानं सतत्त्वाधिगमं पुराणम् ॥ ४ ॥**

तत्साधुवर्येति । तत्तदा । यदि भगवद्भजनेनैव प्राणी कृतार्थो भवति, तदा तत्र वर्त्माऽऽदिश । भगवत्प्रेरणया, भगवदाज्ञारूपवेदानुसारेण वा क्रियमाणेऽपि भगवान्न परितुष्यति, दुःखस्यानिवृत्तत्वात् । अतो येन मार्गेण सम्यगाराधितो भगवान् ज्ञानं प्रयच्छति, तमुपायं स्थिरं प्रहितं सर्वलोकप्रसिद्धं कथयेति प्रश्नः ।

१ यदि दुःख न प्राप्नुयात्, सुखजेऽसजमद्व्याप्तः सत्सुखजन्मादिरूपं भगवदनुपदमपि नाऽनुसंदध्यादित्यर्थः. प्र.
२ अत्र हेतुरपरितोषज्ञापको ज्ञेयः. प्र.　३ प्रकर्षेण हितम्. प्र.

कल्याणरूपमिति साधनदशायामपि सुखरूपत्वम्, यथा विमानयानम् । गूढस्याऽत्यभीष्टस्यापि ज्ञापने हेतु - साधुवर्येति सबोधनम् । हितमात्र साधुरपि वदति, एतादृश तु भगवद्भक्तो यो ब्रह्मवित् स एव वदति, स हि स्वात्मानमिव सर्व मन्यते। येन मार्गेण प्रथम भगवान् संराधितो भवति । भगवत्त्वाच्च सराधन कठिनम्, '**किमासनं ते गरुडासनाय**' इति वाक्यात् स्वस्य चाऽमर्यादत्वादिगुणवैशिष्ट्यात् । पुसामिति बहूना काकतालीयवदुपायो न मार्गो भवति । किञ्च, भगवानन्तर्यामी सर्वानेव नानाप्रकारेण प्रेरयति, स्वस्वभावात्, जीवस्वभावमनुसृत्य वा। उभयथाऽपि प्रेर्यधर्माविष्टो भवति । तत्र यदि पूर्ववदेव स प्रेरयेत्, तदा कृतमपि भजन व्यर्थ स्यात् । अतस्तादृश उपायो वक्तव्य , येन स एवाऽन्तर्यामी भक्त्या पूतो भवति। पूत. पवित्र एव प्रेरयति । भक्त्या पूतो भक्तावेव प्रेरयेत् । स हि स्वभावतः प्रवाहनिर्वाहार्थमेव नियुक्तस्तथा प्रेरयति यथा प्रवाह सिध्यति । अय तस्य सहजो धर्मः । तथा करणात् अपूत इव लोके प्रसिद्धः। तस्यैव च बहीरूप कालः । यथैकेन हस्तेन क्रियते, अपरेण च मार्यते, तत्रोभयो पावनार्थ मार्गद्वय सृष्टम्। वेदः कालस्य, अन्तर्यामिणो भक्तिः । तन्मार्गेण प्रविष्ट. सोमवत्पूतो भवति । वेदेन पूत कालो न मारयति, भक्त्या पूतोऽन्तर्यामी नाऽन्यथा प्रेरयति । इद च पावन नाऽशुद्धस्य शुद्धिजनकम्, किन्तु सोमवत् तन्मार्गनिर्गमनम् । अन्योन्याश्रयाच्चाऽयमर्थो न सिध्यतीति प्रश्नः । गुरूपदेशाच्चाऽयमर्थो न सेत्स्यतीत्याह—हृदि स्थित इति । स हि हृदये स्थित. स्वेच्छया यदि प्रेरयेत्, किं बहिरुपदेशेन। अतो भगवता यदुक्तम् 'इदम्' विदुराय ज्ञान वक्तव्यमिति, तदन्तर्यामिसमाधानव्यतिरेकेण न भविष्यतीति, तत्समाधानार्थं प्रथमतो भगवदाराधना, ततो भगवत्सन्तोष , ततो भगवता दत्तस्य प्रेम्ण प्राप्ति , ततः प्रेमभक्त्या तस्यैवान्तर्यामिणो ज्ञानार्थ प्रेरणम् । पूर्वसिद्धनानाविधज्ञानाना विद्यमानत्वात्तदस्मरणपूर्वक यथा ज्ञानमुदेति वाक्यात्, तथा प्रेरण पूर्वसिद्धमिति तज्जनित ज्ञान न कार्य समर्पयति । अत एव महताऽपि साधनेन वाक्याज्ज्ञान नोदेति । यदा पुन स एवाऽन्तर्यामी स्वस्यैव गुणभूत ज्ञान तस्मै प्रयच्छति, तदा पवित्रमिव वाक्यं ज्ञानहेतुर्भवति । तत ज्ञानं त्रिविधम् । शारीरात्मनो ब्रह्मत्वेनाऽनुभवः, साङ्ख्य सर्वतत्त्वाविवेचनात्मकम्, भगवतश्चाशेषविशेषप्रकारेण स्वरूपबोधकम् । तत्त्रिविधमपि ज्ञान साधनसाध्यफलभूतभक्त्या पूतो भगवान् प्रयच्छतीति । ज्ञान ब्रह्मभावः, तच्च सर्वतत्त्वाना ज्ञानसहितम् । तत्राऽपि तत्त्वाना मूलभूतस्य सर्वभावज्ञान पुराणम् ॥ ४ ॥

नन्वेतन्निरन्तर भगवद्गुणश्रवणाद्भवतीति चेत्तत्राऽऽह—

**करोति कर्माणि कृतावतारो यान्यात्मतन्त्रो भगवांस्त्र्यधीशः ।**
**यथा ससर्जाऽग्र इदं निरीहः संस्थाप्य वृत्तिं जगतो विधत्ते ॥ ५ ॥**

करोति कर्माणीति । अय च तृतीयः प्रश्न. । भगवतो हीय श्रीः। अत्र सप्तपदार्था पृच्छ्यन्ते, सप्तविभक्तिसिद्ध्यर्थम् । भगवतोऽवतारकर्माणि, जगदुत्पत्तिस्थितिप्रलयास्त्रय , प्रवेशनानात्वम्, जगत. प्रकारा इति । सप्ताना पूर्वपूर्वसाधकत्वम् । तत्र भगवदवतारकर्माणि किमर्थमित्याकाङ्क्षायाम्, मोक्षार्थमिति चेत् ; उत्पत्तिर्व्यर्था न भवेत् किमिति सन्देहः । अथ यदि तदर्थमेवोत्पादनम्, तदाऽवतारकर्माणि व्यर्थानि,

१यथा सोमो यज्ञाविशिष्टो वैदिकेन मार्गेण भक्षित पात्रसाधकत्वात् पूतो भवति, तद्वदित्यर्थ प्रकाश . २ प्रमाणम्. प ३ जीवस्वभावेनाविद्यमान , व्युत्क्रमेण तृतीयस्य ध्यानयस्य गुणस्य प्रश्न इत्यर्थ प्र ४ पृच्छ्यमाना प्र ५ तत्प्रभेदन स्वरूपादिभेदा द्विविधा प्रकारा प्र ६ उत्पन्ने संसारार्थत्वादवतारकर्मभिर्मोक्ष ना भवति, कथमुभयसामञ्जस्यमिति प्रश्नाशय प्र

उभयोरेकत्वात्, अमोहकत्वेनैव च कार्यसिद्धेः। तस्मादुत्पादनलीलाऽपि ज्ञातव्या। उत्पादनमात्रेण च कार्यासिद्धेर्योग्यतासिद्ध्यर्थं तावत्कालं स्थितिरपि मृग्या। यदि भगवांस्तत्रैवाशयेत्, तदा विहितकरणादिनाऽपि कार्यं सेत्स्यतीति नाऽवतारप्रयोजनम्। किञ्च, यदि बहुधाऽयं भगवान्न भवेत्, तदाऽवतारेण सर्वमुक्तिरेव भवेत्, अतो भिन्नस्वभावेन प्रेरणान्नानाभावाच्च सर्वा व्यवस्था सम्पद्येत। लोकाश्चेद्भगवत्कृता एकविधाःस्युः, ब्रह्माण्डाद्वा निर्गमनं न भवेत्, तदाऽप्यवतारकर्माणि भिन्नानि। ऐकात्म्ये वा यद्येकस्य साधनमन्यस्य भवेत्, तथापि व्यर्थं स्यादिति भेदनिर्माणं च ज्ञातव्यं स्यात्। अतः सप्तानामेकः प्रश्नः, सप्ताङ्गत्वाच्छ्रियः॥ कृतावतारो भगवान् यानि कर्माणि करोति। यानीति प्रसिद्धिरुक्ता। बहूनि च वक्तव्यानि, तेषां कर्मत्वं च वक्तव्यम्। तानि च भगवत्कर्माणि भवन्ति न भवन्तीति, भगवतः कर्तव्यमकर्तव्यं वा। दोषत्रयाभावस्तु मयैव ज्ञायत इति विशेषणत्रयमाह। भगवान् कालाधीनतया न किञ्चित्करोति, कालार्थं वा। तदाह—आत्मतन्त्र इति। स्वतन्त्रो न कालाधीन इत्यर्थः। कर्मस्वभावयोः स्वमध्यपातात् भिन्नतया निवारयति—भगवानिति। कर्माधीनता व्यावर्तिता, न हि पूर्णज्ञानवतः कर्माणि बन्धकानि भवन्ति। त्र्यधीश इति त्रिगुणनियन्ता, अतो न स्वभावाधीनः। तस्मादेतादृशेन यानि कर्माणि कृतानि, न स्वभावात्, नाऽदृष्टवशः, न कालप्रेरणात्, तानि कर्माण्यलौकिकान्येव भवन्तीति श्रोतव्यानि भवन्ति। किञ्च, यथा इदं ससर्ज। अग्रे सृष्टेः पूर्वम्। एको दोषाभावस्तु ज्ञायते, यदयं चेष्टया न करोतीति, मनश्चेष्टाऽपि निवारिता, इच्छायां सन्देहः, प्रयत्नो नास्तीति निश्चयः, ज्ञानं चाऽस्तीति। किञ्च, सर्वमेवोत्पादितं सम्यक् स्थापयित्वा जगतो वृत्तिं विधत्ते, सर्वेषामेव जीविकां प्रयच्छति। अत्र दूषणाद्यभावो न श्रुतो, न ज्ञायते; प्राणिनामन्योन्याहारात्॥ ६॥

किञ्च—

**यथा किल स्वे ख इदं निवेश्य शेते गुहायां स निवृत्तवृत्तिः।**
**योगेश्वराधीश्वर एक एतदनुप्रविष्टो बहुधा यथाऽऽसीत्॥ ६॥**

यथेति। यथा वा इदं सर्वं संहृत्य, स्वे स्वकीये हृदयाकाशे इदं सर्वं निवेश्य, स्वयमपि गुहायां गुप्तस्थाने किल शेते। अत्रैकस्य दूषणस्य परिहारो ज्ञायते। निवृत्ता वृत्तयो यस्य, जाग्रत्स्वप्नसुषुप्तिवृत्तयो यत्र न सन्तीति। का वा गुहा, को वा संगोप्यः? इति न जानीमः। हृदये च पुनः सर्वं निवेशितवान्। किञ्च, योगेश्वराणामधीश्वरः। एक एव एतत्सर्वं सूक्ष्ममनुप्रविष्टो यथा बहुधा आसीत्, तद्वक्तव्यम्। योगेन नानारूपाणि योगी करोति। ते ह्युपायेन स्वयोगं व्यर्थीकृत्य तथा भवन्ति, यथा कर्मणा। परं कर्मणा क्रमेण भवन्ति, योगेन त्वेकदैव भवन्ति। अयं तु तेषामपीश्वरः। अधिशब्देन च योगैश्वर्ये आधिक्ये निरूपिते भवतः। अनेन बहुधा भवनं सम्भवतीत्युक्तम्। परमखण्डः, समुदायेन वा, खण्डशो वा भवतीति सन्देहः॥ ६॥

नन्वेतादृशं चरित्रं भवता बहुधा श्रुतं भारतादौ, किमिति पुनः पृच्छ्यत इत्याशङ्क्याऽऽह—

---

१ जीवोत्पत्त्यवतारकर्मणोरेकेनैव कार्यसिद्धावितरवैयर्थ्यादित्यर्थः प्रकाशः. २ तथा चाऽवतारकर्माणि व्यर्थानीत्यर्थः. प्र. ३ परस्पराविरोधेन ज्ञातव्या प्र. ४ स्थितो मोहं नाशयेत् तन्ननाशयेदिति पाठे त मोहं न नाशयेदित्यर्थः. प्र. ५ अतोऽन्तर्यामिस्वभावभेदोऽपि सहेतुको ज्ञातव्य इत्यर्थः. प्र. ६ नस्यारंतिशेषः. प्र ७ श्रीमद्वासुदेवस्य माया ज्ञेया. प्र. ८ तथ्यस्त्वावश्यकार्थे. प्र ९ विविधाया जीविकायाम् प्र. १० स्वस्वरूपमज्ञापनीयः. प्र.

**क्रीडन् विधत्ते द्विजगोसुराणां क्षेमाय कर्माण्यवतारभेदैः ।**
**मनो न तृप्यत्यपि शृण्वतां नः सुश्लोकमौलेश्चरितामृतानि ॥ ७ ॥**

क्रीडन् विधत्त इति । द्विजगोसुराणां क्षेमायाऽवतारभेदैः क्रीडन् कर्माणि विधत्ते । किमतो यद्येवमत आह—तानि कर्माणि शृण्वतामपि मनो न तृप्यति । अन्येषां तृप्तावपि नो मनो न तृप्यति । तत्र हेतुः—सुश्लोकमौलेश्चरितामृतानीति । एकं कर्तृविशेषणमपरं कर्मणाम् । सुश्लोका उत्तमा कीर्तिर्मौलौ यस्य । यदा भगवान् दृश्यते, तदा दूरादेव तस्य कीर्तिर्दृश्यते, यथा दूरात् पुरुषस्य मुकुटं दृश्यते । अतो भगवदिच्छायां निवृत्तायां परं कीर्तीच्छा निवर्तते । भगवन्तं मन्यमानः कथं शिरोभूषणान्निवर्तेत ? किञ्च, एतानि कर्माण्यमृतरूपाणि चरितामृतानि । कर्माण्येव चरितानि । चरितानाममृतत्वमनुभवसिद्धम्, क्षुत्पिपासादिनिवारकत्वेन मरणनिवर्तकत्वं च । चरितमिति प्रयत्नमात्रम् । भक्षणवाचकत्वेन वा विरोधेनामृतत्वमद्भुतकर्मत्वेन । कर्माणि च पुनश्चरितेन कृत्वैव अमृतानि, उत्पन्नान्येव नित्यानीति । प्रयत्नमात्रविषयत्वेन तेषां नित्यत्वे, श्रवणादि प्रयत्नविषयाणामपि नित्यत्वात्, सर्वेन्द्रियव्यापारपूर्णत्वेन ऐहिकामुष्मिकदुःखनिवारकाणि भवन्ति, तदोभयामृतत्वं संपद्यते । द्विजगोसुराणामिति मन्त्रा हविर्देवताश्च यागे प्रधानभूतास्त्रयो निर्दिष्टाः, तेषां क्षेमाय कर्मकरणम् । अनेन भगवत्कर्माणि धर्मरूपाणीत्युक्तम् । ततश्च तानि मनसा भावितानि मनोयज्ञा भवन्ति, कीर्तितानि वाग्यज्ञाः, श्रुतानि ज्ञानयज्ञा इति । अवतारभेदैरिति नानाविधैरवतारैः । भेदग्रहणेन लोके तदवतारत्वेन ज्ञातुमशक्यमिति गम्यते । मत्स्याद्यवताराविसदृशत्वात् भेदा इत्युच्यन्ते । अथवा, ज्ञानक्रियाविशिष्टभेदेन त्रयोऽवताराः तेषां भेदाः। ज्ञानकलावतारा व्यासादयः, क्रियाफलावतारा वराहादयः, उभयं कृष्णः । अवताराश्च भेदाश्चेति वा । तदा भेदा आवेशिनः । अवतारैरावेशैश्च यज्ञानां परिपालनं क्रियत इति करणे रक्षा हेतुः, अतएव चरितामृतत्वम् । अतश्चरित्राणि वक्तव्यान्येवेत्यर्थः ॥ ७ ॥

किञ्च,

**यैस्तत्त्वभेदैरधिलोकनाथो लोकानलोकान् सहलोकपालान् ।**
**अचीक्लृपद्यत्र हि सर्वसत्त्वनिकायभेदोऽधिकृतः प्रतीतः ॥ ८ ॥**

यैरिति । यैस्तत्त्वभेदैर्लोकानलोकांश्च लोकपालसहितान् अचीक्लृपत् तानि कथयेत्याह । कति तत्त्वानि लोकसर्गे व्यापृतानि, कति चाऽलोके । यदि सर्वैरेव तत्त्वैः सर्व एव कृताः स्युः, तदा लोकालोकादिभेदो न स्यात् । लोक्यत इति लोकः, प्रत्यक्षयोग्यः । लोकालोकात्परभागास्तु न प्रत्यक्षयोग्याः । अस्यायं भावः । स्वभावत एव लोकरूपा अलोकरूपाश्च लोकाः, न तु तेजसा प्रकाशिताः, मनुष्याणामेव तदपेक्षणात् । तदभावो वा किंमूलकः ? अत्रैव हि मेघकालसूर्यादय उत्पद्यन्ते, ते चाऽन्यत्र कुतो न भवन्ति ? अतोऽलोकाः केचन स्वत एवेति । तत्रापि च लोकपालाः सन्ति । तत्र चक्षुषा विषयग्रहणे आलोकापेक्षाभावः, चक्षुरभावो वा । अथवा, लोकान् स्वर्गादीन्, अलोकान् लोकरहितान् उज्जटान्

१ मरणनिवर्तकत्वेन च. ग. 'क्षुत् खलु वै मनुष्यस्य भ्रातृव्य.' इति श्रुत. क्षुधस्तथात्वात्तन्निवारकत्वेन तथात्वमित्यर्थः प्रकाशः. २चरित्रे मरणनिवारकत्वस्याऽनुभवसिद्धत्वाभावात्ऽसमाधानमभिप्रेत्य पक्षान्तरमाहुः—भक्षणेत्यादि । धर्माणां श्रवणासेवनत्वेनाऽन्यास्वादनेऽपि न तेषां हानिसंभावनेति तथेत्यर्थः. प्र. ३ मूले 'अधिलोकनाथपद लोकनाथाधिपतित्वबोधकम्. प्र. ४ मनुष्यतुल्यचक्षुष्काणाम्, प्र. ५ उलूकादिषु आलोकापेक्षाऽभावः प्र. ६ अलोकपदेन पिपीलिकादिसमहाधमाहुः—चक्षुरभावो वेति प्र.

देशान्, लोकेऽपि लोकपाल सहितांल्लोकानित्यर्थः । यत्राऽक्लीकृपत्, तत्कथयेति प्रश्नः । ननु किमिति त्रयो भेदा गणिताः ? लोका राजसाः, अलोकास्तामसाः, लोकपालाः सात्त्विका इति । तत्राऽऽह—सर्वसत्त्वनिकायभेदोऽधिकृतः प्रतीतश्च । सर्वाणि च सत्त्वानि जीवयोनिभेदाः, तेषां निकायः समूहः, तस्य भेदः सहानऽवस्थानम् । समूहा अपि भिन्नास्तिष्ठन्तीति । न हि पिपीलिकाः पक्षिणश्च एकत्र भवन्ति । सोऽप्यधिकृतः । तत्राप्यधिकारिणः सन्ति, अन्यथा उपदिकानां मुखे जलम्, काकानामेकाक्षित्वम्, पशूनां च तूपरातूपरभेदो न स्यात् । किञ्च, प्रतीतोऽप्ययं सर्वोऽपि भेदः, यत्र प्रतीयन्ते सर्वे भेदाः, तत्राऽप्रतीताः कियन्तो वा भवन्तीति । युक्त एव महतो निर्माणे तत्त्वभेद इति हिशब्दार्थः । अनेन ब्रह्माण्डनिर्माणं सहेतुकं वक्तव्यमिति प्रश्नः ॥ ८ ॥

किञ्च,

**येन प्रजानामुत आत्मकर्मरूपाभिधानां च भिदां व्यधत्त ।**
**नारायणो विश्वसृगात्मयोनिरेतच्च नो वर्णय विप्रवर्य ! ॥ ९ ॥**

येनेति । प्रजानामपि प्रत्येकमात्मा स्वरूपम्, कर्म, रूपम्, अभिधा नाम; एतेषां येन हेतुना कृत्वा भिदां व्यधत्त । एकस्यामपि योनौ अनन्ता एव भेदाः; तेषु च एको द्वितीय इव न भवति स्वरूपादिना केनाऽपि । तत् कुतः ? इति प्रश्नः । नन्वेतदकृतमेव स्यात्तत्राऽऽह—नारायणो विश्वसृगात्मयोनिरिति । अत्र हेतुत्रयमस्माभिर्ज्ञायते, नाऽन्य इति । तानाह—'नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः ।' तान्ययनं यस्येति, तेषु सर्वत्रैव विद्यमानत्वात् । एकेनांशेन द्वयं न क्रियत इति तदंशे विद्यमान एव भगवांस्तावद्भेदहेतुरित्येकः पक्षः । किञ्च, विश्वसृक् सर्वस्य कर्ता भगवान्; सर्वत्रैवोपादानगोचरापरोक्षज्ञानमस्यास्ति, अन्यथा तावतो न सृजेत् । अतो भगवज्ज्ञानमेव तावद्भेदे हेतुरिति द्वितीयम् । किञ्च, आत्मयोनिरिति । आत्मैव योनिः कारणं यस्य । अयं स्वस्मादेव स्वयमुत्पद्यते । अतो भगवतः कश्चन तादृशो गुणोऽस्ति, येन स्वयमेव स्वस्मादुत्पद्यत इति भिन्नो भवति, एवमेवायमनन्तमूर्तिर्जात इति स्वयमेव तावद्रूपो भवतीति, एवं तत्त्वतो ज्ञानतश्चेति हेतुत्रयं ज्ञायते । अन्यद्वक्तव्यमित्यर्थः । एतच्चेति चकारात् पूर्वोक्तमपि प्रष्टव्यमित्युक्तम्, अन्यथोत्तरमेव वक्तव्यं स्यात् सर्वत्र । न इति बहुवचनमेकशिष्यत्वादवक्तव्यनिराकरणेन प्रचारणपारम्पर्यमहत्त्वज्ञानार्थम् । विप्रवर्येति । 'प्रा पूरणे ' इति धातोर्विशेषेण पूरयतीति सर्वगुणपूर्णता निरूपिता । तेषामपि वर्यत्वात् पूर्णा भगवद्गुणा अस्मिन् सन्तीति सर्वकथने हेतुः ॥ ९ ॥

नन्वेतत्सर्वं भारते कथितमेव, तथा च पुनः किमर्थं पृच्छ्यत इत्याशङ्क्याऽऽह—

**परावरेषां भगवन् ! व्रतानि श्रुतानि मे व्यासमुखादभीक्ष्णम् ।**
**अतृप्नुम क्षुल्लसुखावहानां तेषामृते कृष्णकथामृतौघात् ॥ १० ॥**

परावरेषामिति ॥ श्रुतस्याऽपि श्रवणे किं दूषणम् ? आनन्त्यात्पदार्थानामपर्यवसानमिति चेत्, तत्रोच्यते । परावरेषां ब्रह्मादिस्थावरान्तानाम् । व्रतानि नियतधर्माः, कर्माणि च श्रुतान्येव । तानि व्यासमुखादभीक्ष्णशः श्रुतानि । व्यासो हि नीतिज्ञानार्थं बहुधा सर्वेषां धर्मान् कथयति, अन्यथा राज्ये स्थिरा

१ लोकादिजनकतत्त्वभेदाधिकरणं कथयेत्यर्थः. मकाश. २ नियतकार्ये नियुक्ताः. ॥. ३ हेतु विनेव. प्र. ४ नारायणादिपदत्रयोक्त हेतुत्रयम्. प्र.

बुद्धिर्न भवतीति । परं राज्यमेव त्यक्तमिति तेभ्य उपरता बुद्धिः । उपरमे हेतुः—क्षुल्लसुखावहानामिति । अल्पमेव सुखमावहन्ति । तद्गतः श्रवणेन तथा हृदयभावनायामन्ततो गत्वा तत्त्वं भवति । तस्माद्वा दोषाद्वि-मुच्यते । उभयथाऽप्यल्पं सुखं फलतः । स्वरूपतस्तु तद्दुःखात्मकमेव । अत उक्तं क्षुल्लसुखमावहन्तीति । अतस्तैस्तृप्ता जाताः । अतः परं तच्छ्रवणेच्छा नोत्पद्यत इत्यर्थः । तेषामिति प्रसिद्धानामिति । कृष्णकथा-मृतौघादृते । कृष्णकथैवामृतौघोऽमृतपूरः, तस्मात्परं न तृप्तिः । विरोधाभासश्च सूचितः, क्षुल्लसुखात् तृप्तिः, अमृतपूराच्चाऽतृप्तिरिति । अयमर्थः—इच्छा हि यथाविषयं जायते, तस्मिन् प्राप्ते निवर्तते च । सा च विषयसमाना भवति । विषयश्चाऽल्प इत्यल्पीयस्येव सा सर्वत्रोत्पद्यते, पिपीलिकाक्षुद्वत्; न हि पिपीलिका गजभोज्यं भोक्तुमर्हति, अतोऽल्पेनैव निवर्तते । गजस्तु कोटिपिपीलिकान्नेनाऽपि न तृप्यति । अतो भगवद्विषयिणी या इच्छा, अनन्तगुणत्वाद्भगवतः सर्वं ग्रहीतुं महता कालेनाऽप्यशक्ता, न तृप्ता भवति । अतो न निवर्तत इति । कृष्ण इति सदानन्दः; तस्य कथा तद्रूपा, भगवद्धर्माणां भगवद्रूपत्वात् । सर-सश्च पदार्थो बहु गृह्यते, अल्परसोऽल्प एवेत्यनुभवः ॥ १० ॥

अत्राऽधिकारिभेदेन व्यवस्था भविष्यतीत्याशङ्क्य निराकरोति—

**कस्तृप्नुयात्तीर्थपदोऽभिधानात् सत्रेषु वः सूरिभिरीड्यमानात् ।**
**यः कर्णनाडीं पुरुषस्य यातो भवप्रदां गेहरतिं छिनत्ति ॥ ११ ॥**

कस्तृप्नुयादिति । अत्रेच्छैव नोत्पद्यते, उत्पन्ना चेत् न कदापि तृप्यति, वह्निराहुतिभिरिव । तद्गुणा इच्छामेव वर्द्धयन्तीति पूर्वं निरूपितम् । युक्तश्चायमर्थः, आसुराणामिच्छाभावात् देवानां मध्ये कस्तृप्नु-यात् । विहितार्थ एव हि तेषां प्रवृत्तिः । तत्र विरक्ताविरक्तभेदेन, ब्राह्मणक्षत्रियभेदेन वा यज्ञास्तीर्थानि च विहितानि, चित्तशुद्धिद्वारा मोक्षफलकानि । तानि स्वरूपतो दुःखात्मकान्यपि फलतः समीचीनानि । भगवद्गुणास्तु चतूरूपाणि; स्वरूपतोऽप्यमृतौघानि, फलतो मोक्षफलानि, यज्ञरूपाणि, तीर्थरूपाणि च । अतः कस्तृप्नुयात् । तीर्थानि पादे यस्य । 'तिस्रः कोटयोऽर्द्धकोटी च तीर्थानां वायुरब्रवीत् । दिवि भुव्यन्तरिक्षे च तानि वै जाह्नवीजले' । इति सा गङ्गा भगवत्पदी, तादृशस्य चाऽभिधानम् । शब्द-मात्रमेतदिति पक्षोऽग्रे निवर्तयिष्यते । सत्रेषु सूरिभिर्भगवद्गुणाभिज्ञैरीड्यते । सत्रेषु हरिगाथोपगायन मस्ति, यथाऽश्वमेधे 'ब्राह्मणौ वीणागाथिनौ गायेताम्' इति, यथा वा नारदो गानार्थमाहूतः । तेन हि सत्रं पूर्यते 'विष्णोः कर्माणि पश्यत' इत्यादिश्रुतेश्च । किञ्च, यो भगवान् कर्णनाडीं पुरुषस्य यातः, स्वस्य हृदि स्थित्यर्थं, हृदये विद्यमानां गेहरतिं संसारदायिनीमनिष्टरूपां छिनत्ति, अमृतरूप-त्वात् । इष्टरूपत्वं पूर्वमेव निरूपितम्, अनिष्टनिवारकत्वं चोक्तम्, यागात्मकता च निरूपिता । कर्णनाडीं पुरुषस्य यात इत्यनेन शब्दो न केवल इत्युक्तम् । भगवत्साहित्त्वे तु तीर्थानि सिद्धान्येव ॥ ११ ॥

नन्वेवं सति व्यासः कथमन्यदुक्तवानित्याशङ्क्याऽऽह—

**मुनिर्विवक्षुर्भगवद्गुणानां सखाऽपि ते भारतमाह कृष्णः ।**
**यस्मिन्नृणां ग्राम्यसुखानुवादैर्मतिर्गृहीता नु हरेः कथायाम् ॥ १२ ॥**

मुनिर्विवक्षुर्भगवद्गुणानामिति । स हि भगवद्गुणानेव वक्तुमिच्छुः, तेषामधिकारसिद्ध्यर्थं, भवानिव भगवदाज्ञां प्राप्य भरतवंशोत्पन्नानामेव चरित्रमाह । स हि दौष्यन्तिर्मायामत्यगादिति तद्वंश्या-

स्तादृशा एव। तेषां श्रवणेन देवमायामोहाभावे भगवद्गुणाः श्रोतुं शक्या भवन्ति। अतोऽनधिकारिणोऽपि भगवद्गुणश्रवणसिद्ध्यर्थम्, ते सत्ता ऽपि केवलभगवद्गुणवक्ताऽपि, नाम्ना कृष्णोऽपि भारतमाह। यस्मिन् भारते नृणां बुद्धिरुपायेनाऽऽकृष्टा भवति। तत्र ते सर्वे ग्राम्यकथास्वेवाऽऽविष्टचित्ताः, प्रवृत्तिश्च स्वरुच्यैव। अतस्तेषां बुद्धिग्रहणार्थं ग्राम्यकथासु भगवत्कथाः प्रवेशिताः। ताः कथा ग्राम्यत्वेनाऽपि गृहीताः स्वप्रयोजनं कुर्वन्तीति प्रयत्नः सार्थको भवति। तदाह—नु निश्चयेनेति॥ १२॥

ततः किमत आह—

**सा श्रद्दधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंसः।**
**हरेः पदानुस्मृतिनिर्वृतस्य समस्तदुःखात्ययमाशु धत्ते॥ १३॥**

सा श्रद्दधानस्येति। आस्तिक्यबुद्धिः श्रद्धा। कथा प्रथमतः स्वकार्यं श्रद्धामेव जनयति। ग्राम्यपदार्थपूचनीचभावे रसानुभवादुत्कृष्टमेव गृह्णाति, न निकृष्टम्। अतः सा मतिः श्रद्दधानस्य विवर्द्धमाना, श्रद्धया निरन्तरश्रवणात् विवर्द्धमाना, अन्यत्र कुतरतया प्रामे विरक्तिं करोति। उत्तमान्नसम्पत्तौ न हि कश्चित्पिण्याकं भक्षयति। परमेक एव गुणोऽपेक्ष्यते, स्वातन्त्र्यमिति। तदाह—पुंस इति। ततोऽपि किमत आह—हरेः पदानुस्मृतीति। मथ्वद्धमत्या निरन्तरं भगवत्स्मरणं करोति, तदा चित्ते भगवत्स्मरणस्य निरन्तरस्थितौ चित्तं निर्वृतं भवति, तत्र हि भगवानानन्दमयः प्रविष्ट इति। तदा सम्पन्नं सत्त्वचित्तं ततो न निवर्तते। तदा ततोपि, प्रवृद्धा मतिः समस्तानां दुःखानामत्ययं नाशमाशु शीघ्रमेव धत्ते। अतः परमपुरुषार्थः ससाधनो भारते निर्दिष्टः॥ १३॥

एवमप्युपाये कृते येषां चित्तं भगवति न प्रविशति, तानप्यहमनुशोचे—

**तान् शोच्यशोच्यानविदोऽनुशोचे हरेःकथायां विमुखानघेन।**
**क्षिणोति देवोऽनिमिषस्तु येषामायुर्वृथावादगतिस्मृतीनाम्॥ १४॥**

तानिति। भगवान् स्वसेवार्थमिन्द्रियाणि दत्तवान्। कतिपयेभ्यो न दत्तवान्, येभ्यो न दत्तवान् ते शोच्याः। तेषां चेदिन्द्रियाणि भवेयुः, तद्द्वारा भगवद्भजनं कुर्युरिति। ये पुनर्दानसमये आसुराणीन्द्रियाणि प्राप्तवन्तः, ते तां कथां श्रुत्वापि तद्रसानभिज्ञा न भजन्ते, ते शोच्यानामपि शोच्याः। अथवा, ये न जानन्त्येव सद्बाधभावात्; तानहं शोचे। तेऽपि यदि दैवगत्या भगवत्संमुखा भवेयुः, तथाऽपि न शोच्याः; सर्वथा विमुखाश्चेत् तदा शोच्याः। तथात्वे हेतुः— अघेनेति। पापेनैव भगवद्वैमुख्यं कार्यते, स्वनाशशङ्कया। तदा कालेऽपि तान्, प्रसतीत्याह—क्षिणोतीति। स हि सर्वज्ञो देवः सर्वान् जानाति। प्रासार्थं चाऽनिमिषः सावधानः। तुशब्दः पक्षान्तरं व्यावर्तयति। भगवद्विमुखस्य देवतान्तरेण वा, मार्गान्तरेण वा, निस्तारोऽस्तीति पक्षः। तेषां सर्वेषामेव आयुर्हरति तस्य तदेककार्यत्वात्। ननु कायवाङ्मनोभिस्ते किञ्चित्समीचीनं करिष्यन्तीत्याशङ्क्याऽऽह—वृथा वादगतिस्मृतीनामिति। अर्थशून्याश्चेयोऽपि वादादयः, त एव तेषां रोचन्ते, दिवाभीतानां यथा तेजः। गतिः कायिकी। तस्माच्चेषां सर्वस्वनाशात्, विद्यमानेऽपि पुरुषार्थसाधने पुरुषार्थाभावाच्च, शोच्यानामपि शोच्याः॥ १४॥

एवमन्वयव्यतिरेकाभ्यां भारततात्पर्यमुक्त्वा, तेन भगवत्कथायां गृहीतचित्तं मां प्रति भगवत्कथैव के-

-वला वक्तव्येत्याह—

**तदस्य कौषारव ! शर्मदातुर्हरेः कथामेव कथासु सारम् ।**
**उद्धृत्य पुष्पेभ्य इवाऽऽर्त्तबन्धो ! शिवाय नः कीर्तय तीर्थकीर्तेः ॥ १५ ॥**

तदस्येति । पूर्वप्रश्नाश्चत्वारोऽज्ञानान्यथाज्ञाननिवर्तकाः । अयं तु प्रश्नो ज्ञात एव, प्रत्यहभोजनवदाव-श्यकोऽपेक्ष्यते । तत्तस्मात्कारणात् । अस्य पुरतः परिदृश्यमानस्य भगवतः, स्वभावतया सर्वेभ्यः शर्मदातु-र्दुःखनिवारकस्य च, कथामेव कथय । ननु हरिकथा लौकिक्या संवलिता, कथं भिन्नतया केवला कथयितुं शक्यते तत्रोपायमाह—कथासु सारमुद्धृत्येति । सृष्टिप्रकारा बहवः सन्ति, तत्र भगवत्कर्तृकैव सृष्टिर्व-क्तव्या । पालनं बहुविधमस्ति, कालकर्मादिभिः क्रियमाणम्, तत्र भगवत्क्रियमाणमेव वक्तव्यम् । प्रलयोऽपि तथैव । यस्यां सृष्टौ भगवानेव प्रविश्य नाना भवति, न तु जीवः पुरुषोऽन्यो वा । चरित्रमपि प्रकृत्याद्य-संवलितं वक्तव्यमिति । किं बहुना भक्तेष्टपूरणदुःखनिवारणैकप्रयोजनं केवलभगवच्चरित्रं सर्वतः सारमु-द्धृत्य वक्तव्यम् । बुद्ध्यैवाऽत्रोद्धारः । सूक्ष्मोद्धारे दृष्टान्तमाह—पुष्पेभ्य इवेति । यथा पुष्प एव मकरन्दो-ऽन्तस्तिष्ठति, परं तं भ्रमर एव पिबति, मधुमक्षिकाचोद्धृत्य स्थापयति । तथा यद्यपि भ्रमरवत् पीयते, तथापि परोपकारो न भवतीति मधुमक्षिकावदुद्धृत्य वक्तव्यम् । नन्वेतत् क्लेशात्मकं भवति, पीतस्य पुन-रुद्गिरणात् । तत्राऽऽह—आर्त्तबन्धो ! इति । लोकोपकारार्थं क्लेशोऽपि सोढव्यः वस्तुतस्तु पान इव निष्कासनेऽपीन्द्रियसंबन्धस्य तुल्यत्वादविकृतत्वाच्च परोपकारे सिद्धे रोमन्थ इव रसास्वादनं भवति । अतो नोऽस्माकं शिवाय कीर्तय । अधिकारो नास्तीति न मन्तव्यम् । तीर्थरूपा कीर्तिर्यस्येति, तेनैवा-ऽधिकारोपि भविष्यति ।

एवमुद्धृतभगवत्कथां पृष्ट्वा, मूलपुरुषस्य द्वितीयचरित्रं वा, पृच्छति—

**स विश्वजन्मस्थितिसंयमार्थे कृतावतारः प्रगृहीतशक्तिः ।**
**चकार कर्माण्यतिपूरुषाणि यानीश्वरः कीर्तय तानि मह्यम् ॥ १६ ॥**

**स विश्वेति** । यः पूर्वोक्तः स एव कार्यान्तरार्थेऽवतीर्णस्तस्य चरित्रं प्रथमतः पृष्टमिति । अन्ते सर्वस्याऽपि विश्वस्य जन्मस्थितिसंयमार्थे यः कृतावतारः परमपुरुषः, व्यष्टीनां वा जन्माद्यर्थं कृतावतारः, न तु काला-दीन् आज्ञापयति, किन्तु स्वयमेवाऽऽगत्य करोति यः । ननु भगवत्कृतेऽपि इहेत्याद्यनुभवात् कथं केवलं भगवत्कृतं तद्भविष्यतीत्याशङ्क्याऽऽह—प्रगृहीतशक्तिरिति । प्रकर्षेण गृहीताः कालादिशक्तयो येन । ते हि कालादयस्तत्र प्रतीयमाना अपि भगवता नियमिताः, न स्वतः कार्यं कुर्वन्ति । प्रतीतिमात्रं तु न दोषाय । जन्माद्यर्थमेवावतारान् जन्मादीनि करिष्यत्येव । किन्त्वन्येभ्यः पुरुषेभ्यः प्रकर्षेणाऽतिपौरुषाणि यानि चकार । साधारणं तु न करिष्यतीश्वरत्वात् । तानि केवलं मह्यमेव कथय । मया परम्परार्थमप्यन्यस्मै न वक्तव्यमिति भावः ॥ १६ ॥

एतादृशप्रश्नकर्ता नाऽन्यो भविष्यति, न वा प्रश्नव्यतिरेकेण वक्तुं शक्यम् । अतोऽस्याधिकारो निरूपितः अनेनैव प्रश्नेनाऽन्ये सहिता भवन्तीति, पर्यवसानत एक एव प्रश्नः सिद्धः । तस्योत्तरमध्यायद्वयेन वक्ष्यति, अवतारादिपौरुषप्रयोजनभेदात् । तस्मादेतदध्यायद्वयं स्वत एवाऽनेनोद्धृत्योक्तम् । अनेन चेदतृप्तः प्रश्नान्तर-

१ लौकिकप्रसंवलिता ख. २ फलकथनात्. प्रसङ्गाः.

जिज्ञासुर्भविष्यति, तदा पूर्वोक्तानपि विशेषांस्तत्रैव क्षत्तरि पातयित्वा जीवसन्देहनिवृत्त्यर्थं वक्ष्यामीत्यभिप्रायो मैत्रेयस्य, अतः प्रश्नाभिनन्दनं वक्तुम्, तस्याऽयं प्रश्नोऽभिमेत इत्याह—

## श्रीशुक उवाच।

**एवं स भगवान् पृष्टः क्षत्त्रा कौषारविर्मुनिः।**
**पुंसां निःश्रेयसार्थेन तमाह बहुमानयन्॥ १७॥**

एवमिति। मैत्रेये आविष्टो भगवान् वर्तत इति स भगवान्। केवलेनैतज्ज्ञातुं वक्तुं चाऽशक्यम्। क्षत्त्रेति पूर्ववत्। कौषारविरिति पितृनाम्ना विवेकित्वम्। मुनिरिति बहुकार्थज्ञानानुसन्धाने हेतुः। इदमतिपवित्रं चरित्रं नैकस्मै प्रयोजनाय वक्तव्यमिति पुंसां निःश्रेयसार्थायेत्युक्तम्। परं तमुद्दिश्यैवेत्याह—**तमाहेति**। बहुमाननेन तस्य हृदये प्रविशतीति, भगवदीयत्वाच्च बहुमाननं कृतवानित्यर्थः॥ १७॥

तत्र चतुर्भिः सन्माननं करोति। पृष्टार्थदेहजीवानां संबन्धस्याऽपि सर्वतः। ज्ञात्वा कथनबोधाय **तैरुत्कर्षो निरूप्यते। १।** तत्र प्रथमं प्रष्टव्योत्कर्षेण तमभिनन्दति—

## मैत्रेय उवाच।

**साधु पृष्टं त्वया साधो! लोकान् साध्वनुगृह्णता।**
**कीर्तिं वितन्वता लोके आत्मनोऽधोक्षजाऽऽत्मनः॥ १८॥**

**साधु पृष्टमिति**। बहव एव पृच्छन्ति, कोप्येवं न पृच्छतीति त्वयेत्युक्तम्। न च तवायं प्रश्नः काकतालीयः किन्तु ज्ञात्वैव कृतः, उत्तरमपि ज्ञायते, तर्हि प्रश्नो व्यर्थ इत्याशङ्क्याऽऽह—**लोकान् साध्वनुगृह्णतेति**। लोकोद्धारार्थमेव ज्ञात्वाऽपि त्वया प्रश्नः कृतः। अनेनाऽस्मिन् शास्त्रे परोपकारो मुख्यं साधनमित्युक्तं भवति। तथाऽप्येकमानुषङ्गिकं फलं सिध्यतीत्याह—**कीर्तिं वितन्वता लोक इति**। अस्मिन् लोके आत्मनः कीर्तिं विस्तारयता भवता पृष्टम्। ननु स्वकीर्त्यर्थं तथा करणमनुचितं चेत्तत्राऽऽह—**अधोक्षजात्मन इति**। अधोक्षज एवाऽन्तःकरणे यस्य। देवालयप्रतिष्ठया देव एव प्रतिष्ठितो भवतीति। परम्पराश्रयणं तु साक्षाद्भगवत इन्द्रियागोचरत्वात्। तदाहाऽधोक्षजेति। एवमस्य प्रश्नस्य स्वपरहितत्वात् साधुत्वम्॥ १८॥

देहोत्कर्षमाह शूद्रायोनिदोषाभावाय—

**नैतच्चित्रं त्वयि क्षत्तर्बादरायणवीर्यजे।**
**गृहीतोऽनन्यभावेन यत्त्वया हरिरीश्वरः॥ १९॥**

**नैतच्चित्रमिति**। क्षेत्रमेके प्रशंसन्ति बीजमन्ये मनीषिणः। तयोर्बीजमेवोत्तमम्। यद्वीजस्य प्रभावेन तिर्यञ्च ऋषयोऽभवन्। अतो बादरायणस्य वीर्यजे त्वयि चित्रं न, तादृशवक्तुः पुत्रः वक्तुमेव समर्थो भवति. किंपुनः प्रश्ने। अत एव चित्राभावः। तस्य बीजस्य फलमपि जातमित्याह—**गृहीत इति**। अनेन ग्रामादिकबीजत्वशङ्का निवारिता। नह्यन्ययोनिस्थो भगवद्भक्तो भवति,भगवत्कर्तृकसर्गत्वात्। अत एवाऽन-

न्यभावेन केवलभगवद्भावेन भगवान् गृहीत । स हि दुःस्वमपि शमयति। योन्यादिसर्वदोषानपि दूरीकरोति, यत ईश्वरः । करणे हेतु—हरिरिति । दीनदयालुत्वात्तथा करोतीत्यर्थ ॥ १९ ॥

जीवोत्कर्षमाह—

**माण्डव्यशापाद्भगवान् प्रजासंयमनो यमः ।**
**भ्रातुः क्षेत्रे भुजिष्यायां जातः सत्यवतीसुतात् ॥ २० ॥**

माण्डव्यशापादिति । स हि धर्मराज एव माण्डव्यशापाद्व्यासद्वारा क्षत्रियभोगपत्न्या जातः । माण्डव्यो हि यमेनाऽज्ञानाद्दण्डितः । कस्यचिद्राज्ये चौरैः सह माण्डव्यनामा ऋषिस्तप कुर्वाणः शूले आरोपित । स हि यम मन्तुं गत । तेन पृष्टो यम आह 'त्वया बाल्ये शकुन्ताया पृष्ठे इषीका प्रवेशितेति' । तत क्रुद्धो मुनि 'बाल्येन कृत पित्रोर्भवतीति, अज्ञानात्त्वयाऽहं दण्डितइति, शूद्रो भव' इति शशाप । तस्य देवस्य शापसंबन्धे हेतुमाह—प्रजासंयमन इति । प्रजाः सयमयति मारयतीति तथा । अतस्तेन कर्मणा देवस्याऽपि पापं लग्नम् । ततो दैत्येषु जन्म मा भवत्विति सर्वथा दैत्यसवन्धरहिते भगवति व्यासे आविष्ट, शापसार्थकत्वाय तस्यैव भ्रातुः क्षेत्रे, भोगपत्न्या भुजिष्याया शूद्रायाम् । व्यासस्यापि सङ्गमणयोग्यार्थं सत्यवतीसुत इत्युक्तम् । उपरिचरवसोर्बीजान्मत्स्ययोनौ जाता, कैवर्ताधिपेन दाशेन परिपालिता दाशकन्या सत्यवती, तस्याः पुत्रात् व्यासाज्जात इति ॥ २० ॥

भगवदीयत्वेन प्रकृतोपयोगिमहत्त्वमाह—

**भवान् भगवतो नित्यं संमतः सानुगस्य च ।**
**यज्ज्ञानदेशाय च मामादिशद्भगवान् व्रजन् ॥ २१ ॥**

भवानिति । नित्य भवान् भगवत्संमत । सेवकसहितस्याऽपि, वैष्णवानामपि सुसमतस्तदाह—सानुगस्येति । सर्वदा समतिस्तदानीं स्मरणादवसीयते । सेवका अपि भीष्मादय 'विदुरेण महात्मना' इति वाक्यात् भवन्त मन्यन्ते । तत्र हेतुमाह—यज्ज्ञानदेशायेति । यस्य तव ज्ञानोपदेशार्थं भगवान् मामादिशत् । चकारात्स्वयमपि स्मरणेनोपदिष्टवान् । भगवानिति स्मरणे हेतुमाह । व्रजन्निति तस्याऽऽवश्यकत्वम् । देवरात्सुतोत्पत्तिर्विहितेति व्यासस्य भ्रातृपत्नीगमने न दोष । तस्य रागसबन्धाभाव प्रयोजक इत्यमिहोत्रादिवत् कलौ निषिद्ध ॥ २१ ॥

एव तस्याऽभिनन्दनमुक्त्वा तत्पृष्टा भगवल्लीलामाह—

**अथ ते भगवल्लीला योगमायोपबृंहिताः ।**
**विश्वस्थित्युद्भवान्तार्था वर्णयाम्यनुपूर्वशः ॥ २२ ॥**

अथेति । लोकप्रसिद्धेर्भिन्नः प्रकार इत्यथशब्द । केवलभगवन्निर्मितचरित्र वेद एव, तथापि तुभ्यं तद्वक्तव्यं न भवतीति, योगमायोपबृंहिता भगवल्लीला वदिष्यामीत्याह—ते भगवल्लीलाइति । योगमाया, साधनभूता पूर्वोक्ता भगवन्माया, तया उपबृंहिता स्पष्टा, केवलास्तव योग्या न भवन्तीति । तत्राऽप्य-

१ गमनम् ग ग घ. च २ 'मन्मतंलीला ' इत्यत्र, पूर्वं द्वितीयस्कन्धे चानन्दशक्तित्वेनोक्ता प्रकार

न्तिमप्रश्ने परिहार उच्यत इत्याह—**विश्वस्य स्थित्युद्भवान्ता एवाऽर्थाः** प्रयोजनानि यासां ताः। **आनुपूर्व्येण**, क्रमेण वर्णयिष्यामि । भगवल्लीलाया मनोऽनुरञ्जकत्वेन स्नेहजनकत्वम् । योगमायोपबृंहितत्वेनाऽऽश्चर्यरूपत्वादद्भुतत्वम् । बुद्ध्यन्तरविस्मरणायैतदुच्यते, विश्वोत्पत्त्यादिकं तु माहात्म्यज्ञानार्थम् । आनुपूर्वी तु बोधसौकर्याय । एवं सति भक्तिर्भवति । अनेन भगवत्कर्तृकता लीलयैवेति सर्वदोषाभावः । पुरुषोत्तमत्वाय च लीलोपायेन संबद्धेति न साऽपगच्छति । तस्या न कर्तृत्वे प्रवेशः, किन्तु सहभावमात्रम्, अन्यथा सर्ववशीकरणं न स्यात् । विश्वस्य स्वरूपं वक्तव्यम् । तदेकं भगवद्रूपम् । तासां लीलानां तदुत्पत्त्यादयो विषयाः सिद्धा एव । मया परं कीर्त्यन्ते, न तु कविवत् वर्ण्यन्त इत्यानुपूर्वी निरूपिता ॥ २२ ॥

एवं प्रतिज्ञाय श्रोतारं सावधानं विधाय विश्वस्योत्पत्तिनिरूपणार्थं पूर्वावस्थामाह—

**भगवानेक आसेदमग्र आत्माऽऽत्मनां विभुः ।**
**आत्मेच्छानुगतावात्मा नानामत्युपलक्षणः ॥ २३ ॥**

**भगवानेक आसेदमिति** । इदं सर्वं जगत्पूर्वं भगवानेवाऽऽस । शुद्धा तु भगवल्लीला भगवानेवैवंप्रकारेण भवतीति । योगमायोपबृंहिता तु इदं जगदेकं रूपं भगवतः प्रवाहानादिप्रकारेण आविर्भावतिरोभावयुक्तमनाद्यनन्तं वर्तते । तिरोभावे तद्भगवानेव भवति, यथा लवणं जलमेव भवति । तथापि न तयोः स्वरूपैक्यम्, तस्य मिष्टो रसः, अस्य च लवणः । परं विवेचयितुं न शक्यत इति भगवत्त्वम् । तदाह—**इदं** जगत्, **अग्रे** सृष्टेः पूर्वम्, **भगवानेवाऽऽस** । अनन्तमूर्तौ च भगवति न तस्य तिरोभावः, किन्त्वेकस्मिन्नेव । **आसेति** तत्र न भगवत्कर्तव्यता काचित् । विलीनं लवणं जले स्वत एव भवति, ततः पृथक्करणं तु महत् कठिनं भगवदेकसाध्यम् । अत इदं भगवच्चरित्रमुच्यते । स्वयं तथाभवने भिन्नतयोत्पादने वा योगिवन्मणिवन्न कोऽपि प्रयासः । ननु जीवानां तदानीन्तनानां चिद्रूपत्वात् कथमेकस्मिन् लयः ? तत्राऽऽह—**आत्माऽऽत्मनामिति** । स हि भगवान् सर्वेषां जीवानामात्मा, समष्टिवन्मूलभूतश्चिद्रूप एव । तत्रैवाऽस्य सप्रधानस्य लयः, अन्यथा काठिन्यमेव न स्यात् । सति लये सदैव स्यात् । अमुक्तजीवानां प्रलयाज्जीवाश्रितं जगत्तत्रैव लीनम् । तस्योद्गमनसामर्थ्यायाऽऽह—**विभुरिति** । स हि सर्वसमर्थः प्रथमतोजीवान् स्वस्मिन् संपाद्य तत्रैव जगल्लयं कारितवान् । अनेन तस्याऽस्पर्शो निरूपितः । एवमैक्येऽप्यस्पर्शे विभुत्वहेतुः । ननु जीवानामिच्छादिधर्माणां विद्यमानत्वात् कथमेकभावेन स्थितिस्तत्राऽऽह—**आत्मेच्छानुगतौ सत्याम्** । आत्मनां या इच्छा सर्व एव धर्मास्तेषामपि तत्रैवाऽनुर्गतिः । भगवतो वा इच्छाया यदा तत्र जगत्यनुगतिः, तदा तल्लीनमिति पूर्वप्रलये हेतुर्निरूपितः । तदाऽयं भगवानात्मेत्येव व्यपदिश्यते । आत्मत्वेन वा तस्मिन्निच्छा । तेन वा तदात्मभूतं जातम् । तदा भगवान् सृष्ट्यन्तरवदेकरसो न जातः, किन्तु नानामतिभिरेव उपलक्षितः । अथवा । सर्वैरेव मतिभिरेक एवोपलक्षितः । यथाऽन्योन्यविजातीयानि सहस्रं लवणान्येकस्मिन् जले परिच्छिन्ने प्रक्षिप्तानि, एकरसत्वमप्यापन्नानि नानामतिभिरुपलक्षितमेकं भवति । यथा केनचित्पृष्टः सैन्धवादि केति सर्वार्थं जलमेव निर्दिशति । आत्मेच्छायाः सर्वत्रानुगमादात्म-

---

१ अहिकुण्डलवत् स्वतएव सर्वरूपोऽस्तीत्यर्थः. प्रकाशः. २ 'अतिपोष्याणि' इति प्रश्नोत्तरत्वेनोन्यते. प्र. ३ तथा च तत्र प्रयासाभावात् तदुत्तरत्वमित्यर्थः. प्र. ४ चितित्वाभावे पृथक्करणे प्रयासः. प्र. ५ इच्छस्तएव क. ६ प्रवृत्तस्यागमनम्. प्र. ७ आत्मत्वे आत्मेच्छानुगतेर्हेतुत्वकथनेन. प्र.

त्व वा। तेनैकदेशे एव भगवति विश्वस्य लय उक्तो भवति। 'एकांशेन स्थितो जगत्' इति भगवद्वाक्यं तत्परमेव। आविर्भावेऽपि तथा॥ २३॥

एवं पूर्वस्थितिमुक्त्वा प्रथमतो जीवानामुद्गममाह—

**स वा एष तदा द्रष्टा नाऽपश्यद्दृश्यमेकराट्।**
**मेनेऽसन्तमिवात्मानं सुप्तशक्तिरलुप्तदृक्॥ २४॥**

**स वा एष इति।** स एव भगवान्, स्वस्मिन् विद्यमानसर्वे। वै निश्चयेन। एष देवदत्तादिरूपेण प्रतीयमानो जीवो जात। तदा जीवो भूत्वा तिरोभावप्रकारेणाऽऽविर्भूतः, पूर्वसंस्कारेण तदा द्रष्टा जात। अहं द्रष्टेति पूर्वावस्था स्मृतवान्। तदा द्रष्टृत्वनिर्वाहार्थं दृश्यालोचने क्रियमाणे दृश्य नाऽपश्यत्। यत स एक एव सर्वजीवानामात्मभूतो निर्गत स्त्वेक एव राजते। यद्यप्यात्मानमपि द्रष्टुं शक्नोति, तथापि पूर्ववासनया बहिर्मुख एव निर्गत इति स्वातिरिक्तमेव दृश्यमनालोचयन्, तदभावे आत्मानमेवाऽसन्तं मेने। इवेत्यर्द्धासत्त्वम्। आत्मांशो वर्त्तते, वेद्यांशो नास्तीत्यौपाधिकधर्माणामुपाध्यभावे धर्माभावः। अतो द्रष्टा आत्मानमद्रष्टारमेव मेने। ननु पूर्वं दृश्यस्य विद्यमानत्वात्, सदृश्यस्य तस्य लयात्, स्वाविर्भावे दृश्यमपि कुतो नाऽविर्भूतमिति चेत्तत्राऽऽह—सुप्तशक्तिरिति। सुप्ताः शक्तयो यस्य। ये प्रपञ्चोद्बोधकास्ते नाऽद्याप्युपस्थिता इति। एवं तर्हि ज्ञानशक्तिरप्यनुद्गता स्यात्, ततः कुतो मेने आत्मानमसन्तमिति तत्राऽऽह—अलुप्तदृगिति। अलुप्ता दृक् यस्य। अस्य ज्ञानशक्ति पूर्वमपि न लुप्ता, लोप न प्राप्ता, आत्मवदेव स्थिता, आत्माऽऽविर्भाव एव आविर्भूतेत्यर्थ। स यदा आत्मान असन्तमिव मेने॥ २४॥

एतान्येवात्मासत्त्वज्ञानानि एकीभूतानि मायारूपेण जातानीत्याह—

**सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका।**
**माया नाम महाभाग! ययेदं निर्ममे विभुः॥ २५॥**

**सा वा एतस्येति।** यदात्मानमन्यथा ज्ञातवान् एषैव माया। सा पूर्वोक्ता प्रसिद्धा मोहिका सदसदात्मिका। सदसद्रूप आत्मा यस्या। स्वभावत सन्, अन्यथाङ्गीकारादसन्, एतादृश एवाऽऽत्मा तस्या। अयमेवात्मा, सा धर्मरूपा। तस्या वा स्वरूपमात्मैव समर्पयति। त्रितयात्मक वा स्वरूपम्। तस्या धर्मत्वमाह—एतस्य संद्रष्टुः शक्तिरिति। एतस्य जीवस्य सम्यग्द्रष्टु। अर्थादालोचनेनात्मानमेव पश्यतीति। शक्तिरुत्तरकार्ये सामर्थ्यम्। तस्या नाम मायेति। मया सह वर्तत इति प्रत्ययस्याऽलुक्, सुबन्तप्रतिरूपको वाऽयं निपात, ततोऽणूप्रत्यय, सवर्णदीर्घ, न ङीप्। महाभागेति संबोधनम्। अयमर्थो दुर्ज्ञेय इति, तज्ज्ञाने महद्भाग्यमिति सूचितम्। ययेदं निर्ममे विभुरिति। ...या मायया चिच्छक्तिरूपया अनुकृतसारया इदं जगदेव निर्ममे। यस्य भावरूपा शक्तिस्तस्य कर्तृत्वं व्यावर्त्तयति विभुरिति। भगवत्कर्तृक एव जगति जीवार्थत्वात्, तन्माययैव भगवान् जगत्कृतवान्। येन केनाऽपि जगत्करणात्, विभुरिति॥२५॥

---

१ एकांशेन विष्टभ्य प्रकाश २ पराभिध्यानमुक्तप्रकारेण प ३ औपाधिका धर्मा येषा तादृशा पदार्थानां तद्भाव तदभावाभावस्तात्पर्यं प ४ यत् आत्मानम् इति पदच्छेद ■ ५ द्वितीयस्कन्धे चिच्छक्तित्वनोक्ता प ६ आत्मासत्त्वज्ञानानां पिण्डीभावरूपा प्र ७ अभिभावरूपा, भावरूपा वा प ८ पूर्वस्माद्भिन्न व्यावहारिक जगत्कर्तृत्वानिरूपं प

या ( त्वया ) सामान्यतः सृष्टिरुक्ता, तां विस्तरेण निरूपयति—

**कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः ।**
**पुरुषेणाऽऽत्मभूतेन वीर्यमाधत्त वीर्यवान् ॥ २६ ॥**

कालवृत्त्येति । तु शब्दः पक्षं व्यावर्त्तयति । न वा जीवः कर्ता, न वा अन्येन करोतीति । कालस्य वृत्तिः, कालस्तत्र समागत्य परिवृत्तः, प्रदक्षिणं कृतवान् । कालपरावृत्त्या कृत्वा मायायां गुणक्षोभो जातः। कालेन व्याप्तता क्षुब्धगुणा जातेत्यर्थः । तदा सा व्यामुग्धा सती पुरुष इव कामान्धा जाता, तदा भगवानिन्द्रियातीत एव तस्या अदृश्य एव भूत्वा तस्या भर्तृयोग्यमात्मनः सकाशात् एकं पुरुषं निर्ममे । स हि भर्तृयोग्यो भगवदंशः पुरुषोत्तमात्मक एव । तस्य स्वतः प्रवृत्त्यभावात्, तं निमित्तीकृत्य भगवान् स्वयमेव तदन्तर्यामी भूत्वा, तस्यां वीर्यमाधत्त, यतः स्वयमेव वीर्यवान् । पुरुषजीवयोर्वीर्याभावात्, कोशाभावात्, शरीर एव तयोः कोशसम्भवात् । अतः पुरुषं निमित्तीकृत्य भगवत्स्थापितं वीर्यं मायायां स्थितं जीवप्रवेशात् महत्तत्वमभवत् ॥ २६ ॥

**ततोऽभवन्महत्तत्त्वमव्यक्तात्कालचोदितात् ।**
**विज्ञानात्माऽऽत्मदेहस्थं विश्वं व्यञ्जंस्तमोनुदः ॥ २७ ॥**

तस्यामेव स्थितस्य बीजस्य महत्त्वता नाऽस्तीति, प्रसवार्थं कालक्षोभात् प्रसवकर्त्र्यास्तस्या महत्तत्वमभवदित्याह—अव्यक्तात्कालचोदितादिति । जीवधर्मादेव भगवदंशाच्च सर्वं चेतनं कार्यं जायते । सङ्घातोत्पत्तिरेवाऽत्राऽभीष्टा, सङ्घात एव च लीयते । स हि विज्ञानात्मा जातः । महत्तत्वमिति । महदिति तस्य नाम । तत्त्वमिति भगवतः कारणभावः । तस्य जनने गुणभावेऽपि, पश्चात्प्रधानभावात्, तत्त्वतां परित्यज्य महान् पुंस्त्वेन निर्दिष्टः। स हि विविधज्ञानात्मा जातः। तद्द्वारैव च सर्वं जगज्जातम्, क्रमसृष्टिपक्षत्वात् । तदा तस्य विज्ञानेन स्वस्मिन् विद्यमानं जगत् प्रकाशयुक्तं जातम् । तद्गतमावरणं च तमो दूरीभूतम्, तदाह—स विज्ञानात्मा आत्मदेहस्थमेव विश्वं प्रकाशयंस्तमोनुदो जातइति । स जगज्जननार्थं भगवता सृष्ट इति पुनस्तूष्णीं तस्मिन् स्थिते कार्यार्थं भगवता स दृष्टः ॥ २७ ॥

**सोऽप्यंशगुणकालात्मा भगवद्दृष्टिगोचरः ।**
**आत्मानं व्यकरोदात्मा विश्वस्याऽस्य सिसृक्षया ॥ २८ ॥**

कालोऽपि समागतः, कारणगुणा अपि समागताः सत्त्वादयः, अंशोऽपि पुरुषः समागतः, आत्मा जीवोऽपि । एते यस्मिन्, तादृशो भूत्वा चतुर्मूर्तिर्भगवद्दृष्ट आत्मानं विविधमकरोत्, व्यापाराविष्टं कृतवान् । यतोऽयं विश्वस्याऽप्यात्मा, अन्यथा स्वात्मा न व्याप्तः स्यात् । तथा किमर्थमकरोदित्याशङ्क्याऽऽह—विश्वस्याऽस्य सिसृक्षयेति । स हि पूर्वं ब्रह्मविदिव स्थितः, पश्चात्कार्यव्याप्तो जात इत्यर्थः ॥ २८ ॥

कार्यमाह—

---

१ पूर्वोक्तेष्वात्मादिषु मानविपर्यीभूतेषु, आत्मांशः सत्त्वत्वेन, असत्त्वांशस्तमस्त्वेन, ज्ञानांशो रजस्त्वेन परिणममाणगुणसाम्यावस्थारूपं तत्स्वरूपं कृतवान्, तेन सा गुणमयी प्रथमकार्यरूपा जातेति बोध्यम्। तत एव तस्या गुणक्षोभ इत्यर्थः. न.

महत्तत्त्वाद्विकुर्वाणादहन्तत्त्वं व्यजायत।
कार्यकारणकर्त्रात्मा भूतेन्द्रियमनोमयः॥ २९॥

महत्तत्त्वादिति। स्वातन्त्र्याभावात् पुन कारणभावमेवाऽऽपन्न इति महत्तत्त्वादित्युक्तम्। स यदा विशेषेण कुर्वाणो जात, कार्यमात्मार्थं कर्तुमैच्छत्, तदा तस्मादहन्तत्त्वमजायत। तस्य त्रैविध्यं पूर्ववन्निरूपयति—कार्यकारणेति, कार्यमधिभूतम्, कारणमध्यात्मम, कर्ता आधिदैवम्। स त्रितयात्मा भूत्वा भूतेन्द्रियमनोमयो जात। भूतानामिन्द्रियाणां मनसश्च जनक स्त्रिविधोऽहङ्कारो जात इत्यर्थ.॥ २९॥

तान् भेदान् गणयति—

वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा।
अहन्तत्त्वाद्विकुर्वाणान्मनो वैकारिकादभूत्॥
वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः॥ ३०॥

वैकारिक इति। वैकारिकः सात्त्विकः, तैजसो राजसः, तामसो भूतहेतुः। सात्त्विकात्सृष्टिमाह—अहन्तत्त्वादिति। 'वैकारिकाश्च ये देवा' इति गन्धर्वादिदेवव्युदास। सात्त्विकाऽहङ्कारकार्यभूता ये देवा, तेऽपि सात्त्विका जाता इत्यर्थ। तेषां भिन्नत्वे प्रमाणमाह—अर्थाभिव्यञ्जनं यत इति। देवाधिष्ठानव्यतिरेकेण, केवलादिन्द्रियात् शब्दज्ञानादिकं न भवतीति, सामर्थ्यं देवानामेव। इन्द्रियाणामेव तथात्वं कल्प्येत, यदि कल्पितं शास्त्रं स्यात्। यथा सिद्धमन्त्रोच्यत इति देवाधीनैव विषयप्रकाशनशक्ति॥ ३०॥

राजसात् सृष्टिमाह—

तैजसानीन्द्रियाण्येव ज्ञानकर्ममयानि च।
तामसो भूतसूक्ष्मादिर्यतः खं लिङ्गमात्मनः॥ ३१॥

तैजसानीन्द्रियाण्येवेति। एवकार सात्त्विकत्वतामसत्वव्युदासार्थ। ज्ञानं सत्त्वप्रधानम्, क्रिया तम प्रधानेति। उभयविधानामिन्द्रियाणां राजसत्वे युक्ति पूर्वमुक्तैव। चकाराद्बुद्धिप्राणौ। तामसात्सृष्टिमाह—तामस इति। भूतसूक्ष्माणामादि शब्दतन्मात्रम्। तस्य आदित्वेनैव ग्रहणात्तामस इति पुलिङ्गनिर्देश, अहङ्कारविशेषण वा। तदा भूतानां सूक्ष्माणां च स आदिरिति, सामान्यतस्तस्य कार्यं निर्दिष्टम्। यतोऽहङ्कारात् शब्दतन्मात्राद्वा खमाकाशमात्मनो भगवतो लिङ्गम्, बोधकं, शरीरं वा। आकाशवद्व्यापको निर्लेपश्चेति। यथा या आकाशे अभ्रतमःप्रकाशा भवन्ति, न भवन्ति च, तथापि न तैराकाशो लिप्यते, एवमात्मा, 'आकाशशरीरं ब्रह्म' इति श्रुतेश्च। माहात्म्यार्थं तथा कथनम्। अन्यथा तामससृष्टिरधमेति न वक्तव्या स्यात्॥ ३१॥

आकाशाद्वायो. सृष्टिमाह—

कालमायांशयोगेन भगवद्वीक्षितं नभः।

---

१ द्वितीयस्कन्धे उक्तमेवेत्यर्थ. प्रकाश.

नभसोऽनुसृतं स्पर्शं विकुर्वन्निर्ममेऽनिलम् ॥ ३२ ॥
अनिलोऽपि विकुर्वाणो नभसोरुबलान्वितः ।
ससर्ज रूपतन्मात्रं ज्योतिर्लोकस्य लोचनम् ॥ ३३ ॥
अनिलेनाऽन्वितं ज्योतिर्विकुर्वत्परवीक्षितम् ।
आधत्ताऽम्भो रसमयं कालमायांशयोगतः ॥ ३४ ॥
ज्योतिषाम्भोऽनुसंसृष्टं विकुर्वद् ब्रह्मवीक्षितम् ।
महीं गन्धगुणामाधात्कालमायांशयोगतः ॥ ३५ ॥

कालेति । पूर्ववत् कालो गुणक्षोभकः, माया गुणरूपा, अंशः पुरुषो जीवोऽपि वा । अत्राऽपि पूर्ववद्भगवद्दृष्टिः । भगवद्वीक्षितं नभो जातमिति भिन्नम् । कार्योन्मुखात्सृष्टिमाह–नभस इति । नभसः सकाशादनुसृतमुत्पन्नं स्पर्शं स्पर्शतन्मात्रम् । तत्पुनः विकुर्वदनिलं निर्ममे ॥ ३२ ॥

एवमनिलोऽपि नभसा स्वकारणेन कृत्वा उरुबलान्वितो जातः । तदा रूपतन्मात्रं ससर्ज । ततो ज्योतिर्जातम् । लोकस्य लोचनमिति माहात्म्यं तस्य । आलोकाभावे लोकोऽस्मदादिर्विद्यमानेऽपि चक्षुषि न पश्येत् । अतो लोकस्य लोचनमित्युक्तम् ॥ ३३ ॥

अनिलेनाऽन्वितं ज्योतिरिति । पूर्ववत्कारणाद्बलसिद्धिः । परेण भगवता वीक्षितं सत् । अम्भो रसमयमिति । रसतन्मात्रं जलात् पृथक् न प्रतीयत इति श्लिष्टमेवोत्पन्नमित्युक्तम् । अत्राऽपि वा क्रमः कल्पनीयः; प्रथमतो रसतन्मात्रम्, पश्चादम्भ इति । कालमायांशयोगत इति । ज्योतिरित्यस्य साधनम् । एवमग्रेऽपि ॥ ३४ ॥

ज्योतिषाऽनुसंसृष्टमम्भो दत्तसामर्थ्यं जलम् । गन्धगुणां महीमिति पूर्ववत् । प्रथमतो गन्धतन्मात्रम्, तस्मान्मही ॥ ३५ ॥

तेषां धर्मानाह—

भूतानां नभआदीनां यद्यद्भव्यावरावरम् ।
तेषां परानुसंसर्गाद्यथासङ्ख्यं गुणान् विदुः ॥ ३६ ॥

भूतानामिति । नभ आदिर्येषाम्, वायुप्रभृतीनां मध्ये यद्देवोत्तरोत्तरमग्रे भाव्यं तदेवाऽधिकगुणम् । तत्र हेतुः–तेषां परानुसंसर्गादिति । कारणानुसंसर्गात् । यथासङ्ख्यं सङ्ख्यामनतिक्रम्य । आकाशस्यैको गुणः शब्दः, वायोर्द्वयं शब्दस्पर्शौ, तेजसस्त्रयः शब्दस्पर्शरूपाणि, अम्भसश्चत्वारः शब्दस्पर्शरूपरसाः, पृथिव्याश्चाऽधिको गन्धः । विदुरिति प्रमाणम् ॥ ३६ ॥

एतेषां तत्त्वानां चेतनानां कार्योपायिकरूपसिद्ध्यर्थं भगवद्भजनमाह—

एते देवाः कला विष्णोः कालमायांशलिङ्गिनः ।

---

१ कार्योन्मुखात्. प. क. २ ज्योतिःपदोक्तस्याऽम्भःकारणस्य सहकारि वा निर्धारक बलम्.. प्रकाशः.

**नानात्वात् स्वक्रियाऽनीशाः प्रोचुः प्राञ्जलयो विभुम् ॥ ३७ ॥**

एते देवा इति । देवेन्द्रियाणामैक्यविवक्षायां दशत्वम्, भूततन्मात्राणि च दश, महदहङ्कारमनांसि त्रीणि, एवं प्राकृतिकस्त्रयोविंशतिको गणः। सामान्यनिर्देशात् कालमायादयोऽपि स्तोत्रं कुर्वन्तीति ज्ञायते। सर्वे देवा विष्णोर्भगवतः कलाः, धर्मा इत्यर्थः। कालमायांशाः लिङ्गानि वर्तन्ते येषामिति, हेतुसहिता अपि गुणत्रयकार्यरूपत्वात् भिन्नभावं प्राप्ताः । अतो नानात्वाद्भिन्नभावात् स्वक्रियायां ब्रह्माण्डनिर्माणे अनीशाः सन्तः । त्रिविधत्वादमेलनम् । प्रत्येकं त्वसमर्थाः । अतो विभुं समर्थम्, प्राञ्जलयो भूत्वा प्रोचुः, स्तुतिं कृतवन्त इत्यर्थः । एतेषां देहवचनादिकं विचार्यते । तत्त्वान्येतानि भगवद्भावभूतानि । भावो नाम सर्वान् प्रति सामान्यकारणता । भगवतः कारणता पञ्चविंशतिप्रकारेण जातेत्युक्तं भवति । भावप्राधान्येन धर्मिणोऽप्राधान्यात्, सच्चिदानन्दरूपाण्यपि तिरोहितरूपाणि भवन्ति। यावद्धर्ममात्रप्राकट्यं भगवता क्रियते तादृशा एव भवन्ति । भगवतः सर्वतःपाणिपादत्वात् यदंशा एते प्रतिरूपतया निर्गताः, तत्र सर्वत्रैव कारणप्रतिरूपहस्तपादादीनां विद्यमानत्वात्, तैरेव तेषां व्यवहारः । शरीरं तूत्पन्नमेव । अभिमानिनोऽपि चिदंशा देवविशेषाः । अत एव नाऽधिकबलत्वम् । वेदे तु तत्त्वस्थानीयः प्रजापतिरेवेति, समष्ट्यनन्तरमेव तत्रत्यानां पदार्थानां निरूप्यमाणत्वात् । 'द्वया ह प्राजापत्याः' इत्यत्राऽपि सृष्टिभेदेन उभयविधेन्द्रियाण्यपि तत्र सन्तीति, तेषामपीदमेव रूपमिति, 'चक्षुरुदगायत्' इत्यादि संगच्छते । यथाऽत्र महत्तत्त्वम्, तथा वेदे प्रजापतिः; यथाऽत्र पुरुषः, तथा विराट्; यथा भगवान्, तथा यज्ञः; यथा कालः, तथा परमेष्ठी; यथा माया, तथा तेषां प्रयत्न इति । उत्तरकाण्डे तु यज्ञस्थानीयं ब्रह्म। यथाऽत्र भगवत्स्तुतिः, तथा तत्रोद्गीथः, आधिदैविकत्वात्तेषामस्मदादीन्द्रियनियामकत्वेनोच्यन्ते, अन्यथा दोषगुणादिनियमा भगवदाज्ञा च प्रत्येकं कर्तव्या स्यात्। अतो भगवदिन्द्रियप्रतिरूपेन्द्रियाणां तत्त्वेषु विद्यमानत्वात्, विसर्गे जीवेष्वपि तथात्वात्, न काऽप्यनुपपत्तिः ॥ ३७ ॥

सृष्टौ तु साधकं रूपं मत्स्यादेर्विनिरूप्यते । तत्त्वादिस्तोत्ररूपेण सर्वलीलासु तत्स्थितौ ॥ १ ॥
तत्त्वैस्तु भक्तिनिर्द्धारो ज्ञानस्य ब्रह्मणा तथा । ऋषिभिर्यज्ञनिर्धारास्त्रितयं सृष्टिहेतुकम् ॥ २ ॥
भगवत्कार्यसिद्ध्यर्थम्, कामादिरहितं तथा । साधकं नाऽन्यथारूपमित्यग्रे नाश उच्यते ॥ ३ ॥
कालप्रयुक्ता भक्तिर्हि त्रयोदशविधा यतः । अन्यथा सृष्टिकरणं शुद्धया नैव तद्भवेत् ॥ ४ ॥
भक्तिप्रपत्ती प्रत्यक्षं भक्तिज्ञाने परोक्षतः । सात्त्विकीयं समाख्याता वासन्तग्रैष्मभावतः ॥ ५ ॥
राजसे भक्तिराहित्याद् तदर्थं प्रार्थना पुरो । शरणाऽऽगमनं पश्चान्निन्दया साधनं फले ॥ ६ ॥
तामसे ज्ञाननिन्दातः परोक्षे भजनं स्तुतम् । भगवत्कार्यराहित्यहेतूक्त्या स्वस्य साधनम् ॥ ७ ॥
मलयत्प्रार्थना प्रोक्ता द्विविधा सा निगद्यते । तत्र प्रथमं सात्त्विकीमुत्तमां भक्तिं मैत्यक्षे निरूपयति—

## देवा ऊचुः ।

**नमाम ते देव ! पदारविन्दं प्रपन्नतापोपशमातपत्रम् ।**

---

१ मूले 'देवा' इत्युक्तत्वात् पुंल्लिङ्गनिर्देशः. प्रकाशः. २ प्रतिनिधिरूपतया. प्र. ३ कालात्मकप्रतिरूपाणां मूलेन्द्रियाणाम्. प्र. ४ 'कानीयसा एव देवाः' इति श्रुत्युक्तं न्यूनबलत्वम्. प्र. ५ प्रजापतौ. प्र. ६ मोक्षसाधकम्. प्र. ७ आद्ययोः प्रार्थनाऽर्थोपनाद्भगवद्भावः, द्वितीययोः सन्निधवचनाद् ग्रैष्मभावो बोध्यः. प्र. ८ स्तुत्यर्थम् प्र. ९ प्रथमश्लोके. प्र. १० मूलीये. प्र. ११ तत्र प्र. १२ परिपानसहदानभेदेन द्विविधा. प्र. १३ उचितामिति शेषः. प्र.

**यन्मूलकेता यतयोऽञ्जसोरु संसारदुःखं बहिरुत्क्षिपन्ति ॥ ३८ ॥**

नमामेति । नमनातिरिक्तस्य प्रत्यक्षे भजनस्याऽभावात्, ' नमोनम एतावत्सदुपाशिक्षितम् ' इति वाक्याच्च, स्वामिन्, ते चरणारविन्दं नमामेत्याहुः। नमने हेतुरूपमाह–देवेति। यत्रैव देवरूपता प्रतिभाति, स एव नमस्यः । गुर्वादिष्वपि देवत्वमेव नमनप्रयोजकम्, गुरुत्वं तु परिचर्यायाम् । तच्च नमनं त्रिविधम्; लौकिकम्, वैदिकम्, भक्तिमार्गस्थितं च । तत्रेदं भक्तिमार्गस्थितमिति ज्ञापयितुमाह–पदारविन्दमिति । चरणस्य सुसेव्यतां बुद्ध्वा स्नेहेन यन्नमनं चरणारविन्दे, सा भक्तिः । यद्रूपस्य नमनं तद्वैधम्, यत्तद्गतधर्माणामैश्वर्यादीनां नमनं तल्लौकिकम्। अनाविर्भूतरूपस्य नमनादरविन्दमित्येकवचनम्। सगुणत्वात्, सृष्ट्यौपयिकत्वात्; सामर्थ्ये क्लेशाभावस्य सहकारित्वात्, क्लेशनिवारकत्वं चरणारविन्दस्य प्रकारद्वयेन निरूपयंति प्रपन्नभक्तिभेदेन । तत्राऽपि प्रपत्त्यधिकारिणस्त्यागाऽसमर्थाः, भक्त्यधिकारिणस्तु त्यागसमर्था इति । अतः प्रथमं तापनिवारणरूपमाह–प्रपन्नतापोपशमातपत्रमिति । प्रपन्नानां शरणागतानां येऽन्तर्बहिस्तापाः, तदुपशमार्थं निकट एव दूरीकरणार्थम्, भगवच्चरणारविन्दमातपत्रं भवति । आतपात्त्रायत इति भगवच्चरणारविन्दं ध्रुवस्येव प्रपन्नस्योपरि तिष्ठति । अनेन यत्र कचिदपि स गच्छति, तत्रैव तच्चरणारविन्दं तापं दूरीकुर्वदेव गच्छतीति भक्तवश्यता चरणधर्मो निरूपितः। कालकृतोऽयं ताप इत्यातपत्रत्वेन निरूपिता । स्वभावकृते तु अमृतत्वादि निरूपयति, कर्मकृते तु अगदादिभावेन निरूपयति । प्रपन्नार्थं भगवान् स्वयमागच्छति सह गच्छतीत्यप्युक्तम् । सर्वतो विरक्तान् भक्तान् प्रति चरणमाहात्म्यमाह–यन्मूलकेता इति । यस्य चरणस्य मूलमधोभागः । भगवच्चरणारविन्दाध एव सर्वदा तिष्ठन्ति, न गृहवृक्षाद्यधः; ते मूलकेताः। निकेतनं केतः, स्थानमिति यावत् । यथेच्छव्यवहाराभावादनुपसर्गः। तर्हि तदर्थमन्यद्गृहं कर्तव्यमितिचेत्, पक्षाभितपोवत्। तत्राऽऽह–यतय इति । भगवन्मार्गे प्रयत्नवन्तः । तत्र पूर्वावस्थात्यागः पूर्वाङ्गम्, तावन्मात्रपर्यवसिताः सालावृकभक्ष्या एव भवन्ति । त्यागासामीचीन्ये तु पाषण्डित्वमेव । ये तु भगवदर्थे यतयः, ते अञ्जसा अनायासेनैव उरु अधिकं संसारदुःखं क्षुत्पिपासादिकृतं बहिरुत्क्षिपन्ति । पारलौकिकं च बहिरेव वर्तत इति मूलकेतानां तन्निवृत्तमेव । अतः सर्वपुरुषार्थरूपत्वाच्चरणारविन्दस्य, तन्नमामेति मुख्यो हेतुर्निरूपितः। येषामर्थे भगवान् समागतस्ते त्रिविधा निरूपिताः, भगवदीयाः, प्रपन्नाः, भक्ताश्च॥ ३८ ॥

अन्यार्थमागतं ये भजन्ते, तेषां स्वरूपं कथयन्तो मध्यभावेनाऽऽश्रममाहुः–

**धातर्यदस्मिन्भव ईश ! जीवास्तापत्रयेणाऽभिहता न शर्म ।**
**आत्मँल्लभन्ते भगवंस्तवाङ्घ्रिच्छायां सविद्यामत आश्रयेम ॥ ३९ ॥**

धातरिति । अन्योर्थे सृष्ट्यर्थं समागत इति ज्ञापितम्। धाता विधाता, कर्ता; पितेत्यर्थः । अस्मिन् भवे संसारे यद्यस्माद्धेतोः जीवास्तापत्रयेणाऽभिहता एव भवन्ति, शर्म काऽपि न लभन्ते । ईशेति संबोधनं तद्दूरीकरणसामर्थ्यार्थं प्रथमत एव निरूपितम् । एकेनाऽपि तापेनाऽभिहतः स्वाभाविकं शर्म न प्राप्नोति, शर्मान्तरस्य च का वार्ता ? त्रयेण त्वभिहतः सुतरामेव न शर्म प्राप्नोति। अतो वयं प्रथमत एव, संसारे प्रवेशमकृत्वैव, तवाऽङ्घ्रिच्छायामेवाऽऽश्रयेम । प्रार्थनायां लिङ् । भगवन्निति संबोधनं

१ हेतुद्वय वक्तृगत ' प्रकारद्वयेन ' इत्यनेन सम्बध्यते. प्रकाशः. २ ध्यासः. प्र. ३ बहिर्मुख्ये. प्र. ४ नमने हेतुः. प्र. ५ अन्यार्थमित्यस्यैव विवरणं सृष्ट्यर्थमिति. प्र. ६ मूलस्थस्य 'आत्मन्' इत्यस्य विवरणं स्वाभाविकमिति. प्र.

सर्वतापनिवृत्तिपूर्वकसर्वेष्टसिद्धिनिरूपणार्थम्। छायया बहिस्तापो गच्छति। अन्तस्तापनिवारणार्थमाह—सविद्यामिति। यथा सजलं छत्रं भवति। छाया प्राधान्यं भगवदभिप्रायप्राधान्यार्थम्। सूर्यादिवशात् कदाचिच्छाया चरणारविन्ददेशादन्यत्र पतति, तदाऽन्यत्र स्थितैरेवाऽऽश्रयः कर्तव्य इति। अन्यथा तु धर्म एव भवति। निकटे न स्थातव्यमिति भगवदिच्छायां निकटे न स्थातव्यमिति भावः। साम्प्रतं तथा-त्वात् वयमतो हेतोश्छायामेवाश्रयेम। विद्या उपासना, ज्ञानं वा। भगवद्गुणानुसन्धानेन वा, भगवत्प-रिचर्यया वा कश्चित्स्थातव्यमित्यर्थः। एवं साक्षाद्भगवत्संबन्धे भक्तिप्रपत्ती निरूपिते ॥ ३९ ॥

तथाऽनधिकारे परोक्षे गङ्गातीरे स्थित्वा, श्रुतितात्पर्यं विचार्य, भगवच्चरणानुसंधानं कुर्वाणेन स्थात-व्यमित्याह—

**मार्गन्ति यत्ते मुखपद्मनीडैश्छन्दःसुपर्णैर्ऋषयो विविक्ते।**
**यस्याघमर्षोदसरिद्वरायाः पदं पदं तीर्थपदः प्रपन्नाः ॥ ४० ॥**

मार्गन्तीति। यद्यस्मादृषयो मन्त्रद्रष्टारः। ते मुखपद्मनीडैश्छन्दःसुपर्णैः ते पदं मार्गन्ति विचार-यन्ति। वेदा हि गरुत्मायाः पक्षिणः, तेषां मूलस्थानं भगवतो मुखपद्ममेव। यथा पद्मे मकरन्दादिपा-नार्थमागन्तुका अपि पक्षिणस्तिष्ठन्ति। एतेषां तु तन्नीडमेव। ते हि तत्रैव लब्धजन्मानस्तत प्रवोद्ग-च्छन्ति। अन्यत्र चरन्तोऽपि नीडतात्पर्या एव ते। छन्दसां सुपर्णत्वं श्रुतिसिद्धमेवं। 'छन्दांसि रथो मे भवत' इत्यत्र तेषामेव रथत्वम्, 'छन्दांसि सौपर्णेयाः' इति श्रुतेः। सुपर्णपदेन च गरुडरूपतया भग-वत्समारूढा एव ते लोके प्रचरन्ति, यज्ञरूपं भगवन्तं लोके बोधयन्तीति। ऋषयो हि मन्त्रद्रष्टारो भग-वन्मन्त्रं जानन्ति। एवंप्रकारेण गङ्गातीरे स्थिता भगवान् स्वपदं प्रापयिष्यतीति। अत एव एकान्ते एकाकिभिरेव स्थीयत इत्यर्थः, बहूनां प्रापणाभावात्। यस्येति प्रसिद्धस्य ते। तीर्थपदः तीर्थानि पादे यस्य। प्रसिद्धत्वान्न सन्देहः। तीर्थपदत्वात् सर्वपापक्षयहेतुत्वमधिकारसिद्धये। तीर्थपदत्वमेवोपपादयति—अघमर्षोदसरिद्वरायाः पदमिति। अघस्य पापस्य मर्षो येन तादृशमुदमुदकं यस्याः, तादृशी या सरिद्वरा गङ्गा, तस्याः पदं स्थानमिति पदविशेषणम्। गङ्गातीरे तीरे गमने पदपर्यन्तं गच्छति। वेदानां च पुनस्ता-त्पर्ये विचार्यमाणे भगवत्पदं जानन्ति। जलेन पापनाशनमानुषङ्गिकफलत्वेनोक्तम्। चरणादन्यत्र गच्छन्त्यपि गङ्गा वेदवत्पुनस्तत्रैव प्रवेक्ष्यतीति वेदानां दृष्टान्तार्थं निरूपितम्। माहात्म्यं च यथा गङ्गायाः पदसंबन्धात्, एवं वेदप्रामाण्यमपि भगवत्प्रामाण्यादेव। 'मन्त्रायुर्वेदवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्' इति स्मृतेः[1] ॥ ४० ॥

अत्र मार्गणकर्तारः प्रपन्ना एव भवन्ति, नाऽन्यैर्मार्गणं कर्तुं शक्यते। अन्ये पुनस्तत्राऽप्यशक्ताः के-वलं ज्ञानमार्गेण चरणारविन्दमाश्रित्य तिष्ठन्तीत्याहुः—

**यच्छ्रद्धया श्रुतवत्या च भक्त्या संमृज्यमाने हृदयेऽवधार्य।**
**ज्ञानेन वैराग्यबलेन धीरा व्रजेम तत्तेऽङ्घ्रिसरोजपीठम् ॥ ४१ ॥**

यच्छ्रद्धयेति। यस्मिन् भगवति श्रद्धा आस्तिक्यबुद्धिः, श्रुतवती च भक्तिः श्रवणादिना पोषिता। ज्ञानमार्गे श्रद्धाभक्ती अन्तःकरणशोधिके। चकारात् 'यथा यथाऽऽत्मा परिमृज्यतेऽसौ' इति

---

1 मन्त्रायुर्वेदेति स्मृतिस्तु पतञ्जलेर्गौतमस्य वा सूत्रभूता बोध्या. प्रकाशः.

कीर्तनरूपयाऽपि भक्त्या संमृज्यमाने सम्यक् शोध्यमाने हृदये अङ्घ्रिसरोजपीठमवधार्य निश्चित्य तेन निश्चयात्मकेन ज्ञानेन वैराग्येण बलं यस्य, तादृशेन धीरा भवन्ति । तादृशं तेऽङ्घ्रिसरोजपीठं व्रजेम प्राप्नुम । वयं ततोऽप्यनधिकारिणोऽतस्तद्धृदये स्थितं निर्द्धारितं वयं भजेम । श्रद्धाश्रवणादिना वैराग्यसहितात्मज्ञाने जाते विदितात्मतत्त्वो ब्रह्मभूतो भवति, तदाऽक्षरं भगवत्पादपीठं तत्राऽभिव्यक्तं भवति । तदा तदुपदेशात्, तद्धृदये वा प्रविश्य, तत्तत्त्वभावं वा प्राप्य, तच्छरणं गतानि तत्त्वानि । अतश्चतुर्थी कक्षा भक्तिमार्गे ह्येषा । सा द्विधा, स्वतो हृदये भजनम्, भक्ताश्रयणं वेति । ज्ञानिनां पादाभिव्यक्त्यभावात् पीठमित्युक्तम् । स्वस्वोपयोगिरूपनिरूपणाय अङ्घ्रिसरोजपदम् । धीरभवनमेव तत्र फलम् । वस्तुतः, भगवान् भगवदाज्ञया वा कालादिः करोति, नाऽन्यथा वा । अतो भयहेत्वभावात् व्यर्थमेव प्राणी धैर्याभावात् क्लेशाननुभवति । अतः पूर्वोक्तपक्षाभावे धैर्यफलकोऽयमेव पक्षः समीचीनः । एवं सात्त्विकप्रकारे पञ्च-पक्षा निरूपिताः ॥ ४१ ॥

राजसप्रकारेणाऽप्याह । तत्र प्रथमं सकामतया शरणगतिमाहुः—

**विश्वस्य जन्मस्थितिसंयमार्थे कृतावतारस्य पदाम्बुजं ते ।**
**व्रजेम सर्वे शरणं यदीश ! स्मृतिं प्रयच्छत्यभयं स्वपुंसाम् ॥ ४२ ॥**

विश्वस्येति । यो भगवान् विश्वस्य सृष्ट्याद्यर्थमेवाऽवतीर्णः, अक्षररूपविशेषेण । ‘ प्रकृतिः पुरुषश्चोभौ परमात्माऽभवत्पुरा ’ इति निबन्धोक्तप्रकारेण यो भगवानवतीर्णः, तस्य पदाम्बुजं शरणं व्रजेम । स ह्यस्मदनुगुणः । नन्ववतारिता एव भवन्तः सम्यक्प्रकारेण, किमतः परं शरणगत्या? तत्राऽऽह—स्मृतिं प्रयच्छतीति । यद्यस्मात्कारणात् स्वपुंसां भक्तानां संबन्धि, अभयम्, न विद्यते भयं यस्मात्तादृशं स्वरूपं वा प्रयच्छति, स्मृतिं च प्रयच्छति । स्वकीयानामस्माकं वा तद्वयं प्रयच्छेदित्यवतारिता अपि वयं स्मृत्यभयहीनाश्चेत्, तदा सर्वं व्यर्थम् । भगवदीयानां वा स्मरणं भवेत् । भगवत्स्मृतिः पूर्वसिद्धस्वरूपस्मृतिः, प्रकृतोपयोगिकार्यस्मृतिर्वा । स्मृत्यभयदाता विश्वकर्ता भगवान्, तस्य चरणशरणगमने जन्मादौ सुखं भवतीति फलार्थं क्रियाव्यापृतस्य भक्तिः प्रथमा राजसी ॥ ४२ ॥

द्वितीयामाह—

**यत्सानुबन्धेऽसति देहगेहे ममाऽहमित्यूढदुराग्रहाणाम् ।**
**पुंसां सुदूरं वसतोऽपि पुर्यां भजेम तत्ते भगवन् ! पदाब्जम् ॥ ४३ ॥**

यत्सानुबन्धेऽसतीति । जगत्कर्ता भगवान्, सर्वं सृष्ट्वा, सर्वत्र प्रविष्टः सर्वेषां हृदये प्रकाशते। तथापि स न प्रतीयते, दोषवशात् । तादृशस्यैव, तमदृष्ट्वैव, केवलं हृदये वर्तत इति ज्ञात्वा, तच्चरणगमनं द्वितीयम् । दोषनिराकरणार्थं वा दोषकीर्तनम् । तत्र दोषस्य त्रैविध्यमाह । सानुबन्धे पुत्रादिसहिते, देहे गेहे चाऽसति दुष्टे ममाहमिति दुष्टाग्रहः । तत्र केवलाग्रहे यथाकथञ्चिन्निर्वाहे, धर्मार्थम्, भगवद्भजनार्थं वा आग्रहे त्रैविध्यं भवति । देहगेहयोर्वा अमत्त्वाभावे, अन्यतरासत्त्वे, उभयासत्त्वे च त्रैविध्यं भवति । अनुवादो वा । नियमेन द्वयोरसत्त्वमेव । तत्र स्थिते रूढश्चाऽऽग्रहो भवतीति तादृशानां हृदये

१ शरणागतिरूपा कक्षाम्. प्रकाशः. २ यथा कथाञ्चिद्वृत्या सर्वथा देहगेहनिर्वाहार्थम्. प्र. ३ आग्रहे त्रिष्वपदोषस्य नियमेन सिद्धत्वाद् तस्याऽनुवाद एव, असत्त्व देहगेहयोरेवाऽभिप्रेतम् प्र.

पदाब्जं सुदूरम्। यद्यपि भगवान् पुर्यामेव वसति, तथापि तत्र चरणारविन्दौ[1] न स्तः। केवलमन्तःकरणप्रेरणार्थं हस्तौ वा, इच्छामात्रं वा, प्रकटीकरोति। अतो येषामभिमानस्तेषु भक्तिर्नाऽस्तीति मुख्यः पक्षः। संसाराभिमानाभावेन केवलभगवदीयाभिमाने गौणः पाक्षिको[2] भगवानस्तीत्यर्थः। सर्वथाभिमानाभावे सर्वथाऽस्तीति सिद्धान्तः। तस्मात् प्रकृते तादृशप्रकारेण कचित्प्रकाशाप्रकाशौ कुर्वतो भगवतः पदाब्जं शरणं व्रजेमेति॥ ४३॥

एतादृशा अपि यदि भगवद्भक्तानां सेवका भवेयुः, तदाऽपि तृतीया राजसी भक्तिर्भवेत्, यथा भक्तभक्ताः; तेऽपि भक्ताः भगवच्चरित्राभिज्ञाश्चेत्। नन्वयं सुगमः पक्षः किमिति नाऽऽश्रीयते? तत्राऽऽह—

**तान्वै ह्यसद्वृत्तिभिरक्षिभिर्ये पराहृतान्तर्मनसः परेश!।**
**अथो न पश्यन्त्युरुगाय! नूनं ये ते पदन्यासविलासलक्ष्याः॥ ४४॥**

तान्वै ह्यसद्वृत्तिभिरिति। तान् भगवद्भक्तान् ते न पश्यन्त्यपि, भजनं दूरे। तत्र हेतुः—असद्वृत्तिभिरक्षिभिः पराहृतान्तर्मनस इति। असत्स्वेव वृत्तयो येषाम्, तान्यासुराणीन्द्रियाणि। आसुराणि स्वभावतोऽसत्पदार्थानेव गृह्णन्ति, यथा मक्षिका अमेध्यं गृह्णाति, न तु चन्दनम्। अत एव तादृशैरक्षिभिरिन्द्रियैः पराहृतं वशीकृतमन्तःकरणं मनश्च येषाम्। 'इन्द्रियैर्विषयाकृष्टैः' इति न्यायेन इन्द्रियाणि विषयैराकृष्यन्ते, इन्द्रियैश्च मन आकृष्यते। मनसो रूपद्वयमस्ति, आन्तरं बाह्यं च। आन्तरं यदधीनं तद्वशो भवति पुरुषः। तदाह—पराहृतान्तर्मनस इति। तर्हि तेऽप्येके स्वतन्त्राः कुशलिन इति, किं तेषामेतददर्शनेनेत्यत आह—परेशेति। परे ब्रह्मादयस्तेषामपीशेति संबोधनं तान्नाशयितुं भगवांस्तथाकरोतीति ज्ञापयति। अथो अथ, अतो हेतोस्तान्न पश्यन्ति। पूर्वेण संबन्धः। ननु दर्शनाभावः कथमुच्यते? दृष्ट्वाऽपि परं न भजन्तीत्येव मन्तव्यम्, तत्राऽऽह—उरुगायेति। उरुभिर्गीयत इति। यदि ते तान् पश्येयुः, तदा यथा भवान् सर्वैरेव गीयते, तथा तैरपि गीतः स्यात्। तदभावादेवं लक्ष्यते, नूनं तैस्ते न दृष्टा इति। तान् साधारण्यव्यावृत्त्यर्थं विशिनष्टि—ते पदन्यासविलासलक्ष्या इति। ते पदयोर्न्यासः, तत्र यो विलासः, तेन लक्ष्याः। तेषां लक्षणं भगवत्पादन्यासविलासः। ते तदैव ज्ञायन्ते, यदि भगवांस्तेषां स्थाने गमनार्थम्, तेषु स्वविलासस्थापनार्थं च, विलासेन पदविन्यासं करोति। तेषां हृदये वा पदस्थापनार्थं विलासं प्रेमादिकं करोति, तदा ते ज्ञाता भवन्तीत्यर्थः। भगवत्पदसंबन्धादेव येषां महत्त्वम्, न प्रकारान्तरेण। अतस्तस्य लक्ष्यार्थस्य गुप्तत्वात् तान्न जानन्तीत्युक्तम्। विलासलक्ष्म्या इति पाठे विलासस्य या लक्ष्मीः शोभा तस्यास्ते। ते[3] विलासलक्ष्मीसंबन्धादेव प्रसिद्धा इति पूर्ववत्। अनेन तादृशभगवद्भक्तज्ञाने तद्द्वारा भगवद्भजनं तृतीयं राजसम्, तेषामेव ज्ञानं वा॥ ४४॥

चतुर्थमाह—

**पानेन ते देव! कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये।**
**वैराग्यसारं प्रतिलभ्य बोधं यथाऽञ्जसाऽन्वीयुरकुण्ठधिष्ण्यम्॥ ४५॥**

पानेनेति। हे देव! ते कथासुधायाः पानेन प्रवृद्धभक्त्या कृत्वा ये विशदाशयाः, ते वैराग्यसारं

---

१ चरणशब्दस्य पुंलिङ्गत्वम्, उपमितिसमासे पूर्वपदार्थप्राधान्य चाऽभिप्रेत्य पुंलिङ्गनिर्देशः. प्र. (पुस्तकेषु तु माय. 'चरणारविन्दे' इत्येवोपलभ्यते.) २ पाक्षिको वा क. ३ तेन. ग.

बोधं प्रतिलभ्य यथा अनायासेन ते अकुण्ठधिष्ण्यमीयुः, तथा परेऽपीयुरिति संबन्धः । एते तु राजसाद्राजसेषु निकृष्टाः, ये अन्तःकरणशुद्ध्यर्थमन्तःकरणतापत्रयनिवारणाय भगवत्कथां पीत्वा तेन प्रक्षालितान्तःकरणाः । प्रक्षालनार्थं च मध्ये भक्तिमपि कल्पयित्वा, तेनापि शुद्धान्तःकरणा एव । एव साधनसाध्यभक्तिमन्तःकरणशुद्ध्यर्थमेव ये नियुञ्जते, ते कर्ममार्गा इव राजसप्रथमाः । शुद्धे चाऽन्तःकरणे वैराग्यमेव सारभूतं यस्य । येन ज्ञानेन विषयवैतृष्ण्यं भवति, तादृशं ज्ञानं प्राप्य । अञ्जसा सामस्त्येन ते अकुण्ठधिष्ण्यं कृत्रिमवैकुण्ठमीयुः । देवेति संबोधनात् विष्णुलोकं गच्छन्तीत्युक्तं भवति। ध्रुवस्थानं वा। अकुण्ठमिति न कदाचिदपि कुण्ठितम्, तत्र सर्वदा भोगः सिद्ध एव। अथवा, तेऽक्षरसायुज्यं प्राप्नुवन्ति॥४५॥

तथा केवलज्ञानिनोऽपीत्याह—

**तथा परे चाऽऽत्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम् ।**
**त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्न तु सेवया ते ॥ ४६ ॥**

**तथा परे चेति** । फलतो भगवदीयत्वाद्भक्तत्वम् । **परे** अन्ये, इदानीं न भगवदीयाः । चकारात् भगवदीया अपि केचित् । स्वभावगुणानां बलिष्ठत्वादात्मपर्यवसायी आत्मैवविषयको वा । '.यतो यतो निःसरति ' इति प्रकारेण निरन्तरास्थितिरूपसमाधिपर्यन्तज्ञानेन पूर्वतामसवासनां जित्वा, त्वामेव विशन्ति । परं पुरुषरूपम् । विराट्सायुज्यं प्राप्नुवन्तीत्यर्थः । एतदेव वा अकुण्ठधिष्ण्यम् । चतुर्विंशतिप्राकृतसंबन्धाद्विमुक्ताः पुरुषं प्रकृतिभर्तारं वा ईयुः । त्वामेवेति पुरुषान्तरव्युदासः । साधनभक्तापेक्षया फलेभक्ताहीना इत्याह—तेषां श्रमः स्यादिति । साधने भक्तेरप्रवेशात् ॥ ४६ ॥

एवं सर्वानुक्त्वा, तामसभेदान् स्वान् मन्यमानाः, आत्मन एव त्रिविधानाहुः—

**तत्ते वयं लोकसिसृक्षयाऽद्य त्वयाऽनुसृष्टास्त्रिभिरात्मभिः स्म ।**
**सर्वे वियुक्ताः स्वविहारतन्त्रं न शक्नुमस्तत्प्रतिहर्तवे ते ॥ ४७ ॥**

**तत्ते वयमिति** । तत्तस्मात्कारणात्, ते वयं त्वदीयास्तामसा वा, लोकसिसृक्षया त्वयाऽद्य सृष्टाः। त्रिभिरात्मभिरिति आत्मस्थाने स्थापितैस्त्रिभिर्गुणैरहङ्कारैर्वा । त्रिविधजीवैरित्येके । अस्मिन् पक्षे प्रत्येकं भेदत्रयम् । अनु पश्चात् सृष्टा इति परोक्षेण सृष्टा ज्ञानरहिता जाताः । अद्येति सृष्ट्यन्तरव्युदासः । अन्यदा तु ' एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ' इति भगवत एव साक्षात् सर्वं भवतीति तन्निवारणार्थमद्येत्युच्यते । अत एव त्रिभिरात्मभिरित्युक्तम् । अतः सर्वे वियुक्ताः । चकारादस्मत्सामग्र्यपि सर्वा भगवता त्रिविधा सृष्टा, अतोऽपि वयं वियुक्ताः । अत एव स्वस्य, तव विहारतन्त्रं विहरणसामग्रीम्, न शक्नुमः । ते तुभ्यम्, प्रतिहर्तवे प्रतिहर्तुम् । ' तुमर्थे से से....' इत्यनेन तवे प्रत्ययः । तत् प्रतिहर्तुम्, यदर्थं वयं सृष्टाः तत्प्रयोजनं प्रतिहर्तुं दातुं समर्थयितुमिति यावत् । तत् किमित्याकाङ्क्षायाम्, तत् प्रसिद्धं स्वविहारतन्त्रमिति संबध्यते । तत्स्वविहारतन्त्रं प्रतिहर्तुं न शक्नुम इत्यर्थः । तामसमध्यमा एते । यदर्थं भगवता सृष्टास्ते सर्वे दुरात्मानः स्वस्वाभिमानेन नष्टा भगवत्कार्यमकृत्वाऽपि स्थिता इत्येतादृशा भक्तास्ता-

१ ल्यब्लोपे पञ्चमी. प्र २ समाधिरिति शेषः. प्र. ३ प्रकृतिबन्धविवरणमिदम्. प्र. ४ पञ्चदशानां भक्ताः प्र.
५ स्वकर्तृकम् प्र.

मसमध्यमाः । भगवता भिन्नतया सृष्टा इति तेषां मध्यमत्वम्, अन्यथा अधमा एव स्युः ॥ ४७ ॥

तादृशा अपि वयं जाता इत्याहुः—

**यावद्बलिं तेऽज ! हराम काले यथा वयं चान्नमदाम यत्र ।**
**यथोभयेषां त इमे हि लोका बलिं हरन्तोऽन्नमदन्त्यनूहाः ॥ ४८ ॥**

यावद्बलिमिति । हे अज ( न जायते इति संबोधनम् ) ब्रह्माद्युत्कृष्ट, यावत्ते बलिं हराम, तावद्यथा वयमन्नमदाम, तथा त्वया कर्तव्यमित्यभिप्रायः । यावदिति प्रलयावसानता, न तु सृष्टिमात्रम् । काले स्वस्वावसरे । यथा वयं चाऽन्नमदाम, यत्र चाऽन्नमदाम, यथा वा उभयेषां तवाऽस्माकं च इमे सृष्टा लोकाः बलिं हरन्ति, निष्प्रत्यूहाः सन्तःस्वयमन्नमदन्ति, तथा चक्षुः परिदेहीत्यग्रेण संबन्धः । अत एवै-तेषां वैषम्यम् । केचन स्वार्थनिरपेक्षा भगवदर्थमेव कार्यं कर्तुमिच्छन्ति । केचित्स्वार्थापेक्षिणोऽपि भगवदर्थमेव कुर्वन्ति कार्यम्, भगवानेव पश्चाद्दास्यतीति । केचित्तु स्वस्य, स्वसेवकानां च, भगवतश्च कार्यं तुल्यतया कर्तुं वाञ्छन्ति, त एते ॥ ४८ ॥

ननु किमर्थमेवं प्रार्थ्यते ? प्रथमतोऽस्मदर्थं ब्रह्माण्डं कुरुत, पश्चात्स्वार्थमित्याशङ्क्याऽऽहुः—

**त्वं नः सुराणामसि सान्वयानां कूटस्थ आद्यः पुरुषः पुराणः ।**
**त्वं देव ! शक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविमादधेऽजः ॥ ४९ ॥**

त्वं नः सुराणामिति । नोऽस्माकं सुराणां देवानां सान्वयानां सपरिकराणां त्वमेव आद्य उत्पा-दकः । यद्यपि वयमपि स्वकार्योत्पादकाः, तथापि वयं विकृताः, भवांस्तु कूटस्थोऽविकृतः । किञ्च, पुरुषो भवान् स्वतन्त्रः, वयं प्राकृता अस्वतन्त्राः । किञ्च, भवान् पुराणः पूर्वसर्ववृत्तान्ताभिज्ञः, वयं नूतना आधुनिकाः । अतस्त्वयैवाऽस्माकं सर्वं कर्त्तव्यम् । किञ्च, पुत्ररूपा वयं तव । अतस्त्वया प्रथमतो वयं पालनीया इत्याहुः—हे देव ! त्वं देवरूपायां शक्त्यां मायायाम् । गुणाः कर्माणि च योनि-र्यस्याः । गुणकर्मात्मिका योनिः, गुणरूपाः कर्मात्मकाश्च ततो जायन्त इति । तस्यामजायां बर्कराद्युत्पा-दनार्थं रेत आदधे । अजाशब्दोऽत्र न यौगिकः, नाऽपि रूढः, किन्तु कल्पनोपदेशः । 'कल्पनोपदे-शाच्च मध्वादिवदविरोधः' इत्यधिकरणेनाऽयमर्थः समर्थितः । अन्यथाऽत्र मायाया उत्पत्तेरुक्तत्वात् योगो विरुध्येत । रूढिरप्याकृत्यभावात् । सृष्टौ कामः प्रधानमिति तन्निरूपणार्थमजशब्दकल्पनाऽत्र निरूपिता । कविं महत्तत्त्वम् । पूर्वावस्था रेतः, उत्तरावस्था कविरित्युभयोः साजात्याभावे कार्यमेकविधं न भवेदिति भगवतोऽप्यजत्वं निरूपितम् । अयमेव तामसहीनभावो भक्तेः, यद्भगवत एवंप्रकारेण निरूपणम् ॥ ४९ ॥

ततस्तत्सजातीया एव वयमुत्पन्ना इत्याह—

**ततो वयं सत्प्रमुखा यदर्थे बभूविमाऽऽत्मन् करवाम किं ते ।**
**त्वं नः स्वचक्षुः परिदेहि शक्त्या देव ! क्रियार्थे यदनुग्रहाणाम् ॥ ५० ॥**

---

१ भगवत्सृष्टत्वाभावे. प्रकाशः. २ चक्षुरभावादेव. प्र. ३ साहाय्यकल्पनाप्रयुक्तयौगिकप्रयुक्त इत्यर्थः. प्र.

ततो वयमिति । सत्त्वप्रमुखाः सात्त्विकाहङ्कारप्रमुखाः । यस्य भगवतः कार्यार्थं बभूविमोत्पन्नाः । तर्ह्यन्यानुत्पादयिष्यामीत्याशङ्क्याऽऽह—हे आत्मन्निति । सर्वेषां त्वमात्मा । न हि कार्याणां स्वभावतः कश्चन गुणो दोषो वास्ति, त्वत एव जातत्वात्त्वद्रूपत्वाच्च।अतोऽन्यानप्युत्पाद्य तेषु यदि शक्तिं दास्यसि, तदा तेऽप्युपयुक्ता भविष्यन्ति । अतो लाघवादस्मभ्यमेव तत्सामर्थ्यं देयमिति भावः । नन्वनाज्ञाकारिणो भवन्तः, यतोऽप्रवृत्ता एव तूष्णीं स्थितास्तत्राऽऽह—करवाम किं त इति । ते तुभ्यं किं करवाम । आज्ञापनाभावात्, विशेषतोऽज्ञानाद्वा तूष्णीं स्थितिः । अतो वस्तुतो न दुष्टत्वम् । तर्हीदानीं ब्रह्माण्डनिर्माणं कुरुतेत्याशङ्क्याऽऽहुः—त्वम इति । नोऽस्माकं त्वमेव सर्वार्थे तत्र साधकं स्वचक्षुः परिदेहि, येन चक्षुषा वयं निष्पादिताः । तत्र क्रियाशक्तिरेवाऽस्मासु प्रतिष्ठिता, न ज्ञानशक्तिरिति । अतः स्वचक्षुः परिदेहि । परितो दानम्, सर्वेभ्यः क्रियाशक्त्या सह पुनर्देयम् । विश्कलिततयोभयप्राप्तावपि न कार्यसिद्धिः । अतः स्वशक्त्या सह स्वचक्षुर्देहीति । ननूभयदानं सहदानं वाऽशक्यम्, उभयोरेकदा स्थित्यभावात्, एकं शब्दे अपरं क्रियायामित्याशङ्क्याऽऽह—हे देवेति । यद्यपि लौकिकन्यायेन, लौकिकेन वा, नैवं कर्तुं शक्यम्; तथापि भवान् देवः; अतोऽलौकिकसामर्थ्यात् मिलितमपि दातुं शक्नोतीति । ननु नियमेन भवद्भ्य एव देयमिति कोऽयं निर्बन्धस्तत्राऽऽह—क्रियार्थे यदनुग्रहाणामिति । ब्रह्माण्डकरणार्थमेव यस्य भगवतोऽनुग्रहो येषाम् । येनाऽनुग्रहेण वयमुत्पादिताः, तेनैवाऽनुग्रहेण चक्षुः शक्त्या सह देयमित्यर्थः ॥ ५० ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे पञ्चमाध्यायविवरणम् ।

---

१ अतस्त्वम्. ख. च.

# षष्ठाध्यायविवरणम्।

* एवं भगवतः सृष्टौ भूतोत्पत्तिर्निरूपिता।
कालोत्पत्त्यर्थमधुना ब्रह्माण्डोत्पत्तिरुच्यते ॥ १ ॥
स्वशक्तिदानभोगौ तु विषयत्वार्थमुच्यते।
विषयानन्त्यसिद्ध्यै हि माहात्म्यं विनिरूप्यते ॥ २ ॥
एवं भगवतो मात्राश्चतुर्धा विनिरूपिताः।
स्पर्शो भगवतो नाऽस्ति तद्भावादेहवद्भुजिः ॥ ३ ॥

एवं पूर्वोऽध्यायान्ते तत्त्वानां प्रार्थनमुक्तम्, तत्प्रार्थनमुपसंहरति—

## ऋषिरुवाच।

**इति तासां स्वशक्तीनां सतीनामसमेत्य सः।**
**प्रसुप्तलोकतन्त्राणां निशाम्य गतिमीश्वरः ॥ १ ॥**

---

### गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृतः प्रकाशः।

* अथ षष्ठाध्यायं विवरिषवोऽध्यायसङ्गतिं स्फुटीकर्तुं पूर्वाध्यायार्थमनुवदन्तो ब्रह्माण्डोत्पत्तिमुखेन मात्राप्रयोजनं सोपपत्तिकमाहुः—एवमित्यादि। एवं वेदोक्तभूतव्याप्तितया भगवद्धर्मत्वेन रूपेण भगवत्कर्तृकसृष्टौ भूतोत्पत्तिः पूर्वाध्याये निरूपिता। अधुना अस्मिन्नध्याये भोग्या मात्रा निरूपणीया इति भोगसाधकचेष्टारूपकालोत्पत्त्यर्थं तदाधारभूतब्रह्माण्डस्योत्पत्तिरुच्यते, तेनाऽवसरः सङ्गतिरित्यर्थः। ननु भवत्वेवम्, तथाप्येतेषु भोग्यत्वाद्भगवद्भोगस्यैव वक्तव्यत्वादेतेभ्यः शक्तिदानमेतेषां भोगश्च किमित्युच्यत इत्याकाङ्क्षायामाहुः—स्वशक्तीत्यादि। ब्रह्माण्डोत्पत्तिर्योच्यते, सैतेषां भगवद्विषयत्वार्थमुच्यते। ब्रह्माण्डे चैतेऽवयवभूताः; अवयवद्वारा चाऽवयविनो भोगः; स च शक्तिं विना न भवतीति विषयत्वार्थमेवैतावुच्येते इत्यर्थः। अत्र गमकमाहुः—विषयेत्यादि। हि यतो हेतोरेतदर्थमेतन्माहात्म्यं लोकपालत्वरूपमुच्यते, ततो ज्ञायते विषयत्वार्थमेवैताविति। नन्वत्र ब्रह्माण्डं तु शरीरत्वाद्भोगायतनम्, तत्र चैतान्येव तत्त्वानि प्रविष्टानि, तेषामेव भोग्यत्वं मात्रात्वार्थं वक्तव्यम्, तदत्र कथा विधयेत्याकाङ्क्षायामाहुः—एवमित्यादि। एवं ब्रह्माण्डोत्पत्तिशक्तिदानभोगमाहात्म्यप्रकारेण चतुर्धा भगवतो मात्रा विनिरूपिताः। ब्रह्माण्डे पृथिवीप्राधान्याद्गन्धमात्रा, शक्तिदानेऽन्योन्यासादनस्य रसप्राधान्याद्रसमात्रा, भोगे रूपेण प्रवेशाद्रूपमात्रा, माहात्म्ये शब्दप्राधान्याच्छन्दमात्रेत्येवं विशेषेणोक्ता इत्येवंरूपेणैषां भोग्यत्वमित्यर्थः। ननु स्पर्शोऽत्र कुतो नोक्त इत्यत आहुः—स्पर्श इत्यादि। 'ये हि संस्पर्शजा भोगा दुःखयोनय एव ते' इति वाक्यात् स्पर्शस्य दुःखजनकत्वात् भगवतश्च तदभावाद् दुःखजनकस्पर्शो नास्तीत्यतो नोक्त इत्यर्थः। ननु द्वितीयस्कन्धे स्पर्शस्य प्रत्यासत्तित्वव्यवस्थापनात्तदभावे भोगान्तरस्य कथं सिद्धिरित्यत आहुः—तद्भावादित्यादि। तद्भावात्। भावो व्याप्तिः, तस्य भगवतो ब्रह्माण्डे व्याप्तेर्यथा तत् भगवतो देहस्तथा भुजिर्भोगोपि तद्व्याप्तेरेवेति न तत्र प्रत्यासत्तित्वेन तदपेक्षेत्यर्थः। विदुरमैत्रेयसंवादे तु हेतुहेतुमद्भावस्य स्फुटत्वात् सैव सङ्गतिरिति तां व्याख्यानावतरणमुखेन बोधयन्ति—एवमित्यादि।

* इतीति । एतावत्येव प्रार्थना । तासां गतिं निशाम्य निरीक्ष्य शक्तिं बिभ्रद्युगपदाविशदिति संबन्धः । तासु भगवत्प्रवेशो न युक्त इत्याशङ्कयाऽऽह—स्वशक्तीनामिति । तासामिति । स्त्रीत्वेन तासां विज्ञापनं न दोषाय, स्वस्यैव सामर्थ्यरूपत्वात् । तासां कृत्यभावे स्वसामर्थ्याभाव एव भवेत् । स्त्रीरूपाश्च ताः । भार्यासक्तं स्वयमेव करोति कारयति च । शक्तित्वादेव भिन्नतया स्थितिर्न दोषाय । न हि ता वाक्येन मिलन्ति, स्वेनैव तु मिलन्ति । पुरुषालिङ्गिता एव ता एकीभवन्ति, न स्वभावतः । समानप्रतिपत्तेर्न वैमनस्यम् । अत एव स्वभावतः, असमेत्य अमिलित्वा, सतीनां विद्यमानानाम् । किञ्च, स्वप्रवेशव्यतिरेकेण तासु विद्यमानमपि रजो न प्रकटीभवति । तदाह—प्रसुप्तलोकतन्त्राणामिति । प्रकर्षेण सुप्तानि लोकानां तन्त्राणि रचना यासु; तन्त्रं समूहो वा । प्रसुप्ता वा ये लोकाः । येषां जीवानां कर्म न प्रबुद्धं तदधीनास्ताः । प्राण्यदृष्टप्रेरिता एव ताः कार्याणि कुर्वन्ति । समष्टेर्गूहत्वेन व्यष्टीनामेव मुख्यत्वमिति पक्षः । पक्षद्वयमप्यत्र भगवतः पुरुषरूपद्वयसम्पत्त्यर्थं निरूप्यते । तदुक्तम्—असमेत्य सतीनां प्रसुप्तलोकतन्त्राणामिति । तासामन्योन्यमेलने ब्रह्माण्डोत्पत्तिः । कर्मप्रबोधने व्यष्टीनामुत्पत्तिः । एतत्सर्वं निशाम्य ज्ञात्वा अग्रे प्रकारभूतां गतिं च निशाम्य । सर्वप्रकारकरणसामर्थ्यार्थमाह—ईश्वर इति ॥ १ ॥

एवं समर्थो[2] निश्चित्य यत्कृतवांस्तदाह—

**कालसंज्ञां तदा देवीं बिभ्रच्छक्तिमुरुक्रमः ।**
**त्रयोविंशतितत्त्वानां गणं युगपदाविशत् ॥ २ ॥**

× कालसंज्ञामिति । काल इति संज्ञा यस्याः । कालोऽप्येका भगवच्छक्तिः, अन्यथा पुरुषद्वयप्रवेशे शक्तिषु रसाभासः स्यात् । कालेन संज्ञा बोधो यस्या सा, तां वा । मर्यादारूपा सा शक्तिः सृष्टिकाले प्रबुध्यते, अन्यास्तु भगवता प्रबोध्यन्ते । तया सह भगवद्दर्शनेन तासां मात्सर्यं मा भवत्विति देवीमित्युक्तम् । सा हि देवतारूपा अतिसूक्ष्मा, तया विना कर्मप्रबोधो दुर्घट. । कर्म कालाधीनमेव, अत एव काले कर्मविधानम् । तस्या अप्रयोजकत्वं निराकरोति—शक्तिमिति । बिभ्रदिति प्रवेशस्वरूपव्याप्त्यर्थमुक्तम् । तत्र भगवतोऽतिसामर्थ्यं वक्तुम्, तादृशसामर्थ्यं भगवतो वर्तत इति ज्ञापयति—उरुक्रम इति । अद्भुतचरित्रत्वमुरुक्रमे सिद्धम्, तेनैवाऽद्भुतचरित्रेण त्रयोविंशतितत्त्वानां गणं युगपदाविशत् । प्रकृतिपुरुषौ परित्यज्य शिष्टास्त्रयोविंशतिर्भवन्ति । युगपत्प्रवेशोऽद्भुतचरित्रम् । तप्तयोः सन्धिरिव नैकतरप्रवेशे कार्यसिद्धि. । गणप्रवेशो गणादेव कार्यमिति सूचयितुम् । अत्र प्रवेशो न जलादेरिव, किन्तु

---

**प्रकाशः ।**

* न युक्त इति। प्राकृतत्वात् पुंरूपत्वाच्च न युक्त। स्त्रीरूपा इति। पूर्वं स्वकार्ये पुंरूपत्वेपि अग्रिमकार्ये शक्त्यभावेन सुद्युम्नवत् स्त्रीरूपा । भार्यासक्तमिति । भार्याया स्थापितं कार्यम् । भिन्नतयेति । सपत्नीवदितरेतरविरुद्धतया । पक्षद्वयमिति । समष्टिमुख्यत्व व्यष्टिमुख्यत्व चेति पक्षद्वयम् ।

× कालसंज्ञामित्यत्र । तप्तयोरित्यादि । तप्तयोः कपालयोर्यथा संधिः श्लेषो भवति, न त्वेकतरतापे; तथाऽत्रेत्यर्थः ।

---

[1] सर्वप्रकारेण सामर्थ्यमाह ग. [2] सर्वसमर्थो. घ.

तेजस इवाऽयोगोलादावावेशः यथा गणकार्यं भगवत्कार्यं भवति, अन्यथा भगवच्चरित्रताऽस्य सर्गस्य न स्यात्। तदाह—आविशदिति ॥ २ ॥

ततः किमत आह—

**सोऽनुप्रविष्टो भगवांश्चेष्टारूपेण तं गणम्।**
**भिन्नं संयोजयामास सुप्तं कर्म प्रबोधयन् ॥ ३ ॥**

* **सोऽनुप्रविष्ट इति**। यद्यपि ताभिः क्रियया सह ज्ञानमेव प्रार्थितम्, न सहप्रवेशः। तथापि भगवदेककार्यं न ताभिः सेत्स्यतीति भगवान् स्वयमेव प्रविष्टः। अतः परं प्रार्थितस्य प्रयोजनाभावान्न प्रार्थितं दत्तम्। ननु स्वभावत एव सर्ववस्तुषु वस्तुस्वरूपो भगवानास्ति, तथापि चेत्कार्यं न सिध्यति, किं प्रवेशेनाऽपि भवेत्? तत्राऽऽह—चेष्टारूपेणेति। चेष्टा प्रयत्नः। कार्योपयोगिज्ञानेच्छाप्रयत्नरूपेण, केवलप्रयत्नरूपेण वा तत्र प्रविष्टः। प्रविश्य पुनस्तं गणं भिन्नं संयोजयामास। सृष्टाएव कार्यजननसमर्थास्ते सृष्टाः, परं भिन्ना इति योजनमेव कर्तव्यम्। सम्यक् योजनं यथा कार्यमुपपद्यते। संङ्गे नीतायाः शक्तेः प्रयोजनमाह—सुप्तं कर्म प्रबोधयन्निति। प्राणिनां यत् सुप्तं कर्म, तत् कालशक्त्या प्रबोधयन्। प्रबोधनप्रवेशयोः समानकालत्वे उभयविधं कार्यमेकदा सिद्ध्यति। प्रबोधनस्य भिन्नहेतुकत्वान्न प्रधानक्रियासंबन्धः ॥ ३ ॥

ततो यज्जातं तदाह—

**प्रबुद्धकर्मा दैवेन त्रयोविंशतिको गणः।**
**प्रेरितोऽजनयत्स्वाभिर्मात्राभिरधिपूरुषम् ॥ ४ ॥**

**प्रबुद्धकर्मा दैवेनेति**। सुप्तैः सह करणमप्यशक्यम्। प्रबुद्धे साहाय्यमपि तेन सिद्ध्यति। **दैवेनेति** देवतारूपया शक्त्या। क्रिया प्रबोधे स्वार्थे भवेदिति नपुंसकनिर्देशः। तया सहितं भगवद्रूपं वा दैवशब्देनोच्यते। सर्वत्र कर्मप्रबोधार्थं पुनस्त्रयोविंशतिको गण इत्युक्तम्। पुनर्भगवत्कार्यान्तरमाह—**प्रेरित इति**। मेलनं प्रेरणं च भगवत्कार्यम्। भगवतः प्रवेशात्तस्य गणस्य व्यापकता जाता। ततो गणांशैरस्यैरेव ब्रह्माण्डनिर्माणं जातमित्याह—स्वाभिर्मात्राभिरिति। अधिपूरुषं ब्रह्माण्डम्। पुरुषमधि पुरुषशरीरत्वात्। पूरुषशब्दोऽप्यस्ति। पुरुषादप्यधिकं वा, आवरणानामपि जननात्। भगवत्प्रेरणया गणेन कृतत्वात् भगवत्कृतमेव ॥ ४ ॥

एवं ब्रह्माण्डसृष्टिमुक्त्वा द्वितीयपुरुषमुपपाद्य तृतीयमुपपादयितुं तत्रैव पुनः कार्यमाह—

**परेण विशता स्वस्मिन् मात्रया विश्वसृड्गणः।**
**चुक्षोभाऽन्योन्यमासाद्य यस्मिँल्लोकाश्चराचराः ॥ ५ ॥**

---

प्रकाशः

* **सोन्वित्यत्र**। प्रार्थितस्येति। प्रार्थितस्य ज्ञानस्य। उभयविधमिति। समष्टिव्यष्टिरूपम्। प्रबोधनस्येत्यादि। कर्मप्रबोधनस्य कालाख्यचेष्टाहेतुकत्वान्न मूलक्रियया तस्य कार्यस्य संबन्धः। तथा चोभयविधमपि कार्यं कालेनैव भगवान् कृतवानित्यर्थः।

* **परेण विशतेति** । स्वस्मिन् विशता परेण भगवता हेतुना कृत्वा विश्वसृङ्गणश्चुक्षोभ । परं मात्रया, एकदेशेन अन्तः स्थितेन, अन्यथा ब्रह्माण्डभेदः स्यात् । अन्तःकार्यार्थमेव स्वस्मिन् विशतेत्युक्तम्, अन्यथा भगवत्प्रवेशेन क्षुब्धो जात इति वदेत् । अतः प्रवेशेनाऽक्षोभ एव । तदैकं ब्रह्माण्डं निष्पन्नम् । यदा पुनः स नियामकेन रूपेण, भिन्नरूपेण वा स एव गणः स्पृष्टः, तदा मध्ये सहस्रधा विदीर्णश्चुक्षोभ, अन्यथा व्यष्टिपुराणि न सृष्टानि भवेयुः । क्षोभफलमाह—**अन्योन्यमासाद्येति** । स हि विश्वसृजां गणः, विश्वसृष्टिस्तस्य स्वतः कार्यम् । अत एकस्मिन्नपि व्यष्टौ सर्वतत्त्वानां कार्यसिद्ध्यर्थमन्योन्यमासाद्य चुक्षोभ । एकस्मिन्नपि द्वाविंशतितत्त्वानां प्रवेशः । एवं प्रस्तारे आनन्त्यं भवत्याकृत्यधिकरणन्यायेन । अतस्तदर्थमेवाऽन्योन्यासादनम् । ततो यज्जातं तदाह—यस्मिन्नन्योन्यासादनपूर्वकक्षोभयुक्ते गणे चराचरा एव लोकाः ॥ ५ ॥

एवं समष्टिव्यष्टिदेहानामुत्पत्तिमुक्त्वा तत्र सर्वत्र भगवत्प्रवेशार्थं जीवानामप्रवेशः, तत्त्वान्यपि भगवत्प्रवेशार्थं सर्वसामग्रीं सम्पादयन्ति स्थितानीत्याह—

**हिरण्मयः स पुरुषः सहस्रपरिवत्सरान् ।**
**आण्डकोश उवासाऽप्सु सर्वसत्त्वोपबृंहितः ॥ ६ ॥**

× **हिरण्मय इति** । स हि ब्रह्माण्डात्मा हिरण्मयः सुवर्णात्मकः । पृथिव्यप्तेजसां समानांशतया अन्योन्याभिभवाभावेन यत्कार्यं तत्सुवर्णमित्युच्यते । जलाधिक्ये रौप्यम्, पृथिव्याधिक्ये त्वन्ये धातवः, द्वयोः कारणप्रवेशे मृण्मयानि । मृदस्तेजसाऽतितापे सिकताः, मध्यतापे पाषाणाः, अल्पतापे त्विष्टकाः । जीवसंबन्धेन स्थावरास्थिभेदाः काष्ठादयः । तत्र स विराट्पुरुषो हिरण्मयः, सुवर्णप्रतिमावत् । स एव पुरुषो देहरूपेण, पुरुषसहितो वा, सहस्रपरिवत्सरपर्यन्तं स्वयमण्डात्पृथग्भूत एव, नालिकेरफलवत्, तस्मिन्नेवाऽण्डकोशे अधस्तात्स्थितगर्भोदके, देहात् स्वत एव सृष्टोदके, स्वसृष्टे वा उदके, शयनं कृतवानित्याह—उवासाऽप्स्विति। व्यष्टीनामपि तदा शयनमेवेत्याह—सर्वसत्त्वोपबृंहित इति । सर्वाणि सत्त्वानि जीवयद्देहाः सदंशत्वात्त-

---

प्रकाशः ।

* परेणेत्यत्र । तृतीयमिति । व्यष्टिसमष्टिपुरुषाख्येषु जीवभेदेषु तृतीयम् । अन्यथेत्यादि । सर्वांशेन पृथक् क्षोभे तेषां नानात्वान्नानाब्रह्माण्डानि स्युरित्यर्थः । तदेति । स्वत एकदेशेन क्षोभे । आकृत्यधिकरणन्यायेनेति । इदमधिकरणं पूर्वतन्त्रे स्मृतिपादेऽस्ति । तत्र व्यक्तीनामानन्त्याद्वैलक्षण्याच्चैकत्र शब्दसंबन्ध इतरबोधो न भवतीत्यतः सर्वत्राऽविशिष्टायामेकस्यामाकृतौ संबन्धोऽङ्गीकृतः । स यथा आकृतिद्वारा सर्वव्यक्तिषु संबध्यते, तथाऽत्रैकैकस्मिन् द्वाविंशतिप्रवेश एकैकस्मिन् संबध्यमानं त्रयोविंशतित्वमुक्तन्यायेनाऽनन्तव्यष्टिसंबद्धं भवतीत्यर्थः ।

× हिरण्मय इत्यत्र । पृथिव्यप्तेजसामित्यादि । एतेन सुवर्णस्य तैजसत्वं न मूलाभिप्रेतम्, मूलेऽन्योन्यासादनोत्तरमुक्तत्वात् । द्वयोः कारणप्रवेश इति । जलतेजसोः कारणत्वेन रूपेण कपालवत् प्रवेशे । इदमेव 'आत्मकत्वानुभूयस्त्वात्' इति सूत्रेणोक्तम् । तर्हि मृदः कुतो नाना भेदा इत्यत आहुः—*मृद इत्यादि* । अत्र स्थूलात् सूक्ष्मोत्पत्तेरतितापे पांसुपर्यन्त्वा (!) न तु तदुत्तरं पुनः संयोग इति मध्यमेषु पिठरपाक एवेति बोद्धव्यम् ।

त्वानीत्युच्यन्ते। तैरुपबृंहितः सबद्ध। नारायणोदर एव सर्वाणि भूतानि स्थितानीत्यर्थ। अस्मिन् पक्षे न निरात्मक कियत्काल स्थित, पूर्वमेव भगवत्प्रवेशात्। सृष्ट्वा प्रवेशपक्षे तु निरात्मकस्थिति। अत एवाऽत्र सपुरुष इत्युक्तम्। अत्र तु सहस्रवर्षपर्यन्तमन्तःकार्यं न कृतवानिति केवल सत्त्वैरुपबृंहित कार्यप्रकारपर्यालोचनार्थं स्थित ॥ ६ ॥

तत कार्यं कृतवानित्याह—

**स वै विश्वसृजां गर्भो दैवकर्मात्मशक्तिमान्।**
**विबभाजाऽऽत्मनाऽऽत्मानमेकधा दशधा त्रिधा ॥ ७ ॥**

**स वै विश्वसृजां गर्भ इति।** विश्वसृजा तत्त्वाना गर्भो बालक, अन्तःसामर्थ्यरूपो वा, त्रिविधकर्मात्मको जातः। चेष्टारूपस्य भगवत प्रवेशात् कर्मशक्तियुक्तो जातः। कर्मप्रेरककालशक्तिप्रवेशात् दैवशक्तियुक्तो जात। विश्वसृजा सहजसामर्थ्यात् कारणधर्मेणाऽऽत्मशक्तियुक्तो जात। अतस्त्रिविधशक्तिमानात्मानमेव विबभाज। केचनाऽऽत्माधीना कृतास्तेऽध्यात्मिकाः, केचन दैवाधीनास्ते आधिदैविका, कालाधीना इत्यर्थः, केचन क्रियाधीनास्ते आधिभौतिका। अतो भगवत क्रियारूपस्य प्रवेशात् क्रियया भगवत्कार्यमेव कर्त्तव्यम्, भगवत्क्रिययाऽन्यकरणे तु स्पष्टो दोष। तदाह—**विबभाजेति।** अत पर तस्य कारणान्तरं नाऽपेक्षितमित्याह—**आत्मनाऽऽत्मानमिति।** तत्र त्रैविध्यमवान्तरभेदान् यदत्राह—**एकधेति।** प्रथमभेदे सात्त्विके दैवे एक एव भेद, द्वितीये राजसे दश भेदा, तृतीये तामसे त्रयो भेदा इति॥ ७ ॥

नन्वेतावद्भिरेव भेदै कथं सर्वं कार्यं सेत्स्यतीत्याशङ्क्याऽह—

**एष ह्यशेषसत्त्वानामात्मांशः परमात्मनः।**
**आद्योऽवतारो यत्राऽसौ भूतग्रामो विभाव्यते ॥ ८ ॥**

**एष हीति।** अशेषसत्त्वानामात्मा। हि युक्तश्चायमर्थः। बीज यादृशमेव भवति तादृशमेव कार्यं भविष्यतीति, सर्वेषामात्मत्वात् स चेदेवमकारेण त्रिरूपो जात, तदा सर्वाण्येव सत्त्वानि तथा भविष्यन्तीति सर्वमेव कार्यं सेत्स्यति। किञ्च, किमनेनैकेन, एतादृशा भगवतः कोटिश सन्त्यशा, अतो भगवताऽप्यनेके भेदाः सेत्स्यन्तीत्यभिप्रायेणाऽऽह—**परमात्मनोंऽश इति।** अयं गर्भः पुरुषोत्तमस्याश, कोट्यशानामप्यशः। परमयमानन्दाश इत्याह—**आद्योऽवतार इति।** चिदशास्तु जीवा। सर्वेषा ब्रह्माण्डान्तर्वर्त्यवताराणामयमाद्योऽवतारः। स ह्यक्षरात् परतो विद्यमानो भगवान् प्रथममस्मिन् विराजि उत्तीर्ण, पश्चान्मध्ये। इदमेवाऽवतरणम्। सबन्धश्च वह्निवदिति पूर्वमुक्तम्। अस्याऽवतारस्य स्वरूपात् प्रच्युति केनाऽप्यशेन नाऽस्तीत्यभिप्रायेणाऽऽह—**यत्राऽसौ भूतग्रामो विभाव्यत इति।** प्रपञ्चाश्रयत्वमेव भगवत्त्वम्, अतो नारायणोऽय प्रपञ्चाधारत्वाद्भगवानेव। असौ परिदृश्यमानो भूतग्रामो यस्मिन् पुरुषे विशेषेण भाव्यते, प्रबलतया तिष्ठतीत्यर्थ ॥ ८ ॥

पूर्वोक्तभेदान् गणयति—

**साध्यात्मः साधिदैवश्च साधिभूत इति त्रिधा।**
**विराट्प्राणो दशविध एकधा हृदयेन च ॥ ९ ॥**

**साध्यात्म इति।** अन्यथाऽन्योऽन्यथा वर्णयेत्। त्रैविध्यं प्रथमतो निरूपयत्यस्य जगतः, तामसप्राधान्यात्। देहप्राधान्यादित्यर्थः। तत्रैकः साध्यात्मो भेदः। आत्मानमधिकृत्य यो वर्तते स आध्यात्मो देहः, तद्गतो वा आत्मा जीवः, भगवदंशो वा। तेन आध्यात्मेन सहितो विराड्देहांशः साध्यात्मो भवति। एवं साधिदैवः। देवा अन्तर्यामिदिगादयः, तानधिकृत्य यो वर्तते इन्द्रियवर्गः, तदभिमानिनो जीवा भगवदंशा वा, ते अधिदेवाः; इन्द्रादयो वा। तैः सहितो विराड्देहांश उपरिभागः साधिदैवः। एवमधिभूतश्च। अत्र चकारोऽवान्तरभेदेषु आध्यात्मिकादिसंग्रहार्थः। साधिभूतो विराडधोभागः। इत्यमुना प्रकारेण त्रिधा। इदं हि गणशस्त्रैविध्यम्। दशविधमाह—**विराट्प्राणो दशविध इति।** विराजो यः प्राण आसन्यरूपः। षष्ठ्या संबन्धात् विराडासन्यावतार इत्युक्तम्। महत्तत्त्वस्यैव क्रियाशक्त्यंशः सूत्रात्मा, स एव विराट्। प्राणादयः पञ्च, तथा नागादय। 'नागः कूर्मश्च कृकलो देवदत्तो धनंजयः' इति वाक्यात्। एतेषां देहे कार्यं नियतम्, 'कासश्छिक्का तथोद्गारो जृम्भा शोषस्तथैव च'। तस्यैकः प्रकारो **हृदयेन।** हृदयमिति वक्तव्ये तस्य करणत्वेन निर्देशस्तदवान्तरभेदनिरूपणार्थः, मनोबुद्धिरहङ्कारश्चित्तमिति। चकाराचस्याऽभिभूतादिभेदाः संगृहीता इति। हृदयम्, मनःप्रभृतयस्तद्देवाश्चेति ॥ ९ ॥

एवं तस्य विराजस्तदन्तर्गतानां चैकप्रकारेण स्वरूपमुक्त्वा, स्वप्रवेशेनैव विश्वसृजां कार्यं विधाय, ज्ञानक्रियाशक्ती अदत्त्वा 'यथा वयं चाऽन्नमदाम यत्र' इति यद्विज्ञापितम्, तदपि चेन्न दद्यात् तत्त्वानां नाशः खेदो वा भवेदिति तेषां विज्ञापनां सत्यां कृतवानित्याह—

**स्मरन्विश्वसृजामीशो विज्ञापितमधोक्षजः ।**
**विराजमतपत् स्वेन तेजसैषां विवृत्तये ॥ १० ॥**

**स्मरन्विश्वसृजामिति।** विश्वसृजामित्यनेन तेषां महत्त्वमुपकारश्च सूचितः। दाने हेतुः—**विज्ञापितमिति।** स्वार्थं तु न कृतवानित्याह—**अधोक्षज इति।** अधोऽक्षजं यस्मात्। यत्किञ्चिदिन्द्रियैरुत्पद्यते ज्ञानं क्रिया वा, तद्भगवन्तमप्राप्यैव परागेव निवर्तते। अतः स्वोपयोगाभावादुभयोपयोगे भक्तिविरोधाच्च तेषामेवोपकारं कृतवान्। किं कृतवानित्याकाङ्क्षायामाह—**विराजमतपदिति।** स हि सर्वसमर्थः। सिद्धेऽपि कार्ये तेषामुपयोगार्थं स्वतेजसा पुनस्तत्कार्यं संतप्तं कृतवान्। स्वतेजसा तप्तत्वान्न वृथानाशप्रकारेण तस्य भङ्गः, किन्तु एषां तत्त्वानां विविधवृत्तये स्थानसिद्धये। यथा तेषां स्थित्यर्थं मध्ये छिद्राणि स्थानानि भवन्ति, तथा तापं कृतवानित्यर्थः ॥ १० ॥

तेषां छिद्राणां स्वोपयोगाभावात् भिन्नप्रक्रमेण निरूपयति—

**अथ तस्याऽभितप्तस्य कति चाऽऽयतनानि ह ।**
**निरभिद्यन्त देवानां तानि मे गदतः शृणु ॥ ११ ॥**

* **अथेति।** **तस्य** विराजः। भगवत्तेजसा अभितप्तस्य कति आयतनानि निरभिद्यन्त ? तानि चेज्जानासि तदा न वक्तव्यम्, अथ न जानासि तदा वक्तव्यमित्यभिप्रायेण कतीत्युक्तम्। चकारात् जीवार्थं स्वार्थं च तत्रैव प्रकाराः संगृहीताः। भेदेन नाशशङ्कां वारयति—**आयतनानीति।** भिन्नान्यपि गृहरूपाण्येव तत्त्वा-

---

प्रकाशः।

* अथेत्यत्र। स्वार्थमिति। विराट्पुरुषार्थम्।

नां जातानीति । हेत्याश्चर्ये । देवानां स्थानत्वात्राऽङ्गविकलत्वम् । तानि न जानासि चेन्मे गदतः शृणु । मे गदतः सतः । मया त्वदर्थमेवोच्यत इति न देवानां मर्मोद्घाटनेन दोषः स्यात्, किन्तु मया कीर्त्यते देवानां स्थानस्वरूपम्, त्वयाऽपि श्रोतव्यम् । आज्ञाभावे चौर्यं स्यादिति ॥ ११ ॥

तान्यायतनानि निरूपयति—

**तस्याऽग्निरास्यं निर्भिन्नं लोकपालोऽविशत्पदम् ।**
**वाचा स्वांशेन वक्तव्यं ययाऽसौ प्रतिपद्यते ॥ १२ ॥**

*तस्याऽग्निरास्यमिति । तस्य विराजो निर्भिन्नमास्यं वक्त्रमग्निराविशत् । वाचि जायमानो भोगोऽग्नेर्भवति। लोकपाल इति विशेषणमग्नेस्तत्स्वरूपस्य विज्ञापनासिद्ध्यर्थम् । आग्नेयदिशि ये लोकास्तेषां पालकत्वं दत्तम्; आस्ये च स्थानं दत्तम्, तत् पदम् । तस्य लोकास्तु पाल्या रक्ष्या एव, भोगस्तु वाच्येव । वाचा स्वांशेनेति । वागिन्द्रियमग्नेराध्यात्मिकं रूपम् । आसङ्गदोषसहितोऽग्निर्वागित्युच्यते । अत एवाऽग्नेः स्वांशभूता वाक् । अनेनाऽग्निरिज्यरूपो निवारितः । किं तया देवतया वाचा वा ? तत्राऽऽह—यया वाचा, असौ विराट्पुरुषः, वक्तव्यं वाग्व्यापारं, शब्दोच्चारणमिति यावत्, तद्देवताधिष्ठितेन्द्रियेण प्रतिपद्यते।१२।

स्थानान्तरमाह—

**निर्भिन्नं तालु वरुणो लोकपालोऽविशद्धिभोः ।**
**जिह्वयांऽशेन च रसं ययाऽसौ प्रतिपद्यते ॥ १३ ॥**

× निर्भिन्नं तालिवति । तत्रैवाऽऽस्ये यो वक्त्रसंमित आकाशः, तत्राग्निर्देवता, वागिन्द्रियम् । तत्रैव[3] पुनस्तालुलोके जिह्वापदवाच्यं गोलकं निर्भिन्नम् । तन्निर्भिन्नं तालु वरुणो देवता अविशत् । लोक-

प्रकाशः ।

*तस्येत्यत्र । विज्ञापनासिद्ध्यर्थमिति । लोका बलिं हरन्तीति विज्ञापनायाः फलसिद्ध्यर्थम् । रक्ष्या एवेति । न भोग्याः, नाऽप्याधारभूता इत्यर्थः। अत्र सर्वत्रैतद्बोध्यम् । 'यत्राऽन्नमदाम' इतिविज्ञापनायाः फलमास्यादिकमायतनम् । 'यथान्नमदाम' इत्यस्याः फलं वागादिसाहित्येन । वागादयस्तेषां देवानां स्त्रीभूताः । अन्नं तु जीवनात्मकं सर्वेषाम्, तच्च वाङ्निष्पाद्यत्वदशायामग्रे बोध्यम् । बलिहरणं तु वक्तव्यादिप्रतिपादनं विराडर्थम्, स्तुत्यादिकरणं भगवदर्थम् । लोकानां तु आग्नेयादिदिग्भागा देहाश्चाऽऽयतनानि। प्रकारस्तु सर्वदेवतेन्द्रियगोलकसाहित्यम् । अन्नं तु तत्तद्देश्यं तद्दृष्टादासं च पूर्वोक्तमेव । बलिहरणं तु तत्तद्देवतानां भगवतश्च पूजादिकं बोध्यम् । आसंगदोपसहित इति । गोलकसंसर्गरूपेण दोषेण सहितः । आसञ्जनादेव शरीरमधिकृत्य वर्तमानत्वादाध्यात्मिकत्वम् । अनासक्तस्य देवतात्वम् । राजसत्वादासङ्गः, सात्त्विकत्वादनासङ्गः । वस्तुत उभयोराहंकारिकत्वादंशांशिभावः । तदाहुः—अत एवेत्यादि । स्वांशभूतेति । अभिमन्तव्यांशभूताः । तथा च, यो राजसो यस्य सात्त्विकस्याऽभिमन्तव्यत्वेन भगवता दत्तः, स तस्यांशः । अनेनेति । वागभिमानित्वकथनेन ।

× निर्भिन्नं तालिवत्यत्र । पूर्ववदिति । अग्नेराग्नेयदिग्लोकपालत्ववदस्य प्रतीचीदिक्पालत्वमित्यर्थः ।

१ वाक्पदं नास्ति. ग. घ. २ तत्राप्यग्निः. ख. ३ तत्रैव च. ख.

पाल इति पूर्ववत् । विभोरिति विराजः । स हि विभोर्नानारसानुपस्थाप्य ग्राहयति । अतो वरुणस्य तत्र महाभोगः, प्रभोर्भोगस्थाने विद्यमानत्वात् । जिह्वयांशेनेति । जिह्वाऽपीन्द्रियं वरुणस्यांशः । यया जिह्वया असौ विराट् रसं प्रतिपद्यते ॥ १३ ॥

अन्यद्विवरद्वयमाह—

विनिर्भिन्नेऽश्विनौ नासे विष्णोराविशतां पदम् ।
घ्राणेनांशेन गन्धस्य प्रतिपत्तिर्यतो भवेत् ॥ १४ ॥

* विनिर्भिन्नेऽश्विनाविति । अश्विनीकुमारौ निर्भिन्ने नासापुटे पदमाविशताम् । नासापुटद्वयं गोलकम् । विष्णोर्विराजः । घ्राणमिन्द्रियम् । गन्धस्य प्रतिपत्तिर्गन्धज्ञानं घ्राणदेवताभ्यां हेतुभ्यां भगवतो भवति । सर्वत्र विवरं गोलकं देवतायाः स्थानम्, देवता इन्द्रियप्रेरिका, इन्द्रियं च तस्यांशः, इन्द्रियदेवताभ्यां चाऽभिमानिनस्तद्विषयानुभव इति ॥ १४ ॥

इन्द्रियान्तरस्य चक्षुषो विषयं निरूपयति—

निर्भिन्ने आक्षिणी त्वष्टा लोकपालोऽविशद्विभोः ।
चक्षुषांशेन रूपाणां प्रतिपत्तिर्यतो भवेत् ॥ १५ ॥
निर्भिन्नान्यस्य चर्माणि लोकपालोऽनिलोऽविशत् ।
प्राणेनांशेन संस्पर्शं येनाऽसौ प्रतिपद्यते ॥ १६ ॥
कर्णावस्य विनिर्भिन्नौ धिष्ण्यं स्वं विविशुर्दिशः ।
श्रोत्रेणांशेन शब्दस्य सिद्धिं येन प्रपद्यते ॥ १७ ॥
त्वचमस्य विनिर्भिन्नां विविशुर्धिष्ण्यमोषधीः ।
अंशेन रोमभिः कण्डूं यैरसौ प्रतिपद्यते ॥ १८ ॥
मेढ्रं तस्य विनिर्भिन्नं स्वधिष्ण्यं क उपाविशत् ।
रेतसांशेन येनाऽसावानन्दं प्रतिपद्यते ॥ १९ ॥
गुदं पुंसो विनिर्भिन्नं मित्रो लोकेश आविशत् ।
पायुनांशेन येनाऽसौ विसर्गं प्रतिपद्यते ॥ २० ॥

---

प्रकाशः

* विनिर्भिन्नेऽश्विनावित्यत्र । यद्यप्येतयोर्लोकपालत्वमत्र नोक्तम्, तथापि प्रायपाठमंदंगाद्विज्ञापनायाः सामुदायिकत्वाचोत्तरदिग्लोकपालत्वं बोध्यम्, उदीच्याः शान्तत्वादेतयोर्भिषक्त्वेन दोषशामकत्वादिति । इदमेव सर्वनिर्णये ' अश्विनावुत्तरतः ' इत्यनेनोक्तम् ।

---

१ नगा. ख. ग. घ.

हस्तावस्य विनिर्भिन्नाविन्द्रः स्वर्पतिराविशत् ।
वार्तयांशेन पुरुषो यया वृत्तिं प्रपद्यते ॥ २१ ॥
पादावस्य विनिर्भिन्नौ लोकेशो विष्णुराविशत् ।
गत्या स्वांशेन पुरुषो यया प्राप्यं प्रपद्यते ॥ २२ ॥
बुद्धिं चाऽस्य विनिर्भिन्नां वागीशो धिष्ण्यमाविशत् ।
बोधेनांशेन बोद्धव्यप्रतिपत्तिर्यतो भवेत् ॥ २३ ॥
हृदयं चाऽस्य निर्भिन्नं चन्द्रमा धिष्ण्यमाविशत् ।
मनसांशेन येनाऽसौ विक्रियां प्रतिपद्यते ॥ २४ ॥
आत्मानं चाऽस्य निर्भिन्नमभिमानोऽविशत्पदम् ।
कर्मणांशेन येनाऽसौ कर्त्तव्यं प्रतिपद्यते ॥ २५ ॥
सत्त्वं चाऽस्य विनिर्भिन्नं महान् धिष्ण्यमुपाविशत् ।
चित्तेनांशेन येनाऽसौ विज्ञानं प्रतिपद्यते ॥ २६ ॥

× निर्भिन्ने अक्षिणी इति । अक्षिणी गोलके । त्वष्टा सूर्य । अभिमानिनो निर्देशश्चक्षुष प्रायिकासुरत्वख्यापनाय । चक्षुरिन्द्रियम् ॥ १५ ॥

* विर्भिन्नान्यस्य चर्माणीति । रोमकूपच्छिद्रानन्त्याद्बहुवचनम् । एषा त्वग्भूषा । त्वक्शब्देन चाऽग्निमः सूक्ष्मोंशो निरूप्यते । तस्मादत्रेन्द्रियद्वयम् । यश्चर्मोपरि सूक्ष्मोंश स त्वक्, 'त्वक् चर्म' इति क्रमात्। तत्र चर्मण्यनिलो देवता, प्राण इन्द्रिय लोके त्वक्शब्दवाच्यम्। प्राणस्योपष्टम्भकत्वात् तच्छब्देनोच्यते १६

प्रकाशः।

× निर्भिन्ने अक्षिणी इत्यत्र। अभिमानिन इत्यादि। तनूकरणे असुराणा नाशकत्वेन तनूकरणेऽधिकृतत्त्वात्त्वक्षोधातोश्च तनूकरणार्थत्वात्त्वष्टृशब्दस्य तन्निष्पन्नत्वेन तथा बोध्यत इत्यर्थ । एतस्य प्राचीदिग्लोपालपरिधिपरिधानबोधकश्रुतौ सिद्धम् ( ? )।

*निर्भिन्नानीत्यत्र। द्वितीयस्कन्धे 'श्रोत्रं त्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्राङ्घ्रिपायवः।' इति बाह्येषु दशेन्द्रियेषु त्वचो दर्शनादत्र चर्मपदेन किमुच्यत इत्याशङ्कानिराशायाहुः—एषा त्वग्भूषेति । एषा चर्मपदोक्ता देवता द्वितीयस्कन्धोक्तत्वग्भूरित्यर्थः । तस्य स्वरूपमाहु —त्वक्शब्देनेत्यादि । तस्मादग्रपश्चाद्भागभेदादत्र त्वचि क्रमेण त्वक्चर्मात्मके द्विविधे गोलके, प्राणरोमाख्यमिन्द्रियद्वयमित्यर्थ । नन्वग्रे त्वचो निरूपणाद्विपरीतक्रमः कुतो नोच्यत इत्यत आहु —त्वक्चर्मेति क्रमादिति । द्वितीयस्कन्धे 'त्वक्चर्ममांसरुधिरमेदोमज्जास्थिधातवः। भूम्यप्तेजोमयाः सप्त' इत्युपरि (?) मादायैव क्रमकथनाद्विपरीतक्रमो नोच्यत इत्यर्थ । ननु त्वक्शब्दवाच्यस्य कुतः प्राणशब्देनोल्लेखः (?) इत्यत आहु -प्राणस्येत्यादि । द्वितीयस्कन्धे 'प्राणो व्योमाम्बुवायुभि.' इत्यत्र सर्वदेहव्यापकत्वेनाऽऽप्यायकत्वेन वायुरूपत्वेन च त्रैविध्यस्योक्तत्वात्तस्य सर्वदेहव्यापित्वमनयोपष्टभ्यत इत्यतस्तथेत्यर्थ ।

कर्णाविति । दिशो देवताः । श्रोत्रमिन्द्रियम् । शब्दस्य सिद्धिः शब्दज्ञानम् । कर्णौ गोलकम् १७

* त्वचमिति । त्वग्गोलकम् । ओषधीर्देवताः । लोमानीन्द्रियाणि । कण्डूस्त्वग्घर्षणसुखम् ॥१८॥

+ मेढ्रं गोलकम् । को देवता । रेत इन्द्रियम् । आनन्दः स्त्रीसम्भोगसुखम् ॥ १९ ॥

गुदं गोलकम् । मित्रो देवता । पायुरिन्द्रियम् । विसर्गो मलत्यागः ॥ २० ॥

× हस्तौ गोलकम् । इन्द्रो देवता । स्वर्पतिरिति लोकपालः । वार्ता कृतिः, करणसामर्थ्यम्, बलमिति यावत्, इन्द्रियम् । वृत्तिर्हस्तव्यापारः ॥ २१ ॥

पादौ गोलकम् । विष्णुर्देवता । गतिरिन्द्रियम् । प्राप्यं चरणकर्म, ग्रामादिसंबन्ध इति यावत् ॥२२॥

+ अन्तःकरणचतुष्टयस्य हृदयमेकं गोलकम् । तदेवांशभेदेन बुद्ध्यादिशब्देनोच्यते । बुद्धिर्गोलकम् । वागीशो ब्रह्मा देवता । बोध इन्द्रियम् । बोद्धव्यादेर्घटादेः प्रतिपत्तिर्ज्ञानमिन्द्रियव्यापारः ॥ २३ ॥

हृदयं गोलकम् । चन्द्रमा देवता । मन इन्द्रियम् । विक्रिया विविधक्रिया, सङ्कल्पविकल्परूपा इन्द्रियव्यापारः ॥ २४ ॥

※ आत्मा अहङ्कारः, अन्तःकरणांशः । अभिमानो देवता । रुद्रात्मक इति केचित् । नूतनसृष्टित्वात्तच्छब्दवाच्या एव तथाविधास्ते । कर्म अभिमतिः, देहादावहंबुद्धिरिन्द्रियम् । कर्तव्यमहङ्कारकार्यम्२५

---

प्रकाशः।

* एवं चौषधीनां वार्ष्यंशत्वं रोम्णां त्वगंशत्वमिति तस्य गोलकद्वये रूपद्वयेन भोगः सिध्यति। ओषधी-रोम्णोरतिरिक्तत्वं न वक्तुं शक्यम्, गणस्य त्रयोविंशतिकत्वेनैव सिद्धत्वादिति।

+ रेतसांशेनेत्यत्र । उपस्थशब्दवाच्यमिन्द्रियं रेतःशब्देन बोध्यम् ।

× वार्तयांशेनेत्यत्र । वार्ताशब्दस्य वैश्यवृत्तौ वृत्तान्ते च प्रसिद्धत्वादत्र तदुभयमपि नाऽभिप्रेतम्, किन्तु 'तयोस्तु बलवानिन्द्रः' इति पूर्वमुक्तत्वादग्रे च 'हस्तानिन्द्रो बलेनैव' इति वक्ष्यमाणत्वाच्चाऽत्र प्रसिद्धपद-समभिव्याहारेण बलमेवाऽभिप्रेतमित्याशयेनाहुः—वार्ता कृतिरित्यादि । एवमत्र बाह्यानां दशेन्द्रियाणामे-कादशस्थानेषु भोगादिकमुक्तम् ।

+ अतः परं महदहङ्कारमनसां वक्तव्यम् । अत्राऽनुक्तायामपि द्वितीयस्कन्धे समाधानप्रकरणे 'बुद्धिः प्राणस्तु तैजसः' इत्यहंकारभेदत्वेनोक्तयोर्बुद्धिप्राणयोर्वक्तव्यम् । तदुक्तं 'साध्यात्मः साधिभूतः' इति श्लोकोक्तत्रेधामहाविभागमध्ये 'एकधा हृदयेन च' इति चकारेणाऽधिभूतादिभेदसंग्रहपूर्वकं करणविम-क्तावान्तरभेदकथनपूर्वकं य एकधाविभागः प्रतिज्ञातस्तं विवृण्वन्ति—अन्तःकरणेत्यादि । तदेवेत्येव राजसी बुद्धिर्निवारिता । साऽग्रे 'बोधेनांशेन' इति बोधपदेनोच्यते ।

※ रुद्रात्मक इति केचिदिति । 'रुद्रोऽभिमत्या हृदयम्' इत्यग्रे वक्ष्यमाणत्वात् प्रकरणसाम्यात् केचि-दाहुरित्यर्थः। तत्राऽस्वरसं बोधयन्ति—नूतनेत्यादि । तत्र 'चित्तेन हृदयं चैत्यः' इति वक्ष्यते, अत्र तु 'महान् धिष्ण्यमुपाविशत् । चित्तेनांशेन' इति देवताभेद उच्यते । अतोऽत्रापि तथाविधो भिन्न एव वक्तव्य इत्यर्थः। कर्मशब्दं 'रुद्रोऽभिमत्या' इतिवाक्यानुसारेण विवृण्वन्ति—कर्माऽभिमतिरिति ।

* सत्त्वं गोलकम् । महान् देवता । चित्तमिन्द्रियम् । विज्ञानं चेतना, इन्द्रियव्यापार । एवं सात्त्विकाहङ्कारकार्ये मनसि महत्तत्वाहङ्कारयोर्बुद्धेश्चैक्यविवक्षया तेषामपीन्द्रियत्वं परिकल्प्य तत्र देवतादिभेद उक्त ॥ २६ ॥

+ इदानीं मध्ये अवयवेलोकनिर्माणमाह—

**शीर्ष्णोऽस्य द्यौर्धरा पद्भ्यां खं नाभेरुदपद्यत ।**
**गुणानां वृत्तयो येषु प्रतीयन्ते सुरादयः ॥ २७ ॥**

× शीर्ष्णोऽस्येति । अस्य विराज शीर्ष्णः सकाशात् द्यौरुदपद्यत । नाभेः खमन्तरिक्षमुदपद्यत । पद्भ्यामिति पञ्चमी । धरा पृथ्वी । विपरीतकथने प्रयोजन वक्तव्यम् । ननु किमर्थमेतन्निरूपणम् ? विज्ञापिते हि सतापः कृतः, तत्त्वाना च भोगार्थं स्थाननिर्माणमुक्तम्, धरादिनिर्माणस्य क्वोपयोग ? इत्याशङ्क्याऽऽह—गुणानामिति । पूर्वमहङ्कारस्य मायाया वा गुणा निरूपिता । तेषा प्रत्येकवृत्ति स्थान वक्तव्यम् । तदभिमानिदेवाना नियतभोगार्थं वृत्तयो विलासप्रकारा । येषु द्यौरादिषु । ननु गुणाना का वृत्तय ? विलासश्चेतनाना भवतीत्याशङ्क्याऽऽह—येषु प्रतीयन्ते सुरादय इति । येषु प्रतीयन्त इति पुनरनुषज्यते । सुरा देवा । आदिशब्देन नरा भूतानि च ॥ २७ ॥

---

**प्रकाशः**

* चेतनेति । सकलशरीरव्यापि चैतन्यम् । अत्र पूर्वापेक्षया वैलक्षण्यबोधनायाहु —एवं सात्त्विकेत्यादि । तेषामिति । बोधाभिमतिचित्तानाम् ।

अत्रैतद्बोध्यम् । बहिरिन्द्रियेषु विज्ञापनकाले इन्द्रियाण्येव मुख्यानि, देवा गुणभूता । अन्तरिन्द्रिये तु देवताद्वय महदहङ्काराख्य मुख्यम्, बुद्धिस्तु तैजसस्य रूपान्तरम् । चन्द्रमास्त्वनुक्तो मन सहभावाद्वैकारिकस्यैव कार्यम् । गोलक तु स्थूलतया एकम् । तत्रैतेषा चेदेकमत्र न भवेत्, तदा वासः कार्यकरण च नोपपद्येतेति तदर्थमेवमत्रोक्तमित्यर्थः । एव च वायोर्वायव्यलोकपालत्वम्, दिशा दक्षिणपालत्वम्, कस्याऽवान्तरपालत्वम्, मित्रस्य नैर्ऋतपालत्वम्, विष्णुचन्द्राभिमानब्रह्मणामधोमध्येशानोपरिपालकत्व बोध्यम् । प्राणस्याऽपि तैजसभेदत्वान्मुख्य हृदयमेव गोलकम् । तद्भेदाना तु 'हृदि प्राणो गुदेऽपान ' इत्याद्युक्तानि नानागोलकानि । एवमत्र त्रयोदशाना स्थानादिविभाग उक्त । अतः पञ्च मात्राः पञ्च भूतानि चाऽवशिष्यन्ते । तत्र मात्राणा भोग्यत्वेनैवोत्पन्नत्वाद्भोगेनैव तेषा पोष , यथा स्त्रीणाम् । भूताना चाऽधिष्ठानत्वेनैवोत्पन्नत्वाद्वासेनैव तेषा पोषः, यथा गृहाणाम् । उष्यमाणान्येव गृहाणि तिष्ठन्ति, नोज्झटानीति । उक्तं च द्वितीयस्कन्धे ' आदिस्तोरन्नपानानामासन् कुक्ष्यन्त्रनाडय. । नद्य समुद्राश्च तयोस्तुष्टि पुष्टिस्तदाश्रये ।' इति । वक्ष्यते ' नाडीर्नद्यो लोहितेन' इति ' क्षुत्तृड्भ्यामुदर सिन्धु ' इति चाम्भसो नदीलोहितभेदेन देवतेन्द्रियभाव , क्षुत्तृषोस्तेजोरूपयोरिन्द्रियत्व जलात्मकस्य सिन्धोर्देवत्वं च । एव पृथिव्याकाशवायूनामपि बोध्यम् ।

+ तदेतदभिप्रेत्याहु —इदानीमित्यादि । अग्न्यादिमहदन्ताना विज्ञापितफलदानकथनानन्तर मात्राभूतदेवाना तदान वक्तु तथाऽऽहेत्यर्थ ।

× शीर्ष्ण इत्यत्र । वक्तव्यमिति । अग्रिमश्लोके वक्तव्यम् । एव त्रिभिर्गुणाना (?) मात्राणा भूताना व्यष्टिद्वारैव भोग्यत्व (?) उक्त इति ज्ञायते ।

तदेव विभज्य स्पष्टयति—

आत्यन्तिकेन सत्त्वेन दिवं देवाः प्रपेदिरे।
धरां रजःस्वभावेन पणयो ये च तान्नु ॥ २८ ॥

आत्यन्तिकेनेति। अत्यन्तिकं गुणान्तरास्पृष्टम्, सत्त्वाधिक्यं वा। देवाः पूर्वोक्ता अन्ये च। पूर्वमप्याधिदैविका निरूपिताः, अन्ये च त्रयस्त्रिंशत्। ते सर्वे अतिसात्त्विका इति सत्त्वविलासस्थानं दिवं प्रपेदिरे। विपरीतकथने हेतुं वदन् व्युत्क्रमेण निरूपयति—धरामिति। गुणक्रम एवाऽत्र क्रमः, न खवयवक्रमः। रजःस्वभावेन पणयो नरा धरां प्रतिपद्यन्ते। ते हि कर्मणा पणन्ते, कर्म दत्त्वा फलं गृह्णन्तीति। कर्मणैव व्यवहार इति पणयो नराः। तान्नु ये गवादयः, तेषां तामसत्वेऽपि नरोपकाराद्भूमिमेवाश्रिताः॥ २८॥

तृतीयस्थाने हेतुमाह—

तार्तीयेन स्वभावेन भगवन्नाभिमाश्रिताः।
उभयोरन्तरं व्योम ये रुद्रपार्षदा गणाः ॥ २९ ॥

तार्तीयेनेति। तार्तीयं तृतीयम्। प्रकृतेर्गुणत्वाय स्वभावेनेत्युक्तम्। भगवन्नाभिमन्तरिक्षम्। तामसस्य मध्ये निवेशने हेतुरुच्यते—उभयोरन्तरं व्योमेति। अन्तरिक्षं शून्यं तेषां स्थानम्। रुद्रा वालुका अनायतनाः। अतस्तृतीयत्वेऽपि मध्यस्थानस्य शून्यत्वात् रुद्रैस्तत्स्थानं गृहीतमिति। आधेयाधारयोर्मलिष्ठत्वेन अन्तरालमेव स्थानम्। तत्र स्थितान्निर्दिशति—ये रुद्रपार्षदा इति। रुद्रस्य पर्षदि सभायां योग्याः। कदाचित्तत्र रुद्रसभायां सनकादयो देवा वा आगच्छन्तीति तद्व्यावृत्त्यर्थं गणा इत्युक्तम्। ये महादेवस्य गणा भूत्वा पार्षदाः, ते मध्ये तिष्ठन्ति। एवं व्यष्टिसृष्टौ गुणैः स्थानभेदा निरूपिताः॥ २९॥

गुणैरेव वर्णभेदा इति वर्णानवयवेभ्य उत्पन्नान्निरूपयति भजनार्थम्, मुखतोऽवर्त्ततेति चतुर्भिः—

मुखतोऽवर्त्तत ब्रह्म पुरुषस्य कुरूद्वह!।
यस्तून्मुखत्वाद्वर्णानां मुख्योऽभूद्ब्राह्मणो गुरुः ॥ ३० ॥

* भगवतो मुखतो ब्रह्म देवतारूपम्, शुद्धसत्त्वपरिणामभूतम्, यदधिष्ठानात् ब्राह्मणा भवन्ति, तज्जातम्। अवर्ततेति। विद्यमानमेव मुखात्प्रकटीभूतम्। पुरुषस्य भगवतो नारायणस्य। कुरूद्वहेति विश्वासार्थम्, एतच्छ्रवणाधिकारार्थं वा। यस्तु वर्णानां मध्ये मुख्यो ब्रह्मोन्मुखत्वाद्ब्राह्मणोऽभूत, गुरुश्चाऽभूत्। तुशब्देन स्वतो ब्राह्मणस्य मुखत्वं वारयति। ब्रह्मणि स्थितो ब्राह्मणः। 'तत्र भवः' वा 'तस्येदम्' इति वा

प्रकाशः।

* मुखत इत्यत्र। मुखाज्जातस्य ब्रह्मणः स्वरूपं द्वितीयस्कन्धे उपपादितं स्मारयन्ति—देवतारूपमित्यादि। वारयतीति। अत्र ब्राह्मणस्य ब्राह्मणत्वे हेतुं वदन्'ब्राह्मणोऽस्य मुखमासीत्' इत्यत्र श्रावितं मुखत्वं स्वतो न, किन्तु ब्रह्मणोन्मुखत्वकृतमेवेति निश्चाययतीत्यर्थः। तदुन्मुखत्वं, योगेन त्रिधाऽऽहुः—ब्रह्मणीत्यादि। तत्राऽऽद्येन वृत्ततः, द्वितीयेन संस्कारतः, तृतीयेन जननमात्रादित्येवं त्रिविधैकसंबन्धेन मुखमध्यजघन्यभावे प्रला-

'यदृच्छया तुष्यते हरिः' इति । किञ्च, हरिः सर्वेषां दुःखहर्ता, सेवया च दुःखं गच्छति । अतः स्वकर्तव्यकरणादपि तुष्यति । तादृशसेवायां जातः शूद्रः, तन्निर्वाहार्थं वा । पुरा कल्पादौ । इदानीन्तनानां तु तदुद्भवत्वम् । शुश्रूषायां भव इति शकारोकारौ मिलितौ द्विरुक्तावेकशेषेण शू भवतः, सन्प्रत्ययश्च जश्त्वेन दत्वमापद्यते, रेफस्य च परोक्षार्थे व्यत्ययः, 'अ प्रत्ययात्' इति सन्नन्तादकारो भवति, स्त्रीत्वाभावान्न टाप् । अणप्रत्ययो वा तद्धितः, वृद्ध्यभावः परोक्षार्थः । 'शुगस्य तदनादरश्रवणात् तदाद्रवणात्' इति तु योगेनाऽन्यथा शूद्रशब्दो निरुक्तः, स न जात्युपयोगी । तं वा निर्वचनं कालभेदेन स्थापयति—पुरा शूद्र इति । स हि यावत्पर्यन्तं सेवां न करोति, तावत्पर्यन्तं शुचैव द्रवति । तस्याऽर्थधमायाद्धर्मोऽपि यदि न भवेच्छोको भवेदिति, तेन चाऽऽद्रवतीति, पुराऽयं शूद्रो भवति, पश्चात्तु वर्णमात्रम् । शोकाभावे हेतुः—यदृच्छया तुष्यते हरिरिति । हरितोषात् सर्वमेव सिद्धं भवतीत्यर्थः ॥ ३३ ॥

एवं वर्णानामुत्पत्तिमुक्त्वा भगवति तेषां विनियोगमाह—

**एते वर्णाः स्वधर्मेण यजन्ति स्वगुरुं हरिम् ।**
**श्रद्धयाऽऽत्मविशुद्ध्यर्थं यज्जाताः सह वृत्तिभिः ॥ ३४ ॥**

**एते वर्णा** इति । स्वधर्मेण वागादिव्यापारेण । स हि तेषां स्वधर्म औत्पत्तिकः । वाग्व्यापारेण भगवद्भजनं ब्राह्मणस्य, रक्षादिना भगवद्भजनं क्षत्रियस्य, सेवोपयोगिपदार्थसमर्पणेन वैश्यस्य, सेवया शूद्रस्येति । तत्र सेवा प्रथमकक्षा सर्वसुलभा । यदि सर्वेऽपि भगवत्तोषमेव केवलं कामयन्ते, तदा सेवैव कर्तव्या। यदि स्वधर्मेण सेवितुमिच्छन्ति, तदा स्वधर्मसिद्ध्यर्थं सेवा कर्तव्या। तदा स्वधर्मस्य फलं वक्तुं तदुपयोगिभगवद्गुणानाह—**स्वगुरुं हरिमिति** । स्वधर्मेण स एवोपास्य', यस्त्वावश्यको भवति । तत्र धर्मोपदेष्टृत्वात् भगवानेवोपास्यः । स हि स्वगुरुः, धर्मेण सहोत्पादनात् । यथार्थं ज्ञापयन् शब्दोच्चारयिता गुरुर्भवति, एवमेव भगवान् वृत्तिं स्वधर्मं प्रथमत उत्पाद्य पश्चात्तदर्थमात्मानमुत्पादयतीति । किञ्च, तथैव कृते अस्य दुःखाभावो भवतीति नियमात् तथा कर्ता हरिर्भवति । यजन्तीति सिद्धवन्निर्देशः । उत्पत्त्यैव धर्मप्रकारयोर्ज्ञातत्वात्, विलम्बाभावाच्च, अपर्यवसितत्वाच्च, सर्वदैव भागवद्भजने वर्तमानता । यजन्तीत्यनेन तत्प्रीतिजननप्रकारेण स्वधर्मः कर्तव्य इति सूचितम् । श्रद्धयेति हेतुः सर्वत्र । आत्मविशुद्धिरन्तःकरणशुद्धिः । सर्वत्राऽपाखण्डिनां नियतं फलम् । शुद्धे त्वन्तःकरणे सर्वत्राऽधिकारी भवति, पश्चात्सर्वं सुलभम् । ननु निरन्तरसेवायां कोऽयं निर्बन्धस्तत्राऽऽह—यद्यस्मात् स्ववृत्तिभिः सहजाताः । अभजने कालान्तरे अवृत्तीनुत्पादयिष्यतीति ॥ ३४ ॥

एवं भगवतः समष्टिव्यष्टिरूपोत्पादनम्, सर्वदेवानां तत्रोपभोगः, स्वार्थं वर्णचतुष्टयोत्पादनम्, तेषां च भगवद्भजनप्रकार इति चतुष्टयमुक्त्वा उपसंहरति—

**एतत्क्षत्तर्भगवतो दैवकर्मात्मरूपिणः ।**
**कः श्रद्दध्यादुपाकर्तुं योगमायाबलोदयम् ॥ ३५ ॥**

**एतत्क्षत्तर्भगवत** इति । एतच्चतुष्टयमेवाऽस्माभिर्निरूपितं सूचनार्थम् । अधिकं तु स्वयमेव ज्ञातव्यमिति नैपुण्यार्थं संबोधनं क्षत्तरिति । एकस्य वीर्यस्यांशभूतायाः क्रियाशक्तेः कोट्यंशलेशो निरूपितः, अतिरिक्तो भगवान् पूर्ण एव । तदाह—**भगवत इति** । तत्राऽपि त्रितयसंयोगमाह—**दैवकर्मात्मरूपिण इति**।

दैवं कालः, कर्म प्राणिनाम्, आत्मा स्वभावः, एतान्यपि स्वस्यैव रूपाणि । तानि रूपाणि वर्तन्ते यस्य। एकस्याऽपि रूपस्य यत्राऽऽनन्त्यम्, तत्र को वा तं चतूरूपमानन्त्यचतुष्टयात्मकं निरूपयेत् ? किञ्च, योगमायाया बलस्योदयो यत्र, एतादृशं चरित्रम् । योगमाया हि क्षणमात्रेण कोटिब्रह्माण्डानि कर्तुं शक्नोति, तस्या अपि बलं भगवद्गुणैरेवेति । अथवा, योगमाया करणम्, योगमायया यो बलोदय इति । उपाकर्तुम्, यथा वेदा आरभ्यन्ते उपाकरणेन, समाप्यन्ते च उत्सर्गेण । तत्र भगवद्गुणानामपि मुख्यविद्यात्वात् तदुपाकरणं युक्तम् । समाप्तिर्दूरे , उपाकर्तुमपि कोऽपि न शक्नोति । उपाकरणमपि दूरे, करिष्यामीति प्रारम्भमपि कः कुर्यात् ? अन्ततो गत्वा श्रद्धामपि कः कुर्यात् ? अतो मया भगवतश्चतुर्मूर्तेरापाततो गुणाः कथिताः ॥३५॥

न चैतावताऽहं निवृत्तः, किन्तु गुणानामानन्त्यमेव । तदाह—

**अद्याऽपि कीर्तयाम्यङ्ग ! यथामति यथाश्रुतम् ।**
**कीर्तिं हरेः स्वां सत्कर्तुं गिरमन्याभिधासतीम् ॥ ३६ ॥**

*अद्याऽपि कीर्तयामीति । अङ्गेति कोमलसंबोधनमभ्रतारणाय । अद्याऽपीति । यत आरभ्याऽहमुत्पन्नस्तत्प्रभृत्यद्याऽपि मरणपर्यन्तं कीर्तयाम्येव स्वधर्मत्वात् । परं सूक्ष्मजीवत्वान्मयि विशेषः । यथामतीति मतिमनतिक्रम्य । यावज्जानामि तावदेव कथयामि, न तु कल्पयित्वा । तत्राऽपि यथाश्रुतम्, गुरोः सकाशात् श्रवणमनतिक्रम्य । अनेनाऽऽवृत्तिर्भगवद्गुणानामुक्ता । तत्र प्रयोजनमाह—कीर्तिं हरेरिति । नूतनश्रवणे सामर्थ्यमुपायश्च नाऽस्ति, प्रयोजनाभावश्च; आनन्त्यात् स्वधर्माभावाच्च । अतो यावत्कीर्तयितुं शक्यते तावदेव श्रोतव्यम्, इत्यल्पं श्रुत्वा तदेव कीर्तयामि; तदाहैकवचनेन । हरेरिति तावतैव भगवान् दुःखं दूरीकरिष्यतीति । पुनःपुनः कीर्तनस्य तु प्रयोजनमस्ति । स्वां गिरं सत्कर्तुम् । अन्यपदार्थानामभिधया कथनेनेयमस्मद्वाणी असती जाता । भगवता स्वार्थमेव वयमुत्पादिताः, वाणीं च स्वां समर्पितवान् स्वसेवार्थम् । तस्याः पति भगवान् । भगवदर्थं स्वयं प्रेरकः । तथा च स्वतो वा, मत्प्रेरणया वा, अन्यमभिधाय वाणीव्यभिचारिणी जाता । तामिदानीं संस्करोमि, संस्कृता सा भगवति योजनीयेति । अतः संस्कारार्थं बहुधा कीर्तयामीत्यर्थः । अनेन यस्य यस्य साधनं भगवता स्वार्थे यद्दत्तम्, तदन्यत्रोपयोज्य तच्छुद्ध्यर्थं भगवति तत्पुनः पुनरुपयोज्यामिति ॥ ३६ ॥

एवमुपसंहृत्य सर्वेषां निर्द्धारितं जन्मफलमाह—

**एकान्तलाभं वचसो नु पुंसां सुश्लोकमौलेर्गुणवादमाहुः ।**

---

प्रकाशः।

*अद्याऽपीत्यत्र । आनन्त्यादिति । एकस्याऽपि गुणस्याऽपरिच्छिन्नत्वात् । अयं नूतनश्रवणासामर्थ्ये हेतुः। स्वधर्माभावादिति । गुरुमुखात् श्रवणं स्वधर्मः, तच्च मतेः स्वल्पतया कर्तुं न शक्यते, शक्तितात्पर्यावधारणस्य श्रवणपदार्थत्वादिति । अतो मत्यभाव एव स्वधर्माभावः, स एव चोपायाभावे हेतुः । तदेतदाहुः—अत इत्यादि । एकवचनेनेति । कीर्तिमित्यनेन । प्रयोजनाभावे हेतुमाहुः—हरेरित्यादि ।

---

१ स्वाम् इति नास्ति. ग घ च.

**श्रुतेश्च विद्वद्भिरुपाकृतायां कथासुधायामुपसंप्रयोगम् ॥ ३७ ॥**

*एकान्तलाभमिति । अन्यानीन्द्रियाणि केवलं भगवदर्थे योजयितुमशक्यानि, देहार्थं तदुपयोगावश्यकत्वात् । दुष्टानि च न भगवति योजनीयानि । हस्तौ नित्यममङ्गलस्पर्शौ, तथा चक्षुषी; तथाऽन्यान्यपि देहनिर्वाहार्थमवश्यमन्यत्र योजनीयानि चेत् भगवदर्थे किञ्चिद्रक्षणीयम् ; स्वतः शुद्धम्, शुद्धं कृत्वा वा । तदा द्वयं रक्षणीयम्, वागिन्द्रियं श्रोत्रं च । अनयोर्न देहोपयोग आवश्यकः । तस्मादेते चेद्भगवत्कृपया स्वार्थे प्राप्ते भवतः, तदा भगवद्गुणा वक्तव्याः श्रोतव्याश्च । नाऽन्यद्वक्तव्यं श्रोतव्यमित्याह । वचसो वागिन्द्रियस्य । **एकान्तलाभः** एक एव भगवान् स्वार्थोऽन्तो यस्य । लाभो भगवत्प्राप्त्यैव समाप्यते । स को लाभ इत्याकाङ्क्षायामाह—**सुश्लोकमौलेर्गुणवादमिति**। सुष्ठु श्लोकाः कीर्तिप्रतिपादका भागवतादिरूपाः, तत्प्रतिपादिता कीर्तिर्वा मौलौ यस्य । अनेन तस्य कीर्तिर्मुकुटरूपा भवतीत्युक्तम् । तां चेदयं संस्कुर्यात् ' सर्वस्य गात्रस्य शिरः प्रधानम् ' इति प्रधानमेव भूषितं भवेत् । तादृशस्य भगवतो गुणवादमुत्कर्षप्रतिपादकानां धर्माणां भावपूर्वकं निरूपणं लाभमाहुरिति संबन्धः । **आहुरिति** प्रमाणम् । न केवलं वचस एवायं लाभः, किन्तु अनु पश्चात् नु निश्चयेन वा, पुंसामपि लाभः। तदुपयोगार्थमन्येन्द्रियव्यापारात् स्वोपयोगेऽपि, स्वस्य तत्रोपयोगात्, कीर्तनद्वारा सर्वाण्येवेन्द्रियाणि स्वयं च सफलो भवति । श्रोत्रस्य चाऽयमेव लाभः । चकारात्तदनुवर्त्तिनां पुंसामपि । **विद्वद्भिरुपाकृतायां** भगवत्कथायामारब्धायाम्। **उपसंप्रयोगम्**, समीपे सम्यक् प्रकर्षेण योगो यस्य, तादृशं श्रवणम्, अमृतकथाश्रवणमिति यावत्, तच्छ्रुतेर्लाभः । श्रोत्रस्य विशेष उच्यते—भगवत्कथैव श्रोतव्या; तत्राऽप्यमृतरूपा प्रेम्णा निरूपिता; तत्राऽपि विद्वद्भिरेव निरूपिता, अन्यथा अज्ञैरन्यथा निरूपणसम्भवात् । तेषां पदार्थानां वस्तुतो भगवदीयत्वाभावाद्भगवत्कथायां तच्छ्रवणे श्रोत्रस्य व्यभिचार एव भवेत् । अतो भगवदीयपदार्थश्रवणार्थं विद्वद्भिरेव निरूपितं श्रोतव्यम्। तैरप्यन्यार्थनिरूपणे प्रकृते तात्पर्याभावात्, तन्न श्रोतव्यम्। तदाह—**उपाकृतायामिति** । कथा संबद्धा वार्ता, सैव सुधारसजनिका मृत्युनिवर्तिका च । तदपि श्रवणं न दूरतः। अन्तःकरणशुद्धिद्वारा ज्ञानं भविष्यतीति द्रविडमण्डकन्यायो भगवद्गुणेषु न कर्तव्यः । सम्यक्त्वं च स्वपर्यवसानात् । प्रकर्षो विस्मरणराहित्यम् । यद्येवं शृणुयात्, तदा श्रोत्रं स्वयं च भगवदर्थं भवेत्, अन्यथा व्यर्थो भवेत्, कालार्थः काकार्थो वा ॥ ३७ ॥

नन्वल्पमेवोक्तश्च कथमुपसंहारः कृतः, कथं वा स्वार्थं निरूप्यते ? इत्युच्यते । भगवन्माहात्म्यं ज्ञातव्यम्, ततो भक्तिः, ततो भगवत्सायुज्यमिति । इमं क्रमं परित्यज्य वाक्शुध्यर्थं गुणानुकीर्तनम्, इन्द्रियलाभार्थं च श्रवणकीर्तने, इति कथमेवमुच्यते ? इत्याशङ्क्याऽऽह—

**आत्मनोऽवसितो वत्स ! महिमा कविनाऽऽदिना ।**
**संवत्सरसहस्रान्ते धिया योगविपक्वया ॥ ३८ ॥**

---

प्रकाशः।

* एकान्तलाभमित्यत्र । द्रविडमण्डकन्याय इति। द्रविडदेशे गोधूमा; तद्देशीयास्तं भोक्तुं कर्तुं च न विदन्ति। मध्यदेशादागतो द्रविडः, 'कथं मण्डकपचनि: पद्योगंघ्यान् शृङ्गाच हस्तपरिवर्तनं विधाय पश्चाद्भवे(?)मुखं कृत्वा बोधवे। न्यायः ।

* आत्मनोऽवसितो वत्सेति । आत्मनो भगवतो वासुदेवस्य महिमा, आदिकविना ब्रह्मणाऽपि संवत्सराणां सहस्रपर्यन्तं तपो योगं च कृत्वा, तत्परिपाके सति, संवत्सरसहस्रान्ते योगविपक्वयाऽपि बुद्ध्या अवसितः किम् ? अपि तु न ज्ञात एव । ब्रह्मणाऽपि, तपः कृत्वाऽपि, महताऽपि कालेन, महिमा चेन्न ज्ञातः; यस्य कथा अग्रे वक्तव्या; अन्यः को वा ज्ञास्यति ! एतदर्थमेव तां कथां कथयिष्यामीति भाव । अत इन्द्रियलाभ एव । भगवद्गुणे कथिते, क्रमात्सर्वस्मिन्नपि संघाते स्वाधीने जाते, सुखेन साक्षाद्वैकुण्ठे भगवत्सेवा कर्तुं शक्यत इति मैत्रेयसिद्धान्तः । इमं पक्षं निराकृत्य योऽन्यथा वक्ष्यति, तमग्रे भ्रान्तत्वेन निराकरिष्यति । आत्मन इति वस्तुप्राप्त्यभावेन दुर्लभता निराकृता । आत्मत्वेनाऽपि प्रकाशमानस्य । किमित्यध्याहारेण वा, काकुस्वरकल्पनया वा, तथा वक्तव्यः । अथवा, ब्रह्मणैवाऽवसितः । तस्य साधनत्रयम्—प्रथमं भगवानात्मत्वेन प्रकटः, स्वयं चाऽऽदिकविर्वेदगर्भः । अनेन प्रमाणं प्रमेयं च तस्य सिद्धमित्युक्तम् । संवत्सरसहस्रान्ते इत्यादि साधनम् । तदा फलं युक्तमिति । तदापि वा न फलमिति चिन्त्यम् ॥ ३८ ॥

ब्रह्मणः कथा यथा तथास्तु, अन्ये तु महिम्नो ज्ञानार्थं ये यतन्ते, तद्द्वारा च भक्तिं प्रार्थयन्ते, ते केवलं भगवन्मायामोहिताः । ते यद्यपि अन्यान्मोहयितुं तथा वदन्ति, तथापि महती भगवन्माया तानपि व्यामोहयतीत्याह—

**अतो भगवतो माया मायिनामपि मोहिनी ।**
**यत्स्वयं चात्मवर्त्मात्मा न वेद किमुताऽपरे ? ॥ ३९ ॥**

+ अतो भगवत इति । अतः कारणात्, यस्मात्ते माहात्म्यं ज्ञातुं प्रवृत्ताः । इयमेव भगवन्माया, ते संसारं व्यामोहयित्वा मोक्षार्थं प्रवृत्ताः, तानपि व्यामोहयति । ननु भगवन्माहात्म्यज्ञानार्थं प्रवृत्ताः कथं व्यामुग्धा भवन्ति ? तत्राऽऽह—यत्स्वयमिति । अयमात्मा भगवान् स्वस्याऽपि मार्गं स्वयं न जानाति, किमुताऽपरे? स हि यावत्करोति तावत्तस्य परोक्षे भवति । न हि कश्चिद्गन्ता दूरे गतः स्वातिक्रान्तं सर्वमेव मार्गं पश्यति, तथा सति न गत एव स्यात् । अतिनिपुणोऽपि पूर्वदिवसे यादृशं कुर्यात्तादृशं पुनः कर्तुं ज्ञातुं वा न जानाति । अतः प्रतिक्षणं नूतनानन्तब्रह्माण्डनिर्माणात् पूर्वं येन मार्गेण साम्प्रतं सृष्टिसमर्थो वर्तते, तं मार्गं स्वयमपि न जानातीति युक्तम् । अपरे पुनस्तत्त्वेर्याः, क्वचिद्ब्रह्माण्डोदुम्बरे मशकवत्स्थिताः, स्वगतिमेव न जानन्ति, कुतो भगवद्गतिम् ? उत्प्रेक्षा त्वप्रमाणम् । अथवा, भगवन्माहात्म्यज्ञानार्थं प्रवृत्तः कथं भगवन्मायया मोह्यते, अन्यथा सन्मार्गो व्यर्थः स्यात् । अन्यत्र तस्या मोहकत्वं सिद्धमेव ।

---

प्रकाशः।

* आत्मन इत्यत्र । इन्द्रियलाभ इति । इन्द्रियाणामन्यकार्यजनितव्यभिचारनिवृत्त्या भगवदीयत्वम् । काकुरपि काल्पनिकीत्यरुच्या पक्षान्तरमाहुः—अथवेत्यादि ।

+ अत इत्यत्र । ज्ञातुमिति । इयदिति ज्ञातुम् । भगवतः स्ववर्त्माज्ञाने कारणमाहुः—स हीत्यादि । इदमत्र वर्त्मपदबलाद्व्याख्यातम् । द्वितीयस्कन्धे तु 'यथा नभः स्वान्तम्' इत्यत्रान्तभावादेव ज्ञानाभाव उक्तः । तेनाऽत्रापि वर्त्मानन्त्यमेव ज्ञानाभाव एव हेतुरिति ज्ञानशक्तिकौण्ठ्याभिप्रायः । तदेतदुक्तम्, तथा सति न गत एव स्यादित्यनेन । अत्र प्रकारानन्त्यस्याऽपि हेतुतामाहुः—अतिनिपुण इति । अस्मिन्नपि पक्षे उत्प्रेक्षैव समाया-

---

१ प्रवृत्ताः ख २ मोह्यन्ते ख.

भगवन्माहात्म्यज्ञानार्थं प्रवृत्तावपि यदि मोहयेत्, तदा प्रमाणानि दत्ततिलाञ्जलीनि स्युरित्याशङ्क्य, 'स्वायोग्यमिच्छन् पुरुषः पतत्येव न संशय।' इति न्यायेन मायाया को दोष इति वदन्, माहात्म्यज्ञानार्थं प्रवृत्तस्य स्वरूपमाह—यत्स्वयमिति। स्वयं जीव आत्माऽपि मत्वा, कोऽहमादिकल्पे स्थित ? कथमेतावत्पर्यन्तमागतम् ? इति स्वगतिं न वेद। सर्वज्ञा अपि जन्मत्रयं चतुष्टयं वा जानन्ति। अन्योन्य ज्ञास्यन्तीति दूरकथा। शब्दात् ज्ञानमन्धपरम्परान्यायतुल्यमिति नाऽत्यन्तं प्रमाणम्। तस्मादस्मदुक्तमार्ग एव युक्तः। वस्तुतोऽयमेवार्थ, पूर्वं यद्याख्यात तत्परमतात्। विद्यमानाज्ञानमसार्वज्ञ्यमेव सपादयति। वेदे त्वसन्देहे सन्देहवचन च, 'यदि वा न वेद' इति, 'को हि तद्वेद' इतिवत्। अतो याव-त्किञ्चित् स्वकीर्तनोपयोगि तावदावर्तनीयमिति ॥ ३९ ॥

किञ्च, तदप्यशक्यम्, सापेक्षमिति। अतो नमनमेव कर्तव्यमित्याह—

**यतोऽप्राप्य न्यवर्तन्त वाचश्च मनसा सह।**
**अहं चाऽन्य इमे देवास्तस्मै भगवते नमः ॥ ४० ॥**

* यतोऽप्राप्येति। वाक् मनश्च य भगवन्तमप्राप्यैव,अर्वागेव, निवर्तेते, अहङ्कारश्च देवः। अन्ये च इमे देवा इन्द्रियाधिष्ठातारस्तमप्राप्यैव निवृत्ताः। वाचोऽत्र वेदरूपाः। मनस्तेषामपि पूर्वरूप भगवदीयम्। 'यतो वाचो निवर्तन्ते' इति श्रुतेरप्ययमेवाऽर्थ। तदनु अहङ्कार। यस्तु श्रुतौ 'अहमित्येवात्मान वेद भगवान्। सोऽहंनामाभवत्' इति। सोऽपि जगत्कर्ता स्वयमात्मान न वेद। तेन वा जगन्निर्माणार्थे निरूपितानीमानि तत्त्वानि देवा न विदुः। तस्मान्माहात्म्यज्ञान दुर्लभमिति तदर्थं प्रयासमकृत्वा, केवल भगवते नमनं कर्तव्यम्। तदाह—तस्मै भगवते नम इति। यादृशोऽसि हरे! कृष्ण! तादृशाय नमो नम। यादृशोऽस्मि हरे! कृष्ण! तादृश मा हि पालय ॥ ४० ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां
तृतीयस्कन्धे षष्ठाध्यायविवरणम् ॥ ६ ॥

---

प्रकाश।

तीत्यरुच्या पक्षान्तरमाहुः—अथवेत्यादि। अन्धपरम्परान्यायतुल्यमिति। परोक्षज्ञानत्वात्तत्तुल्यम्। युक्त इति जीवाज्ञानकौण्ठ्यपरत्वाद्युक्त। एतदुपष्टम्भायाहुः—वस्तुत इत्यादि। परमतादिति। परमतमालम्ब्य। ननु शब्दे ज्ञानस्य तत्तुल्यत्वे महाननय इत्याशङ्कायामाहु —वेदे त्वित्यादि। अत्र पूर्वश्रुतिर्बह्वृचा (बहृचा) नाभावृचसूक्तस्था, द्वितीया तु तैत्तिरीयसंहिताप्तश(स्वष्टमा)ष्टकस्था। तत्र दिक्ष्वतीकाशान् करोति'इति विधा-य प्रत्यक्षप्रशसार्थं 'को हि तद्वेद यदमुष्मिन् लोकेऽस्ति वा न वा' इत्युक्तम्। तथा च, तत्र यथा न देवलोकासत्त्वे तात्पर्यम्, किन्तु प्रत्यक्षस्य प्रशंसायामिति नानय, तथा भाववृत्तफलश्रुतावपि न सृष्टिकर्तुरज्ञाने तात्पर्यम्, किन्त्वन्येषा तदज्ञाने। इत्यन्येषा ज्ञानदौर्घट्याच्चादियत्ताना श्रमो न विधेय इति तात्पर्यान्नाऽनय इत्यर्थ।

* यत इत्यत्र। तदपीत्यादि। तद् ज्ञानमपि गुरुसापेक्षत्वादशक्यमित्यर्थः। अप्राप्येति। इयानयमिति प्रकर्षेणाऽज्ञात्वा। अयमेवाऽर्थ इति। इयत्ताया अप्राप्तिरेवार्थः। तत्राऽहकारस्याऽनुक्तत्वादेतस्य कथ तदर्थ निश्चायकत्वमित्यत आहु —यस्त्वित्यादि। न वेदेति। इयानहमिति न वेद। तथा चेतरत्रानुवीक्षणस्यो-क्तत्वाद् ज्ञानशङ्का स्यादिति तन्निवृत्त्यर्थमेतदुक्तम्। तेन तत्राऽपि सर्वस्याऽऽत्माभिन्नत्वमेव विवक्षितम्, न तु स्वरूपेयत्तेत्यर्थः।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे षष्ठाध्यायविवरणम्।

# सप्तमाऽध्यायविवरणम् ।

* हरेरिन्द्रियवर्गस्य मनसः सर्ग उच्यते ।
संकल्पेन विकल्पेन द्विधा तद्विनिरूप्यते ॥ १ ॥
संकल्पो निश्चयः प्रोक्तः स च सन्देहपूर्वकः ।
अन्यथा ज्ञानमेव स्यात् तदर्थं प्रथमो द्विधा ॥ २ ॥
विकल्पो विविधः पक्षस्ते प्रश्ना इह रूपिताः ।
अत्र सर्वाणि कार्याणि पृष्टानि भगवत्कृतिम् ।
ज्ञातुम्, सा मनसा भाव्या पूर्वं चाऽपि कृतौ मनः ॥ ३ ॥

\+ ( श्रीशुक उवाच । एवं ब्रुवाणं मैत्रेयं द्वैपायनसुतो बुधः ।
प्रीणयन्निव भारत्या विदुरः प्रत्यभाषत ॥ १ ॥ )

एवं पूर्वाध्यायान्ते 'उद्धृत्य पुष्पेभ्यः' इति प्रश्ने स्वबुद्ध्या यावदुद्धृतं तावन्निरूपितम्, तत्र ' यत्स्वयं चाऽऽत्मवर्त्माऽऽत्मा न वेद ' इति वचनात् भगवतोऽलौकिकं सामर्थ्यं प्रायेणाऽस्याऽनभिमेतमिति, तदभिप्रायेण जीवे भगवति च सन्दिग्धमर्थद्वयं पृच्छति । तत्र प्रथमं भगवति सन्देहचतुष्टयम्, जीवे च द्वयं पृच्छति—

## विदुर उवाच ।

ब्रह्मन् ! कथं भगवतश्चिन्मात्रस्याऽविकारिणः ।
लीलया चाऽपि युज्येरन्निर्गुणस्य गुणाः क्रियाः ॥ १ ॥

---

गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृतः प्रकाशः ।

* अथ सप्तमाध्यायं विवरिषवोऽवसररूपां सङ्गतिं स्मारयन्तोऽर्थमाहुः—हरेरित्यादि । तेन मनोद्वारा सर्वेन्द्रियनिरूपणमध्यायार्थः । ननु द्विधा तन्निरूपणस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः—सङ्कल्प इत्यादि । अन्यथेति । सङ्कल्पस्य तादृशत्वाभावे । तथा च, यतस्तत् स्वरूपं ' यत्संकल्पविकल्पाभ्यां वर्तते कामसंभवः ' इतिलक्षणकमुभयघटितम्, अतः प्रथमो मनोरूपपदार्थो द्विधा निरूप्यत इत्यर्थः । नन्वत्र प्रश्नकथनेन कथं विकल्पबोध इत्यत आहुः—विकल्प इत्यादि । एवं शास्त्ररीत्याऽर्थमुक्त्वा विदुरमैत्रेयसंवादे प्रश्नसङ्गतिं प्रदर्शयन्ति—अत्रेत्यादि । तथा चोपोद्घातः सङ्गतिरित्यर्थः ।

\+ ' एवं ब्रुवाणम् ' इति श्लोकः प्रायेण क्षेपक इति प्रतिभाति ।

---

१ तद्वि ग.

*ब्रह्मन्निति। करणादिव्यापारास्त्वया एकविधा निरूपिताः, ते च गुणातीता एवेति वक्तुं न शक्यन्ते। सगुणाश्चेत् कार्यकारणवैलक्षण्यम्। ब्रह्मन्निति संबोधनं ज्ञानस्य निश्चितत्व एव ब्रह्मभावो भवतीति। तव निश्चितमेव, किन्तु बोधनार्थं पृच्छयत इत्यौद्धत्यसमाधानम्। कथमिति प्रकारे प्रश्नः। भगवतश्चिन्मात्रस्येति। भगवच्छब्दो न यौगिकः, किन्तु रूढ्या ब्रह्मपरः। तच्च चिन्मात्रमेवेति धर्मशक्तिविशेषस्वरूपाणामभावात्, वाच्यवाचकसंबन्धाद्यभावात्, अनिरूप्यत्वाच्च कथं तादृशस्य जगत्कर्तृत्वम्। कर्तृत्वादयश्च धर्मा विकृता विकारिणो भवन्ति। अतोऽविकारिणो भगवतः प्रयोजनसन्देहपूर्वपक्षाभावेऽपि, निर्गुणस्य गुणाः क्रियाः कथं भवन्तीति बीजसन्देहप्रश्नः। कार्यं हि बीजप्रयोजनाभ्यां विना न भवति। तत्र प्रयोजनं परमानन्दस्य जगति नाऽस्त्येव। 'लोकवत्तु लीला....'इतिन्यायेन प्रयोजनाभावेऽपि लीलया करिष्यतीति चेल्लीलाऽपि न संभविष्यतीत्यग्रे वक्ष्यते। अस्तु वा लीला, तथापि जगतो बीजं न भगवान्, विलक्षणत्वात्। जगदचेतनं विकारि नानारूपं च, भगवांस्तु चिन्मात्रमविकारि च। किञ्च, जगत्सगुणम्, भगवान्निर्गुणः; अतः कार्यकारणवैलक्षण्यात् न भगवत्कार्यं जगत्। यद्यपि चिन्तामणेः सकाशात्तद्विलक्षणं सकलमेव कार्यमुत्पद्यते, तथापि पूर्वपक्षिणः पक्षे न चिन्तामणिमात्रात् कार्यमुत्पद्यते, अन्यथा सर्वदैवोत्पद्येत। किन्तु कामयितुः सान्निधाने यथा यथा चिन्तोपपद्यते, घटाकारेण पटाकारेण च; तथा तथा मणिसान्निध्यात् ते पदार्था मनसा भाविताः कौयकृता इव भवन्ति। इयमलौकिकी तस्य शक्तिः। भगवतस्तु द्वितीयसान्निध्याभावान्नाऽनेनाऽपि प्रकारेण कार्योत्पत्तिः सम्भाविता। तदाह—चिन्मात्रस्येति ॥ १ ॥

एवं बीजभावं दूषयित्वा फलभावापन्नां लीलां दूषयति—

**क्रीडायामुद्यमोऽर्भस्य कामश्चिक्रीडिषाऽन्यतः।**
**स्वतस्तृप्तस्य च कथं निवृत्तस्य सदाऽन्यतः ॥ २ ॥**

+ क्रीडायामिति। लीला नाम विलासेच्छा,कार्यव्यतिरेकेणैव कृतिमात्रम्। न तया कृत्या बहिः कार्यं जन्यते, जनितमपि कार्यं नाऽभिप्रेतम्; नाऽपि कर्तरि प्रयासं जनयति, किन्त्वन्तःकरणे पूर्णे आनन्दे तदुल्लासेन कार्यजननसदृशी क्रिया काचिदुत्पद्यते,यथा लोके राज्ञः। सा लीला। साऽपि नोपपद्यते। तत्र प्रयोजनाभावेऽपि हेतुरस्ति। स च हेतुर्लोकसिद्ध एव वक्तव्यः, लोकन्यायेन लीलानिरूपणात्। सा च ली-

प्रकाशः।

* ब्रह्मन्नित्यत्र। अस्येति। मैत्रेयस्य। तदभिप्रायेणेति। मैत्रेयाभिप्रायेण। करणादिव्यापारा इत्यादि। वक्तव्यप्रतिपत्तिप्रभृतयस्ते व्यापाराः सर्वेऽपि देवतेन्द्रियगोलकसाध्यत्वेन लोकतुल्या निरूपिता इत्यर्थः। धर्मेत्यादि। धर्मोऽसत्त्वेनैव स्वमाननम्, शक्तिर्माया कालादिरूपा, विशेषो व्यावर्तको रूपादिः,स्वरूपं विमदः सन्निवेशस्तेषामभावात्। वाच्येत्यादि। द्रव्यजातिगुणक्रियासम्बन्धे हि शब्दस्य बोधनार्थं प्रवृत्तिः, ब्रह्मणि तु शब्दसम्बन्ध(घ)टकानां तेषामभावेन वाच्यवाचकयोरर्थशब्दयोः परस्परसम्बन्धस्य, आदिपदेनोच्चारणद्वारकस्याभावाद्धेतोः शब्दकर्तृत्वेनाऽप्यनिरूप्यत्वात्। बीजप्रयोजनाभ्यामिति। बीजं समवायि, प्रयोजनं कर्त्रभिमतं फलम्, ताभ्यामित्यर्थः। मात्रस्येति। एवं चाऽनेन पदेन समवायित्वमलौकिकी कर्तृत्वशक्तिश्चाऽऽक्षिप्ता ज्ञेया।

+ क्रीडायामित्यत्र। फलभावापन्नामिति। लीलयैव सृष्टिप्रकरणप्रयोजनमिति तद्भावापन्नाम्। काम-

१ एवकारो मद्रापत्रे ख, ग, घ. २ वा घ. ३ कार्यकृताः क, ख, ङ.

ला बाले प्रसिद्धा । बालस्यापि कामेनैव चिक्रीडिषा भवति, अन्यथा सर्वदैव क्रीडितुमिच्छा स्यात् । कामोऽपि सहेतुकः, अन्यथा सर्वदा स्यात् । तदाह—अर्भस्य क्रीडायामुद्यमः प्रथमतो भवति । स चार्भस्य प्रथमं कामात् । तत्रैवं वाक्यरचना—प्रथमतोऽर्भस्य कामो वासनया, 'काममय एवाऽयं पुरुषः' इति श्रुतेः । तदनन्तरं चिक्रीडिषा क्रीडितुमिच्छा अन्यतश्च भवति; अन्यं बालकं निमित्तमाश्रित्य, एकस्य क्रीडाऽसम्भवात् । तदभावे कामेऽपि क्रीडेच्छा निवर्तेत इति । कामोऽत्र क्रीडाज्ञानम् । क्रीडायाः फलरूपत्वात् साधनरूपत्वाच्च कामप्रयत्नयोरेकविषयत्वम् । यत्र पुनः स्वर्गादौ साधनफलयोर्भेदः, तत्र कामः स्वर्गे, चिकीर्षा यागे । अतोऽत्र न पौनरुक्त्यम् । तदनन्तरं क्रीडायामुद्यमो भवति, क्रीडां कर्तुमुद्युक्तो भवतीत्यर्थः । केचित्तु, 'कामस्यैव विशेषणमुद्यमं वदन्ति । उद्यमयतीत्युद्यमः, काम एव पुरुषमुद्यमयति अन्यतश्चिक्रीडिषा भवति' इति । तच्चिन्त्यम् । एतादृशोऽपि पक्षो भगवति न सम्भवति । स्वतृप्तस्य कामो न सम्भवति । कामो ह्यपूर्णस्यैव, अन्यथा फले जातेऽपि कामः स्यात् । स्वस्यैव सर्वफलरूपत्वात् मासत्वाच्च तृप्तस्य कामाभावो लोकसिद्धः । प्रकारभेदेनैव कामतृप्तिश्चेददतृप्तो भगवान् स्यात् । ततश्च स्वार्थमेव कुर्यात् । एतादृशी तृप्तिरदूषणमिति चेत् स्वानन्दस्य परिच्छेदः स्यात् । तस्माद्युक्त्या कामो निरूपयितुमशक्य इति 'सोऽकामयत' इति श्रुतिरन्यपरा भवति । नित्यश्चेत् कामः स्यात्, सर्वदैव कार्यं भवेत् । कार्यपक्षे तु तज्जनकान्तराभावादनुपपत्तिरापद्येत । कालादिना तदुद्बोधपक्षेऽपि भगवतः कालादिसंबन्धो भवेत् । स च नास्तीत्याह—निवृत्तस्य सदाऽन्यत इति । अन्यसंबन्धाभावस्तस्य सर्वदा; अतो बीजप्रयोजनाभावात् भगवतः कार्यपक्षोऽनुपपन्नः ॥ २ ॥

किञ्च, मायायां स्वीकृतायां यद्यपि पूर्वोक्तसर्वदूषणनिवृत्तिर्भवति, किन्तु तदेव स्वीकर्तुमशक्यम्, भगवतो मायासंबन्धस्य निरूपयितुमशक्यत्वात् । माया ह्यज्ञानात्मा, सा ज्ञानाभावे भवति । भगवतस्तु ज्ञानाभावो न सम्भवतीत्याह श्लोकद्वयेन—

**अस्राक्षीद्भगवान्विश्वं गुणमय्यात्ममायया ।**
**तया संस्थापयत्येतद्भूयः प्रत्यपिधास्यति ॥ ३ ॥**

अस्राक्षीदिति । चित्संबन्धिनीमेव मायां मन्यमानस्यैष प्रश्नः । भगवानिदं विश्वं गुणमय्याऽऽत्ममायया अस्राक्षीत्, तयैव च संस्थापयति, तयैव च भूयः प्रत्यापिधास्यति संहरिष्यति ॥ ३ ॥

---

प्रकाशः।

स्याऽभिलाषात्मकत्वेनेच्छारूपत्वाच्चिक्रीडिषापदं पुनरुक्तं स्यादिति तन्निवृत्त्यर्थमाहुः—कामोऽत्रेत्यादि । अत्र श्रीधरमतमनुवदन्ति—केचित्त्वित्यादि । तत्राऽस्वरसं बोधयन्ति—तच्चिन्त्यमिति । अभिध्योपदेशसूत्रे कामोऽभिध्यात्मको व्यासपादैरङ्गीकृतः । अभिध्या च—इदमेवं कार्यमित्यध्यवसायरूपं ज्ञानम् । तदत्र क्रीडाविषयकं व्याख्यातुमुचितम् । उद्यमशब्दश्च प्रलये रूढः । तदुभयं विहायैवं योगादरणं नोचितम्, व्यासाशयविरोधादित्यर्थः । एतादृशोऽपि पक्ष इति । अभिध्यारूपकामात्मकः पक्षः । काम इति । उक्तविधोऽपि कामः । फल इति । क्रीडारूपे फले । अन्यपरेति । । जीवपरा, शबलपरा वा । कार्यपक्ष इति । जन्यकामपक्षे ।

---

१ प्रत्यभिधास्यति ख. घ. च.

एवं माययोत्पत्तिस्थितिप्रलया विश्वस्य भगवत्कृता इति पक्षमनूद्य, मायासंबन्ध एव तस्य न घटते, पूर्णज्ञानत्वादित्याह—

**देशतः कालतो योऽसाववस्थातः स्वतोऽन्यतः ।**
**अविलुप्तावबोधात्मा स युज्येताऽजया कथम् ? ॥ ४ ॥**

× देशत इति । ज्ञानस्य नाशः पञ्चधा सम्भवति । भगवांस्तु पञ्चप्रकारेणाऽप्यविलुप्तावबोधात्मा । न विलुप्तोऽवबोधो ज्ञानं यस्य, तादृशश्चासावात्मा च । बोध एवाऽऽत्मा वा । स कथमजया युज्येत ? तत्र कस्यचिद्बोधो देशेन नश्यति, घटज्ञानं घटेन परिच्छिन्नं पटं न विषयीकरोतीति देशतस्तस्याऽभावः । कालतोऽपि ज्ञानस्य नाशः, कालान्तरे विस्मरणात् । अवस्थातोऽपि नाशः, स्वप्ने जाग्रदवस्थावस्तूनां ज्ञानाभावात् । स्वतोऽपि नाशः, उदासीनज्ञानानां संस्कारानाधायकत्वात् । अन्यतोऽपि नाशः, विरोधिगुणप्रादुर्भावात् । भगवतस्तु ज्ञानं पञ्चविधैरपि दोषैरसंबद्धम् । तत्र सर्वविषयकत्वान्न देशतः परिच्छिन्नम्, नित्यत्वान्न कालतः, भगवतोवस्थाभावान्नाऽवस्थातः, निर्विषयकत्वान्न स्वतः, भगवतो विरोधिगुणाभावान्नाऽन्यतः । अतोऽजया मायया प्रकृत्या वा न युज्येत । तस्मात्स्वतो वा, मायासंबन्धेन वा, भगवतो जगत्कर्तृत्वं नोपपद्यते । किन्त्व, *जीवोऽपि भगवानेव त्वया निरूपितः । तथा सति तदर्थं जगत्सृष्टौ* हिताकरणादिदोषः ॥ ४ ॥

दोषान्तरमप्याह—

**भगवानेक एवैष सर्वक्षेत्रेष्ववस्थितः ।**
**अमुष्य दुर्भगत्वं वा क्लेशो वा जन्मभिः कुतः ? ॥ ५ ॥**

* भगवानिति । एक एव भगवान् सर्वक्षेत्रेषु सर्वदेहेषु अवस्थितः । सर्वदेहेष्ववस्थित एक एवेति वा । एतादृशस्य दुर्भगत्वं वा, जन्मभिः क्लेशो वा न भवेत् । अनुभवसिद्धत्वाच्च क्लेशस्य । अज्ञानतोऽङ्गीकारेऽपि स एव दोषः । पुनः पुनर्जन्मानि च श्रूयन्ते । तस्माद्भगवतो जीवभावोऽप्यनुपपन्नः, जगत्कर्तृत्वं चाऽनुपपन्नमिति ॥ ५ ॥

एतस्मिन्नर्थे मे मनः सिद्यतीत्याह—

---

प्रकाशः।

× देशत इत्यत्र । विरोधिगुणप्रादुर्भावादिति । भिन्नविषयकेच्छाप्रलयादयः सुखदुःखादयो विरोधिगुणाः, तत्प्राकट्यात् । नित्यत्वेन सर्वविषयकत्वेन चाऽन्योपसिद्धावपि यत् 'अवस्थातः' इत्यादिकं हेतुत्रयमुक्तम्, तत्स्वरूपपरिचायनार्थमित्याशयेनाहुः—भगवत इत्यादि । निर्विषयकत्वादिति । विषयस्य मायिकत्वाद्वस्तुतोऽभावेन तथात्वात् । विरोधिगुणाभावादिति । निर्गुणत्वेन नित्यसर्वविषयकत्वेन गुणाभावे च सति तदभावात् । एवं चतुर्भिर्भगवद्विषयकं सन्देहचतुष्टयमुक्तम्—निर्गुणत्वाद्गुणाः कथम् ? अविकारित्वात् क्रियाः कथम् ? स्वतन्त्रस्य कामोऽभिप्रायः कथम् ? केवलस्य क्रीडापि कथम् ? चतुर्णां मूलं मायासम्बन्धश्चेत्, स एव कथमिति पञ्चधा पर्यवस्यति । तदाहुः—किन्त्वित्यादि ।

* भगवानित्यत्र । स एवेति । अज्ञानसम्बन्ध एव ।

**एतस्मिन्मे मनो विद्वन्! खिद्यते ज्ञानसङ्कटे ।**
**तन्नः पराणुद विभो! कश्मलं मानसं महत् ॥ ६ ॥**

एतस्मिन्निति । ज्ञानसङ्कटे । ज्ञानस्य शाब्दस्य । युक्तिरूपविशालमार्गाभावात् ज्ञानस्य प्रसरणाशक्तेः, सङ्कटं युक्त्यभावः । अन्यथाज्ञानं वा सङ्कटम् । तत्र निर्द्धारार्थं प्रवृत्तं मनः प्रसरणाभावाद्युक्त्यभावेन खिद्यति । तं खेदं नोऽस्माकं हृदये वर्तमानं युक्तिभिः पराणुद । तिष्ठत्वेतदित्याशङ्कयाऽऽह—कश्मलं मानसं महदिति । इदं तु मनसो महत् कश्मलम् । तत्तु महद्भिर्दूरीकर्तव्यमेव, अन्यथा अग्रिमं पूर्वोक्तं च ज्ञानं दुष्टे मनसि न तिष्ठेत् । अतो निरूप्यमाणार्थबोधार्थमिदं पराणुदेत्यर्थः । * ऐश्वर्यं प्रथमे त्यक्तं द्वितीये वीर्यमेव च । यशःश्रियौ तथा द्वाभ्यां वैराग्यं ज्ञानमन्त्ययोः ॥ १ ॥ स्वयुक्त्या भ्रमसम्पत्त्या भगवत्त्वं निराकृतम् । ततोऽत्र भगवद्वादः सर्वोऽपि विनिराकृतः ॥ २ ॥ तस्मिन्निराकृते प्रश्नो न पूरित इति स्थितम् । अतस्तस्योत्तरं वाच्यं स्वोक्तार्थस्थापनाय हि ॥ ३ ॥ ॥ ६ ॥

-स हि मैत्रेयः सर्वनिरपेक्षश्चित्तशुद्धयर्थं यथोक्तं गृहीत्वा, आवर्तनीयमित्युक्त्वा, पूर्वपक्षे कृते किमग्रे वदति नवेति सन्देहं वारयितुम्, शुको वदतीति पक्षं सहेतुकमुपपादयति—

## श्रीशुक उवाच ।

**स इत्थं चोदितः क्षत्त्रा तत्त्वजिज्ञासुना मुनिः ।**
**प्रत्याह भगवच्चित्तः स्मयन्निव गतस्मयः ॥ ७ ॥**

+स इत्थमिति । भगवदीयत्वात् भगवदाज्ञासहकारित्वात् विदुरस्य प्रेरकत्वम्, मैत्रेयस्य कथनेच्छाजनकत्वम् । क्षत्त्रेति स्वतोऽपि प्रेरकत्वम्, निपुणत्वात् । तत्राऽपि तत्त्वजिज्ञासुना । नोद्ग्रहणमात्रम् । अतस्तत्त्वजिज्ञासुं बोधयेदिति । किञ्च, मुनिरयं निर्द्धारितं जानाति, भाव्यर्थं च । भगवदाज्ञापरिपालनार्थमाक्षेपोऽपि समाधातव्य इति भगवच्चित्तः । भगवानेव तच्चित्ते निर्द्धारितं बोधयत्विति प्रार्थनार्थं वा । स्मयन्निवेति । किमेतैरेतावत्कालं भारतादौ बुद्धमिति हसन्निव । इवेति भगवन्मायाया मोहकत्वात् । गतः स्मयो गर्वो यस्य । अतोऽयं गूढतया निरूपयिष्यति, अनधिकारेणाऽज्ञाने पुनः प्रश्ने वा तूष्णीं स्थातव्यमिति । निबन्ध एवाऽत्र समाधानं स्पष्टतया निरूपितम् । गुणातीतात् सृष्टिकथा सर्वथा नोपपद्यते ।

---

### प्रकाशः ।

* पद्सु श्लोकेषु सिद्धमर्थं कारिकाभिः सङ्गृह्णाहुः—ऐश्वर्यमित्यादि । अन्तिमे स्वस्य ज्ञानाभाव उक्तः, स च पूर्वश्लोकोदितादेकात्मवादात् ब्रह्मण्येव पर्यवस्यतीति ज्ञानाक्षेप-सिध्यति । स्फुटमन्यत् ।

+ स इत्थमित्यस्याऽऽभासे शुकपदमुपपादयतीत्यनेन सम्बध्यते । एवं शुकोक्तिव्याख्यानेन मैत्रेयतात्पर्यं निरूप्य प्रश्नसमाधानयोर्दुरूहत्वात् तदर्थो निबन्धे निरूपित इति स्मारयन्तस्तत्रत्याभिरेव सप्तभिः कारिकाभिस्तमर्थमाहुः—गुणातीतादित्यादि । अनुपपत्तौ 'कार्यकारणवजात्यालोकहेत्वोरभावतः' इति हेतुद्वयम् । कारणं निर्गुणम्, कार्यं सगुणमिति तयोर्वैलक्षण्यात् । लोकहेतुः कामोऽभिव्यक्तिरूपः—साऽप्यनासःकामस्यैव भवतीति ब्रह्मणि तदभावात् । इत्येवं यथायथमुपादानकर्तृत्वविरोधि । आद्यस्य—'ब्रह्म जगदुपादानम्; जगदात्मकत्वात्, जगत्पूर्वरूपत्वाद्वा; यद्यदुपादानं तत्तदात्मकम्, तत्पूर्वरूपं वा; यथा मृत् घटादि-

**कार्यबाधनम् ॥ ५ ॥ विरोधमात्रमाहोस्वित् आद्ये सेयं दशितः । द्वितीये भूषणं तस्या विरोधो न तु दूषणम् ॥ ६ ॥ विरुद्धकार्यसंबन्धस्तत्कृतस्तेन वर्ण्यते । विरोधोऽपि प्रतीत्यैव न वस्तुनि यतो बृहत् ॥ ७ ॥ इति ॥ ७ ॥**

* अत्र पूर्वपक्षसमाधानं ब्रह्मवादे स्पष्टमेव 'दृश्यते तु....' इत्यधिकरणेन निरूपितम् । अविकृत एव भगवान् सर्वं करोति तादृशमेव भगवत्स्वरूपम्, श्रुतिप्रामाण्यात्; यादृशे अङ्गीक्रियमाणे सर्वसमाधानं भवति । तस्मात्तत्र न मायादिकल्पना । योऽनुपपत्तिपरिहारो मायया सोऽपि स्वरूपेणैव । एवं सति श्रौतार्थता भवति, अन्यथा त्वप्रामाणिकं स्यात्, स्वकपोलकल्पनात् । स पक्षोऽत्रैवर्णिकायं सर्वथा न वक्तव्य

## प्रकाशः।

भावेन कर्तृत्वविरोधात्, कार्यबाधनं कर्तव्यमिति वा, कार्यस्य दृश्यमानत्वात्तस्य कर्तृपूर्वकत्वनियमेन, सिद्धे कर्तरि, तन्निर्वाहककामाभावेन कर्तृत्वकामाभावयोः सहावस्थानविरोधमात्रं वेति । तत्राऽऽद्ये समाधानं सेयमिति पदद्वयेन । तस्याऽर्थो यतो दर्शिरिति । कार्यदर्शनं यतो वर्तते, अतो नियमबलात् सिद्धे कर्तरि कामाभावेऽपि यया कर्तृत्वसिद्धिस्तादृशीयम् । तथा च, पूर्वोक्तहेतोः स्वरूपासिद्धत्वेपि 'ब्रह्म जगन्निरूपितक्रीडाकामाभावेपि जगत्कर्तृ, मायानित्यसम्बन्धेन तत्क्रियावत्त्वात्; यत् यत्संबन्धेन यत्क्रियावत्, तत् तन्निरूपितक्रीडाकामाभावेऽपि तत्कर्तृ, अयःकान्तसम्बन्धेन भ्रमणकर्तृलोहवत्' इति हेत्वन्तरेण गुणातीतस्याऽनुपहितत्वेपि सम्बन्धमात्रात् कर्तृत्वे सिद्धे प्रथमविकल्परीत्या परिहारः। द्वितीये तु, अयं कर्तृत्वकामाभावयोः सहावस्थानविरोधस्तस्या भूषणम्, न तु दूषणम्, तत्प्रभावोत्कर्षबोधकत्वात्, तत्सामर्थ्यविशेषबोधकत्वाद्वा; यदेवं तदेवम्. अयःकान्तसम्बन्धिलोहनिष्ठकर्तृत्वकामाभावविरोधवत् ' इति द्वितीयविकल्परीत्या परिहारः । अयं मूले 'यत्नयेन विरुध्यते' इत्यनेनोक्तः, तयोः सहावस्थानस्य सार्वदिकत्वादिति। एतेनैव जीवविषयकोऽपि सन्देहः परिहृत इत्याहुः–विरुद्धेत्यादि । यतः सा विरुद्धकार्यकर्त्री, तेन हेतुना मायया विरुद्धकार्यसम्बन्धो जीवे, 'ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम्' इति वर्ण्यते । तथा च, भगवतो माया (याः) स्वसम्बन्धे तत्स्वरूपविरुद्धकार्यकर्त्री, मायात्वात्, छिन्नशिरस्कजीवननिष्कासितान्त्रस्वास्थ्यसम्पादकैन्द्रजालिकमायावत् ' इत्यनुमानेन तस्या विरुद्धकार्यकर्तृत्वे साधिते; जीवो दुर्भगक्लिष्टो भवितुं नार्हति, ब्रह्माभिन्नत्वेन तद्धर्मकत्वात्; महाकाशाभिन्नघटाकाशवत् ' इत्यनुमानस्याऽपि 'जीवस्तथा भवितुमर्हति, तादृशत्वेपि मायासम्बद्धत्वात्, ऐन्द्रजालिकवत् ' इति प्रतिसाधनेन सत्प्रतिपक्षत्वात् कार्यासाधकत्वे जीवविषयकसन्देहस्याऽप्येतेनैव परिहार इत्यर्थः। नन्वस्त्वयं जीवविषयकसन्देहस्य परिहारः, तथापि यथा तत्रैन्द्रजालिकस्य न तत्क्लेशकृतक्लेशः, तथाऽत्र जीवस्याऽपि तदभावोऽपेक्षितः, स कुतो नेत्याकाङ्क्षायाम्, 'यदर्थेन विनाऽमुष्य' इत्यादीनां तात्पर्यमाहुः–विरोधोऽपीत्यादि। यतो बृहदिति । यतो हेतोर्जीवोपि ब्रह्मैव । तथा च, तादृशस्वस्वरूपज्ञानाभावात् क्लेश इति तदभावाय 'स वै निवृत्तिधर्मेण' इत्यादिश्लोकत्रयं कर्तव्यमिति समाधानग्रन्थाशय इत्यर्थ.।

* एवं द्वयोराशयं निरूप्य विशेषेण व्याकरिष्यन्तोऽत्राप्यन्ततो ब्रह्मपदस्यैव सिद्धत्वात् सिद्धान्तरीत्या मैत्रेयेण कुतो न समाहितमित्याकाङ्क्षायां तत्तात्पर्यं वदन्तोऽवतारयन्ति- अत्रेत्यादि । स्वरूपेणैवेति । ब्रह्मणोऽद्वितीयत्वेन मायाया अपि स्वरूपान्तःपातित्वात्, तेनैव । ननु मायाया अपि स्वरूपान्तःपातने को वा आग्रहः? इत्यत आहुः–एवं सतीत्यादि । तर्हि ब्रह्मवादेनैव कुतो न समाहितमित्यत आहुः–स इत्यादि।

कार्यकारणवैजात्याल्लोकहेतोरभावत ॥ १ ॥ निरुपाधिकरूपे हि सन्देहद्वयमीरितम्। सोपाधित्वे परीहारस्तदेव न भवेदिति ॥ २ ॥ तृतीयो ब्रह्मणः सिद्धो जीवेऽप्येवमभेदतः। मायासंबन्धकार्ये हि परिहार्ये तयोः क्रमात् ॥३॥ प्रथमस्य परीहारः षष्ठ्या नित्यतयोदितः। भगवच्चाविरोधित्वं प्रकृत्यैव च सूचितम् ॥४॥ असमासात् प्रधानत्वं तेन नोपाधिसम्भवः। द्वितीयस्य परीहारे विरोधात्

प्रकाश।

का, घटपूर्वरूप वा; तद्वत्' इति साधने, 'नोपादानम्, कार्यविलक्षणत्वात्, घटविलक्षणतन्तुवत् इति पक्षेऽज्ञायकत्वात्। द्वितीयस्य च, 'ब्रह्म जगत्कर्तृ, तन्निरूपितक्रीडाकामत्वात्, यो यन्निरूपितक्रीडाकाम, स तत्कर्ता बालवत्' इति साधने, 'न तन्निरूपितक्रीडाकामम्, आप्तकामत्वात्, वृद्धवत्' इति हेतौ स्वरूपा-(दि) सिद्ध्युन्नायकत्वात्। सा गुणातीतात् सर्वथा नोपपद्यत इत्येव निरुपाधिकरूपे सन्देहद्वयमीरितमित्यर्थः। ननु माऽस्तु गुणातीतस्योपादानत्व कर्तृत्व च। मायोपाधिके तु साजात्यस्य कामस्य च सभवात् सृष्ट्यनुपपत्तिपरीहार सम्भवतीत्युक्तौ, तदेव सोपाधित्वमेव ब्रह्मणो न भवेदिति तृतीयसन्देहो ब्रह्मणः सिद्धः। तथा च, पूर्वोक्तानुमानयो पक्षे ब्रह्मणि सोपाधित्वेनाऽविशेषितवैलक्षण्या (?) कामत्वस्य च निवृत्तौ प्रतिसाधनम्याऽपुनरुज्जीवनादुक्तहेतुकृतस्तृतीयोऽपि सन्देहो ब्रह्मविषयकोऽपरिहार्य इत्यर्थ। एव श्लोकचतुष्टयासिद्धोऽर्थ उक्तः। अग्रिमश्लोकद्वयार्थं वदन्त एतदेव दूषण ब्रह्मणो जीवभावेऽप्यतिदिशन्ति—जीवेऽप्येवमभेदत इति। तथा च, पूर्वोक्तानुमानेन सोपाधित्वे निश्चयेऽनवकाशात् परिहारे दोषस्य क्रियमाणे, 'ब्रह्म नोपाधिसम्बद्धम्, पूर्णज्ञानत्वात्, यन्नैव तन्नैवम्' इत्यनुमानेन विशेषणस्य बोधसाधनहेतूनामाश्रयासिद्धत्वेन, प्रतिसाधनस्य, 'शुद्धं ब्रह्म प्रकारान्तरानर्हम्, अनुपाधित्वात्, शुद्धवसनादिवत्' इत्यनुमानेन ब्रह्मण प्रकारान्तरापत्तेरपि निवृत्तौ, 'जीवो दुर्भग क्लिष्टो भवितु नाऽर्हति, ब्रह्माभिन्नत्वात्, यद्यदभिन्नं तत्तदविरुद्धधर्मकम्, महाकाशाभिन्नघटाकाशवत्' इत्यनुमानेन द्वितीयोऽपि जीवविषयकः सन्देहोऽपरिहार्य इत्यर्थ। एव षण्णामर्थं निरूप्य प्रश्नक्रियाया आशयमाहु—मायेत्यादि। हिरेतौ। यत एव ब्रह्मस्वरूपे जीवस्वरूपे च सन्देहः, अतो हेतोर्ब्रह्मणि मायासम्बन्धे जीवे तत्कार्ये चैते परिहार्ये इति प्रष्टुराशय इत्यर्थः। अतः पर सिद्धान्ताशयमाहुः—तयोरित्यादि। तयोः ब्रह्मविषयसन्देहयोर्मध्ये क्रमात् प्रथमस्योपादानत्वानुपपत्तिरूपस्य परिहार 'सेयं भगवतो माया यन्नयेन विरुध्यते' इति षष्ठ्या सम्बन्धस्य नित्यतया उदित उक्त इत्यर्थः। ननु सम्बन्धनित्यत्वे गुणातीतत्वरूपभगवत्त्वहानिरिति कथमुक्तमित्याकाङ्क्षायामाहुः—भगवच्चेत्यादि। अत्र भगवत्पदेन गुणातीतत्वाविरोधित्वम्, प्रकृत्यन्तुल्यैव षष्ठ्या सम्बन्ध, असमासात् प्रधानत्व सूचितम्। तथा च, यथा आकाशस्थसूर्यस्य दूरत एव नानावर्णदर्पणजलादिसम्बन्धः, तथा ब्रह्मणो मायासम्बन्धात् 'शुद्ध ब्रह्म मायासम्बद्धस्वविलक्षणजगदुपादानम्, मायानुपहितत्वेपि दूरतो मायासम्बद्धत्वात्, यद्यदनुपहितत्वेपि यत्सम्बद्धम्, तत् तत्सम्बद्धस्वविलक्षणकार्योपादानम्, नानावर्णदर्पणसम्बद्धकिरणनानाविधप्रकाशसूर्यवत्' इत्यनुमानेनाऽनुपहितत्वेपि सम्बन्धमात्रात् स्वविलक्षणकार्योपादानत्वे सिद्धे कार्यकारणवैजात्योन्नीतस्य कार्यविलक्षणत्वरूपस्य प्रतिपक्षहेतो साधारण्येन साधकहेतोः(त्वो)सत्प्रतिपक्षत्वनिवृत्तौ प्रथमस्य परिहारः सिद्धः। तेनैव हेतुना दूरता नोपाधिसम्भव इति तृतीयोऽपि परिहृत इत्यर्थ। तर्हि द्वितीयस्य ब्रह्मविषयकस्य कर्तृत्वसन्देहस्य, जीवविषयकस्य दुर्भगत्वादिसन्देहस्य च क परिहार इत्याकाङ्क्षायां विकल्पमूले परिहारद्वयमुक्तमित्याशयेनाहुः—द्वितीयस्येत्यादि। द्वितीयस्य परिहारे क्रियमाणे विरोधादित्यादिनोक्तं विकल्पद्वय लोके कर्तृत्वनिर्वाहकस्य कामस्य ब्रह्मण्य-

कार्यबाधनम् ॥ ५ ॥ विरोधमात्रमाहोस्वित् आद्ये सेयं दर्शयितः । द्वितीये भूषणं तस्या विरोधो न तु दूषणम् ॥ ६ ॥ विरुद्धकार्यसंबन्धस्तत्कृतस्तेन वर्ण्यते । विरोधोऽपि प्रतीत्यैव न वस्तुनि यतो बृहत् ॥ ७ ॥ इति ॥ ७ ॥

* अत्र पूर्वपक्षसमाधानं ब्रह्मवादे स्पष्टमेव 'दृश्यते तु....' इत्यधिकरणेन निरूपितम् । अविकृत एव भगवान् सर्वं करोति तादृशमेव भगवत्स्वरूपम्, श्रुतिप्रामाण्यात्; यादृशे अङ्गीक्रियमाणे सर्वसमाधानं भवति । तस्मात्तत्र न मायादिकल्पना । योऽनुपपत्तिपरिहारो मायया सोऽपि स्वरूपेणैव । एवं सति श्रौतार्थता भवति, अन्यथा त्वप्रामाणिकं स्यात्, स्वकपोलकल्पनात् । स पक्षोऽत्रैवर्णिकाय सर्वथा न वक्तव्य

---

प्रकाशः।

भावेन कर्तृत्वविरोधात्, कार्यबाधनं कर्तव्यमिति वा, कार्यस्य दृश्यमानत्वात्तस्य कर्तृपूर्वकत्वनियमेन, सिद्धे कर्तरि, तन्निर्वाहककामाभावेन कर्तृत्वकामाभावयोः सहावस्थानविरोधमात्रं वेति । तत्राऽऽद्ये समाधानं सेयमिति पदद्वयेन । तस्याऽर्थो यतो दर्शिरिति । कार्यदर्शनं यतो वर्तते, अतो नियमबलात् सिद्धे कर्तरि कामाभावेऽपि यया कर्तृत्वसिद्धिस्तादर्शयम् । तथा च, पूर्वोक्तहेतोः स्वरूपासिद्धत्वेपि 'ब्रह्म जगन्निरूपितक्रीडाकामाभावेपि जगत्कर्तृ, मायानित्यसम्बन्धेन तत्क्रियावत्त्वात्; यत् यत्संबन्धेन यत्क्रियावत्, तत् तन्निरूपितक्रीडाकामाभावेऽपि तत्कर्तृ, अयःकान्तसम्बन्धेन भ्रमणकर्तृलोहवत्' इति हेत्वन्तरेण गुणातीतस्याऽनुपहितत्वेपि सम्बन्धमात्रात् कर्तृत्वे सिद्धे प्रथमविकल्परीत्या परिहार.। द्वितीये तु, अयं कर्तृत्वकामाभावयोः सहावस्थानविरोधस्तस्या भूषणम्, न तु दूषणम्, तत्प्रभावोत्कर्षबोधकत्वात्, तत्सामर्थ्यविशेषबोधकत्वाद्वा; यदेवं तदेवम्, अयःकान्तसम्बन्धिलोहनिष्ठकर्तृत्वकामाभावविरोधवत्' इति द्वितीयविकल्परीत्या परिहारः । अयं मूले 'यत्नयेन विरुध्यते' इत्यनेनोक्तः, तयोः सहावस्थानस्य सार्वदिकत्वादिति। एतेनैव जीवविषयकोऽपि सन्देहः परिहृत इत्याहुः—विरुद्धेत्यादि । यतः सा विरुद्धकार्यकर्त्री, तेन हेतुना मायया विरुद्धकार्यसम्बन्धो जीवे, 'ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम्' इति वर्ण्यते । तथा च, भगवतो माया (याः) स्वसम्बन्धे तत्स्वरूपाविरुद्धकार्यकर्त्री, मायात्वात्, छिन्नशिरस्कजीवननिष्कासितान्त्रस्वास्थ्यसम्पादकैन्द्रजालिकमायावत्' इत्यनुमानेन तस्या विरुद्धकार्यकर्तृत्वे साधिते; जीवो दुर्भगक्लिष्टो भवितुं नार्हति, ब्रह्माभिन्नत्वेन तद्धर्मकत्वात्; महाकाशाभिन्नघटाकाशवत्' इत्यनुमानस्याऽपि 'जीवस्तथा भावितुमर्हति, तादृशत्वेपि मायासम्बद्धत्वात्, ऐन्द्रजालिकवत्' इति प्रतिसाधनेन सत्प्रतिपक्षत्वात् कार्यासाधकत्वे जीवविषयकसन्देहस्याऽप्येतेनैव परिहार इत्यर्थः । नन्वस्त्वयं जीवविषयकसन्देहस्य परिहारः, तथापि यथा तत्रैन्द्रजालिकस्य न तत्क्लेशकृतक्लेशः, तथाऽत्र जीवस्याऽपि तदभावोऽपेक्षितः, स कुतो नेत्याकाङ्क्षायाम्, 'यदर्थेन विनाऽमुष्य' इत्यादीनां तात्पर्यमाहुः—विरोधोऽपीत्यादि। यतो बृहदिति । यतो हेतोर्जीवोपि ब्रह्मैव । तथा च, तादृशस्वस्वरूपज्ञानाभावात् क्लेश इति तदभावाय 'स वै निवृत्तिधर्मेण' इत्यादिश्लोकत्रयं कर्तव्यमिति समाधानग्रन्थाशय इत्यर्थः।

* एवं द्वयोराशयं निरूप्य विशेषेण व्याकरिष्यन्तोऽत्राप्यन्ततो ब्रह्मपदस्यैव सिद्धत्वात् सिद्धान्तरीत्या मैत्रेयेण कुतो न समाहितमित्याकाङ्क्षायां तत्तात्पर्यं वदन्तोऽवतारयन्ति—अत्रेत्यादि । स्वरूपेणैवेति । ब्रह्मणोऽद्वितीयत्वेन मायाया अपि स्वरूपान्त.पातित्वात्, तेनैव । ननु मायाया अपि स्वरूपान्तःपातने को वा आग्रहः? इत्यत आहुः—एवं सतीत्यादि । तर्हि ब्रह्मवादेनैव कुतो न समाहितमित्यत आहुः—स इत्यादि।

इति ' दैव्यो वै वर्णो ब्राह्मणः ' ' असुर्यः शूद्रः ' इति श्रुतेः ' मायेत्यसुराः ' इति च । उपक्रमेऽपि— ' अथ ते भगवल्लीला योगमायोपबृंहिताः, इति प्रतिज्ञानादत्राऽपि माययैव समाधानमाह । सेयं भगवतो मायेति—

## मैत्रेय उवाच ।

**सेयं भगवतो माया यन्नयेन विरुध्यते ।**
**ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम् ॥ ८ ॥**

कार्यकारणवैजात्यं माययैव समाहितम् । क्षणमध्ये तया सर्वमन्यथैवाऽन्यथा भवेत् । तादृश्येव हि सा शक्तिः स्वीकर्तव्याऽन्यथा न सा॥१॥क्रीडासृष्टिस्तथा ज्ञानं ज्ञानेऽप्यज्ञानसम्भवः। अभेदेऽपि यथा जीवस्तथा मायैव सा तथा ॥२॥ इयं भगवतो माया सैव, याऽस्माभि र्जगत्कारणत्वेन निरूपिता। तव वाक्येऽपि सैव । अतो यदस्माभिर्निरूपितम्, तदेव त्वया तस्या विरुद्धधर्मनिरूपणेन निरूपितमिति नाऽत्र किञ्चित्समाधातव्यम्, यतः सा नयेन न्यायशास्त्रेण विरुद्ध्यते । स विरोधस्त्वयैव निरूपित इति नाऽस्माभिर्बोधनीयः, अस्यैव सिद्धान्तत्वात् । एतत्समाधानमुच्यमानं पूर्वपक्षेणैव मन्तव्यमिति भावः । विरोधमेव स्पष्टयति—ईश्वरस्येति । अयं जीव ईश्वर एव, ' तत्त्वमसि ' ' अयमात्मा ब्रह्म ' ' विज्ञानमयः ' इति श्रुतेः । अत एवेश्वरस्य सर्वसमर्थस्य संसाराद्विमुक्तस्य कार्पण्यं दैन्यम्, अनालोचितयाचकत्वं वा, ऐश्वर्यविरुद्धम् । बन्धनं च विमुक्तविरोधि ॥ ८ ॥

ननु कथमेवं मायायाः स्वरूपम् ? तथा सति प्रमाणानामप्रामाण्यमेव युक्तं स्यात्, सन्मार्गश्च विरुद्ध्येतेति चेत्। सत्यम्, एवमेव । परं सा माया यथा गमिष्यति तथोपायं वक्ष्यामि। तस्या गमनमेव मुख्यं समाधानमिति, तस्यां गतायां न कोऽपि विरोधः स्फुरिष्यतीति, अतो विरोधसमाधानार्थं न यत्नः कर्तव्यः, किन्तु मायानिराकरणार्थमेव प्रयत्नः कर्तव्यः । तस्यां गतायां भगवत्साक्षात्कारे सर्वेऽपि सन्देहा निवर्तन्त

---

### प्रकाशः ।

तया वैजात्यं कथं समाहितमित्याकाङ्क्षायां समाधानप्रकारमाहुः—क्षणेत्यादि । यथा नानावर्णदर्पणकिरणसम्बन्धे क्षणमात्रेण प्रकाशोऽन्यथा भवति, तथा भगवदंशानां मायासम्बन्धेन कार्यमप्यन्यथा भवति। यथा चाऽप्रत्यक्षमपि दर्पणं नानाविधप्रकाशरूपकार्यदर्शनबलात् तादृशं स्वीक्रियते, तथाऽत्र मायाऽपि कार्यदर्शनबलात् तादृक्स्वभावैव स्वीकार्या, अन्यथा सा कार्यविजातीयता नोपपद्येत । अतो दर्शनबलात्तादृश्या तया दूषणं समाहितमित्यर्थः । निबन्धे—कामाभावस्याऽपि ' भगवतो माया ' इत्यनेनैव समाधानादत्र प्रकारान्तरेणाऽपि समाधानमाहुः—क्रीडासृष्टिरित्यादि । कामाभावेऽप्ययःकान्तसन्निधानेनाऽयोभ्रमणं यथा, अत्र कामाभावेपि तथा क्रीडासृष्टिः । तथा ज्ञानं ' स वा एष तदा द्रष्टा ' इत्यनेन तथा । ज्ञाने अलुप्तदृक्त्वेन सिद्धेऽपि यो ऽज्ञानसम्भवः ' नाऽपश्यद् दृश्यमेकराट् ' इत्यनेनोक्तः, सोऽपि तथा। किञ्च, ब्रह्माभेदेपि यथा जीवो ब्रह्मविरुद्धधर्मा, तथा ब्रह्माभेदेपि सा मायैव तद्विरुद्धधर्मवती, तदुक्तम्—'सदसदात्मिका' इति । अतस्तस्याः स्वरूपस्वभावबलादेव सर्वमुपपद्यत इत्यर्थः । तदाहुः—इयमित्यादि ।

---

१ विमुक्तिः ग.

इति प्रकारान्तरेण ज्ञानमुपदिष्टं भवति, तदा स्वयमेव ब्रह्मवादं ज्ञास्यतीति। आसुरत्वे वा गते शूद्रत्वमपि गमिष्यतीति। तस्यां गतायाम्, स्वतो वा, मया वा, बोधनीय इति भावः। मायादीनामेवंरूपतां निद्रादिदृष्टान्तेनाह—

**यदर्थेन विनाऽमुष्य पुंस आत्मविपर्ययः।**
**प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकः॥ ९॥**

* यदर्थेनेति। यद्यस्मात्कारणात् अमुष्य जीवस्य पुंसः, अर्थेन बन्धकादिना विनैव आत्मविपर्यय आत्मनोऽन्यथाभावः प्रतीयत एव। प्रतीतिमात्रम्, नतु वस्तुतोऽस्ति। यतोऽयमुप समीपे द्रष्टा, न त्वयं दृश्यः। व्यापकश्चाऽयं प्रत्यक्संवेद्यः, परिच्छिन्नं पराक् चाऽन्यत्। यथा दर्पणे सन्निहिते तद्गतत्वेन विपरीततया मुखं दृश्यते, तथा मायासन्निधानेन आत्मा पराक् परिच्छिन्नश्च दृश्यते, इत्यन्यथादर्शने मायैव हेतुः। तत्र यथा स्वप्ने शिरश्छेदः प्रतीयते, न हि द्रष्टुः शिरश्छेदः सम्भवति, न वा द्रष्टुं शक्यते, चक्षुषस्तत्रैव विद्यमानत्वात्; प्रतीतिश्च वर्तते; विरुद्धश्चाऽयमर्थः; युक्तिश्च नास्ति; एवमत्राऽपीति भावः॥९॥

ननु मायायामयमात्मा प्रविशतीत्यात्मधर्मा मायायां भवितुमर्हन्ति, न तु मायाधर्मा आत्मनि; आत्मनि मायायाः प्रवेशाभावात्, '**तमसः परस्तात्**' इति श्रुतेः। तस्मान्मायाधर्मा बन्धादयः कथमात्मनीत्याशङ्क्याऽऽह—

**यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः।**
**दृश्यतेऽसन्नपि द्रष्टुरात्मनोऽनात्मनो गुणः॥ १०॥**

**यथा जल इति**। यद्यप्यात्मनि माया न प्रविशति, आत्मैव तु प्रविशति; तथापि प्रवेशानन्तरं तद्धर्मैः संबध्यते, न त्वप्रविष्टः। प्रवेशोऽपि प्रतीत्यैव। यथा चन्द्रमसो जले प्रतिबिम्बितस्य जलकम्पात्तत्कम्पः, न तु स्वभावतः; तथा असन्नपि धर्म आत्मनि मायासम्बन्धात् प्रतीयते। तदाह—**दृश्यत इति**। असत्त्वे हेतुः—**द्रष्टुरिति**। आत्मनिरूपितं वैलक्षण्यमिदम्। मायानिरूपितं वैलक्षण्यमाह—**अनात्मनो गुण इति**। अनात्मनः प्रकृतेर्देहादेर्वा **गुणो** दृश्यत्वादिः॥ १०॥

अतो मायायां प्रतीत्या सम्बन्धात्, तत्सम्बन्धाभावार्थमुपायमाह—

**स वै निवृत्तिधर्मेण वासुदेवानुकम्पया।**
**भगवद्भक्तियोगेन तिरोधत्ते शनैरिह॥ ११॥**

**स वै निवृत्तिधर्मेणेति**। स मायासम्बन्धो धर्मत्रयेण निवर्तते। यथा त्रिदोषे पुरुषो म्रियते, तथा धर्मत्रयसम्बन्धे तस्मिन्नेव शरीरे मायासम्बन्धो गच्छति प्रतीत्यात्मा। तान् धर्मानाह—**निवृत्तिधर्मेणे**त्यादिपदैः। तत्र प्रथमं निवृत्तिधर्माः कर्तव्याः, न निवृत्तिमात्रम्। तथा सति भगवत्कृपा न स्यात्। विधानेन परित्यागः पुनरत्यक्त्वा परिग्रहः। एकाकित्वं तीर्थसेवा मौनं कृष्णानुचिन्तनम्। कालादि-

प्रकाशः।

* **यदर्थेने**त्यत्र। मायादीनामित्यत्राऽऽदिपदेन दुर्भगत्वादिसङ्ग्रहः।

प्रासदुःखस्य सहनं चाऽप्रतिक्रिया। दयासन्तोषात्मजया मुख्या धर्मा निवृत्तितः। ततो भगवदनुकम्पा, सत्त्वाकारान्तःकरणे स्फुरितस्य भगवतः कृपावलोकनम्। ततो भगवद्भक्तियोगः। * भगवद्विषयकत्वाद्भक्तेः साधनरूपत्वम्। योग इति निरन्तरकृतिः। निरन्तरश्रवणादिकं भगवत्कृपाव्यतिरेकेण न भवतीति भगवद्भक्तियोगः पश्चादुक्तः। एवं त्रिभिर्गुणैर्मायासम्बन्धः शनैरस्मिन्नेव जन्मनि तिरोधत्ते। शनैरिति साधनबलानुसारेण ॥ ११ ॥

सहसा सर्वक्लेशनाशार्थमुपायमाह—

**यदेन्द्रियोपरामोऽथ द्रष्टात्मनि परे हरौ।**
**विलीयन्ते तदा क्लेशाः संसुप्तस्येव कृत्स्नशः ॥ १२ ॥**

* यदेन्द्रियोपरामोऽथेति। यदैव सर्वेषामिन्द्रियाणां स्वत एव स्वविषयेभ्यो निवृत्तिः, अथ तदा भिन्नप्रकारेण आत्मनि द्रष्टा भवति, द्रष्टृत्वेन आत्मा स्फुरति; प्रकृत्यादिनियामकत्वं च स्फुरति, स्वस्य हरित्वं च। तदा विलीयन्ते सर्वे क्लेशा अविद्यादयः। ते पञ्चमस्कन्धे वक्तव्या भयाटव्याम्। निवृत्तेरसम्भावितत्वनिराकरणाय दृष्टान्तमाह—संसुप्तस्येति। संसुप्तस्य आत्मना सहैक्यं प्राप्तस्य। 'यथा स्त्रिया संपरिष्वक्त एवमेवायं शारीर आत्मा प्राज्ञेनाऽऽत्मना संपरिष्वक्तः शेते' इति श्रुतेः। यदेति वचनात् नाऽस्य साधनस्य सिद्धिकालो नियतः ॥ १२ ॥

अतो नियतं हेतुमाह—

**अशेषसंक्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेः।**
**कुतः पुनस्तच्चरणारविन्दपरागसेवारतिरात्मलब्धा ॥ १३ ॥**

× अशेषसंक्लेशशमं विधत्त इति। भगवतो माहात्म्यज्ञापकं धर्मानुकीर्तनपूर्वकं श्रवणमशेषसंक्लेशशमं विधत्ते। गुणानुवादश्रवणस्य संक्लेशशमस्य च कार्यकारणभावः कारणविद्यमानदशायामेव। तेन यावत्संक्लेशनाशं गुणानुवादश्रवणं कर्तव्यम्। अतो नैकेन श्रवणेन सर्वसंक्लेशाभावो जात इति विरोधो न मन्तव्यः, परं नियतकारणत्वमत्रोच्यते। मुरारेरिति विघ्नाभावस्तत्र स्वतः सिद्धः। यदा श्रवणमेवैतद्विधत्ते, तत्र भगवच्चरणारविन्दरतिर्विधत्त इति किं वक्तव्यम्। तदाह—कुत इति। किं पुनरिति वक्तव्ये कुत इति वचनम्, रतिसाधकश्रवणदशायामेव क्लेशा निवृत्ता इति रतिः कुतो निवर्तयिष्यतीति ज्ञापितम्। चरणारविन्देति भक्तिमार्गानुसारः। चरणारविन्दस्य परागाः पूर्वं निरूपिता गङ्गायां भगवदीयशरीरे च सन्तीति तत्र सेवायां रतिः। पराग एव वा मथुरादिस्थितः सेव्य इति। चरणसेवा मकरन्दः। भजनानन्दः स्वतः

प्रकाशः

* भगवत्पदतात्पर्यमाहुः—भगवदित्यादि। तथा च, रूपान्तरभक्तेस्तथात्वव्युदासाय भगवदित्यर्थः।

× अशेषेत्यत्र। कारणविद्यमानदशायामिति। तथा च, सर्वक्लेशनाशभगवच्छ्रवणयोर्दाहवह्निवत् कार्यकारणभावः, न तु घटदण्डवदित्यर्थः। अत इति। क्लेशबाहुल्येन नाशबाहुल्यस्याऽऽवश्यकत्वात्। अमानने हेतुमाहुः—परमित्यादि। तत्र सेवायामिति। गङ्गायां भगवदीये च सेवायाम्।

१ सुषुप्तस्य ख. ग. घ. च. २ शारीरात्मा क. ख. ग. ३ चरणरेणुवा ग. च.; चरणरसो वा ख.

पुरुषार्थरूपः; तत्संबन्धिनी सेवा; तस्यां रतिः प्रीतिः । साऽध्यात्मनैव लब्धा, अकस्मात्प्राप्ता आत्मनि वा लब्धा । स्वतःपुरुषार्थसेवायां स्वभावतो या रुचिः सा सर्वमेव क्लेशं दूरीकरोतीति । एवं साधनत्रयमुपदिष्टं कर्ममार्गानुसारेण, ज्ञानमार्गानुसारेण, भक्तिमार्गानुसारेण च ॥ १३ ॥

एवं मायापगम एव सर्वसन्देहनिवृत्तिरिति मैत्रेयोक्तं श्रुत्वा, साधनं भगवद्रतिं साधनवाक्येन स्मृत्वा, तस्यामुद्गतायां स्वत एव संशयो गत इति, तदुक्तं फलं जातमिति, स्वहृदये ज्ञातसंशयाभावस्तस्याऽग्रेऽनुवदति—

## विदुर उवाच ।

**संछिन्नः संशयो मह्यं तव सूक्तासिना विभो ! ।**
**उभयत्राऽपि भगवन् ! मनो मे संप्रधावति ॥ १४ ॥**

× संछिन्न इति । अन्यथा सन्देहाभावस्य गुरुशास्त्रप्रतिपाद्यता न स्यात् । मह्यं मदर्थं प्रयुक्तो यस्तव सूक्तासिरुत्तमवाक्यखङ्गः, तेन संशयश्छिन्नः, न तु युक्त्या मोचितः । वचनं च खड्गरूपम्,—साधनप्रदर्शनरूपत्वात् । अतः परं च युक्तिर्न वक्तव्या । भगवन्मायां शम्बरुत्वेन स्वीकृत्य, तया सह यत्रैव बुद्धिः प्रेर्यते, तत्रैव बुद्धिरप्रतिहता गच्छति, धनुषि योजितः शर इव । तदाह—उभयत्रापीति । भगवतः स्वातन्त्र्ये जीवपारतन्त्र्ये वा, जगतो बीजप्रयोजनयोर्वा, ज्ञानमायासंबन्धयोर्वा, संशयश्छिन्न इति उभयत्राऽपि मे मनः सम्यक् प्रधावति । भगवन्निति संबोधनं स्वस्मिंस्तादृशज्ञानजननसामर्थ्यबोधाय । प्रकर्षेण धावनं श्रुत्यपेक्षारहितं निष्प्रत्यूहम् । सम्यक्त्वं च भयाभावः ॥ १४

न केवलं पूर्वप्रश्नेष्वेव मम सन्देहो गतः, किन्त्वन्यत्र सर्वत्रैव कार्यसन्देहो गत इत्याह—

**साध्वेतद्व्याहृतं विद्वन्नात्ममायायनं हरेः ।**
**आभात्यपार्थं निर्मूलं विश्वमूलं न यद्बहिः ॥ १५ ॥**

* साध्वेतदिति । एतन्मायानिरूपणवचनं यद्भवता व्याहृतम्, तत्साध्वेव व्याहृतम् । विद्वन्निति तवाऽत्राऽनुभवोऽस्तीति विज्ञापितम्, न तु शास्त्रदृष्टिमात्रेण । किं निरूपितमित्याकाङ्क्षायामाह—आत्ममायायनं हरेरिति । हरेः संबन्धिनो य आत्मानो जीवाः, तेषां या माया व्यामोहिका पूर्वं चतुःश्लोक्यां निरूपिता, तस्या मायाया अयनं स्थानं विषयाकारो ब्रह्म, जडत्वेन आत्मानात्मत्वेन यत् स्फुरति, तदपार्थमेव स्फुरति । मायैव वा अयनं यस्येति । मायाकृतो योऽन्तरासर्गः स तु अपार्थमेवाऽऽभाति । यत्तु दूरीकृत्य निर्विषयकमेव ज्ञानं मायावृतं यत्किञ्चिद्विषयत्वेन भाति । तर्हि सर्वदैव भायात् ? ततश्चाऽनिर्मोक्षप्रसङ्ग इत्याशङ्क्याऽऽह—निर्मूलमिति । मायातिरिक्तमूलाभावात्, अन्तराभानात्, तत्स्पर्शे ब्रह्मावभानात्तदैव गच्छतीति निर्मूलत्वम् । एवमेव हि शुक्तिकायां रजतप्रतीतिरन्तरा भासते, तत्स्पर्शे च निवर्तेत इति । अयमेवाऽर्थो

---

प्रकाशः

× संछिन्न इत्यत्र । अन्यथेति । रतिफलकत्वाभावे ।

* साध्वेतदित्यत्र । निर्विषयकमिति । तत्सम्प्रयोगेऽपि विषयाग्राहकं प्रमेयाश्रयमिदं ज्ञानमिति

मन्त्रेऽपि निरूपितः, '**न तं विदाथ य इदं जजानाऽन्यद्युष्माकमन्तरं बभूव**' इति । जगत्, भगवान्, कर्तृत्वं च श्रुतिसिद्धं सत्यमेव । सृष्टस्य ब्रह्मस्वरूपस्य जगतस्तथात्वप्रतीतौ व्यामोहिकया मायया मध्ये अन्यथैव प्रत्याय्यते । अविकृतं कार्यम्, कारणम्, कृतिश्च । युष्माकमिति वचनान्न सर्वेषामयमनुभवः। यत्पुनः प्रमेयाध्याये अविरोधे विलक्षणत्वं समर्थितं पूर्वपक्षे; '**न विलक्षणत्वात्..**' इति, '**अस्य तथात्वं च शब्दात्**' इति । '**विज्ञानं चाऽविज्ञानं च**' इति । तत्सिद्धान्ते वादिबुद्धिमनुसृत्य ब्रह्मवादस्य वक्तुमयुक्तत्वात् परोक्षतया '**दृश्यते तु**' इत्यनेन परिहृतम् । विलक्षणं दृश्यते, न तु वस्तुत इत्यर्थः । श्रुतिस्तु पूर्वकाण्ड इव लोकसिद्धमनुवदति तत्ज्ञानार्थम्, यथा '**दहरं वै सा पराभ्याम् इति**' लौकिकदोहानुवादः । अत

## प्रकाशः।

तत्स्थलं मायावृतमिति मायाश्रितमित्यर्थः । अन्यथैव प्रत्याय्यत इति । विषयतारूपं विकृतं जगत्कृत्वा ब्रह्मरूपे जगति जडमोहात्मकत्वं तुच्छत्वं प्रत्याय्यते, आत्मरूपेऽनात्मत्वं च प्रत्याय्यत इत्यर्थः । ननु जडत्वादिप्रत्ययस्य सार्वजनीनत्वेन भ्रमत्वस्याऽशक्यवचनत्वात् कथमस्य निर्मूलत्वमित्याकाङ्क्षायामेतस्याऽसार्वजनीनत्वमेव श्रुतिसिद्धमित्याहु:—युष्माकमित्यादि । ननु भेदवादिभिः सांख्यादिभिरपि 'विज्ञानं चाऽविज्ञानं च' इति श्रुतिबलाज्जगद्ब्रह्मवैलक्षण्यं प्रतिपाद्यते, तच्च तत्त्वसूत्रेष्वनूद्यत इति कथं कार्यस्याऽविकृतत्वं निश्चेयमित्यत आहु:—यदित्यादि । सूत्रार्थस्तु—अस्य जगतो विलक्षणत्वादचेतनत्वाच्चेतनमस्योपादानं न युक्तम्, लोके कार्यकारणयोः सालक्षण्यस्य घटपटादिषु दर्शनात्, युक्तिबाधितस्याऽप्यस्य वेदेनाऽपि वक्तुमयुक्तत्वात्, वचने च प्रतारकवाक्यवदप्रामाण्यप्रसङ्गात् । ननु युक्तेः प्रत्यक्षमूलत्वात् भ्रमत्वस्याऽपि दर्शनादियं युक्तिर्नोऽस्माभिरङ्गीकार्येत्यतो हेत्वन्तरमाहु:—अस्य तथात्वं च शब्दादिति । अस्येति पदं देहलीदीपवदुभयत्र सम्बध्यते । चोऽवधारणे । तथात्वं चेतनत्वं चेतनविलक्षणत्वं 'विज्ञानं चाऽविज्ञानं च' इति शब्दादेव सिद्धम्, अतो न चेतनं जगदुपादानमिति । सिद्धान्तसूत्रार्थमाहु:—विलक्षणमित्यादि । चेतनविलक्षणं जगत् तत्स्पर्शरहितानामन्तरासृष्टिपर्यवसितमतीनां मायादोषेण दृश्यते, न तु विलक्षणमित्यर्थः । नन्वप्रे बाधाभावाद्दर्शनस्य प्रामाण्ये वैलक्षण्यस्याऽपि प्रमितत्वान्न बाधत इत्यत आहु:—त्विति । तुः शङ्कानिरासे । प्रमितमपि वैलक्षण्यं न चेतनस्योपादानताविघटकम्, कार्यकारणवैलक्षण्यस्याऽपि लोके दृष्टत्वात् । चेतनात् पुरुषदेहादचेतनस्य केशनखादेः, अचेतनाद्गोमयादेर्वृश्चिकाना चोत्पत्तिदर्शनात् । न च तत्राऽचेतनाद्देहादेरचेतनानामेव केशादीनां वृश्चिकादिदेहानामुत्पत्तिरिति न वैलक्षण्यमिति वाच्यम् । तथा सति ब्रह्मणः सदंशाज्जगतः सत उत्पत्तिरिति तुल्यत्वात्, कार्यकारणयोः सर्वांशसालक्षण्यस्य लोकेऽप्यदर्शनात्, घटादौ पिण्डत्वादेरभावात् । अथ येन धर्मेण कारणं वस्त्वन्तराद्व्यावर्तते, तेन धर्मेण सादृश्यं विवक्षितमितीतरवैलक्षण्यं न दोषायेत्युच्यते । तदसङ्गतम् । देहगोमयादीनां देहत्वगोमयत्वादिर्नेतरवस्तुव्यावृत्तत्वेन केशवृश्चिकदेहादिषु तदभावेन तत्सादृश्यस्याऽप्यभावात् । अतो विलक्षणत्वस्य हेतोः प्रमितत्वेपि साधारणत्वात् न तेन ब्रह्मकारणताविघटनमिति । वस्तुतस्तु यत्त्वया चेतनवैलक्षण्यं दृश्यते, तद्भ्रान्तिरेवेत्यर्थ. । ननु यदि चेतनवैलक्षण्यं प्रपञ्चे न स्यात्, 'विज्ञानं चाऽविज्ञानं च' इति श्रुतिः किमिति विभजतीत्यत आहु.—श्रुतिस्त्वित्यादि । तत्ज्ञानार्थमिति । सदंशाज्जडानाम्, चिदंशाज्जीवाना मित्यादिज्ञानार्थम् । दृष्टान्तं व्याकुर्वते—यथेत्यादि । श्रुतिस्तु (तदाहुः) 'या चैश्रेरेकस्याह उपसीदन्ति । दहरं वै सा पराभ्यां देहाभ्यां दुह (?)' इति तैत्तिरीयाणां सप्तमाष्टकप्रथमप्रपाठकतृतीयानुवाकस्था (?) अत

१ इमा. २ दहानुवादः ग दग्धानुवाद. [illegible] ३ केशवृश्चिकदेहादिति तद्भावेन पु

एव ' सत्यं चाऽनृतं च सत्यमभवत् ' इत्युभयथा प्रतीयमानं सत्यमेव वस्तुतो जातमिति बोधयति । तदप्येतस्य भगवद्ध्यानात् तथा स्फुरितमिति तस्याऽनुवादः । मध्यस्थमात्रानुवादो वा, मायावादिवत् । किञ्च, विश्वस्य यन्मूलं तद्बहिर्विषयेषु नास्ति, भगवतो मायातीतत्वात्; किन्तु बुद्धेः सकाशादुद्गता मध्य एव स्फुरति । तस्मादस्मिन् शास्त्रे उभावेव सुखिनौ अज्ञानसङ्कटरहितौ ॥ १५ ॥

तौ निर्दिशति—

**यश्च मूढतमो लोके यश्च बुद्धेः परं गतः ।**
**तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥ १६ ॥**

यश्च मूढतम इति । यस्तु ज्ञानार्थं सर्वथा न प्रवृत्तः, स लोकन्यायेन वर्तमानो मायापगमार्थमेव यत्नं कुर्वन्, भगवत्कृपया तदपगमे पश्चात्सर्वमेव निःसंदिग्धं जानाति । अथवा, सद्गुरुणा कृत्वा, भगवत्कृपया सहितो व्यामोहितां बुद्धिं त्यक्त्वा, बुद्धेः परं गतः स्वरूपे स्थितः, पूर्वमेव निवृत्तानर्थत्वात् सुखमवतिष्ठते । अन्तरितो मध्ये स्थितस्तु अल्पज्ञानाल्पभक्तिर्निर्द्धाराभावात्, एकतरज्ञानाश्रयाभावाच्च नौकाद्वयारूढवत् क्लिश्यति । लौकिकमूढपक्षे उभयोः समानसुखकथनं विरुद्धमापद्येत, न वा मूढानां सुखमस्ति ॥ १६ ॥

एवं शास्त्रार्थं निरूप्य, स्वस्य किञ्चिज्ज्ञातं किञ्चिच्च नेति तदुभयमनुवदति—

**अर्थाभावं विनिश्चित्य प्रतीतस्याऽप्यनात्मनः ।**
**तां चाऽपि युष्मच्चरणसेवयाऽहं पराणुदे ॥ १७ ॥**

* अर्थाभावमिति । शास्त्रतः प्रतीयमानस्याऽर्थस्वरूपं नास्तीति सूचितम् । 'आत्मैवेदं सर्वम्' इति श्रुतेरनात्मनोऽर्थाभावः सिद्धः । अतःपरं प्रतीतिरस्ति, विषयबाधा निवृत्ता; तामपि प्रतीतिं युष्मच्चरण-सेवया गुरुचरणसेवया अहं पराणुदे । यद्यपि स्वभावतो गुरुर्नोपदिशति, तथापि सेवायां क्रियमाणायां तद्धर्मेण तदुपदेशेन वा तत्स्पर्शो भविष्यतीति तामप्यपनुदे दूरीकरिष्यामि, ज्ञानमार्गानुसारेणैवाऽर्थस्य निवृत्तत्वात्; अन्यथा भगवच्चरणसेवयैव तां दूरीकुर्यात् । अहमिति स्वाधिकारः, तथैव भगवदाज्ञापनात्; अन्यथा भक्तिमार्गानुसारेणैव दूरीकुर्यात् । अधिकारश्च पुनः प्रासव्यः ॥ १७ ॥

किञ्च, भगवन्मार्गेऽपि गुरुसेवा भक्त्युपयोगिनी । तदाह—

**यत्सेवया भगवतः कूटस्थस्य मधुद्विषः ।**

---

प्रकाश ।

एवेति । यतः प्रतीतवैलक्षण्येऽपि कारणत्वं ब्रह्मण एवाऽभिप्रेतम् । एतस्येति । विदुरस्य । प्रकरणानुरोधेन पक्षान्तरमाहुः—मध्यस्थेत्यादि । उद्गतेति । मायारूपा विषयता उद्गता ।

* अर्थाभावमित्यत्र । शास्त्रत इत्यादि । लोकदृष्ट्या प्रतीयमानस्याऽर्थस्वरूपं नाऽस्तीति शास्त्रतः सूचितमित्यन्वयः । अर्थाभाव इति । अर्थत्वाभावः । तथैवेति । गुरुद्वारैवाऽधिकारप्राप्तेराज्ञापनादित्यर्थः ।

---

१ स्फुरन्ति क ख २ व्यामोहिताम् ख.

**रतिरासो भवेत्तीव्रः पादयोर्व्यसनार्दनः ॥ १८ ॥**

* यत्सेवया भगवत इति। मार्गत्रयाविरोधाय भगवतो विशेषणत्रयम्, अन्यथा गुरुसेवाभावे मार्गान्तरविरोधे न भगवति भक्तिः स्यात्। तत्र भगवत इति भक्तिमार्गानुसारी भगवान्, कूटस्थस्येति ज्ञानमार्गानुसारी, मधुद्विष इति दैत्यद्वेषी। सर्वेषामेव सुमनसाम्, देवानां पुष्पाणां वा, मधु गृहीत्वा, स्वमुखेन तद्वमित्वा, निष्पादितं मधु भवति; तथा सर्वदेवानां बलं गृहीत्वा, दैत्यैः स्वभावं तत्र संपाद्य, सर्वधर्मप्रतिपक्षतया ब्रह्मघातको निर्मितो मधुः। कैटभस्तु ज्ञानांशबाधक', अत एव कपिलेन '**कैटभार्दनः**' इत्युक्तम्। तादृशस्य भगवतः। **रतिरासो भवेत्** रतिविलासो भवेत्। विलासपदेन चरणस्य वशीकरणं सूचितम्। रतीनां वा बहुविधानां सर्वेन्द्रियविषयाणां रासो रससमूहः। **पादयोरिति** अवताराभिप्रायेण। लौकिकोऽपि व्यामोहो गच्छतीति—**तीव्र इति**। शीघ्रमेव तत्फलं स्पर्शयति। अवान्तरखेदास्तु तस्याऽनुपङ्क्तिका इत्याह—**व्यसनार्दन इति**। व्यसनानि लौकिकानि विचित्राण्यर्दयतीति तस्य विशेषणम्। अतो व्यसननिवृत्ती रासस्यानुषङ्गिकी। अतो मार्गद्वयसाधकत्वात् गुरुसेवा सर्वेषामेव हितकरी ॥ १८ ॥

तर्हि कथं न सर्वे कुर्वन्तीत्याशङ्क्याऽऽह—

**दुरापा ह्यल्पतपसः सेवा वैकुण्ठवर्त्मसु ।**
**यत्रोपगीयते नित्यं देवदेवो जनार्दनः ॥ १९ ॥**

× **दुरापेति**। अल्पं तपो येषाम्, तेषां वैकुण्ठवर्त्मसु सेवा दुरापा—दुःखेन प्राप्तुं शक्या। दुर्लभत्वायैकवचनम्। भगवद्भक्तानां माहात्म्यप्रतिपादनाय वैकुण्ठवर्त्मस्वित्युक्तम्। वैकुण्ठस्य मार्गभूतेषु। व्यापिवैकुण्ठस्य भगवतो वा। तन्मार्गे गतस्तत्र गच्छतीति तेषां वैकुण्ठमार्गत्वं स्थापयति—**यत्रोपगीयते नित्यमिति**। यत्र भगवद्भक्तेषु भगवान्नित्यमेवोपगीयते। अनेन क्रमात्तत्र गमनं सूचितम्। भगवद्गुणाः पुष्पाणां गन्धा इव भगवन्मार्गे समायान्ति; अत एव तेषामुपगानम्, हृदये स्थितानां तत्रैवोल्लसितानां गानम्। उल्लासाभिव्यञ्जने मार्गैकत्वम्। नित्यमुल्लासाद्वायुनेव श्रुत्वा दूरे नयनं निराकृतम्। किञ्च, स हि देवानां देवो देवोपरि वर्तते। अतो देवमार्गापेक्षया यज्ञापेक्षयाऽप्ययं मार्गः समीचीनः। किञ्च, **जनार्दनोऽयम्**, जनामर्दयतीति ज्ञानकार्यकर्ता। अतोऽचेतननिवर्तकापेक्षया ज्ञानमार्गापेक्षयाऽपि भगवद्गुणगातॄणां सेवनमुत्तममित्यर्थः ॥ १९ ॥

एवं पूर्वपक्षसिद्धान्तपक्षौ निरूप्याऽन्यान् विशेषान् ज्ञातुं पृच्छति—

**सृष्ट्वाऽग्रे महदादीनि सविकाराण्यनुक्रमात् ।**
**तेभ्यो विराजमुद्धृत्य तमनु प्राविशद्विभुः ॥ २० ॥**

---

प्रकाशः

* यत्सेवयेत्यत्र। विशेषणत्रयमिति। भगवत्पदस्य योगरूढत्वेन योगांशे तस्य विशेषणरूपत्वात्तथेत्यर्थः।

× दुरापेत्यत्र। नित्यपदतात्पर्यमाहुः—अनेनेत्यादि।

यमाहुराद्यं पुरुषं सहस्राङ्घ्र्यूरुबाहुकम् ।
यत्र विश्व इमे लोकाः सविकाशं समासते ॥ २१ ॥

**सृष्ट्वाऽग्रे महदादीनीति** । तत्राऽऽदौ श्लोकद्वयेन सार्द्धेन साधिकेन पूर्वोक्तमनुवदति, अन्यथोक्तार्थविस्मरणादग्रे न वक्तव्यं स्यात् । निर्द्धारितं चाऽल्पेनोच्यते । **महदादीनि** त्रयोविंशतितत्त्वानि । तेषां विकारास्त्ववान्तरभेदाः, सात्त्विकादिविभेदा आध्यात्मिकादिभेदा वा । आनुपूर्व्येण च तेषां सृष्टिः । तेभ्यो विराज उद्धरणं च पुरुषस्य सारांशत्वाय । **तमनु प्राविशदिति** । अर्थान्निरूपितमनुवादेन स्पष्टितम् । तत्प्रवेशव्यतिरेकेण ब्रह्माण्डमध्यकार्याणि न भवेयुः । **विभुरिति** सामर्थ्यरूपेण ॥ २० ॥

भगवत्सहितस्य विराजो नाम—**आद्यं पुरुषमिति** । अस्मदाद्यपेक्षया आद्यत्वम् । **सहस्राङ्घ्र्यूरुबाहुकमिति** । यद्यपि प्रचरद्रूपेण पूर्वाध्याये नास्ति, तथापि पुरुषस्य तथारूपत्वात् तद्धर्मत्वेनाऽनुवादः । स्वस्य सविशेषं परिज्ञानार्थं भगवत्कृपया वा धर्मान्तरस्फुरणम्, तदपि गुरूक्तत्वेनैव ज्ञापयितुमनुवादः क्रियते । **यत्र** च पुनः पुरुषे, **इमे विश्वे लोकाः** सर्वे प्राणिनः सविकाशमतिविशालभूमौ सुखमासते ॥ २१ ॥

किञ्च,

यस्मिन्दशविधः प्राणः सेन्द्रियार्थेन्द्रियस्त्रिवृत् ।
त्वयेरितो[3] यतो वर्णास्तद्विभूतीर्वदस्व नः ॥ २२ ॥

**यस्मिन्** पुरुषे दशविधः प्राणो निरूपितः । इन्द्रियाणि इन्द्रियार्थाश्च निरूपिताः, इन्द्रियाणामिन्द्रियार्थानां प्राणानां च त्रैविध्यं निरूपितम्, यतो वर्णा अपि त्वया निरूपिताः । एवमनूद्य विशेषं पृच्छति । इदं भगवच्चरित्रं भगवद्रूपं च तदैव स्यात्, यदस्य विभूतिर्भवेत् । भगवतोऽसाधारणगुणेषु विभूतिरप्येका । कथापक्षेऽप्यग्रे वक्ष्यमाणानां ब्रह्मादीनां न विसर्गत्वं विवक्षितम्, किन्तु विभूतित्वमेव । तेन सविभूतिः सर्गो निरूपितो भवति । विसर्गस्तु धर्माद्युक्तोऽग्रे वक्ष्यते । व्यष्टिष्वपि समष्टिव्यष्टिभेदः परिकल्प्यते । तत्र ब्रह्मा समष्टिः, प्रजा व्यष्टयः ॥ २२ ॥

प्रजानां कर्तृत्वं कदाचिन्न भविष्यतीति तदर्थं प्रथमतस्ताः पृच्छति—

यत्र पुत्रैश्च पौत्रैश्च नप्तृभिः सह गोत्रजैः ।
प्रजा विचित्राकृतय आसन् याभिरिदं ततम् ॥ २३ ॥
प्रजापतीनां स पतिश्चक्लृपे कान्प्रजापतीन् ।
सर्गांश्चैवाऽनुसर्गांश्च मनून्मन्वन्तराणि च ॥ २४ ॥
एतेषामपि वंशांश्च वंश्यानुचरितानि च ।
उपर्यधश्च ये लोका भूमेर्मित्रात्मजाऽऽसते ॥ २५ ॥
तेषां संस्थां प्रमाणं च भूर्लोकस्य च वर्णय ।

---

१ प्रचरद्रूपे. ख ग घ. ङ च २ विषय क ३ त्वयेरितो पा.-

तिर्यङ्मानुषदेवानां सरीसृप्मृगपक्षिणाम् ॥
वद नः सर्गसंव्यूहं गार्भस्वेदाण्डजोद्भिदाम् ॥ २६ ॥

यत्रेति । सर्वत्र चत्वारो भेदा विभूत्यर्थं वक्तव्याः । नप्तारः प्रपौत्राः, कन्यापुत्रा वा । पुत्रशब्दे पुत्र्या एकवद्भावः, पौत्रे च पौत्र्याः; एतदुभयं नप्ता सूचयति । गोत्रजा दूरज्ञातयः ॥ २३ ॥

प्रजापतीनामिति । सर्गाः कारणपदार्थानामुत्पत्तयः । अनुसर्गाः कार्याणाम् । मनवश्चतुर्दश । मन्वन्तराणि षड्विधानि ॥ २४ ॥

एतेषामिति । एतेषां मनूनाम् । वंशानुचरितम्, तत्रोत्पन्नानां वंशवृद्धिहेतुचरित्रम् । चकारादन्यान्यपि चरित्राणि । भूमेरुपरि स्वर्गादयो लोकाः कियन्तः ? अधश्च कियन्तः ? इति । आसत इति स्थिरा औत्पत्तिकाः । मित्रात्मजेति बहुप्रश्नेऽपि क्षोभाभावः सूचितः ॥ २५ ॥

तेषामिति । तेषां लोकानां संस्थां मर्यादाम्, केषु लोकेषु के व्यवहारा इति । प्रमाणं परिमाणम् । चकारात्तत्रत्यानामपि व्यवस्थाम्, उपर्यधोलोकानामेव पृष्टत्वात् । प्रधानभूतं भूर्लोकं पृच्छति—भूर्लोकस्येति । भूर्लोकस्य संस्थां प्रमाणं चेत्यर्थः । चकारादवान्तरभेदानाम् । जीवानां योनिभेदान् पृच्छति—तिर्यगिति । तिर्यङ्मानुषदेवास्तामसराजससात्त्विकाः । सरीसृपमृगपक्षिणोऽपि द्वितीयकक्षायां तामसादयः । तेषां सर्गाणां सम्यग्व्यूहः समूहः, के कियन्तः कुत्र उत्पन्ना इति । चतुर्विधा अपि भूतभेदा वक्तव्या इत्याह—गार्भेति । गर्भे भवा गार्भा जरायुजाः, जरायुशब्देन वा गर्भ उच्यते । स्वेदजा मशकादयः, अण्डजाः पतङ्गादयः, उद्भिज्जा वृक्षादयः । स्वेदजादीनां स्वेदत्वं मन्यमानः स्वेदादिशब्दैरेव तज्ञान् पृच्छति ॥ २६ ॥

गुणावतारैर्विश्वस्य सर्गस्थित्यप्ययाश्रयम् ।
सृजतः श्रीनिवासस्य व्याचक्ष्वोदारविक्रमम् ॥ २७ ॥
वर्णाश्रमविभागांश्च रूपशीलस्वभावतः ।
ऋषीणां जन्मकर्माणि वेदस्य च विकर्षणम् ॥ २८ ॥

गुणावतारैरिति । ब्रह्मविष्णुमहेश्वरैर्विश्वस्य सर्ग उत्पत्तिः, स्थितिः, अप्ययो नाशः । उत्पत्त्यादीनामाश्रयम्, ह्रतिं भावं वा । ब्रह्माण्डरूपमाधारमिति केचित् । सृजतः श्रीनिवासस्येति । मूलकारणं विष्णुरुक्तः । श्रीनिवासस्येति ब्रह्मानन्दपूर्ण उक्तः । तस्योदारविक्रमा अवतारचरित्राणि । प्रकीर्णकानामेतेषां प्रश्नानां भगवद्विभूतिभेदार्थं कीर्तनम् । वर्णानां विभागश्चतुर्धा, आश्रमाणां च । अष्टानामपि रूपशीलस्वभावा भिन्नतया वक्तव्याः । रूपमाकृतिः, शीलमाचारः, स्वभावोऽन्तःकरणधर्मः । ऋषीणां भृग्वादीनां । जन्म उत्पत्तिप्रकारः, कर्म मन्त्रद्रष्टृत्वादि । वेदस्य विकर्षणं शाखाभेदेन विभागः ॥ २७ २८ ॥

यज्ञस्य च वितानानि योगस्य च पथः प्रभो ! ।
नैष्कर्म्यस्य च सांख्यस्य तन्त्रं भागवतं स्मृतम् ॥ २९ ॥

---

१ सरीसृपपशुपक्षिणाम् पा. २ तत्र ख. ग. घ.

* यज्ञस्य सप्तदशस्य वितानानि संस्थाभेदाः। चकारात् क्रतुसत्राणाम्। योगस्य पथः योगमार्गान्। चकारादङ्गानाम्। प्रभो ! इति संबोधनं ज्ञानार्थम्। नैष्कर्म्यं निवृत्तिमार्गः। साङ्ख्यस्य तन्त्रं साङ्ख्यशास्त्रम्। भागवततन्त्रं वैष्णवशास्त्रम्। स्मृतमिति स्मृतिष्विदमेव प्रमाणमिति सूचितम् २९

पाषण्डपथवैषम्यं प्रतिलोमनिवेशनम्।
जीवस्य गतयो याश्च यावतीर्गुणकर्मजाः॥ ३०॥
धर्मार्थकाममोक्षाणां निमित्तान्यविरोधतः।
वार्ताया दण्डनीतेश्च श्रुतस्य च विधिं पृथक्॥ ३१॥
श्राद्धस्य च विधिं ब्रह्मन् ! पितॄणां सर्गमेव च।
ग्रहनक्षत्रताराणां कालावयवसंस्थितिम्॥ ३२॥
दानस्य तपसो वापि यच्चेष्टापूर्तयोः फलम्।
प्रवासस्थस्य यो धर्मो यश्च पुंस उताऽऽपदि॥ ३३॥

सर्वेष्वपि शास्त्रेषु पाषण्डपथवैषम्यं पाषण्डमार्गवैषम्यं वक्तव्यम्। प्रतिलोमानां चण्डालादीनां निवेशनं शास्त्रोपयोगमुत्पत्तिं वा। जीवस्य गतयः संसरणप्रकाराः, स्वरूपतः प्रकारतश्च, गुणतः कर्मतश्च, वक्तव्याः॥ ३०॥

चतुर्विधपुरुषार्थानामन्याविरोधतो निमित्तानि च वक्तव्यानि। वार्ताया जीविकाया अधिकारिभेदेन नव प्रकारा वक्तव्याः। एवं दण्डनीतेश्च। राजधर्माणां विधिः प्रकारो वक्तव्यः। श्रुतस्य वेदाध्ययनस्य। चकारादङ्गानाम्, अर्थज्ञानस्य वा। पृथगधिकारिभेदेन॥ ३१॥

श्राद्धस्य विधिः[1] प्रकारो वक्तव्यः। पितॄणामपि सर्गो वक्तव्यः। ग्रहनक्षत्रताराणां बुधाद्यश्विन्याद्यन्यनक्षत्राणाम्। कालावयवे ज्योतिश्चक्रे सम्यक् स्थितिर्वक्तव्या।

दानादीनां फलं वक्तव्यम्, विधानं च। वापीत्यनादरे, य एव भेदास्तत्राऽभिप्रेतास्त एव वक्तव्या इति। इष्टं यागाद्यग्निसाध्यम्। खातादि मृज्जलसाध्यं पूर्तम्। प्रवासस्थस्य परदेशगतस्य यो धर्म इति, पूर्वोक्तो वा संकोच इति। पुंस आपदि यो धर्मः॥ ३३॥

---

प्रकाशः।

* यज्ञस्येत्यत्र। सप्तदशस्येति। 'आश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः; एष वै सप्तदशः' इत्युक्तस्य तावदक्षरसाध्यस्य। स्मृतिष्वित्यादि। तन्त्ररूपासु स्मृतिषु सर्वांशेनेदं प्रमाणमिति सूचितमित्यर्थः।

इतिश्रीतृतीयस्कन्धसुबोधिनीप्रकाशे सप्तमाध्यायविवरणम्।

---

१ अग्रे 'श्राद्धस्याऽपि प्रकारो वक्तव्य' इति क ख घ. च. २ श्राद्धस्याऽपि ख. ग. ङ. च.

येन वा भगवांस्तुष्येद्धर्मयोनिर्जनार्दनः ।
संप्रसीदति वा येषामेतदाख्याहि मेऽनघ ! ॥ ३४ ॥

येन वा प्रकारेण भगवांस्तुष्येत्, धर्मकर्ता ज्ञानदश्च । तोषस्तस्य स्वभावत परितोषः। प्रसीदतीति वरदानार्थं सन्तोषेणाऽभिमुखो भवति। येषां वा अधिकारिणां भगवान् संतुष्यतीति वक्तव्यम्। अनघेति-संबोधनं भगवदभिप्रायज्ञानार्थम् ॥ ३४ ॥

अपृष्टमपि वक्तव्यमित्याह—

अनुव्रतानां शिष्याणां पुत्राणां च द्विजोत्तम ! ।
अनापृष्टमपि ब्रूयुर्गुरवो दीनवत्सलाः ॥ ३५ ॥

अनुव्रतानामिति । न हि गुह्यं बालाः प्रष्टुं जानन्ति । अनु व्रतं येषाम्, गुरोरिच्छानुवर्तिनाम् । शिष्याणां शेषभावं प्राप्तानाम्, ज्ञानार्थिनां वा । पुत्राणां चेति दृष्टान्तार्थम् । द्विजोत्तमेति संबोधनम्, तव पित्रादिभिर्यथा भवान् शिक्षितः, एवं मां शिक्षयेति ज्ञापनार्थम् । अनापृष्टमपि ब्रूयुरिति वचनं सदाचारः प्रमाणम् । तदपि न बलात्, किन्तु दयया । तदाह—दीनवत्सला इति ॥ ३५ ॥

प्रलयं भिन्नतया पृच्छति—

तत्त्वानां भगवन्नेषां कतिधा प्रतिसंक्रमः ? ।
तत्रेमं क उपासीरन्क उ स्विदनुशेरते ? ॥ ३६ ॥

तत्त्वानामेषां कतिधा प्रतिसंक्रमः प्रलयः ? चतुर्विधादिभेदाः शास्त्रेषु बहुधा सिद्धा इति । किञ्च, तत्र प्रलये इमं भगवन्तं के उपासीरन् ? के वा अनुशेरते लीना भवन्ति ? ॥ ३६ ॥

पुरुषस्य च संस्थानं स्वरूपं वाऽपरस्य च ।
ज्ञानं च नैगमं यत्तद्गुरुशिष्यप्रयोजनम् ॥ ३७ ॥

जीवदेहतत्त्वानां मध्ये पुरुषस्य विराजः। चकारादन्येषाम्। संस्थानम्, नाशः स्वरूपं च वक्तव्यम् । चकारात् संस्थानविशेषोऽपि । एते त्रयोऽपि भेदाः—अपरस्य च, व्यष्टीनां च; ज्ञानं च वक्तव्यम्। चकाराद्वैराग्यं च । नैगमं वेदोक्तम् । गुरुशिष्याणां च आवश्यकत्वे प्रयोजनं वक्तव्यम् ॥ ३७ ॥

निमित्तानि च तस्येह प्रोक्तान्यनघ ! सूरिभिः ।
स्वतो ज्ञानं कुतः पुंसां भक्तिर्वैराग्यमेव च ॥ ३८ ॥

निमित्तानि च वक्तव्यानि । तस्य ज्ञानस्य । इह अस्मिन् देहे, एवंप्रकारे वा । चकाराद्बाधकानि च । सूरिभिः प्रोक्तानीति परम्परया सिद्धानि । अन्येषां तु पाक्षिकत्वम् । गुर्वाद्यभावे स्वतो वा ज्ञानं कथं भवति ? स उपायो वक्तव्यः । तथा स्वतो भक्तिर्वैराग्यं च ॥ ३८ ॥

---

१ प्रानप. क. २ वचनेन. ख. ३ 'निमित्तानीति' इति क्वचित् ।

नन्वेते पदार्था अनुपयुक्ताः किमिति पृच्छयन्त इत्याशङ्क्याऽऽह—

**एतान्मे पृच्छतः प्रश्नान् हरेः कर्मविधित्सया।**
**ब्रूहि मेऽज्ञस्य मित्रत्वादजया नष्टचक्षुषः॥ ३९॥**

एतान्म इति। एतान् प्रश्नान् मे मह्यं ब्रूहि। वचने हेतुः—हरेः कर्मविधित्सया पृच्छतः। भगवतः कर्माणि मनसा विधातव्यानि चिन्तनीयानि; विशेषेण धातव्यानि वा—हृदये स्थापनीयानि। मेऽज्ञस्य मित्रत्वादिति भिन्नं वाक्यम्। त्वं यद्यपि सर्वेषां मित्रम्, तथापि त्वन्मैत्री तेषां नोपयुज्यत इति मे मदर्थमेव मित्रं भवेत्याह। अजया नष्टचक्षुषो मेऽज्ञस्य मित्रत्वात् ब्रूहीति संबन्धः। मोहिन्या मायया मम ज्ञानं नष्टमिति दैन्यम्॥ ३९॥

सर्वदानापेक्षया ज्ञानदानमुत्तममिति वक्तुम्, ज्ञानेन जीवस्य भयं गच्छतीति फलतो ज्ञानं स्तौति—

**सर्वे वेदाश्च यज्ञाश्च तपो दानानि चाऽनघ!।**
**जीवाभयप्रदानस्य न कुर्वीरन् कलामपि॥ ४०॥**

सर्वे वेदा इति। सर्वे वेदा अधीता अध्यापिताश्च, यज्ञाः कृताः कारिताश्च। तपोदानानि। चकारात् यमनियमादीनि। अनघेति संबोधनं वाच्यार्थसमर्त्यर्थम्। जीवाभयदानस्य ज्ञानस्य कल्याऽपि यत्फलं भवति, तत्सर्वेऽपि मिलित्वा कर्तुं न शक्नुवन्तीत्यर्थः॥ ४०॥

एवमनेकविधप्रश्ने मैत्रेयस्योत्तरदानार्थं सम्मतिरस्ति नवेति सन्देहे, सर्वेषां प्रश्नानां भगवच्चरित्रपरत्वं वर्तत इति महानेव हर्षस्तस्य जात इत्याह—

## श्रीशुक उवाच।

**स इत्थमापृष्टपुराणकल्पः कुरुप्रधानेन मुनिप्रधानः।**
**प्रवृद्धहर्षो भगवत्कथायां संचोदितस्तं प्रहसन्निवाऽऽह॥ ४१॥**

स इत्थमिति। आ समन्तात् पृष्टः पुराणकल्पो येन। पुराणं कल्पयतीत्येतेषामुत्तरार्थे एकं पुराणं वक्तव्यम्, न तु कथामात्रेण प्रकरणमात्रेण वैतेषामुत्तराणि निरूपितानि भवन्तीत्यर्थः। वक्तृश्रोत्रोरुत्कर्षमाह—कुरुप्रधानेन मुनिप्रधानः संचोदित इति। प्रवृद्धहर्षो भगवत्कथाया वक्तव्यत्वात्। तदेवाऽऽह—भगवत्कथायामिति। सम्यक्प्रेरणं सपरिकरप्रश्नात्। प्रहसन्निवेति मुखप्रसादः। पुराणकथनप्रसङ्गप्राप्त्या वा अभिनन्दनपूर्वकमाहेत्यर्थः। एवं भगवतः सङ्कल्पविकल्पात्मकं मनो निरूपितम्॥ ४१॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे सप्तमाध्यायविवरणम्।

---

# अष्टमाध्यायविवरणम् ।

अष्टमे भगवद्बुद्धिर्यादृशी साऽत्र वर्ण्यते ।
आधाराधेयरूपाणां तदीयानां तथोद्गमः ॥ १ ॥
षड्विधा भगवद्बुद्धिः, स्वरूपे रतिरूपिणी ।
जगद्विषयिणी चैव कृतियुक्तेति वै त्रिधा ॥ २ ॥
हरेरेव, तथाऽन्यापि भगवद्विषया त्रिधा ।
लौकिकोपायजनिता प्रथमा सा द्विधा पुनः ॥ ३ ॥
तर्कक्रियाविभेदेन द्वितीया वैदिकी स्मृता ।
साक्षात्कारस्तृतीयस्तु षट्सु सर्वं प्रतिष्ठितम् ॥ ४ ॥
सामान्यतो ग्रन्थरूपा भगवद्बुद्धिरीर्यते ।
सर्गोपयोगिनी, यस्मात्तामसादुद्गता हि सा ॥ ५ ॥
अनेकधा भागवतप्रवृत्तिरुपयुज्यते ।

---

गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृतः प्रकाशः ।

अथाऽष्टमाध्यायं विवरिषवो मैत्रेयोक्तावुत्तरत्वरूपायाः सङ्गतेः स्फुटत्वेन, निबन्धे विचारितत्वेन च तामनुक्त्वा, शालीयामेवाऽवसररूपां सङ्गतिं स्मारयितुमध्यायार्थमाहुः—अष्टम इत्यादि । 'बुद्धिर्विज्ञानरूपिणी' इति वाक्याद्विशिष्टज्ञानसमानाकारत्वं तस्याः स्वरूपलक्षणम्; 'ज्ञानशक्तिः' इति वाक्याज्ज्ञानजनकत्वं च तस्याः कार्यलक्षणमिति सा यादृशी सर्गलीलायां विवक्षिता साऽत्राऽष्टमेऽध्याये विशिष्टज्ञानरूपकार्यनिरूपणेन वर्ण्यते । तस्य ज्ञानस्य विषयाव्यभिचाराय तदीयानामाधाराधेयरूपाणां विषयाणामुद्गमः प्राकट्यं चोपवर्ण्यत इत्यर्थः । समुदायार्थमुक्त्वाऽवयवार्थमाहुः—षड्विधेत्यादि । अत्र 'कृतक्षणः स्वात्मरतावनूहः' इत्यनेनोक्ता प्रथमा विधा; 'लोकानपीतान् ददृशे स्वदेहे' इति द्वितीया; 'तस्याऽर्थसूक्ष्म ....' इत्यादिभिरुक्ता तृतीया; एवं त्रिधा भगवन्निष्ठा । तथाऽन्या त्रिधा भगवद्विषया—तत्र 'तस्यां स च' इत्यनेनोक्ता प्रथमा; ततः 'क एष' इत्यादिश्लोकैरुक्ता द्विप्रकारा पञ्चमी । ततः 'अपश्यताऽपश्यत यन्न पूर्वम्' इत्यादिरुक्ता षष्ठी । एषा यद्यपि चतुर्मुखस्य, तथापि 'तस्मिन् स्वयं वेदमयो विधाता' इति कथनात् साऽपि हरेरेव । तथा च पूर्वोक्तत्रिविधबुद्धेः सारभूतस्तदाधिदैविको ब्रह्माऽपि बुद्धावेवान्तर्भवतीति तद्बुद्धिरपि भगवद्बुद्धिरेवेति षट्सु जगत्प्रतिष्ठितमित्यर्थः । नन्वेषां तु 'उदाप्लुतं विश्वम्' इत्यारभ्योच्यते, न तु पूर्वम् । अतस्तेषां किंनिरूपकत्वमित्यत आहुः—सामान्यत इत्यादि । ग्रन्थरूपेति । श्रीभागवतपुराणरूपा । तामसादिति । संकर्षणात् । तथा च तेषामपि बुद्धिनिरूपकत्वमेवेति सर्वोऽप्यध्यायस्तथेत्यर्थः । ननु भगवत्प्रोक्तत्वं भागवतलक्षणम्, तच्च संकर्षणोक्तत्वे विरुध्यते । किञ्च, सङ्कर्षणः प्रलायक इति तत उद्गतायाः कथं सर्गोपयोगित्वमित्याकाङ्क्षायामाहुः—अनेकधेत्यादि । कदाचित् स्वतः, कदाचित् केनचिद्द्वारेणेत्येवमनेकधा कथने सर्गादिकरणे च प्रवृत्तिरतो भागवतत्वं सर्गोपयोगित्वं

दशलीलायुताः सर्वाः कल्पभेदैर्व्यवस्थिताः ॥
भगवद्भिरपेति सैव लीलाद्वये तता ॥ ६ ॥

एवं पूर्वाध्याये भगवच्चरित्रज्ञानार्थं बहवः प्रश्नाः कृताः । तत्र भगवत्क्रियाज्ञानार्थं महानस्योद्यम इति तं प्रोत्साहयितुं स्तौति—

## मैत्रेय उवाच ।

**सत्सेवनीयो बत ! पूरुवंशो यल्लोकपालो भगवत्प्रधानः ।**
**बभूविथेहाऽजितकीर्तिमालां पदे पदे नूतनयस्यभीक्ष्णम् ॥ १ ॥**

× **सत्सेवनीय इति** । बतेति हर्षे । सद्भिर्महद्भिरपि पूरुवंशः सेव्यः, उत्पत्त्यर्थं स्थानार्थं ज्ञानार्थं च[1] यद्यस्माद्यस्मिन् वंशे उत्पन्नो लोकपालो यमोऽपि भगवद्धर्मविरोधिधर्मयुक्तोऽपि **भगवत्प्रधानो** जातः। भगवानेव प्रधानं यस्य, तादृशस्त्वं **बभूविथ** ।यतोऽजितकीर्तिमालां **पदे पदे** क्षणे क्षणे **नूतनयसि** । अभीक्ष्णं सर्वदा । सन्तो हि स्वभावजयार्थं महान्तं यत्नं कुर्वन्ति। तच्चेत् पूर्वं संबन्धमात्रेण भवति, तदा प्रयत्नान्तरं परित्यज्य सद्भिः पूरुवंश एव सेव्यो भवति । बतेति अत्याश्चर्यदर्शनात् प्रमेयबलाधिक्यख्यापनार्थम्। अधिकारे हि सर्वथा भगवद्बुद्धिर्नश्यति, सुतरां लोकपालाधिकारे । यदप्युक्तं 'द्वादशैते विजानीमः' इति, तद्दण्डपरिवर्जनार्थमधिकारिणा ज्ञातव्यमिति ज्ञायते, न तु भक्तिमार्गानुसारेण । तत्राऽपि प्रकृते विशेषं वक्तुं बभूविथेति मध्यमपुरुषः प्रयुक्तः, तेन यमोऽतिक्रूरः सर्वघातक इति सूचितम् । तादृशस्याऽपि यदि भगवत्परत्वम्, तद्वंशसंबन्धात्। सोऽपि संबन्ध आभिमानिक एव, अविवाहितायां व्यासादुत्पत्तेः। **अजितेति** न केनापि जित इति भगवदुत्कर्षस्तस्य हृदये रोचत इति ज्ञापितम्। तेन सर्वथा मात्सर्याभावः सूचितः । **कीर्तिरिति** । यमः कर्मप्रधानो न प्रसिद्धिमात्रं मन्यते । साऽप्यस्य हृदये समागतेति ज्ञापितम् । किञ्च, **मालेति** कण्ठभूषणम् । कीर्तिं कण्ठे स्थापितवानिति भक्तेभ्योऽप्याधिक्यम् । नूतनकरणेनाऽतिसामर्थ्यम् । पदे पदे नूतनकरणं प्रेम्णा । एवं माहात्म्यज्ञानपूर्वकसुदृढस्नेहोऽस्य वर्तत इति सूचितम् । अभीक्ष्णमित्यनेन प्रेम्णोऽकुण्ठत्वं सर्वतोधिकत्वम् ॥ १ ॥

एवं सर्वदोषनिवृत्तिपूर्वकभगवद्विषयकसर्वगुणा उत्पन्ना इति महानयं वंशः, पाण्डवादीनां भक्तानां

---

**प्रकाशः।**

चोपपद्यत इत्यर्थः । तासां प्रवृत्तीनामापाततोऽन्यथा प्रतीयमानत्वेऽपि भगवदीयत्वे गमकमाहुः—दशेत्यादि । एतेन महापुराणान्तरोक्ता अपि संगृहीता ज्ञेयाः । प्रकृतानुद्देशेऽप्युपयोगायाऽऽहुः—भगवदित्यादि । लीलाद्वय इति । द्विविधायां सर्गलीलायाम् ।

× सत्सेवनीय इत्यत्र। अभीक्ष्णं सर्वदेति। पदे पद इति वीप्सया पौनःपुन्यस्य प्राप्तत्वात् पुनरुक्तिपरिहारायैवं व्याख्यातम् । प्रमेयबलाधिक्यमेव स्फुटीकुर्वन्ति—अधिकारे इत्यादि । सापीति । प्रसिद्धिरपि। भक्तेभ्योऽप्याधिक्यमिति । भक्ता ह्यन्तरेव स्थापयन्त्ययं तु बहि[illegible]ीस्तथेत्यर्थः ।

---

१ अन्यार्थं. ग

स्वस्य च अवज्ञागर्वाभावार्थं तथा निरूपितः। इदानीं सर्वे प्रश्ना विशकलिततया पृष्टाः भगवच्चरित्रज्ञापका न भवन्तीति तथाविधत्वज्ञापनार्थमपृष्टकथनार्थं च पुराणमेव मूलतः किञ्चित्कथयिष्यामीत्याह—

**सोऽहं नृणां क्षुल्लसुखाय दुःखं महद्गतानां विरमाय तुभ्यम्।**
**प्रवर्तये भागवतं पुराणं यदाह साक्षाद्भगवानृषिभ्यः॥ २॥**

* सोऽहमिति। त्वया ये पूर्वं प्रश्नाः कृताः 'सुखाय कर्माणि करोति लोकः' इत्यादिना, तेऽप्यनेन परिहृता भविष्यन्तीति। तत्र प्रथमं प्रश्नं फलत्वेन निर्दिशन्नाह—**नृणां क्षुल्लसुखाय महद्दुःखं गतानां तद्विरमायेति**। अनेन पृष्टानां सर्वेषामेव पदार्थानां भगवत्कर्मपरत्वं सामान्यतो निरूपितम्। स्वभावतः कर्मणामल्पसुखेच्छया कृतानां महद्दुःखजनकत्वम्। तान्येव च कर्माणि भगवत्संबद्धानि चेत्, भगवदीयत्वेन कृतानि दुःखाभावपूर्वकमहत्सुखफलानि भवन्तीति। अत्र श्रवणे भवानेवाऽधिकारीति **तुभ्यमुक्तम्**। **भागवतमिति** भगवता हि प्रतिपादिताः स्वकृताः स्वफला एव। परम्परायामपि भगवदुक्तपदार्थानां दोषसंबन्धाभावाय, वक्तुः श्रोतुः स्वरूपतोऽवस्थातश्च परमां शुद्धिं निरूपयितुं शुद्धपरम्परामाह—**यदाह साक्षाद्भगवानृषिभ्य इति**। यद्भागवतं भगवता न परम्परयोक्तम्, किन्तु साक्षादेव। भगवत्त्वं वा साक्षात्। भगवत्कृपया जातभगवत्त्वव्युदासार्थम् **ऋषिभ्य इति**। ज्ञाननिष्ठा ऋषयः परमपात्रत्वेन निरूपिताः। येषां बुद्धौ मन्त्राः स्वतः स्फुरन्ति, सा बुद्धिरुत्तमैव भवति॥ २॥

भगवानपि न क्रीडां कुर्वन्, लक्ष्मीसहितो वा, भागवतमुक्तवान्, किन्तु आत्मध्यानारूढ एकाग्रचित्तस्तथोक्तवानिति भगवन्तमुपदेष्टारं वर्णयति—

**आसीनमुर्व्यां भगवन्तमाद्यं संकर्षणं देवमकुण्ठसत्त्वम्।**
**विवित्सवस्तत्त्वमतः परस्य कुमारमुख्या मुनयोऽन्वपृच्छन्॥ ३॥**

÷ आसीनमुर्व्यामिति। **आसीनमिति** क्रियान्तराभावेन लौकिकरीत्याऽपि वैजात्याभावः सूचितः। **उर्व्यामिति** भूमौ स्थित्या यज्ञियत्वं सूचितम्, अन्यथा भगवान् कथं भूमावासीत्। इयमुर्वी नोद्धृता, किन्तु मूलभूतेयं; यतः पातालाधोविद्यमानत्वं स्थानलक्षणाभिर्नागकन्यापूजनया च निरूप्यते। **आद्यमिति** मित्रादिजन्मदोषः परिहृतः। **संकर्षणमिति** भगवतश्चतुर्मूर्तेर्या मूर्तिः संहारकर्त्री, सा निरूपयतीत्युक्तम्। तेन भगवता पदार्थनिरूपणे दृष्टान्तार्थमपि यद्यन्ये पदार्था निर्दिष्टा भवन्ति, तेऽपि संकर्षणं प्राप्य दग्धपूर्वावस्था भगवदीया एव नूतना भवन्तीति सूचितम्। तामसत्वेन समागतं दूषणं परिहरति—**देवमिति**।

प्रकाशः।

* सोऽहमित्यत्र। इदानीमित्यस्य पुराणमित्यनेनाऽप्यन्वयः। भगवत्कर्मपरत्वमिति। भगवत्कर्मोपयोगित्वम्। तद्व्युत्पादयन्ति—स्वभावत इत्यादि।

÷ आसीनमित्यत्र। वैजात्याभाव इति। उपदेष्टृधर्मविजातीयं वैयग्र्यमिति तदभावः। वैयग्र्याभाव इतिपाठो वा। मूलभूतेति। अण्डात्मिका। स्थानलक्षणाभिरिति। 'किरीटसाहस्र....' इत्यनेनोक्ताभिः फणाभिः। सूचि[illegible] तेनास्थितिकालेपि दोषनाशकत्वेन प्रलयकत्वं सूचितमित्यर्थः।

१ अत्र च ख. २ वैजयथाभ[illegible] :. ख. ग. ङ. च. ३ पूजया. ख. घ.

ननु देवानामपि नानाविधत्वात् तामसत्वमपरिहृतमेव। अत आह—अकुण्ठसत्त्वमिति। न कुण्ठं कुण्ठितं सत्त्वं सत्त्वगुणोऽक्षरात्मकं वा, आसनत्वेन यस्य। स तु गुणत एव तामसः, संहारकर्तृत्वात्; तदपि प्रलयकाले। इदानीं तु देवः सर्वोपास्य एव। संकर्षणत्वं च द्रष्टृदृश्ययोः सम्यक् कर्षणात्, अतः स एव संसारं प्रयच्छतीत्याचत्वम्। तेन भजनावश्यकत्वं पितृत्वादुपदेष्टृत्वं च संगच्छते। इदं तु ज्ञानिन एव जानन्तीति श्रोतृत्वं सनकादीनाम्। मोक्षार्थमपि अयमेव सेव्यः, सम्यक्कर्षणं तत एव यतो निवर्तते। अस्य च रूपमग्रे निरूपयिष्यते। ननु सनकादीनां ज्ञानस्य विद्यमानत्वात् संकर्षणस्थाने किमर्थं गता इत्याह—विवित्सव इति। अतः संकर्षणात्परस्य वासुदेवस्य तत्त्वं स्वरूपं विवित्सवो ज्ञातुमिच्छवः कुमारमुख्याः सनकादयः। सनत्कुमारो मुख्यो येषाम्। मुनय इति संकर्षण एव जानाति, तमनन्तरो वासुदेवं ज्ञातुं नाऽन्य इति ज्ञानमुक्ताः। अन्विति ब्रह्मणा स एव प्रष्टव्य इत्युक्ते तमन्वपृच्छन्। यद्यपि ब्रह्मा जानाति, तथापि स भक्तिमार्गप्रधानः सनकादींस्तथा न मन्यते, अतः संकर्षणमपि ज्ञानप्रधानं मन्यमानस्तथाऽऽह॥३॥

स संकर्षणः, अभिमानाधिदैवत्वात् न तमभिमानो व्याप्नोत्यतः स्वस्याऽपि परं वासुदेवं ध्यायन्नेव सर्वदा तिष्ठति। यदा वा ध्यायति, तदा ते गता इति तस्य ध्यानावस्थां निरूपयति—

**स्वमेव धिष्ण्यं बहु मानयन्तं यं वासुदेवाभिधमामनन्ति।**
**प्रत्यग्धृताक्षाम्बुजकोशमीषदुन्मीलयन्तं विबुधोदयाय॥ ४॥**

+ स्वमेव धिष्ण्यमिति। धिष्ण्यं स्थानमाश्रयम्, न त्वासनम्। वासुदेवाख्यं तं बहु मानयन्तम्। तस्य ध्याने क्रियमाणे ध्याता स्वयं ध्येयं बहुमानयत्येव। तस्य ध्येयस्य स्वरूपमाह—यं ध्येयत्वेन निरूपितं लोका वासुदेवेति वदन्ति। यो ध्येयत्वेन निरूपितस्तमित्यर्थः। वासुदेव इत्यभिधा यस्य। वस्तुतस्तु, स्वस्यैवाऽऽश्रयभूत आत्मा, लोकाः परं शब्दान्तरेण व्यपदिशन्ति। ननु ध्यानारूढो बहिःसंवेदनाभावात् कथमुपदेष्टा भवतीत्यत आह—प्रत्यग्धृतेति। प्रत्यगात्मस्वरूपे धृतमक्षि येन। 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदाऽऽवृत्तचक्षुः' इति श्रुतेः। यद्यप्यन्तर्नीतं तेन चक्षुः, तथापि भगवान् कमलनयन इति तदम्बुजं जलाद्बहिर्दृश्यत एव, तथा भगवानपि ध्यानारूढोऽपि बहिः पश्यतीति ज्ञातव्यम्। किञ्च, तदक्षि कमलस्य कोशरूपम्। कोशो हि मुकुलितपत्रात्मको भवति, तथाऽयमपि निमीलिताक्षः। तथापि विबुधानामागतानां सनकादीनामुदयाय अभ्युदयाय, तानभ्युदितान् कर्तुम्, ईषद्विकचय्य पश्यन्तम्। कोशे हि अर्द्धविकासः संभवति॥ ४॥

---

प्रकाशः।

अक्षरात्मकमिति। सदंशरूपम्। सङ्कर्षणपदस्य यौगिकत्वे नामत्वं न स्यादिति योगस्य सार्वदिकत्वं तदर्थं स्फुटीकुर्वन्ति—सङ्कर्षणत्वमित्यादि। तथा चैवं सर्वस्य स्वरूपावस्थालयबहिर्निर्गमनयोः सम्पादनेन प्रवृत्तत्वाद्यथात्वं सार्वदिकमतो नामेत्यर्थः। तेन सिद्धमाहुः—अत इत्यादि। अग्र इति। पञ्चमस्कन्धे। तथा न मन्यत इति। अधिकारिणो न मन्यते।

+ स्वमेवेत्यत्र। स सङ्कर्षण इत्यस्य वासुदेवं ध्यायन्नित्यादिनाऽन्वयः।

---

१ विकच इव. क. ख. ग. ड. च. छ.

तेऽपि बाह्यतोऽपि शुद्धा भूत्वा समागता इत्याह—

**स्वर्धुन्युदार्द्रैः स्वजटाकलापैरुपस्पृशन्तश्चरणोपधानम् ।**
**पद्मं यदर्चन्त्यहिराजकन्याः सप्रेम नानाबलिभिर्वरार्थाः ॥ ५ ॥**

* स्वर्धुन्युदार्द्रैरिति । अथवा, भगवदीयशरीरासिद्ध्यर्थं स्वर्धुन्युदार्द्रैरिति । यावद्गङ्गाजलेनाऽऽर्द्रं शरीरं तिष्ठति, तावद्दैत्याक्रमणं न भवतीति पाताले दैत्याधिक्यात् तत्स्पर्शाभावार्थमार्द्रा इव जटाः कृताः, न शोषिताश्च । गङ्गाद्वारमार्गेण गता इति केचित् । तथा सति ते सर्वार्द्रा एव वक्तव्याः । '**योगेश्वराणां गतिमाहुः**' इति न्यायेन येन केनाऽपि मार्गेण ते गन्तुं शक्ताः, स्वर्धुनीपदे लक्षणा च स्यात् । अस्तु वा तथैव अतिपाविच्यार्थम् । जटा असंस्कृतकेशास्तेषां कलापैः समूहैः **संकर्षणचरणोपधानं** पीठमुपस्पृशन्तोऽपृच्छन्निति संबन्धः । पूर्वं कृतनमस्कारा अपि वासुदेवस्वरूपज्ञानार्थं पुनः साष्टाङ्गनमस्कारं कृतवन्त इत्यर्थः। ननु स्वार्द्रजटाकलापैः तदुपस्पर्शे को हेतुस्तत्राऽऽह—**पद्मं यदर्चन्तीति** । **अहिराजकन्याः** वासुकिकन्याः, **सप्रेम** यथा भवति तथा, **वरार्थाः** सत्यो **नानाबलिभि**र्नानापूजाप्रकारैर्यत्पद्मम**र्चन्ति** । तेषां स्पर्शोदोपायेति केचित्, गङ्गापेक्षयापि तच्चरणस्यैव प्रकृष्टत्वात् । किन्तु तदुपस्पर्शेन इष्टकामना सिद्ध्यतीति तदुपस्पर्शने हेतुरर्चन्तीति । महतामपि फलदातेति स्वेष्टसिद्धिः सूचिता । कन्यात्वादेव न विकारान्तरसम्भावना, कामितान्तरकथनात् न काम्यत्वम् । अतः सर्वप्रकारेण निर्दुष्टं सर्वकामनापूरकं भगवन्तं तमेव ध्यायंस्तत्स्वरूपं सम्यग्वक्ष्यतीति सूचितम् ॥ ५ ॥

तेषां सङ्कर्षणज्ञानपर्यन्तं ज्ञानं सिद्धमिति ज्ञापयितुम्, वासुदेवज्ञानस्याऽत्यभीष्टत्वं विज्ञापयितुं ते स्तुवन्तीत्याह—

**मुहुर्गृणन्तो वचसाऽनुरागस्खलत्पदेनाऽस्य कृतानि तज्ज्ञाः ।**
**किरीटसाहस्रमणिप्रवेकप्रद्योतितोद्दामफणासहस्रम् ॥ ६ ॥**

× मुहुर्गृणन्त इति । भक्त्युद्रेकान्मुहुर्गृणनम् । ज्ञाननिष्ठानां मनसा गृणनं सम्भवतीति प्रेमोल्लासख्यापनार्थं वचसेत्युक्तम् । ततोऽप्याधिक्याय स्खलत्पदेनेति । '**यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः** ॥' इति वाक्यात् वासुदेव इवाऽस्मिन्नपि प्रेमाऽऽह । अनुरागेण स्खलन्ति पदानि यस्मिन् इति । कविवन्नूतनकल्पनया स्तोत्रं वारयति—**अस्य कृतानीति** । अस्य सङ्कर्षणस्य **कृतानि** चरित्राणि तत्प्रतिपादकवचसा **गृणन्त** इति संबन्धः । नूतनपरिचयं व्यावर्तयन् सङ्कर्षणैकतानतां तेषामाह—**तज्ज्ञा इति** । सङ्कर्षणस्य कृतं जानन्तीति तथा । अन्यस्मै पूर्वोक्तलक्षणरहि-

---

प्रकाशः।

* स्वर्धुनीत्यत्र । केचिदिति । श्रीधरस्वामिनः । सर्वार्द्रा इत्यादि । तथा च जटापदवैयर्थ्यमित्यर्थः। येन केनापीति । तथा च गमकाभाव इत्यर्थः । अजहत्स्वार्थाया अदुष्टत्वान्मार्गत्वस्याऽपि शक्यवचनत्वाज्जटापदसार्थस्यस्याऽप्यतिपाविच्यार्थतया कथञ्चित् साधयितुं शक्यत्वात् तमपि पक्षमङ्गीकुर्वन्ति—अस्तु वेत्यादि । तेषामिति । अहिजातीयानाम्, सामान्ये न पुंसकम् । अस्वरसे बीजमाहुः—गङ्गेत्यादि ।

× मुहुरित्यत्र । वाक्यादिति । श्वेताश्वतरोपनिषद्वाक्यात्।

ताय भागवतं न वक्तव्यमिति §तदोक्तम् । तस्य संकर्षणस्याऽवतार इव रूपान्तरेण स्थितिं वारयत्यानुषङ्गिकदोषाभावाय–किरीटसाहस्रेति । किरीटानां यत्साहस्रं सहस्रसमूहः, तत्र ये मणिप्रवेका मण्युत्तमास्तैः प्रद्योतिता य उद्दामाः फणाः, तेषां सहस्रं यस्य । किरीटानामनादरार्थे साहस्रपदप्रयोगः, तेन नित्यनूतनानि किरीटानि भवन्तीति ज्ञापितम् । मण्युत्तमैः प्रद्योतितत्वेन सहस्रफणदर्शनं स्पष्टं ज्ञापितम् । अनेन दर्शनेनाऽपि भयं निवारितम् । गुणातीतत्वज्ञापनाय–उद्दामेति, प्रलयसाधकत्वात् । कालान्तरे तेषां दाम्नेव सङ्कोचः सम्भवति, तदपि निषिध्यते । तथाकरणं तत्रत्यानां स्थ्यादीनां नैकट्याभावाय । फणाशब्दो विकसितफणवाची, फणानामासहस्रमभिव्याप्य यस्येति वा ॥ ६ ॥

एवं श्रोतृवक्तृस्वरूपं निरूप्य प्रस्तुतमाह—

**प्रोक्तं किलैतद्भगवत्तमेन निवृत्तिधर्माभिरताय तेन ।**
**सनत्कुमाराय स चाऽऽह पृष्टः सांख्यायनायाऽङ्ग ! धृतव्रताय ॥ ७ ॥**

*प्रोक्तं किलैतदिति । ननु स्ववक्ष्यमाणस्य भागवतस्य माहात्म्यज्ञापनार्थं किमित्येतावदुच्यत इत्याशङ्क्याऽऽह–किलेति । भगवत्तमेनेति निरुपाधिकभगवत्त्वं व्यावर्त्तयति, अन्येभ्यश्चोत्कर्षं चाऽऽह । अनेन तेनाऽपि वासुदेवात् ज्ञातमिति ज्ञापितम् । अस्य श्रवणेऽधिकारमाह–निवृत्तिधर्माभिरतायेति । निवृत्तिधर्मे पारमहंस्यधर्मे अभिरतिर्यस्य । तेन पूर्वोक्तेन सहस्रफणरूपेणैव उपदेशं कृतवानिति ज्ञापनार्थं पुनर्निर्देशः कृतः । सनत्कुमारायेति दुर्लभाधिकारित्वेन सनत्कुमार एवोपदिष्टः, अन्ये त्वानुषङ्गिकाः । तत्र हेतुः 'निवृत्तिधर्माभिरताय' इति पूर्वमुक्तः । ततः परम्परामाह–स चाऽऽहेति । सांख्यायनाय स उक्तवान् । योगनिष्ठः सनत्कुमारः सांख्यनिष्ठायोक्तवान् । सांख्ये व्यवहारोऽन्यथा भातीति तदर्थमाह–धृतव्रतायेति । धृतानि व्रतानि येन । अङ्गेति संबोधनं तथाऽधिकार एव सिद्धयतीति विदुरस्याऽपि तथात्वाय ॥ ७ ॥

सांख्यायनस्तु पराशरं भक्तं मत्वा तस्मै प्रसङ्गादुक्तवानिति स्वगुरोराधिक्यकथनार्थमाह—

**सांख्यायनः पारमहंस्यमुख्यो विवक्षमाणो भगवद्विभूतीः ।**
**जगाद सोऽस्मद्गुरवेऽन्विताय पराशरायाऽथ बृहस्पतेश्च ॥ ८ ॥**

सांख्यायन इति । स हि पारमहंस्यधर्मे मुख्यः । परमहंसानां श्रवणकीर्त्तनमावश्यकम् । अतो भगवद्विभूतीर्विवक्षमाणो वक्तुमिच्छन्, अन्विताय मिलितायाऽस्मद्गुरवे पराशराय जगाद । अन्वितो योग्यो वा । अथ भिन्नप्रक्रमेण । बृहस्पतेः स्थाने गत्वा तस्मै चोक्तवान् । बृहस्पतेरत्र निरूपणं देवलोके भागवतप्रचारार्थम् । ब्रह्मा सनकादयश्च उपरितनलोकेषु सन्त्येव; भुवपर्यन्तं बृहस्पतिः, भूमौ पराशरः, पाताले संकर्षण एवाऽस्ति । अतश्चतुर्दशसु भुवनेषु भगवच्चरित्रं भागवतं व्याप्तमस्तीत्युक्तम् ॥ ८ ॥

---

प्रकाशः।

§तदोक्तमिति । तस्मिन् समये तज्ज्ञातृत्वमुक्तमित्यर्थः ।

* प्रोक्तमित्यत्र ( दुर्लभाधिकारित्वेनेति ) किलेतीति । तथा च न श्रद्धाजाड्येनेदं स्तोममात्रम[1], किन्तु वास्तवमेव माहात्म्यमित्यर्थः । दुर्लभाधिकारित्वेनेति । छान्दोग्ये तस्य ज्ञानपूर्णताया उक्तत्वात्तथात्वेन ।

---

१ स्तार्थम् ख.

पराशराद्भूमौ प्रचारमाह—

**प्रोवाच मह्यं स दयालुरुक्तो मुनिः पुलस्त्येन पुराणमाद्यम्।**
**सोऽहं तवैतत्कथयामि वत्स! श्रद्धालवे नित्यमनुव्रताय ॥ ९ ॥**

×प्रोवाचेति। मह्यं मैत्रेयाय। दयालुरिति स्वस्य तथाऽधिकाराभाव उक्तः। मुनिरिति अग्रे प्रचरणज्ञानम्। स इति प्रसिद्धः पराशरः, यः सप्तवार्षिकोऽपि मार्कण्डेयापेक्षयाऽपि वयसा वृद्धो, गर्भे च वेदाध्येता, पूर्णज्ञानः। पुलस्त्येनोक्तः पुराणं वक्तव्यमित्याज्ञप्तः। "पराशरः स्वपितरं शक्तिं राक्षसभक्षितं श्रुत्वा राक्षससत्रे सर्वाण्येव रक्षांसि हतवान्; अतः स्ववंशरक्षार्थं पुलस्त्यः समागत्य राक्षससत्रनिवृत्त्यर्थं प्रार्थयत्। ततो निवृत्ताय पराशराय वरो दत्तः 'पुराणाचार्यो भव' इति।" अन्यथा अनधिकृतः पुराणं वक्तुं न शक्नुयात्। तत उक्तं पुलस्त्येनोक्त इति। आद्यं भागवतम्, पुराणप्रवृत्तौ प्रथमोत्पन्नाय ब्रह्मणे भगवता प्रथमत एवोक्तम्। विष्णुपुराणं तु भागवतसंबद्धप्रमेयमेव, व्यासे शाखाभेदवत्। विष्णुपुराणे मैत्रेयपराशरकथा निरूपिता, तद्व्यावृत्त्यर्थमाद्यमित्युक्तम्; अन्यथा विष्णुपुराणे नेयं परम्परा निरूपिता। सोऽहं गुरुकृपानुगृहीतस्तव श्रोतृसंबन्धित्वेन एतद्भागवतं कथयामि। वर्तमानसामीप्ये वर्तमानप्रयोगः। वत्सेति स्नेहः कथने हेतुः। भगवदाज्ञा तु तावन्मात्र एव। मर्यादारक्षार्थमधिकारे विशेषणद्वयमाह—श्रद्धालवे नित्यमनुव्रतायेति। श्रद्धा मुख्याधिकारः, नित्यं चाऽनुव्रतत्वम् इच्छानुरूपनिरन्तरसेवा। अन्तर्बहिरधिकारहेतू श्रद्धासेवे ॥ ९ ॥

* एवं परम्परां प्रतिज्ञां चोक्त्वा पुराणमारभते—

**उदप्लुतं विश्वमिदं तदाऽऽसीद्यन्निद्रया मीलितदृङ्न्यमीलयत्।**
**अहीन्द्रतल्पेऽधिशयान एकः कृतक्षणः स्वात्मरतो निरीहः ॥ १० ॥**

प्रकाशः।

× प्रोवाचेत्यत्र। प्रार्थयदिति। विशिष्टद्वारा साक्षाद्द्वारा पुराणान्तरे प्रार्थयत्। व्यास इति। वेदविभागे। विष्णुपुराणस्यैतच्छाखाभेदत्वे किं गमकमित्यपेक्षायामाहुः—अन्यथेत्यादि। एतस्यैव विवरणं नेयं परम्परा निरूपितेति। तथा चैतत्परम्पराया अभावात् प्रमेयाभेदाच्च शाखान्तरन्यायेन तस्य पुराणान्तरत्वमित्यर्थः। तावन्मात्र इति। यावदितः पूर्वमुक्तं तावन्मात्रे।

* उदप्लुतमित्यत्र। पुराणमारभत इति। अत्र शुकाशयस्त्वेवं बोध्यः। द्वितीयस्कन्धस्याऽष्टमाध्याये 'आसीद्यदुदरात्पद्मम्' इत्यादिना हिरण्यगर्भजनकस्य सर्वात्मकत्वादिकं यदाक्षिप्तम्, तन्नवमे चतुःश्लोकीप्रसङ्गेन समाहितम्। तत्र ब्रह्मकल्पमुक्तम्। ततो नवमसमाप्तौ 'यदुताऽहं त्वया पृष्टो वैराजात्पुरुषादिदम्। यथासीत्तदुपाख्यास्ये प्रश्नानन्यांश्च कृत्स्नशः' इति प्रतिज्ञाय दशमे महापुराणीयानि दशलक्षणान्युक्त्वा वैराजात्पुरुषात् सृष्टिकथने ब्रह्मकल्पस्य विकल्प उपक्षिप्तः, तेन सामान्यतः सर्वे प्रश्ना उत्तरिताः, तथापि विशेषतो न समाहिता इति तथा समाधातुं दशमान्ते 'पाद्मं कल्पमथो शृणु' इति प्रतिज्ञाय तृतीयस्कन्धारम्भे 'एवमेतत्पुरा पृष्टः' इत्यनेन विदुरमैत्रेयसंवादमुपक्षिप्याऽऽद्यं पुराणं तन्मुखेन वक्तुमा-

१ तदधा. ख. ग. ट. च.; तथादृश्या च.

उदप्लुतमिति। पुराणं हि दशलीलायुक्तम्, तत्रादौ सर्गो वक्तव्यः। स च भागवतत्वात् भगवत्कृतः। तत्र तत्सृष्टानामर्थानां ब्रह्मकल्पेऽभावात् कल्पान्तरानुसारेण वक्तव्यम्। यद्भगवतैव कृतम्, तच्चरित्रं पद्मकल्पे वर्तत इति तन्निरूपणार्थं पूर्वकल्पस्य प्रलयानन्तरस्थितिमनुवदति, उदकेन प्लुतं सर्वमेव विश्वमासीदिति। बहुविधा हि प्रलयाः। तामसेषु कल्पेषु तामसानि भूतानि दह्यन्तेऽग्रिमसृष्ट्यर्थम्, राजसेषु तु प्रलयजलेन निमग्नानि भवन्ति,सात्त्विकेषु तु स्थिता एव पदार्था एकदेशेन निवृत्ता अवशिष्यन्त एव,यद्यग्रेऽपि सात्त्विक एव कल्पो भवति।तत्र पद्मकल्पात् पूर्वकल्पो राजस इति उदप्लुतमित्युक्तम्। इदं विश्वं पूर्वमुदप्लुतमासीत्। इदमिति सर्वदा विश्वमेकविधमेवेति वृक्षवत् प्रवाहानादित्वं निरूपितम्। तदेति पूर्वप्रलये। तस्य प्रलयस्य निमित्तमाह—यन्निद्रयेति। यद्यदा निद्रया भगवच्छक्त्याऽलुप्तज्ञानशक्तिरेवाऽमीलितदृक् न्यमीलयत् अक्षिनिमीलनं कृतवान्, निमीलिताक्षो जागर्तीत्यर्थः। नन्वेवं स्थितौ को गुण इत्याशङ्क्याऽऽह—स्वात्मरतौ कृतक्षण इति। 'कदाचिद्रमते स्वस्मिन् प्रपञ्चेऽपि कचित्सुखम्।' इति सृष्टिप्रलयकरणे निमित्तमुक्तम्। आत्मरता वात्मनि क्रीडायां स्वरूपानन्दरमणे। स्वरूपानन्दः पूर्णानन्दः, अक्षरानन्दस्तु लक्ष्मीरूपः पूर्वं निरूपितः। स च भगवान् व्यापिवैकुण्ठेऽपि कदाचिल्लक्ष्म्या सह क्रीडति, कदाचित्स्वानन्दमेवाऽनुभवति। बीजधर्म एव सर्वत्र कार्यपरम्परायामातृणस्तम्बपर्यन्तम्; तथाप्यंशकार्येषु यादृशमेव बही रमणं तादृशमेवान्तारमणम्। क्रिया बहीरमणेऽभिवृद्धिकरी, ज्ञानं त्वन्तः; अन्योन्यबाधकत्वं च। सर्वेहोपरतिरेवाऽऽत्मानन्दानुभवेऽङ्गम्। तदाह—निरीह इति सर्वचेष्टारहितः। यथा पुरुषत्वे तुल्येऽपि रङ्कमहाराजयोर्बहिर्भोगातिशयस्तथाऽऽत्मन्यपीति। यावदेवाऽऽत्मत्वेन जानाति, तावदेवाऽऽत्मसुखं वर्द्धते। यथा यथा परिच्छिनत्ति, तथा तथाऽल्पो भवति। इदमेव भगवान् सृष्टिप्रलयाभ्यां बोधयति। एक इति तत्सुखमखण्डमेकेनैवाऽनुभूयते। क्रियायां प्रयत्नव्यावृत्त्यर्थमधिशयानो जातः। तल्पकृतपीडानिवृत्त्यर्थमहीन्द्रतल्पे शेषपर्यङ्के। स हि भगवच्छ्वासोत्थवायुपानेन प्रतिक्षणं तुङ्गः कोमलश्च भवति, अत एव बहुकालं शयानो भवति॥ १०॥

प्रकाशः।

रब्धम्। तेन ते प्रश्ना एवं युक्तिपूर्वकमाप्तसम्मतिपूर्वकं पद्मकल्पीयसृष्टयुक्ताः समाहिता भविष्यन्तीति तदिदं प्रपञ्चयन्ति—पुराणमित्यादि। पुराणमारभत इति पुराणमिति महापुराणम्। अनुवादप्रयोजनमाहुः—बहुविधा इत्यादि। तत्र पूर्वं 'स चापि यत्र' इत्यनेनावस्थासाम्येन जीवतौल्यादीश्वरत्वं यदाक्षिप्तम्,तदत्र प्रथमं विशेषतः समाधेयम्, तदर्थं प्रथमं भगवत्सुषुप्तेर्जीवसुषुप्तितो वैलक्षण्यमत्र बोधयतीत्याशयेनाहुः—तस्येत्यादि। तथा च '[सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति' इति श्रुतेर्जीवस्य तदानीं तमसाऽभिभवः, इह तु नेत्येकं वैलक्षण्यम्। स्वात्मरतावित्यादि। तथा च स्वप्रतिष्ठितत्वैव[1] गुण इत्यर्थः। अत्र कृतक्षण इत्यस्य कृतेच्छ इत्यर्थबोधयानाऽऽहुः—कदाचिदित्यादि। आत्मनीत्यादि। 'सता सौम्य! तदा सम्पन्नो भवति' इति श्रुतेर्जीवस्य सत्सम्पत्त्या तदानीं सुखम्, न तु स्वतः; तदपि न पूर्णमनित्यं च। इह तु स्वतः पूर्णमित्यपरं वैलक्षण्यम्। एवं ब्रह्माण्डान्तरेव भविष्यति, न तु मूलधाम्न्यपीति शङ्कानिवृत्त्यर्थमाहुः—अक्षरेत्यादि। 'निरस्तसाम्यातिशयेन' इत्यादिवाक्यैस्तत्रेत्यर्थः। एवं वैलक्षण्यं बोधयित्वा प्रतीयमानावस्थासाम्ये हेतुमाहुः—बीजेत्यादि। तर्हेतदंशे किं वैलक्षण्यमित्याकाङ्क्षायां तदृष्टान्तेन तत् स्फुटीकर्तुं तान् धर्मानाहुः—तथापीत्यादि। तथा चाऽत्रापि महत्त्वकृतं वैलक्षण्यमित्यर्थः। प्रयोजनतोऽप्याहुः—इदमित्यादि। ननु भवत्वेवम्, तथापि निद्राया अबाधकत्वे शयनस्य किं प्रयोजनमत आहुः—क्रियायामित्यादि। परिकरतोऽपि वैलक्षण्यं बोधयन्ति—स हीत्यादि। एतेन शेषस्य वेदात्मकत्वेऽपि युक्तिरुक्ता।

1 सप्रतिष्ठितैव. पा.

तर्ह्यग्रे सृष्टिर्न स्यात् इत्याशङ्क्याऽऽह—

**सोऽन्तःशरीरेऽर्पितभूतसूक्ष्मः कालात्मिकां शक्तिमुदीरयाणः।**
**उवास तस्मिन्सलिले पदे स्वे यथाऽनलो दारुणि रुद्धवीर्यः ॥ ११ ॥**

+सोऽन्तरिति। शरीरं त्वानन्दमयमिति पूर्वं निरूपितम्, सदानन्दमयं वा। सच्चिदानन्दरूपमिति वस्तुस्थितिः। पुरुषस्य सद्भावम्, मध्ये ज्ञानम्, आनन्दस्त्वन्तः, स्त्रियास्तु विपरीतम्, तस्या सत्येव रतिर्नित्वानन्दे कदाचिदपि। अन्तः साङ्ख्ययोगज्ञानाधिकार एव तस्याः, बहिर्भक्तेश्च। पुरुषस्य तु विपरीतम्। आनन्दानुभवस्तस्यान्तर एव युक्तो न बाह्ये; भेदकरणप्रसङ्गात्, आनन्दस्य स्वस्थानत्यागाच्च। न तादृशा-

प्रकाशः।

+ सोऽन्तरित्यत्र। तर्हीत्यादि। एवमात्मरतत्वेन निर्विघ्नमहासुखानुभवेऽग्रे सृष्टिप्रयोजनाभावात् सा न स्यादित्याशङ्क्य, स्वापकारणं तत्परिकरं प्रकारं प्रयोजनं चाऽऽहेत्यर्थः। अत्र मूले 'सः' इत्यनेन पूर्वश्लोकोक्तस्य शयानस्य परामर्शात्तस्य चेच्छाविशिष्टस्यैव सृष्ट्यादिकर्तृत्वादिच्छाविशेषोऽर्थबलादेव रमणकारणत्वेन लभ्यत इत्यतः स इतिपदं न व्याख्यातम्। तत्र कारणीभूताया इच्छायाः प्रकारं बोधयितुमन्यानि पदानि व्याकरिष्यन्ते। 'आनन्दरूपममृतं यद्विभाति' इति श्रुत्या भगवतः केवलानन्दघनत्वेन तत्र बाह्याभ्यन्तरभावाभावात् किं तत्रान्तःशरीरमित्याकाङ्क्षायां तदुक्तं पूर्वं स्वरूपस्थितिमाहुः—शरीरमित्यादि। पूर्वमिति ब्रह्मकल्पे। सदानन्दमयं तद्विकल्पे। वस्तुस्थितिरिति। 'सत्यं ज्ञानमनन्तं ब्रह्म' इति स्वरूपलक्षणात्तथा। तथा च यदा यथेच्छति तदा तथा प्रकटीभवतीति तस्येच्छयैव सदादीनामन्तर्भावो बोधयितुम्, सृष्टौ 'स आत्मानमेव द्वेधाऽपातयत्ततः पतिश्च पत्नी चाभवताम्' इति श्रुत्या शरीरद्वैविध्यात् प्रकृते च योगमायोपबृंहितलीलाया वाच्यत्वाद्योगमायायाः स्त्रीत्वाच्च शरीरद्वयेऽपि सच्चिदानन्दस्थितिव्यवस्थामाहुः—पुरुषस्येत्यादि। पञ्चकोशविचारश्रुत्या पुरुषदेहे तथैव सिद्धत्वात्। स्त्रीदेहे सामान्यतस्तथा प्राप्तावपि 'त्रिलोक्यैकान्तभूतानि' इति वाक्ये पुम्मतिहरणार्थमेव स्त्रीकरणस्मरणात्, मतिहरणस्य प्रीतिं विना अभावात्, मिथस्त्वस्य चाऽऽनन्दधर्मत्वेन तदात्मकत्वात् स्त्रिया विपरीतधर्मत्वमित्यर्थः। तेनरतावपिवैपरीत्यमाहुः—तस्या इत्यादि। सत्येव रतिरिति। स्त्रिया सदंशोऽन्तरिति तस्मिन्नेव रतिः। तस्यामान्तरधर्मत्वेन तत्रैव तदुत्पत्तेरिति। कदाचिदिति। कस्यामपि बुद्ध्यवस्थायाम्। तथा च पुरुषस्य जाग्रति स्त्रीशरीरीयानन्दे बहीरतिः। सुषुप्तौ सत्सम्पत्त्याऽन्तरानन्दे रतिः। स्वप्नेऽपि बाह्यत्वाभिमानादानन्द एव। स्त्रियास्तु जाग्रति स्वप्ने च पुंशरीरीये सति। सुषुप्तौ च प्राज्ञे सतीत्यर्थः। एवं बन्धावस्थाव्यवस्थामुक्त्वा मुक्त्यवस्थायामप्यनुभववैजात्याय साधनव्यवस्थामाहुः—अन्तः साङ्ख्येत्यादि। एतत्प्रयोजनमग्रेऽत्रैव वक्तव्यम्। एवं व्यवस्थामुक्त्वा स्वरतेरुत्कर्षमाहुः—आनन्देत्यादि। पुरुषस्य ह्यानन्द आन्तरो रतिश्च तस्यैव धर्म इति रतेस्तत्सम्बन्धे उभयोरान्तरत्वेनैकाधिकरण्यादानन्दानुभवो भूयान् भवतीति तत्रैव युक्त इत्यर्थः। ननु बाह्येऽपि तदनुभवस्य तुल्यत्वेन तत्र कुतो न युक्त इत्यत आहुः—न बाह्य इत्यादि। इत्यानन्दयोर्धर्मधर्मिभावेन रतेर्बहिरानयने आनन्दविहरणप्रसङ्गात्' आनन्दस्याऽप्यानयने स्वस्थानत्यागाच्च न युक्त इत्यर्थः। अत्रानुभवं प्रमाणयन्ति—नेत्यादि। तद् 'यथा प्रियया सपरिष्वक्तो न बाह्यं वेद नान्तरमिति'। तत्र स्थितो न

१ श्रीमद्भागवत पा २ स्त्रीशरीरयानन्दे पा ३ बाह्यत्वाभिमानादानन्द एव पा ४ पुंशरीरस्य पा ५ विधयस्था पा

नन्दोऽनुभवयोग्यः । भगवत्यपि तथा, बीजत्वात् । स हि भावस्त्रिषु परिवर्तत इति सच्चिदानन्देषु नैकत्रैव स्थितिः, अन्यथा तादृमूपैवैयर्थ्यापत्तेः । अनुस्यूतस्तु तदात्मक एव नित्यसिद्धः । अतः सति रमणेऽक्षरानन्दं पृथक्कृत्य लक्ष्म्या सह रमते, चिति रमणे सदानन्दौ तस्याऽन्तर्बहिर्निधाय बाह्याभ्यन्तरभेदेन रमते। तत्र प्रपञ्चो वेदाश्च रमणसाधनम् । स्वकृतप्रपञ्चेऽप्येतदुभयं करोति, ते कल्पप्रलया इत्युच्यन्ते । तत्राऽधिकारिणः कालस्य नियामकत्वात्, भगवदेकसम्भोगसम्पादकत्वाच्च, अंशानां भोगो मा भवत्विति तद्विषयानन्तः प्रवेश्य शेते । तदाह—अन्तःशरीरेऽर्पितानि भूतसूक्ष्माणि येनेति । चिदंशान् सर्वानेव यथायथं स्थापयित्वा स्वात्मानुभवं करोतीति । तेषामतिक्रमनिवृत्त्यर्थं **कालात्मिकां शक्तिं** संहारिका**मुदीरयाणः**, अलीनां कुर्वाणः प्रेरयमाणः । **तस्मिन् सलिले स्वे पदे** नारायणस्य स्थानभूते । तस्मिन् पूर्वोक्ते **उवास** स्थितः । अयमंशः पूर्वोक्ताद्विशेषः । अवान्तरकल्पत्वादल्पप्रयत्नव्यापारान्नामनिर्वर्तकत्वाच्च सलिलानुग्रहः । अतोऽस्मदादिः स्वसच्चिदानन्दांशेषु रमणे क्षीणे परमपुरुषार्थपर्यवसानाभावात् कारणे सति रतिं

---

प्रकाशः।

कश्चन कामं कामयते, न कञ्चन स्वप्नं पश्यति' इति श्रुत्या यादृश आनन्दोऽन्तरुक्तस्तादृशानन्दो न बहिरनुभवयोग्य इति प्रत्यक्षत एव सिद्धमित्यर्थः । एवं स्वरतेरुत्कर्षं साधयित्वा सालक्षण्याय प्रकृतेऽतिदिशन्ति—**भगवतीत्यादि** । तथा च यथा पुरुषे सच्चिदानन्दानां बाह्याभ्यन्तरभावः, यथा च स्वरतिरुत्कृष्टा, तथा भगवत्यपीत्यर्थः। एवं स्वरतिबीजमुक्त्वा तत्त्यागमाहुः—**स हीत्यादि** । हि यतो हेतोः स भावो रमणकर्तृस्वरूपलिप्यवस्थाविशेषेषु परिवर्तत इति हेतोः सच्चिदानन्देष्वेकत्र न रतेः स्थितिः, किन्तु यत्रैव कर्तू रतीच्छा तत्रैव स्थितिरितीच्छाविशेष एव तत्त्यागबीजमित्यर्थः । अत्र गमकमाहुः—**अन्यथेत्यादि** । तथा च, यदि कर्तृत्वपरिवर्तनेच्छा न स्यात्, तदा निद्राया ज्ञानाभिभावकत्वान्न शयीत । यस्मादेवं तस्माज्जाग्रति सतः, स्वप्ने चितः, सुषुप्तावानन्दस्य रमणकर्तृत्वमिति रतेरपि परिवृत्तिरिति भावः। नन्वेवं सति रमणकर्तृभावस्तस्मिन्न नित्यः स्यादिति लीला अप्यनित्याः स्युरित्यत आहुः—**अनुस्यूत इत्यादि** । **तदात्मक** इति। आनन्दात्मकः। तथात्वपरिवर्तनेऽपि नित्य इति लीला अपि स्वरूपतः प्रवाहतश्च नित्या इत्यर्थः। तत्र सिद्धं परिकरं जीववैलक्षण्यायाऽऽहुः—**अत इत्यादि** । **सति रमण** इति। जाग्रद्रमणे। **चिति रमण** इति। स्वप्ने रमणे। **तस्याऽन्तर्बहिर्निधायेति** । चिदंशस्यान्तर्बहिः सदानन्दनिधानेन तां स्त्रियमिव कृत्वा । अनेन तदानीं योगमायया सह रमणमुक्तम् । **तत्रेति** । **चिति रमणे** । **वेदा इति** । निःश्वसितरूपाः । एवं सामान्यतः सर्गप्रलयव्यवस्थोक्ता । स्वकृतप्रपञ्चे तु विशेषमाहुः—**स्वकृतेत्यादि** । **एतदुभयमिति** । वेदप्रपञ्चाभ्यामन्तर्बहीरमणम् । तद्वक्ष्यति ' वेदमयो विधाता ' इति । **त** इति । द्विधा रमणोपयुक्ताः पदार्थाः । एवं दिनमध्यव्यवस्थामुखेनैकः परिकर उक्तः । परिकरान्तरमाहुः—**तत्रेत्यादि** । **भोग** इति। सुखदुःखानुभवः। तथा चांशानां तुल्यसुखातिदुःखदर्शने उद्वेगात्सुप्वापो न स्यादिति तदर्थं विषयाणामन्तःस्थापनं स्वात्मरतिपरिकर इत्यर्थः । परिकरान्तरमाहुः—**चिदंशानित्यादि** । **यथायथमिति** । ये यद्देशादुत्पन्नास्तांस्तद्देशे । **अतिक्रमनिवृत्त्यर्थमिति** । तेषां विषयराहित्येन भोगाभावाद्भगवद्भोगदर्शने तेषां वासनया क्षोभेऽतिक्रमः स्यादिति तन्निवृत्त्यर्थम् । **अयमंश इत्यादि**। काले प्रेरणात्मकोंशः पूर्वश्लोकोक्तान्निराहरत्वाद्विलक्षणस्तेनेतरः सर्वोऽपि तुल्य इत्यर्थः । **नामनिर्वर्तकत्वादिति**। नारायणनामनिर्वचनोपयुक्तत्वात् । एवं परिकरे प्रकार उक्तः । प्रयोजनमाहुः—**अतइत्यादि** । **अस्मदादिरिति** । पुंशरीरः स्त्रीशरीरश्च यथाधिकारमन्तर्बहिः साधनैः

---

१ परिकरा. पा

कुर्वीत । ननु बहिः स्थितानां पदार्थानामन्तः स्थापितत्वात् कालस्य च विद्यमानत्वात् सर्वं जगद्बहिरागच्छेत् । तत्राऽऽह--यथाऽनलो दारुणि रुद्धवीर्य इति। कारणे तादृशं रूपमस्तीति ज्ञापयितुं कार्ये तादृशं रूपं दृष्टान्तीकृतम्। यथा तस्य दाहकशक्तिर्निरुद्धा, तथा कालादीनामपि स्वस्याऽपि शक्तिर्निरुद्धा ॥११॥

एवं कियत्कालं स्थित इत्याह---

**चतुर्युगानां च सहस्रमप्सु स्वपन् स्वयोदीरितया स्वशक्त्या ।**
**कालाख्ययाऽऽसादितलोकतन्त्रो लोकानपीतान् ददृशे स्वदेहे ॥ १२ ॥**

* चतुर्युगानामिति। चतुर्युगानां स्वरूपमग्रे निरूपणीयम्। तेषां सहस्रावृत्तौ ब्रह्मणो दिनं भवति, तावत्येव निशेति तावत्कालं शयनम् । चकारात्सन्ध्यांशयोर्ग्रहणम्, अन्यथासङ्ख्यानिवृत्त्यर्थं च । कालशक्त्याः पर्वद्वयस्य विद्यमानत्वात् प्रथमपर्वाऽतिक्रम्य, यदैव सा द्वितीये पर्वणि समायाति, तदैवानन्दतिरोधानार्थं ज्ञानशक्तिमुद्भावयति । अतिक्रमणज्ञापनार्थं वा । अत एवाऽस्मिन् कल्पे जीववद्भोग एव भोगः । अतो भगवान् स्वपन्नेव स्वकीयया प्रामाणिकया स्वेनैवोदीरितया स्वेच्छारूपया स्वशक्त्या, न तु भिन्नतया स्थितकालेन । कदाचिद्भगवदिच्छया सोऽप्यन्तः प्रविश्य तथा कुर्यात्, ततश्च तस्याऽनियतत्वात् कालातिक्रमो भवेत् । कालाधीनसृष्टिश्चेयं न भवेत्, शक्त्यन्तराणामप्युद्बोधप्रसङ्गात् । अतो भगवदिच्छानुसारेण स्वशक्त्यैव कालाख्यया आसादितमुपस्थापितं लोकानां तन्त्रं करणसाधनं यस्य । चित्यागमनमात्रेणैव विषयं करणसाधनं चोपस्थापितवर्तीत्यर्थः । तदा अपीतान् अमुक्तान् लोकान् जनान् स्वदेहे ददृशे । वासनया विषये संबद्धान्, स्वांशेन भगवति चिति प्रविष्टान्, स्वस्मिन् विद्यमानमंशं तत्र प्रवेशयितुं ददृशे । तदा सदंशमध्ये सर्वोऽपि चिदंशः पिण्डीभूतः ॥ १२ ॥

तस्योद्गममाह---

**तस्याऽर्थसूक्ष्माभिनिविष्टदृष्टेरन्तर्गतोऽर्थो रजसा तनीयान् ।**
**गुणेन कालानुगतेन विद्धः सूष्यंस्तदाऽभिद्यत नाभिदेशात् ॥ १३ ॥**

प्रकाशः।

रतिं कुर्वीतेति निशार्थं प्रकारः सूचितः, जीवसुखार्थं च स्वाप इत्यर्थः । तादृशमिति । शक्तिनिरोधकम् । शेषसुखानार्थं । एवं सुप्यापस्योत्तरावस्थोक्ता । तेनाऽपि जीववैलक्षण्यं बोधितम् । जीवस्याऽवस्था कालकृता परस्थानभूतपुरीतन्नाडीसम्बन्धेन, अत्र स्वेच्छया कालं प्रेरयतः स्वस्थानभूतजलसम्बन्धेनेति । एवं द्वाभ्यां द्विविधा सुषुप्तिरुक्ता ।

* चतुर्युगेत्यत्र । सन्ध्यांशयोरिति । सन्ध्यारूपयोरंशयोः । अन्यथासंख्यानिवृत्त्यर्थामिति । 'ब्राह्मसंवत्सरशतादेकादः शिव उच्यते । शैववर्षशतादेकं निमिषं वैष्णवं विदुः' इति मात्स्याद्युक्तसंख्यानिवृत्त्यर्थम् । प्रथमपर्वेति । अर्धरात्रम् । द्वितीयपक्षे गमकमाहुः--अतएवेत्यादि । ज्ञानशक्त्युद्भावनादेव । अंशमिति । सदंशम् । अनेन श्लोकेन स्वप्नावस्थोक्ता । अत्रापि स्वदेहे सतामेव सचिदंशानां स्वनोदितकालोपस्थापितानां दर्शनम्, जीवस्य तु कालकर्माधीनस्य मायिकानां भगवत्प्रेरणेन दर्शनमिति भेदः ।

१ स्वमिन्नयो पा.

× तस्याऽर्थेति । तस्य भगवतोऽर्थसूक्ष्मे जीवानामुपभोग्यरूपेऽभिनिविष्टदृष्टेः सतस्तस्याऽन्तर्गतोऽर्थश्चि-ज्जडात्मकोऽभूत्, तदा तनीयान् सूक्ष्मरूपो जातः । अरूपस्य सूक्ष्मरूपं महान् विशेषः । तदपि रजोगुणेनैव, न तु भगवता; अन्यथा पुरुष इव भगवद्रूपता स्यात् । तदनन्तरं ततस्तेनैव रजसा कालानुगतेन विद्धः सन् सूयन् प्रसवं प्राप्नुवन् तदा नाभिदेशात् अभिद्यत । नाभिदेशं भित्वा न निर्गतः, किन्तु अतिसूक्ष्मत्वात्, आकाशशरीरत्वाच्च, तस्माद्देशात् सजीवपदार्थत्वात् प्रसवप्रकारेण निर्गत इत्यर्थः ॥ १३

निर्गतस्य स्वरूपमाह—

**स पद्मकोशः सहसोदतिष्ठत्कालेन कर्मप्रतिबोधितेन[1] ।**
**स्वरोचिषा तत्सलिलं विशालं विद्योतयन्नर्क इवाऽऽत्मयोनिः ॥ १४ ॥**

÷ स पद्मकोश इति । नारायणस्तु जलात्मक इति जलकार्येपूत्तम पद्मकोश एव तत उदतिष्ठत् । सहसेति विकासमन्तरेणैव । तदा तस्मिन् बहिः स्थितः कालः कर्म च प्राणिनां संबद्धम् । कोशोत्पत्त्या प्रबुद्धं कर्म बहिः स्थितं कालमन्तः प्रवेशितवादिति कालेनैव केवलेन अग्रिमकार्यं कृतवानित्याह—कालेनेति । स्वरोचिषा स्वस्य तेजोरूपेण । कालस्य त्रिरूपत्वात् प्रकाशकं रूपं तस्य गृहीतम् । विशालमेव तत्सलिलं विद्योतयन्नेव । जननप्रकाशनयोर्विलम्बाभावादर्क इति तथा सामर्थ्याय । आत्मा भगवानेव योनिः कारणं यस्य, स उदतिष्ठत्—इति संबन्धः ॥ १४ ॥

सहसा निर्गतत्वात् तद्विकासार्थं स एव भगवांस्तत्र प्रविष्ट इत्याह—

**तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत्सर्वगुणावभासम् ।**
**तस्मिन् स्वयं वेदमयो विधाता स्वयम्भुवं यं स्म वदन्ति सोऽभूत् ॥ १५ ॥**

* तल्लोकपद्ममिति । कारणप्रवेशनव्यतिरेकेण पुरातनस्य निःसारस्य कार्योपयोगो न भविष्यतीति नारायणप्रवेशः । उ इति कोमलसंबोधने । पूर्वं नारायणोऽपि तत्र प्रवेशात् विष्णुर्जातः । विष्णुर्व्याप्नोतीति वा । पूर्वमेव तत्र स्थितस्तत्राभिव्यक्तो जात इत्यर्थः । तत्र हेतुः—सर्वगुणानामवभासो यत्र । भगवद्गुणानां सर्वेषामभिव्यञ्जककार्यरूपाभिव्यक्तिस्थानत्वात् भगवत्सहिता एव सर्वे गुणा भासन्तामित्येतदर्थं भगवत्प्रवेश इत्यर्थः । अयं पद्मकल्पे विशेषः । तत्र सर्वे जीवा एकीभूताः समष्ट्यात्मकाः सन्त एकरूपेण

---

प्रकाशः ।

× तस्याऽर्थेत्यत्र । अत्र आगरस्य पूर्वावस्थोच्यते—तस्येत्यादि । तस्य भगवतोऽन्तर्गतः पिण्डीभूतः सदंशोऽर्थरूपोऽभूत् । अर्थ इत्यस्य विवरणं चिज्जडात्मक इति । विकुर्वाणो जात इत्यर्थः । सूक्ष्मरूप इति । अङ्कुरपूर्वावस्थारूपः । तस्य स्वरूपमाहुः—अरूपस्येति । तादृशस्य सदंशस्य । महान् विशेष इति । महत्तत्त्वात्मकपृथिवीरूपः । भित्त्वेति । विभज्य ।

÷ स पद्मेत्यत्र । त्रिरूपत्वादिति । उपादानत्वेन तेजोबन्नात्मकत्वात् ।

* तादित्यत्र । तत्र प्रवेशादिति । विशतीति विष्णुरिति निरुक्त्येत्यर्थः । इयं निरुक्तिः शैवपुराणस्थेत्यतो निरुक्त्यन्तरमाहुः—विष्णुरित्यादि । विशेष इति । ब्रह्मकल्पे प्रागसिद्धमेव सर्वात्मकत्वम्, तद्विकल्पेषु

---

[1] कर्मप्रतिबोधनेन. पा.

प्रादुर्भूता इत्याह—**तस्मिन्स्वयमिति**। स्वयं भगवान्, अत्र चितो भेदाभावात्। तत्राप्युभयक्रीडार्थं वेदमयो विधातेत्युक्तम्। वेदमयत्वात् आत्मरमणम्, विधातृत्वात् बहीरमणमिति। तस्योद्गतस्य नामाऽऽह—**स्वयम्भुवमिति**। तत्रत्या लोकास्तस्य पितरमदृष्ट्वा स्वयमेव ब्रह्मा जात इति स्वयम्भुवमाहुः, एवं लोकैः स्वयम्भूत्वेन निरुक्तोऽभूत्॥ १५॥

ततो यज्जातं तदाह—

**तस्यां स चाम्भोरुहकर्णिकायामवस्थितो लोकमपश्यमानः।**
**परिक्रमन् व्योम्नि विवृत्तनेत्रश्चत्वारि लेभेऽनुदिशं मुखानि॥ १६॥**

**तस्यामिति**। पूर्वोक्तकमल एव, स्वयमपि पूर्वोक्त एव, भगवत्प्रवेशेन विकसिते कमले **कर्णिकायामवस्थितः** स्वातिरिक्तं **लोकमपश्यमानः**। जनात्मकाः स्वस्मिन्नेव, लोकात्मकास्तु कमले; तदुभयविमर्शाभावाल्लोकादर्शनम्। ततोऽन्यथा दर्शनं कृतवानित्याह—**परिक्रमन्निति**। परित आक्रमन् शिरः प्रसारयन्। व्योम्नीत्युपरिभागे। पूर्वमेव पिण्डस्योत्पन्नत्वात् **विवृत्तनेत्रः** प्रसारितनयनो भूत्वा यमेव भागं न पश्यति, तत्रैव लोको भविष्यतीति बुद्ध्या सर्वत्र मुखेच्छायां सर्वगुणावभासस्य प्रतिष्ठितत्वाद**नुदिशं चत्वारि मुखानि लेभे**। तदा चतुर्मुखो ब्रह्मा जात इत्यर्थः॥ १६॥

एवं मुखचतुष्टयेनाऽपि सर्वा एव दिशः पश्यन् यदा लोकान् न दृष्टवांस्तदा भयं चिन्ता च जातेत्यभिप्रायेणाऽऽह—

**तस्माद्युगान्तश्वसनावघूर्णजलोर्मिचक्रात्सलिलाद्विरूढम्।**
**उपाश्रितः कञ्जमु लोकतत्त्वं नाऽऽत्मानमद्धाऽविददादिदेवः॥ १७॥**

**तस्मादिति**। युगान्ते यः श्वसनो वायुस्तेनाऽवघूर्णितं यज्जलम्, तत उत्पन्ना ये ऊर्मयः, तेषां चक्रं यस्मिन्; तादृशात्सलिलाद्विरूपेण रूढं कमलमपाश्रित इति भयकारणम्। सलिलमत्र नित्यम्, जलं कृत्रिमम्। वायुना न जलमेव दोलायितम्, अतस्तस्य चक्रं सलिले वर्तत इति न पौनरुक्त्यम्। **विरूढमिति** निरयसलिलादुत्पन्नत्वान्न मज्जनम्, नापि नालभङ्गः। **अपाश्रित** इत्यस्थिरासनः, अत एव कमलविचारे आत्मविचारे वा बुद्धिर्न प्रसृता। लोकानां तन्त्रं देहादिसर्वसामग्री यत्र, एतादृशं कमलमात्मा च; उभयमप्यद्धा साक्षादादिदेवोऽपि भूत्वा पूर्वज्ञानादिसम्पन्नोऽपि **नाऽविदत्** न ज्ञातवान्॥ १७॥

तदा पूर्ववासनया तत्र जिज्ञासोत्पन्नेत्याह—

**क एष योऽसावहमब्जपृष्ठ एतत्कुतो वाऽब्जमनन्यदप्सु।**
**अस्ति ह्यधस्तादिह किंचनैतदधिष्ठितं यत्र सता नु भाव्यम्॥ १८॥**

---

प्रकाशः

वीर्यद्वारा, अत्र त्वेषामिति प्रमकल्पाद्विशेष इत्यर्थः। एतेन नानाप्रकारैः सर्वात्मकत्वमिति राज्ञे बोधितम्। चितो भेदाभावादिति। आनन्देन महाविभागाभावात्। प्रमविष्णुमहेशानामस्मिन् कल्पे चैतन्यभेदाभावादिति पार्थः। वेदमयत्वादि अनेन व्यक्तप्रपञ्चेत्यादिनोक्तं निर्णीतं ज्ञेयम्।

---

१ उत्पादितः, पा

स इत्थमुद्वीक्ष्य तदब्जनालनाडीभिरन्तर्जलमाविवेश ।
नाऽर्वाग्गतस्तत्खरनालनालनाभिं विचिन्वंस्तदविन्दताऽजः ॥ १९ ॥

क एष इति । 'योऽहमेष कः?' जिज्ञासायामात्मविचारे प्रवृत्त इति पूर्वं विचारप्रारम्भे यो विचारकत्वेन प्रतिभातः, स एव विचारदशायां भिन्नतया प्रतीत इत्येष इत्युक्तम् । स्वस्य स्वरूपाज्ञानात् क इति प्रश्नः। यत्र चाऽब्जपृष्ठे अहमेतद्वा कुतो जातमिति। ननु जले कमलं भवत्येव, किमाश्चर्यमित्यत आह—अनन्यदिति । अप्स्विति महजलसंबन्धः, तादृशे च कमलं न भवति । किञ्च, अधस्तादेतन्निर्मूलं न भवति । अतो यत्रैतदधिष्ठितमधिष्ठाय स्थितं तेन सता भाव्यम्, असतोऽधिष्ठानाभावात् । अतोऽस्य कमलस्याधस्तात्किञ्चिदस्ति । किंचनेति किञ्चिदर्थे । एतत्कमलमधिष्ठितं यत्र । एवमनुमानेन नैयायिकवदेतावज्ज्ञानं जातम् । ततस्तेन ज्ञानेन तर्कसहकृतेन पदार्थं विनिश्चित्य, 'पुरुषोऽहम्, मम च जननाधारात्मकं कमलम्, न केवलमचेतनादुत्पत्तिमर्हतीति कश्चिन्मत्पिता वर्तते, अधस्तात्तमन्वेषयिष्यामि, इति निश्चित्य, सूक्ष्मं रूपं कृत्वा, तस्याब्जस्य नाडीरन्ध्रेषु प्रविष्टोऽन्तर्जलमाविवेश । तथाप्यधोभागं न प्राप्तवानित्याह—नाऽर्वाग्गत इति । तस्य खरनालस्य कमलस्य यन्नालम्, तेन तन्मूलभूतां नाभिं विचिन्वन्नपि, तत् तदा अजोऽपि ब्रह्माऽपि नैवाविन्दत । अथवा, तन्नालमेवाविन्दत, यतोऽयमजः बहिर्मुखः ॥ १८ ॥ १९ ॥

ततो यज्जातं तदाह—

तमस्यपारे विदुरात्मसर्गं विचिन्वतोऽभूत्सुमहांस्त्रिणेमिः ।
यो देहभाजां भयमीरयाणः परिक्षिणोत्यायुरजस्य हेतिः ॥ २० ॥

तमस्यपार इति । विदुरेति संबोधनं महतामप्यज्ञानमिति सूचयति । अपारे तमसीत्यालोकाभावात् दूरावदज्ञानम् । आत्मसर्गं स्वपितरं विचिन्वतो महान् कालो जात इत्याह—त्रिणेमिरिति । चक्रत्वाचस्य परावृत्तिः शीघ्रमेव भवति । शीतातपवर्षाकाला नेमयो यस्य सः । कियान् कालो जात इत्याकाङ्क्षायामाह—यो देहभाजामिति । शतसंवत्सरात्मकः स कालः, 'शतायुर्वै पुरुषः' इति श्रुतेः । शतवर्षानन्तरं देहभाजामवश्यं भयं भवति, तस्य कालस्य मरणजनकत्वात् । तत्र हेतुमाह—अजस्याप्यायुर्हेतिः कालचक्रं यतः परिक्षिणोति; तस्याऽन्येषां देहभाजां भयजनने कः सन्देह इत्यर्थः ॥ २० ॥

अतः स्वस्याऽपि वृथा मरणमाशङ्क्य ततो निवृत्त इत्याह—

ततो निवृत्त्याऽप्रतिलब्धकामः स्वधिष्ण्यमासाद्य पुनः स देवः ।
शनैर्जितश्वासनिवृत्तचित्तो न्यषीददारूढसमाधियोगः ॥ २१ ॥

तत इति । अप्रतिलब्धकाम एव ततो निवृत्त्य पुनः स्वधिष्ण्यमास्थाय ज्ञानसहितो भूत्वा देवो जातः । ततः शनैर्जितश्वासेन निवृत्तचित्तो भूत्वा न्यषीदत्, स्थिरतया उपविष्टः । तत आरूढः समाधिपर्यन्तं योगो येन । योगेन चित्तैकाग्र्यं विधाय तमेवायमचिन्तयदित्यर्थः ॥ २१ ॥

१ प्रवीणा क. २ भामवति. ख ३ नदा क. ४ निवृत्तो. पा.

र्यापर्येण मिलिताः। तत्र फणस्याऽधोभागे देवतात्वसिद्धये सर्वत्रैव मूर्द्धा वर्तते, फणास्तु शोभार्थाः। ते वा मूर्द्धानोऽयुताः। तत्र सर्वत्रैव मण्युत्तमाः सन्ति, तैरेव तत्रत्योऽन्धकारः सर्व एव गच्छति, अतः स्पष्टो भगवान् दृश्यते। *ब्रह्मणो हि बुद्धिर्बहिः प्रकटा, न त्वन्तः। अतो भगवानपि बहिरेव प्रकटो बुद्धिनिरूपकत्वादध्यासस्य। भगवतोऽलौकिकप्रभावाज्ज्ञानाद्भगवत्तेजसा नान्धकारनिवृत्तिः, किन्तु प्रमाणतो ज्ञानात् शेषशिरोमणिभिरेव ॥ २३ ॥

तस्य बुद्धौ लोकवत् प्रतिभातमिति लौकिकोपमा भगवति वर्ण्यते—

**प्रेक्षां क्षिपन्तं हरितोपलाद्रेः संध्याभ्रनीवेरुरुरुक्ममूर्ध्नः ।**
**रत्नोद्धारौषधिसौमनस्यवनस्रजो वेणुभुजाङ्घ्रिपाङ्घ्रेः ॥ २४ ॥**

+ प्रेक्षामिति। 'कीदृशं ददर्श' इति सर्वत्राऽऽकाङ्क्षा। हरितोपलाद्रेः प्रेक्षां क्षिपन्तम्। हरिन्मणिपर्वतः कश्चित् क्षीरसमुद्रे वर्तते, तथा शेषपर्यङ्के भगवान्। अत एव शेषस्य मृणालतुल्यता; शैत्यचिक्कणकान्तीनां शुक्लरूपाश्रितानां तत्रैव सत्त्वात्। प्रेक्षा दृष्टिः। तुल्यो हि तुल्यविषयिकां दृष्टिं दूरीकरोति, न तु भगवत्त्वेन। तत्र वक्तव्यं सर्वप्रेक्षामेव क्षिपतीति। हरितोपलानामद्रिः। ननु युक्तमेव तत्प्रेक्षाक्षेपणम्; अनलङ्कृतः सः, भगवान् अलङ्कृत इति। तत्राऽऽह—संध्याभ्रनीवेरिति। सन्ध्याकालीनान्यभ्राणि मेघाः पीतरक्तास्ते नीवी कटिवस्त्रं पीताम्बरं यस्य। उरूणि रुक्माणि सुवर्णानि मुकुटरूपाणि मूर्द्धनु यस्य। किञ्च, रत्नानि पद्मरागादीनि, उदधारा जलप्रवाहाः, ओषध्यो वनस्थाः रात्रौ तेजस्व्यः, सौमनस्यं सुमनसां समूहः, वनानि च; तेषां माला यस्य। पञ्चवर्णा हि भगवन्माला, यथेन्द्रधनुषो मध्ये वर्णा भवन्ति। रत्नानामेका माला आरक्ता रत्नमालेव; उदधाराणां माला मुक्ताहार इव; ओषधीनां माला अलौकिकदिव्यरत्नकान्तिमालेव, दीपसदृशमणिमालेव वा; पुष्पमाला पुष्पमालेव; वनमाला तुलसीमालेव। किञ्च, वेणव एव भुजाः, अङ्घ्रिपा एव अङ्घ्रयो यस्य; वेणुभुजश्चासावङ्घ्रिपाङ्घ्रिश्च ॥ २४ ॥

स्वरूपमाह—

**आयामतो विस्तरतः स्वमानदेहेन लोकत्रयसंग्रहेण ।**
**विचित्रदिव्याभरणांशुकानां कृतश्रियाऽपाश्रितवेषदेहम् ॥ २५ ॥**

---

प्रकाशः।

* विवृतौ। ननु पूर्वं हृदये च भातमित्युक्तम्, इदानीं समुद्रे किमित्युच्यत इत्याकाङ्क्षायामाहुः—ब्रह्मण इत्यादि।

+ प्रेक्षामित्यत्र। सर्वत्रेति। नवस्वपि श्लोकेषु। ननु भगवत्त्वेन न क्षिपतीत्यत्र किं गमकमित्याकाङ्क्षायामाहुः—तत्रेत्यादि। भगवत्त्वेन प्रेक्षाक्षेपे विवक्षितेन 'न तत्समः' इति श्रुतेस्तथा वक्तव्यं स्यात, तथ नोक्तमतस्तदेव गमकमित्यर्थः। तत्राऽऽहेति। तादृशाकाङ्क्षायां पर्वतस्याप्यलङ्कृतत्वमाह।

---

१ अध्यायस्य. क. ख,ग. घ, ङ. २ प्रतिवर्ण्यते. ग. घ.

एतादृशो योगोऽपि बहुकालं कृत इत्याह—

कालेन सोऽजः पुरुषायुषाऽभिप्रवृद्धयोगेन विरूढबोधः।
स्वयं तदन्तर्हृदयेऽवभातमपश्यताऽपश्यत यन्न पूर्वम् ॥ २२ ॥

* कालेनेति। पुरुषायुषाऽभिप्रवृद्धो योगो यस्मिन्, तेन कालेन विरूढबोधो जातः। विशेषेण रूढः स्थिरो बोधो यस्य। तदा स्वयमेव भगवन्तमपश्यदित्याह—स्वयमिति। पूर्वं प्रयत्नेनाऽपि न दृष्टः, इदानीं चित्ते शुद्धे भगवान् स्वयमेव मायाजवनिकां दूरीकृत्य ब्रह्मणो हृदये भातः। पूर्वं मानसपरिकल्पितमूर्तिवैलक्षण्यमाह—यन्न पूर्वम्। कदाचिदपि नाऽपश्यत्। यद्यपि हृदये ब्रह्मकल्पे भगवान् दृष्टो वैकुण्ठाधितः; प्रतिकल्पं च पश्यति, अन्यथा सृष्टिसामर्थ्यं न भवेत्; तथापि नैवंविधः कदापि दृष्टः। न हि स्वमनसि भाते भगवति तन्नाभिकमले स्वयं स्थातुमर्हति, न वा नालेऽधस्ताद्विधमानेऽच्छिन्ननालोंऽन्तः प्रविशति, न वा कदाचित्स्वस्यान्तर्हृदये प्रसन्नो भूत्वा समागतः शेषे शेते। अतो 'यन्न पूर्वं कदाचिदपि दृष्टम्' इति यदुक्तं तद्युक्तमेव ॥ २२ ॥

× अपूर्वं रूपं तदनुवर्णयति सृष्ट्युपयोगित्वात्त्रिभिः। अवस्थामुपमानं च स्वरूपं च त्रिभिः क्रमात्। शास्त्रप्रत्यक्षभेदेन फलसाधनमेव च ॥१॥ सर्वतत्त्वाश्रयेणाऽपि सर्वसौन्दर्यमेव च। एवं षड्गुणमाहात्म्यमेकरूपेण वर्णितम् ॥ २ ॥ पुनर्गुणानां प्राधान्यादुपमारूपतत्त्वभिः। तस्य ब्रह्मत्वसंसिद्ध्यै तज्ज्ञाने सर्वबोधनम्। ततो युक्तं यदेवात्र तदन्त्येन निरूप्यते॥३॥ तत्र भगवन्तं प्रथममवस्थावत्त्वेन दृष्टमनुवर्णयति—

मृणालगौरायतशेषभोगपर्यङ्क एकं पुरुषं शयानम्।
फणातपत्रायुतमूर्धरत्नद्युभिर्हतध्वान्तयुगान्ततोये ॥ २३ ॥

मृणालेति। मृणालवद्गौर आयतो यः शेषभोगः शेषस्य शरीरम्, तदेव पर्यङ्कः,तस्मिन्नेक एव पुरुषः शेते। महदेतदाश्चर्यं यत्सर्पशय्यायां शेत इति। किञ्च, फणातपत्राणां यदयुतममेलनम्, तत्सहितो यो मूर्द्धा, तत्र यानि रत्नानि, तेषां द्युभिर्हतं ध्वान्तं यत्र। एतादृशे युगान्ततोये प्रलयसमुद्रे शेषपर्यङ्के। तस्यैव शेषस्य ये फणास्त एव विकसिताः सन्त आतपत्रप्राया भवन्ति। ते च पुनः कमलपत्रवत् न पौ-

---

प्रकाशः।

* कालेनेत्यत्र। तद्युक्तमेवेति। अनेन दर्शनविषयस्याऽपूर्वताविवरणेनैश्वर्यसन्देहस्य तस्यामवस्थायां वारणाज्जीववैलक्षण्यं तदापि बोधितम्।

× मृणालेत्यत्र। कारिकाभिरेकादशानां तात्पर्यमाहुः—अवस्थेत्यादि। चतुर्थपञ्चमयोराहुः—शास्त्रेत्यादि। शास्त्रेण भजतां फलसाधने एकेन, प्रत्यक्षेण भजतां ते अपरेणेत्यर्थः। सप्तमादित्रयस्याहुः—पुनरित्यादि। गुणानामिति। उत्थितावस्थाधर्माणाम्। तत्त्वभिरिति। ऐसादेशाभावश्छान्दसः। दशमस्याहुः—तस्येत्यादि। तस्य दृष्टस्य स्वरूपस्य ब्रह्मज्ञापनार्थं सर्वबोधनम्, 'यस्मिन् विदिते सर्वमिदं विदितं भवति' इति श्रुतेः। सर्वबोधजनकं तज्ज्ञानं निरूप्यत इत्यर्थः। एकादशस्याहुः—तत इत्यादि। अन्त्येनेति। एकादशेन श्लोकेन।

विपर्येण मिलिताः। तत्र फणस्याऽधोभागे देवतात्वसिद्धये सर्वत्रैव मूर्द्धा वर्तते, फणास्तु शोभार्थाः। ते वा मूर्द्धानोऽयुताः। तत्र सर्वत्रैव मण्युत्तमाः सन्ति, तैरेव तत्रत्योऽन्धकारः सर्व एव गच्छति, अतः स्पष्टो भगवान् दृश्यते। * ब्रह्मणो हि बुद्धिर्बहिः प्रकटा, न त्वन्तः। अतो भगवानपि बहिरेव प्रकटो बुद्धिनिरूपकत्वादध्यासस्य। भगवतोऽलौकिकप्रभावाज्ञानाद्भगवत्तेजसा नान्धकारनिवृत्तिः, किन्तु प्रमाणतो ज्ञानात् शेषशिरोमणिभिरेव ॥ २३ ॥

तस्य बुद्धौ लोकवत् प्रतिभातमिति लौकिकोपमा भगवति वर्ण्यते—

**प्रेक्षां क्षिपन्तं हरितोपलाद्रेः संध्याभ्रनीवेरुरुरुक्ममूर्ध्नः ।**
**रत्नोदधारौषधिसौमनस्यवनस्रजो वेणुभुजाङ्घ्रिपाङ्घ्रेः ॥ २४ ॥**

+ प्रेक्षामिति। 'कीदृशं ददर्श' इति सर्वत्राऽऽकाङ्क्षा। हरितोपलाद्रेः प्रेक्षां क्षिपन्तम्। हरिन्मणिपर्वतः कश्चित् क्षीरसमुद्रे वर्तते, तथा शेषपर्यङ्के भगवान्। अत एव शेषस्य मृणालतुल्यता; शैत्यचिक्कणकान्तीनां शुक्लरूपाश्रितानां तत्रैव सत्त्वात्। प्रेक्षा दृष्टिः। तुल्यो हि तुल्यविषयिकां दृष्टिं दूरीकरोति, न तु भगवत्त्वेन। तत्र वक्तव्यं सर्वप्रेक्षामेव क्षिपतीति। हरितोपलानामद्रिः। ननु युक्तमेव तत्प्रेक्षाक्षेपणम्; अनलङ्कृतः सः, भगवान् अलङ्कृत इति। तत्राऽऽह—संध्याभ्रनीवेरिति। सन्ध्याकालीनान्यभ्राणि मेघाः पीतरक्तास्ते नीवी कटिवस्त्रं पीताम्बरं यस्य। उरूणि रुक्माणि सुवर्णानि मुकुटरूपाणि मूर्द्धसु यस्य। किञ्च, रत्नानि पद्मरागादीनि, उदधारा जलप्रवाहाः, ओषध्यो वनस्थाः रात्रौ तेजस्व्यः, सौमनस्यं सुमनसां समूहः, वनानि च; तेषां माला यस्य। पञ्चवर्णा हि भगवन्माला, यथेन्द्रधनुषो मध्ये वर्णा भवन्ति। रत्नानामेका माला आरक्त रत्नमालेव; उदधाराणां माला मुक्ताहार इव; ओषधीनां माला अलौकिकदिव्यरत्नकान्तिमालेव, दीप्तसहस्रमणिमालेव वा; पुष्पमाला पुष्पमालेव; वनमाला तुलसीमालेव। किञ्च, वेणव एव भुजाः, अङ्घ्रिपा एव अङ्घ्रयो यस्य; वेणुभुजश्चासावङ्घ्रिपाङ्घ्रिश्च ॥ २४ ॥

स्वरूपमाह—

**आयामतो विस्तरतः स्वमानदेहेन लोकत्रयसंग्रहेण ।**
**विचित्रदिव्याभरणांशुकानां कृतश्रियाऽपाश्रितवेषदेहम् ॥ २५ ॥**

---

प्रकाशः

* विवृतौ। ननु पूर्वं हृदये च भातमित्युक्तम्, इदानीं समुद्रे किमित्युच्यत इत्याकाङ्क्षायामाहुः—ब्रह्मण इत्यादि।

+ प्रेक्षामित्यत्र। सर्वत्रेति। नवस्वपि श्लोकेषु। ननु भगवत्त्वेन न क्षिपतीत्यत्र किं गमकमित्याकाङ्क्षायामाहुः—तत्रेत्यादि। भगवत्त्वेन प्रेक्षाक्षेपे विवक्षितेन 'न तत्समः' इति श्रुतेस्तथा वक्तव्यं स्यात्, तच्च नोक्तमतस्तदेव गमकमित्यर्थः। तत्राऽऽहेति। तादृशाकाङ्क्षायां पर्वतस्याऽप्यलङ्कृतत्वमाह।

१ अध्यायस्य. क. ख, ग. घ, ङ.　२ प्रतिवर्ण्यते. ग. घ.

*आयामत इति। आयामो दैर्घ्यम्। विस्तारो विशालता। लोकत्रयाणां संग्रहो यत्र, एतादृशं स्वस्य शरीरस्य मानम्। यावता विस्तारेण दैर्घ्येण च परिकल्प्यमाने लोकत्रयं तत्र तिष्ठति, तादृशेन देहेन उपलक्षितं भगवन्तमित्यर्थः। किञ्च, विचित्राणि दिव्यानि आभरणान्यंशुकानि च यस्य। तेषां संबन्धिन्या तैरेव कृतया श्रिया अपाश्रितः—सर्वत्र तेजःपुञ्जवत्परिवर्तमानो—वेष आकृतिविशेषो यस्य। तादृशो देहो यस्येति। भगवतो रूपं सच्चिदानन्दरूपमिति ज्ञापकं त्रैलोक्याश्रयत्वम्। आभरणादिभिः क्रियमाणा शोभा भगवद्वेषमेवाश्रयते, न त्वाभरणैर्भगवद्वेषे शोभा भवति। आभरणानामाभरणत्वं च भगवद्धर्मः॥२५॥

परोक्षतया मार्गानुसारेण भजता फलदानं स्वोपयोगाभावात् ब्रह्मधर्म एवेति तमाह—

**पुंसां स्वकामाय विविक्तमार्गैरभ्यर्चतां कामदुघाङ्घ्रिपद्मम्।**
**प्रदर्शयन्तं कृपया नखेन्दुमयूखभिन्नाङ्गुलिचारुपत्रम् ॥ २६ ॥**

पुंसामिति। स्वकामाय स्वाभिलाषसिद्ध्यर्थम्। विविक्तमार्गैरन्योन्यश्लेषरहितैः, लोकार्तैर्वा, एकान्तप्रकारैर्वा, ये अभ्यर्चन्ति, तेषां कामदुघं यदङ्घ्रिपद्मम्, तत् तेषामर्थे प्रदर्शयन्तम्। पुनः कथम्भूतमङ्घ्रिपद्ममित्याकाङ्क्षायामाह—नखेन्दुमयूखभिन्नाङ्गुलिचारुपत्रमिति। नखान्येवेन्दवस्तेषां मयूखैर्भिन्नाः सर्वदेहविलक्षणा या अङ्गुल्यस्ता एव चारूणि पत्राणि यस्य। स्वभावतः पादपद्मं विकासितम्। नखानामिन्दुत्वेन पत्राणि प्रत्येकं सङ्कुचितानि परित इन्दुरक्षार्थम्, न स्वभावतः। कमलपत्राणि चन्द्रकिरणैः सङ्कुचितानि भवन्ति, तिर्यक् संकुचितानि च। तेनालौकिकत्वाद्धृदयान्धकारमलौकिकमपि नाशयति। चरणस्य पद्मतायां हेतुरप्युक्तो भवति। सर्वदेहवैलक्षण्याद्भक्तिमार्गः सर्वेभ्य उत्तम इत्युक्तं भवति। भक्तिरेव स्वतन्त्रफलेति स्वयं फलमदत्त्वा तेषां कामनापूर्तये दुःखाभावाय च तदुपास्यं चरणमेव प्रदर्शयति ॥ २६ ॥

एवं मार्गेण भजतां फलमुक्त्वा प्रत्यक्षेण भजतां फलमाह—

**मुखेन लोकार्तिहरस्मितेन परिस्फुरत्कुण्डलमण्डितेन।**
**शोणायितेनाऽधरबिम्बभासा प्रत्यर्हयन्तं सुनसेन सुभ्र्वा ॥ २७ ॥**

मुखेनेति। मुखेन प्रत्यर्हयन्तम्, ये पूजां कुर्वन्ति तान् प्रतिपूजयन्तम्, 'ये यथा मां प्रपद्यन्ते इति वाक्यात्। ननु ते स्वकीयेन सर्वस्वेनापि भगवन्तं पूजयन्ति, भगवांस्तु कथं तान् पूजयतीत्याशङ्क्य, भगवति षट् गुणाः सन्ति तैर्युक्तेन मुखेन तान् पूजयति, तेषु मुखधर्मान् सर्वानेव योजयति। तत्र मुखे षड् धर्मान् षड्भिर्विशेषणैः संपादयति लोकार्तिहरस्मितेनेत्यादिभिः। भगवतो मुखस्य गुणद्वयं सर्वोपकारि, चतुष्टयं भक्तानामेव। लोकानामार्तिं हरतीति तादृशं स्मितं यत्र। स्मितं मन्दहासः, 'हासो जनोन्मादकरी च माया'। भगवान् सृष्टिलीलाकर्ता ब्रह्माण्डस्थितजीवान् स्वेच्छया सर्वथा विनियोक्ष्यति।

---

प्रकाशः।

* आयामत इत्यत्र। नन्वत्र प्रभुत्वबोधनाय विशेषणानां कथनाद्विचित्रदिव्येति विशेषणस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः—आभरणानामित्यादि।

---

१ स्वाभिलाषार्थम्.. ग. २ सुभ्रुवा पा.

तत्र ते प्रमाणबलमाश्रित्याऽन्यथाकर्तुं यतन्ते, तदा व्यामोहयति, वृथा क्लेशं प्राप्स्यन्तीति । अतस्तेषां क्लेशाभावायैव हासः, मन्दत्वं च सर्वथा व्यामुग्धा उत्पथप्रवृत्ताः पारलौकिकदुःखं प्राप्स्यन्तीति । लोकशब्देन सर्जीवाः । किञ्च, **परिस्फुरत्कुण्डलमण्डितेनेति** । परितः स्फुरन्ती ये कुण्डले, ताभ्यां मण्डितेन । साङ्ख्ययोगौ कुण्डले, तयोः परितः स्फुरणमैहिकामुष्मिककार्यसिद्धये । तेन वैदिकमार्गेणाऽपि यः क्लेशः, स योगेन निवार्यते; साङ्ख्येन स्वरूपानन्दमनुभाव्यते । एतद्वा विपरीतम्, उभयमुभयत्र वा । अतोऽनिष्टनिवारकेष्टप्रतिपादनपूर्वकं प्रतिपूजनं करोतीत्युक्तम् । इदं भक्तानां नाऽतीवपुरुषार्थरूपम् । **शोणायितेनेति** । शोण ईषद्रारः पीताम्बरतुल्यः । अनेन तेभ्यो भक्तिं प्रयच्छतीत्युक्तम् । किञ्च, **अधरबिम्बभासा** । अधरबिम्बस्य भाः कान्तिर्यत्र । अधरो लोभात्मकः, तत्र यद्बिम्बं बिम्बसदृशमित्यर्थवशात्+शब्दबलेन भगवत्स्वरूपम्, तल्लोभे स्थापितं भगवद्भक्तेभ्यः प्रयच्छतीति प्रतिपूजनसाधने तत्कान्तिस्तत्साक्षात्कारः समायाति । एवं भक्तिं दत्त्वा सर्वदुर्लभं तेभ्यः स्वरूपं प्रदर्शयतीत्युक्तम् । किञ्च, **सुनसेन सुभ्र्वेति** । शोभने नासिके यस्मिन्, शोभने भ्रुवौ यस्मिन् इति । अश्विनीकुमारौ नासिके, भ्रूः कालः; रोगकालयोर्निवृत्तिं करोतीत्यर्थः । एवं प्रत्यक्षभजने सर्वपुरुषार्थदाता निरूपितः ॥ २७ ॥

सर्वतत्त्वाश्रयेणाऽपि भगवतः सर्वसौन्दर्यं निरूपयति—

**कदम्बकिञ्जल्कपिशङ्गवाससा स्वलंकृतं मेखलया नितम्बे ।**
**हारेण चाऽनन्तधनेन वत्सश्रीवत्सवक्षस्स्थलवल्लभेन ॥ २८ ॥**

**कदम्बेति** । कदम्बस्य यथा किञ्जल्काः, तथा ते रेखाकारा मुक्तामुक्ताश्च पीताम्बरे प्रतीयन्ते । तेन सर्वतत्त्वैर्मुक्तैः सहितया भक्त्या भगवानाच्छन्न इति भगवति गोप्यं रूपमुक्तम् । तेनैव तत्र शोभा, न तु रूपेण । अत एव पीताम्बरेण सुष्ठ्वलङ्कृतम् । तच्च छन्दोमयम्, तेनाच्छादनं स्पष्टमेव । किञ्च, **मेखलया नितम्बे स्वलङ्कृतमिति** । मेखला भूमौ भगवत्कीर्तिर्भगवद्गुणानुवर्णनम्, गुणमयी च सा । तया भगवत्कार्यकरणात् कार्यार्थमपि भगवान्नाऽन्वेष्टव्यः । एवं कश्चिद्भगवद्रूपमप्रत्यक्षमपि सर्वसौन्दर्यमित्युक्त्वा प्रकटं ततोऽपीत्याह—**हारेणेति** । हारः सर्वरत्नानाम् । अत एवाऽनन्तधनेन । वत्सरूपश्चिह्नरूपो योऽयं श्रीवत्सो दक्षिणावर्तरोमरेखा, तद्युक्तं यद्वक्षः, तदेव स्थलं सर्वसौन्दर्याणामाश्रयभूतम्; सर्वेषां मूलानां वा; आश्रयभूतं वा । तत्र वल्लभेन तेन च स्वलङ्कृतम् । नवभिर्गुणैरेकदेशस्थितैर्हाराणां वा समूहेन, मुक्ताजीवबृन्देन भृग्वादिसमूहेन । अनन्त एव धनं यस्य । अधिकारानन्तरमेव तेषां स्वरूपप्राप्तिः । अनन्तः कालः । श्रीवत्सस्य चिह्नत्वं लक्षणतया ज्ञापकम्, तेन ब्रह्मता निरूपिता । श्रीवत्सस्य यद्यपि चिह्नत्वं स्वभाव एव ।

---

**प्रकाशः ।**

+ शब्दबलेनेत्यत्र । बिम्बपदस्य तात्पर्यमाहुः—शब्दबलेनेत्यादि । अत्र परोक्षवादः सर्वत्रेति लक्षणा न दोषाय । तथा च, यथा सूर्यादिस्वरूपमेव बिम्बपदेनोच्यते, तथाऽत्र भगवत्स्वरूपमिति न लक्षणाऽपीत्यर्थः ।

× कदम्बेत्यत्र । ततोऽपीति. सौन्दर्ययुक्तमिति शेषः । नवभिर्गुणैरिति । हारार्थैर्नवभिः सूत्रैः ।

---

१ तथेति. क. ख. घ. ङ. च. २ वेति नास्ति ग.

तथापि प्रियत्वाय तथोक्तिः । नाम्नि तु श्रियाः प्रियत्वं प्रतीयते । ततोऽपि हारस्य प्रियत्वं स्थापयितुम्—वल्लभेति । एवमुभयविधैरपि तत्त्वैर्भगवत्सौन्दर्यं निरूपितम् ॥ २८ ॥

पुनर्भगवन्तं सर्वपुरुषार्थोपयोगित्वेन सर्वाश्रयणीयत्वेन च निरूपयति । तत्र भगवन्तं कल्पवृक्षत्वेन वर्णयति—

**परार्ध्यकेयूरमणिप्रवेकपर्यस्तदोर्दण्डसहस्रशाखम् ।**
**अव्यक्तमूलं भुवनाङ्घ्रिपेन्द्रमहीन्द्रभोगैरधिवीतवल्शम् ॥ २९ ॥**

* परार्ध्येति । परार्ध्या अमूल्याः केयूरे ये मणिप्रवेकाः, तैः पर्यस्ता ये दोर्दण्डाः,तैः कृत्वा सहस्रं शाखा यस्य । पूर्वं तदेव रूपं शयानमुपलभ्य, पुनः परिदृश्यमाने तामवस्थां परित्यज्य, रूपान्तरेण प्रदर्शितवान् । ' वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ' इति श्रुतेस्तादृशं रूपं ब्रह्मत्वज्ञापनाय प्रदर्शितमिति तदनुवर्ण्यते । वृक्षत्वेऽप्यलौकिकोऽयं वृक्षः । केयूरं कङ्कणोपरि हस्ताभरणम्, तेनाऽलङ्कृता हस्ताः । तत्रत्यानां मणीनां प्राधान्येन कीर्तनम्, तत्तेजः सर्वमेव हस्तं व्याप्नोतीति । शतवल्शाः सर्वे वृक्षा इति तद्व्यावृत्त्यर्थं सहस्रशाखमित्युक्तम् । अनेन प्रमाणात्मकता च निरूपिता । उत्थितोऽयं भगवान्, न तु शयानः; वृक्षतुल्यत्वात् । पर्यस्ता इति नानाविधकार्यकर्तृत्वम् । अतोऽस्य सृष्टावुपयोगः । बाहूनां दण्डत्वं मर्यादारूपत्वान्नियामकत्वापनार्थम् । अत्राऽऽभरणानि कर्माणि, तेषां प्रवेको नित्योत्कृष्टत्वममूल्यता च; स्वत एव ध्यानप्राप्तत्वात्, अन्यथा दानप्राप्त्यपेक्षया क्रयप्राप्तमुत्तममेव । एवं तस्य बाहूनां शाखात्वेन वृक्षत्वं निरूप्य मूलतो वृक्षत्वं निरूपयति—अव्यक्तमूलमिति । इतोऽप्यग्रेऽन्वेषणं न कर्तव्यम्, यतस्तस्य मूलमव्यक्तम्, अनाविर्भूत एवाऽऽविर्भूत इति । प्रकृतिं केचिदाहुः । तदाप्यव्यक्तस्य मूलमिति व्याख्येयम्, अतः परं नेत्यर्थः । भुवनाङ्घ्रिपेन्द्रमिति । अङ्घ्रिपाणामिन्द्रो वृक्षश्रेष्ठः । भुवनान्येव अङ्घ्रिपेन्द्राः, अत एव प्रत्यब्दं कल्पा भिन्ना भवन्ति । इयमुत्तरकाण्डे मर्यादा । अव्यक्तमूलमिति प्रमाणम्, द्वितीयं प्रमेयम्, तृतीयं फलमिति—कल्पवृक्षत्वम्, जगत्कर्तृत्वम्, दुर्ज्ञेयत्वं च निरूपितम् । अहीन्द्रभोगैः शेषफणैरधिवीतो वल्शो यस्य । चन्दनवृक्षे सर्पास्तिष्ठन्ति, तथाऽत्रापि; शाखास्कन्धेष्वेव, न तु प्रकाण्डे ॥ २९ ॥

एवमुत्थितं भगवन्तं निरूप्य उपविष्टं निरूपयति—

**चराचरौको भगवन्महीध्रमहीन्द्रबन्धुं सलिलोपगूढम् ।**

---

प्रकाशः ।

तथोक्तिरिति । सत्यस्योक्तिः । उभयविधैरिति । वैदिकैर्भक्तिमार्गीयैश्चेत्यर्थः ।

* परार्ध्येत्यत्र । रूपान्तरेणेति । उत्थितेनोपविष्टेन वा रूपेण । अत एवेति । अस्मादेव पुरुषात् । तृतीयमिति । अहीन्द्रेत्यादिविशेषणोक्तम् । अत्र शाखादिप्रमाणभूतशेषसम्बन्धात् फलत्वं बोध्यम् । दुर्ज्ञेयत्वमिति । प्रतिकल्पं नानाविधब्रह्माण्डवृक्षकरणात् तेन रूपेणाऽपि दुर्ज्ञेयत्वमित्यर्थः ।

---

१ एवेत्यधिकम् क. ख. २ सर्वेषु लिखितपुस्तकेषु तु ' शतवल्शा. ' इत्येव पाठ उपलभ्यते । एवमग्रेऽपि ।

**किरीटसाहस्रहिरण्यशृङ्गमाविर्भवत्कौस्तुभरत्नगर्भम् ॥ ३० ॥**

चराचरौक इति । उपविष्टेषु पर्वतः स्थिरः, स च स्थावरजङ्गमानामाश्रयो भवति । भगवानेव मन्दराद्रिः । भूमिधारणसाम्याच्च अहीन्द्रस्य बन्धुः, अहीन्द्र एव वा बन्धुर्बन्धनरूपो यस्य मन्दरस्य । सलिलेन सामुद्रेण उपगूढो भवति मैनाकादिः । एवमुपविष्टे भगवति चतूरूपता निरूपिता । सर्वाश्रयो जीवनहेतुः; सर्वोद्धारकः संसारात्; अलौकिकभक्तिरसपाययिता; भीतानां शरणभूतश्च, सुसेव्यो वा । किञ्च, उपरिभागे शिखरोपरिस्थितसुवर्णैः किरीटयुक्त इव । किरीटानां साहस्ररूपाणि हिरण्यशृङ्गाणि यस्य । आविर्भवत् कौस्तुभरत्नं गर्भे यस्य । मध्योपरिभागौ वर्णितौ, महाराजत्वाय रत्ननिधित्वाय च ऐश्वर्यं लक्ष्मीश्च वर्णिता ॥ ३० ॥

एवं बहिःस्थाने शयानमुत्थितमुपविष्टमुक्त्वा, मार्गत्रयरूपाणि च निरूप्य,अन्तःस्थितं रूपं निरूपयन् मूलरूपं निरूपयति—

**निवीतमाम्नायमधुव्रतश्रिया स्वकीर्तिमय्या वनमालया हरिम् ।**
**सूर्येन्दुवाय्वग्न्यगमं त्रिधामभिः परिक्रमत्प्राधनिकैर्दुरासदम् ॥ ३१ ॥**

निवीतमिति । तथा तथा दर्शनात्तथा तथा निरूपणम् । आम्नायमधुव्रतश्रिया स्वकीर्तिमय्या वनमालया निवीतम् । मूलभूतं भगवतः पुरुषरूपं निवीतमिति मनुष्यधर्मत्वान्निवीतं कण्ठलम्बितम् । आम्नाय आवर्त्यमानो वेदः । त एव मधुव्रतास्तेषां श्रीर्यत्र । ते नीलास्तामसा इव; स्वकीर्तिः शुक्ला सात्त्विकी वा; " आपादलम्बिनी माला वनमाला प्रकीर्तिता । तुलसीपुष्परचिता नवरत्नैर्विराजिता " रूपेण राजसीव । मायैषा प्रवाहहेतुः । कीर्तिमर्यादेति भक्तिहेतुर्मर्यादाहेतुश्चाऽऽद्या, मर्यादापुष्टयोर्धर्मत्वं प्रवाहाश्रयत्वात् । मूलमेतादृशमिति ज्ञाते तदन्तरङ्गैर्भजनं सेत्स्यतीति । नैते तस्य सहजा धर्माः, किन्तु प्रमाणबलकल्पिता एव, सहजं तु सर्वेषां दुःखहर्तृत्वम् । तदाह—हरिमिति । सद्भावे स्थितस्य तत्रागमनार्थं हेतुरूपमाह—सूर्येन्दुवाय्वग्न्यगममिति । एते सूर्यादयः कर्णिकायामावरणभूताः, एतैर्विद्यमाने भगवत्प्राप्तिर्न भवतीति दिनरात्रिव्यवस्थया कालातिक्रमार्थम् । अवस्थात्रयेण योगेन कर्मणा वा भगवान्

प्रकाशः

चराचरेत्यत्र । जीवनहेतुरिति । अन्नादिदानेन जीवयिता । सर्वोद्धारक इति । वाराहावतारवदपि सर्वोद्धारयिता, सर्वेषां वा तथा । भीतानां शरणभूतः समुद्रो भवति, न तु तदुपगूढ इत्यतः पक्षान्तरमाहुः—सुसेव्यो वेति । किरीटसाहस्रेत्यनेन । 'सहस्रशीर्षा पुरुषः'इतिश्रुत्युक्तं रूपं बोधितम् । ऐश्वर्येत्यादिकथनेन पूर्वविशेषणेषु यथायथं यशोवीर्यवैराग्यज्ञानानि सर्वाश्रय इत्यादिना व्याख्यातानि ज्ञेयानि ।

निवीतमित्यत्र । निरूप्येति । 'पुंसां किलैकान्त....' इति श्लोकद्वये निरूप्य । अत्र नानामकारेण यन्निरूपणं तत्तात्पर्यमाहुः—तथा तथेत्यादि । तथा च, पूर्वं जगदुपादानत्वादिना, इदानीं च मूलरूपत्वेन दर्शनात्तथा निरूपणमित्यर्थः । पुरुषरूपमिति । मनुष्याकारम् । तत्र गमकमाहुः—निवीतमित्यादि । एषेति । मालारूपता । मूलमेतादृशमित्यादि । वनमालास्वरूपं त्रिविधप्रवाहजनकमिति ज्ञाते, तदन्तः प्रवाहान्तः, अङ्गैर्मर्यादापुष्टिधर्मैर्भजनं सेत्स्यतीति हेतोस्तादृश्यत्रोक्तेत्यर्थः । एते इति । निवीतत्वाद्याः । सद्भावे स्थितस्य तत्रागमनार्थमिति । सद्भावे स्थितस्य जीवस्य भगवत्प्रवेशार्थम् । कालातिक्रमार्थमिति । का-

प्राप्यत इति। तथा तत्त्वैरपि साङ्ख्येन। तदाह—परिक्रमत्प्राधनिकैर्दुरासदमिति। परितः क्रमन्तीति तेषामप्यावरणत्वं निरूपितम्। प्रधने उपयुक्तानि प्राधनिकानि चक्रादीनि, तैर्दुरासदम्। कालातिक्रमो ज्ञानेन, अवस्थातिक्रमश्च; योगेन वाय्वतिक्रमः; कर्मणा चाऽग्न्यतिक्रमः; पृथिवीजलातिक्रमस्तूक्त एव ज्ञानभक्तिभ्याम्; तत्त्वातिक्रमस्तु साङ्ख्येन; एवं पञ्चपर्वया विधया सर्वातिक्रमः। एतैरेवाऽप्राप्तिरित्येके। तदा पञ्चाऽप्येतानि त्यक्तव्यानि, स्वरूपे गत्वा भगवान् पश्चात्प्राप्तव्यः ॥ ३१ ॥

एवं भगवति ज्ञातेऽन्यत्सर्वं स्वत एव ज्ञातमित्याह—

**तर्ह्येव तन्नाभिसरःसरोजमात्मानमम्भः श्वसनं वियच्च।**
**ददर्श देवो जगतो विधाता नाऽतः परं लोकविसर्गदृष्टिः ॥ ३२ ॥**

× तर्ह्येवेति। तस्मिन्नेव क्षणे,तस्य नाभौ सरोवररूपे, उद्गतं सरोजं पद्मम्, तत्र स्थितमात्मानम्, बहिः स्थितमम्भः श्वसनं च, वियदाकाशश्च। पृथिवी पद्ममेव, तेजो भगवानेव स्वस्मिन्विद्यमानः। तदा पञ्च भूतानि दृष्टानि तान्यपि स्वदेह एव। एवं देहे सर्वं दृष्ट्वा जगतो विधाता जातः, अतः परं ब्रह्मभूतो न जात इत्यर्थः। उभयोरप्येतद्रूपं हेतुभूतम्, यतोऽयं लोकविसर्गे दृष्टिर्यस्य तादृशः ॥ ३२ ॥

ततः किं कृतवानित्याह—

**स कर्मबीजं रजसोपरक्तः प्रजाः सिसृक्षन्नियदेव दृष्ट्वा।**
**अस्तौद्विसर्गाभिमुखस्तमीड्यमव्यक्तवर्त्मन्यभिवेशितात्मा ॥ ३३ ॥**

स कर्मबीजमिति। कर्मबीजमियदेव दृष्ट्वा अस्तौदिति संबन्धः। कर्मणि कार्ये जगत्करणे एतदेव बीजम्; भगवान्, पञ्चमहाभूतानि च, षण्णां वापि जगद्भवति। ननु चेतननिर्माणेच्छया प्रवृत्त इति न बीजमात्रेण कार्यम्, किन्तु रजोऽप्यपेक्ष्यत इत्याशङ्क्याऽऽह—रजसोपरक्त इति। रजोगुणेन उप समीपे रक्तः। स्वयमपि रजोगुणभूतो जात इत्यर्थः। इयदेव दृष्ट्वेति। भिन्याज्ञानं तस्य न जातम्, न हि रजोबीजाभ्यामेव किञ्चिद्भवति। वपनं कर्षणं पूर्वाङ्गम्। अव्यक्ततया विकृतं वर्द्धनं जविदानं च यावन्न ज्ञायते,तावत्कार्यं न सेत्स्यतीति चत्वारोऽर्थाः प्रार्थनीयाः, तद्दाने च स्तोत्रं हेतुभूतमित्यस्तौत्। मोक्षार्थतां व्यावर्तयति। विसर्गाभिमुख इति। भगवता स विसर्गसंमुखः कृतः, विसर्गमेव करिष्यामीत्यध्यवसाययुक्तः। अत एव तम्, येनैवाऽयमेवं कृत इति। तर्हि स्तोत्रे किमर्थमित्याशङ्क्याऽऽह—ईड्यमिति। स सर्वैः स्तुत्यः, स्तोत्रानन्तरं प्रसन्नो जात एव प्रार्थनीयः। नन्वन्यत्स्वयं जानातु, वेदाश्च साधनोपदेष्टारः सन्ति,

प्रकाशः।

त्याक्षेपार्थम्, आवरणभूता इति सम्बन्धः। अत्र सूर्ये दिनरात्रिपक्षान्तरमाहुः(?)। चतुर्णां कथनस्य प्रयोजनमाहुः—अवस्थेत्यादि। प्राधानिकपक्षे आकारलोपस्य छान्दसताया आश्रयणीयत्वात् पक्षान्तरमाहुः—प्रधन इत्यादि। उक्त एव ज्ञानभक्तिभ्यामिति। ज्ञानभक्त्योः कथनमुखेनैवोक्त इत्यर्थः। एक इति। इदं टीकाकारान्तरमतम्, न श्रीधरस्य।

× तर्हीत्यत्र। उभयोरिति। सर्वदर्शनप्रभावाभावयोः।

१ महाभूतानि क. २ कर्मबीजमियमेव इति पुस्तकेषु पाठः

कि भगवतेत्याशङ्क्याऽऽह—अव्यक्तवर्त्मन्यभिवेशितात्मेति । अव्यक्तमार्ग एव अभिनिवेशितान्तःकरणः । न हि कुम्भकारवत् स्पष्टतया जगत्कर्तुमिच्छति, किन्तु योनौ बीजं स्थापयित्वा तत्र सर्वं कर्तु वाञ्छति । नह्येतद्भगवत्कृपाव्यतिरेकेण सम्भवति । चित्तं च तत्रैव प्रविष्टम्, न प्रकारान्तरेण कर्तु वाञ्छतीत्यर्थः ॥ ३२ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे अष्टमाध्यायविवरणम् ।

---

## नवमाध्यायविवरणम् ।

जीवसर्गे भूतसृष्टौ ब्रह्मज्ञानं तदुच्यते ।
पञ्चविंशतितत्त्वानां स्वरूपस्य च बोधतः ॥ १ ॥
अतोऽत्र नवमेऽध्याये स्तुतिसंप्रार्थने पुरा ।
ततः सर्वोपदेशश्च भगवत्कृत ईर्यते ॥ २ ॥
ज्ञानमार्गस्य निर्द्धारः स्तोत्रेऽस्मिन् क्रियते स्फुटः ।
विषयः, साधनं, रूपं बाधाभावस्तथैव च ॥
प्रकीर्णकं च स्तोत्रेऽस्मिन् ज्ञानार्थं विनिरूप्यते ॥ ३ ॥

---

प्रकाशः।

मैत्रेयोक्तावस्मिन्नध्याये 'पुरुषस्य च संस्थानम्' इत्यस्योत्तरं दत्तं ज्ञेयम् । अग्रिमाध्याये तु 'स्वरूपं वा परस्य च' इत्यादिपादोनश्लोकेन यत् पृष्टम्, तस्योत्तरं ज्ञेयम् ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे अष्टमाध्यायविवरणं समाप्तम्।

---

गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृतः प्रकाशः ।

अथ नवमाध्यायं विवरिषवः पूर्वप्रकरणसमाप्तिम्, द्वितीयस्याऽऽरम्भम्, तयोः पूर्वापरभावबीजम्, सङ्गतिं च स्फुटीकुर्वन्तोऽध्यायार्थमाहुः-जीवसर्ग इत्यादि। जीवसर्गे। जीवार्थे सर्गे इदानीं भूतसृष्टौ वक्तव्यायां पञ्चविंशतितत्त्वानां भगवत्स्वरूपस्य च बोधकं यद् ब्रह्मज्ञानम्, तत् भूतजन्यत्वेनोच्यते। तथा च, समष्टिज्ञानाभावे व्यष्टिज्ञानं दुर्घटम्, अतः पूर्वमुपजीव्यत्वात् पुरुषप्रकरणम्, तत उपजीवकत्वाज्जीवप्रकरणमुपजीव्योपजीवकभावश्च सङ्गतिरित्यर्थः । अत्र गमकमाहुः—अत इत्यादि । एवं शास्त्रसङ्गतिमुक्त्वा विदुरमैत्रेयवक्तृत्वादसङ्गतिमाहुः—ज्ञानमार्गेतिसार्द्धेन । विषयः, ज्ञानस्य सप्तभिः; साधनं तस्य षड्भिः; रूपं भगवदीयमष्टाभिः; बाधाभावश्चतुर्भिः; प्रकीर्णकं तदुपयोगि, तदपि तेष्वेव चतुर्षु; एवं शेषशेषिभावः सङ्गतिरित्यर्थः ।

भवनशब्देन पद्मस्य विशालता निरूपिता । अहमिति सगुणकर्ता । आविरासमिति ममाप्यलौकिकं जन्म। अतः सर्वप्रकारेणेदं ब्रह्मैव ॥ २ ॥

ब्रह्मान्तरपक्षं निराकरोति—

**नाऽतः परं परम ! यद्भवतः स्वरूपमानन्दमात्रमविकल्पमविद्धवर्चः ।**
**पश्यामि विश्वसृजमेकमविश्वमात्मन् भूतेन्द्रियात्मकमदस्त उपाश्रितोऽस्मि ३**

नाऽतःपरमिति । अतः परमस्माद्रूपात् परं भिन्नमेतद्रूपनियामकं वा भवतः स्वरूपं न । 'आनन्दशरीरं ब्रह्म' इति श्रुतेर्ब्रह्मण आनन्दरूपम्, तदेवैतत्; नत्वितोऽन्यदानन्दमात्रादिगुणकं रूपमस्ति । आनन्दस्तत्रोपादानमन्यच्च सहकारि भविष्यतीत्याशङ्क्य निवारयति । तर्हि तदेव विकृतं भविष्यति ? तत्राऽऽह—अविकल्पम् । तर्हि तिरोहिततेजो भविष्यति तत्राऽऽह—अविद्धवर्च इति । न विद्धं वर्चः केनापि यस्य । अतिरिक्ताभावे प्रमाणमाह—पश्यामीति । ब्रह्मणोऽनुभवः प्रमाणम् । अस्य ब्रह्मत्वे तु सर्वे एव ब्रह्मधर्माः सन्ति । तानाह—विश्वसृजमेकमविश्वमिति । विश्वकर्तृ ब्रह्म, 'यतो वा इमानि' इति श्रुतेः । एकं ब्रह्म, 'एकमेवाद्वितीयम्' इति श्रुतेः । अविश्वं ब्रह्म, विश्वस्माद्व्यतिरिक्तम्, 'योऽस्मात्परस्माच्च परः' इति श्रुतेः । एवं ब्रह्मधर्माणां बहूनां विद्यमानत्वाद् ब्रह्मैवेदम् । आत्मन्निति संबोधनम् । ब्रह्मादिभिरात्मत्वेनोपास्य इति केचित् । 'अयमात्मा ब्रह्म विज्ञानमयः' इति श्रुतेरनात्मत्वे ब्रह्मत्वं न स्यादिति । नन्वत्र चक्षुःश्रोत्रादीनां प्रतीयमानत्वादिन्द्रियवत्त्वेन कथं ब्रह्मत्वमत आह—भूतेन्द्रियात्मकमिति । भूतानामिन्द्रियाणामात्माऽयम्, 'चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रम्' इत्यादिश्रुतेः । भूतेन्द्रियाणामात्मत्वाद्भूतेन्द्रियत्वेन ज्ञायते, न तु तत्र भूतेन्द्रियाणि सन्तीत्यर्थः । नन्वप्रत्यक्षं ब्रह्म ? तत्राऽऽह—अद इति । इदं प्रतीयमानमपि त्वदिच्छया प्रतीतत्वात् अद एव, परोक्षमेवेत्यर्थः । ते अद उपाश्रितोऽस्मीति संबन्धः । पश्यामीति भिन्नं वाक्यम्, अतो भवतस्त इति न पौनरुक्त्यम् ॥ ३ ॥

तर्कमाह—

**तद्वा इदं भुवनमङ्गल ! मङ्गलाय ध्याने स्म नो दर्शितं त उपासकानाम् ।**

---

प्रकाशः।

स्मिन् श्लोके ब्रह्मत्वसाधकाः षड् हेतवो बोध्याः । प्रयोगस्तु—'एतत् ब्रह्मणा दृष्टं रूपं ब्रह्मैव, अभिव्यक्तसच्चिदानन्दरूपत्वात्, नित्यनिवृत्ताज्ञानकत्वात्, सदनुग्रहजनकत्वात्, आदावाविर्भूतत्वात्, अविकृतकार्यकरणत्वात्, जगज्जनकत्वात्, यन्नैवं तन्नैवम्'इति । एवमत्राऽनुमानरूपं प्रमाणं बोधितम् ।

नाऽत इत्यत्र । ननु नञैवेतरनिषेधसम्भवात् मात्रपदस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः—आनन्दस्तत्रेत्यादि । निवारयन्तीति । मात्रपदेन निवारयति । विद्धमिति । आवृतम् । आत्मपदव्याख्याने मतान्तरमुक्त्वा श्रुत्या आत्मशब्दार्थं वदन्तस्तद्दूषयन्ति—अयमित्यादि । तथा च, मतान्तरीयव्याख्याने पूर्वश्लोकसाधितं तस्य रूपस्य ब्रह्मत्वं विरुद्ध्येतेत्यर्थः । अस्मिन् पक्षे यद्यपि प्रत्यक्षमेव प्रमाणत्वेनोक्तम्, शब्दविरोधिनाऽत्राऽनुमानमपि सिध्यति । तेन आनन्दमात्रत्वात्, अविकृतत्वात्, अनावृततेजस्त्वात्, भूतेन्द्रियरहितत्वात्, 'अविज्ञातं विजानाति'-श्रुत्युक्तधर्मकत्वादिति पञ्चहेतवो व्यतिरेकव्याप्तिश्च बोध्या ।

१ अविद्धम् इ. ख. ग. घ ङ. २ अनावृत तेजा वान्. पा.

तस्मै नमो भगवतेऽनुविधेम तुभ्यं योऽनादृतो नरकभाग्भिरसत्प्रसङ्गैः॥४॥

+ तद्वा इदमिति । हे भुवनमङ्गल! त्रैलोक्यस्यैव मङ्गलरूप, तदेवेदम् । वै निश्चयेन। तत्र हेतु –नो ध्यानं मङ्गलाय दर्शितम् । किमतः ? त उपासकानामिति । वयं ब्रह्मसाक्षात्कारार्थं ध्यानं कृतवन्त, यतस्ते उपासका. । न हि परब्रह्मोपासकाः परब्रह्मव्यतिरेकेणाऽन्यद्ध्यायन्ति, न वा तादृशानां कल्पनार्थं भगवानन्यत्प्रदर्शयति, न हि तादृशानामन्येन पुरुषार्थो भवति, तस्मात्कारणात् युक्त्याऽपीदं ब्रह्मैव। एवं तस्य ब्रह्मत्वं विनिश्चित्य तन्नमस्करोति–तस्मै नम इति । तद्रूपं भगवानेवेति भगवत इत्युक्तम् । नमनमात्रमुदासीनेनाऽपि क्रियत इति स्वस्य मुख्यसेवकत्वख्यापनाय तुभ्यमनुविधेमेत्याह । त्वत्प्रास्त्यर्थमनुविधानं कुर्म इत्यर्थः । नमोऽनु विधेमेतिपक्षे छान्दसत्वादुपपदविभक्तिरेव बलीयसी, नमस्कुर्मो नृसिंहायेतिवत् । नन्वेवं सति वादिनः कथमत्र सन्देहं कुर्वन्ति, कथं वा न भजन्ते ? इत्यत आह–योऽनादृत इति । येषां नरकपातोऽवश्यम्भावी दैत्यानाम्, तैरयं नाऽऽदृतः । नन्वनादरणमात्रेण कथं नरकपातः ? निषिद्धाचरणाभावादित्यत आह–असत्प्रसङ्गैरिति । असद्भिः सह प्रकृष्टाः सङ्गास्तैः । न हि स्वभावत एव कश्चिद्भगवन्तं न मन्यते, आत्मत्वादानन्दमूर्तित्वाच्च, किन्तु असतां सङ्गेन बुद्धिरन्यथा जाता, अतस्तत्संसर्गिदोषात् सोऽपि पञ्चमो महापातकी । सचेद्भगवन्तं मन्येत, पूर्वपुण्यवशात्, अन्यथा वा, तदा नरको न भवेत् । अतो नरकस्याऽवश्यम्भावात् तादृशैर्भगवान्नाऽऽदृतः ॥ ४ ॥

* एवं प्रमाणतर्काभ्यामिदमेव ब्रह्मस्वरूपमित्यवधृत्य, 'एतत्साक्षात्कार एव ब्रह्मसाक्षात्कार इति, ' भक्त्या मामभिजानाति ' इति वाक्यात्, तत्साक्षात्कारार्थं भक्तिमाह । साधनमुखतयाऽपि ब्रह्मत्वं साधयति—

ये तु त्वदीयचरणाम्बुजकोशगन्धं जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम् ।
भक्त्या गृहीतचरणः परया च तेषां नाऽपैषि नाथ! हृदयाम्बुरुहात्स्वपुंसाम्५

ये त्विति । तुशब्देन चरणोपासनारहितान् पुरुषार्थविमुखान् व्यावर्तयति । ये त्वदीयचरणाम्बुजकोशगन्धं कर्णविवरैर्जिघ्रन्ति तेषां हृदयात् त्वं नाऽपैषीति संबन्धः । तत्र हेतुः–भक्त्या गृहीतचरण इति । त्वदीयानां चरणेषु भगवत इव रेखा न सन्ति, किन्तु स्वभक्तरक्षकत्वात् कोशत्वम्, तद्धर्मा भ-

---

प्रकाशः।

+ तद्वेत्यत्र । अनुविधानं कुर्म इति । अनु त्वां स्वीकृत्य नमो विदध्म इत्यर्थः । अत्र हि नहीत्यादिना तर्कत्रयं व्याख्यातम् । तेषामेवं प्रयोगः–'इदं रूपं यदि परं ब्रह्म न स्यात्, तदुपासका अन्यदेव ध्यायेरन्; सद्यन्यद्ध्यायेरन्, अन्यदेव ध्यानगोचरः स्यात; यतो नैवमतो नैवम् ' इत्येकः । ' यदि परं ब्रह्म न स्यात्, अन्यदेव प्रदर्शयेत; यदि कल्पनार्थमन्यत प्रदर्शयेत् ' यमेव ' इति श्रुतिः ' विवृणुते तनु स्वाम् ' इति न वदेत्; यतो नैवमतो नैवम्, इत्यपरः । ' यदि परं ब्रह्म न स्यात ' तादृशोपासकानां पुरुषार्थरूप न स्यात्; यदि तथा न स्यात्, नोपासीरन्; यतो नैवमतो नैवम्, इति तृतीयो बोध्यः ।

* ये त्वित्यत्र । भक्तिमाहेति । मुख्यभक्तिव्यतिरिक्तानां तामाहेत्यर्थः । अत्र चरणाब्जपरागादिकमुक्त्वा यद्ब्रह्मत्वं तत्साधयमाहुः–त्वदीयानामित्यादि । न सन्तीति । यन्तोऽपि भगवदीयचरणस्पर्शरहित-

१ इविधेम. ख प. प.

न्धश्च वर्तते । त्वदीयमेव वा चरणाम्बुजम् । भगवदीयत्वसम्पादकशरीरहेतुभूतानि सस्तृतानि भू-तानि चेत्तु प्राप्नुयुस्तदाऽस्मिन् जन्मनि त्वदीया एव भवेयु । अथेदानीं तादृशशरीराभावेऽपि शरीरान्तरेऽपि श्रुत्यादिपर्यालोचनया माहात्म्ये ज्ञाते भक्तिर्भवति । तत्रेन्द्रियाणा भगवदीयविषयग्रहणार्थमन्यथात्व जायते । गन्धो हि चित्तक्षोभकः, अन्तःप्रवेशसमर्थत्वात्, शब्दस्तु न तथा । ततः श्रवणेऽपि गन्धानुभवत्वमुच्यते, अन्त प्रविश्य क्षोभार्थम् । भगवदीयाना पदार्थाना सर्वधर्मवत्त्वम्, श्रुतीना च गन्धवाहकत्वम्, ईषत्स्पर्शात् । अत्र यशोवाची गन्धशब्दः, पुण्यस्य कर्मणो गन्ध इव । भगवन्माहात्म्यश्रोतृणा श्रवण देवतारूपमिति गन्धोऽप्यस्ति । एव माहात्म्यप्रतिपादनार्थमेवं कथा । कर्णविवरैरिति तूष्णीम्भूताना गुणाना प्रवेश । घ्राणेनैव भक्ति प्रेमलक्षणा, चकारात्साधनरूपा च । तदा ते स्वपुमासो भवन्ति । यदा हृदयाद्भगवान्नापगच्छति, तदा नियत साक्षात्कार प्रवेशश्च भवतीत्यर्थ । इद ब्रह्मण एव कार्यं नाऽन्यस्येति कार्यद्वारापि ब्रह्मत्व समर्थितम् ॥ ५ ॥

धर्मान्तरेणापि समर्थयते—

**तावद्भयं द्रविणदेहसुहृन्निमित्तं शोकः स्पृहा परिभवो विपुलश्च लोभः ।**
**तावन्ममेत्यसदवग्रह आर्तिमूलं यावन्न तेऽङ्घ्रिमभयं प्रवृणीत लोकः ॥ ६ ॥**

तावद्भयमिति । 'अभयं वै जनक! प्राप्तोऽसि' इति श्रुतेर्ब्रह्मप्राप्त्यनन्तरमेवाऽभयमिति, भगवदीयत्वेनाऽभयत्वं निरूपयन्, ब्रह्मत्व निरूपयति । यावत्ते अभयमङ्घ्रिं लोको न वृणीत, तावद्भयमिति संबन्ध । न विद्यते भय यस्मादिति । उभयथाऽपि तस्माच्च भयसारमत्वात्, 'द्वितीयाद्वै भयं भवति' इति श्रुते । अन्यदपि भय निवर्तते, समर्थत्वात् । तत्सामर्थ्यमलौकिकमिति भयविशेषान्निर्दिशति—द्रविणनिमित्तं मुख्य भयम्, सर्वस्यैव तदाकाङ्क्षित्वात्, ततो देहनिमित्तम्, 'देहो गमिष्यति' इति, तत पुत्रादिनिमित्तम् । भार्यापुत्रो देहत्वेन वा गृहीत्वा पश्चादन्ये सुहृदो गृहीताः । विद्यमाने भयम्, गते शोक । देहैकदेशो वा देहत्वेन ग्राह्यः, अन्यथा शोको न स्यात् । पुत्रादिर्वा । गेह इति पाठे स्पष्टमेव । पुनः प्राप्तव्यमिति स्पृहा, ततो जनानुधावने तैरेव परिभव, अथ दैवगत्या कथञ्चित् प्राप्तौ विपुलो लो-

---

प्रकाश ।

भूता न सन्ति । भगवच्चरणस्यैवाऽत्र विवक्षितत्वपक्षे परागाद्यनुक्तिबीजमाहु—भगवदीयत्वेत्यादि । तथा चाऽधिकाराभावादप्राप्तिरेव तदनुक्तिबीजमित्यर्थ । तादृशा भक्तिप्राप्तौ हेतु न्युत्पादयन्ति—अथेत्यादि । तत्रेति । भक्तौ । अन्यथात्वमिति । पूर्वविलक्षणसामर्थ्यवत्त्वम् । तद्विशदीकर्तु जिघ्रन्तीतिपदतात्पर्यमाहु — गन्धो हीत्यादि । तत इति । अत्राऽन्त क्षोभकत्वात् । ननु शब्दस्य तादृक्कार्यजनकत्व न क्वापि दृष्टमिति तद्ग्रहणे कथं तथात्वमित्यत आहु —अन्तरित्यादि । पदार्थानामिति । श्रवणादीनाम् । अत्र फक्किकाद्वयेऽपि उच्यत इति क्रियान्वयो बोध्यम् (?) । ईषत्स्पर्शादिति । यत्किञ्चिन्माहात्म्यबोधकत्वात् । अत्र गन्धपदार्थ को वेत्यपेक्षायामाहु —अत्रेत्यादि । तथा च, श्रुतो तथाऽङ्गीकारादत्र परोक्षतया तथा कथन न दोषायेत्यर्थ । किमत्र पारोक्ष्यमित्यपेक्षायामाहु —भगवादित्यादि । 'सर्वं सर्वमयम्' इति श्रुतेस्तथात्वे प्राकट्यमात्र विशेष इति वस्तु, न लक्षणाऽपात्यर्थ । अनया भङ्ग्या कथनस्य तात्पर्यमाहु —एवमित्यादि । घ्राणेनेति । जिघ्रन्तीतिपदोक्तेन । प्रकृत एतन्निरूपणप्रयोजनमाहु इदमित्यादि । इदमिति । भक्त्या ग्राह्यत्वम् ।

भः। तावदिति सर्वत्र संबन्धः। किञ्च, अहं ममेति देहादावसद्ग्रहो मिथ्याग्रहस्तावदेव।* इदमप्येकं ब्रह्मत्वसाधकम्, ब्रह्मात्मभाव एव तन्निवृत्तेः। असद्ग्रहस्य लौकिकप्रतीत्या सुखहेतुत्वमाशङ्क्य तस्य दुःखहेतुत्वमाह–आर्तिमूलमिति। मूलमिति नियतालिङ्गम्। 'तद्विष्णोः परमं पदम्' इति श्रुतेर्भगवत्पदमेव ब्रह्म, अतो न ब्रह्मज्ञानेन व्यभिचारः। वृणीतेति, यथा कन्या वरं वृणीते, स्वेष्टपूरकत्वेऽपि स्वयमेव तदीया भवति, न तु स स्वकीयः। लोक इति विशिष्टाधिकारी॥ ६॥

+ नन्वेवं सति सर्वे कथं न भजन्त इत्याशङ्क्य, पूर्वं रूपविशेषेण असत्प्रसङ्गैरिति परिहृत्यापि, पुनः सामान्यतः परिहरति—

**दैवेन ते हतधियो भवतः प्रसङ्गात्सर्वाशुभोपशमनाद्विमुखेन्द्रिया ये।**
**कुर्वन्ति कामसुखलेशलवाय दीना लोभाभिभूतमनसोऽकुशलानि शश्वत्७**

दैवेनेति। ते दैवेन प्राचीनकर्मणैव हता धीर्येषाम्, भवतः प्रसङ्गार्थे विमुखेन्द्रियाः। विषयस्य सर्वोत्तमत्वेऽपि, प्रमातुः सर्वेष्टदातृत्वेऽपि, आत्मत्वेऽपि ये न भजन्ते, तत्रेन्द्रियबुद्ध्योरेव ग्राहकप्रेरकयोर्दोषोऽवसीयते अग्रहणे। तत्र प्रेरिका बुद्धिर्दैवेन हता। दैवं तस्या एव बुद्धेराधिदैविकं भगवदिच्छारूपमिति केचित्। प्रवाहनियामकस्य कर्मण एव तथात्वमिति ब्रह्मवादे। अधिकृतः काल स्वाधिकारे पतितं तं जीवं भगवत्प्रसङ्गेनाऽन्यथा मा भवत्विति तद्बुद्धिं नाशयति। काल एवेत्यपरे। पक्षत्रयेऽपि तेषां स्वतो दोषाभावः। पूर्वं तु तेषां दोष उक्तः। इमं हेतुत्वेन निर्दिश्याऽग्रे स्वदयामुपपाद्य, तेषु भगवत्कृपां प्रार्थयिष्यत्यर्थात्। प्रसङ्गो वार्ता। प्रासङ्गिकीं कथां सर्वेऽपि बह्वीं शृण्वन्ति। ततोऽपि विमुखाः। अन्यकथायां भगवत्कथा प्रसङ्गात्समायाति, ततो गच्छन्ति; निद्राणा वा, अन्यचित्ता वा भवन्तीत्यर्थः। तेषां बुद्धेर्दैवहतत्वोपपादनार्थं भगवत्प्रसङ्गस्य गुणानाह–सर्वाशुभोपशमनादिति। ते खलु अन्यप्रसङ्गादेव पापं कृतवन्तः, प्रसङ्गाच्चत्सर्वं गच्छेत्; प्रारब्धकर्मणोऽप्यशुभं जायमानमुपशाम्यति, अविद्या चाऽऽत्मनि विद्यमाना महाग्रावाग्निकाष्ठमिव आत्मन्येव शान्ता भवति। इन्द्रियपदात्तेषां निर्दुष्टत्व इन्द्रियाणामपि संमुखीभावो न स्वाभाविकः। तस्मादेते प्रवाहपतिताः कामलोभव्याप्ता इत्याह–कुर्वन्तीति। कामितस्य सुखस्य लेशस्य लवार्थं दीनाः सन्तोऽकुशलानि कुर्वन्ति। पञ्चेन्द्रियाणामुपभोग्यं कामसुखं पूर्णम्, तस्य लेश

प्रकाशः।

* तावदित्यत्र। इदमपीति। सर्वक्लेशनाशनमपि। नन्वेवं सर्वक्लेशक्षयो ब्रह्मज्ञानादपि जायत इति व्यतिरेकव्यभिचारात् यावत्तावत्पदबोधितो हेतुहेतुमद्भावः कथं संगच्छत इत्यत आहुः–तदित्यादि। 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति काठकश्रुतौ यदुक्तम्, तदेवाऽक्षरं ब्रह्माऽत्राऽऽङ्घ्रिपदेन भगवच्चरणत्वेनोच्यत इति न व्यभिचारो नामभेदादित्यर्थ। विशिष्टाधिकारीति। एवं ज्ञात्वा शरणमुपगतः, न तु यथाकथञ्चिदित्यर्थः।

+ दैवेनेत्यत्र। रूपविशेषेणेति। असत्संसर्गित्वेन। प्रमातुरिति। प्रमात्रे, सम्बन्धमात्रविवक्षया षष्ठी। भगवत्कथा प्रसङ्गादित्यत्र भगवत्कथेति भिन्नं पदम्। प्रसङ्गादिति। कथादिप्रसङ्गादिति। न स्वाभाविक इति। किन्तु 'पराञ्चि खानि' इति श्रुतेः कृतक.।

एकेन्द्रियसुखम्, तस्य स्वोऽवल्पो मार्गे क्षणमात्रभोग्य। यथा कामिनीप्रसादार्थं भूयानेनाऽर्थ क्रियते। ननु सुखार्थं तथाकरण युक्तमित्याशङ्क्याऽऽह—दीना इति। दैन्य मोक्तविशेषणम्। अतो दैन्ये विद्यमाने भोगे स्वातन्त्र्याभावात्, तस्मिन्नपि क्षणे दुःख सिद्धमिति न भोगः सिध्यति। ननु तथाप्याभिमानिको भोग सिद्ध्येत्। तत्राऽऽह—लोभाभिभूतमनस इति। लोभेन मनसोऽभिभवात् पूर्वेव द्रव्यं यथिन मिति पश्चात्तापात्राऽऽभिमानिकसिद्धि। अकुशलपदेन, न विद्यते कुशल यस्मादिति योगेन, विद्यमानमपि कुशल गच्छतीति सूचितम्॥ ७॥

तादृशेषु कृपा प्रार्थयितु स्वस्य दयामाह—

**क्षुत्तृट्त्रिधातुभिरिमा मुहुरर्द्यमानाः शीतोष्णवातवर्षैरितरेतराच्च।**
**कामाग्निनाऽच्युत! रुषा च सुदुर्भरेण संपश्यतो मन उरुक्रम! सीदते मे॥ ८॥**

क्षुदिति। इमा, मना अस्वतन्त्रा मत्सज्यत्वेनोपस्थिताः, तासा स्वरूप सम्यक् पश्यत, हे उरुक्रम मे मनः सीदते। परदुःखं दृष्ट्वा दुःखित भवतीत्यर्थ। सबोधनेन तन्निवारणसामर्थ्यं सूचितम्। इयमेव प्रार्थना। द्वादशविध. पुरुषो द्वादशधा रोगैर्ग्रस्तः, न केनाऽप्यशेन सुखी भवति। तान् द्वादशदोषान निवार्यानाह—क्षुधादिपदैः। क्षुत्तृषोरसहत्वं स्वानुभवसिद्धम्। त्रिधातवो वातपित्तश्लेष्माणः, तेऽपि तथा। मुहुरर्द्यमाना इति बहुधाकृतप्रतीकारा अपि। शीतादयोऽपि चत्वारस्तथा। अन्योन्यतोऽपि क्लेश। इत रेतरादिशब्दा निरता, अतो नैकत्र, नाऽपि सर्वत्रानता। चकारात्तत्सबन्धिशस्त्रादिभिरपि। कामस्या ऽनल्पत्वेनाऽग्नित्वम्। अग्निना स्वरूपनाश एव भविष्यतीत्याशङ्क्य अच्युतेति सबोधन स्वरूपरक्षार्थम्। अच्युतो रोष इति केचित्। न कदाचिदपि च्युतो भवति यो रोषः। चकाराल्लोभादिभिः। सुदुर्भरेणेति क्षणमात्रमपि तत्सहनमशक्यम्, सर्वदा प्रतीकारश्चाऽशक्य, अतो दुःखित्वम्। सीदत इति अर्थस्या-ऽलौकिकत्वादात्मनेपद छान्दसम्॥ ८॥

तर्हि ज्ञानोपदेशेन ताः प्रजाः कथ न कृतार्था क्रियन्ते? तत्राऽऽह—

**यावत्पृथक्त्वमिदमात्मन इन्द्रियार्थमायाबलं भगवतो जन ईश! पश्येत्।**
**तावन्न संसृतिरसौ प्रतिसंक्रमेत व्यर्थाऽपि दुःखनिवहं वहती क्रियार्था॥ ९॥**

* यावदिति। यावत्कालम पृथक्त्व पश्येत, तावदुपदिष्टे[1]पि ज्ञाने संसृतिर्न प्रतिसक्रमेत। यावदि-त्यवधिरत्र। मध्ये दुःखनिवृत्त्यर्थ प्रार्थना। आत्मन पृथक्त्व निरूपयति—इदमिति। यावदिदमिति म न्यते यत्किचित्, तावत् पृथक्त्वम्। अस्याऽवधिर्भगवत्सायुज्यमेव। तदभावोऽपि स एव। अन्यस्तु पक्षो देहग्रहणाग्रहणाभ्या सर्वथाऽनुपपन्न। इदम आत्मभेदस्य निरूपयति—इन्द्रियार्थमायाबलमिति।

प्रकाश

* यावदित्यत्र। स एवेति। सायुज्यविशेष एव। नन्वेकजीववादे देहग्रहणाग्रहणे एव पृथक्त्वदशा नस्य पूर्वोत्तरावधी इति कथ सायुज्यस्यैवाऽवधित्वमित्यत आहु—अन्य इत्यादि। सर्वथानुपपन्न इति।

१ भाग म ग इ

भगवत इन्द्रियार्थरूपाया मायाया बलं यत्र । अन्तरोत्पन्ना पदार्था मायिका एव, इन्द्रियाणामेवाऽर्थे । । सा दिता । भगवत उत्वेन्द्रियाणि यदा लोकहितार्थं प्रवृत्तान्यहङ्कारेण, तदा भगवदाज्ञया भगवन्मा । रूपभूताः पदार्था निष्पादिता, अतो विशेषणमपि भगवदीयमिति सविशेषणे भगवत्सम्बन्ध उक्त । धिष्ठानज्ञाने निवर्तते, परं तद्यथा न भवति, तथा बुद्धिशास्त्रादिव्यामोहेन महदेव बलं करोति । वा बलस्येदमेव निदर्शनम्—यदिदं प्रतीयते, तदाऽस्ति बलमिति । भगवदीयत्वात् भगवत्कृपयैव निव ज्ञापितम् । दर्शने हेतु—जन इति । यदा जायते—शरीरं गृह्णाति—तदेदं पश्यतीति नियम एव । ननु मिति जायते ? तत्राऽऽह—ईशेति । यदा भगवत ईशोऽहमितीच्छा, तदा ईशितव्यस्याऽपेक्षणात् त्यर्थः । संसृति संसरणम्, बहुधा देहत्यागग्रहणे । असाविति परिदृश्यमाना । प्रतिसङ्क्रमो विपर्य हः । स भगवत्सायुज्यं प्रापयिष्यति, 'अत्रैव प्रलीयते मर्त्यः' इत्यादिना । स तावन्न भवति । ननु ते किं मूलम्, किं वा प्रयोजनम्, कथं वा न प्रतिसङ्क्रमते ? तत्राऽऽह—समृते कर्म मूलम् । तदाऽऽह—क्रियार्थेति । प्रयोजनं तु नाऽस्त्येव । तदाह—व्यर्थापीति । विः कालः, स वा अर्थ । कालार्था मध्ये दुःखनिवहं वहती दुःखप्रवाहसिद्ध्यर्थमेव स्थिता, कुतोऽपि न निवर्तते । अतो बीजप्रयोजनान्तरप्रयोजनाना विद्यमानत्वात् कदापि न निवर्तत इत्यर्थ ॥ ९ ॥

* ननु ब्रह्मानुभवेऽधिकारिणो गुरुकृपया, वाक्यसहकृतमनसा भाते, कथमिदं न निवर्तते ? सर्वे वाऽहंबुद्धेर्गतत्वात्, 'आत्मैवेदं सर्वम् ब्रह्मैवेदं सर्वम्' इति । तत्राऽऽह—

**अह्न्यापृतार्तकरणा निशि निःशयाना नानामनोरथधिया क्षणभग्ननिद्राः ।**
**दैवाहतार्थरचना ऋषयोऽपि देव ! युष्मत्प्रसादविमुखा इह संसरन्ति ॥१०॥**

अह्न्यापृतार्तकरणा इति । ये पूर्वजन्मनि ऋषयो ब्रह्मात्मभावचिन्तनपराः—तथाचिन्तनेनैव प्राप्तदेहावसानाः—तेऽपि युष्मत्प्रसादविमुखा इहैव संसरन्ति । संसारेऽपि तेषा विशेषः—अह्नि दिवसे आपृतानि व्यापृतानि, अत एवाऽऽर्तानि करणानीन्द्रियाणि येषाम् । निशि रात्रौ च नितरां शयाना महामोहग्रस्ता भवन्ति । एवं व्यर्थकालाः । निद्रया जनितमानुषङ्गिकं सुखमपि नास्तीत्याह—क्षणभग्ननिद्रा इति । क्षणमात्रेणैव भग्ना निद्रा येषाम् । भङ्गे हेतुः—नानामनोरथधियेति । नाना मनोरथविषयिणी या बुद्धि मनोरथानुसारेण स्वप्नं पश्यति, तस्मिन् स्वप्ने भयादिदर्शनादिष्टवियोगाद्वा स्वाप्निकस्याऽस्थिरत्वात् व्याकुलस्य निद्राभङ्गः स्पष्ट । दैवेनैव आहता अर्थरचना येषाम्, तेषां क्रियाऽपि व्यर्थेति सूचितम् । यदि ते भोगार्थं गृहादिकमपि कुर्वन्ति तदपि कालेन व्यर्थं नश्यतीत्यर्थ । ऋषयो मन्त्रद्रष्टार । भगवान्नाह

---

प्रकाश ।

उत्क्रान्तिचरणविचारे जीवनानात्वस्य सिद्धत्वाच्छ्रुतिसूत्रादिविरोधादनुपपन्न इत्यर्थ । निष्पादनप्रयोजनं तु—भगवत इत्यादि । भगवत इतीति । भगवत्सम्ब(न्धि)न्धिनीव । अतो विशेषणमपि भगवदीयमिति । भगवदाज्ञत्वात् इन्द्रियार्थत्वरूप मायाविशेषणमपि भगवदीयमतोहेतोरित्यर्थः । एव कथनस्य प्रयोजनमाहु—भगवदीयत्वादित्यादि ।

* अह्नीत्यत्र । अधिकारिण इति षष्ठी । ननु ऋषीणा कुत ईदृशी दशेत्यपेक्षायामाहुः—भगवानिति

---

१ यदिदम् ख घ ङ च　२ गतत्वादिति नास्ति ख ग ङ. च　३ प्रयोजनमिताहु पा प्रयोजनमिमाहु

शेन्य प्रसन्नो भूत्वा, सत्यादिलोकेष्विह वा, किञ्चित्प्रसादं प्रयच्छति, स्वोच्चनिवृत्तिमार्गकरणात्। तदा नेदमस्माकमपेक्षितमिति यदि ततो विमुखा, तदेह संसरन्ति। ते हि बाला वाक्यार्थमेव विचारयन्ति, न तस्योपपत्त्यादिकम्, कथमस्य जीवस्य ब्रह्मभावो भवतीति। वाक्यानां तात्पर्याज्ञानात्। अत्र ब्रह्माण्डे तेषामानन्दांशः प्रकटो न भवत्येव, सर्वथि मायाजवनिकाया. प्रसारितत्वात्। तथा भगवत्सायुज्यमपि; भगवत्साकल्याभावात्, ज्ञानमार्गस्य भगवतो वश्यत्वापादकत्वाभावात्। याऽपि सद्योमुक्तिरुक्ता, 'इहैव समवनीयन्ते प्राणाः' 'अत्रैव सन् ब्रह्माऽप्येति'। तदपि स्वतन्त्रभक्त्या भगवत्सायुज्ये। अत एव वेदव्यासः सकलवेदार्थाभिज्ञो ज्ञानफलत्वेन सद्योमुक्तिं नोक्तवान्, किन्तु ब्रह्मविदोऽर्चिरादिमार्गेण ब्रह्मलोके स्थितिरेव फलत्वेनोक्ता, अपुनरावृत्तिश्च। तदेव फलं भगवदुक्तम्। तदनङ्गीकारे मनसा योगेन वा संसृतिरेव भवति, अतो ब्रह्मभावनायामपि न संसारनिवृत्तिः॥ १०॥

ननु एवं सति भक्तानामपि संसारो न निवर्तेत; उत्तमानामपि विष्णुलोकप्राप्तिः, कृत्रिमवैकुण्ठगमनं वा भवेत्; मायाजवनिकायाः सिद्धत्वात्। योगेन ब्रह्माण्डभेदस्तु (?) फलप्रकारोऽस्य निरूपितः, न तु तत्राधिकारी कश्चित्संभवति। ब्रह्मणा सह तु ब्रह्माण्डनाशे। तस्मान्मुख्यभक्तिमार्गोऽपि न शीघ्रं पुरुषार्थसाधक इत्याशङ्क्याऽऽह—

**त्वं भावयोगपरिभावितहृत्सरोज आस्से श्रुतेक्षितपथो ननु नाथ! पुंसाम्।**
**यद्यद्धिया त उरुगाय! विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय॥ ११॥**

त्वं भावयोगेति। भावः प्रेमलक्षणा भक्तिः, 'रतिर्देवादिविषयिणी भावः' इति समुदायार्थत्वात्। श्रीविष्णु माहात्म्यज्ञानादेव। स एव योगो विहित उपायरूपो भवति। अन्यस्त्वनुपायः कामादिना जातः। तत्र प्रमेयफलमिति वक्ष्यते। प्रमाणबले त्वेवैव व्यवस्था, अतो भावयोगेन परिभावितं—परितः शोधितम्-भगवद्विषयकमाहात्म्यज्ञानपूर्वकस्नेहो यदि हृदये सहजो धर्मो भवति, तदा तद्धृदयं सरोजं भवति। प्रेमजले तदेवोद्गत भवदासनौपयिक कमलं भवति। तस्य च निदर्शनम्, यदि वैषयिकाः केऽपि न स्फुरन्ति। तदपि चेत्प्रेम्णा पूर्ववत्पुनर्भावितं भवति, तदा भगवांस्तत्र तिष्ठति। श्रुतेन गुणश्रवणेन, श्रवणसहितेन्द्रियेण वा, ईक्षितो मार्गो येन। यदैव श्रवणं रिक्तं भविष्यति, तदा भगवता निर्गमनार्थं मार्गो दृष्ट एव। नन्विति कोमलसंबोधनं निश्चयार्थम्। नाथेति युक्ति। भगवांस्तेषां पतिः, स तु भार्यागृहे तिष्ठत्येव। परमेतावान् विशेषः, पुंसामयं पतिः। ननु तेषां ब्रह्मसायुज्ये आक्षिप्ते, हृदये भगवत्स्थितिः कु-

प्रकाशः।

अयमर्थो मूले कस्मात्पदात् सिध्यतीत्यपेक्षायामपिपदविचारादेव सिध्यतीत्याशयेनाऽऽहुः—ते हीत्यादि। ननु वाक्यार्थविचाराणां भगवत्सायुज्याद्यभावे सद्योमुक्तिबोधकश्रुतिविरोध इत्यत आहुः—याऽपीत्यादि। अत्र गमकमाहुः—अत एवेत्यादि। तदेवेति। क्रममुक्तावान्तरफलभूतं प्रसादपदेनाऽत्र परामृश्यत इत्यर्थः।

न त्वमित्यत्र। विष्णुलोकप्राप्तिरिति। सत्त्वाभिमानलोकप्राप्तिः। ब्रह्मणा सहेति। मुक्तिरिति शेषः। तत्रेति। कामादिजनितस्याऽप्युपायत्वे। वक्ष्यत इति। हेतुत्वेन वक्ष्यते। शोधितमित्यस्य तद्धृदयमित्यनेन सम्बन्धः। श्रवणसहितेन्द्रियेणेति। श्रवणसहितमनसा, श्रोत्रेण वा।

१ संसरन्ति क. ग घ च १ कोने. ग

त्रोपयुज्यते ? तत्राऽऽह्-यद्यद्धियेति । हे उरुगाय, उरुभिर्गीयत इत्यनेकप्रकारेण निरूपितानन्तमूर्ते ! ते तव यद्यद्रूपं भक्ता विभावयन्ति, तत्तद्वपुर्ब्रह्मरूपम्, वैकुण्ठरूपम्, अवताररूपं वा; तदेव प्रकटीकरोषि। तत्र हेतुः-सदनुग्रहायेति । संश्चासावनुग्रहश्च । ज्ञानिष्वनुग्रहमात्रम्, अत्र सन्ननुग्रहोऽवाधितोऽनुग्रहः तदाऽत्रैव भगवति सायुज्यादिकं सर्वमेवोपपद्यते भक्तेच्छानुसारेण ॥ ११ ॥

एवं ज्ञानभक्तिमार्गौ निरूप्य साधननिरूपणे भक्तिसाधनापेक्षया ज्ञानमार्गसाधनं भगवत्तोषहेतुरुत्तममित्याह—

**नाऽतिप्रसीदति तथोपचितोपचारैराराधितः सुरगणैर्हृदि बद्धकामैः ।**
**यत्सर्वभूतदयया सदलभ्ययैको नानाजनेष्ववहितः सुहृदन्तरात्मा ॥१२॥**

* नाऽतिप्रसीदतीति । साधनभक्तौ देवा मुख्याधिकारिणः, दिव्यानि च पुष्पादीनि साधनानि, तैर्न प्रसीदति । प्रसन्नोऽपि, तेभ्यः कामितं फलं प्रयच्छन्नपि, अत्यन्तं न प्रसीदति । तत्र हेतुः-हृदि बद्धकामैरिति । प्रसादस्तु, यदि भगवांस्तद्धृदये समागत्य तिष्ठति, तांश्च स्वकीयान् मन्यते, तदा भवति । तत्र तैर्हृदये भगवत्स्थाने काम एव बलाद्बद्धो वर्तते । सहजश्चेत्कामो भवेदन्ततो भगवानपि दूरीकुर्यात् । स च बद्धः कामः कस्य चिन्नाशं कृत्वा निवर्तते, बद्धो हि स्वकीयं सर्वस्वं प्रयच्छति । अतो दैत्यानां वधेच्छया पूजितो भगवान् दैत्यवधं कृत्वाऽपि न प्रसन्नो भवति । तत्र हेतुः-नानाजनेष्ववहितः सुहृदन्तरात्मेति । तर्हि केन प्रसीदतीत्याशङ्क्याऽऽह-यत्सर्वभूतदययेति । यद्यथा सर्वभूतदयया भगवान् परितुष्यति । सर्वभूतेषु साधारणी दया, न तु विशिष्टा; अशक्यत्वात् । स्वचित्ते तेषां हितभावनम्, भगवत्कृपाप्रार्थना, अनिषिद्धो वा दैहिकः; यदेवैकं कार्यं सर्वेषामेव हितं भवति तद्भगवत्तोषहेतुः । तर्हि सर्वे तदेव कथं न कुर्वन्ति, सुलभत्वाच्चेत्याशङ्क्याऽऽह-असदलभ्ययेति । इयं सर्वभूतदया असतामलभ्यैव, न कदाचिदपि तेषां हृदये दयोत्पद्यत इत्यर्थः । एतदेवाऽसल्लक्षणम् । उभयत्र हेतुत्रयम् । यतोऽयं भगवान् नानाजनेषु सात्त्विकादिनानाभेदभिन्नेषु अवहितः सावधानो भूत्वा तत्र स्थितः । स भगवांश्चेत् क्वचिदेव तिष्ठेत्तदा क्वचित्पूजया संतुष्टो भवेत् क्वचिदपराधे क्वचित्पूजायां तु न संतुष्यति । नहि पादे ताडितः शिरसि पूजितस्तुष्यति । किञ्च, अयं सर्वेषां सुहृत्, अतः क्वचिदपराधेऽपि न संतुष्यति । किञ्च, अन्तरात्मा चाऽयम् । अन्तःकरणकृतैरेव पूजासाधनैः संतुष्यति, न बहिःकरणैः । अतो येनैव प्रकारेण भगवान् परितुष्यति, तदेव साधनम्; अन्यत्तु परम्परया । अपरितोषहेतुस्त्वसाधनमेवेति निश्चयः ॥ १२ ॥

एतदेव वदन् पूर्वोक्तनिरूपणमुपसंहरति—

**पुंसामतो विविधकर्मभिरध्वराद्यैर्दानेन चोग्रतपसा व्रतचर्यया च ।**
**आराधनं भगवतस्तव सत्क्रियार्थो धर्मोऽर्पितः कर्हिचिद्ध्रियते न यत्र१३**

---

प्रकाशः ।

* नाऽतिप्रसीदतीत्यत्र । दयात्मकनिषिद्धं दैहिकं धर्मं स्फुटीकुर्वन्ति-यदेवैकमित्यादि । उभयत्रेति । संतोषेऽसंतोषे च ।

× पुंसामिति । अतो हेतोः पुंसामयमेव सत्क्रियार्थो, यद्भगवतस्तवाराधनम् । विविधकर्मभिर्वै-दिकादिकैः । अध्वराद्यैर्योगपूर्तादिभि. । देवताप्रीतिहेतूनि निरूपितानि । दानेनेति मनुष्यप्रीति-हेतु, उग्रतपः स्वस्यैव प्रीतिहेतुर्देहस्य वा; व्रतचर्या अन्तःकरणस्य । एवं लौकिकालौकिकभेदेन कार्येय कर्माणि तवाराधनरूपाणि, तद्धेतवो वा भवन्ति, तदा सत्क्रियार्थो भवति, विहितक्रियाणा फलरूपं भवति । ननु धर्मः स्वतन्त्रं फलम्; पुरुषार्थत्वात्, अभ्युदयनिःश्रेयसहेतुत्वाद्वा । तत्कथमुच्यते सर्वेषां भगवदाराधनं चेत्तदा फलमिति । तत्राऽऽह—धर्मोऽर्पित इति । यत्र भगवत्यर्पितः समर्पितो धर्मः, कदाचिदपि न द्रियते न विदीर्णो भवति । फलार्थं कृतो धर्मः, स्वतन्त्रो वा । ' धर्मः क्षरति कीर्तनात् ' ' हन्ति पुण्यं पुराकृतम् ' ' अब्दपुण्यं विनश्यति ' इत्यादिवाक्यैस्तस्य नाश श्रूयते । तेन चेद्भगवानाराधितो भवति, तदा भगवत्कार्ये निरूपितो भगवत्संबन्धेन नित्यतां प्राप्तोऽक्षयफलदानार्थं तस्यापेक्षितत्वात् कदापि न द्रियते ॥ १३ ॥

एवं सर्वशास्त्रार्थं निरूप्य भगवन्तं नमस्यति षड्भिः—

**शश्वत्स्वरूपमहसैव निपीतभेदमोहाय बोधधिषणाय नमः परस्मै ।**
**विश्वोद्भवस्थितिलयेषु निमित्तलीलारासाय ते नम इदं चकृमेश्वराय १४**

– शश्वदिति । भगवतो नमस्यरूपाणि षट् भवन्ति, अस्मात् ब्रह्मणः पूर्वतराणि । तत्रैतदेवैकं रूपम्, शेषशायी नारायणः, पुरुषो द्वितीयः, सर्वतत्त्वसहित प्रकृतिभर्ता पुरुषस्तृतीय., कालश्चतुर्थः, यज्ञः पञ्चमः, पुरुषोत्तमः षष्ठः । तत्रैतद्धृदये परिदृश्यमानं तदावश्यकधर्मकीर्तनेन नमस्यति । कदाचिदिदं शयानं रूपं मोहात्मकं भवेदित्याशङ्क्य, तस्य मोहाद्यभावं निरूपयति । अथवैतदक्षररूपम् । शयानं तु श्लोकद्वयेनाऽग्रे वक्ष्यति । शश्वत्सर्वदा स्वरूपमहसैव निरन्तरं स्फुरता स्वप्रकाशेनैव नितरां पीतौ भेदमोहौ येन । द्वयमेव जीवत्वसाधकम्, भेदो मोहश्च । भिन्नश्च जीवो भवति, मुग्धश्च । अतो जीववैलक्षण्यं दोषाभावेन। गुणेन वैलक्षण्यमाह—बोधधिषणायेति । बोध एव धिषणा बुद्धिर्यस्य । जीवानां तु जडरूपा बुद्धिः । अत एव परस्मै सर्वनियामकाय । नियामकत्वमत्र नमने हेतुः । एवं स्वरूपमुक्त्वा कार्यमाह—विश्वस्य उद्भवस्थितिलयेषु निमित्तायमाना या लीला, तया रासः क्रीडा यस्य; तस्या वा रससमूहो यस्य । सोऽक्षरात्मको भवानेव नाऽन्य इति वदन् नमस्यति—ते इदं नमश्चकृमेति । नमस्कारं साष्टाङ्गं कुर्वन्निदमा निर्दिशति—इदमिति । चकृमेति स्वान्तर्गतैः सर्वैरेव जीवैः सहितो नमस्करोमीति ज्ञापयति । शिक्षार्थं भगवन्नामेति ज्ञापयितुमाह—ईश्वरायेति । स एव सर्वसमर्थः, अन्यथा तत्कृपाव्यतिरेकेण जीवस्तत्कार्यं कथं कुर्यात् ? ॥ १४ ॥

---

प्रकाशः।

× पुंसामित्यत्र । तद्धेतव इति । आराधनहेतवः ।

– शश्वदित्यत्र । अस्माद्ब्रह्मण इति । चतुर्मुखात्, प्रस्तुतत्वात् । शयानरूपमादौ निरूप्यते इत्यङ्गीकृत्य लक्षणबलात् पक्षान्तरमाहुः—अथवेत्यादि । अत्र शयानस्य द्वैरूप्ये पञ्चैव रूपाणीत्यपि ।

---

१ तदंगम् ग तदंगम् ख प. ड. च

* पुरुषं नमस्यन् पुरुषावतारान् सर्वानेव नमस्यति । अथवा, पूर्वश्लोके सामान्यभगवद्रूपकीर्तनेन नमनम्, विशेषास्तु षट् । तत्र प्रथममवताराः पुरुषादयः, ते जाता इति कस्यचिद्भ्रमो भवेत्, तन्निवृत्त्यर्थं तस्य दोषान् परिहरन्नमस्यति—

**यस्याऽवतारगुणकर्मविडम्बनानि नामानि येऽसुविगमे विवशा गृणन्ति ।**
**तेऽनेकजन्मशमलं सहसैव हित्वा संयान्त्यपावृतमृतं तमजं प्रपद्ये ॥ १५ ॥**

यस्येति । अवतारा गुणाः कर्माणि च विडम्बयन्ति अनुकुर्वन्तीति, देवकीनन्दन ! दयालो ! गोवर्द्धनोद्धरणधीर ! इति यानि नामानि, ये प्राणिनोऽसुविगमे प्राणोत्क्रमणसमये विवशा अपि भूत्वा गृणन्ति ते पूर्वोपार्जितानेकशमलमपि तत्क्षणमेव हित्वा, अपावृतमुद्घाटितकपाटम्, ऋतं ब्रह्मरूपं संयान्ति । एवं सर्वेषां सर्वपुरुषार्थहेतुकर्तारं नमामीत्याह—तमिति । अजमिति जन्माभावः । तमिति गुणकर्माभावः । सजातीयाः सजातीयं मन्यन्ते, अत उत्पन्नानां सगुणानां कर्मकर्तॄणां स्वसदृश एव रोचत इति तादृशानि जन्मगुणकर्माणि प्रदर्श्य तान्मोचयति न तु तस्य तादृशं जन्म गुणाः कर्माणि वा; अतो निर्दोषपूर्णगुणविग्रहं तं प्रपद्ये शरणं गच्छामीति नमनप्रपत्त्योरेकार्थता ॥ १५ ॥

× एवं पुरुषं नत्वा सर्वतत्त्वसहितं प्रथमपुरुषं नमस्यति—

**यो वा अहं च गिरिशश्च विभुः स्वयं च स्थित्युद्भवप्रलयहेतव आत्ममूलम् ।**
**भित्त्वा त्रिपाद्ववृध एक उरुप्ररोहस्तस्मै नमो भगवते भुवनद्रुमाय ॥ १६ ॥**

यो वा अहमिति । यो भगवान् त्रिपाद्ववृधे, तस्मै भुवनद्रुमाय नम इति संबन्धः । पादत्रयमाह—अहं ब्रह्मा, चकाराच्च प्रभृतयः; गिरिशो महादेवः, चकाराद्धर्मादयः; विभुः समर्थः; स्वयं पालको विष्णुः । एतेषां कार्यमाह—स्थित्युद्भवप्रलयहेतव इति । एते त्रयः । वै निश्चयेन । यः पुरुष एव त्रिपादात्मनो मूलं प्रकृतिं भित्त्वा ववृधे, महदादिरूपेण मरीच्यादिरूपेण वा । उरवोऽधिकाः प्ररोहा यस्य । अधश्चोर्द्ध्वं तस्य प्ररोहाः । अधो ब्रह्माण्डमध्ये पृथिव्यादयः, कश्यपादयश्च; उपर्यावरणानि । एवं भुवनद्रुमात्मकः सर्वशब्दवाच्यो भगवान् कल्पवृक्षः, तस्मै नमः ॥ १६ ॥

---

प्रकाशः

* यस्येत्यत्र । पूर्वश्लोके ' परस्मै ' इतिपदस्य असद्वाऽऽसीन एक इत्यर्थं स्वीकृत्य पक्षान्तरमाहुः—अथवेत्यादि । अस्मिन् पक्षे रूपबोधकाः सप्त श्लोकाः । सर्वपुरुषार्थहेतुकर्तारमिति । पुरुषार्थहेतुभूतानि यानि गुणकर्माणि, तत्कर्तारम् । गुणकर्माभाव इति । तद्रूपेण स्वयमेव प्रकटमिति विडम्बनमात्रत्वात् तदभाव इत्यर्थः । तदेव व्युत्पादयन्ति सजातीया इत्यादि ।

× यो वा इत्यत्र । पुरुषं नत्वेति । अक्षरात्मकं द्वितीयपुरुषं नत्वा । पालको विष्णुरिति । अत्रापि मूले ' स्वयं च ' इति चकारो धर्मादिसङ्ग्राहको ज्ञेयः ।

---

१ समय एव. क. २ मप्रसवकपम्. ख. ग. च. ३ गच्छामि वा. ख. गच्छामि. ग. घ. ४ अधिकप्ररोहाः. क ख. घ. च. अधिकम्. ग.

कालात्मक नमस्यति—

**लोको विकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं त्वदुदिते भवदर्चने स्वे ।**
**यस्तावदस्य बलवानिह जीविताशां सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ।१७।**

लोको विकर्मनिरत इति । विकर्म निन्दित कर्म, तत्र निरत स्थित., तदेकप्रवण इत्यर्थः । कुशले धर्मे प्रमत्तोऽसावधानः । सुतरा त्वदुदिते कर्मणि, 'मन्मना भव मद्भक्त' इत्यादौ । भवदर्चने तव पूजारूपे, स्वे स्वधर्मरूपे सर्वथा प्रमत्त । तस्य यो जीविताशामपि छिनत्ति । तावदिति नरकादर्वाक् । पश्चान्नरकमपि प्रयच्छतीत्यर्थ । इहेति नैकट्ये । भगवदपराध कृत्वा यो महानपि भवति, तमपि मारयतीत्येतदर्थमाह—बलवानिति । तथोपाय करोति, यो जीवन्नेव जीविताशा त्यजति । एवमलौकिककालात्मने नम ॥ १७ ॥

यज्ञरूपं नमस्यति—

**यस्माद्बिभेम्यहमपि द्विपरार्धधिष्ण्यमध्यासितः सकललोकनमस्कृतं यत् ।**
**तेपे तपो बहुसवोऽवरुरुत्समानस्तस्मै नमो भगवतेऽधिमखाय तुभ्यम् ॥ १८॥**

यस्मादिति । कालो द्विविध, यज्ञादिप्रवर्तको यज्ञात्मा, लौकिकश्च । तत्र लौकिक पूर्वमुक्तः, यज्ञात्मक इदानीमुच्यते । 'स्वधर्मनिष्ठः शतजन्मभिः पुमान् । विरञ्चितामेति ततः पर हि माम्' इति वाक्यात्, येनैव यज्ञात्मकेन सहस्राश्वमेधरूपेण ब्रह्मपदे अह निवेशित, इदानीमपि बहुभिर्योगैस्तपोभिश्च तमेवाऽऽरोढुमिच्छामि, तत्सायुज्यमेव वाञ्छामि । एव यद्यपि ममाऽभीष्टकर्ता, तथापि तस्मादहं बिभेमि मारयिष्यतीति । यद्यपि द्विपरार्द्धधिष्ण्यमास्थित । द्वे परार्द्धे तस्याऽऽसनस्य स्थितौ कालपरिच्छेदके । यस्याऽऽसनस्यापि नियतकालत्वम्, अहमपि नियतकालस्तादृश, तथापीश्वरगतिर्ज्ञातुमशक्येति बिभेम्येव । यद्यपि ममाऽऽसनस्य महत्त्वं, सर्वलोकनमस्कृतत्वात्, तथापि महानिति न त्यक्ष्यतीति भयम् । स्वभावत एवाऽहं बहुमखो बहुयज्ञकर्ता, तथापि तपस्तेपे । एवमतिदुर्धर्षाय मखाधिष्ठातृदेवाय तुभ्य नम इति ॥ १८ ॥

पुरुषोत्तम नमस्यति—

**तिर्यङ्मनुष्यविबुधादिषु जीवयोनिष्वात्मेच्छयाऽऽत्मकृतसेतुपरीप्सया यः ।**
**रेमे निरस्तरतिरप्यवरुद्धदेहस्तस्मै नमो भगवते पुरुषोत्तमाय ॥ १९ ॥**

तिर्यगिति । तिर्यङ्मनुष्यविबुधास्तामसराजससात्त्विका देहा, तदादयोऽन्येऽपि त्रिविधाः । जीवयोनिषु जीवस्योत्पत्तिस्थानेषु । आत्मेच्छया स्वेच्छयैव, अवरुद्धदेहः सन्, स्वीकृतलीलाविग्रहो भूत्वा, आत्मकृतसेतुपरीप्सया स्वकृतमर्यादारक्षार्थम्, यो रेमे । मनुष्यादीन् स्वतुल्यान् विधाय स्वकृतधर्मरक्षार्थमेव कृष्णरूपो भूत्वा, तिर्यगादिषु कुत्रचिदपि निरस्तरतिरपि रेमे, एतादृशाय । अक्षरादप्युत्तमः, लोकपर्ततया बोधनार्थमेव देहग्रहणकथा । अवरुद्धा निरुद्धा वा देहा येन । इच्छापि नास्ति, देहोऽपि नास्ति, तथापि स्वरूपानन्दभूत एव रेमे ॥ १९ ॥

---

१ स्थिर स ग १८ नास्ति ह ष

नारायणं नमस्यति, कारणकार्यावस्थारूपद्वयनिरूपणेन श्लोकद्वयेन—

**योऽविद्ययाऽनुपहतोऽपि दशार्धवृत्त्या निद्रामुवाह जठरीकृतलोकयात्रः ।**
**अन्तर्जलेऽहिकशिपुस्पर्शानुकूलां भीमोर्मिमालिनि जनस्य सुखं विवृण्वन् ।**

योऽविद्ययेति । यो दशार्द्धवृत्त्या पञ्चवृत्त्या अविद्यया अनुपहतोऽपि निद्रामुवाह । न हि कश्चि-त्स्वात्मविस्मरणव्यतिरेकेण निद्रितु(?)मर्हति । पञ्चवृत्त्येति वक्तव्ये दशार्द्धवृत्त्येतिवचनं विद्याविद्ययोः समभागार्थम् । यथा विद्यया अनुपहतोऽपि जागर्ति, एवमविद्यया अनुपहतोऽपि निद्रामुवाहेति विद्या-विद्याकार्यं भगवति नास्ति, किन्तु तत्सदृशी लीला वर्तत इति ज्ञापनार्थम् । किञ्च, जठरीकृता लोक-यात्रा येन । सर्वानेव लोकान् स्वोदरे निवेश्य शेते, यथा लोकस्य स्वप्नस्तथाऽस्मिन्निदानीं लोकाः । अयमेव स्वप्नकर्ता निद्रासहितः । अतः स्वप्ने कार्यं कुर्वन्नपि मायिकमेव कार्यं करोति । यदीदानीमपि निद्रित एव कार्यं करिष्यति, तदा अग्रे उत्पत्स्यमानमपि कार्यमसदेव स्यात्, मूलस्य तथात्वात्, निर्बी-जफलवृक्षवत् । किञ्च, अन्तर्जले भीमोर्मिमालिनि अहिकशिपुस्पर्शानुकूलां निद्रामुवाह । न हि क-श्चिज्जलमध्ये शेते, तत्रापि तरङ्गाकुले, तत्रापि सर्पभोगे शयनं तामस्यवस्था । जलमध्ये शयनं सर्वथाऽनुप-पन्नम्, व्याकुलाधिकरणशयनमतिश्रमसूचकम्, सर्पे च शयनं मृत्युहेतूनप्यविगणय्य शयनसूचकम् । एवं शयनं किमर्थं करोतीत्याशङ्क्याऽऽह—जनस्य सुखं विवृण्वन्निति । जनस्य जायमानस्यैवमवस्था चेत्तदा सुखं भवतीति लोके विवृण्वन् ज्ञापयन् । अत एवमेव स्थिते यदि सृष्टिर्भवेत्, तदोत्पन्नानां मोक्षादिवार्ता न भवेदित्येतदवस्थापरिहारं प्रार्थयिष्यन्निमामवस्थामेवं वर्णितवान् ॥ २० ॥

सृष्ट्यादौ तस्य कार्यावस्थामाह—

**यन्नाभिपद्मभवनादहमासमीड्य ! लोकत्रयोपकरणो यदनुग्रहेण ।**
**तस्मै नमस्त उदरस्थभवाय योगनिद्रावसानविकसन्नलिनेक्षणाय ॥ २१ ॥**

÷ यन्नाभिपद्मभवनादिति । यस्य नाभिपद्मभवनादहं ब्रह्मा आसम्, तस्मै नम इति संबन्धः । ननु पितृत्वात् नमनमेव कर्तव्यम्, स्तुत्या किमित्याशङ्क्याऽऽह—हे ईड्येति । स्तुत्यो यः, तं स्तुत्यैव किञ्चित्क-र्तव्यम् । लोकत्रयमुपकरणं यस्य, यथा पुरुषस्य घटपटादयः । एतादृशत्वं तत्कृपयैव जातमित्याह—यदनुग्र-हेणेति । यदनुग्रहेण लोकत्रयोपकरण इति संबन्धः । तस्मै ते तुभ्यं नमः । नमने प्रयोजनमाह—उदर-स्थभवायेति । विश्वमेव तदुदरे स्थितम्, तच्चेत् प्रयच्छेत् तदा सृष्टिर्भवेदिति । तर्हि निद्रिताय नमस्का-रोऽनुचित इत्याशङ्क्याऽऽह—योगनिद्रावसानविकसन्नलिनेक्षणायेति । योगनिद्राया अवसाने विकसन्न-लिनवदीक्षणे यस्य । योगनिद्रा काचिच्छक्तिः, यथा सृष्टिः । उभे भगिन्यौ तुल्यकाले । सा भगवति प्रलयकाले । आदिक्षणे तस्याः प्रथमोंऽशः संबध्यते, प्रलयान्ते त्वन्तिमोंऽशः । इदमेव तस्याऽवसानम् । अतो निद्रावसानक्षणोऽयमतो नमनमुचितमित्यर्थः । एवं नत्वा स्वाभीष्टान् पदार्थान् प्रार्थयते—यन्नाभिपद्म-भवनादितिचतुर्भिः ॥ २१ ॥

---

प्रकाशः ।

÷ यन्नाभीत्यत्र । भगिन्यौ तुल्यकाले इति । समानस्वभावे समानसंख्याङ्ककाले सेवां कुर्वाणे ।

---

१ कारणकार्यावस्थारूप ग. २ अनुपहतिः क. ग. च. ३ परित्यागम् ग.

* सृष्ट्यर्थं भगवतोत्पादित इति नाऽन्यत्र तस्याऽधिकारः; सृष्टौ च पदार्थज्ञानमपेक्ष्यते; ज्ञानबुद्धिसंयोगोऽन्यथा कर्तुमेव न शक्यते। ज्ञात्वा च कर्तव्यम्, चित्तस्य भगवच्चरित्रपरता चाऽऽवश्यकी, भगवदुपयोगिसृष्टिकरणात्। वेदाविस्मरणं चाऽपेक्ष्यते, तथा सति पातकिकृतं कार्यं पुरुषार्थोपयोगि न स्यात्। सन्तोषपूर्वकं विषाददूरीकरणं चाऽपेक्ष्यते, कार्योपयोगाय। अतो वरचतुष्टयप्रार्थना। तत्र प्रथमं सृष्टिसामर्थ्यस्य पूर्वं विद्यमानत्वेऽपि, बुद्धेरुद्वेगाचदस्फूर्तिर्विषमकरणं च स्यात्, अतो भगवतो ज्ञानसंबन्धं प्रार्थयते—

**सोऽयं समस्तजगतां सुहृदेक आत्मा सत्त्वेन यन्मृडयते भगवान्भगेन।**
**तेनैव मे दृशमनुस्पृशताद्यथाहं स्रक्ष्यामि पूर्ववदिदं प्रणतप्रियोऽसौ॥ २२॥**

सोऽयमिति। सोऽयं भगवान् येन सत्त्वेन जगन्मृडयते, तेनैव मे दृशमनुस्पृशतादिति संबन्धः। सर्वेषां हितकारित्वात्, औदासीन्याभावात्, आवश्यकत्वाच्च भगवतो ज्ञानं सृष्टावपेक्षितम्। तदर्थं विशेषणत्रयमाह—समस्तजगतां सुहृत्, एकः, आत्मेति। एकत्वात्सर्वत्र तुल्य एकस्वभाव इत्यर्थः। आत्मत्वादावश्यकः। सत्त्वेनेति ज्ञानसुखकारणभूतसत्त्वगुणेन यद्यस्मात्कारणात् मृडयते सुखयति, यदिति प्रसिद्धं वा। जगत्कर्मणः स्पष्टत्वादवचनं वा। भगेनेति तत्सत्त्वं भगात्मकमैश्वर्यादिषड्गुणरूपम्। तेन मे दृशमनुस्पृशतादिति षड्गुणा ऐश्वर्यादयः प्रार्थिता भवन्ति। ततः किमत आह—यथाऽहं स्रक्ष्यामि पूर्ववदिति। उद्वेगाज्ञानवैषम्यानि यदा गमिष्यन्ति, तदा पूर्ववदेव करिष्यामि। नन्वेतावत्कथं दास्यतीत्याशङ्क्याऽऽह—प्रणतप्रियोऽसाविति। असौ प्रणतप्रियः, प्रणतः प्रियो यस्येति। प्रियाय हि सर्वमेव दीयते। असावेवैतादृशो नाऽन्य इत्यर्थः॥ २२॥

चित्तस्य भगवच्चरित्रपरतां प्रार्थयते—

**एष प्रपन्नवरदो रमयाऽऽत्मशक्त्या यद्यत्करिष्यति गृहीतगुणावतारः।**
**तस्मिन्स्वविक्रममिदं सृजतोऽपि चेतो युञ्जीत कर्मशमलं च यथा विजह्याम् २३**

एष प्रपन्नवरद इति। यदि चित्तं भगवच्चरित्रपरं न स्यात्तदाऽहङ्कर्तृत्वाद्गर्वः स्यात्, प्रमादाद्विषमकृतिजनितदोषो नाशश्च। चरित्रं सर्वांशेन कृतम्, चित्सहितेन वा विशिष्टेन वा भेदेन, तादृशमानन्दं न जनयति। अतो ब्रह्मानन्दरूपया रमया लक्ष्म्या, भेदाभावाय आत्मशक्त्या, प्रपन्नानां वरदानार्थं यद्यत्करिष्यति। तत्राऽपि स्वाधिकारानुसारेण ग्रहणार्थम्—गृहीतगुणावतारः। गृहीता गुणावतारा येन। गुणानां धर्माणामवताराः पूर्वमुक्ताः, 'यत्रोद्यतः' इत्यादिना। अथवा, गुणा भगवदीयाः सर्वे पुरुषस्थिता अभिव्यक्ता जाताः, ते गुणावताराः; तानादाय यद्यत्करिष्यतीति बहव एव पदार्था भगवदीया भवन्ति कालकर्मस्वभावकृतातिरिक्ताः। सामान्यतोऽधिकृतत्वात् तत्राप्यहमेव कर्ता। अतस्तस्मिंस्तव चरित्रे इदं

प्रकाशः।

* सोऽयमित्यत्र। यं यं पदार्थसमुदायमपेक्षते, तं तं स्फुटीकुर्वन्त· क्रमेणाऽऽहु—ज्ञानेत्यादिना। ज्ञानबुद्धिसंयोग इति। ज्ञानं भगवदीयं सत्त्वात्मकम्, तस्य बुद्धिसंयोगो जडरूपिण्यां स्वबुद्धौ सङ्क्रमणम् भगवदीयसर्वपदार्थानां भगवत्स्वरूपस्य च परिस्फूर्तिरिति यावत्। जगत्कर्मण इति। जगतः कर्मकारकभूतस्य।

१ पदार्थसंग्रहेति ख ग घ ङ. च २ दोषा ग ३ कर्मकारकभूतस्य घ

तव पराक्रमरूपं जगद्भगवदीयं सृजतोऽपि मे यथा युञ्जीत, त्वच्चरित्र एव । चत्तं सर्वदा युक्तं भवेत् । यद्यपि कालादिकृतसृष्टौ चरित्रपरता चित्ते युक्ता, गर्वाभावार्थं भगवत्स्मरणार्थं च; भगवदीयसृष्टौ तु नोपयुज्यते, पूर्वोक्तदोषासम्भवादित्याशङ्क्य, अत्रापि दोषद्वयं सम्भवतीति तन्निराकरणार्थं चरित्रपरता युक्तैव। अत्र सृज्यानां भगवदीयत्वादणुमात्रेणाऽपि भगवदिच्छावैपरीत्येन कृतिर्भवेत्, तदा भगवद्द्रोहः स्यात्, सृज्यानां चाऽऽक्रोशः । तदुभयनिराकरणार्थं स्वविक्रममिदं सृजतोऽपि चेतो युञ्जीत । किञ्च, कर्मणा जायते सर्वथा शमलम्, सृज्यानां सर्वथा हिताकरणात् । तच्च शमलं यथा विजह्याम् ॥ २३ ॥

वेदविस्मरणं यथा न स्यात्, रूपसृष्टेर्नामाधीनत्वात् कर्मबोधनार्थं च वेदोऽपेक्ष्यत इत्याह—

**नाभिह्रदादिह संतोऽम्भसि यस्य पुंसो विज्ञानशक्तिरहमासमनन्तशक्तेः ।**
**रूपं विचित्रमिदमस्य विवृण्वतो मे मा रीरिषीष्ट निगमस्य गिरां विसर्गः॥२४**

* नाभिह्रदादिति । इहाऽम्भसि सतो यस्य पुंसो नाभिह्रदात् अहमासम्, तस्यैवाऽनन्तशक्तेर्विचित्रं रूपं विवृण्वतो मे गिरां विसर्गो वेदो मा रीरिषीष्ट नाशं माऽपगच्छतु । इह सत इत्यग्रे तिरोभावात् प्रश्नानुपपत्तिः । स्वत एवोत्पन्नत्वात् अन्योऽदृष्टः । विज्ञानशक्तित्वाद्विस्मरणानौचित्यम् । विचित्रं रूपमिति विस्मरणे हेतुः । नाभिह्रदादित्यन्वेषणक्लेशसूचनम् । अनन्तशक्तेरित्यविस्मरणदानसामर्थ्यम् । अहमिति यत्कृपया एतावत्त्वम्, सा कृपा इमेऽपि निर्वाह्येति सूचितम् । अस्य रूपमिति वचनात् 'हलान्तं ब्रह्मवर्चसम्' इति न्यायेन वेदस्फुरणहेतुधर्मनाशः सूचितः । चकाराद्भगवदपराधश्च । विशेषेण परित्यागः सवासनम्, न प्रायश्चित्तवत् । 'रिष हिंसायाम्' इति धातोः सन्नन्तात्लुङ्, (अडभावश्च माङ्योगात्) 'ऋ गतौ' इत्यस्याऽऽशीर्लिङि रीङादेशे कृते वा रूपम् (?) । सर्वथा छान्दसाश्रयणं केनाऽप्यंशेन 'श्नाम्यस्तयोः' इति (?) ह्रस्वेऽपि छान्दस ईकारादेशे 'झलोझलि' इति षलोपः (?)। विविधः सर्गो वेदे, ब्रह्मणः सर्वमेव वाक्यं वेदरूपमिति वा । निगमस्य वेदस्य गिरामिति देवताशब्दान्तरव्यावृत्त्यर्थमुक्तम् । मा वेदो विस्मृतो भवत्विति वक्तव्ये, यत् प्रकारान्तरेण कथनम्, वरेण स्मरणमात्रव्यावृत्त्यर्थम्, यथाऽन्यदीयमपि स्मरति । अत एव मा लुप्यतामिति प्रश्नः ॥ २४ ॥

संतोषपूर्वकं विषाददूरीकरणं प्रार्थयते—

**सोऽसावदभ्रकरुणो भगवान् विवृद्धप्रेमस्मितेन नयनाम्बुरुहं विजृम्भन् ।**
**उत्थाय विश्वविजयाय च नो विषादं माध्व्या गिराऽपनयतात्पुरुषः पुराणः॥२५**

---

प्रकाशः।

* नाभिह्रदादित्यत्र । अस्य रूपमिति वचनादिति । 'अस्य रूपं विवृण्वतः' इति वचनात् । अत्र मूले अस्य प्रपञ्चस्याऽऽकारं विवृण्वता विशेषेणाऽङ्गीकुर्वत इत्यर्थो बोध्यः । विचित्रमित्यत्र 'च चित्रम्' इति पाठमङ्गीकृत्याऽऽहुः—चकारादित्यादि । तद्रूपाङ्गीकारेण सिद्धं दोषमाहुः-विशेषेणेत्यादि । सवासनगिरां त्यागो जात इति दोषोऽभूदित्यर्थः । प्रश्न इत्यत्र 'प्रार्थना' इति पाठः प्रतिभाति ।

---

१ सृज्यार्दनाय् क. २ अन्याप्रश्नः क. ३ वेदास्फुरण. क. ४ भगवदपराधं च. क ५ [ ] एतच्चिह्नान्तर्गतः पाठोऽत्र नास्ति किन्तु केनाप्यंशेनेत्येतदनन्तरमस्ति क. ख. घ. ङ. च. ६ वदता क

■ सोऽसाविति । असौ उत्थाय मे विषाद माध्व्या गिरा अपनयतादिति सबन्धः । प्रार्थितदान-सामर्थ्यनिरूपणार्थं स इति पूर्वोक्तनिर्देश । अदभ्रा करुणा यस्य, दयैव प्रार्थितदाने हेतु । भगवानिति प्रार्थनीयत्वम् । विरूढप्रेमस्मितेन । भक्तक्लेशस्मरणेन भक्ते विरूढा भगवत प्रीतिर्भवति । क्लेशाभावार्थं शास्त्राग्रहव्यावृत्तये किञ्चिन्मोहनमपि करोति । तदा भगवतो ज्ञानशक्ति रूक्षत्वाभावाय अम्बुनि शीतले विषयसुखे सयुक्तेति जीवोऽपि विषयसुखस्पृष्टो भवति । तदाह—नयनमेवाऽम्बुरुहमिति । तस्य निजृम्भा विशिष्टो विकाश । ज्ञानशक्तिरतिविलसिता सर्ववस्तुयाथात्म्य बोधयन्ती क्लेश सर्वथैव दूरीकरोति । विशिष्टश्च विकाश कार्येऽपि तथोद्गमपर । उत्थिता जगत्सृष्टिरनलसा भवतीत्युत्थायेत्युक्तम् । विश्व-विजयाय चेति । विश्वस्मिन् विजय स्वभावादिव्युदासेन स्वाभिप्रेतविधित्सा, तत् विश्वस्मिन्नेव । चक्राद्विश्वस्य स्वानुगुणतायै । नो विषादं पूर्वोक्तमस्मद्विषादम् । न इति स्वान्तस्थितभूतसहिताभिप्रायम् । माध्व्या गिरेति स्नेहप्रतिपादकेन वचनेन ईश्वराज्ञाया काठिनत्वशङ्कयोक्तम् । पुराणः पुरुष इति पिता-महत्वेन समत्वाय । नयनाम्बुरुहविजृम्भणं विश्वविजयरूपेष्टसिद्धौ विषादनिराकरणे च हेतु, वाणी च । परमेक कर्तृप्रविष्टमलौकिकद्वारा तदुभयकर्तृ, एक तु लौकिकद्वारा । एतत्सर्वं कार्याभिनिविष्ट करिष्यति नवेति संदिह्य पुरुषोत्तमभाव तत्र निरूपयति—पुराण इति ॥ २५ ॥

स्वार्थं सर्वं प्रार्थितमिति ब्रह्मकल्पवद्भक्तिप्रहाभावात्, बहुकालभोगेन मध्येऽपराधसम्भवाद्गुणत्रयस्य व्यवधायकं बोधयन् चिरकालेनोत्तर दत्तवानित्याह—त्रिभि —

## मैत्रेय उवाच ।

**स्वसंभवं निशाम्यैवं तपोविद्यासमाधिभिः ।**
**यावन्मनोवचः स्तुत्वा विरराम स खिन्नवत् ॥ २६ ॥**

* स्वसभवमिति । यावज्ज्ञानं ब्रह्मणो भगवद्विषयक जातम्, तपसा, उपासनया, समाधिपर्यन्तयोगेन च । स्वसंभव स्वपितरम् । एवं पूर्वोक्तप्रकारेण निशाम्य ज्ञात्वा । स्वस्य यावन्मन सामर्थ्यं तावत् कल्पयित्वा, यावद्वाचा वक्तु शक्यं तावत् स्तुत्वा, तूष्णीं स्थिते भगवत्यनवसरोऽय वेति संदिह्य स्वयमपि तूष्णीं स्थित । भगवन्त प्रसन्नवदन दृष्ट्वा पूर्वखेदस्याऽप्यनुवृत्तत्वात् खिन्नवदित्युक्तम् । यथा यथा स्तूयते तथा तथा ज्ञात इति ज्ञानमप्यन्ते निरूपितम् ॥ २६ ॥

मध्ये भगवद्विचारोऽपि कालविलम्बहेतुर्जात इत्याह—

**अथाऽभिप्रेतमन्वीक्ष्य ब्रह्मणो मधुसूदनः ।**

---

प्रकाशः

■ सोऽसावित्यत्र । कार्येऽपि तथोद्गमपर इति । व्यष्टिवर्गेऽपि ज्ञानोद्गमपर । विश्वस्मिन्नेवेति । सर्वेष्वे-व । परमेकमित्यादि । एक नयनाम्बुरुहविजृम्भणम् । कर्तृप्रविष्टम्, चतुर्मुखे समागतम्, भयकर्तृ उभयोरिष्ट-प्राप्त्यनिष्टनिवृत्त्यो कर्त्रित्यर्थ । एकं त्विति । वाणी तु ।

* स्वसभवमित्यत्र । निरूपितमिति । 'निशाम्य' इति पदेन निरूपितम् ।

---

१ शास्त्राग्रह क घ २ ज्ञायत ग

**विषण्णचेतसं तेन कल्पव्यतिकराम्भसा ॥ २७ ॥**

**अथेति** । आनन्तर्यं कालविलम्बात् । अभिप्रेत स्वसमानज्ञानैश्वर्यं प्रार्थयत इति । अन्वीक्षणं निश्चय, तस्मिन् दत्ते वा कालान्तरे अपकारो न भवेदित्यन्वीक्षा । **ब्रह्मण** इत्यधिकारित्वम्, तेन तथा प्रार्थनायामपि नाऽपराध । **मधुसूदन** इति तद्धिताचरणं भगवतः स्वाभाविकम् । यथा अनिष्ट निवर्तयति तथेष्ट सपादयतीत्यर्थ । **निषण्णचेतसमिति** दया । अधिकारित्वात्, तस्य शक्यत्वाच्च साधनोपदेश एव। **तेनेति** पूर्वोक्तेन भगवद्रहितेन । भगवदीयत्वे तु तस्योद्वेगो न स्यात्, भगवदीयकार्ये चानुगुण्य स्यात् । अभगवदीयत्वार्थमाह—**कल्पव्यतिकराम्भसेति** । कल्पस्य व्यतिकरो नाश, तत्साधकेनाऽम्भसा । तस्मादग्रिमभगवच्चरित्र तस्य दु.खनिवारकमपीत्येतदुक्तम् ॥ २७ ॥

स्वार्थं चैतदु क्तम् । भगवत्कार्यार्थं तु यद्दु ख तत्साक्षादेव निवारयतीत्याह—

**लोकसंस्थानविज्ञान आत्मनः परिखिद्यतः ।**
**तमाहाऽगाधया वाचा कश्मलं शमयन्निव ॥ २८ ॥**

+ **लोकसंस्थानविज्ञान इति** । लोकाना सम्यक् स्थान यथोपयोग देहादौ स्थिति, तद्विषयकज्ञानार्थं **परिखिद्यतः** परित खेद प्राप्नुवतो ब्रह्मण । **आत्मन** एव हेतो, आयत एव साधनेन साध्यमिति । साधनमकृत्वैव साध्यप्रेप्सुः खिन्नो भवत्येव । तपोऽपि शीघ्रमेव निवर्तितमिति भगवतो विलम्बः। तदर्थमेवशयान एव भगवानाविर्भूत । स तु तदकृत्वैव उत्थाने भूत्वा, स्तोत्र प्रार्थना च कृत्वा, तूष्णीं स्थित । एतादृशमपि त भगवानाह । **अगाधा** वाणी भगवत, अभिप्रायाज्ञानात् । कश्मलमुभयविधम्, **शमयन्निवेति** साधनोपदेशात् ॥ २८ ॥

। तत्र प्रथम ज्ञानवुद्धिसयोगे उत्तरमाह—मा वेदेतिदशभिः । वाक्यैरेव चतुर्थोत्तर भवति, द्वितीयं तु वरदानादेव, तृतीये त्वल्प प्रयासः, अतः सपरिकर प्रथममेवोत्पादयति—आलस्याभावतपसी भगवज्ज्ञानसाधने । सर्वत्राऽन्वीक्षणं चैव ज्ञानेनैव मलक्षति ॥ १ ॥ चरित्रपरता हेतुर्मलाभावे विचारितः स ज्ञानेनैव ससिद्धो ह्यतस्तत्फलमीर्यते ॥ २ ॥ सुखे हेतुश्च तज्ज्ञान स्वसमन्धनिवेशणात्।

---

प्रकाश ।

+ लोकेत्यत्र । तदकृत्वेति । तप अकृत्वा ।

। मा वेदगर्भेत्यत्र । नन्वत्रोत्तरे पञ्चदशश्लोका इति कथं दशभिरित्युच्यत इत्याकाङ्क्षायामाहु—वाक्यैरित्यादि । चतुर्थोत्तरमिति । विषाददूरीकरणस्योत्तरम् । द्वितीयमिति । चित्तस्य भगवच्चरित्रपरत्वम् । तृतीय इति । वेदाविस्मरणे । प्रथममिति । ज्ञानवुद्धिसयोगम् । अतो दशोक्ता इत्यर्थ । पञ्चदशानामप्यर्थं कारिकाभिर्विचारयन्ति । तत्र प्रथमया चतुर्णामर्थ उक्त । तत्र सर्गसाधने आलस्याभावोपदेश प्रथमार्थः, भगवज्ज्ञानार्थं तपस उपदेशो द्वितीयार्थ, सर्वत्राऽन्वीक्षण सर्वत्र युक्त्या परीक्ष्य भगवदीक्षण तृतीयस्याऽर्थ, भगवदीक्षणेन मलक्षतिश्चतुर्थस्येति । पञ्चमस्याहु—चरित्रेत्यादि । चरित्रपरताहेतुर्दर्शनप्रकारविशेषः । स मलाभावे सति भगवता विचारित । हि यतो हेतो, स मलाभाव ज्ञानेन सम्यक् प्रकारेण सिद्ध । अतो हेतोर्ज्ञानफल स्वाराज्य पञ्चम ईर्यते। तथा च तदपि ज्ञानवुद्धिसयोग स्यैव परिकर इत्यर्थः।षष्ठस्याहु—सुखे हेतुरित्यादि। तत् पूर्वोक्त मलनिवर्तक ज्ञानमेव। चोऽवधारणे। स्वसम्ब-

गर्वाभावे वरदानान्नाऽन्यथेति निरूपितम् ।३। स्वाभाविकस्य दोषस्य निवृत्तिश्चाप्यनुग्रहात् । मत्स्वरूपस्य विज्ञानं जातमेव तदेव तत् । ४ । मया तथैव च कृतमाविष्कारः स्तुतौ कृतः। ममैवाऽनुग्रहात्सर्वमित्येषा ह्युपसंहृतिः । ५ । द्वितीयस्योत्तरं वेदैश्चतुर्थोऽप्युक्त एव हि । भवेदिति कृतं स्तोत्रं चरित्रं भक्तिहेतुकम् । ६ । नाऽन्यत्र विनियोक्तव्यं भक्तिर्नित्या न साधनम् । वेदाविस्मरणे हेतुर्देह एव कृतः पुरा । तदाहैकेन तेनैते कला श्लोका निरूपिताः । ७। तत्र प्रथममालस्याभावमाह—

## श्रीभगवानुवाच ।

मा वेदगर्भ ! गास्तन्द्रीं सर्गे चोद्यममावह ।
तन्मयाऽऽपादितं ह्यग्रे यन्मां प्रार्थयते भवान् ॥ २९ ॥

हे वेदगर्भ तन्द्रीं मा गाः आलस्यं मा कुर्वित्यर्थः । सर्गे उद्यमं चाऽऽवह सर्गकरणार्थमुद्युक्तो भव । चकारात्साधने मतिः कर्त्तव्या । 'साधनमेव न जानामीति चेत्तत्राऽऽह—तन्मयाऽऽपादितमिति । यन्मां त्वं साधनं प्रार्थयसे, तन्मया पूर्वमेवाऽऽपादितम् । हि युक्तोऽयमर्थः, अन्यथैतावद्दूरे साधनपरम्परा न भवेत् अतः साधनस्य सिद्धत्वादालस्यं त्यक्तव्यमिति भावः ॥ २९ ॥

ज्ञानार्थं च तपः कुर्वित्याह—

भूयस्त्वं तप आतिष्ठ विद्यां चैव मदाश्रयाम् ।
ताभ्यामन्तर्हृदि ब्रह्मन् ! लोकान् द्रक्ष्यस्यपावृतान् ॥ ३० ॥

× भूयस्त्वमिति । यथा पूर्वं तपः कृतम्, तथैव ततोऽपि भूयस्तपः कर्त्तव्यम् । पुनःपदादिपरित्यागेन भूयःपदप्रयोगेण अर्थद्वयमभिप्रेतमिति ज्ञायते । तपसि आस्था कर्त्तव्या, विद्या मदुपासनार्थं कर्त्तव्या । सा चोपासना मद्विषयैव । ताभ्यामुपासनातपोभ्यां हृदयमध्य एव अपावृतान् लोकान् द्रक्ष्यसि । ब्रह्मन्निति संबोधनं तदधिकारद्योतनार्थम् । न हि ब्रह्मभावव्यतिरेकेण कश्चित्तस्मिन् लोकान् द्रष्टुमर्हति । अपावृतान् मदीयान्, अन्ये तु त्रिविधा जीवाः कालादिभिरावृता एव भवन्ति । सर्वेषामेव जीवानामपावृतत्वं तु त्रैविध्यं न स्यादिति केचित् । परमार्थतो वा अपावृताः सर्व एव ॥ ३० ॥

---

प्रकाशः।

न्धविशेषणात् । भगवत्संमन्धविशेषणात् । सुखे हेतुः सुखजनकम् । तत्र हेतुः—ब्रह्मकल्पे गर्वाभावार्थं वरदानात् । स वर इदानीमप्यनुवर्तमानो नाऽन्यथा न कुण्ठित इति निरूपितम्—अनुग्रहस्य वर्षीयस्त्वकथनेन बोधितमित्यर्थः । सप्तमस्याऽऽहुः—स्वाभाविकस्येत्यादि । स्वाभाविको दोषो रजोगुणः । अष्टमस्याऽऽहुः—मदित्यादि । तदेव तादिति । बुद्धौ संयोजनार्थं यत् ज्ञानं त्वया प्रार्थितम्, तदेव यच्च जातम्, तन्मया संयोजितमित्यर्थः । तत्र गमकं नवमे उक्तमित्याहुः—मयेत्यादि । दशमस्याहुः—ममेत्यादि । इत्येषा ह्युपसंहृतिरिति । एष ज्ञानबुद्धिसंक्रान्त्युपसंहारः । अग्रिमाणां चतुर्णामाहुः—द्वितीयस्येत्यादि । उक्त इति । आधासनस्य सर्वेष्ववोक्तत्वादुक्त एव भवेदित्यर्थः । कथं भवेदित्याकाङ्क्षायां प्रकारत्वेन चतुर्णां तात्पर्यमाहुः—कृतमित्यादि । एतावद्दूर इति । दर्शनपर्यन्तम् ।

× भूय इत्यत्र । तदाधिकारद्योतनार्थमिति । ब्रह्मभावाधिकारद्योतनार्थम् । केचिदिति। इदं न श्रीधरमतम् ।

---

१ गर्वाभावा ख. ग. घ. ङ. २ विशिष्यात्, घा. विशिष्यार्थ घा. ३ इत्याकाङ्क्षायां. घा.

**तत आत्मनि लोके च भक्तियुक्तः समाहितः ।**
**द्रष्टाऽसि मां ततं ब्रह्मन् ! मयि लोकांस्त्वमात्मनः ॥ ३१ ॥**

* ततो भगवानात्मानं प्रजावदन्तरतमान् लोकांश्च दृष्ट्वा( ? )आत्मत्वेन ज्ञानात् स्वस्मिन् लोके च भक्तिर्भविष्यति । स्नेहांशोऽस्त्येव, माहात्म्यस्य दृष्टत्वात् । स्नेहो माहात्म्यं च मिलितं भक्तिर्भवति । लोके च अपावृतत्वदर्शनान्माहात्म्यज्ञानम्, स्वान्तरत्वात्स्नेहः, एवमुभयत्र भक्तियुक्तः । तत्रैको दोषः सम्भवति, भगवतस्तुल्यता । तदभावार्थं समाहितो भवेत् । एतदुभयात्मज्ञानं भक्तिश्च न स्वतन्त्रा, किन्तु भगवज्ज्ञानार्थमिति, तज्ज्ञानं कदा भविष्यतीति सावधानः । तदा मां द्रक्ष्यसि । स्वमध्ये लोकान् लोकमध्ये च मामिति, यत्रैव भक्तिस्तन्मध्ये स्थिताः प्रकाशन्ते । अतः तत्त्वमस्याद्यपि बोधनं स्वरूपे ब्रह्मणि भक्त्यर्थम् । ततः स्वस्मिन्नेव स्थितं भगवन्तं द्रक्ष्यतीति । ननु स्वस्मिन् लोके च भक्तौ कथं भगवत्साक्षात्कारः ? तत्राऽऽह–**ततमिति** । सर्वत्र व्याप्तम् । पुनर्ब्रह्मन्निति संबोधनं प्रकृतोपयोग्यधिकारसूचकम् । तदा मयि भक्तिरस्त्येव । तदा तानेव मद्गतानपि द्रक्ष्यसीत्याह–**आत्मसम्बन्धिनि मयि लोकानिति** ॥ ३१ ॥

नन्वेवं ज्ञानस्य किं प्रयोजनमित्याशङ्क्य खण्डशो ज्ञानप्रयोजनान्याह । तत्र लोके विततं भगवज्ज्ञानं सर्वदोषनिवर्तकम्, भगवदधिष्ठानत्वेनैव सर्वस्य ज्ञातत्वान्न कोऽप्यग्रे दोषः संभवति । ' यो मामजमनादिं च ' इति वाक्यात् भगवज्ज्ञाने सर्वपापक्षयः सिद्धः । अतो विततज्ञानं यादृशमपेक्ष्यते, कश्मलनिरसने, तादृशं रूपमाह—

**यदा तु सर्वभूतेषु दारुष्वग्निमिव स्थितम् ।**
**प्रतिचक्षीत मां लोको जह्यात्तर्ह्येव कश्मलम् ॥ ३२ ॥**

+यदा त्विति । सर्वभूतेषु यथा दारुष्वग्निस्तथा चेदात्मानं विततं पश्यति, नत्वाकाशवत् । स हि लोकैरावृतस्तत्तदपगममात्रेण प्रकाशते, न तु मथनेनाऽग्निरिव । मथनेन चाऽयमभिव्यक्तो भवति । तथा योगेन, निरन्तरभावनया वा, मनसाऽऽत्मधर्षणेन बहिरार्द्रतानिराकरणार्थं तपसा च तदभिव्यक्तं भवति, स्थितं प्रथमत एव । सर्वेष्वपि दारुष्वेकस्मिन्नपि सर्वावयवे निर्गतोऽग्निस्तुल्य एव । एकश्च सः, भेदकप्रमाणाभावात् । एवं सर्वत्र विचारं कृत्वा योगेन भगवन्तं पश्यति । प्रतिचक्षणं परीक्ष्य दर्शनम् । तदैव सर्वेषां लोकानां सर्वकश्मलनिरसनं भवति । अतो लोकेऽप्ययमर्थः सिद्ध इति तव कश्मलनिरसने कः सन्देह इत्यर्थः ।

---

प्रकाशः ।

*तत इत्यादि । इत आरभ्याऽग्रिमश्लोकव्याख्यानम् । ननु लोकानां सावयवत्वज्ञानेन तेषु स्नेहमत्त्वेऽपि माहात्म्यास्फुरणात्तत्र कथं भक्तिरित्याकाङ्क्षायामाहुः–लोके चेत्यादि । समाहितत्वस्वरूपमाहुः–एतादित्यादि । प्रकाशन्ते इति । लोकाः प्रकाशन्ते । एतस्य वाक्यस्य ' तत्त्वमस्या'–दिवाक्योपबृंहणत्वायाऽऽहुः–अत इत्यादि ।

+ यदा त्वित्यत्र । खण्डश इत्यादि । नानाविधानि यानि सखण्डब्रह्मज्ञानानि, तेषां फलं श्लोकद्वयेनाऽऽहेत्यर्थः । स हीति । आकाशो हि । अयमिति । आत्मा । तदिति । ब्रह्म । एकस्मिन्नित्यादि । एकस्मिन्नपि निर्गतोऽग्निः सर्वावयवे तुल्य इति योजना ।

तर्ह्येनेति मध्ये कश्मलनिरसनं बाधितम् ॥ ३२ ॥

अन्यदज्ज्ञानद्वयमस्ति, स्वस्य ब्रह्मत्वेन ज्ञानम्, स्वस्मिन् प्रजाज्ञान च । भगवति प्रजाज्ञान सर्वेषामेवाऽस्तीति न तदत्र निर्दिश्यते, अन्ययो फलं स्वाराज्यम् । तदाह—

**यदा रहितमात्मानं भूतेन्द्रियगुणाशयैः ।**
**स्वरूपेण मयोपेतं पश्यन् स्वाराज्यमृच्छति ॥ ३३ ॥**

* यदा रहितमिति । भूतेन्द्रियगुणाशयै रहितमात्मानं स्वरूपेण चिद्रूपेण औडुलोमिमतवत् **मयोपेत मात्मान पश्यन्** । स्वाराज्यं स्वरूपानन्दानुभवम्, स्वस्मिन् विद्यमानेषु वा आधिपत्यम्, प्राप्नोति ॥ ३३ ॥

स्वस्मिन् विद्यमानान् लोकान् पुत्रानिव चेल्लक्ष्यसि, तदा त्वद्धृदये न कोऽपि दोष आलस्यादिरुद्भमिष्यतीत्याह—

**नानाकर्मवितानेन प्रजा बह्वीः सिसृक्षतः ।**
**नात्माऽवसीदत्यस्मिंस्ते वर्षीयान्मदनुग्रहः ॥ ३४ ॥**

—नानाकर्मवितानेनेति । यथा बहुकार्यकर्ता बहूनि काष्ठादीनि प्रसार्य यथोपयोगं सर्वं करोति, तथा देवतिर्यङ्मनुष्यादिभावजनकं कर्म प्रसार्य यथायोग्यं चेत्प्रजा स्रक्ष्यसि, तदा कर्मानुसारेण करणात् ते आत्मा अन्त करण नावसीदति न खिन्नं भविष्यति । इद ज्ञानमात्रेण न भविष्यतीति सहकार्यन्तरमाह—**अस्मिन्** कार्ये ते तुभ्य वर्षीयानेव ममाऽनुग्रहो वर्तत इत्यर्थः ॥ ३४ ॥

तस्याऽनुग्रहस्य स्वरूप वदन् तत्कार्यमपि विशदयति—

**ऋषिमाद्यं न बध्नाति पापीयांस्त्वां रजोगुणः ।**
**यन्मनो मयि निर्बद्धं प्रजाः संसृजतोऽपि ते ॥ ३५ ॥**

× ऋषिमाद्यमिति । आद्यमृषिं ब्रह्माणं त्वां पापीयान् रजोगुणो गर्वजनक , उत्पत्त्यादिविक्षेपकर्ता वा, न बध्नातीत्यनुग्रह । तत्र हेतु —यद्यस्मात्कारणात् तत्र मयि मनो निर्बद्धम् । भगवति निर्बद्ध मनः, गुणातीते शुद्धसत्त्वे वा, रजसा व्याप्त न भवति । कर्म निर्दिशति—प्रजाः संसृजत इति । सम्यगभिप्रायपूर्वकं प्रजा सृजतो मनो रजोगुणव्याप्त भवत्येव, कर्मस्वभावात् । कूपाद्बहि स्थितस्य शिरस्य कूपे लम्बमान पाद कदाचिदपि न पतति, तथा मयि निर्बद्ध मन. कदाचिदपि रजोव्याप्त न भवतीत्यर्थ । ३५ ।

+ ननु एतत् ज्ञाने भवति, मम तु यत् त्वद्विषयक ज्ञान जातम्, तत् प्रतीकज्ञानमाहोस्वित् स्वरूपज्ञानमिति संदेहं निराकरणार्थमाह—

---

प्रकाश ।

* यदा रहितमित्यत्र । पश्यन्निति । भवतीति शेष । + नानेत्यत्र । वर्तत इति । ब्रह्मकल्पीयवरादिदानमप्यनुवर्तते । × ऋषिमित्यत्र । कर्म निर्दिशतीति । रजोव्याप्तिजनकं कर्म निर्दिशतीत्यर्थ ।

+ प्रात इत्यत्र । नन्वेतदिति । ननु इत्यस्य अवन्यनम् । एतदिति भिन्न पदम् । प्रतीकज्ञानमिति । अतस्मिन् तदिति ज्ञान प्रतीकज्ञानम् । प्रतीपज्ञानमितिपाठेऽप्ययमेवार्थ पश्यति ।

ज्ञातोऽहं भवता त्वद्य दुर्विज्ञेयोऽपि देहिनाम् ।
यन्मां त्वं मन्यसे युक्तं भूतेन्द्रियगुणात्मभिः ॥ ३६ ॥

+ ज्ञातोऽहमिति । तुशब्दः पक्षं व्यावर्तयति । अद्येति पूर्वज्ञानं व्यावर्तयति । पूर्वं हि बहिःस्थितं भगवन्तं ज्ञात्वा क्रियया प्राप्तव्य इति ज्ञातवान्, तदद्येति व्यावर्त्यते । अन्तःस्थितो भगवान्, तपसा भक्त्या च आविर्भूतं भगवन्तं दृष्ट्वा, विचारपूर्वकं यत् ज्ञातवान्, एतज्ज्ञानम् । तदाह—ज्ञातोऽहमिति । ननु किमाश्चर्यम्, बहव एव ब्रह्मविदस्त्वां जानन्ति । तत्राऽऽह—दुर्विज्ञेय इति । देहिनामहं दुर्विज्ञेय एव । देहाभिमानिनः स्वदेहं पश्यन्तो मामपि पश्यन्तः कदाचिदपि न मां ब्रह्मत्वेन ज्ञातुं शक्ष्यन्ति । न ह्यन्तःकामे स्थिते कामिनीस्पर्शः कामोद्बोधको न भवति, तदभावे तु कामिन्यपि पुरुषान्तरवत्प्रतिभाति । एवं भगवानपि सच्चिदानन्दविग्रहः, प्राकृते विग्रहे विद्यमाने, तदभिमानवता अन्यत्र विनियोगात् नाऽऽत्मत्वेन दृश्यते । स्वविनियोगाद्भगवन्तमपि परं देहिनमेव मन्यन्ते, अतो देहिनां दुर्विज्ञेयः । किञ्च, यस्मात्कारणात् त्वमेव पूर्वं मां भूतेन्द्रियगुणात्मभिर्युक्तं मन्यसे । भूतानि पृथिव्यादीनि देहारम्भकाणि, इन्द्रियाण्युभयविधानि, गुणा विषयाः, आत्मा अन्तःकरणचतुष्टयम् । सर्वैरेव तत्त्वांशैर्युक्तम्, अन्यथा बहिरन्वेषणं न संभवति ३६

अत एव मया तुभ्यं मत्स्वरूपं न प्रदर्शितमित्याह—

तुभ्यं मद्विचिकित्सायामात्मा मे दर्शितो बहिः ।
नालेन सलिले मूलं पुष्करस्य विचिन्वतः ॥ ३७ ॥

तुभ्यमिति । मद्विचिकित्सायां मत्स्वरूपज्ञानेच्छायां मे आत्मा मया बहिर्न प्रदर्शितः, अन्यथा तवोत्पन्नमन्यथाज्ञानं स्वबुद्ध्या संवादि जातमिति तव स्वरूपज्ञानमेव न स्यात् । अतोऽन्तर्बहिः स्थितोऽप्यहं तव तथा ज्ञानं मा भवत्विति बहिः स्वात्मानं न प्रदर्शितवान् । न च वक्तव्यम्, मया न भ्रान्तमिति; अन्यथा जले अन्वेषणार्थं न गच्छेः । तदाह—नालेनेति । नालद्वारा सलिलस्य मध्ये पुष्करस्य मूलं विचिन्वतस्ते तुभ्यमिति संबन्धः ॥ ३७ ॥

तर्हीदानीं मया ज्ञातमिति किं प्रमाणम् ? तत्राऽऽह—

यच्चकर्थाऽङ्ग ! मत्स्तोत्रं मत्कथाभ्युदयाङ्कितम् ।
यद्वा तपसि ते निष्ठा स एष मदनुग्रहः ॥ ३८ ॥

यच्चकर्थाऽङ्गेति । यद्यस्मात्कारणात् हे अङ्ग, मत्स्तोत्रं चकर्थ । ननु स्तोत्रमात्रेण कथं स्वरूपज्ञानम् ? तत्राऽऽह—मत्कथाभ्युदयाङ्कितमिति । मम कथा, अभ्युदयश्चोभाभ्यामङ्कितम् । स्तोत्रेण भवता स्वज्ञानं सर्वं प्रकटितम् । तत्स्तोत्रं मत्कथया संबद्धम्, मदीयैव वार्ता तत्र कथिता । मत्कथेति वचना-

---

प्रकाशः ।

+ पक्षमिति । प्रतीकपक्षम् । अन्यत्र विनियोगादिति । देहादिसुखार्थं विनियोगात् ।

दन्यकथा तस्मिन् समारोप्य न कथितेति सूचितम्, किन्तु या कथा सा मदीयैव । विशेषतोऽपि तव ज्ञानं जातम्, यतो मदभ्युदयेनाऽपि अङ्कितम् । अभ्युदयो नाम सर्वोत्तमरूपं चरित्रम् । ननु कथं पूर्वं मम ज्ञानं न जातम्, पश्चाद्वा जातमिति । तत्राऽऽह—यद्वा तपसि ते निष्ठेति । यद्वेतिवचनात् पूर्वार्द्धं पुनरप्यनुषज्यते । यत्त्वया एतादृशं स्तोत्रं कृतम्, यद्वा ते तपस्येवं निष्ठा, एष सर्वोऽपि ममाऽनुग्रह एव । अतः पूर्वमनुग्रहाभावाददर्शनं पश्चादनुग्रहाद्दर्शनमिति । न तु तपसा दर्शनम्, तपस्त्वनुग्रहसूचकम् ॥ ३८ ॥

एवं तस्य ज्ञानबुद्धिसंयोगः पूर्वं जात एवेत्युक्त्वा तदुपपादितम् । इदानीं चित्तस्य भगवच्चरित्रपरता या प्रार्थिता, तत्राऽऽह—प्रीतोऽहमितिचतुर्भिः—

**प्रीतोऽहमस्तु भद्रं ते लोकानां विजयेच्छया ।**
**यदस्तौषीर्गुणमयं निर्गुणं माऽनुवर्णयन् ॥ ३९ ॥**

×चित्तं भगवच्चरित्रपरं तदैव भवति, यदि भगवान् प्रीतो भवति । प्रीतः केन जायत इति सन्दिग्धम् । तत्र भगवानाह—अस्त्विति । भगवांश्चेच्छुभाशंसनं करोति, तदा प्रीतो भवति । शुभाशंसनं परमेष्ठः करोति । अतः सर्वथा आराधितः परमेष्ठश्चेद्भवति, तदा कृत्या प्रीत्यनुसारेण व्यापारे क्रियमाणेऽपि तस्य कालादिवशात् केनाऽप्यंशेन तदानुगुण्यं चेन्न भवेत्, ततोऽपि भजने, पुनरेवं करणे, पुनर्भजने, अशक्यमिव भगवान् मन्यमानः सत्यवाक् सत्यसङ्कल्पस्तस्येष्टमाशंसते । तदा तस्य सत्यवाक्त्वात् सर्वप्रतिबन्धकनिवृत्त्या भगवत्प्रसादौपयिकमेव तस्य सर्वं सिद्ध्यति, तदा प्रसन्नो भवतीति नाऽन्योन्याश्रयः[1] । ते भद्रमस्त्विति योजनायामपि अयमेवाऽर्थोऽपेक्ष्यते[2] । अनुवादे तु अस्त्विति प्रार्थना नोपपद्येत । प्राप्तकालेऽपि लोटोऽनुवाद एव स्यात् । अतस्ते भद्रमेव, मद्गुणचरित्रपरता भविष्यतीत्यर्थः, लोकानां स्वाधीनकरणं त्वदभिलषितं सेत्स्यतीति । ननु चरित्रपरतैव ममाऽभीष्टा, न तु लोकानां विजय इति चेत्तत्राऽऽह—यदस्तौषीरिति । यदि लोकविजयेच्छा न स्यात्, तदैतावत्स्तोत्रं न कृतं स्यात्, एवं प्रकारेण च न कृतं स्यात् ।

प्रकाशः

× प्रीत इत्यत्र । ननु आशंसनेन प्रीतिः, प्रीत्या चा(?)मित्यारभ्य नाऽन्योन्याश्रय इत्यन्तम् । प्रसन्नो भवतीति । कृतकार्यत्वात् स्वत एव प्रसन्नो भवति । तथा चाऽनुग्रहेणाऽऽराधनम्, तेनेष्टत्वम्, इष्टत्वेन शुभाशंसनम्, तेन प्रीतिरिति नाऽन्योन्याश्रय इत्यर्थः । ननु योजनान्तरे को दोष इत्यत आहुः—त इत्यादि । अयमेवार्थोऽपेक्ष्यत इति । चित्तस्य चरित्रपरतारूपवरस्य प्रार्थितत्वात्तदा(द्रा)नव्याख्यानस्याऽऽवश्यकत्वात्तस्य च प्रीत्येकसाध्यत्वेन तदाशंसाया एवावश्यकत्वादुक्त एवाऽर्थोऽपेक्ष्यतेऽतोऽनावश्यकत्वमेव दोष इत्यर्थः । ननु 'प्रैषानुवाद(?)' इतिसूत्रे चकारेण लोटोऽप्यनुवृत्तिरस्तीति प्रकृते भद्रानुवाद एव लोडर्थोऽस्तु, नाऽऽशंसेत्यत आहुः—अनुवाद इत्यादि । प्रार्थनेति । चरित्रपरताप्रार्थना । तर्हि प्राप्तकाल एव लोडस्त्विति चेत्तत्राहुः—प्राप्तेत्यादि । तथा च भद्रस्यैव प्राप्तकालत्वं वक्तव्यम्, तत्तु भगवद्दर्शनादिना प्रत्यक्षत एव सिद्धमिति कस्याचिद्विषयस्याऽभावाल्लोटोऽनर्थक एवाऽनुवादः स्यादित्यर्थः । सिद्धमाहुः—अतस्ते भद्रमेवेत्यादि । तथा चाऽऽनुपूर्वीमनुरुध्यैवं व्याख्याने अयमेवाऽर्थः सिध्यतीत्यर्थः ।

[1] नाऽप्यन्योन्याश्रयः. ख. ग. घ. ङ. [2] अयमर्थो. ग.

गुणमयमनन्तगुणपरिपूर्णम्। निर्गुणं सत्त्वादिभिः प्राकृतैर्गुणैरतीतम् । निर्दोषपूर्णगुणविग्रहप्रकारेण मामनुवर्णयन् यदस्तौषीः, अतो ज्ञायते साभिलाषस्तादृशेषु गुणेष्विति ॥ ३९ ॥

तर्हि स्तोत्रमात्रेण कथमेतावत्फलं भविष्यति ? न हि स्वाभिलषितकीर्तनमात्रेण अभिलषितं प्राप्यते । तत्राऽऽह—

**य एतेन पुमान्नित्यं स्तुत्वा स्तोत्रेण मां भजेत् ।**
**तस्याऽऽशु संप्रसीदेयं सर्वकामवरेश्वरः ॥ ४० ॥**

**य एतेनेति** । अनेन स्तोत्रेण यश्चान्योऽपि स्तोत्रं कुर्यात्, तस्याऽप्यहं प्रसन्नः; किमुत तुभ्यम् । **एतेन** स्तोत्रेण **पुमान्** स्वतन्त्रः **नित्यं** नियमेन **मां भजेत्** । भगवत्परिचर्यायां पूजायां वेदं स्तोत्रं स्वयं कुर्वन्निवाऽर्थानुसन्धानपूर्वकं, त्वमिव, यः स्तूयात्; स्तुत्वा च परिचर्यां कुर्यात्; तस्य शीघ्रमहं प्रसन्नो भवामि । स्तोत्रं न परिचर्याङ्गम् । प्रसादः परिचर्याफलम्, ऐक्यं स्तोत्रफलम् । कालकृतदोषनिवर्तकमिति फलितम् । तेन किं भवेदित्याशङ्क्याऽऽह—**सर्वकामवरेश्वर इति** । सर्वे ये कामवरा अभिलषितपदार्थसिद्धयः, तेषामीश्वर इत्यतो मयि प्रसन्ने सर्वे कामास्तस्य स्वतः सिद्धा इत्यर्थः ॥ ४० ॥

*ननु किं परम्परया ? स्तोत्रेण कामा एव फलिता भवन्तीति कुतो नोच्यते ? तत्राऽऽह—*

**पूर्तेन तपसा यज्ञैर्दानैर्योगैः समाधिना ।**
**राद्धं निःश्रेयसं पुंसां मत्प्रीतिस्तत्त्वविन्मतम् ॥ ४१ ॥**

* **पूर्तेनेति** । **पूर्तं** खातादि, **तपः** कृच्छ्रादि, **यज्ञा** अग्निष्टोमादयः साधनत्वेन कृताः, **दानानि** तुलापुरुषादीनि, **योगा** आत्मसंयमादयः, **समाधि**श्चित्तैकाग्र्यम् । एवं बाह्यधर्मेण केवलं भोगनिरोधेन क्रियाभावरूपशारीरेण, वैदिककायवाङ्मनःकृतेन, लोकोपकाररूपेण इन्द्रियान्तःकरणनिरोधेन च सर्वप्रकारेणाऽपि धर्मेण यत्फलं सिध्यति । नितरां च श्रेयोरूपं मोक्षरूपमपि । तत्र विचारे क्रियमाणे किं फलमिति, तदेव फलं यत्फलमेव, न साधनम्, नाऽप्यफलम् । तत्र मोक्षस्याऽपि सर्वाभिलषितत्वाभावात् वैषयिकसुखानिवर्तकत्वेन न तत्फलमेव । यथा वैषयिकाणां गाथा—'अपि वृन्दावने शून्ये शृगालत्वं स इच्छति । न तु निर्विषयं मोक्षं कदाचिदपि गौतम !' इति । अतः सर्वसाधारणमेकं निर्णेतव्यम्, यत्सर्वेषामेव सर्वफलरूपं भवति । तत्र सतामयं निर्द्धारः—मत्प्रीतिरिति । तस्या एव तथात्वात् । ते हि राद्ध तत्त्वविदः सर्ववस्तूनां याथात्म्यं जानन्ति, अतस्तेषां संमतम् ॥ ४१ ॥

ननु बहूनां प्रीतिहेतूनामुक्तत्वान्मुख्यं तव प्रीतिसाधनं किमित्याह्वायाम्, स्वयं हेतुपूर्वकं जीवसम्मत्यर्थमाह—

**अहमात्माऽऽत्मनां धातः ! प्रेष्ठः सन् प्रेयसामपि ।**

---

प्रकाशः ।

* पूर्तेनेत्यत्र । एवमित्यादिभिस्तृतीयान्तैः पूर्त्तादीनां स्वरूपं विवृतं ज्ञेयम् । विचारे क्रियमाणे किं फलमितीति । किं फलमिति विचारे क्रियमाण इति योजना।

**अतो मयि रतिं कुर्याद्देहादिर्यत्कृते प्रियः ॥ ४२ ॥**

* अहमात्मेति। सर्वेषामात्मनामहमात्मा। यथा सर्वस्यैव गङ्गाजलस्य गङ्गा, यथा वा सर्वस्या अपि मृदः पृथिवी स्थूला, यथा वा पत्रशाखादीनां वृक्षः; एवमहं सर्वेषामात्मनामात्मा। धातरिति सावधानतया करणार्थं संबोधनम्। नन्वात्मत्वनिरूपणे किं फलम्? तव तु तदात्मत्वे हानिरेव पूर्णत्वात्, तेषां च क्लिष्टत्वात्। तेषामपि नोपकारः, स्वत एव दुःखितत्वात्। यद्वस्तुतो न भवति हितकर्तृ, स्वयं चेतनरूपम्, स्वतन्त्रपुरुषार्थरूपम्, सत्, तत्किं ज्ञानं भवेत्? यथा लोके स्वतोऽदाता ज्ञातोऽपि न दाता भवति। तस्मादनुवादार्थ एव सर्वोऽपि भगवद्वाद इत्याशङ्क्याऽऽह—प्रेष्ठः सन् प्रेयसामिति। प्रेयसामप्यहं प्रियः, अतः प्रीतिविषयत्वात् मयि रतिं कुर्यात्। देहादौ च रतिं न कुर्यात्, देहादिस्त्वात्मसंबन्धात्प्रियः। करोम्येवाऽहं सर्वमेव हितम्, परं मयि स्नेहाभावात् जीवास्तत्सुखं न गृह्णन्ति। अतो यदि मयि रतिं कुर्यात्, तदा स्नेहात् गृह्णीयात्, पश्चात् कृतार्थ एव भवेत्। ज्ञानमप्येतदर्थमेव, मत्कृतं गृह्णीयादिति। भिन्नतयाऽपि भजने भजनफलत्वेन गृह्णीयात्। तत् तस्याऽज्ञानात्। तद्विचारेणेदमपि मद्विचारेण न भवतीति नोच्यते। ज्ञानापेक्षयापि प्रीत्या शीघ्रं गृह्णातीति प्रीतिरेवोच्यते। तेभ्यः स्वकीयं सर्वमेव दीयत इति स्वातन्त्र्यमपि दत्तमिति कुर्यादिति बोध्यते। अतः प्रीत्यादिकमपि प्ररोचनार्थमेवोच्यते, वस्तुतस्तु मयि रतिमेव कुर्यात्, मत्कृतग्रहणार्थम्। प्रीतस्त्वहं सर्वदा स्वभावतः; अग्रहणादप्रीत एव, यथा स्वयमात्मानमेवाऽऽक्रोशति। तन्निवृत्त्यर्थं रतिरुच्यमाना नित्यप्रीतिपरत्वेनोच्यते। अनयैव भगवच्चरित्रपरता भवति। भगवत्कृतमेव चरित्रम् ॥ ४२ ॥

एवं द्वितीयं प्रश्नमुपपाद्य वेदादिविस्मरणलक्षणं तृतीयमुपपादयति—

**सर्ववेदमयेनेदमात्मनाऽऽत्माऽऽत्मयोनिना।**
**प्रजाः सृज यथापूर्वं याश्च मय्यनुशेरते ॥ ४३ ॥**

सर्ववेदमयेनेति। अयं तव देहो वेदमय एव, तेन देहाविरोधेन देहेनैव करणेन सर्वं कुरु। तावतैव वेदाः स्थास्यन्तीति भावः। ननु केवलवेदरूपस्य कथं करणत्वम्? न हि देहमात्रं करणम्, किन्तु प्रयत्नाविष्टम्। अतः स्वप्रयत्नमन्यत्र व्यापारयित्वा करणत्वेन दण्डादिर्व्यपदिश्यते, वस्तुतस्त्वात्मैव करणम्।

---

प्रकाशः।

* अहमित्यत्र। यथा गङ्गेत्यादिदृष्टान्तत्रयेण जीवपरमात्मनोरवयवावयविभावेनांशांशित्वम्, न तु प्रकारान्तरेणेति बोधितम्। करणार्थमिति। इतिकरणार्थम्। अनुवादार्थ इति। कर्मणा जायमानस्याऽनुवादार्थः। मयि रतिं कुर्यादिति। तथा च, रतिविधानार्थो भगवद्वादो नाऽनुवादार्थ इत्यर्थः। ननु हितकरणाभावे कथं प्रियत्वमित्याकाङ्क्षायामाहु—करोमीत्यादि। न गृह्णन्तीति। विरुद्धत्वभ्रमान्नाऽऽद्रियन्ते, प्रत्युत द्विषन्ति। ननु कृतार्थत्वं ज्ञानादपि भवतीति किं रत्येत्यत आहुः—ज्ञानमित्यादि। एतदर्थमिति। एतस्यैव विवरणं मत्कृतमित्यादि। रतेरत्र विधेयत्वमुक्तमिति फलाकाङ्क्षायामिदमुक्तम्। नन्वात्मत्वेन ज्ञाने रतिरेव फलमिति कथमेवमुच्यत इत्याकाङ्क्षायामाहुः—भिन्नतयेत्यादि। तदिति। अत्र ग्रहणम्। तर्हि तद्ग्रहणमत्र फलत्वेन कुत उच्यत इत्यत आहुः—तद्विचारेणेत्यादि। उच्यत इति। विधेयत्वेन इष्टतयोच्यते। तेभ्य इति। प्रियेभ्यः। इति बोध्यते इति। अनेन कर्त्रर्थप्रयोगेणाऽर्थाद्बोध्यते।

तत्राऽऽह—आत्मनेति । आत्मसहितेन देहेन एकभावापन्नेनोभयेन । आत्मा त्वम् । अनेन मद्गतमपि सामर्थ्यं तत्रैव दत्तमिति सर्वं त्वया कर्तुं शक्यमित्युक्तम् । ननु जीवा यथा आत्मानस्तथा अहमपीति, कथं मम सामर्थ्यं भवेत्तत्राऽऽह—आत्मयोनिनेति । आत्मा योनिः कारणं यस्य । मदुत्पन्नत्वात् तव सर्वसामर्थ्यं सिद्धमिति भावः । अतो यथापूर्वं प्रजाः सृज । याश्च प्रजा मय्यनुशेरत इति भगवदीयानामपि सृष्टचाज्ञा । एवं चतुर्विधा अपि जीवास्त्वया स्रष्टव्या इति ।

एतावदुपदिश्य भगवानन्तर्हित इत्याह—

## मैत्रेय उवाच ।

**तस्मा एवं जगत्स्रष्ट्रे प्रधानपुरुषेश्वरः ।**
**व्यज्येदं स्वेन रूपेण कञ्जनाभस्तिरोदधे ॥ ४४ ॥**

* **तस्मा इति ।** जगत्स्रष्टृत्वादेव तस्मै नाधिकं किञ्चिद्देयम् । ननु तत्साधनानि चेत्तदनुगुणानि न भवेयुः, तदा किं कर्तव्यमित्याशङ्क्याऽऽह—प्रधानपुरुषेश्वर इति । प्रधानं पुरुषश्च, तयोरीश्वरः । भगवदाज्ञया तावपि ससामग्रीकौ तदनुगुणौ भवतः । तावताऽपि तस्याऽज्ञानमाशङ्क्य एकवारं सर्वमेव जगत्प्रदर्शयामास, एवं कुर्विति ज्ञापनार्थम् । तदाह—व्यज्येदमिति । इदं जगत् प्रकटं कृत्वा । स्वेनैव रूपेणाऽभिव्यक्तिकरणे न हेत्वन्तरमुत्पत्त्यादिकमपेक्ष्यते, किन्तु स्वस्मिन्नेव शरीरे विद्यमानं जगत् साधारणं प्रकाशितवान् । स्वेन रूपेणेत्यग्रेऽपि संबध्यते, न तु तद्रूपं स्थापयित्वा गतः, किन्तु तेनैव रूपेण तिरोहितवान् । कञ्जनाभ इति तदतिरोधाने जगत्कर्तुं न शक्यत इति सूचितम्, न हि कश्चिद्भगवदीयो भगवत उपरि सृष्टिं कर्तुं शक्नोतीति ॥ ४४ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे नवमाध्यायविवरणम् ।

---

प्रकाशः ।

* तस्मा इत्यत्र । अभिव्यक्तिकरणे नेति । अत्र नेति भिन्नं पदं बोध्यम् ।

विशेषप्रश्नोत्तरविचारे अयमध्यायो जीवतुल्यतापरिहारमुखेनेश्वरत्वसाधनस्यैव विशेष इति बोध्यम् ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे नवमाध्यायविवरणं समाप्तम् ।

# दशमाध्यायविवरणम्।

जगतो भूतसर्गस्तु ब्रह्मा सोऽत्र निरूपितः।
भगवत्कृपया युक्तस्तादृशाऽस्य निदानता ॥ १ ॥
मात्राणि सर्वरूपाणि दश सृज्यान्यतोऽत्र वै।
दशमे विनिरूप्यन्ते मात्रात्व चापि कालतः ॥ २ ॥
कालेनैव गृहीतास्ते भोग्याः, भोक्ताऽन्यथा तु सः।
भूतानामत्र सर्वन्धो रूपणार्थं कृतिः पुरा ॥
ब्रह्मणा निर्मिता, प्राह, द्वय मात्रेति रूप्यते ॥ ३ ॥

## गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृत. प्रकाशः।

अथ दशमाध्याय विवरिषवोऽत्रावसररूपा सङ्गतिं स्फुटीकर्तुं पूर्वाध्यायमनुवदन्ति—जगत इत्यादि। ननु पूर्वं स्तुतिप्रसादयोर्भूतत्वमुक्तम्, ततो ब्रह्मज्ञानस्य भूतत्वमुक्तम्, किञ्च, पूर्वं ब्रह्मण पुरुषबुद्धिरूपत्वम्, इदानीं च भूतरूपत्वमुच्यत इति परस्परविरुद्ध कथमेतत् सङ्गच्छते ? इत्याकाङ्क्षाया तत्समाधानायाहुः—सोऽत्र निरूपितः भगवत्कृपया युक्त इति। तथा च 'सविशेषणे हि. .' इति न्यायेन भूतत्वं कृपाया पर्यवस्यति। सा च प्रसादरूपाऽपि स्तुत्याऽभिव्यक्तेति पूर्वं तयोस्तथात्वमुक्तम्। कृपा च 'ध्यज्येदम्' इति कथनादन्ततो ज्ञाने पर्यवस्यति। तेन पूर्वाध्याये तथोक्तम्। ज्ञानं च न केवल भूतत्वायाऽलम्, किन्तु आधारसहितमिति दैहिकमानससृष्टिभ्यामवगम्यते। तथा सति कृपायुक्तो ब्रह्मैव भूतत्वेन पर्यवस्यतीति तेषामत्रान्तर्भावादत्र तथोक्तम्। बुद्धिरूपत्व तु तदाधिदैविकत्वादिति पूर्वापरविरोधाभावात् सर्व सङ्गतमेवेत्यर्थः। एतमर्थं स्फुटमाहु—तादृशाऽस्य निदानतेति। अस्य ब्रह्मणो निदानता कार्यजात प्रति आदिकारणता तादृशा उक्तप्रकारकरूपकृता, न तु केवलेन केनापि रूपेणेत्यर्थ। यद्वा, बुद्धिरूपत्वमनेन बोध्यते। अतो न किमप्यनुपपन्नमित्यर्थ। प्रकृतार्थमाहु—मात्राणीत्यादि। यतोऽस्य निदानता कृपाज्ञानादियोगेन, अतोऽत्र दशमे नानारूध्य(प)वन्ति दशसृजा(ज्या)नि निरूप्यन्त इति। तथा च कार्यतागर्भोऽवसरः सङ्गतिरित्यर्थः। ननु मात्रानिरूपणे कालकथनस्य किं प्रयोजनमित्याकाङ्क्षायामाहु—मात्रात्वमित्यादि। तत्कथमित्याकाङ्क्षायामाहु—कालेनेत्यादि। सृज्या कालेन गृहीताः परिच्छिन्ना एव सन्तो भोग्याः, अन्यथा तु अपरिच्छिन्नत्वे तु स सृज्यवर्गो ब्रह्माभिन्नत्वाद्भोक्ता। तथा च भोग्यत्व मात्रात्वमिति तस्य कालकृतत्वात् ततो मात्रात्वमिति तदर्थं कालनिरूपणमित्यर्थ। अत्रैवमावस्य विवक्षितत्वे गमकमाहु—भूतानामित्यादि। अत्र सृज्यवर्गे रूपणार्थं समज्ञानार्थं ब्रह्मणा पुरा प्रथममेव भूताना सम्बन्ध कृत(तिः)निर्मिता। स्वरूपेणाकृतिरिति पाठे भूतसम्बन्धरूपा आकृतिर्देहविन्यासरूपा निर्मिता। प्राह। मैत्रेयोऽपि मात्रासर्गे वक्तव्ये 'तन्मात्रो द्रव्यशक्तिमान्' इति मात्रद्रव्यजनकशक्तिमत्त्व चेति द्वय प्राह। तादृशशक्तिमत्व च भोक्तृत्व विनाऽनुपपन्नमतो भोक्तृत्व चेति समुदित द्वय मात्रेति रूप्यते। तथा च 'भूतसर्गस्तृतीयस्तु' इत्यर्धश्लोकस्तद्रूपक इत्यर्थ।

१ सम्बन्धसमज्ञानार्थं. ग. घ.

*प्रथमतो ब्रह्मनिर्मितमात्रानिरूपणार्थम्, 'भगवदाज्ञया ब्रह्मा कथं कृतवानिति भगवत्सेवकधर्मज्ञानार्थम्, विदुरः स्वयमुल्लासेन पृच्छति —

## विदुर उवाच ।

अन्तर्हिते भगवति ब्रह्मा लोकपितामहः ।
प्रजाः ससर्ज कतिधा दैहिकीर्मानसीर्विभुः ॥ १ ॥

अन्तर्हिते भगवतीति । भगवति धर्मिण्यन्तर्हिते तद्धर्माणामप्यन्तर्भाव आवश्यक इति, ब्रह्मणा कथं जगत्स्रष्टुं शक्यत इति प्रश्नः । लोकपितामहत्वात् जनकस्याऽपि जनकत्वात् तज्जनितकार्यदर्शनेन स प्रपञ्चो जात एवेति सन्देहः । उत्पादने करणद्वयम्, देहो मनश्च । वाक् तु वैदिकसृष्टौ प्रविशति, अतः करणद्वयमेव । कतिधा प्रजाः ससर्जेति । प्रकारभेदे भगवदीयं ज्ञानमपेक्ष्यत इति तथोक्तम् । ननु देहेनैव करणमुचितम्, अतो मानस्यः कथं पृच्छ्यन्ते ? तत्राऽऽह—विभुरिति । सर्वप्रकारेण करणसमर्थः । १ ।

अग्रे निरूप्यमाणस्याऽपि जगतो भगवदीयत्वबोधार्थं पूर्वोक्तानपि प्रश्नान् स्मारयति—

ये च मे भगवन् ! पृष्टास्त्वय्यर्था बहुवित्तम ! ।
तान् वदस्वाऽऽनुपूर्व्येण छिन्धि नः सर्वसंशयान् ॥ २ ॥

ये च मे भगवन्पृष्टा इति । भगवन्निति संबोधनमविस्मरणे हेतुः । त्वयीति त्वत्समीपे । अर्था इति ते प्रश्नाः प्रयोजनरूपाः, अतः सर्वथा ज्ञातव्याः । बहुवित्तमेति संबोधनमुत्तरदाने हेतुः । तेषामानुपूर्व्येण कथनप्रार्थनं स्वबुद्ध्या ग्रहणार्थम् । उत्तरं च यथा निःसंदिग्धं भवति, तथा वक्तव्यम् । तदाह—छिन्धि नः सर्वसंशयानिति । न त्वयं पृथक्प्रश्नः ॥ २ ॥

पृष्टं द्वयमपि आदरेणाऽऽहेत्याह—

## सूत उवाच ।

एवं संचोदितस्तेन क्षत्त्रा कौषारवो मुनिः ।
प्रीतः प्रत्याह तान् प्रश्नान् हृदिस्थानथ भार्गव ! ॥ ३ ॥

---

प्रकाशः।

* एवमध्यायार्थं निरूप्याऽत्र विदुरप्रश्नोपक्षेपप्रयोजनं वदन्तो व्याख्यातुमारभन्ते—प्रथमत इत्यादि । तथा च, भगवच्चरित्रादिश्रवणेन भक्तानामत्युत्साहो भवतीत्येतज्ज्ञापनं प्रयोजनमित्यर्थः । एतेनोपोद्घातप्रसङ्गावेतस्य सङ्गती अपि बोधिते । विदुरमैत्रेयसंवादे तु 'पश्चादप्येतदीहनम्' इत्यन्तं विशेषप्रश्नद्वयस्योत्तरम्, तदग्रे [१] 'वद नः सर्गसंव्यूहम्' इत्यस्य 'कतिधा प्रतिसङ्क्रमः' इत्यस्य च विशेषतः प्रश्नस्य प्रयोजनं तूक्त(क्त)मे(व)। इति प्रश्न इति। इति हेतोः प्रश्न इत्यर्थः। सन्देह इति । प्रकारविषयः सन्देहः। तथा कार्यदर्शनं कारणधर्मतिरोभावश्चेत्युभयगत सन्देहबीजमित्यर्थः ।

---

१ नूत्रमे. पा.

एव संचोदित इति । प्रीतः प्रत्याहेति प्रथमप्रश्नोत्तरम् । पूर्वोक्तान् प्रश्नांस्तु अविस्मृतान् हृदि-स्थानेव । अथेति भिन्नक्रमेण, न तु प्रथमप्रश्नशेषतया । भार्गवेति संबोधन भगवच्छेषतया सर्वनिरूपणमिति ज्ञानार्थम् । बहुधा व्याख्यातानि तु पदानि पुनर्न व्याख्यायन्ते विशेषार्थाभावे ॥ ३ ॥

*तत्र प्रथमप्रश्ने अन्तर्हितोऽपि भगवान्, स्वकीयान् षड्गुणान् ब्रह्मणि स्थापयित्वा गत इति, ब्रह्मकृतानर्थान् पङ्क्तिः श्लोकैराह । तत्राऽपि निर्दुष्टेन कर्त्तव्यमिति दोषाभावार्थं श्लोकत्रयम् । तपो ज्ञान कृतिश्चैव दोषाभावश्च वर्ण्यते। आलोचन कृतिश्चैतदुपपादनमेव च ॥ १ ॥ प्रथम भगवदाज्ञा यथा जाता, तथा ब्रह्मा कृतवानिति धर्ममाह—

## मैत्रेय उवाच ।

**विरञ्च्योऽपि तथा चक्रे दिव्यं वर्षशतं तपः ।**
**आत्मन्यात्मानमावेश्य यदाह भगवानजः ॥ ४ ॥**

विरञ्च्योऽपीति । भगवानन्तर्हित । विरञ्च्योऽपि तथा भूत्वा, तत्रान्तर्हित , सन्, यथा भगवदाज्ञा जाता तथा कृतवान्। अन्तस्तथावस्थातिरोधानाभावे बहिर्जगत्कर्तृत्व न सम्भवतीति, तदुक्तमपीति। दिव्य वर्षशतमिति सध्यांशे कृतयुगस्य चतुर्थो भागो निरूपित , पूर्वं च चतुर्थ , तपसि अन्वेषणे च । चतुर्थे भागे तु सर्वपदार्थनिर्माण भविष्यति । तत उत्पन्नेषु सर्वेषु युगप्रवृत्ति । एतत्सर्वं सूचयितु दिव्य वर्षशतमित्युक्तवान् । केवलं तपोधर्मो भगवदीयो न भवतीति तपसि विशेषमाह—आत्मन्यात्मानमावेश्येति । भगवत्यन्त करणमावेश्य तप करण भगवदुक्तमित्येव कृतवान् । तदाह—यदाह भगवानज इति ॥ ४ ॥

ततो यज्जात तदाह—

**तद्विलोक्याब्जसंभूतो वायुना यदधिष्ठितः ।**
**पद्ममम्भश्च तत्कालकृतवीर्येण कम्पितम् ॥ ५ ॥**

तद्विलोक्येति । तपसा तस्य ज्ञानं जातम्, तज्ज्ञानविषयमाह—अब्जसंभूतो ब्रह्मा यदधिष्ठितः यत्पद्ममधिष्ठाय स्थित , तत्पद्मं दृष्टवान् । तस्य विलोकनं विशेषप्रकारेण, अतस्तद्गत सर्वमेव ज्ञातवानित्यर्थः । तत्कालकृतवीर्येण वायुना पद्ममम्भश्च कम्पितम् । वायुना कम्पितत्वज्ञानम्, वायोश्च प्रलयकालीनत्वम् । दैत्याशितेन वायोः परिज्ञानम्, तस्मिन्ननुपसहृते कार्ये कारण च न स्वस्थ भवेत् । कालेनाऽपि दैत्येभ्यो बल दीयते ॥ ५ ॥

---

प्रकाश ।

* विरञ्च्य इत्यत्र । तत्र(प्रथम)प्रश्न इति । प्रथमदैहिकीना सृष्टिप्रश्ने । कारिकायाम् । कृतिदोषाभावौ तृतीयश्लोकस्यार्धं । भगवानन्तर्हित इति । यथाऽन्तर्हितः । अपिशब्दार्थमाहुः—अन्तरित्यादि । तथावस्थातिरोधानादिति ( ? ) । प्रस्तुतावस्थातिरोधानात् ।

---

१ ज्ञातवान् ख

ततो धर्मज्ञानाभ्यां यत्कृतम्, तदाह—

**तपसा ह्येधमानेन विद्यया चाऽऽत्मसंस्थया ।**
**विवृद्धविज्ञानबलो न्यपाद्वायुं सहाऽम्भसा ॥ ६ ॥**

तपसेति । एधमानेन तपसा विद्यया च विवृद्धं विज्ञानस्य बलं यस्य, तादृशोऽम्भसा सह वायुं पीतवान् । नन्पासना पूर्वमेव निवृत्तेति कथमस्या ज्ञानबलजनकत्वम् ? तत्राऽऽह—आत्मसंस्थयेति । अन्तःकरणे सा नित्यतया स्थिता । मनसा ब्रह्मा नित्यमेव भगवत्परिचर्यां करोतीत्युक्तम् ॥ ६ ॥

एवं दोषाभावं निरूप्य भयकम्पादिहेतौ वायावम्भसि च निवृत्ते, ततो यत्कृतवान्, तदाह श्लोकत्रयेण । तत्र प्रथमं पूर्वज्ञानं तस्य प्रबुद्धमित्याह—

**तद्विलोक्य वियद्व्यापि पुष्करं यदधिष्ठितम् ।**
**अनेन लोकान् प्राग्लीनान् कल्पितास्मीत्यचिन्तयत् ॥ ७ ॥**

तद्विलोक्येति । यत् स्वेनाऽधिष्ठितं पुष्करं वियद्व्यापि विलोक्य, प्राक् पूर्वदिवसे, अनेनैव प्रकारेण अनेनैव च पद्मेन लोकान् कल्पितास्मि कल्पयितास्मीत्यचिन्तयत् । कल्पितास्मीति लुट् । अत्र चिन्तनं विमर्शः । ब्रह्मणः शतवर्षे शतं कल्पा भवन्तीति कल्प्यते । 'मत्स्यब्दं वृक्षवत् कल्पाः' इति वृक्षसाम्यात् तस्य वर्षान्तर एवाऽन्यथात्वं स्पष्टम् । तेनैकैकः कल्पः संवत्सराहोरात्रसङ्ख्यापरिमितः । मध्ये त्वतिसूक्ष्मभेद आकलयितुं न शक्यत इति न नामान्तरापादकत्वम् । तथा सति पद्मकल्पा अपि षट्चुत्तरशतत्रयपरिमिता भवन्ति । तदा पूर्वकल्पेऽपि पद्मेनैव जगन्निर्माणं कृतमिति 'अनेन लोकान् प्राग्लीनान्' इति विमर्शः संगच्छते ॥ ७ ॥

तदा पूर्ववदेव कृतवानित्याह—

**पद्मकोशं तदाऽऽविश्य भगवत्कर्मचोदितः ।**
**एकं व्यभाङ्क्षीदुरुधा त्रिधा भाव्यं द्विसप्तधा ॥ ८ ॥**

पद्मकोशमिति । तदा ज्ञानानन्तरम् । तदेव पद्मकोशमाविश्य एकं पद्मकोशमुरुधा व्यभाङ्क्षीत् । ननु भगवन्नाभिकमलं कथमेवं भङ्क्तुमर्हतीत्याशङ्क्याऽऽह—भगवत्कर्मचोदित इति । भगवदीयसृष्टौ भगवत एकं कर्माऽत्र संक्रान्तमस्ति, तेन प्रेरितः । तदा भगवत्कर्मणा प्रेरितभगवत्कर्मरूपत्वात् न तस्याऽपराधः क्वापि । तत्कम्य खण्डनाह—एकं व्यभाङ्क्षीदुरुधेति । एकमेव उरुधा व्यभाङ्क्षीत्, अवान्तरलोकभेदेन सहस्रशः खण्डान् कृतवान् । जातिभेदेन विभागे क्रियमाणे सत्त्वादिभिः कृत्वा त्रिधैव भाव्यम् । प्रसिद्धलोकव्यवहारेण भेदे क्रियमाणे द्विसप्तधा अभाङ्क्षीत्, चतुर्दशलोकभेदेन विभागं कृतवान् ॥ ८ ॥

ननु सर्वेषामेव लोकानां जीवाधिष्ठानानां क्रियमाणत्वात् कथं चतुर्दशलोकेष्वेव कोटिशो जीवसङ्घाः स्थास्यन्तीत्याशङ्क्याऽऽह—

---

१ कल्प्यते. क.

एतावाञ्जीवलोकस्य संस्थाभेदः समाहितः ।
धर्मस्य ह्यनिमित्तस्य विपाकः परमेष्ठ्यसौ ॥ ९ ॥

—एतावाञ्जीवेति । जीवानां स्थानभूतस्य लोकस्य संस्थया सम्यङ्मर्यादया भेदो विभाग एतावानेव चतुर्दशधैव । त्रिविधा एव हि सर्वे जीवाः । मध्ये त्रयो राजसाः, अहङ्कारस्य त्रिविधत्वात् । तामसाः सप्त, पञ्चमहाभूतानि मात्राः कार्यं चेति । चत्वारः सात्त्विकाः, अन्तःकरणस्य चतुर्विधत्वात् । अत्रैव हि सर्वे जीवाः समाहिता भवन्ति । सम्यगाहिताः। स्थानविभेदेन सम्यक् स्थापितो भेदः। नन्वेवं कथं सामर्थ्यं ब्रह्मणः ? भगवदाज्ञायामपि स्वतः सामर्थ्यस्याऽपेक्षितत्वादित्याशङ्क्याऽऽह—धर्मस्य ह्यनिमित्तस्येति । अनिमित्तस्य निष्कामस्य धर्मस्य दशशताश्वमेधस्य शतजन्मसाधितस्य विपाकः फलमयं परमेष्ठी। बहुजन्मसाधितधर्मफलत्वात् ब्रह्मणस्तथाकरणं युक्तमित्यर्थः । एवमाधारभूतं जगल्लोकानां मात्रात्वेन निरूपितम् ॥ ९ ॥

× आधेयभूतस्य लोकत्वात् मात्रात्वं न भविष्यतीत्याशङ्क्य, कालवशात् जीवस्यापि विषयत्वमिति कालप्रस्तावना । भगवत उत्पत्त्यादिकर्तृत्वं श्रुतवतः कालविभेदेन, कालमेव सर्वहेतुं मन्यमानस्य, काले जिज्ञासा उत्पन्ना । तदा पृच्छति विदुरः—

## विदुर उवाच ।

यदात्थ बहुरूपस्य हरेरद्भुतकर्मणः ।
कालाख्यं लक्षणं ब्रह्मन् ! यथा वर्णय नः प्रभो ! ॥ १० ॥

यदात्थेति । बहुरूपस्य हरेरद्भुतकर्मणो लक्षणं यदात्थ, तद्यथावद्वर्णयेति संबन्धः। कालो हि भगवतो लक्षणमसाधारणो धर्मः । जगत्कर्तृत्वं नाम जगत उत्पत्तिकाल इत्यर्थः । तल्लक्षणसहितो य आत्मा स भगवान् । अत एव बहिरपि भगवान् गरुडध्वजः । भगवतोऽतिसूक्ष्मत्वात् लक्षणमप्यतिसूक्ष्मं दुर्ज्ञेयम् । कलयतीति कालः, कलनं वा। सर्वस्याऽपि वस्तुन आकलनं ग्रहणं ज्ञानं वा भगवद्धर्मो भवत्ये-

प्रकाशः।

— एतावानित्यत्र । जीवानामित्यादि । एतेन लोकानां चतुर्दशत्वे तत्प्रकारेषु चोपपत्तिविवरणेन 'पुरुषावयवैर्लोकाः' इत्यनेन लोककल्पनायाः काल्पनिकतया पुरुषावयवत्वे पातालादीनामसङ्गतमिति यदाक्षिप्तम्, तत्समाहितं ज्ञेयम् । विभागस्य गुणविभागार्थत्वेन त्रिविधजीवस्थितिसंस्थार्थत्वेन प्रतिकल्पं क्रियमाणतया लोककल्पनाः, तन्मूलतया पुरुषावयवत्वाबाधकत्वादिति । एतेषां श्लोकानां निर्गलितमर्थमाहुः—एवमित्यादि । मात्रात्वेनेति । सूक्ष्मरूपत्वेन ।

× यदात्थेत्यत्र । राज्ञा काललक्षणस्याऽपृष्टत्वात् शुकोक्तौ कालप्रस्तावनायाः किं प्रयोजनमित्याकाङ्क्षायां तत्तात्पर्यमाहुः—आधेयेत्यादि । सूज्यवर्गस्य भोक्तृत्वाद्भोग्यत्वाभावेन मात्रात्वं नोपपद्यत इत्याशङ्क्य, कालतो देहसम्बन्धाज्जीवस्याऽपि भोग्यत्वमिति तेषां मात्रात्वाय कालप्रस्तावनेत्यर्थः । एतेन शास्त्रसङ्गत्यर्थमियं प्रस्तावनेति सैवाऽस्याः प्रयोजनम्, न राजप्रश्नपूर्तिरिति बोधितम् । विदुरप्रश्ने बीजमाहुः—भगवत इत्यादि । कालविभेदेनोत्पत्त्यादिकर्तृत्वं श्रुतवत इत्यन्वयः । तल्लक्षणसहित इति । कालाख्यलक्षणसहितः । कलयतीति काल इति । कलयती (?) कामधेनू । तथा च कलयत्युपादत्त इत्यर्थः ।

१ यथावद्वर्णय प्रभो । पा. यथा तद्वर्णय प्रभो । पा. २ उपादत्तमित्यर्थः. पा.

च । अत एव काल इत्याख्या यस्य लक्षणस्य, तस्य कलनं न साधारणम्, अद्भुतकर्मत्वात् । यथा आकलने जाते भगवानद्भुतं कर्म करोति, यथा वा आकलय्य एकः सन् बहुधा भवति, यथा वा आकलय्य सर्वेषां दुःखं स्वयं दूरीकरोति; मार्गत्रयं वा प्रकाशयति; तादृशस्य लक्षणभूतस्य कालस्य स्वरूपमवश्यं ज्ञातव्यम् । अतोऽस्माकं तज्ज्ञानार्थं त्वं वर्णय, समर्थत्वात् । तदाह–प्रभो इति ॥ १० ॥

एवं कालस्याऽवश्यं निरूपणीयत्वे असाधारणधर्मत्वात् कालं लक्षयति—

**मैत्रेय उवाच ।**

**गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः ।**
**पुरुषस्तदुपादानमात्मानं लीलयाऽसृजत् ॥ ११ ॥**

*गुणव्यतिकराकार इति । कालो ह्यमूर्तो धर्मः; अत एव न प्रत्यक्षः, किन्तु कार्यवशादनुमेयः । अतस्तस्य लक्षणं नेदमित्थतया वक्तुं शक्यम् । कालस्तदैव लक्षणं भवेत्, यदि धर्मिणो धर्मेभ्यः कार्याच्च विलक्षणः स्यात् । तदैवाऽऽसाधारण्यं भवेत् । तत्र त्रितयवैलक्षण्यार्थं लक्षणे विशेषणत्रयम् । तत्र प्रथमं गुणव्यतिकराकारः कालः । गुणानां व्यतिकरोऽन्योन्यसंश्लेष आकारो यस्य । अमूर्तत्वात् कार्यद्वारैव लक्षणम्, कार्यं पुनः प्रकृतेर्गुणसाम्यावस्थारूपायाः । येन भगवद्गुणेन गुणानां व्यतिकरो भवति–प्रथमतः सत्त्वादिरूपेण विभिन्ना भवन्ति, ततः क्षुब्धा अन्योन्यं च मिलिता भवन्ति–स गुणः काल इत्यर्थः । इदमेव च भगवत आकलनम् । क्रियाशक्तिरूपः प्रथमो गुणो मुख्यः, योऽग्रे प्रकटो जातः । तत्र क्रियाशक्तिभेदा अन्येऽपि सन्ति, तेषां विशेषनामानि वर्तन्ते । 'स ऐक्षत' इतीच्छा, 'सोऽकामयत' इति कामः । तथा तस्य लोकप्रसिद्धकार्यधर्मवत्त्वेन कार्याधेयतया न विशेषणं सिद्धम् । यथा मनोधर्मा इच्छाकामादयः, तथा न कस्यचित्कालो धर्मः । परं सर्वाधारत्वेनैव प्रतीयत इहेदानीमित्यादिशब्दैः । अतोऽयं निर्विशेषः । कस्यचिद्धर्मत्वे तत्र प्रतीयेत, घटे काल इति, भूमौ काल इति । प्रतीयते त्विह घट इति, तस्मात्सर्वविशेषरहितो गुणक्षोभहेतुः काल इति लक्षणम् । किञ्च, बहव एव धर्मा आकाशादीनां व्यावर्तका विशेषाः

---

**प्रकाशः।**

तस्य कलनमिति । भगवत्कृतं कलनम् । यथा आकालन इत्यादिना अद्भुतकर्मणः, बहुरूपस्य, हरेरिति पदत्रयमेवं क्रमेण व्याख्यातं ज्ञेयम् । मार्गत्रयमित्यादि । अस्मिन् पक्षे मूलोक्तक्रमेण कर्मज्ञानभक्तिप्रकाशत्वं बोध्यम् । तादृशस्येति । उक्तरूपस्य भगवतः ।

* गुणव्यतीत्यत्र । तदैवेति । उक्तत्रितयवैलक्षण्य एव । व्यतिकरस्वरूपमाहुः–प्रथम (त) इत्यादि । तथा च गुणाः कार्पासतन्तव इव प्रकृतेः पृथग्भूय पुनरन्योन्यमिलिताः पटावस्थामिव प्राप्नुवन्ति, सा गुणावस्था व्यतिकरः । स येन जायते स काल इत्यर्थः । इदमिति । गुणमेलकम् । तस्य मुख्यत्वे हेतुमाहुः–योऽग्र इत्यादि । निर्विशेषपदं व्याकुर्वन्ति–तत्रेत्यादि । तत्रेति । भगवति । तस्येति । कालस्य । कार्यधर्मवत्त्वेनेति । कार्यधर्मतुल्यत्वेन । अत्र वतिर्नतु मतुप् । एतदेव स्फुटीकुर्वन्ति–यथेत्यादि । अत इति । अव्याकृततया कार्यधर्मतुल्यत्वाभावेन, सर्वाधारतया कार्याधेयत्वाभावेन चोभयविधविशेषणरहितत्वात् । एवं निर्विशेषपदं व्याख्याय पदद्वयसिद्धं लक्षणमाहुः–तस्मादित्यादि । अत्र भगवतो विशेषाणां च वारणाय गुणक्षोभहेतुरिति, भगवदिच्छादीनां वारणाय सर्वविशेषरहित इति ज्ञेयम् । नन्वेवं लक्षणसिद्धौ तृतीयविशेषणस्य किं प्रयोजनमित्याकाङ्क्षायां तद्व्याकुर्वन्ति–किञ्चेत्यादिप्रतिष्ठित इत्यन्तम् । तथा

स्वतो विशेषराहित्ये भगवद्धर्मा सन्ति, अन्यथा नित्याना परमाणूनामतीन्द्रियाणा व्यावृत्तिर्न स्यात्, तद्व्यावृत्त्यर्थमाह—अप्रतिष्ठित इति। प्रतिष्ठा सामाप्ति पर्यवसानम्, तद्रहित इत्यर्थ। विशेषास्तु प्रतिष्ठिता अन्यथा परमाणूना परिच्छेदो न स्यात्। अतोऽसाविशेषोऽप्रतिष्ठितः काल। सर्व एव पदार्थ संतिष्ठते, कालस्तु न संतिष्ठते। एव कालस्य लक्षणमुक्त्वा, स गुणो भगवता किमर्थं गृहीत इति जिज्ञासायाम्, तस्य प्रासङ्गिक कार्यं गुणक्षोभरूपम्, जगदाधारत्वं वा, तस्य मुख्यप्रयोजन न भवतीति मुख्य प्रयोजनमाह—पुरुषस्तदुपादानमिति। पुरुषो भगवान् कारणरूप, स स्वगुणानेव कर्तृत्वादिभावापन्नान् कृत्वा जगत्करोति। तत्र कर्तृत्व स्वरूपधर्म एव भवति, क्रियाशक्तिस्तस्य निर्वाहिका। समवायिकारणं तु किं भवेत्? अविकृतैव सा भवति। सर्वत्र साक्षात्कार्येषु अविकृतमेव समवायिकारण भवति, यथा घटे मृद्रूपा पृथ्वी। सा खननादिना परिच्छिन्ना कर्तृक्रियया व्याप्ता उपादानत्वमापद्यते, एव भगवानपि आत्मानं सृजति कालमुपादानं कृत्वा। एकैव पृथिवी कुलालचक्रचीवरदण्डमृद्रूपा स्वधर्मैरेव स्वय घटरूपा भवति। तत्राऽन्ये सर्वे धर्मा कुलालादयो जीवसबन्ध प्राप्यैव कर्तृत्वादिभावमापद्यन्ते। कुलालशरीरे देवदत्तो जीव, दण्डे स्थावर, चीवरेऽपि कार्पास स्थावर एव, चक्रेऽपि पर्वत, विकारे तु विकार एव। एव सर्वत्र। तस्मादस्मिन्नर्थे न कोऽपि विकारः प्रविशति, (स) कर्तृधर्मव्यतिरिक्तो भगवद्धर्म काल। 'स आत्मान ँ स्वयमकुरुत' इति श्रुते। लीलयेति विशेषप्रयोजनाभाव। तदुपादानमतिसमीचीनं कर्तुं प्रयासाजनकमिति॥ ११॥

नन्वेतस्य कालस्य भगवत काऽपेक्षा? उपादान स्वरूप प्रकृतिर्वा भवतु। तत्राऽऽह—

**विश्वं वै ब्रह्मतन्मात्रं संस्थितं विष्णुमायया।**
**ईश्वरेण परिच्छिन्नं कालेनाऽव्यक्तमूर्तिना॥ १२॥**

विश्वं वै ब्रह्म तन्मात्रमिति। विश्व कार्यम्, ब्रह्म तन्मात्र यस्य। यथामहाभूतेषु शब्दादीना तन्मात्रता, सूक्ष्मावस्थारूपत्वात्। एव विश्वस्याऽपि ब्रह्मैव सूक्ष्मावस्थारूपम्। पूर्वावस्था ब्रह्म, उत्तरावस्था जगदिति। तस्योपसहारस्तिरोभावे विष्णोर्भगवतो मायया। विष्णू रक्षक, उपसहर्त्री तस्यैव माया। सम्यक्

---

प्रकाशः

त्व, कालगतविशेषस्योभयधर्मवत्त्वेन लक्षणदूषकत्वात्तद्व्यावृत्त्यर्थं तदित्यर्थ। एतेन कार्यस्याऽपि व्यावृत्ति। स्वेति। क्रियाशक्तिः। तथा च, यथा रस एव जिह्वा भगवत, तथा भगवतः क्रियाशक्तिरेव जगत समवायिकारण भवतीत्यर्थ। नन्वविकृताया कथ तथात्वमित्यपेक्षायामाहु—(सर्वत्रेत्यादि)। नन्वेव सत्यविकृत ब्रह्मैवोपादानमस्तु, किं क्रियाशक्त्येत्यत आहु—सा खननादिनेत्यादि। उपादान कृत्वेति। स्वक्रियापरिच्छिन्न स्वक्रियाव्याप्त च कृत्वा। एकस्यैव कथमुपादानत्वं निमित्तत्वम्, कार्यकारणयोश्च कथमैक्यमित्याकाङ्क्षायामशभेदेन तत्साधयितु तद्दृष्टान्तमाहु:—एकैवेत्यादि। विकार एवेति। कार्यकारणयोरभेदादाकृतिविशेष एव रूप (?)। तथा च यथाऽत्र मूलविचारे एकस्या पृथिव्या एवाशभेदेन धर्मभेदात्कर्तृकरणकार्यभाव, तथा अत्रापीत्यर्थ। तेन सिद्ध स्वरूप कालस्याऽऽहु—तस्मादित्यादि। तत्र प्रमाणमेव गमकमाहु—स आत्मानमित्यादि। अस्या श्रुतौ कर्तृकर्मक्रियाः प्रतीयन्ते, तत्र कर्तृत्व भगवन्निष्ठम्, कर्मत्व जगन्निष्ठम्, अतस्तद्धर्मद्वयरहित, 'अकुरुत' इतिपदोक्तक्रियारूपो य सिध्यति, स काल इत्यर्थ। तेनेच्छया परिच्छिद्यमाना यत्नेन व्याप्यमाना याया भगवतश्चेष्टारूपा क्रिया (सा) काल इति फलति। एव च उपआदीयतेऽनेनेत्युपादानम्, तस्योपादान तदुपादानमित्यपि गूढार्थो बोध्य।

स्थितं वा विष्णुमायया। अलौकिकसामर्थ्येन स्थितमुपसंहृतं च भवतीत्यर्थः। × तत्र कश्चित्परिच्छेदकोऽपेक्ष्यते, अन्यथा एकस्मिन्नपि कार्ये कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा भवेत्। तस्माद्भगवत एव कश्चिद्धर्मोऽस्त्यसाधारणरूपः, येनोत्पद्यमानं कार्यं परिच्छिन्नं भवति। तदेकं भगवतो रूपमित्याह–**ईश्वरेण परिच्छिन्नमिति**। ऐश्वर्यमपि गुणः, तत्रैव भगवता स्थापितः। अन्यथाकरणसामर्थ्यं हि तस्य। अत एव कलयतीति कालः। तस्य च रूपमव्यक्त एव तिष्ठति। अतः परिच्छेदार्थं कालोऽपेक्ष्यत इत्यर्थः॥ १२॥

+ तस्योपादानत्वं कार्ये प्रदर्शयति—

**यथेदानीं तथाऽग्रे च पश्चादप्येतदीदृशम्।**
**( विश्वमेतदसंक्षिप्तं मायया दृश्यतेऽन्यथा )॥ १३॥**

**यथेदानीमिति**। कालस्य नित्यत्वात् तदुपादानकं जगन्नित्यमेव, परं यथोपादानत्वमुपदिश्यते। भूतादिव्यपदेशाः कालकृताः। कालो हि निरन्तरं वर्तमानो जलप्रवाहवत् पूर्वपूर्वमुत्तरो बाधते। तदा तदाधारेण जातविकारं जगत् भूतत्वेन व्यपदिश्यते। वर्तमानोऽपि काल एव। देशापेक्षाभावात् नाऽऽपेक्षिकं वर्तमानत्वम्। जलादौ तु देशापेक्षाया विद्यमानत्वात् आपेक्षिकैव वर्तमानता भवति। अतो यादृशः कालः, तादृशं जगत्। कालाधीने त्वेषैव व्यवस्था। अवान्तरकालानां मूलभूतः कालो नियामको जीवानामात्मा भगवानिव। अतः स्वभावतस्तुल्यत्वादवान्तरभेदो विवक्षयोच्यते। इदानीं यथा जगत्, अग्रेऽपि तथैव भविष्यति, पश्चादप्येतदीदृशमेव। अतोऽस्य जगतः कालनियामकत्वान्न मायिकत्वम्। तस्मात्कात्स्न्र्येनाऽभिव्यक्तस्वरूपत्वात् ब्रह्मरूपं जगत्॥ १३॥

---

**प्रकाशः।**

× विश्वमित्यत्र। तत्रेति। भगवद्रूपे जगति। तदिति। परिच्छेदकम्। कलयतीति। एकमपि वस्तु परिच्छेदेन मिनाति। ननु परिच्छेदकस्य कथमुपादानत्वमित्याकाङ्क्षायामाहुः–तस्येत्यादि।

+ प्रदर्शयतीति। अन्वयेन प्रदर्शयति। उपदेशं व्युत्पादयति–भूतादीत्यादि। पूर्वपूर्वमिति। पूर्वपूर्वमुपाधिम्; तथा च, बाधनेन कृत्वा पूर्वं उपाधिर्भूतत्वेन व्यपदिश्यत इत्यर्थः। तदेत्यादि। **तदाधारेणेति**। पूर्वकालोपाध्याधारेण। तथा च, कालगतं भूतत्वं तदाधेये जगति व्यपदिश्यते, यथा पृथिवीगत आकारो घटे, तथेत्यर्थः। एवं भावित्वमपि। ननु वर्तमानं जगति प्रतीयते, अतो नैवमित्यत आहुः–**वर्तमानोऽपीत्यादि**। **जलादाविति**। जलादावाधारान्तर उपदिष्टे। तथा च, वर्तमानं जगदित्युक्त्वा आधारान्तरनैरपेक्ष्येण वर्तमानकालाधारं जगदिति प्रत्ययादाधारत्वेन प्रतीयमानो यः, स वर्तमानपदार्थोऽपि काल एवेति तद्गतमेव वर्तमानत्वमित्यर्थः। तेन सिद्धमाहुः–**अतो यादृश** इत्यादि। तथा च, कालधर्मस्य भूतत्वादेर्जगति दर्शनेन कालान्वयात् कालस्योपादानत्वमित्यर्थः। ननु कालोपाधीनां जगत्त्वं कालस्य वा आद्ये भूतत्वादीनां तद्धर्मत्वेपि जगद्धर्मत्वम्, द्वितीये तु नित्यत्वात् बाधाभावेन भूतत्वाद्ययोग इति कालस्योपादानत्वं दुर्घटमित्यत आहुः–अवान्तरेत्यादि। विवक्षयेति। अंशांशिभावविवक्षया। तथा च, कालत्वेऽप्येवं नियम्यत्वाद्भूतत्वादियोगेनोपाधिद्वारोपादानत्वं न दुर्घटमित्यर्थः। एतेन ब्रह्मतन्मात्रत्वमपि जगतः सिद्धमित्याहुः–इदानीमित्यादि। अत इति। सदेकरूपत्वात्। कालनियामकत्वादिति। व्यवहारविषयताद्वारा तन्नियामकत्वात्। सिद्धमाहुः–तस्मादित्यादि। सदेकरूपत्वात् कालनियामकत्वाच्च का-

---

१ उत्पाद्यमानम् क. ख. २ स्वरूपमव्यक्तमेव तिष्ठति. ग. ३ अधिकमेतत्. ४ धत. पा.

* एवं कालोपादानत्वं जगतो निरूप्य, कालस्याऽऽधिदैविकं स्वरूपमुक्त्वा, आधिभौतिकं स्वरूपं निरूपयति-सर्गो नवविध इत्यादिना यावदध्यायपरिसमाप्ति। आध्यात्मिकभेदानग्रिमाध्याये वक्ष्यति। तावता साधारणानां मात्रेन्द्रियाणां काल एव नियामकः। तेषां बुद्धिस्तु वेदात् ब्रह्मादिभिश्च, अतो भगवदधीनास्ते भगवदाज्ञया संसारे प्रवृत्ताः। भगवान् भगवदाज्ञा च तेषां मूलम्, महाभूतवत्। विषयेन्द्रियाणि तु कालाधीनान्येव कालरूपाणि। ता मात्रास्त्रिविधा इत्याध्यात्मिकानाधिभौतिकांश्च निर्दिशति—

**सर्गो नवविधस्तस्य प्राकृतो वैकृतस्तु यः।**
**कालद्रव्यगुणैरस्य त्रिविधः प्रतिसंक्रमः॥ १४ ॥**

सर्गो नवविध इति। प्राकृत आधिभौतिकः षड्विधः। वैकृत आध्यात्मिकस्त्रिविधः। उभये नवविधाः। तुशब्दो वैकृते भेदान्तरमस्तीति ज्ञापकः। वैकृतोऽप्याध्यात्मिकात् वैकृतात् भिन्न आधिदैविकः। अत एव यः प्रसिद्धः। उत्पत्तिर्नवविधा, त्रिविधानामपि गुणानामुत्पादकत्वात्। प्रतिसंक्रमस्तु त्रिविधः, तामसानामेव नियामकत्वात्। तत्राऽधिकारिणस्त्रयः,कालो द्रव्यं गुणाश्चेति। कालेन पदार्थाः प्रकृतौ प्राप्यन्ते। द्रव्यैर्वायुदण्डादिभिर्गुणैर्विरोधिभिर्विरुद्धा गुणाः प्रादुर्भूताः। कर्मणा विहितप्रकारेण देवादिभावे प्राप्ते मानुषादिभावा निवर्तन्त इति सत्त्वादिभिरेव पूर्वस्य प्रलयः। नियतस्तु कालकृतः प्रलयः, अनियतावितरौ॥१४॥

सर्गाणां नवविधत्वमुपपादयति—

**आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः।**
**द्वितीयस्त्वहमो यत्र द्रव्यज्ञानक्रियोदयः॥ १५ ॥**

+आद्यस्त्विति। सर्गो अत्र विभेदेन कालतः क्रियया तथा। अतस्तत्त्वेऽपि षड्भेदाः पारम्पर्यं न दूषणम्॥ १॥ महत्त्वेन प्रकारेण जगत्सर्वं तथोद्गतम्। अतो जगत एवाऽत्र सर्गो हेतुर्महान् पुनः॥ २॥ भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः। तच्चतुष्टयमत्राऽस्ति तेन सर्गत्वमस्य हि।३।

---

प्रकाशः।

त्स्यैनाऽभिव्यक्तस्वरूपत्वात्तथेत्यर्थः। एतेन 'मात्रात्वं चापि कालतः' इति पादोनया कारिकया यदुक्तं तत्साधितम्।

* सर्ग इत्यादीनामाभासे। अध्यायद्वयेन कालनिरूपणे बीजमाहुः—तावतेत्यादि। साधारणानामिति। व्यष्टिसम्बन्धिनाम्। तथा च,कालस्योभयनियामकत्वबोधनायाऽध्यायद्वयेन निरूपणमित्यर्थः। मूलमिति। तन्मात्रारूपम्। गुणानां प्रलायकत्वमुपपादयन्ति—कर्मणेत्यादि। अत्र गुणानां तामसत्वं देहरूपत्वात्; द्रव्यस्य तु स्फुटमेव; कालस्य तु गुणानुरोधाद्बोध्यम्।

+आद्य इत्यत्र। कारिकासु। प्रकृतसर्गस्य कुतः षड्विधत्वमित्याकाङ्क्षायामाहुः—सर्गा इत्यादि। अत्रेति। प्राकृतसर्गे। तत्त्वेऽपीति। प्राकृतत्वेपि। न चैवं सति कालक्रिययोर्विद्यमानत्वाद्युगपदेव षडपि स्युरित्यत आहुः—पारम्पर्यं न दूषणमिति। श्रुतावपि सर्वसमर्थब्रह्मणः साक्षात् सृष्टिवत् क्रमसृष्टेरपि कथनादिच्छाविशेषस्यैव नियामकत्वात्तन्न दूषणमित्यर्थः। ननु भवत्वेवम्, तथापि प्रथमं महत एव कुतः सर्ग इत्याकाङ्क्षायामाहुः—महत्त्वेनेत्यादि। स्फुटोऽर्थः। उत्पत्त्यादिशब्दानुक्तौ बीजमाहुः—भूतेत्यादि।

तुशब्दः पक्षं व्यावर्तयति। महत्तत्त्वस्य न केवलं जन्ममात्रम्, किन्तु महतो जन्म सर्गः, तत्राप्याद्यः सर्गान्तरापेक्षया । अयं सर्गः सर्वोपकारी । महत्त्वात् बुद्धिरुक्ता । तस्य महत्तत्त्वस्य योनेः सकाशादुद्गम इव सर्गोऽत्र न विवक्षितः, किन्त्वात्महेतुको गुणानां विषमो भावः । तत्र सत्त्वं धीनिमित्तम्, भगवतो धीनिमित्तत्वे सत्त्वं मनोनिमित्तम्, विषया राजसाः, भूतानि तामसानि । वैषम्याभावे तु स्थित्यादिहेतुत्वम् । आत्मनः सकाशात् गुणानां वैषम्यम्—एतदेव महत्तत्त्वसर्ग इत्यर्थः। द्वितीयमाह—द्वितीयस्त्विति। अत्राऽपि जन्ममात्रं व्यावर्त्यते । अहमोऽहङ्कारस्य सर्गो द्वितीयः । अत्राऽपि चतुर्विधत्वमाह । यथा सर्गे गुणवैषम्यमपेक्षितम्, एवं द्रव्यज्ञानक्रियाणामप्युदयोऽपेक्षितः। द्रव्यमधिभूतम्, ज्ञानमधिदैवम्, क्रिया आध्यात्मिकी। आद्यो भावो वैषम्यम्, द्वितीयो भावत्रैविध्यम्, यत्रेत्यधिकरणम्, कारणरूपं महत्तत्वं बुद्धिः ॥ १५ ॥

× तृतीयमाह—

**भूतसर्गस्तृतीयस्तु तन्मात्रो द्रव्यशक्तिमान् ।**
**चतुर्थ ऐन्द्रियः सर्गो यस्तु ज्ञानक्रियात्मकः ॥ १६ ॥**

**भूतसर्ग** इति । अत्राऽपि तुशब्दः पूर्ववत् । यथा क्षोभापेक्षा, यथा वा ज्ञानक्रियाविषयाणाम्, तथा परिणामहेतुरूपस्याऽपि । तच्च रूपं भोक्तृभोग्यभावापन्नं वक्तव्यमिति भोग्यं तन्मात्रत्वेन विवक्ष्यते, भोक्ता शरीरसाधकभूतत्वेन । तदुभयमाह—तन्मात्रो द्रव्यशक्तिमानिति । तन्मात्रः पञ्चतन्मात्रारूपः । द्रव्यशक्तिः परिणामः, तत्सहितस्तृतीयसर्ग इत्यर्थः । एवं त्रिभिः सर्गैः कार्यं निष्पद्यते, त्रिभिश्च ज्ञायते । तत्र प्रथमं चतुर्थ ऐन्द्रियः सर्ग इन्द्रियसंबन्धी सर्गः । इन्द्रियाणां स्वरूपोत्पत्तिर्न सर्गः, किन्तु कार्योपयोगित्वेन । अतोऽनुवादे तुशब्दः । कार्ये भिन्नतयोत्पत्तिव्यावृत्त्यर्थं सर्गः पूर्वत्रैव

---

प्रकाशः।

पक्षं व्यावर्तयतीति । पूर्वोक्तानुवादपक्षं व्यावर्तयति । पूर्वस्माद्भेदं बोधयितुं तदेव व्याकुर्वन्ति—महत्तत्त्वस्येत्यादि । बुद्धिरुक्तेति । बुद्धिरूपतोक्ता । अत्र न विवक्षित इति । 'वीर्यमधत्त' 'साऽसूत महत्तत्त्वं हिरण्मयम्' इतिवदकथनादस्मिन् कल्पे तथा न विवक्षितः । वैषम्यप्रकारमाहुः—तत्रेत्यादि । मनोनिमित्तमिति । उपलक्षणमेतत्, इन्द्रियनिमित्तमित्यर्थः । स्थित्यादिहेतुत्वमिति । गुणानामिति शेषः ।

× आहेति । सर्गशब्दानुषङ्गेण मैत्रेय आह । तस्य सर्गस्य स्वरूपं कारणं चाऽऽहुः—भूतसर्ग इत्यादि । पूर्ववदिति । जन्ममात्रत्वव्यावृत्त्यर्थः । यथेति । निमित्तभेदं विना कार्यकारणयोर्विजात्याभावात्तदर्थं यथेत्यर्थः । तच्चेति । परिणामहेतुभूतम् । द्रव्यशक्तिरिति । द्रव्यात्मिका शक्तिर्द्रव्यशक्तिरित्यर्थः । तथा मूले भूतसर्गो नाम भूतरूपपरिणामसहितो मात्रासर्गो भूतसर्ग इत्यर्थो भवति । द्वैरूप्यबोधनप्रयोजनमाहुः—एवमित्यादि । तथा च माध्यमिकस्याऽस्य द्वैरूप्यकथनेनैकैकस्य त्रिकस्य तथात्वबोधनं (प्र) योजनमित्यर्थः । तत्रेति । ज्ञापकत्रिकसर्गे । कार्योपयोगित्वेनेति । उत्पत्तिरिति शेषः । अत्र गमकमाहुः—अत इत्यादि। अत इति । कार्यजननानुकूल्यस्याऽपि विवक्षितत्वात् । सर्गपदं पुरोवादे यदुक्तम्, तस्याऽऽशयमाहुः—कार्ये इत्यादि । भिन्नतयेति । भूतमात्रादिघटितशरीरवत्त्वेनाऽभेदनिरूपणार्थं इति स्वरूपं भूतादिघटितम्, तच्च कार्याकरणदशायां केवलमिति स्वरूपवैलक्षण्यनिरूपणार्थः ।

---

१ वैकल्यादिभावे क. प.

योजितः । यस्त्वित्यनुवादः स्वरूपकार्ययोर्भेदनिरूपणार्थः । ज्ञानात्मकः क्रियात्मकश्च, उभयं हीन्द्रियकार्यम् । क्रियात्मकत्वेन भूतानीन्द्रियाणि चोक्तानि, ज्ञानात्मकत्वेन तन्मात्राणि धियश्चोक्ताः ॥ १६ ॥

पञ्चममाह—

**वैकारिको देवसर्गः पञ्चमो यन्मयं मनः ।**
**षष्ठस्तु तमसः सर्गो यस्त्वबुद्धिकृतो विभोः ॥ १७ ॥**

* वैकारिक इति । वैकारिकः सात्त्विको देवानां सर्गः। अत्र देवानां सर्गे स्वरूपत उत्पत्तिः। अतीन्द्रियत्वेन अव्यवहार्यत्वेन च द्वैविध्याभावान्न पक्षव्यावृत्तिः । यथा ज्ञानेन्द्रियाण्यपेक्ष्यन्ते क्रियायां च, तथैव देवताप्रेरणम्, तदभावे ग्रहणानुपपत्तेः । वैकारिकत्वेन त्रिरूपता, देवत्वाद्बुद्धिरूपत्वम् । नन्वेतेषां देवानां किं कार्यम् ? प्रेरणं त्वन्तर्यामिजीवाभ्यामेवोपपद्यत इत्याशङ्क्याऽऽह—यन्मयं मन इति । पञ्चमसर्गप्रचुरं मनः । यथेन्द्रियाणां सद्भावेऽपि मनोव्यतिरेकेण न ज्ञानक्रियोदयः, 'नाश्रौषममनाः' इत्याद्यभिलापात् । न हि सजातीयानियमनव्यतिरेकेण केवलं चेतनेन, राज्ञेव, सर्वथा नियमनं कर्तुं शक्यते । अतः सामान्यतो मनो यथा नियामकम्, तथेन्द्रियदेवता अपि । वैकारिकत्वेन चैक्यम् । वैकारिकत्वं पूर्वरूपम्, प्रेरकत्वमुत्तररूपमिति । षष्ठमाह—षष्ठस्त्विति । इन्द्रियग्राह्यत्वं भगवतो न संभवतीत्यन्तमा निष्पत्तिरूपामविद्यां मन्यते । सा केवलं तामसी । अविद्याप्रकृतिमायानां मध्ये, प्रथमायाः प्राकृतविषयत्वात्, प्राकृतैः सा वा, तत्कार्यं वा, गृह्यते । अतो ग्रहणार्थं तामसः षष्ठः सर्गो विषयः । तामसत्वमात्रेण विषयत्वे भूतसर्गोऽपि तथा स्यात्, अतस्तद्व्यावृत्त्यर्थं य इत्यनूद्य तुशब्दः । अबुद्धिकृतोऽज्ञानकृतः । नन्वज्ञानेन शुक्तिकारजतवत् मिथ्याभूतमेव किञ्चिदुत्पद्यते, तस्य कथं सर्गत्वम् ? सृज्याभावात्। इत्याशङ्क्याऽऽह—विभोरिति । समर्थस्य । स ह्यज्ञानप्रकारेणाऽपि सदभिव्यक्तिं कर्तुं शक्नोति, अतोऽस्य गृह्यमाणविषयस्य अविद्याकृतत्वेऽपि सर्गत्वम् ॥ १७ ॥

---

प्रकाशः ।

ज्ञानेत्यादि । अनेन तत्कार्यकरणे बीजमुक्तम्, तत्तदात्मकत्वाचत्र जनक इति । अत्र प्रयोजनान्तरमपि संगृह्यत इत्याहुः—क्रियेत्यादि ।

* वैकारिक इत्यत्र । तुशब्दस्य पूर्वमग्रे चोक्तत्वादत्र तदनुक्तितात्पर्यमाहुः—अतीन्द्रियेत्यादि । द्वैविध्याभावादिति । कार्यजननार्थं स्वरूपवैलक्षण्यस्याऽनपेक्षितत्वेन तद्द्वैविध्याभावात् । ननु देवसर्गस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः—यथेत्यादि । कर्मेन्द्रियैः कर्मकरणेऽपि तदनुग्राहकत्वेन यथा ज्ञानेन्द्रियाणि क्रियायामपेक्ष्यन्ते, तथा ज्ञानेन्द्रियैर्ज्ञानजननेऽप्यनुग्राहकत्वेन देवताप्रेरणमपेक्षितसमानन्यायेन क्रियायामप्यपेक्षितमित्यर्थः । अत्र सर्गत्वप्रयोजकं रूपमाहुः—वैकारिकेत्यादि । त्रिरूपतेति । भूतमात्रेन्द्रियरूपता । किं कार्यमिति । किं प्रयोजनम् । ननु 'यन्मयं मनः' इत्यस्य देवसर्गप्रयोजनोपपादकतया कथनेन मनसः सर्गोऽनुक्त एव स्यादित्याशङ्कानिरासायाहुः—वैकारिकत्वेनैक्यमित्यादि । तथा चैवं मनसो देवतासाम्याद्वैकारिक इति विशेषणबलात्तस्यापि सङ्ग्रह इति नाऽनुक्तिरित्यर्थः । सर्गत्वमिति । भगवत्सामर्थ्यादेव सर्गत्वम्, न तु स्वरूपबलादित्यर्थः । अत्राऽस्य प्राकृतसर्गस्य आवरणतत्त्वत्वं मध्यतत्त्वत्वं, महाभूतन्यायेन बोध्यम् ।

एवमाधिभौतिकप्रकारेण निरूपितान् षट् सर्गानुपसंहरति—

**षडिमे प्राकृताः सर्गा वैकृतानपि मे शृणु ।**
**रजोभाजो भगवतो लीलेयं हरिमेधसः ॥ १८ ॥**

**षडिमे प्राकृताः सर्गा** इति । एव विभागं चेन्न कुर्यात् सप्तमादिप्रयोगात् सर्वेऽप्येकविधा भवेयुः । एवं प्राकृतानुपसंहृत्य वैकृतेषु सावधानतया भेदा ज्ञातव्या इत्याह—वैकृतानपीति । प्राकृतकार्यं वैकृतं प्राकृते निरूपिते निरूपितं भवतीति वैकृतानां न भेदो न स्वरूप वा सिध्येत् । अतो मे शृण्वित्याह । मत्त एवैते भेदाः श्रोतुं योग्याः, न त्वन्यो जानातीति भावः । अतो व्यासङ्गव्युदासार्थं शृण्वित्युक्तम् । नन्वेते प्राकृतवैकृता लौकिकाः, भगवद्भक्तैः कथं श्रोतव्या इत्याशङ्क्याह—**रजोभाजो भगवत** इति । यदा भगवान् रजोगुणमुत्पत्त्यर्थम्, क्षेत्ररजो वा कामार्थं भजते, तदैवं लीलां करोति । अतो भगवल्लीलात्वात् श्रोतव्या एव सर्गाः । ननु न सर्वा भगवल्लीला श्रोतव्या, ' यावानर्थ उदपाने ' इति न्यायेन स्वोपयोगिन्येव लीला सेव्येत्याशङ्क्याऽऽह—**हरिमेधस** इति । हरिः सर्वदुःखहर्त्री मेधा यस्य । भगवद्विषयिणी या काचिन्मतिः, सैव सर्वदुःखहर्त्री, तस्मात्या कापि भगवल्लीला श्रोतव्यैव । किञ्च, नियता विषयबुद्धिर्भगवत्संबन्धित्वेनाऽत्र बोध्यते । अतो लीलान्तरापेक्षया मात्रारूपा लीलाः कालसंबन्धित्वात्सहजनाशिकाः, तद्दोषनिवृत्त्यर्थं चाऽवश्यं भगवदीयत्वेन ज्ञातव्याः । एतदेवाऽभिसन्धाय मेधःपदम् । यथा मेधा शब्दो बुद्धिवचनः, एवं ' मेधस् ' शब्दोऽप्यसप्रत्ययान्तः ॥ १८ ॥

तस्माच्छ्रोतव्यमित्युपपाद्य वैकृतेषु प्रथममुपपादयति—

**सप्तमो मुख्यसर्गस्तु षड्विधस्तस्थुषां च यः ।**
**वनस्पत्योषधिलतास्त्वक्सारा वीरुधो द्रुमाः ॥ १९ ॥**

* सप्तम इति । वैकृतेषु, मुखे भवो मुख्यः । अन्नं प्रथमतः सृज्यमन्नादास्तदनन्तरम् । अन्यथा बाधकं त्वग्रे वक्ष्यते प्रक्रियान्तरे ॥ १ ॥ अतो मुखे भवो भक्ष्यत्वेनैव परिकल्पितः, सर्वजीवनोपयोगी प्राधान्येनोपकल्पितः । मनसा सह कर्मेन्द्रियाणा षड्विधत्वादाद्य षड्विधः । ते यथा भक्ष्यमाणा अपि नाऽपसरन्ति, ततस्तस्थुषां य इत्युक्तम् । स्थावराणामेव यः षड्विधः सर्गः, स एवाऽत्र ग्राह्य इति यच्छब्देन निर्दिष्टः, न तु जङ्गमत्वेन जातः स्थावरतामापद्यमानः, तस्य भगवल्लीलात्वाभावात् । चकाराचेऽपि शास्त्रतो निरूपिताः परिगृहीताः दुग्धादयो वा चकारेण परिगृहीताः । वनस्पतयोऽश्वत्थादयः । प्रथमतो वनस्पतीनां ग्रहणम्, पालने विष्णोः प्राधान्याद्वैष्णवत्वेन, ' वैष्णवा वै वनस्पतयः ' इति श्रुतेः । पुष्परहिताः सफला वनस्पतयः, रजोरहिताः सफला वैष्णवाः । ओषध्यो व्रीहियवादयः फलपाकान्ताः, ते हि मुख्यमन्नं भवन्ति । लताः कूष्माण्डादयः, मेदोरूपा व्यञ्जनात्मकाः । त्वक्सारा वेणवः, अन्नस्थित्यात्मकाः; वेणुयवा अन्नम्, वेणवश्च बहूपयोगिनः । वीरुधः सोमादयः, तृणादयश्च । ते-

---

प्रकाशः।

* सप्तम इत्यत्र । तेऽपीति । जङ्गमत्वेऽपि स्थावरत्वमापद्यमानाः पशवोऽपि । परिगृहीता इति । मुख्यसर्गत्वेन परिगृहीताः । बर्हिषदुपाख्याने हिंसयज्ञस्य जघन्यत्वकथनात् पक्षान्तरं श्रौतमाहुः—दुग्धादी-

पामप्युभयरूपत्वम्। द्रुमाः सफलपुष्पा आम्रादयः। एतैः षड्विधैरधमानैरचाराः सुप्रतिष्ठिता भवन्ति ॥१९॥

नन्वेतेषां षड्विधानां केन धर्मेणैकसर्गत्वमित्याशङ्क्य तान् धर्मान्निर्दिशति—

**उत्स्रोतसस्तमःप्राया अन्तःस्पर्शाविशेषिणः ॥ २० ॥**

उत्स्रोतस इति। एते हि सर्गरूपा भूतादिभावरूपा वक्तव्याः। तेऽपि चतुर्भिर्विशेषणैर्निरूप्यन्ते। ऊर्ध्वं स्रोत आहारसंचारो येषाम्, तेषां भक्षितं जलादिकमूर्ध्वमेव गच्छति। अनेन भूतत्वं निरूपितम्, विपरीतं वा। बुद्धिर्हि क्रिया बोध्या, ते पादपा इति तेषां बुद्धिर्निरूपिता। तमःप्राया इति ज्ञानाभावः, अज्ञानं तत्रैव पर्यवसितम्। प्रायःपदव्यावर्त्यार्थं वदन् विषयत्वं निरूपयति—अन्तःस्पर्शा इति। अन्तः स्पर्शमात्रं गृह्णन्ति, न त्वन्यविषयकं ज्ञानमस्तीत्यर्थः। यत्तु भारते वृक्षाणां सर्वेन्द्रियत्वं साधितम्, सर्वज्ञानं च; तदधिष्ठातृदेवतापरम्, अभिमानिनां तु स्पर्श एव। अविशेषिणश्च हस्तवितस्त्यादिपरिमाणे नियमरहिताः, विशेषसंज्ञारहिता वा ॥ २० ॥

एवं सप्तमं निरूप्य अष्टमं निरूपयति—

**तिरश्चामष्टमः सर्गः सोऽष्टाविंशद्विधो मतः ॥**
**अविदो भूरितमसो घ्राणज्ञा हृद्यवेदिनः ॥ २१ ॥**

* तिरश्चामिति। तिर्यगाहारसंचारो येषाम्, ते तिर्यञ्चः। तिर्यक् अञ्चतीति गोभिर्भक्षितं तिर्यग्भागेनैव गच्छतीति। तेषां सर्गोऽष्टमः, अन्नस्य भक्षकोपयोगित्वात्। सोऽष्टाविंशद्विधः, तत्त्वानां तथात्वात्, तत्त्वैरेव भक्षितस्य भावितत्वात्। यद्यपि बहवो भेदाः सन्ति, तथापि भेदकप्राधान्यादष्टाविंशद्विध एव मतः। अन्येषामत्रैवाऽन्तर्भावो वक्ष्यते, वैकृतत्वं वा निराकरिष्यते। एतेषामपि पूर्ववच्चतुर्धा लक्षणमाह—अविद इति। वेदनं वित्, स्वस्य कर्तव्याकर्तव्यानुसन्धानम्, पारलौकिकज्ञानं वा, तद्रहिता अविदः। भूरि अधिकं तमो येषाम्, अतस्तमसा अभिभूताः सत्सङ्गे जातेऽपि न ज्ञानयुक्ताः। ये तु देवपशवो वैकुण्ठादिस्थिता वृक्षा वा ते कालाभिभूता न भवन्तीति न तैर्लक्षणाव्याप्तिः। तेषां सर्वेन्द्रियसद्भावेऽपि घ्राणेनैव विशेषतः पदार्थान् जानन्ति, चक्षुरादिभिस्तु न निर्द्धारः, तमोभूयस्त्वात्। हृद्यवेदिन इति। पूर्वानुभूतस्मृतिशून्याश्चिन्तारहिता वा, वेदनं वेद इति। अज्ञानं तेषां भूतस्थानम्, मोहो विषयः, इन्द्रियाणि घ्राणमात्रपर्यवसितानि, बुद्धिस्त्वनुभवरूपैव ॥ २१ ॥

ते त्रिविधाः। सात्त्विका द्विशफाः प्रोक्ता राजसास्तु चतुःशफाः। तामसा इतरे प्रोक्ता गुणानां हीनगा पराः॥ १ ॥

**गौरजो महिषः कृष्णः शूकरो गवयो रुरुः।**
**द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम ! ॥ २२ ॥**

प्रकाशः।

पाद्रि। उभयरूपत्वमिति। अधमरूपत्वमन्नस्थापकरूपत्वं च।

* तिरश्चामित्यत्र। अन्येषामिति। अनुक्तानां सञ्जरूपकादीनाम्।

नव द्विशफा गवादयः । कृष्णः कृष्णमृगः, गवयो गोसदृशः, रुरुर्बहुशृङ्गमृगः । एते द्विशफाः । एते पुनर्यज्ञपशवः । तिर्यक्शब्दवाच्या द्विशफाः पशवश्च । यत्र पशवो निर्दिश्यन्ते तत्रैते ग्राह्याः । अविर्मेष उष्ट्रश्च । सत्तमेति संबोधनं पशुगणनायां भगवत्कृतसृष्टावन्यथाज्ञाननिवारणार्थम् ॥ २२ ॥

खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा ।
एते चैकशफाः क्षत्तः ! शृणु पञ्चनखान्पशून् ॥ २३ ॥

षडेकशफाः खरादयः । गौरो गौरमृग आरण्यः । शरभोऽष्टापदः । चमरी गोसदृशो मृगः । चकारात् अन्येऽप्यप्रसिद्धा आरण्याः । ग्राम्यचमरीणां द्विशफत्वम्, ता न भगवत्सृष्टाः । क्षत्तरिति संबोधनं नैपुण्यार्थम् । एत एव बहुविधा विश्वामित्रादिभिर्योगबलेन सृष्टा भवन्ति । तद्व्यावृत्त्यर्थं शृण्विति निर्देशनं पञ्चनखेषु बहुसन्देहसूचकम् । पञ्चनखा मनुष्या अपि, तद्व्यावृत्त्यर्थं पशूनित्युक्तवान् । मनुष्याणामपि यद्यपि पशुत्वं श्रुतिसिद्धम्, तथापि विवक्षितं न भवतीति उद्व्युदासः ॥ २३ ॥

श्वा शृगालो वृको व्याघ्रो मार्जारः शशशल्लकौ ।
सिंहः कपिर्गजः कूर्मो गोधा च मकरादयः ॥ २४ ॥

त्रयोदश श्वादयः । तत्र मकरादयः सर्वे अभूचरा एकविधा अण्डजाः । कूर्मो जलचरोऽप्यण्डजत्वाभावात् पृथग्गणितः । मकरादय इति । आदिशब्देन सर्पादयोऽपि परिगृहीताः, अण्डजत्वसाम्यात् २४

* तत्राऽपि प्रधानभूतान्निर्दिशति—

कङ्कगृध्रवटश्येनभासभल्लूकबर्हिणः ।
हंससारसचक्राह्वकाकोलूकादयः खगाः ॥ २५ ॥

कङ्केति । भल्लूकोऽपि पक्षिविशेषः, न तु ऋक्षः । तं विश्वामित्रसृष्टं केचिदाहुः, पद्मकल्पे तदभावो वा । आदिशब्देन सूक्ष्मा अपि सर्वे परिगृहीताः ॥ २५ ॥

एवं भोग्यभोक्तॄन् निर्दिश्य तदुभयनियामकान्निर्दिशति—

अर्वाक्स्रोतस्तु नवमः क्षत्तरेकविधो नृणाम् ।
रजोऽधिकाः कर्मपरा दुःखे च सुखमानिनः ॥ २६ ॥

अर्वाक्स्रोत इति । तुशब्दोऽत्र पूर्ववज्जननं व्यावर्तयति । अर्वागेव स्रोत आहारसञ्चारो यस्य, स नृणां सर्ग एकविध एव । सर्वे पञ्चनखाः, जलचरा अपि तथा । एकपादा जलचराश्च तस्मिन् कल्पे न सन्तीति वा । तेषां पूर्ववल्लक्षणमाह—रजोऽधिका इति । रजोगुण एव तेषामधिकः, न सात्त्विकाः, नाऽपि तामसा इति । ये पुनर्भगवदीयास्ते गुणातीता देवा एव, न नराः, ब्रह्मसृष्टा वा न भवन्ति, पद्मकल्पे वा तदभावः । भूतम्यानीयं रजः । सर्वदा कर्मपराः कुर्वन्त एव तिष्ठन्ति । ज्ञानेन्द्रियाणि तेषां गौ-

मकाराः।

* कङ्केत्यस्याऽऽभासे । तत्रापीति । अण्डजेष्वपि ।

णानि, अनेन विषयेन्द्रियनिरूपणम् । दुःखे च सुखमानिन इति । बुद्धिः । चकारात्सुखे, दुःखसाधने च । एवमाधिभौतिकादिभेदेन स्थावरजङ्गमा मनुष्याश्च निरूपितास्त्रय एव ॥ २६ ॥

अन्ये स्थानरूपभिन्ना अपि न सर्गत्वं प्राप्नुवन्ति । तदह—

वैकृतास्त्रय एवैते देवसर्गश्च सत्तम ! ।
वैकारिकस्तु यः प्रोक्तः कौमारस्तूभयात्मकः ॥ २७ ॥

× वैकृतास्त्रय एवैव इति । देवसर्गश्च सत्तमेति । मनुष्या एव पुण्यपरिपाकवशात् देवा भवन्तीति केचित्। अतो नवैव सर्गाः, गुणाना भेदान्तरासम्भवात्। उत्पत्त्या नवविधोऽप्युपपत्त्योपसंहाराच्च दशविधः; अतश्चकारः—देवसर्गश्चेति । सत्तमेति संबोधनं देवानां फलरूपत्वज्ञापनार्थम् । स देवसर्गो द्विविधः, एको वैकारिकः सात्त्विकः, अपरो वैकारिको विकाराज्जातः, स दशमः । तत्र प्रथमे निर्णयमाह—वैकारिक इति । तुशब्दोऽस्माद्वैकारिकाद्भेदमाह । यः सात्त्विको वैकारिकः, स प्रोक्तः पञ्चमः। कौमारस्तु देवोऽपि भवति, मनुष्योऽपि भवतीति उभयनिरूपणेनैव निरूपितः, अतः पृथक्तया स न वक्तव्य इति तुशब्दः ॥ २७ ॥

देवसर्गस्त्वेकविधोऽप्यवान्तरभेदेनाऽष्टविधः । तान् गणयति—

देवसर्गश्चाऽष्टविधो विबुधाः पितरोऽसुराः ।
गन्धर्वाप्सरसः सिद्धा यक्षरक्षांसि चारणाः ॥ २८ ॥

विबुधा देवा इन्द्रादय एके । पितरोऽसुरा एके । गन्धर्वाप्सरस एके । सिद्धा एके । यक्षरक्षांस्येके । चारणा अपि यक्षेष्वेवेति केचित् ॥ २८ ॥

भूतप्रेतपिशाचाश्च विद्याध्राः किन्नरादयः ।
दशैते विदुराऽऽख्याताः सर्गास्ते विश्वसृक्कृताः ॥ २९ ॥

भूतप्रेतपिशाचा एके । विद्याधरा इति केचित् । किन्नराः किंपुरुषादयः । एवं सर्वानुपपाद्य उपसंहरति—दशैते विदुराऽऽख्याता इति । संबोधनं स्नेहसूचकम् , तेनाऽन्यथाकथनं व्यावर्तितम् । विश्वसृजा ब्रह्मणा कृता एते सर्गाः ॥ २९ ॥

एतावदुक्त्वा तूष्णींस्थिते पूर्ववत् पुनः प्रक्ष्यतीति वक्तव्यान्तरं निर्दिशति—

अतःपरं प्रवक्ष्यामि वंशान्मन्वन्तराणि च ।
एवं रजःप्लुतः स्रष्टा कल्पादिष्वात्मभूर्हरिः
सृजत्यमोघसंकल्प आत्मैवाऽऽत्मानमात्मना ॥ ३० ॥

---

प्रकाशः

× सिद्धान्तमाहुः—उत्पत्त्येत्यादि । उपपत्त्येति । सत्त्वशक्तित्वसाधारण्यरूपयोपपत्त्या । असुरादौ सांकर्यमित्यरुच्या हेत्वन्तरमाहुः—उपसंहाराच्चेति ।

* अतः परं प्रवक्ष्यामीति । अनुपदं न । एतच्छेषनिरूपणानन्तरं कालान्तरे प्रवक्ष्यामीत्यर्थः। अवशिष्टं रूपद्वयमस्ति, इन्द्रियाणि बुद्धिश्चेति । तदुभयं निर्दिशति–वंशान्मन्वन्तराणि चेति । वंश इन्द्रियरूपः, चकारात्तत्संबन्धिनोऽपि तत्त्वेनैव वक्तव्याः प्रतिज्ञाताः । नन्वेवं भगवान् अनेकविधान् किमर्थं कदा वा करोतीत्याशङ्क्याऽऽह–एवं रजःप्लुत इति । रजसा व्याप्तो भगवान् सृष्टौ प्रवृत्तः, सर्वेष्वेव कल्पादिषु आत्मनः सकाशात् स्वयमेवाऽऽविर्भूतः । सर्वेषां दुःखनिवारणार्थममोघसंकल्पमात्रेण कर्तृकर्मकरणरूपः स्वयमेव सृजति । ब्रह्माऽपि रजःप्लुतो भगवानेवेत्युक्तं भवति । कल्पादिष्विति बहुवचनं सतत्त्वानि ब्रह्माण्डानि बहुधा सृजतीति ज्ञापयति । रजोऽपि स्वयमेवेति स्वस्यैव करणत्वम् । तथा कर्मकालादयोऽपि स्वयमेव । जगदपि स्वयमेवेति स्वस्यैव कर्मत्वम् । पुरुषादयोऽपि स्वयमेवेति स्वस्यैव कर्तृत्वम् । तस्मात्सर्वं हरिरिति सिद्धम् ॥ ३० ॥

(गुणव्यत्यय एतस्मिन् मायावित्वादधीशितुः ।
न पौर्वापर्यमिच्छन्ति नद्यां भ्राभ्यन् भ्रमेर्यथा ॥
देवासुरादयः क्षत्तः ! कल्पेऽस्मिन् ये प्रकीर्तिताः ।
त एव नामरूपाभ्यामासन्मन्वन्तरान्तरे ॥ )

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां
तृतीयस्कन्धे दशमाध्यायविवरणम्[1] ।

---

प्रकाश[1]।

* अतःपरमित्यत्र । अवशिष्टमिति । सर्गसंव्यूहमध्येऽवशिष्टम् ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे नवमाध्यायविवरणं समाप्तम् ।

---

१ नेदं श्लोकद्वयं लिखितपुस्तकेषूपलभ्यते ।

# एकादशाध्यायविवरणम् ।

एकादशे तु कालस्य सर्वेषामिन्द्रियाणि यत् ।
आध्यात्मिकं तु यद्रूपं त्रेधा तद्विनिरूप्यते ॥ १ ॥
सर्वो हि भगवान् कालस्तदर्थमुपचर्यते ।
धर्मप्रयुक्तो यः कालः स हि ब्रह्माणमेयिवान् ॥ २ ॥
सूर्यात्मकस्तु यः कालः सर्वेषां सोऽपि च त्रिधा ।
कायप्रवेशाप्रवेशाद्दर्शनादर्शनात्तथा ॥ ३ ॥
भचक्रस्थानभागाभ्यामत्राऽप्युच्चावचं सदा ॥ ४ ॥

एवं पूर्वाध्याये कालस्य स्वरूपं कार्यं चोक्त्वा, तस्याऽवान्तरभेदान्निरूपयति । सूर्यगत्या तु तद्भेदाः सूर्यस्तस्याऽऽधिदैविकम् । आध्यात्मिकं तु तद्भेदाः क्वचिदिच्छाऽपि भेदिका । १ । पृथिवी च जलं तेजो देवास्तु पितृमानुषाः उपाधित्रितयं प्राहुस्ततः कालस्त्रिधा मतः ।२। प्रथमं मनुष्याणामहोरात्रं निर्णेतुं पार्थिवे लोके पृथिवीव्यवधानाव्यवधानाभ्यां सूर्यदर्शनादर्शनकृतं कालस्य दिनरात्रिरूपत्वमिति निरूपयितुम्, पार्थिवैरेव परमाण्वादिभिः कालभेदानाह । तत्रोपाधिभूतस्य परमाणोर्लक्षणमाह—

---

गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृतः प्रकाशः ।

अथैकादशाध्यायं व्याख्यातुं सङ्गतिं स्मारयन्तस्तस्याऽर्थं सङ्गृह्णन्ति—एकादशे त्वित्यादि । तुः सङ्गतिशङ्कानिरासे, विशेषावधारणे वा । कालस्य यत्सर्वेषामिन्द्रियाणि नरादिब्रह्मान्तानां स्वस्वदेहजीवनासक्तिजनने मारकतयेन्द्रियात्मकमायुःशब्दवाच्यं रूपम्, तु पुनः, यदाध्यात्मिकं ब्रह्मायुःपरिच्छेदकम्, तत् त्रेधा; परपरार्धकल्पाख्यप्रकारत्रयेण विशेषपूर्वकं निरूप्यते । तेन शास्त्रविचारेऽवसरः सङ्गतिः । प्रश्नविचारे तु राज्ञा ' यावान् कल्पो विकल्पो वा ' इति सार्द्धश्लोकेन प्रश्ने, शुकेन ' परिमाणं च कालस्य कल्पलक्षणविग्रहम् । यथा पुरस्ताद्व्याख्यास्ये पाद्मं कल्पमथो शृणु । ' इति प्रतिज्ञानात् पद्मकल्पकथनो(त्त)रमवसरः । मैत्रेयोक्तौ तु ' *कालावयवसंस्थितिम्* ' इति प्रश्नस्य सर्गशेषत्वेनोत्तरमिति प्रसङ्गः सङ्गतिरित्यर्थः । नन्वत्राऽऽयूरूपस्य कालस्यैवमिन्द्रियत्वे किं गमकमित्यत आहुः—सर्वो हीत्यादि । यतः सर्वो ब्रह्मायूरूपः,तदर्थमक्षरापरिच्छेदार्थं तन्निमेषतया उपचर्यते, स्वरूपतस्तु भगवान्; अतः परिच्छिन्नस्याऽऽयूरूपस्येन्द्रियत्वे उपचारोक्तिरेव गमकमित्यर्थः । ननु कालस्य कथं ब्रह्मायुःपरिच्छेदके(कते)त्यत आहुः—धर्मेत्यादि । धर्मप्रयुक्त इति । गतिरूपेण धर्मेणाऽत्यन्तं युक्तः । इदं ' कालगत्योपलक्षितैः ' इत्यत्र स्फुटीभविष्यति । तथा च गत्या परिच्छेदकत्वे(ते)त्यर्थः । गतिं स्फुटीकर्तुमाहुः—सूर्येत्यादि । सर्वेषामिति । देवपितृमनुष्याणाम् । कार्यप्रवेशाप्रवेशादिति । कार्यं जलम् । तद्भेदा इति आध्यात्मिककालभेदाः । तस्येति आध्यात्मिकस्य । तेन ' सूर्यस्तस्याऽधिभौतिकम् ' इति निबन्धे यदुक्तम्, तन्मूलभूतकालापेक्षयेति न विरोधः । क्वचिदिति । उपरितनलोके, प्रलयादिषु च । इच्छेति । भगवदिच्छा । अपिशब्दाद्ब्रह्मण आयु रण्डाः ।

## मैत्रेय उवाच ।

**चरमः सद्विशेषाणामनेकोऽसंयुतः सदा ।**
**परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः ॥ १ ॥**

*** चरम इति।** सतः कार्यस्य घटादेः, विशेषाणामवयवानां मध्ये यश्चरमः, यस्य पुनरवयवो नाऽस्ति, अतिसूक्ष्मत्वात् विभाजकाघातं न सहते, स **चरमः** । सोऽपि सजातीयैः समुदायावस्थां न प्राप्तः । तदाह—**अनेक इति** । कार्यावस्थां च न प्राप्तः—**असंयुत इति** । **सदेति** । कदाचित्संयोग प्राप्तो भवत्येवेति लक्षणमसंभव्येव स्यात् । अनेकत्वं च नैकसङ्ख्याभावः, यत्र तिष्ठति तत्र तत्सजातीया बहव एव तिष्ठन्तीत्यनेकत्वम् । मौतिकत्वे सति नित्यो गतिमान् परमाणुरिति परमाणुलक्षणे क्रियमाणे परमाणुभ्यः कार्योत्पत्तिरिति मतं स्यात् । सिद्धान्ते तु स्थूलादेव सूक्ष्मोत्पत्तिः, स्वसमानावयवस्थूलांशः कार्यजनक इति । यदनेकावयवैर्योजनं पटादौ, तत्कार्पासादेः स्थूलस्यैव दीर्घावस्थां प्राप्तस्य आकृतिविशेषसंपादनार्थं खण्डशो योजनम् ।

---

### प्रकाशः ।

* चरम इत्यत्र । श्रीधरीये—'अनेकः कार्यावस्थामप्राप्तः, असंयुतः समुदायावस्थां चाऽप्राप्तः, अत एव सदा ' इति व्याख्यातम् । एतन्मते सदापदमवस्थाद्वयराहित्येन वर्तमानतामात्रबोधकम् । तत्र दोषं बोधयितुं प्रकारान्तरेण व्याकुर्वन्ति—सोऽपीत्यादि । सजातीयपदमाकाशपरमाणुसंयोगस्य सर्वदा सत्त्वादसम्भववारणाय । सदापदप्रयोजनमाहुः—कदाचिदित्यादि । कदाचिदिति । कार्यावस्थायाम् । तथा च, सदापद (स्य) उभयत्राऽन्वये मूले सजातीयपदाभावादाकाशसंयोगस्य सर्वदा सत्त्वेन लक्षणमसम्भवग्रस्तं स्यात् । कार्यावस्थानिषेधमात्रे त्वाकाशसंयोगेऽप्यनेकत्वस्याऽबाधादनेकपदेनैव सजातीयसंयोगावस्थावारणेऽपि सार्थक्यम्, अतस्तद्व्याख्यानमसङ्गतमित्यर्थः । नन्वेकपदेन कथं समुदायावस्थानिषेध इत्याकाङ्क्षायामाहुः—अनेकत्वं चेत्यादि । यत्रेति । तथा चैवं वारणमित्यर्थः । ननु सदा कार्यावस्थानिषेधस्य किं प्रयोजनमत आहुः—भौतिकेत्यादि । तथा च, पूर्वाध्याये कालस्योपादानत्वप्रतिपादनेन तस्य च परममहत्त्वेन स्थूलात्सूक्ष्मोत्पत्तिरङ्गीकृता, श्रुतौ च 'असतः सदेतत्' (?) ' इति विभागादङ्गीकृता । परमाणुभ्यः कार्योत्पत्त्यङ्गीकारे तदुभयं विरुध्येतेति तदभावः प्रयोजनमित्यर्थः । ननु सूक्ष्मात्स्थूलोत्पत्तौ स्पर्शवत्त्वेनाऽऽरम्भकतेति कारणतानुगमः, स्थूलात्सूक्ष्मोत्पत्तौ तु कालमहत्त्वादिषु तदभावेनाऽन्येषु च तत्त्वेन कारणतानिर्वाहरूपस्याऽननुगमाद्गौरवप्रसङ्ग, इत्यत आहुः—स्वसमानेत्यादि । स्वं कार्यम्, तत्समानास्तज्जननयोग्या येऽवयवाः, तद्रूपो यः स्थूलांशः, स कार्यजनकः । तथा च, जन्यभावत्वावच्छिन्नं प्रति स्वयोग्यावयवस्थूलांशत्वेनाऽनुगता कारणता । सा च स्वशब्देन प्रत्यक्षादिगोचरं प्रतिनियतं घटा(दि)रूपं परामृशता तत्राऽप्युपयुज्यते । तद्रीत्या कारणतानुगमाङ्गीकारे तु स्पर्शवत्त्वस्य साधारणत्वेन घटादिकं प्रति मृदादिरूपेण प्रतिनियता अन्यापि कल्पनीयेति कल्पनाद्वयेन नैव गौरवप्रसङ्गो नाऽस्माकमित्यर्थः । ननु स्थूलादेकस्मात्सूक्ष्मोत्पत्तिः प्रत्यक्षविरुद्धा, पटादौ सूक्ष्मैरनेकैरेव तन्त्वादिभिः पटाद्युत्पत्तिदर्शनादित्यत आहुः—यदित्यादि । योजनं संयोगद्वारा एकीकरणम् । खण्डशो योजनमवयवपुञ्जीकरणम् । तथा च, तत्राऽपि स्थूलांशसमुदायस्यैकस्यैव कारणत्वात्, यत्राश्रितोतांशेन तदपेक्षया न्यूनस्य समानस्य वा पटोत्पत्तिः न [illegible] तत्सूक्ष्मात् स्थूलस्य, नापि बहुस्य इति न प्रत्यक्षविरोध इत्यर्थः । इम प्रकारमन्यत्राऽप्यतिदिशन्ति ।

समुदायस्य चैवोपादानत्वम् । एवं कुण्डलप्रतिमादावपि तावत्समुदायस्यैवोपादानत्वम्, अन्यथा अनेकं कार्यं स्यात् । एकस्यैकमेवोपादानमिति निश्चयः । कार्यस्य पाञ्चभौतिकत्वात् जलादयः संयुक्ता भवन्तीति तेऽपि ततः पृथग्भूता परमाणुत्वमापद्येरन् । भगवांश्च सर्वत्रोपादानमिति चरमत्वं च तस्योपपद्यत इति तद्व्यावृत्त्यर्थमनेक इति । स त्वेक एव । असम्भवव्यावृत्त्यर्थमेव सदा । परमाणुर्विज्ञेयः, विशेषेण तत्र ज्ञानमपि विधीयते । कुयुक्त्या सोऽन्यथा न मन्तव्य इत्यर्थः । तस्य परमाणोः स्वरूपमुक्त्वा कार्यमाह—नृणामैक्यभ्रमो यत इति । नृणां जीवानाम्, यैः परमाणुभिः कृत्वा, आत्मना सह देहस्यैक्यभ्रमो भवति । ऐक्यभ्रमहेतवः परमाणव एव । ते ह्यतिसूक्ष्मा धर्माधर्माभ्यां संस्कृता जीवे संबध्यन्ते, तदा देहभावमापद्यन्ते । अत एव ते दुष्टाः कालस्योपाधिभूताः । तत्संबन्धे जीवस्य नाश एव । अत एव तेषां भ्रमजनकत्वम् । पुञ्जात्पुञ्जोत्पत्तिपक्षमाश्रित्य भ्रमात्केचिदाहुः । तत्सोढव्यम् ।

---

## प्रकाशः

—एवमित्यादि । तावत्समुदायस्येति । सुवर्णमण्यादिसमुदायस्य । तथा (च) न क्वापि कारणताव्यभिचार इत्यर्थः । ननु समुदायस्थले बहूनां न कारणता, किन्तु समुदायस्यैवेत्यत्र किं गमकमित्यत आहुः—अन्यथेत्यादि । तव मते कारणगुणानां कार्यगुणारम्भकत्वनियमात् कारणगतैकत्वैः प्रत्येकमेकत्वारम्भे कार्येऽनेकैकत्वप्रतीतिः, अनारम्भेऽपि तद्गतैकत्वानामेव प्रतीतिरापद्येतेत्युभयथाऽपि कार्यं स्वनिष्ठैकत्वशून्यमेव स्यात् । अतस्तादृशस्थले कार्ये एकत्वप्रतीतिरेव समुदायस्य कारणतागमिकेत्यर्थः । एवं च व्यासज्यवृत्तिकारणतायां बहूनां कारणता, समुदायपक्षे त्वेकत्र पर्यवसितेति लाघवमपि बोध्यम् । एवं जरायुजेषु बीजरजोंशसमुदायस्यैवोपादानता । मान्धात्रादावपि पुंसवनजलादिकमेव रजः स्था(प)नीयम् । एतेनैवाऽण्डजोद्भिज्जा अपि व्याख्याताः । स्वेदजा अपि स्थूलांशादेव स्वेदात् सूक्ष्मा उत्पद्यन्ते, वृद्धिस्तु पश्चादाहारादिना । तदेतत् सर्वं हृदिकृत्याहुः—एकस्येत्यादि । ननु तर्हि परमाणुपुञ्जादेव कार्योत्पत्तिरस्तु । तस्य सदा असंयुतत्वेन कार्यावस्थानङ्गीकारे किं बीजमत आहुः—कार्यस्येत्यादि । संयोगादुत्पत्तौ हि विभागान्नाशः । कारणावस्थयाऽवस्थानं च प्रत्यक्षसिद्धम् । अतो यदि परमाणुपुञ्जादुत्पत्तिः कार्यस्य स्यात्, तदा नाशदशायां कार्यं तथा स्यात् । तत्तु न दृश्यते, न वा श्रूयते; अतः प्रमाणानुरोध एव तदनङ्गीकारे बीजमित्यर्थः । एवमसंयुतत्वं परीक्ष्य अनेकत्वं परीक्षन्ते—भगवानित्यादि । सदापदं तु परीक्षितमेवेत्याहुः—असम्भवेत्यादि । एवं लक्षणं विचार्य, विज्ञेयत्वप्रयोजनं विचारयन्ति—विशेषेणेत्यादि । कुयुक्त्येति । नैयायिकादिप्रसिद्ध(त)या तन्नित्यत्वसंयुक्तत्वादिसाधिकया । ननु परमाणुभ्यः कार्यानङ्गीकारे तेषां प्रयोजनान्तराभावात्तदुपगमवैयर्थ्यमित्यत आहुः—तस्येत्यादि । ऐक्यभ्रम इति । देहाध्यासः । तेषां तादृशभ्रमहेतुत्वमुपपादयन्ति—ते हीत्यादि । 'स्त्रियः प्रविष्ट उदरं पुंसो रेतःकणाश्रयः ।' इति वाक्याद्यदा जीवो गर्भे प्रविशति तदा, अन्यदा वा, तस्य पित्रादेश्च धर्माधर्माभ्यां संस्कृतास्तेऽपि तथाऽऽहारादिभिः प्रविश्य जीवे स्वरूपेण सम्बध्यन्ते, रजस्वलमिव तं कुर्वन्ति; तदा जीवा देहमापद्यन्ते, देहमध्यस्यन्ति; तेन तेषां तथात्वमित्यर्थः । अत एवेति । देहाध्यासापादकत्वादेव । नाश इति । स्वरूपाधज्ञानेन मोक्षप्रतिबन्धः । अत एवेति । धर्माधर्मसंस्कारेण दुष्टत्वादेव । श्रीधरीये–' ऐक्यभ्रमः=अवयविबुद्धि , 'येषां समूहेन कृतो विशेष. ' इति वक्ष्यमाणवाक्यात् ' इति व्याख्यातम् । तदनुवदन्ति—पुञ्जादित्यादि । भ्रमात् केचिदाहुरिति । एतावदवयविभ्रमात् ऐक्यभ्रमजनकत्वं केचिदाहुरित्यर्थः । तद्दूषयन्ति—तत्सोढव्यमिति । गु-

एतदर्थमेव कालावयवत्वेन निरूपणमिति भ्रमपदप्रयोगः । मनस्तु परमाणुपरिमाणमेव, न तु परमाणुः । परमाणवस्तु चतुर्विधा एव, अन्यथा पञ्चविधाः परमाणवः स्युः । कार्यं च ततः स्यात्, परमाणुत्वात् । अतो नित्यगतिमत्त्वं न लक्षणम् । 'तदेजति तन्नैजति' इति श्रुत्या नित्यो भगवान् परमाणुः स्यात् । भौतिकत्वं च तेषां साधनीयम् । स्मृतिश्च श्रुत्या बाधितेति वैशेषिकादीनां लक्षणं बाधितमेव । प्रकृते चाऽनुपयोगः ॥ १ ॥

एवं परमाणुलक्षणमुक्त्वा परममहतो लक्षणमाह---

**सत एव पदार्थस्य स्वरूपावस्थितस्य यत् ।**

---

प्रकाशः।

लवाक्योपन्यासात् तदनुकरणीयम् । अयमर्थः । मूले हि 'एवं निरुक्तं क्षितिशब्दवृत्तमसन्निधानात् परमाणवो ये । अविद्यया मनसा कल्पितास्ते येषां समूहेन कृतो विशेषः । ( ५–१२–९ ) ' इति यदुक्तम्, तत् रहूगणेनोपालम्भे जडेन स्वस्य भाराभावं बोधयितुम् । भारः कस्येति जिज्ञासायाम् ' अयं जनो नाम चलन् पृथिव्यां यः पार्थिवः ( ५–१२–५ ) ' इत्यनेन चलनक्रियाप्रयुक्तः पार्थिवे जनव्यवहारः, नो चेत् पाषाणतुल्यतेति बोधयित्वा, ततः प्रत्येकमवयवानुपर्युपरिष्टान्निरूप्य, तेषामुत्पत्तिनाशौ क्षितिनिष्ठाविति क्षितेरेव संस्थानविशेषात् तत्तद्व्यवहारकारण(त्व)मिति निरूप्य 'एवं निरुक्तम्' (५–१२–९) इति श्लोकेन पुञ्जापुञ्जोत्पत्तिराश्रितेत्यवयविभ्रमजनकत्वं यद्यप्यापातत आयाति, ' पीवेति राशौ न विदां प्रवादः ( ५–१०–९ ) ' इति कथनात्, तथापि तत्र तस्य न तात्पर्यम्, परमाणूनामप्यविद्याकल्पिततोक्त्या भ्रमविषयत्वाङ्गीकारेण विशेषभ्रमस्याऽत्र विवक्षितत्वात् । किन्तु स्वस्याऽध्यासाभावेन भाराभावे तात्पर्याद्देहाध्यासस्यैव भ्रमत्वं विवक्षितमिति सिध्यति । तदाहुः–एतदर्थमित्यादि । कालो हि नित्ये प्रपञ्चे भूतत्वादिभिः स्वकृतैर्धर्मैर्नश्वरत्वभ्रमं जनयतीति भ्रमजनकः । अतस्तेषामुक्तभ्रमजननयोग्यत्वज्ञापनायैव भ्रमपदप्रयोगः, न तु तेषामवयविभ्रमजनकत्वज्ञापनाय, सदा असंयुतत्वकथनेन तद्व्याख्यानेऽपि समूहावस्थानाङ्गीकारादिति । अतो भ्रान्तत्वेनोपेक्ष्यतया सोढव्यमिति भावः । ननु परमाणुभ्यः कार्योत्पत्त्यनङ्गीकारे मानसप्रजासृष्टिर्बाधिता स्यात्, तस्याऽपि परमाणुत्वात् । न च कारणतानानुगमः, स्पर्शवत्त्वमनादृत्य मूर्तत्वेनैव तदङ्गीकारादित्यत आहुः–मन इत्यादि । मनसो या सृष्टिः,सा चिन्तामण्यादिभ्य इव सामर्थ्यविशेषात्, न तु सजातीयसंयोगेन; अतो न दूषणमित्यर्थः । ननु किमत्र गमकमित्यत आहुः–परमाणव इत्यादि । स्यादिति । सजातीयसंयोगेन स्यात् । तथा (च) भौतिकत्वाभावः; कारणतामकार्यवैलक्षण्यं च मनसि परमाणुभेदगमकमित्यर्थः । ननु माऽस्तु ततः कार्यम्, तथापि तल्लक्षणानङ्गीकारे किं बीजमत आहुः–अत इत्यादि । अत इति । मनसि व्यभिचारात् । दूषणान्तरमाहुः–तदेजतीत्यादि । तथा चेदं दूषणद्वयमनङ्गीकारबीजमित्यर्थः । ननु भौतिकत्वे सतीति विशेषणान्नेमौ दोषावित्यत आहुः–भौतिकत्वमित्यादि । तथा च वैशेषिकमते सृष्ट्यादौ नित्यानां परमाणूनामेव सत्त्वेन तदतिरिक्तभूताभावात् केनचित् सम्बन्धेन तेषु भौतिकत्वं साधनीयम् । तच्च भूतत्वेन बाधितं सन्दिग्धं वा । अतस्तत्सिद्ध्यभावात् विशेषणमेवाऽसङ्गतमिति दूरनिरस्तस्तेन दोषाभाव इत्यर्थः । ननु कणादस्मृतिरूपाच्छब्दादेव तत्सिद्धिरित्यत आहुः–स्मृतिरित्यादि। श्रुत्येति । ' एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ।' इत्यादिरूपया । हेत्वन्तरमप्याहुः–प्रकृत इत्यादि । प्रकृत इति । कालज्ञाने ।

**कैवल्यं परममहानविशेषो निरन्तरः ॥ २ ॥**

+ सत एवेति । सतः कार्यमात्रस्य संपूर्णस्य ब्रह्माण्डस्य, स्वरूपावस्थितस्य, न तु प्राकट्येनाऽवस्थितस्य, कैवल्यमेकता, तत्परममहानिति लक्ष्यम् । पृथिवीमात्रे परममहानिति पक्षं निषेधति—अविशेष इति । नास्त्ययं पृथिवी जलमिति वा विशेषः, विशेषबुद्ध्यविषयः । निरन्तरो भेदशून्यश्च । सत एवेति स्वाप्निकव्युदासः । पदार्थस्येति वेदव्युदासः । स्वरूपावस्थित इति कार्यव्युदासः । ब्रह्माण्डस्थितो भगवान् परममहानित्युक्तं भवति । सर्वोऽपि पदार्थः सर्वत्र नैकबुद्ध्यारूढो विशेषकल्पनाशून्यः प्रमात्रपेक्षभेदशून्योऽपि । यावान् सूर्येण प्रकाश्यते, स सर्वो मिलितः परममहान् ॥ २ ॥

एवं पूर्वोत्तरावधी निरूप्य उपहितं कालं लक्षयति—

**एवं कालोऽप्यनुमितः सौक्ष्म्ये स्थौल्ये च सत्तम ! ।**
**संस्थानभुक्त्या भगवानव्यक्तो व्यक्तभुग्विभुः ॥ ३ ॥**

× एवं कालोऽप्यनुमित इति । यथा परमाणुपरममहान्तौ अनुमितौ, कार्यचरमविशेषेण कार्यसमुदायेन च, एवं कालोऽपि तद्बोक्ता तादृशपरिच्छेदकर्ता अनुमेयः, सौक्ष्म्ये स्थौल्ये च । सत्तमेति संबो-

---

प्रकाशः

+ सत एवेत्यत्र । प्राकट्येनेति । लोकादिरूपेण परिणामेन । एकतेति । एकत्वसङ्ख्या । अयमिति । परममहान् । सत एवेत्यादि । स्वाप्निकस्याऽपि जात्याकृतिव्यक्तिरूपत्वाभिमानेन पदार्थत्वादन्यानधिष्ठितेन, स्वरूपावस्थितत्वाच्च तत्राऽतिव्याप्तिवारणाय सत्पदमित्यर्थः । पदार्थस्येत्यादि । वेदस्याऽपि भगवदात्मकत्वेन स्वरूपावस्थितत्वात् सत्त्वाच्च तत्राऽतिव्याप्तिरिति तद्वारणाय पदार्थपदम्, वेदस्य पदत्वेन पदार्थत्वाभावाद्वारणमित्यर्थः । स्वरूपावस्थितस्येत्यादि । प्रापञ्चिकपदार्थे सत्त्वपदार्थत्वयोर्विद्यमानत्वेऽपि स्वकारणाधिष्ठितत्वेन स्वरूपावस्थितत्वात् सत्त्वाच्च तद्वारणमित्यर्थः । ननु ब्रह्माण्डस्याऽपि कार्यत्वेन स्वरूपावस्थितत्वाभावात् लक्षणम(यम)सम्भवीत्यत आहुः—ब्रह्माण्डेत्यादि । तथा च, 'यः पृथिव्यां तिष्ठन् यः पृथिवीमन्तरः' इति, 'महतो महीयान्' इति श्रुत्युक्तो भगवानेव परममहान् । तन्निष्ठैकत्वस्यैव परमहत्त्वेन, तस्य चाऽन्यत्राभावेनेदं तस्यैव लक्षणम्, न ब्रह्माण्डस्य । एतज्ज्ञापनायैव 'अविशेषो निरन्तरः' इति स्वरूपबोधकं पदद्वयमुक्तम्, अन्यथा न वदेत्, प्रयोजनाभावादित्यर्थः । तथा च, वस्तुतः परमाणुत्वस्याऽपि ब्रह्मण्येव पर्यवसानबोधनायाऽत्रैवं बोधितमिति भावः । नन्वस्य भक्तेः कथमुपयोग इत्याकाङ्क्षायामग्रिमस्वारस्येनाऽस्य तात्पर्यमाहुः—सर्वोऽपीत्यादि । अत्र शून्योऽपीत्यन्तं व्याख्येयवाक्यस्थपद्यतात्पर्यविवरणम्, भगवल्लीलात्वबोधनायाऽऽहुः; 'अथ ते भगवल्लीलाः' इत्येव प्रतिज्ञानात्। तथा च 'सर्वं सर्वमयम्' इति श्रुत्या सर्वोऽपि सन् पदार्थः सर्वत्र, तथापि स्वरूपेऽवस्थितत्वान्नैकबुद्ध्यारूढः, अविशेषत्वाद्विशेषकल्पनाशून्यः, निरन्तरत्वात् प्रमात्रपेक्षभेदशून्य इति वस्तुस्थितिः । एवं वस्तुस्थितौ सत्यामप्यग्रिमस्वारस्येन यावत्स्थितावच्छिन्नः सूर्यप्रकाशः परममहत्त्वेन ग्राह्य इत्यर्थः । एतेन श्रीधरीयस्याऽसङ्गतत्वमर्थादेव बोधितं ज्ञेयम् ।

× एवं काल इत्यत्र । यथेत्यादि । यद्यप्येतौ नाऽस्मदाद्यध्यक्षौ, तथापि यदध्यक्षौ, तेऽस्मानेताभ्यां हेतुभ्यां बोधयन्तीति यथा (व··· )तावनुमेयौ, तथा तादृशः कालोऽपि तत्परिच्छेदकत्वेनाऽनुमेय इत्यर्थः ।

धनमनुमानज्ञानार्थम्[1] । ननु कालस्य असक्तस्य भगवत इव कथं पदार्थसंबन्धः, कथं वाऽनुमानम् ? अन्यथा भगवतोऽप्यनुमानं स्यात् । तत्राऽऽह—संस्थानभुक्त्येति । संस्थानं तदवस्था, परमाणुत्वं परममहत्त्वमिति । भगवतो वस्तुस्वरूपत्वेन तुल्यत्वेऽपि यः संस्थानविशेषः, तस्य च यो भोगः, स कालकृत एवेति कार्यसौक्ष्म्यस्थौल्यात् कालस्य सौक्ष्म्यं स्थौल्यं च । नन्वेवं कथं करोति स्वरूपस्याऽन्यथात्वम्, तस्य च भोगम्' ततो भोगम् ? इत्याशङ्क्याऽऽह—भगवानिति । एवं सामर्थ्यरूपो भगवान् । यथा केचन तादृशीं मायामपि, विद्यां वा, कल्पयन्ति. अस्मिन् शास्त्रे स कालः । तर्हि एवं सर्वपदार्थभोक्तारं कथं सर्वे न पश्यन्तीत्याशङ्क्याऽऽह—अव्यक्त इति । तस्य कालस्य ग्रासनिवृत्तिपरिज्ञानार्थं कार्यमाह—व्यक्तभुगिति । ननु स्वयमव्यक्तो व्यक्तं कथं भुङ्क्ते ? तत्राऽऽह—विभुरिति । सर्वप्रकारेण भोक्तुं शक्त इत्यर्थः॥३॥

अनुमितं काले शब्दत आह—

स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम् ।
सतो विशेषभुग्यस्तु स कालः परमो महान् ॥ ४ ॥

स काल इति । यः परमाणुतां भुङ्क्ते परमाणुं व्याप्नोति, ततः स्वस्याऽपि परमाणुत्वमनुभवति, स परमाणुः काल इत्यर्थः । एवं सतो विशेषभुग्यः, सन्मात्रस्यैव विशेषतां यो भुङ्क्ते, तद्भोगेन स्वयं वा विशेषत्वं प्राप्नोति, स परममहान् कालः । तुशब्दो महत्त्वस्याऽऽयुः परिच्छिनत्ति ॥ ४ ॥

एवमाद्यन्तकालं निरूप्य मध्यकालं निरूपयति—

अणुर्द्वौ परमाणू स्यात्त्रसरेणुस्त्रयः स्मृतः ।
जालार्करश्म्यवगतः खमेवाऽनुपतन्न गाम् ॥ ५ ॥

* अणुर्द्वौ परमाणू स्यादिति । येन मार्गेण सूर्यरथचक्रं गच्छति, तस्मिन्मार्गे परमाणुदेशं यावता कालेनाऽतिक्रामति स परमाणुकालः । यावता परमाणुद्वयदेशमतिक्रामति सोऽणुकालः । एवमग्रेऽपि । यावता कालेन सर्वमेव नभोवलयं द्वादशराश्यात्मकमतिक्रामति स परममहान् संवत्सरात्मकः । अणुत्रयेण त्रसरेणुः । स्मृत इति तत्र प्रमाणं महतां स्मरणम् । स तु प्रत्यक्ष इत्याह—जालार्करश्म्यवगत इति । गवाक्षमार्गेणाऽन्तःप्रविष्टसूर्यरश्मिषु अवगतो भवति । अवगतेर्व्यञ्जकद्वयमाह—खमेवानुऽपतन्न गामिति।

प्रकाशः।

तदवस्थेति । सूर्यगन्तव्यदेशावस्था । एतस्यैव विवरणं परमाणुत्वमित्यादि । सौक्ष्म्यं स्थौल्यं चेति । अनुमेयमित्यर्थः। ततो भोगमिति । आध्यात्मिककालद्वारा भोगम् । भगवानिति । तथा च, 'यस्य ब्रह्म च क्षत्रं च' इति श्रुत्युक्तत्वादत्तृत्वात् करोतीत्यर्थः । एतेन चेत (न) त्वं बोधितम्। ग्रासनिवृत्तिपरिज्ञानार्थमिति। यं न ग्रसति. तं (?) परिज्ञानार्थम् । तथा चाऽव्यक्तं न ग्रसतीत्यर्थः ।

* अणुरित्यत्र । संवत्सरात्मक इति । मानुषसंवत्सरात्मकः' 'अणुर्द्वौ' 'त्रसरेणुस्त्रयः' इत्यादौ न द्वित्रियोगः, 'सदा असंयुतः' इत्यनेन तन्निवारणात्, किन्तु तावद्विभाजकाघातसहिष्णुत्वे (म) नाऽविभक्तत्वं बोध्यम् ।

[1] ज्ञापनार्थम् क ख.

न ते त्रसरेणवो भूमौ पतन्ति, किन्तु तस्मिन्नेव रश्मौ आकाशं प्रत्युड्डीयमाना गच्छन्ति। एकवचनमवा-न्तरभेदव्युदासार्थम् ॥ ५ ॥

त्रसरेणुत्रिकं भुङ्क्ते यः कालः स त्रुटिः स्मृतः।
शतभागस्तु वेधः स्यात्तैस्त्रिभिस्तु लवः स्मृतः ॥ ६ ॥
निमेषस्त्रिलवो ज्ञेय आम्नातस्ते त्रयः क्षणः।
क्षणान् पञ्च विदुः काष्ठां लघु ता दश पञ्च च ॥ ७ ॥
लघूनि वै समाम्नाता दश पञ्च च नाडिका।
ते द्वे मुहूर्तः प्रहरः षड्यामः सप्त वा नृणाम् ॥ ८ ॥

त्रसरेण्विति। त्रसरेणुत्रितयस्य यावान् कालः, स त्रुटिसंज्ञको भवति। स एव त्रुटिः शतभागो वेधः, शतांशो भागः। शतशब्दोऽत्र नाऽपरिमितवाचीत्याह—तुशब्दः। शतं त्रुटय एको वेध इत्यर्थः। वेधत्रयं लवः॥ निमेषस्त्रिलवः॥ निमेषत्रयं क्षणः। पञ्च क्षणाः काष्ठा। पञ्चदश काष्ठा लघु॥ पञ्चदशलघूनि नाडिका। नाडिकाद्वयं मुहूर्तः। नाडिकाषट्कं प्रहरः, सप्त वा। नृणां मनुष्याणाम्। यन्नाडिका घटिकापेक्षया स्थूला, तेन कथमपि वृद्धा रात्रिर्दिनं वा, तस्य चतुर्थो भागः सप्तनाड्यात्मकः, ह्रासे तु षण्नाड्यात्मकः। एवमहोरात्रे द्विपञ्चाशन्नाडिका भवन्ति। षष्टिनाडिका एवैमंवकारेणाऽत्र गणिताः। ×ये तु सन्ध्याद्वयपरित्यागेनाऽऽहुः, तैः 'यामाश्चत्वारश्चत्वारः' इति वाक्यमनुसन्धेयम्। अथ यदि प्रातःसन्ध्या दिवसे, सायंसन्ध्या रात्राविति; तत्रोभयत्र घटिकाचतुष्टयं न गणितमिति। तथा गणनायां प्रयोजनाभावात्। सन्ध्यासन्ध्यांशव्यतिरेकेण मध्ये धर्मार्थमिति चेत्? एवमप्यायुर्निरूपकत्वेन तत्त्यागे प्रयोजनाभावात्। तत्र धर्मकरणे आयुर्वर्द्धत इति चेत्? अन्यदा धर्मकरणे आयुर्वृद्धिर्न स्यात्। 'उद्यन्नस्तमयन्नसौ' इतिविरोधश्च। न च नृणामिति वाक्यात् पूर्वसन्ध्याकालो देवानाम्, पश्चात्तनोऽसुराणामिति। एवमप्यायुःपरिमाणार्थं न गणितव्यम्। धर्मार्थमेव तथाकथनं न युक्तम्। किञ्च, यदि वक्ष्यमाणं प्रमाणं साम्प्रतं नाडीपरिमाणमेव स्यात्, तदैवं कल्पनमुचितम्, वर्द्धते त्विदं परिमाणम् ॥ ६ ॥ ७ ॥ ८ ॥

प्रकाशः।

× ते द्वे मुहूर्त इत्यत्र। ये त्वित्यादिना श्रीधरव्याख्यानमनूद्य तत्राऽस्वरसमाहुः—तैरित्यादि। अनुसन्धेयमिति। तथा गणनायां 'चत्वारो या(मा)मुहूर्तद्वयं चाऽह्नि' इतिवाक्यं स्यात्, न तु तावन्मात्रम्, अतस्तैरनुसन्धेयमित्यर्थः। एवमपीत्यादि। धर्मार्थत्वेपि 'संवत्सरशतं नृणां परमायुर्निरूपितम्' इत्यग्रे वाक्यादग्या गणनायास्तादृश्यां निरूपकत्वेन घटिकाचतुष्टयत्यागे आयुःपरिमाणं न भवेदिति तत्त्यागे प्रयोजनाभावादित्यर्थः। तत्रेति। दिनरात्र्योः। अन्यदेति सन्ध्याद्वये। दूषणान्तरमाहुः—उद्यन्नित्यादि। तथा चाऽस्मिन् वाक्ये सन्ध्यां गृहीत्वैवाऽऽयुर्हरणोक्तेः सन्ध्ययोरप्यायुर्मानान्तरगतत्वमवधार्यते, तयोरनन्तर्गतत्वे पूर्ववाक्यविरोध इत्यर्थः। उक्तपक्षान्तराभ्युपगमेऽपि नोक्तदूषणोद्धार इत्याहुः—एवमित्यादि। वक्ष्यमाणवाक्यविरोधेन पूर्वोक्तकल्पनस्याऽयुक्तत्वमाहुः—किञ्चेत्यादि।

१ ॰भिर्भि. ग. २ कल्पनम्. च. कल्पनम्. ख. ग. ङ. च.

तदर्थं मानमाह—

द्वादशार्धपलोन्मानं चतुर्भिश्चतुरङ्गुलैः ।
स्वर्णमाषैः कृतच्छिद्रं यावत्प्रस्थजलप्लुतम् ॥ ९ ॥

द्वादशार्धपलोन्मानमिति। द्वादशार्धं षट् । उभयज्ञाने न्यूनाधिकभावो बुध्यत इति तुल्यज्ञानार्थं द्वादशार्धता उक्ता । पलं सुवर्णाश्चत्वारः । सुवर्णं षोडशमाषम् । पञ्चगुञ्जापरिमितो माषः । गुञ्जा च त्रियवा । द्वादशार्धपलेन ताम्रेण पात्रं विधाय, स्वर्णशलाकाचतुष्टयेन मिलितेन मध्ये छिद्रं कर्तव्यम् । ते च स्वर्णमाषाश्चतुरङ्गुलाः, चतुस्त्रिंशतिलानां चतुर्गुणदीर्घाः । तदाह—स्वर्णमाषैश्चतुर्भिश्चतुरङ्गुलैरिति । यावत्प्रस्थं जलं तत्र माति, तावति प्रविष्टे प्लुतं भवति ॥ ९ ॥

एवं नाडिकापरिमाणमुक्त्वा तत ऊर्ध्वं कालपरिमाणमाह—

यामाश्चत्वारश्चत्वारो मर्त्यानामहनी उभे ।
पक्षः पञ्चदशाहानि शुक्लः कृष्णश्च मानद ! ॥ १० ॥

+यामाश्चत्वार इति । चत्वारो यामा अहः, पुनश्चत्वारो यामा रात्रिरिति ज्ञापयितुं द्विरुक्तिः। अहनी रात्रिन्दिवम् । उभे इति आवृत्तिव्युदासार्थम् । एवमुभयं मिलित्वा एकमहः । पञ्चदशाहानि पक्षः । स पक्षो द्विविधः, शुक्लः कृष्णश्चेति । रात्रिमुखे चन्द्रदर्शनयुक्तः शुक्लः, रात्रिमुखे एतद्द्वीपे चन्द्राभावयुक्तः कृष्णः । मानदेति संबोधनं श्रुत्वैव वचनान्यवगच्छतीति गुरोर्मानदाता । पञ्चदशाहानीति कलाभिप्रायम् ॥ १० ॥

तयोः समुच्चयो मासः पितॄणां तदहर्निशम् ।
द्वौ तावृतुः षडयनं दक्षिणं चोत्तरं दिवि ॥ ११ ॥
अयने चाऽहनी प्राहुर्वत्सरो द्वादश स्मृतः ।
संवत्सरशतं नृणां परमायुर्निरूपितम् ॥ १२ ॥

* तयोः समुच्चय इति । तयोः समुच्चयो मेलनं मासः। स उभयविधो भवतीति द्वयमप्यस्याऽभिमतम्।

---

प्रकाशः।

+ यामा इत्यत्र। कलाभिप्रायमिति । गणितेन तिथिह्रासवृद्धी पञ्चदशाहपक्षस्य बाधमाशङ्क्य तत्सगाधानायेदमुक्तम् । तथा च, सूर्यस्य पृथ्वीकृतव्यवधानादिनाऽऽधिक्यन्यूनभावेऽपि कलाविचारेण सर्वदा ऐकरूप्येण पञ्चदशाहानीत्यर्थः ।

*तयोः समुच्चय इत्यत्र। स उभयविध इत्यादि। 'अमावास्या हि मासान् संपदयन्ती' 'पौर्णमास्या हि मासान् संपश्यन्ती' इति श्रुतेः। शुक्लादिकृष्णादिभेदेनोभयविधोऽत्र नाऽभिमतः, किन्तु पञ्चमस्कन्धे सूर्यं प्रक्रम्य 'द्वादश मासान् भुङ्क्ते राशिसंज्ञान्, संवत्सरावयवान्, मासः पक्षद्वयम्, दिवा नक्तं चेति सपादर्क्षद्वयमुपदिशन्ति' इत्यनेन पक्षद्वयं मासश्चान्द्रमानेन, तदेव पक्षद्वयं पितॄणां दिवा नक्तं च। सौरविचारेण तु सपादर्क्षद्वयं मास इत्युक्तम्। अग्रे

पितृणां तदहर्निशमिति । चन्द्रस्य पञ्चदशकलासु यदा प्रविशति, तदा रात्रिः, चन्द्रेण व्यवधानात् । यदा ततोऽपगच्छति तदा दिनम् । पितरो हि जलकृतमेव व्यवधानं सूर्यस्य मन्यन्ते , न तु पृथिवीकृतम् । यथाऽस्माकं चन्द्रे विद्यमानेऽविद्यमाने वा सूर्योदयास्तमयाभ्यामेव रात्रिदिनव्यवस्था; तथा तेषां सूर्यस्थितिरप्रयोजिका, चन्द्रकलासु प्रवेशनिर्गमावेव प्रयोजकौ । प्रवेश एव कलोत्पत्तिः, निर्गम एव कलाक्षयः । निर्गमो दिनमित्यमावास्यायामहर्दिनं तेषां भोजनकालो भवति, पौर्णमास्यां तु तृप्ताः शेरत इति तेषां दिनरात्रिव्यवस्था । एवं मासद्वयमृतुः, षण्मासास्त्वयनम्, 'द्वादशमासाः संवत्सरः' इति अयनद्वयं वत्सरः । तयोर्नाम दक्षिणं चोत्तरमिति । दक्षिणायनमुत्तरायणं चेत्यर्थः । तदयनद्वयं दिवि स्वर्गे अहनी प्राहुः । दक्षिणायनं रात्रिः, उत्तरायणमहः । स्वर्गस्थास्तेजःकृतमेव व्यवधानं सूर्यस्य मन्यन्ते, न चन्द्रकृतम्, नाऽपि पृथिवीकृतम् । तत्र नक्षत्राणि तेजःशब्देनोच्यन्ते । तत्रोत्तराषाढ उत्तरायणदिवसस्याऽरुणोदयः । तस्य पादे उपभुक्ते सूर्योदयो भवति, तदा भवति मकरः । पुनर्वसुपादत्रयपर्यन्तं दिनम् । एतानि नक्षत्राणि मालाकारेण वर्तन्तेऽन्योन्यसम्मुखानि । तेषु परभागे पूर्वभागे वा स्थिता अर्द्धं पश्यन्त्यर्द्धं न । यथा द्विगुणे वस्त्रे चित्रार्द्धमेवैकत्र स्थिताः पश्यन्ति, तथा देवानामपि पुनर्वसुपादमारभ्य उत्तराषाढपर्यन्तं नक्षत्राणि व्यवधायकानि । सर्वाण्येतान्युपरिमुखानि मालारूपेण च वर्तन्ते । अतो

## प्रकाशः।

चन्द्रं प्रक्रम्य 'आपूर्यमाणाभिश्च कलाभिरमराणामपक्षीयमाणाभिश्च कलाभिः पितृणामहोरात्राणि पूर्वापरपक्षाभ्यां वितन्वानः' इति कथनात् सूर्यकृतश्चन्द्रकृतश्च मासोऽङ्गीकृतः, तेनोभयविधः स भवतीत्येतद्द्वयं पितृणां कृतां पैत्रामहोरात्रां(?)पञ्चदशाहपक्षाङ्गीकारेण, देवानामहोरात्रं सूर्यकृतायनाङ्गीकारेण वदतो मैत्रेयस्याऽभिप्रेतमित्यर्थः। युगपदुभ(या)हो(रा)त्र व्यवस्थां विचारयन्ति—चन्द्रस्येत्यादि। प्रविशतीति । 'अद्भ्यो वा एष उदेति, पुनरपः प्रविशति' इति श्रुतेर्जलात्मिकासु तासु सूर्यः प्रविशति । ननूपरिष्टा(स्था)नां तेषां पृथिव्याऽपि व्यवधानसम्भवात् कथमेवमित्याकाङ्क्षायामुपपादयन्ति—पितरो हीत्यादि । जलकृतमिति । 'चन्द्रमा वा अपामायतनम्' इति श्रुतेर्जलमयत्वात्तत्कृतम् । इतीति । मूले शुक्लकृष्णसमुच्चयरूपचान्द्रमासस्य पित्र्याहोरात्रत्वेन कथनान्मान्येत्यर्थः। अत्रैवं भाति। सिद्धान्तशिरोमणौ भास्कराचार्यैः 'विधूर्ध्वभागे पितरो वसन्तः स्वाधः सुधादीधितिमामनन्ति । पश्यन्ति तेऽर्कं निजमस्तकोर्ध्वे दर्शे यतोऽस्माद्द्विदलं हि तेषाम् । भार्द्धान्तरत्वान्न विधोरधःस्थं तस्मान्निशीथः खलु पौर्णमास्याम् । कृष्णे रविः पक्षदलेऽभ्युदेति शुक्लेऽस्तमेत्यर्थत एव सिद्धम्।' । इति पितृलोकं चन्द्रकक्षात उपर्यङ्गीकृत्य सूर्याचन्द्रमसोरैकराश्येऽमावास्यायां मध्याह्नः । भं राशिचक्रं द्वादशराश्यात्मकम्, तदर्धं षड्राश्यात्मकम्, तावदन्तरत्वान्नीचस्थे चन्द्रे सति तेन व्यवहितं सूर्यं न पश्यति । सर्वनिशीथस्तदा भवति। यदा चन्द्रोऽग्रेनिःसरति तदा नीचैः खण्डितं पश्यन्तीति सूर्यसत्त्वेऽपि रात्रिः। यदा नवराश्यन्तरं तदा सूर्यस्तल्लोकसमानदेशे समायाति' तदा दिनोदयः, एवं सायमपि । तदत्राप्यभिप्रेतम् । पञ्चमस्कन्धीयगोलादस्य भिन्नत्वे चन्द्रस्थितेरपि नीचैः सत्त्वेन सर्वमुपपन्नम् । एतावान् परं विशेषः । तैरन्तरायमात्रमङ्गीकृतेऽत्र[?] तु किरणद्वारा तत्र स्थितिरिति । अयने चाऽहनी इत्यत्र । तेजः कृतमिति । यथा प्राच्यां दिशि प्रातर्दावाग्नौ प्रज्वलति प्रतीचीस्थेन प्राङ्मुखेनाऽपि सूर्योदयो नोपलभ्यते ' दूरस्थसूर्यस्य निकटेनाऽऽग्नेयतेजसा व्यवधानात्, तद्वदित्यर्थः । मन्यन्त इति । रात्रिव्यवस्थापकत्वेन मन्यन्ते । उक्तं प्रकारं नक्षत्रस्थितिप्रकारबोधनेनोपपादयन्ति—एतानीत्यादि । यथेत्यादि । पश्चाद्भागस्थिता अग्रभागम्, अग्रस्थिताश्च पश्चाद्भागमित्यर्थः । व्यवधायकानीति । सूर्यव्यवधायकानि । उपरिमुखानीति । स्होपर्यवाङ्गोपरिमुखानि, किन्तु वृक्षवत् ।

दक्षिणायननक्षत्राणि यदा सूर्यसहितानि भवन्ति, तदोमयनक्षत्राण्यप्यधोमुखानि भवन्तीति सूर्यस्तैर्न दृश्यत एव । प्राहुरिति प्रमाणम् । द्वादशमासा वत्सरः । अत्रापि स्मृत इति प्रमाणम् । संवत्सरशतं तु नृणां परमायुः, अवृद्धिक्षये । एकेन संवत्सरेण एकमायुः कालेनोपभुक्तं भवति,'शतायुर्वै पुरुषः' इति श्रुतेः । धर्मे [redacted] क्रियमाणे कालेनाऽऽयुर्भोगः प्रतिबध्यते, तदा शतसंवत्सरादप्यधिकं जीवति । पापे तु क्रियमाणे पापमप्यायुरुपभुङ्क्ते, कालोऽपि; तच्चेत्पापं कालसमानं भवति । उत्कृष्टं चेत् भूयस आयुषः क्षयः । उत्कृष्टपापे बहुजन्मजनके बीजपातक्षणमारभ्य पञ्चविंशतिवर्षपर्यन्तं नानाविधा योनयः प्राप्यन्ते, न तेन शतायुःश्रुतिभङ्गः । निरूपितमिति प्रमाणम् ॥ १२ ॥

एवं कालं निरूप्य उपसंहरति—

**ग्रहर्क्षताराचक्रस्थः परमाण्वादिना जगत् ।**
**संवत्सरावसानेन पर्येत्यनिमिषो विभुः ॥ १३ ॥**

**ग्रहर्क्षताराचक्रस्थ इति** । ग्रहा बुधादयः, ऋक्षाण्यश्विन्यादीनि, तारा अन्याः, तेषां चक्रं भचक्रम् । तत्र विद्यमानः सूर्यः, तत्रस्थपरमाणुदेशमारभ्य संवत्सरावसानपर्यन्तम्, पर्येति पुनः पुनर्मण्डलाकारेण परिभ्रमति । अनिमिषःपरग्रसने सावधानः । विभुः समर्थः । जगत्पर्येति उपभुङ्क्ते ॥ १३ ॥

तस्य संवत्सरात्मकस्य केनचिन्निमित्तेन पञ्च नामानि सन्ति । तान्युपासनार्थमाह—

**संवत्सरः परिवत्सर इडावत्सर एव च ।**
**अनुवत्सरो वत्सरश्च विदुरेवं प्रभाष्यते ॥ १४ ॥**

---

प्रकाशः।

अधोमुखानीति । नीचैःस्थानि । अत्रेदं प्रतिभाति । 'देवगृहा वै नक्षत्राणि' इति श्रुत्या नक्षत्राणां देवगृहत्वमुक्तम् । तानि च शिशुमारे स्थिराण्यपि तद्भ्रमणेन भ्रमन्ति दृश्यन्त इति तद्वासिनो देवा अपि तथा । अत एव पञ्चमस्कन्धे ध्रुवक्षितिप्रशंसायाम् 'यत्र ह महाभागवतो ध्रुव औत्तानपादिरग्निनेन्द्रेण प्रजापतिना कश्यपेन धर्मेण च समकालयुग्भिः सबहुमानं दक्षिणतः क्रियमाणः' इत्युक्तम् । तथोत्तरायणनक्षत्रेषु देवानां स्थितिरिति तत्र सूर्यस्थितौ नैकट्यान्नीचैः सूर्यो दृश्यते, सूर्यकक्षाया नक्षत्रकक्षातो नीचैर्विद्यमानत्वात् । दक्षिणायननक्षत्रेषु सूर्यस्थितौ तूत्तरायणनक्षत्रेभ्यो नीचैःस्थोऽतिदूरः सूर्यो न दृश्यत एव । दिवसे तु प्रात्यहिकशिशुमारभ्रमणचन्द्रभ्रमणयोर्वेशाद्यद्यपि मेघेष्विव किञ्चित् किञ्चित् कालं पिधीयते, तथापि तं व्यवधानं ते रात्रिव्यवस्थापकतया न मन्यन्ते, सूर्यनैकट्येन प्रकाशस्य विद्यमानत्वादिति । इदं च पुराणमतीयदैवाहोरात्रविभागस्य युक्तिरहितेनाज्ञामात्रतां ये मन्यते ज्योतिर्विदः, तन्मतनिराकरणार्थं निरूपितमिति । ननु कृतादिष्वधिकायुःस्मरणादिदानीमपि क्वचिद्दर्शनाच्च कथं संवत्सरशतस्य परमायुष्ट्वम्, येन श्रुत्यविरोध इत्यतस्तदुपपादयन्ति—एकेनेत्यादि । कालेनाऽऽयुर्भोगः प्रतिबध्यत इति । कालेन क्रियमाण आयुर्भोगो धर्मेण प्रतिबध्यते ।

* संवत्सर इति । मासा पञ्चविधा संवत्सरसमाप्तिसूचका. । ' द्वादश मासाः संवत्सर ' ' त्रयोदश मासाः संवत्सरः ' इति ब्राह्मणम् । त्रयोदश मासा संवत्सर इति नाक्षत्रे नियतम्, चान्द्रे कादाचित्कम् । द्वादश मासा संवत्सर इति सौरे नियतम्, चान्द्रे कादाचित्कम् । बार्हस्पत्ये तु प्रभवादयस्ते नियताः । वैष्णवोऽपि नियत । सावनस्तु न नियत, प्रतिदिनपर्यवसायित्वात् । अत संवत्सरप्रयुक्त्या प्रभवादिनामसिद्ध्यर्थं बार्हस्पत्यमानमप्यपेक्ष्यते । व्रतादिसिद्ध्यर्थमेकादश्यादिरपि मासो वैष्णव, अन्यथा भगवत शयन रात्रौ भागद्वयेन स्यात् । सावनस्तु व्यवहारसिद्ध, न श्रुतिपदवीमारोढुमर्हतीति । अत पञ्चैव संवत्सरा । तत्र चान्द्र संवत्सर, परिवत्सरो वैष्णव, इडावत्सर सौर, अनुवत्सरो नाक्षत्र, वत्सरो दैव । विदुरेति सबोधन स्नेहेन परिज्ञानार्थम् । यद्यप्येक एव काल सर्वेषाम्, न संवत्सरभेदेन आवृत्त्या, तथापि नामान्येव पञ्चेत्येवं परिभाष्यत इत्युक्तम् । केचित्तु षष्टिसंवत्सरा मासत्वेन परिवृत्ता द्वादशधा परिवर्तमाना पञ्चवत्सरात्मका भवन्तीत्याहु । प्रभवादिबहुधान्यान्ताः संवत्सरशब्दवाच्या, प्रमाथ्यादयो द्वादश द्वादशोत्तरशब्दवाच्या इति । तत्र मासादीना नियामकत्वाभावाच्चिन्त्यम् ॥१४॥

+ एव कालस्य भेदत्रयमुपपाद्य तत्रोपासनमाह फलार्थम्—

**यः सृज्यशक्तिमुरुधोच्छ्वसयन्स्वशक्त्या**
**पुंसोऽभ्रमाय दिवि धावति भूतभेदः ॥**
**कालाख्यया गुणमयं क्रतुभिर्वितन्वं-**

प्रकाश ।

* संवत्सरइत्यत्र । संवत्सरादिनाम्ना निमित्तं विचारयन्ति—मासाः पञ्चविधा इत्यादि । प्रभवादय इति । संवत्सरा, न तु मासा इत्यर्थः । व्रतादिसिद्ध्यर्थमिति । चातुर्मास्यव्रतादिसिद्ध्यर्थम् । एकादश्यादिर्वैष्णवो मास सावनातिरिक्त इत्यत्र गमकमाहु:—अन्यथेत्यादि । आषाढशुक्लैकादश्या मैत्रा नुपादे भगवच्छयनमुक्तम् । कार्तिकशुक्लैकादश्या रेवत्यन्त्यपादे प्रबोधश्च । तेन मासाश्चत्वारो भवन्ति । तत्र नाक्षत्रग्रहणे पञ्चदिनाधिकपञ्चमासा भवन्तीति माससङ्ख्याविरोध । सौरचान्द्रग्रहणे तिथिविरोध । बार्हस्पत्यस्त्वसम्बद्ध । अत पर सावनोऽवशिष्यते । स तु ' इनोदयद्वयान्तरं तदर्कसावन दिनम्[1] ' इतिलक्षणको यद्दिनमारभ्य प्रवृत्तस्तत्रिंशे निवर्तते, यथा बुधे प्रवृत्तस्त्रिंशद्दिवसे गुरौ निवर्तते । अत स्तद्ग्रहणेऽत्र क्रियमाणे तिथिर्विरुध्येत । ' प्रसुप्त बोधयेद्रात्रौ ' विधानाच्छयनमपि रात्रौ स्यात् । एव सावनस्याऽश्रौतत्वसाधनेन सावनमादाय श्रीधरकृता संवत्सरव्यवस्था निरस्ता । दैव इति । बार्हस्पत्य । प्रतितिथिकृतो मासाग्निहोत्रमासिकश्राद्धाद्युपयुक्तो वा दैव । ज्योतिर्विदा मतमाहु—केचिदित्यादि । तस्य पक्षस्याऽनभिप्रेतत्वमाहु:—तत्रेत्यादि । श्रीधरीये तु—' यदाशुक्लपक्षप्रतिपदि सङ्क्रान्तिर्भवति, तदा सौरचान्द्रमासयोर्युगपदुपक्रमो भवति, स संवत्सर । तत सौरमानेन षट् दिनानि वर्धन्ते, चान्द्रमानेन षट् ह्रसन्ति । एव द्वादशदिनव्यवधानादुभयोरग्रपश्चाद्भावो भवति । एव व्यवधानतारतम्येन पञ्च वर्षाणि गच्छन्ति, तन्मध्ये द्वौ मलमासौ भवत, तेषु परि(वरि)वत्सरादिनामता, तत पुन षष्ठे संवत्सरत्वम्, इति कस्यचिन्मतमुक्तम् । तत्राऽप्युक्त एव दोषो बोध्य ।

+ यः सृज्येत्यत्र । भेदत्रयमिति । मानुषदैवपितृभेदेन प्रकारत्रयम् ।

[1] सोऽत्र दिन पा

**स्तस्मै बलिं हरत वत्सरपञ्चकाय ॥ १५ ॥**

यः सृज्येति । कालस्य प्रयोजनं वदन् भजनमुपपादयितुं माहात्म्यमाह—यः सृज्येषु अङ्कुरादिषु, बीजादिस्थितां शक्तिमुरुधोच्छ्वसयन्, पत्रकाण्डादिभेदेन बीजसामर्थ्यं प्रकटयन्; स्वस्य शक्त्या किरणादिस्थितसामर्थ्येन, प्रतिक्षणं प्रकारभेदजनकेन, बीजशक्तिं प्रकटीकुर्वन्; पुंसोऽधिकारिणोऽभ्रमाय वैराग्यार्थं दिवि स्वर्गे धावति परिभ्रमति । धावतीत्यनेन क्षणमात्रमपि पारलौकिकयत्नं विना न स्थातव्यमिति ज्ञापयति । ननु धावनेन कथमेवं भवतीत्याशङ्क्याऽऽह—भूतभेद इति । भूतानां भेदो यत्र । स हि कालः सर्वाणि भूतानि भिनत्ति, अतः स्वस्याऽपि भेदशङ्कया वैराग्यजनकत्वम् । स्वशक्त्येत्यत्र 'यदादित्यगतं तेजः' इति वाक्यात् भगवच्छक्तिर्भविष्यतीत्याशङ्क्य तन्निवृत्त्यर्थमाह—कालाख्ययेति । कलयत्याकलयतीति काल आख्या यस्य । तत्र प्रकाशकत्वेनैव भगवत्तेजः प्रविष्टमिति कालद्वारैवेयं भगवच्छक्तिः । एवं साधने सामर्थ्यमुपपाद्य फले सामर्थ्यमुपपादयति—गुणमयं क्रतुभिर्वितन्वानेति । गुणमयमानन्दमयं स्वर्गादि । 'आनन्दादयः प्रधानस्य' इति न्यायात् आनन्दादय एव गुणाः, तन्मयाः स्वर्गादयः । क्रतवोऽपि कालभेदा एव, अतः क्रतुभिः स्वर्गादिकं वितन्वन् । न ह्यधिष्ठातृव्यतिरेकेण यागादयः प्रकटीभवितुमर्हन्ति, स्वर्गो वा प्रकटीभवितुमर्हति । सोऽपि भगवदंशश्चेतनः, 'देवेभ्यो वै स्वर्गो लोकस्तिरोभवत्' इत्यत्र निर्णीतः । एवं फलसाधकः प्रवर्तको भगवान् वत्सरपञ्चकप्रवर्तकः, तादृशाय कालात्मने सूर्याय बलिं हरत, तदुपार्जितान्नभोक्तारस्तत्पदुपार्जितस्वर्गभोक्तारश्च, अन्यथा कृतघ्नता स्यात्, भोगश्च न सिध्येत् । येनैवोपायेन भोगः सिद्ध्यति, कालो वा न ग्रसति, स च प्रीतो भवेत्तथोपायः कर्तव्यः । अहरहरुपासनं कर्तव्यमिति सिद्धम् ॥ १५ ॥

×एवं त्रिविधकालं निरूप्य, तूष्णींभावे, आयुःप्रतिपादकत्वेन तदुपपादितं निरूप्यविशेषं प्रष्टुमाह—

## विदुर उवाच ।

**पितृदेवमनुष्याणामायुः परमिदं स्मृतम् ।**
**परेषां गतिमाचक्ष्व ये स्युः कल्पाद्बहिर्विदः ॥ १६ ॥**

पितृदेवमनुष्याणामिति । आयुरायुःपरिमाणम् । परं पर्यवसितम् । परेषां कल्पवासिनाम् । ये कल्पान्तरेऽप्युत्पन्नाः कल्पसमाप्तावपि अनुवर्तन्ते, तेषां गतिं दिनरात्रिव्यवस्थाम्, तत्र तेषां कृतिं वा आचक्ष्व । केचन कल्पान्तमेव तिष्ठन्ति, तेषां कल्पस्यैवाऽऽयुष्ट्वम् । ततोऽपि ये कल्पाद्बहिर्जीवन्ति, जीवने हेतुः—विद इति । ज्ञानिन एव च बहुकल्पजीविनः ॥ १६ ॥

तत्र कथनार्थं मैत्रेयस्य ज्ञानमुपपादयति—

**भगवान्वेद कालस्य गतिं भगवतो ननु ।**
**विश्वं विचक्षते धीरा योगराद्धेन चक्षुषा ॥ १७ ॥**

---

प्रकाशः।

× पितृदेवेत्यत्र । निरूप्यविशेषमित्येकं पदम् । मूले इदंपदस्य संवत्सरगणनागणितमित्यर्थः । तथेति कल्पात्मकेऽद्योत्रे ।

भगवानिति। भवान् भगवान्, भगवत्कृपया तथात्वात्, भगवति श्रद्धावत्त्वाच्च। अत एव भगवतः कालस्य गतिं वेद। स हि स्वात्मानं वेदेति। किञ्च, धीराः संसारखेदसहिष्णवो योगसिद्धाः, विश्वं सर्वमेव योगसिद्धेन चक्षुषा विचक्षते। अतो योगजधर्मेण ज्ञानेन च विचक्षते। चक्षुषेति निःसन्दिग्धार्थम्। योगसिद्धत्वात् न भ्रमजनकत्वम्॥ १७॥

यथा क्षणादिभिर्दिनगणना, तथा युगैस्तेषां दिनगणनेति कृतादीनां स्वरूपमाह—

## मैत्रेय उवाच।

**कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम्।**
**दिव्यैर्द्वादशभिर्वर्षैः सावधानं निरूपितम्॥ १८॥**

* कृतमिति। कालविशेषस्य नाम किञ्चित्। कृतमिति। तस्मिन्काले कालेन यत्कर्तव्यम्, तत्प्रतीकारो वा; तत्कृतमेव। तस्मिन् युगे उत्पन्नानां न किञ्चित्कर्तव्यमवशिष्यते। त्रेता नाम तृतीयांशकर्तव्यता, द्वापरमंशद्वयकर्तव्यता, कलिः कलहः, सर्वमेव विवादास्पदम्, न किञ्चिन्निर्द्धारितमित्यर्थः। अत एव श्रुतौ 'ये वै चत्वारः स्तोमाः कृतं तत्' 'अथ ये पञ्च कलिः सः' इति स्तोमानां पञ्चपक्षो निन्दितः। त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंश इति चत्वार एव स्तोमाः, चत्वारो वर्णाः; तं एवोत्पादिताः, अतस्तेषु न कोऽपि विवादः। पञ्चस्तोमपक्षस्तु निन्दितः कलिपदेन। षट्स्तोमपक्षस्त्वनिन्दितः 'यस्य त्रिपावमन्तर्यन्ति' इत्यादिना निरूपितः। अतो निन्दितपर्यायः कलिः। तेषां कल्पवासिनां यस्मिन् काले सर्वमेव कर्तुं शक्यते, सफलं च भवति, स कालोऽमृतघटिकारूपः कृतशब्देनोच्यते। यस्तु निन्दितो विषघटिकात्मकः स कलिः, यत्र कलह एव, न स्वर्थपर्यवसानम्। एतच्चतुष्टयं मिलित्वा चतुर्युगमित्युच्यते। तेषां कालमाह—दिव्यैरिति। द्वादशभिर्वर्षैरिति। सहस्रैरित्युक्तं भवत्यर्थात्। दिव्या हि वर्षा नाल्पसङ्ख्यया गणयितुं योग्याः। सहस्रसङ्ख्या परमकाष्ठा, अतः सहस्रसङ्ख्या प्राप्यते। दिव्यपदेनैव शतसङ्ख्याऽपि प्राप्येत, तथापि 'सन्दिग्धेषु वाक्यशेषात्' इति न्यायेन 'सङ्ख्यातानि सहस्राणि' इत्यग्रिमवाक्यात् सहस्रसङ्ख्यैव प्राप्यते। द्वादशभिर्दिव्यसहस्रवर्षैः सावधानं चतुर्युगं निरूपितं भवति। अवधानं व्यवधानम्। सन्धौ भवा सन्ध्या, व्यवधानानन्तरं यज्जायते सा सन्ध्या। सन्ध्यांशोऽल्पकरणम्, यथा घण्टानादेऽनुरणनम्। तन्मध्ये युगम्॥ १८॥

+ संध्यासन्ध्यांशौ युगेन संबद्धावित्युभयसंबन्धाद्युगत्वं समुदाययोगशक्तिभ्यामवसीयते।

---

प्रकाशः।

* कृतमित्यत्र। कालेन यत्कृतमिति। कालहेतुकं यत्कर्म, तदनश्वरमित्यर्थः। कर्तव्यतेति। कार्यशेषः। प्रश्नानुरोधेनेदं निरूपणम्, न सर्वसाधारणमित्याशयेनाऽऽहुः—तेषामित्यादि। अर्थात् कथमुक्तं भवतीत्याकाङ्क्षायामाहुः—दिव्या हीत्यादि। अत इति। काष्ठातः। प्राप्यत इति। दिव्यपदेन मानुषपित्र्ययोर्निवृत्त्या प्राप्यते।

+ चत्वारीत्यत्र। समुदाययोगशक्तिभ्यामिति। योगशब्दरूढ्या सन्ध्येत्यादिनोक्तेन योगेन चेत्यर्थः।

---

१ तत एव. ग. २ कर्तव्यतेति. घ ३ प्राप्येति. घ.

× तेषामवान्तरकालानाह—

चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् ।
संख्यातानि सहस्राणि द्विगुणानि शतानिच ॥ १९ ॥

चत्वारीति । चत्वारि सहस्राणि कृतयुगम्, त्रीणि त्रेता, द्वे द्वापरम्, एकं कलिरिति यथाक्रमं सहस्राणि सङ्ख्यातानि । युगदशमांशः सन्ध्या, तावानेवांशः । अतस्तावन्ति शतानि प्रत्येकम्, समुदायेन द्विगुणानि । चकारादतिरिक्तोऽपि कश्चन कालो लभ्यते, यदि भगवत्कार्ये किञ्चिद्व्यवधानं भवेत् ॥ १९ ॥

सर्वस्य युगत्वमाशङ्क्य तन्निराकरणाय मध्यकाल एव युगशब्देनोच्यत इत्याह—

सन्ध्यांशयोरन्तरेण यः कालः शतसङ्ख्ययोः ।
तमेवाऽऽहुर्युगं तज्ज्ञा यत्र धर्मो विधीयते ॥ २० ॥

* सन्ध्यांशयोरिति । सन्ध्या अंशश्च, तयोरन्तरेण यः कालः । शतसङ्ख्ययोरिति सन्ध्यांशयोरपि कालविशेषत्वमेव, न तु देवतात्वम् । तमेव कालं युगमाहुः । तज्ज्ञा इति प्रमाणम् । नन्वनन्तस्य कालस्य स्वतः परिच्छेदरहितस्य केनोपाधिना कृतत्वमित्याशङ्क्य तमुपाधिमाह—यत्र धर्मो विधीयत इति । यत्र कालविशेषे धर्मो विधीयते, नाऽनूद्यते । सन्ध्यायां पूर्वधर्मस्य भवति लोपः, तदा युगप्रवृत्तौ ऋषिभिः पारम्पर्यज्ञानाभावादपूर्वो धर्मो विधीयते । स तु युगसमाप्तिपर्यन्तं विधिः प्राणिनः प्रवर्तयन्ननुवर्तते, अतो युगशब्दवाच्यो भवति, धर्मोपाधिकत्वात् ॥ २० ॥

नन्ववान्तरभेदः किन्निबन्धन इत्याशङ्क्याऽऽह—

धर्मश्चतुष्पान्मनुजान् कृते समनुवर्तते ।
स एवाऽन्येष्वधर्मेण व्येति पादेन वर्धता ॥ २१ ॥

+ धर्मश्चतुष्पादिति । धर्मावान्तरभेद एव युगावान्तरभेदहेतुः । तमाह—चतुष्पाद्धर्मः कृते मनुजान्

---

प्रकाशः ।

+ तेषामिति । युगानाम् । तावानेवांश इति । सन्ध्यातिरिक्तो दशमांश एवांशपदवाच्यः, तथा च, युगारम्भस्य पूर्वकालः सन्ध्यापदवाच्यः, युगसमाप्तेरनन्तरस्त्वंशपदवाच्य इत्यर्थः । यदीत्यादि । यथा माण्डव्योपाख्याने पतिव्रताप्रतिबद्धः सूर्यः सप्तदिनपर्यन्तं नोदियाय, तादृशव्यवधानरूप इत्यर्थः ।

* सन्ध्यांशयोरित्यत्र । श्रुतिप्रणिहितस्य धर्मस्य विद्यमानत्वाद्विधानोक्तिः कथं सङ्गच्छत इत्याहुः—सन्ध्येत्यादि । बहुकालव्यवधानेन युगप्रवृत्तौ प्रथमपर्यायस्य कृतयुगरम्भान्वियुरुषाभावेन पारम्पर्यं भाविपुरुषैर्न ज्ञायत इति तदभावात् बहुकालजीविभिस्तैस्तैर्ऋषिभिर्धर्मो ज्ञाप्यत इत्यतोऽपूर्वत्वाद्विधानोक्तिसङ्गतिरित्यर्थः । भवतीति । कालो भवति ।

+ धर्मश्चतुष्पादित्यत्र । अवान्तरभेद इति । कृतादिभेदः ।—

समनुवर्तते। कालेनैव प्रेरितो धर्मो मनुजाननुवर्तते। तत्रापि मनुजा एव हेतवः। चत्वारो वर्णाः कृत एव। त्रेतायां ब्राह्मणाभावः, द्वापरे क्षत्रियाभावः, कलौ शूद्र एव। अतश्चतुष्पाद्धर्मो मनुजान् समनुवर्तते। स एव धर्मोऽन्येषु युगेषु पादेन व्येति, पादेन वर्द्धताऽधर्मेण कृत्वा। अनेन त्यक्तधर्मो वर्णोऽधर्मेण व्याप्रियत इत्युक्तम्॥ २१॥

एवं युगानां स्वरूपमुक्त्वा तैर्दिनव्यवस्थामाह—

**त्रिलोक्या युगसाहस्रं बहिरा ब्रह्मणो दिनम्।**
**तावत्येव निशा तात! यन्निमीलति विश्वसृक्॥ २२॥**

त्रिलोक्या इति। त्रिलोक्या बहिर्ब्रह्मलोकपर्यन्तं युगानां साहस्रं सहस्रसङ्ख्यासमुदायो दिनम्, महर्लोकमारभ्योपरितनेषु लोकेष्वेतावद्दिनमित्यर्थः। आ ब्रह्मण इति वचनं पातालादिव्युदासार्थम्, तत्र दिनरात्रिव्यवस्थैव नाऽस्ति। यावद्दिनं तावत्येव निशा। युगाद्यभावे ब्रह्मण आयुःखण्डा एव नियामकाः, भगवदिच्छा वा। तत्र निमित्तान्तरमाह—यन्निमीलति विश्वसृगिति। यस्मिन् काले विश्वसृक् ब्रह्मा भगवान्, ब्रह्मोदरो वा भगवान् शेते। निद्राभावान्निमीलनमेव तस्य। निमीलनमेव योगनिद्रा। तातेति संबोधनमप्रतारकत्वज्ञापनाय॥ २२॥

यथा युगप्रवृत्तिर्दिनख्यापिका, तथा शयनप्रवृत्ती रात्रिख्यापिकेति नियामकान्तरमाह, प्रतियुगं सृष्टिव्यावृत्त्यर्थम्—

**निशावसान आरब्धो लोककल्पोऽनुवर्तते।**
**यावद्दिनं भगवतो मनून्भुङ्क्ते चतुर्दश॥ २३॥**

× निशावसान इति। रात्र्यवसाने अरुणोदये भगवता प्रारब्धो लोककल्पो यावद्दिनं दिवसावसानपर्यन्तमनुवर्तते। प्रवाहरूपेण लोकाः कल्प्यन्ते उत्पाद्यन्ते अनया परम्परया, अस्यां वा; तत् पारम्पर्यं लोककल्पः। तच्च दिनं भगवतः। ब्रह्मविदामपि, भगवत्त्वात्। तत्र धर्मप्रवृत्तेर्हेतुमाह—मनून् भुङ्क्ते चतुर्दश। अयं लोककल्पश्चतुर्दश मनून् भुङ्क्ते, अनुभवति। धर्मपालकत्वेन गृह्णातीत्यर्थः॥ २३॥

मनूनां धर्मपरिपालनरूपं वक्तुं तत्परिच्छिन्नं कालमाह—

**स्वं स्वं कालं मनुर्भुङ्क्ते साऽधिकां ह्येकसप्ततिम्।**
**मन्वन्तरेषु मनवस्तद्वंश्या ऋषयः सुराः।**
**भवन्ति चैव युगपत्सुरेशाश्चाऽनु ये च तान्॥ २४॥**

---

प्रकाशः

—इत्युक्तमिति। इतिहेतोः, त्रेतादिषु ब्राह्मणाद्यभावकथनेनाऽब्राह्मणत्वादिकमुक्तमित्यर्थः।

× निशावसान इत्यत्र। ब्रह्मविदामपि भगवत्त्वादिति। तेषामपि तदेव दिनमित्यर्थाद्बोध्यम्। इदं च 'ये स्युः कल्पाद्वहिर्विदः' इत्यस्योत्तरत्वेनोक्तम्।

---

१ भुञ्जथ- पा  २ धर्मपालन. ख ग

× स्वं स्वं कालमिति । एकसप्ततिचतुर्युगानि च सार्धैकपञ्चाशद्दिव्यवर्षाधिकं मन्वन्तरम् । मन्वन्तरशब्दो रूढः षडङ्गधर्मसाधनपरः, न तु मनोरन्तरं तेनोपभुज्यमानः कालः, तथा सति मनुपुत्रादीनामुपभोगकालोऽन्यः स्यात् । नापि सर्वस्याऽपि वंशस्य वाचको मनुशब्दः, प्रियव्रतपुत्रेषु उत्तमतामसरैवतेषु भिन्नं मन्वन्तरं न स्यात् । 'स एव स्वान्तरं निन्ये' इति तु प्रक्रियान्तरत्वात् नाऽन्यैर्मन्वन्तरैर्विरोधः। अतो मन्वन्तरशब्दो रूढ एव । 'मन्वन्तराणि सद्धर्मः' इति वाक्याच्च षण्णां समुदायो मन्वन्तरम् । तानाह—मन्वन्तरेष्विति । सर्वेष्वेव मन्वन्तरेषु मनुः, मनुपुत्राः, ऋषयः, देवाः, इन्द्रः, अंशावताराश्च; एते युगपदेव भवन्ति । सपुत्र एव मनुरधिकारेऽभिषिच्यते । सुरेशाश्चेन्द्राः । आद्यन्तयोर्बहुवचनं समुदायाभिप्रायेण । अंशावतारस्तु युगपन्न जायत इति पञ्चैवोक्ताः ॥ २४ ॥

उक्तानि मन्वन्तराणि यदर्थम्, तमुपसंहरति—

**एष दैनन्दिनः सर्गो ब्राह्मस्त्रैलोक्यवर्तनः ।**
**तिर्यङ्नृपितृदेवानां संभवो यत्र कर्मभिः ॥ २५ ॥**

एष दैनन्दिन इति । दिने दिने जायमानो दैनन्दिनः। संवत्सरात्मकः कल्पो भिन्नः, अयं तु दैनन्दिनः। अस्य विशेषमाह—त्रैलोक्यवर्तन इति । त्रैलोक्यं वर्त्तयत्यावर्तयतीति । देवतिर्यङ्मनुष्याणां पुनः पुनर्जन्मेति कृत्वा त्रैलोक्यवर्तनत्वम् । तदेवाऽऽह—तिर्यङ्नृपितृदेवानामिति। नृपितर एके, जीवन्मृतभेदेन विवक्षया । दैनन्दिने पुनः पुनरुत्पत्तौ कर्मणो नियामकत्वम् ॥ २५ ॥

एवं दिनमुपसंहृत्य तत्र नियामके धर्मे कः प्रवर्त्तक इत्याकाङ्क्षायां धर्मस्य भगवानेव प्रवर्तक इत्याह—

**मन्वन्तरेषु भगवान् बिभ्रत्सत्त्वं स्वमूर्त्तिभिः ।**
**मन्वादिभिरिदं विश्वमवत्युदितपौरुषः ॥ २६ ॥**

मन्वन्तरेष्विति। सर्वेष्वेव मन्वन्तरेषु स्वस्य शुद्धं सत्त्वं बिभ्रत् भगवान्, स्वस्य मूर्तिभिर्ज्ञानकर्मयोगादिप्रवर्तकैरवतारैर्मन्वादिभिः सहितैरिदं विश्वमवति । उदितं पौरुषं यस्य । यद्यपि स्वयमेव धर्मं पालयन् जगत्पालयति, तथापि स्वस्यैव पौरुषस्य एते अंशाः, मन्वादयोऽवताराश्च ॥ २६ ॥

एवं दैनन्दिनसृष्टिमुपपाद्य तत्रत्यं प्रलयमुपपादयति—

**तमोमात्रामुपादाय प्रतिसंरुद्धविक्रमः ।**
**कालेनाऽनुगताशेष आस्ते तूष्णीं दिनात्यये ॥ २७ ॥**
**तमेवाऽन्वपिधीयन्ते लोका भूरादयस्त्रयः ।**

---

प्रकाशः

× मन्वन्तरेष्वित्यत्र । 'मन्वन्तराणि सद्धर्मः' इत्यत्र धर्मस्य मन्वन्तरत्वमुक्तम् । तद्विमर्शे 'मन्वन्तरं मनुर्देवाः' इत्यत्र षट्सु प्रकारेषूक्तम्, अत्र तु मनुभोग्यकाल उक्तमिति किंवा मन्वन्तरपदे प्रवृत्तिनिमित्तं योगो वेत्याकाङ्क्षायामाहुः—मन्वन्तरशब्द इत्यादि । प्रक्रियान्तरत्वादिति । भगवत्कृपाप्रकरणत्वात् । ननु मनुपुत्राणां पाश्चात्यत्वात् कथं मनुना यौगपद (द्य) मित्यत आहुः—सपुत्र इत्यादि । तथा चाऽधिकारैक्यायौगपद्यमित्यर्थः । अंशावतारानुक्त्या न्यूनत्वमिति तत्परिहारायाहुः—अंशावतार इत्यादि ।

**निशायामनुवृत्तायां निर्मुक्तशशिभास्करम् ॥ २८ ॥**
**त्रिलोक्यां दह्यमानायां शक्त्या संकर्षणाग्निना ।**
**यान्त्यूष्मणा महर्लोकाज्जनं भृग्वादयोऽर्दिताः ॥ २९ ॥**

तमोमात्रामुपादायेति । तमसोमात्रा सत्त्वरजःसंबन्धरहिता, केवलं तम इत्यर्थः । तामुपादाय प्रतिसंरुद्धो विक्रमो यस्य । तमसा विक्रमे प्रतिसंहृते विक्रमद्वारा विक्रमकार्यमपि जगत् कालेन कृत्वा भगवत्येवाऽनुगतं भवति । तदाह—कालेनेति । सर्वमेवाऽनुगतं भवति । अशेषपदेन शेषव्यतिरिक्तं जगदिति योगात्सूचितम् । तदा भगवान् कार्योन्मुखतां परित्यज्य तूष्णीमास्ते । दिनात्यये सन्ध्याकाले । भगवत्तूष्णीम्भावे प्रवाहस्तम्भकाभावात् कालेन प्रेरिता भूरादयो लोका अन्वपिधीयन्ते, अव्यक्ते प्रविशन्ति । तदा तेषु अव्यक्ते लीनेषु, निर्मुक्तशशिभास्करं यथा भवति तथा निशायामनुवृत्तायां सम्यक् प्रवृत्तायाम्, तदनन्तरं त्रिलोक्यां सङ्कर्षणाग्निना दह्यमानायामूष्मणा पीडिता महर्लोके स्थिता भृग्वादयो महर्लोकं परित्यज्य जनलोकं यान्तीति संबन्धः । अत्राऽयं क्रमः । यदा भगवान् शिशयिषुर्भवति, तदा तमो गृह्णाति, पश्चाच्च शेते । एतावानेव व्यापार' । अन्यत्सर्वं स्वयमेव भवति । विक्रमोपसंहारश्च तमोग्रहणादालस्येन । ततो रक्षकाभावात् कालस्य भक्षकत्वात् स्वयमेव जगल्लीयते । कालस्याऽत्र न भक्षकत्वम्, किन्तु भयजनकत्वाल्लये निमित्तत्वम् । जगति स्वस्मिन् प्रविष्टेऽपि भगवान्न परिपालनार्थं यत्नं करोति, किन्तु तूष्णीमेव तिष्ठति । तस्य तूष्णींभावमनु भुवनात्मका भूरादय उज्जटग्राममिव इव तिरोहिता भवन्ति। तदा आधारभूतानां लोकानामभावात् ज्योतिश्चक्रं ध्रुवाद्विगलितं पतति। तदा मुख्यौ शशिभास्करौ कीलाद्विगलितौ निर्मुक्तौ भवतः । तदाऽन्धकारे प्रवृत्ते रात्रिः सुतरां प्रवृत्ता भवति। तदा सङ्कर्षणमुखादुत्थितोऽनलस्त्रिलोकीं दहति । जना अभिमानिन्यो देवताश्च पूर्वमेव गताः, शिष्टमचेतनमग्निर्दहति। मृदादीन् कथमग्निर्दहेदित्याशङ्क्य सोऽग्निः शक्तिरूप इत्युक्तम् । तस्याऽग्नेः प्राकृतवैलक्षण्याय माहात्म्यमाह—भृग्वादयः पीडिता भवन्ति ॥ २७ । २८ । २९ ॥

तदनन्तरं भगवद्वशा घना वर्षन्तीत्याह—

**तावत्त्रिभुवनं सद्यः कल्पान्तैधितसिन्धवः ।**
**प्लावयन्त्युत्कटाटोपचण्डवातेरितोर्मयः ॥ ३० ॥**

तावदिति । तावत्सिन्धवःकल्पान्तेन कालेन एधिताः मेघद्वारा वडवानलशान्तिद्वारा वा। सिन्धवस्त्रिभुवनं प्लावयन्ति। उत्कटो योऽयमाटोपः, तत्सहितो योऽयं चण्डो वातः, तेन जनिता ऊर्मयो येषु ३०

**अन्तः स तस्मिन् सलिल आस्तेऽनन्तासनो हरिः ।**
**योगनिद्रानिमीलाक्षः स्तूयमानो जनालयैः ॥ ३१ ॥**

तदा तस्मिन् सलिले शेषापरनामाऽनन्तः, अन्तःस्थितसर्वलोकानां दुःखहर्ता, योगनिद्रया निमीलिताक्षः । योगनिद्रया कृत्वा निमीलनं निमीलः, तद्युक्ते अक्षिणी यस्य। जनालयैर्भृग्वादिभिः स्तूयमानः, हिन्दोलायां गायकैर्गीयमान इव, निमीलिताक्ष आस्ते, शेत इत्यर्थः । एवं ब्रह्मणो रात्रिदिनव्यवस्था निरूपिता ॥ ३१ ॥

तदनन्तरं द्वादशेनाऽहोरात्रेण ब्रह्मण आयुराह—

एवंविधैरहोरात्रैः कालगत्योपलक्षितैः ।
अपेक्षितमिवाऽस्यापि परमायुर्वयःशतम् ॥ ३२ ॥

एवंविधैरिति । ननु द्वितीयदिवसस्य कथं प्रवृत्तिः ? कर्मसूर्यगत्यादीनामभावात्, इत्याशङ्क्याऽऽह—कालगत्योपलक्षितैरिति । कालप्रवाहस्य विद्यमानत्वात् ' निर्विशेषं न सामान्यम् ' इति न्यायेन सामान्येनोपलक्षिता विशेषा भवन्तीति पुनरहोरात्रप्रवृत्तिः । एवमहोरात्रावृत्त्या पक्षमासवर्षावृत्तिः । तदा ब्रह्मणो वर्षशतं भवति । तावद्भिरपि वर्षैर्ब्रह्मण आयुरपेक्षितमिव भवति । तस्याऽपि ममायुर्वर्धेति न बुद्धिः, किन्तु अन्यदपि चेद्भवेत्तदा समीचीनं भवेदितीच्छैव तिष्ठति ॥ ३२ ॥

इदानीं तस्मिन्नायुषि स्थूलान् कल्पान् निरूपयितुं तस्याऽऽयुषो विभागमाह—

यदर्धमायुषस्तस्य परार्धमभिधीयते ।
पूर्वः परार्धोऽपक्रान्तो ह्यपरोऽद्य प्रवर्तते ॥ ३३ ॥

यदर्धमायुषस्तस्येति । तस्य ब्रह्मण आयुषो यदर्धम्, तत्परार्धमित्यभिधीयते । ब्रह्मायुषः परशब्दवाच्यत्वात् परस्यार्धमिति । तत्र पूर्वपरार्द्धस्य आद्यन्तौ ज्ञापयितुं पूर्वस्य समाप्तिमाह—पूर्वः परार्धोऽपक्रान्त इति । अथेदानीमपरः प्रवर्तत इति । ब्रह्मणोऽप्यायुर्गतप्रायमिति सूचयन् । वैराग्यमुपादिष्टम्, साधारणानामिन्द्रियाध्यासत्वात् ॥ ३३ ॥

तत्र मुख्यकल्पानां मध्ये आद्यो ब्रह्मकल्प इत्याह—

पूर्वस्याऽऽदौ परार्धस्य ब्राह्मो नाम महानभूत् ।
कल्पो, यत्राऽभवद्ब्रह्मा, शब्दब्रह्मेति यं विदुः॥ ३४ ॥

पूर्वस्येति। तस्य कल्पस्य ब्राह्मत्वमुपपादयति । स तु महान् कल्प आसीत्, संवत्सरात्मको न तु दैनन्दिनः। यत्र कल्पे ब्रह्मा स्वयमभूत्, उत्पन्न इत्यर्थः । तस्मिन् कल्पे भगवानेव ब्रह्मेति, तस्य सर्वकल्पेषु साधारण्यं मन्यमानः, कल्पप्रयोजकं ब्रह्मणो रूपमाह—शब्दब्रह्मेति यं विदुरिति । तस्मिन् कल्पे शब्दब्रह्मणः सकाशादेव सर्वोत्पत्तिः । तस्य शब्दब्रह्मणः स्वरूपं बुद्धाध्याये अग्रे वक्ष्यते ॥ ३४ ॥

तस्याऽन्तिमवर्षकल्पमाह—

तस्यैव चाऽन्ते कल्पोऽभूद्यं पाद्ममभिचक्षते ।
यद्धरेर्नाभिसरस आसील्लोकसरोरुहम् ॥ ३५ ॥

तस्यैव चाऽन्त इति । यं पाद्ममभिचक्षत इति स पद्मकल्पः पूर्वमुक्तः । तस्य पद्मकल्पत्वनिमित्तमाह—यद्धरेर्नाभिसरस इति । पद्मेन कल्पत इति व्युत्पत्त्या तस्य पद्मकल्पत्वसिद्धेः पद्मोद्भव एव वक्तव्यः; तदर्थ—नाभिसरोरुहमित्युक्तम् ॥ ३५ ॥

---

१ कल्प. ख. ग. ङ

द्वितीयपरार्धस्य आद्यं संवत्सरकल्पमाह—

**अयं तु कथितः कल्पो द्वितीयस्याऽपि भारत ! ।**
**वाराह इति विख्यातो यत्राऽऽसीत्सूकरो हरिः ॥ ३६ ॥**

अयं तु कथितः कल्प इति । तुशब्दो दैनन्दिनं व्यावर्तयति । वाराह इति । आद्यस्याऽऽद्यो ब्राह्मो वेदात्मकः, द्वितीयस्याऽऽद्यः शब्दार्थात्मको वाराह इति लोके विख्यातः । तस्य वाराहत्वमुपपादयति—यत्राऽऽसीदिति । वराहः सूकरः। हरिरिति ब्रह्मादीनां दुःखनिवारणं तथाऽवतारे हेतुः । तत्राऽऽदिवराहकल्पः प्रथमः, वाराहो द्वितीयः, तृतीयः श्वेतवाराहः । सोऽयं वर्तमानः ॥ ३६ ॥

एवं ब्रह्मण आयुर्निरूप्य अक्षरस्याऽप्यायुर्वक्तव्यमित्याकाङ्क्षायामाह—

**कालोऽयं द्विपरार्धाख्यो निमेष उपचर्यते ।**
**अव्याकृतस्याऽनन्तस्य अनादेर्जगदात्मनः ॥ ३७ ॥**

कालोऽयमिति । अयं द्विपरार्धाख्यः कालोऽक्षरायुषो निमेषो भवति । अयं निमेष उन्मेषनिमेषात्मकः। तेनाऽपि प्रकारेण गणना नोचिता, परिच्छेदासम्भवात् । सर्वथा ह्यपरिच्छिन्नं ह्यक्षरं ब्रह्म । अत आह—उपचर्यत इति । ब्रह्मायुर्निमेष उपचारादेवोक्तः, न तु वस्तुतः । तत्र हेतुमाह—अव्याकृतस्येति । न केनाऽपि व्याकरणमाविर्भावो यस्य । आविर्भावतिरोभावयोर्मध्यवर्ती काल आयुरित्युच्यते । तत्राऽऽविर्भावाभावे तिरोभावोऽपि नास्तीति तस्याऽऽयुरेव नास्ति, कस्य गणना स्यात् ? किञ्च, परिच्छिन्ने हि गणना । तदाह—अनन्तस्येत्यन्तरहितस्य । तस्मादुत्तरावध्यभावात् न कालगणना । आरम्भोऽपि नास्तीत्याह—अनादेरिति । अनादित्वं निरूपयति—जगदात्मन इति । जगतामात्मा, येऽपि परिच्छेदकाः कालादयस्तेषामप्ययमात्मा । यथा देहस्यैवाऽऽयुः, नाऽऽत्मनः; तथा अस्याऽक्षरस्य जगतामात्मानो देहस्थानीयाः, अतो देहस्थानीयानामपि नित्यत्वान्नाऽक्षरस्याऽऽयुः केनाऽपि प्रकारेण सिद्ध्यति ॥ ३७ ॥

किञ्च—

**कालोऽयं परमाण्वादिर्द्विपरार्धान्त ईश्वरः ।**
**नैवेशितुं प्रभुर्भूम्न ईश्वरो धाममानिनाम् ॥ ३८ ॥**

अयं कालः परमाण्वादिद्विपरार्द्धान्तः, मनुष्यायुःपरिच्छेदकं सूक्ष्मोपाधिमारभ्य ब्रह्मणः परमायुश्छेदकपर्यन्तम् । कालः सर्वेषां धाममानिनां देहाभिमानिनामीश्वरोऽपि सन्, नियन्तापि सन्, भूम्नोऽक्षरस्य प्रभुर्न भवति । तत्राऽपि ईशितुं प्रभुर्न भवति । भगवन्तमीशितव्यं कर्तुं न समर्थो भवेदित्यर्थः। ईश्वरो धाममानिनामिति भिन्नं वाक्यम्, तेनेश्वरपदे न पौनरुक्त्यम् । पुनरीश्वरग्रहणं तस्यैश्वर्यं स्थापयितुम्, अन्यथा मूले अनीश्वरः सर्वत्राऽनीश्वरः स्यात् ॥ ३८ ॥

एवं कालपरिच्छेदाभावमुक्त्वा स्वरूपमाह—

**विकारैः सहितो युक्तैर्विशेषादिभिरावृतः ।**
**आण्डकोशो बहिरयं पञ्चाशत्कोटिविस्तृतः ॥ ३९ ॥**

× विकारैरिति । विकारैः षोडशविकारैः,एकादशेन्द्रियाणि पञ्च तन्मात्राश्च। आवरणे महाभूतानां विनियोगान्महाभूतानि वा । उत्पत्तौ तन्मात्राणां प्राधान्यात् । युक्तैर्मिलितैः । अयुक्तैर्विशेषादिभिः पृथिव्यादिभिरावृतोऽयमाण्डकोशः । बहिरावृतस्य मध्ये स्वरूपं पञ्चाशत्कोटिविस्तृतम्, बहिरेव वा पञ्चाशत्कोटिविस्तृतः । अयं गोलः पञ्चमस्कन्धोक्ततिर्यग्गोलादन्यः । स एव वोर्द्ध्वगोलः, ज्योतिःशास्त्रे गोरुपद्रुस्य प्रसिद्धत्वात् । पद्मकल्पे पञ्चाशत्कोटिविस्तृतं कमलम्, वाराहे भूम्येव तावती; अतो नानार्थकारनिरूपणं न दोषाय, नाऽप्यन्योन्यविरुद्धम् ॥ ३९ ॥

तस्य ब्रह्माण्डस्य प्रकृते निरूप्यमाणस्य देशावच्छेदकत्वाभावाय स्थूलतामाह—

**दशोत्तराधिकैर्यत्र प्रविष्टः परमाणुवत् ।**
**लक्ष्यतेऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः ॥ ४० ॥**

दशोत्तराधिकैरिति । अण्डात्परतः पृथिवी पञ्चाशत्कोटिदशगुणा । विशेषादिभिरित्यजहत्स्वार्थबहुव्रीहिः । गोल एव वा पृथिवी, जलादय एव दशगुणा इति केचित् । तदा तैरावरकैर्द्दर्पेरघटमध्ये प्रविष्टः परमाणुरिव लक्ष्यते । तैः सहितो वा रोमकूपे प्रविष्टः परमाणुरिव दृश्यते । तस्य च कूपस्य मध्ये अन्येऽप्येतादृशा अण्डकोशाः कोटिशो लक्ष्यन्ते ॥ ४० ॥

एवमनन्तब्रह्माण्डावृतरोमकूपो भगवानक्षरशब्देनोच्यत इत्याह—

**तदाहुरक्षरं ब्रह्म सर्वकारणकारणम् ।**
**विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मनः ॥ ४१ ॥**

तदाहुरिति । अक्षरस्य च ब्रह्मत्वं समन्वये स्थापितम्, 'अक्षरमम्बरान्तधृतेः' 'सा च प्रशासनात्' इत्यधिकरणे । सर्वकारणानां पुरुषादीनामपि यतः कारणम् । तदेवाऽक्षरं मायाफलरूपेण द्विधा यदा समभवत्, तत्रैको भागः पुरुषः, अपरा च प्रकृतिः, अतः कारणकारणम् । तादृशमपि तदक्षरं पुरु-

प्रकाशः।

× विकारैरित्यत्र । भूतानां विकारत्वेन विशेषतन्मात्राणामाधिक्यात् कथं षोडशत्वमित्यत आहुः—उत्पत्तावित्यादि । तथा च, प्राधान्येनाविवक्षितत्वात् प्रधानानां षोडशत्वमित्यर्थः। गोल(क)पद्रुस्येति। भूगोलस्वर्गोलध्रुवगोलनक्षत्रगोलावरणगोलाण्डगोलास्यस्येत्यर्थः ।

अथाऽत्रैतद्बोध्यम् । अवान्तरेषु दैनन्दिनकल्पेषु भृग्वादीनां ज्ञानिनामवस्थानादाहुरिति प्रमाणस्य नाऽव्यवस्था । महाकल्पे यर्योल्मकेऽप्यण्डस्य सत्त्वात् पुरुषेन्द्रियाणां सत्त्वेनेन्द्रादीनामपि सत्त्वाद्ब्राह्मादीनामपि नाऽव्यवस्था । दिशोऽपि देवतारूपा एव विवक्षिताः, न तु सूर्यविभाज्या इति कर्णस्याप्यवस्था । एवमायुषो नियतत्वेऽनियतत्वे वा आयुर्वेदस्य सुखार्थत्वेन तत्प्रवर्तकतया देवतारूपयोरश्विनोः सत्त्वात्नासिरूपत्वमिति नासे(से) अपि व्यवस्थिते। एवं गन्धाग्निसूर्यप्रभृतयोऽपि बोध्याः । पद्माण्यपि तथेति नेश्वरविग्रहे अव्यवस्था, शङ्का निवर्तितेति ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे एकादशाध्यायविवरणं सम्पूर्णम् ।

१ प्रारोन. ग २ अन्तर्गतास्त्वन्ये. घ

पोत्तमस्य परब्रह्मणो धाम भवति, देहस्थानीयं गृहस्थानीयं वा। यथा जगदात्मनोऽक्षरस्य देहस्थानीयाः, तथा अक्षरमपि भगवतः। अनेन भगवत आयुःपरिमाणादिशङ्कैव निवारिता। ततोऽप्यन्यद्भगवतो धाम भविष्यतीत्याशङ्कयाऽऽह—परमिति। यथाऽस्मदादीनां प्राणान्तःकरणव्यवहितानामेव देहः स्थानं भवति, न तथाऽक्षरं भगवतः, किन्तु साक्षात्। मूलभूतस्य साकारत्वायाऽऽह—पुरुषस्येति। उत्कर्षमपकर्षहेतुं च श्रुत्वा संदिहानं प्रत्याह—महात्मन इति। महांश्चाऽसावात्मेति। आत्मभूतः पुरुषो व्यापक इत्यर्थः। समुदायेनाऽपि महानुभावः, सर्वभवनसमर्थ इत्यर्थः॥ ४१

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां
तृतीयस्कन्धे एकादशाध्यायविवरणम्।

---

# द्वादशाध्यायविवरणम्।

---

* साधारणानां बुद्धिर्या द्वादशे सा निरूप्यते।
अष्टधा सा सर्गरूपा श्रेष्ठा चोत्तरतः परा॥ १॥
तामिस्रादिप्रकारेण प्रथमा प्राकृती मतिः।
ज्ञाननिष्ठा द्वितीया स्यात् सदोषा सा प्रकीर्तिता॥ २॥
दोषोऽप्यत्र हरेः सङ्गात्, ज्ञानादप्यधिका मता।
यथा हरस्ततः श्रेष्ठा कृष्णस्याऽऽज्ञानुपालिनी॥ ३॥
सदोषा साऽपि, तस्यास्तु दोषे न प्रविशेद्धरिः।
ततो हीनैव सा, मध्ये लोके व्यामोहिका परा॥ ४॥

---

गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृतः प्रकाशः।

* अथ द्वादशाध्यायं विवरिषवः सङ्गतिबोधनायाहुः—साधारणानामित्यादि। तथा चाऽवसरः शास्त्रसङ्गतिरित्यर्थः। प्रश्नविचारे तु शुकोक्तौ 'यस्मिन् कर्मसमावायः (२–८–१४)' इतिश्लोकस्योत्तरम्, मैत्रेयोक्तौ तु विभूतिप्रश्नस्योत्तरमिति तद्बोधयितुं विभागमुखेनाऽऽहुः—अष्टधेत्यादि। अत्र ब्रह्मकृतत्वं सर्गरूपत्वं चोभयोर्यथायथमुत्तरम्। तस्मात् परा अतिरिक्ता, शास्त्रसङ्गतिसम्पादकत्वात् श्रेष्ठा च। तत्र द्वितीयं निबन्धे स्फुटम्। अतस्तत्सङ्गतिरर्थादेवावगन्तव्येत्यर्थः। अत्र बुद्धयः सदेवता उत्पन्ना इति बोधनाय तासां स्वरूपमाहुः—तामिस्रेत्यादि। ज्ञाननिष्ठेति। सनकादिसृष्टिराज्ञाभङ्गकरणेन सदोषेति तद्देवताका साहङ्कारा या ज्ञाननिष्ठा, सा द्वितीया बुद्धिः। एवमग्रेऽपि ज्ञातव्यम्। अत्र ब्रह्मणि। ज्ञानादप्यधिका बुद्धिस्तृतीया मता, यथा हरः। तेन हरदेवताका भगवत्सेवाद्यभिमानरूपा तृतीया। ततस्तदनन्तरं कृष्णस्याऽऽज्ञानुपालिनी दशप्रजापत्यादिदेवताका चतुर्थी। सापि सदोषा। तस्यास्तु दोषे कामरूपे हरिर्न प्रविशेत्; अर्थाद्धृदि। ततो हीनैव सा। तथा चाऽऽशिषो हृदि सङ्कल्प्य भगवदाज्ञानुपालिनी नानाप्रकारा बुद्धिश्चतुर्थीत्यर्थः। परा पञ्चमी लोके व्यामोहिका। मध्ये लौकिकगद्यपद्यादिसरस्वतीपि-

ततो वेदे विनिष्णाता तदर्थे कर्मणि स्थिता।
ततः श्रेष्ठा वेद एव योगोपासनया युता ॥ ५ ॥
सर्वतोऽप्युत्तमा या तु क्रीडेच्छापूरिका हरेः।
एवमष्टविधा बुद्धिः सर्वेषां सर्गयोगिनी ॥ ६ ॥

एवं कालकृतं निरूप्य, ब्रह्मकृतं जगदष्टधा निरूपयिष्यन्, पूर्वोक्तमुपसंहरति तच्छेषत्वाभावाय—

## मैत्रेय उवाच।

इति ते वर्णितः क्षत्तः! कालाख्यः परमात्मनः।
महिमा, वेदगर्भोऽथ यथाऽस्राक्षीन्निबोध मे ॥ १ ॥

* इति ते वर्णित इति। यथा ब्रह्मा भगवतो गुणावतारः, एवं कालेऽपि भगवतो महिमा गुणविशेषः। तत्र लोकप्रसिद्धिर्गौणी, वस्तुयाथात्म्यमेव मुख्यमिति ज्ञापयितुं कालाख्य इत्युक्तम्। अक्षरादेर्धर्मत्वं वारयति—परमात्मन इति। पुरुषोत्तमस्य। अथ भिन्नप्रकारेण कालसृष्टदयथासृष्टेः। वेदगर्भ इति वैलक्षण्ये हेतुः। वेदानुसारिणी सृष्टिर्ब्रह्मणैव विनिर्मिता कालानुसारिणी कालात् पुष्ट्या सा भगवत्कृता। १। तत्राऽपि सृष्टिप्रकारः कठिन इति भिन्नप्रकारत्वाद्विवेकार्थं सावधानतया श्रोतव्यमित्याह—निबोधेति॥ १॥

तत्र प्रथमं पञ्चपर्वाविद्याधिष्ठातृदेवतानां सृष्टिमाह—

ससर्जाऽग्रेऽन्धतामिस्रमथ तामिस्रमादिकृत्।
महामोहं च मोहं च तमश्चाऽज्ञानवृत्तयः ॥ २ ॥

+ ससर्जाऽग्र इति। तत्राऽपि जातिहीना तामसी वृत्तिः, तदधिष्ठातृदेवता या; सा प्रथमा। तामाह—सस-

---

प्रकाशः।

यथा तद्देवताका पञ्चमीत्यर्थः। ततो वेदे विनिष्णाता वेदाभ्यासपरा वेददेवताका षष्ठी। ततः श्रेष्ठा वेदार्थभूते स्थिता तत्तत्कर्मदेवताका सप्तमी। तस्याः स्वरूपमाहुः—वेद एवेत्यादि। योगेन उपासनया च युता वेदार्थविपर्येति। या तु हरेः क्रीडेच्छापूरिका मनुदेवताका सा सर्वतोऽप्युत्तमा उत्तरावधिरूपा अष्टमी। एवमनेन देवतारूपत्तिरूपेण सर्वेषां व्यष्टीनामस्मदादीनां सर्गयोगिनी 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' इति श्रुतेर्भूतमात्रेन्द्रियधीजन्मोपयोगिनी समष्टिरूपेणाऽष्टविधा बुद्धिरुत्पन्नेत्यर्थः। एवमध्यायार्थं सङ्गृह्य व्याकुर्वते—एवमित्यादि।

* एतेन भगवल्लीलात्वं विभूतिरूपत्वं चोक्तवक्ष्यमाणयोः सूचयतीत्याशयेनाऽऽहुः—यथेत्यादि। ननु लोके कालो द्रव्यत्वेन प्रसिद्धः कथं गुण इत्यत आहुः—तत्रेत्यादि। पुष्ट्या सा भगवत्कृतेति। सा उभयविधाऽपि पुष्ट्या अनुग्रहेण भगवत्कृता। तथा च, परम्परालीलारूपेत्यर्थः।

+ ससर्जेत्यत्र। जातिहीनेति। अमायरूपत्वाज्जातिहीना निकृष्टस्वभावा चेत्यर्थः। प्रायपाठमालम्ब्य पक्षान्तरमाहुः—देवता वेति। अन्धतामिस्रयोगप्रयोजकं रूपमाहुः—

---

१ यथास्राक्षीत्. पा.

र्जोऽग्रे इति। अन्धतामिस्रमग्रे ससर्ज। विषयः पुरुषश्चेति ज्ञाने कोटिद्वयं मतम्। पुरुषे बोधकं चक्षुः, विषये व्यापिका प्रभा। अग्रे तदुभयाभावस्तेनाऽन्धत्वं तमस्तथा॥ १॥ तदनन्तरं तामिस्रम्, विषयेष्वेव मोहो, न तु स्वात्मनि। आदिकर्तेति प्रथमत एव जगत्कर्ता। स चेदेवं न सृजेत्तदा जगदेव न स्यात्। आत्मानं वस्तुरूपं च यदि जानाति सर्वथा। अत्युत्कटश्चेत्कामः स्यात्तदा सृष्टिर्न चाऽन्यथा। न तच्छक्यं ब्रह्मणः स्याद्धरेरेव तथा भवेत्॥ १॥ तदनन्तरं महामोहः, वस्तुयाथात्म्यं पश्यन्नपि तस्मिन् विषये स्वात्मैक्यबुद्धिः, यथा देहोऽहमिति। मोहस्तु ममेति। तमस्त्वज्ञानम्, कोऽहमिति न वेद। पञ्चाऽप्येता अज्ञानस्यैव वृत्तयः। अज्ञानं भगवच्छक्तिर्मायाकार्यमिहोच्यते। चतुर्मुखे प्रविष्टा सा पञ्चधा निर्गता बहिः॥ २॥

ताः पञ्चविधा अपि देवताः सृष्टा दृष्ट्वा जगत्कर्तृत्वेन ता न विनियुक्ताः, किन्तु मयाऽप्येतत्साधु न कृतमिति स्वात्मानमेव निन्दितवानित्याह—

**दृष्ट्वा पापीयसीं सृष्टिं नाऽऽत्मानं बह्वमन्यत।**
**भगवद्ध्यानपूतेन मनसाऽन्यांस्ततोऽसृजत्॥ ३॥**

दृष्ट्वा पापीयसीमिति। पापेनैवैतादृशी सृष्टिरुत्पद्यते। ततो भगवद्ध्यानमपराधनिवृत्त्यर्थं कृतवान्। तदपि ध्यानं तावज्जातम्, यावता मनः सर्वदा शुद्धं भवेत्, यथाऽग्रे सृज्यमानेषु पूर्वसृष्टिर्न प्रविशति। तदाह—भगवद्ध्यानपूतेनेति। अन्यान् पूर्वस्माद्विलक्षणान्॥ ३॥

---

प्रकाशः।

—विषय इत्यादिसार्धेन। तत्र वैष्णवे 'तमोऽविवेको मोहः स्यादन्तःकरणविभ्रमः। महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा। मरणं ह्यन्धतामिस्रं तामिस्रं क्रोध उच्यते।' इत्युक्तम्। पातञ्जलदर्शने च—'अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः' इत्युक्तम्। तदेव व्यासपादैस्तामिस्रादिशब्दप्रयोगेण विवृतम्। विष्णुस्वामिना तु—'स्वादृगुत्थविपर्यासभयभेदजभीशुचः। यन्मायया जुषन्नास्ते तमिमं नृहरिं भजे' इतिश्लोके अज्ञानविपर्यासभेदभयशोका उक्ताः। अत्र तु वैष्णवात् क्रमभेदः। कारिकार्थस्तु—ज्ञाने। लौकिके विषये। पुरुषश्चेति। प्रमेयप्रमातृभेदेन कोटिद्वयं मतम्। तत्रापि पुरुषे बोधकं करणभूतं चक्षुरपेक्षितम्। विषये व्यापिका स्वसंयोगेन सहकारिणी प्रभा आलोकरूपाऽपेक्षिता। अग्रे तयोः करणसहकारिणोरभावात्तेनाऽभावेन पुरुषेऽन्धत्वं विषये तमस्तथा। अभावप्रकारेणेदं द्वयमन्धन्तमःशब्दप्रयोजकमित्यर्थः। तथा च करणालोकाभावे भावहेतुका यावद्बाह्यविषयज्ञानाभावाकारा वृत्तिरन्धन्तम इति योगतस्तत्स्वरूपं सिध्यति। इयं वैष्णवे अविवेकपदेनोक्ता। (?) तमस्त्वेन। तामिस्रत्वं विषयमोहस्य कथमित्यतस्तद्विवृण्वन्तस्तत्स्फुर(णा)वश्यकत्वे हेतुमाहुः—आत्मानमित्यादि। तथा च, स्वस्वरूपविषयस्वरूपयाथात्म्यज्ञाने सत्यपि या तदुभययाथात्म्यमात्राय एकाऽत्युत्कटकामाकारा वृत्तिः सा तामिस्रमित्यर्थः। ननु भगवानिव चेत् कुर्यात् कुतो न स्यात्? तत्राहुः—नेत्यादि। एता इति। आवरणविक्षेपरूपाः। अमित्रशब्दवदज्ञानपदं ज्ञानविरुद्धतत्सदृशभावपदार्थवाचकमित्यभिप्रेत्य तत्स्वरूपमाहुः—अज्ञानमित्यादि। तथा च, आवरणविक्षेपशक्त्यात्मिका अविद्यापरनामिका '*विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम्। मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते।*' इति वाक्यसिद्धा सा तथेत्यर्थः।

**सनकं च सनन्दं च सनातनमथाऽऽत्मभूः ।**
**सनत्कुमारं च मुनीन्निष्क्रियानूर्ध्वरेतसः ॥ ४ ॥**

एते चत्वारो जाताः । अनेनैते कृतयुगस्थानीयाः, पूर्वे कलिस्थानीया इति । अथाऽऽत्मभूरिति । तेषामपि चतुर्णां मध्ये सनत्कुमारो महान्, भगवत्पौत्रः । अस्य सृष्टौ भगवत्पौत्रभावो मुख्य इत्यात्मभूरित्युक्तम् । आत्मा भगवान् । सर्वेषां गुणत्रयमाह—मुनीन् निष्क्रियानूर्ध्वरेतस इति । तेषां कर्तव्यत्वेन मननमेवैकं सिद्धम् । उत्तरकाण्डार्थ एव तेषां कर्तव्यः, न पूर्वकाण्डार्थ इत्याह—निष्क्रियानिति । वेदमधीत्य, वेदार्थं बुद्ध्वाऽपि, बहिरध्यासशून्या मानसप्रधानाः । केवलमनसैव यत्सिध्यति, तदेव कुर्वन्तीत्यर्थः । ननु सृष्टिमपि कुतो न मनसा कुर्वन्ति ? तत्राऽऽह—ऊर्ध्वरेतस इति । न मनसाऽपि रेतोद्वारे गृष्टिः । परं तद्रेतो मानसम्, तदप्यूर्ध्वं भगवद्गामि, न त्वधो हीनजनकम् ॥ ४ ॥

अपाततः पुत्रानुत्तमान् दृष्ट्वा लोके स्यातपौरुषः पुत्रानाह—

**तान् बभाषे स्वभूः पुत्रान् प्रजाः सृजत पुत्रकाः ! ।**
**तन्नैच्छन्मोक्षधर्माणो वासुदेवपरायणाः ॥ ५ ॥**

÷ तान् बभाषे इति । प्रजाः सृजतेति । अत्र ब्रह्मणो नाऽज्ञानम्, किन्तु भगवदुपयोगिसृष्टिमेव मनसा कुर्वन्त्विति सृजतेति नियोगः, अन्यथा तस्मात्क्रोधान्महादेवो नोत्पद्येत । स्वभूरिति पदं तु, न भगवदाज्ञापनपर्यन्तं स्थितः, किन्तु स्वयमेवाज्ञापितवानित्यत्रोपक्षीणम् । पुत्रका इति संबोधनमाज्ञाया अवश्यकर्तृत्वाय । स्वार्थे कप्रत्ययः सन्देहाभावाय । अत एव तदाज्ञाकरणे भगवत्कार्यस्याऽकृतत्वात् भगवद्द्वारि क्रोधोद्गमः । तदाह—तन्नैच्छन्निति । ननु भगवदीयमपि कार्यं कुतो नैच्छन् ? तत्राऽऽह—मोक्षधर्माण इति । मोक्षे ये धर्मा निवृत्तिमार्गसिद्धाः । अथवा, मोक्ष एव धर्मो येषाम्, ते मोक्षार्थमेव धर्मान् कुर्वन्ति। ननु भगवत्कार्यकरणमपि मोक्षहेतुः, तत्कुतो न कृतवन्तः ? तत्राऽऽह—वासुदेवपरायणा इति । वासुदेवो ज्ञानं दत्त्वा मोक्षदाता, न तस्य कार्यं सृष्ट्यादिकमप्यपेक्ष्यते। तादृशस्य न कैवल्याख्यो मोक्षः फलम्, किन्तु भगवत्संतोषः । अत एव तत् ब्रह्मणो वाक्यं नैच्छन्, इच्छामेव न कृतवन्तः, न तु ' न करिष्यामः ' इति वचनमपि ॥ ५ ॥

* अत एव तूष्णीम्भावे, पूर्वमविद्यासृष्ट्या खिन्नः, तच्छान्त्यर्थमेते सृष्टाः, तेऽपि चेदनुपयुक्तास्तदा क्रोधो जातः स च नाऽल्पः, कार्यव्यापाराविष्टत्वात्—

**सोऽवध्यातः सुतैरेवं प्रत्याख्यातानुशासनैः ।**

---

प्रकाशः।

÷ तानित्यत्र । अत्रेति । सनकाद्याज्ञापने । ननु स्वभूपदाद्ब्रह्ममहिम्नैव महादेवमाहात्म्यस्य शक्यवचनतया तदुत्पत्तेर्न ज्ञानस्य ज्ञापिकेति शङ्कायामाहुः—स्वभूरित्यादि । तथा च, तत्पदं ' बभाषे ' इत्यस्य समभिव्याहारादहंकारबोधन एवोपक्षीणमिति न महादेवमाहात्म्यपर्यन्तबोधनसमर्थमस्येत्यर्थः । भगवद्द्वारीति । वरणायां भ्रूमध्य इति यावत् ।

* अत एव तूष्णीमित्यादि । सोऽवध्यात इत्यस्याऽऽभासोऽयम् । अत एवेति अवध्यानादेव ।

क्रोधं दुर्विषहं जातं नियन्तुमुपचक्रमे ॥ ६ ॥

× अभिमानं कार्यं च नाशयतीति दुर्विषहः । ततः क्रोधोत्पत्त्यनन्तरं मध्ये भगवदिच्छाविषयिणी बुद्धिर्जाता । कोऽभिप्रायो भगवतः ? कथमेते सृष्टिं न कुर्वन्तीति ? । पश्चाज्ज्ञातो भगवदभिप्रायः । तामससृष्ट्यनन्तरमेते सृष्टा आसुरीमेव सृष्टिं भगवदुपयोगिनीं करिष्यन्ति, मानुषभावाश्चैतेऽहन्ताधिकारिण इत्यभिप्रायं ज्ञात्वा क्रोधं नियन्तुमुपक्रमं कृतवान् ॥ ६ ॥

तदोत्पन्नः क्रोधो भगवदभीष्टकार्ये भगवदंशानुप्रवेशात् तस्मिन्कार्ये आधिदैविको जात इत्याह—

धिया निगृह्यमाणोऽपि भ्रुवोर्मध्यात्प्रजापतेः ।
सद्योऽजायत तन्मन्युः कुमारो नीललोहितः ॥ ७ ॥

÷ धिया निगृह्यमाण इति । मनसो व्यापारद्वयम्, क्रिया ज्ञानं च । तत्र ज्ञानेन नियमनं कृतम्, न क्रियया । अतः क्रियाया अनिवर्तितत्वात्, स्वस्मिंश्चाऽप्रभवादुभयरक्षार्थम्, भ्रूमध्ये भगवदाज्ञाचक्रस्थानत्वात्, भगवदाज्ञाकारी भगवदंशस्तद्द्वारा निर्गत इत्याह—भ्रुवोर्मध्यादिति। सद्य इति तत्क्षणम्, क्षणान्तरे क्रिययाऽपि नियमनं स्यात् । मन्युरिति क्रोध एव। नीललोहित इति कर्बुरवर्णः । क्रोधस्याऽऽरक्तो वर्णः, भगवतो नीलः; उभयमेकीभूतं नीललोहितं भवति। कुत्सितो मारो यस्येति स्वाभाविकसृष्ट्युपयोगिकन्दर्पनाशकः । दैतेयकन्दर्पजनकश्च ॥ ७ ॥

ततस्तस्य नामनिरुक्त्यर्थं लीलया बहिः, अन्तस्तु दुःखितान् सर्वानेव दृष्ट्वा, रोदनं कृतवानित्याह—

स वै रुरोद देवानां पूर्वजो भगवान्भवः ।
नामानि कुरु मे धातः स्थानानि च जगद्गुरो ! ॥ ८ ॥

* स वै रुरोदेति । स तु देवानां मध्ये पूर्वजः । यावन्तो ह्याधिदैविका जाता इत्यर्थः । स तु भगवान्, न जीवांशः । भव इति स एव भवति सर्वत्र, न ह्यहङ्कारव्यतिरेकेण कश्चिज्जायते, नाऽप्यालिङ्गः; अतो जनने हेतुभूतो भवो भवति । उपादाने हरेः, रजो ब्रह्मेति । अतोंशद्वये सूक्ष्मम्, उपष्टम्भकाः सर्वे वैष्णवाः । अतस्त्रिमूर्तिर्देहः । रोदनकारणे पृष्टे उत्तरमाह—नामानीति। नामानि स्थानानि । जगत्कर्तृत्वात्स्थानजननम्, जगद्गुरुत्वात् नामकरणम् । नामव्यतिरेकेण अव्यक्ततया भोगः प्रसज्येत, ततो नामप्रार्थना ॥ ८ ॥

तावतैव संतुष्टो ब्रह्मा अधिकमपि कृतवानित्याह—

इति तस्य वचः पाद्मो भगवान् परिपालयन् ।
अभ्यधाद्भद्रया वाचा मा रोदीस्तत्करोमि ते ॥ ९ ॥

---

प्रकाशः।

× अभिमानं कार्यं चेति । पुत्रत्वाभिमानं तच्छरीरं च ।

÷ धियेत्यत्र । उभयरक्षार्थमिति । नियमनभ्योरुतेश्च रक्षार्थम् ।

* स वै रुरोदेत्यत्र । कार्यमात्रे स(भ)वस्य व्यापकतया वर्तमानत्वमुपपादयन्ति—न हीत्यादि ।

इतीति । तस्य वाक्यपरिपालनं कुर्वन् नामानि कृतवान् । अभिप्रायस्तु अव्यक्ततयैव भोगः कर्तव्य इति । बालकरोदने भद्रया वाचा सान्त्वनं भवतीति सान्त्वयन्नाह—अभ्यधादिति । मा रोदीरिति निषेधः। त्वदभीप्सितमेव सेत्स्यतीति तत्करोमि त इति गूढोऽभिप्रायः। दास्यामि च भार्याः, ततस्तान् सर्वान् स्वयमेवोत्पाद्य स्वसमानान् करिष्यसीति । अत एव भार्यादानम् । प्रार्थितं द्वयम्, अभीष्टं चैकमिति न प्रार्थिताधिकदानम् ॥ ९ ॥

स्वभावतो गुप्तत्वात् क्रिययैव त्वन्नामेत्याह—

**यदरोदीः सुरश्रेष्ठ ! सोद्वेग इव बालकः ।**
**ततस्त्वामभिधास्यन्ति नाम्ना रुद्र इति प्रजाः ॥ १० ॥**

* यदरोदीरिति । यद्यस्मात्कारणात् त्वमरोदीः, अतो रुद्रः। 'यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' इति श्रुतेः। 'रक्' प्रत्ययोऽत्र औणादिकः कर्त्तरि। सुरश्रेष्ठेति संबोधनान्न गणरुद्रत्वम्, ते हि सुरा एव, न श्रेष्ठाः। ननु प्रार्थनायां कृतायामपि यथा प्रार्थक इति नाम न कृतम्, तथा रुद्रेत्यपि न कर्तव्यमित्याशङ्क्याऽऽह—**सोद्वेग इवेति** । उद्वेगसहितः सोद्वेगः। चित्तव्याकुलता उद्वेगः, रोदने कायवाङ्मनोव्यापारः सम्पन्नः, तेन नामजनकत्वम् । अश्रुविमोकः कायिकः, शब्दो वाचनिकः, उद्वेगो मानस इति । यद्यप्यभिप्रायोऽन्यस्तथाप्यनुकरणं तादृशमिति लोके तथैव नाम । तदाह—**इवेति** । अहं सर्वात्मक इति मद्गोपनार्थं कृतं रूपं सर्वजगत्प्रसिद्धं भवत्विति, रुद्र इति नाम्ना सर्वे लोका अभिधास्यन्ति, त्वत्क्रियाकरणेन अभिनयेन चाऽभिधानं प्राप्तम् । तथा च सति पुनरप्रकट एव स्यादत आह—**नाम्नेति** ॥ १० ॥

तस्य स्थानान्येकादश निर्दिशति नामसाम्यात्—

**हृदिन्द्रियाण्यसुर्व्योम वायुरग्निर्जलं मही ।**
**सूर्यश्चन्द्रस्तपश्चैव स्थानान्यग्रे कृतानि मे ॥ ११ ॥**
**मन्युर्मनुर्महेशानो महान् शिवः ऋतुध्वजः ।**
**उग्ररेता भवः कालो वामदेवो धृतव्रतः ॥ १२ ॥**
**धीर्वृत्तिरुशनोमा च नियुत्सर्पिरिलाऽम्बिका ।**
**इरावती सुधा दीक्षा रुद्राण्यो रुद्र ! ते स्त्रियः ॥ १३ ॥**
**गृहाणैतानि नामानि स्थानानि च सयोषणः ।**
**आभिः सृज प्रजा बह्वीः प्रजानामसि यत्पतिः ॥ १४ ॥**

---

प्रकाशः।

* यदरोदीरित्यत्र । ननु यदि रोदनाभिप्रायोऽन्यः, तदा नामादिप्रार्थनस्य किं प्रयोजनमत आहुः—अहमित्यादि । तथा च, स्वस्वरूपगोपनमेव प्रयोजनमित्यर्थः । तथा च सतीत्यादि । अभिनयेन नाम्नि सति स्वरूपतोऽप्रकट इति त्वदभिमतसिद्धिरेव भविष्यतीत्यर्थः ।

---

१ महिनसा पा. २ ऋतध्वज.. पा. ऋतुध्वज.- पा. ३ शुभा पा

* हृदिन्द्रियाणीति । हृत् हृदयम्; इन्द्रियाणि च; असुः प्राणः; व्योम आकाशः; तपः कृच्छ्रादि । जीवानां मध्ये त्रितयम् , बहिर्महाभूतानि, अहोरात्रप्रकाशकौ बहिः, अन्तस्तप इति । प्रकाशकमुपादानं करणं च हैरासनम् । नामानि भार्याः सिद्ध्यर्थं रुद्राणां गणभेदतः । १ । मन्युरिति नामानि । महिनस इत्येके । ध्याद्याः स्त्रियः । धीवृत्तिरसहोमा चेति वा पाठः । रुद्राण्य इति तव सहजाः स्त्रिय एताः । नाम्नां ग्रहणं रूपद्वारा भवतीत्येकादशभावग्रहणम्; एकादशरूपैर्ग्रहणं वा विधीयते । सयोपणः सभार्यः । सयोपण इति छान्दसः। आभिः कृत्वा बह्वीः प्रजाः सृज, यस्मात्त्वं प्रजापतिः, प्रजासृष्टावधिकारितया आविर्भूतः ॥ ११ । १२ । १३ । १४ ॥

स्वाभिलषितमेव ब्रह्मणोक्तमिति तथैव कृतवानित्याह—

इत्यादिष्टः स गुरुणा भगवान्नीललोहितः ।
सत्त्वाकृतिस्वभावेन ससर्जाऽऽत्मसमाः प्रजाः ॥ १५ ॥

इत्यादिष्ट इति । स्त्रीभिः सह तथाकरणं नाऽभिलषितमिति ज्ञापयति । गुरुणेति । 'आज्ञा गुरूणां ह्यविचारणीया ' इति । भगवानिति तादृशानामेव उत्पादनसामर्थ्यं सूचयति । नीललोहित इति रुद्रस्याऽसाधारणः शब्दः । सत्त्वाकृतिस्वभावेनेति । सत्त्वं बलम् , आकृतिर्नीललोहितत्वम् , स्वभावस्तामसः । एवं त्रिभिः कृत्वा आत्मसमाः प्रजाः ससर्ज ॥ १५ ॥

ततः किं जातमित्यत आह—

रुद्राणां रुद्रसृष्टानां समन्ताद्ग्रसतां जगत् [१]
निशम्याऽसंख्यशो यूथान्प्रजापतिरशङ्कत ॥ १६ ॥

× रुद्राणामिति । रुद्र एक एव मारणोपयोग्युत्पादने नियुक्तः, स्वकार्यप्रतिबन्धं ज्ञात्वा स्वकार्येण मारणं कृतवान् । तदा कार्याणां बहुत्वात्कालेन सृष्टाः सर्वा एव सृष्टयस्तैर्भक्ष्यन्ते सर्वानेवाऽऽत्मप्रवेशनेन मुक्तान् कुर्वन्ति, अचेतनानपि भूरादीन् परितो ग्रसन्ति । एवं रुद्रसृष्टानां रुद्राणां समन्ताज्जगद् ग्रसतामसंख्यशो यूथान् ज्ञात्वा, प्रजापतिः स्वात्मानमपि भक्षयिष्यन्तीति शङ्कां कृतवान् ॥ १६ ॥

('अलं प्रजाभिः' इत्यादीनि वाक्यानि 'एवमात्मभुवा' इत्यत्र सम्बध्यन्ते।) आत्मभक्षणशङ्कया प्रजापतिराह—

अलं प्रजाभिः सृष्टाभिरीदृशीभिः सुरोत्तम ! ।
मया सह दहन्तीभिर्दिशश्चक्षुर्भिरुल्बणैः ॥ १७ ॥

---

प्रकाशः।

* हृदित्यत्र । कारिकायाम् । चस्तप.समुच्चायकः । सिद्ध्यर्थमिति । सृष्टिकार्यसिद्ध्यर्थम् । तेन गणरुद्राणां मूलरुद्रव्यूहत्वं बोधितम्, अत एव पञ्चमस्कन्धे ' साङ्कर्षणो नाम रुद्र एकादशव्यूहः' इत्युक्तम्।

× रुद्राणामित्यत्र । कालेन सृष्टा इत्यादि । अप्रकृतानां तदानीमनुत्पन्नत्वाद्दशमाध्यायोक्तानामेव तदानीं सत्त्वादेवमुक्तम् ।

---

१ हृदासनम्. प. २ महेशान इशव . प महिनस इत्येके: रा. ३ -रूप ग्रहण. प. ४() चिह्नितपाठो नास्ति. क

अलं प्रजाभिरिति। ईदृशीभिः प्रजाभिरलम्, अतः परमेतादृश्यः प्रजा न स्रष्टव्या इत्यर्थः। सुरोत्तमेति जीवभावमाह। देवोत्तमो भूत्वा देहभावेन सृष्टिकरणं न युक्तमिति भावः। तासां को दोष इत्याशङ्क्य दोषमाह–मया सह दहन्तीभिरिति। दश दिशो दहन्ति। नापि दाहे तासामग्न्यपेक्षा, किन्तु चक्षुर्भिरेव। उल्बणैरिति क्रूरत्वेन भयजनकैः। अनेन साम्मुख्याभावेऽपि अन्यस्यापि तद्दर्शने भयेनाऽपि मरणं सूचयति १७

तर्हि किं कर्तव्यमित्याकाङ्क्षायामाह—

**तप आतिष्ठ भद्रं ते सर्वभूतसुखावहम्।**
**तपसैव यथापूर्वं स्रष्टा विश्वमिदं भवान्॥ १८॥**

तप आतिष्ठेति। तपसि क्रियमाणेऽपि न तव खेदो भविष्यतीत्याह–भद्रं त इति। सर्वभूतसुखावहमिति। तपोऽपि सृष्टिवल्लोकोपद्रवहेतुभूतं न कर्तव्यम्, किन्तु सर्वेषां भूतानां सुखमेव आवहति तादृशं सात्त्विकं कर्तव्यमित्यर्थः। ततः किं स्यादत आह–तपसैव यथापूर्वमिति। पूर्वं तामसकल्पे शिवः प्रजाजनकः। ताः प्रजास्तामस्यो भवन्ति, परं लोकानुसारिण्यः। तादृश्योऽपि प्रजा अस्मिन् कल्पे उपयुज्यन्त इति तथोक्तम्॥ १८॥

किञ्च, माऽस्तु प्रजासर्गः; तथापि सात्त्विके तपसि क्रियमाणे भगवान् परितुष्यतीत्याह—

**तपसैव परं ज्योतिर्भगवन्तमधोक्षजम्।**
**सर्वभूतगुहावासमञ्जसा विन्दते पुमान्॥ १९॥**

तपसैवेति। ब्रह्मा हि स्वानुभवप्रकारेण शास्त्रार्थं निरूपयति–परं ज्योतिरिति। ज्योतिषामपि प्रकाशकम्, अतस्तस्मिन् दृष्टे सर्ववस्तुयाथात्म्यं स्फुरति, स हि सर्वथा सर्ववस्तुयाथात्म्यप्रकाशकः। भगवन्तमिति न ततोऽन्यज्ज्ञातव्यमस्तीति ज्ञापितम्। अधोक्षजमिति साधनान्तरं निराकृतम्। सर्वभूतगुहावासमिति सुलभत्वमावश्यकत्वं दुर्ज्ञेयत्वं च। एतादृशस्य प्राप्तिस्तपसा भवतीति तपसो माहात्म्यम्। अञ्जसा अनायासेन। पुमानिति दोषराहित्यम्॥ १॥

एवं ब्रह्मणा उपदेशे कृते रुद्रो यत्कृतवांस्तदाह—

## मैत्रेय उवाच।

**एवमात्मभुवाऽऽदिष्टः परिक्रम्य गिरां पतिम्।**
**बाढमित्यमुमामन्त्र्य विवेश तपसे वनम्॥ २०॥**

× एवमिति। आत्मभुवा ब्रह्मणा। गिरां पतिमिति गुरुम्। प्रमाणं बाढमिति। अतः परं ममाऽपि संमतमिति भावः, तथास्त्वित्यर्थः। अमुं ब्रह्माणम्। तपःकरणार्थं तपोवनं प्रविवेशेत्यर्थः। एवमाधिभौतिकाध्यात्मिकाधिदैविकसृष्ट्यन्तामन्यो निरूपिताः॥ २०॥

---

प्रकाशः।

× एवमात्मभुवेत्यत्र। एवमाधिभौतिकेत्यादि। आधिभौतिका रुद्ररूपा रुद्राः, आध्यात्मिका गणरुद्राः, आधिदैविको नीलरुद्रो ज्ञातव्यः।

अथ राजस्यः प्रकारान्तरेण सृष्टयः कृताः, ता निरूपयितुमुपक्रमते—

अथाऽभिध्यायतः सर्गं दश पुत्राः प्रजज्ञिरे ।
भगवच्छक्तियुक्तस्य लोकसन्तानहेतवः ॥ २१ ॥

* अथाऽभिध्यायत इति । पूर्वं कर्तृत्वाभिमानेन सृष्टौ प्रवृत्तः। अहङ्कारस्य त्रैविध्यात्त्रिविधा सृष्टिरुत्पन्ना । तामसी पञ्चपर्वा, ततोऽहङ्कारे भगवद्ध्याने शुद्धे चित्ते राजसी सृष्टिः, तदुभयनिर्वाहार्थं सात्त्विकी चेति । इदानीं सृष्टिमेव ध्यायति, कथमियं सृष्टिर्भवतीति । तदा सृष्टेर्भगवद्रूपत्वात् दशविधा सा सृष्टिरुत्पन्नेति निरूप्यते । नव त्रिगुणाः, एको गुणातीत उद्देशे पश्चान्निरूप्यते, विमर्शे प्रथमम् । तेषां चिन्तापरिहारकत्वेन दुःखनिवारकत्वात्पुत्रत्वम् । ननु ध्यानमात्रेण कथमेते पुत्रा उत्पन्नाः? तत्राऽऽह—भगवच्छक्तियुक्तस्येति । या भगवतः सृज्या शक्तिः, सैव पुत्रत्वेन प्रकटीभूतेत्यर्थः । स्रष्टृशक्तिर्वा । तदा तयैव शक्त्या ते उत्पादिताः । भगवच्छक्त्या उत्पादिते यो विशेषस्तमाह—लोकसंतानहेतव इति । लोकस्य जनस्याऽऽसंसारमनुवृत्तिः कल्पान्तपर्यन्तं संततिर्प्रवाहः । न हि प्रवाहो भगवच्छक्तिव्यतिरेकेणाऽन्येन कर्तुं शक्यते ॥ २१ ॥

तानुद्देशतो गणयति—

मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
भृगुर्वसिष्ठो दक्षश्च दशमस्तत्र नारदः ॥ २२ ॥

मरीचिरिति । आद्यास्त्रयः सात्त्विकाः, मध्यमास्तामसाः, भृग्वादयस्त्रयो राजसाः । दशमस्तत्रेति भिन्नतया निरूपणं गुणातीतत्वख्यापनार्थम् ॥ २२ ॥

अवयवेभ्यस्तेषामुत्पत्तिमाह—

उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात्स्वयंभुवः ।
प्राणाद्वसिष्ठः संजातो भृगुस्त्वचि करात्क्रतुः ॥ २३ ॥
पुलहो नाभितो जज्ञे पुलस्त्यः कर्णयोर्ऋषिः ।
अङ्गिरा मुखतोऽक्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत् ॥ २४ ॥

उत्सङ्गादिति । प्रीतिविषयत्वेनोत्सङ्गान्नारद उत्पादितो लाल्यमानः, भगवदीयत्वादङ्गुष्ठाद्दक्षः, न्यसमानत्वाय । स्वयंभुव इति । तस्याऽपि ब्रह्मण इवाऽभिमानः। अन्ये यथायथमुत्पन्ना बाह्याभ्यन्तरभेदेन। ज्ञाननिष्ठास्त्वान्तराः, मध्यस्था राजसाः, बाह्यास्तामसा इति । प्राणाद्दशविधाद्वसिष्ठः । सम्यग्जात इति अन्तपर्यन्तमुत्तमा एव तद्वंश्या निरूपिताः । भृगुर्बाह्यः; क्रतुरपि, पुलहोऽपि । पुलस्त्यस्योभय-

प्रकाशः।

* अथेत्यत्र । राजसी सृष्टिरिति । सनकादिसृष्टिः, मनुष्यभावाद्राजसी । सात्त्विकीति । रुद्रः । द्वेषकृत्वात् सात्त्विकीत्यर्थः ।

१ तत्सृष्टिः. क. प. २ सन्तानम्. क. ग. घ समा० ङ. च. ३ सन्ततिः प्रवाह.. क ४ आन्तपर्यन्तम्. ख घ ङ.

वंशजनकत्वात्कर्णयोरित्युक्तम् । श्रीपिरिति वेदसहभावात् दैत्यत्वव्यावृत्त्यर्थम्, अन्यथा मधुकैटभाविव कश्चिज्जायेत । अङ्गिरा वक्त्रमध्यात् । अक्षिमध्यादत्रिः, तस्याऽप्युभयरूपसृष्टिजनकत्वम् । ज्ञानिनो योगिनः पुत्ररूपाश्च । मनसो द्वैरूप्यम्, मरीचेरप्युभयसृष्टिजनकत्वात् ' ययोरापूरितं जगत् ' इति वाक्यात् ॥ २३ ॥ २४ ॥

एवं दशपुत्रान्निरूप्य तेष्वधिष्ठितरूपेण नवाऽन्यान् सगुणानुत्पादितवानित्याह । तत्राऽग्रपश्चाद्भेदेन धर्माधर्मौ । तयोश्च कार्यं, मुक्तिः संसार इति । धर्माधर्मौ निरूपयति—

+ धर्मः स्तनाद्दक्षिणतो यत्र नारायणः स्वयम् ।
अधर्मः पृष्ठतो यस्मान्मृत्युर्लोकभयंकरः ॥ २५ ॥

धर्मः स्तनादिति । यत्र धर्मे नारायण आविर्भूतः, स दक्षिणस्तनात् । स्वभावतो हृदयाद्धर्मः, । तत्र प्रवृत्तिस्वभावो वामाद्धृदयात्, ज्ञानात्मा भगवदात्मकस्तु दक्षिणस्तनात् । स्वयमित्यात्मत्वान्मोक्षरूपत्वम् । अधर्मे वैलक्षण्याभावात्सामान्यतः पृष्ठत इत्युक्तम् । तत्राऽऽविर्भूतो भगवदंशको नाशको मृत्युः। लोकभयंकर इति तस्याऽवान्तरकार्यम् । अनेन भयहेतुरेवाऽधर्म इति भयेनाऽधर्मपरिज्ञानम् ॥ २५ ॥

षडन्ये—

हृदि कामो भ्रुवः क्रोधो लोभश्चाधरदच्छदात् ।
आस्याद्वाक् सिन्धवो मेढ्रान्निर्ऋतिः पायवपाश्रयः ॥ २६ ॥

हृदि काम इत्यादि । कामक्रोधलोभाः, वाक्समुद्रनिर्ऋतयश्च । तत्र निर्ऋतिः पाय्वपाश्रयः । स विसर्गात्मा न स्थिरस्वभावः, अतस्तस्याऽऽश्रयाभावः । कामादयः सृष्टिप्रलयात्मकाः, मर्यादात्मकास्तु वाक्समुद्रनिर्ऋतयः ॥ २६ ॥

छायायाः कर्दमो जज्ञे देवहूत्याः पतिः प्रभुः ।
मनसो देहतश्चेदं जज्ञे विश्वकृतो जगत् ॥ २७ ॥

× छायाया अपि प्रतिसृष्टिरूपत्वात् पुष्टयुपयोगिसृष्टिजनकत्वम्, अतोऽग्रिमप्रकरणे विस्तरेण वक्ष्यते । स्वमश्छाया तमश्चैव माया ऽविद्या भ्रमस्तथा । तिरोभूतेन हरिणा सृज्यन्ते प्रतिसर्गजाः॥१। कर्दमस्य प्रसिद्धिरत एव भार्यया, तत्र स्त्रियाः प्राधान्यम् । तपो भगवदाराधनं च तत्र स्व्यर्थमेव,

प्रकाशः।

+ धर्म इत्यत्र । यतो[1] नारायण इति कार्यकथनम् । ' हृदयं यस्य धर्मः' इति वाक्यं विचार्य विभजन्ते—स्वभावत इत्यादि ।

× छायाया इत्यत्र । प्रतिसृष्टिरूपत्वादित्यनेन देहसम्बन्धाभावाद्ब्रह्मसम्बन्धस्तत्र स्पष्ट इति पुष्टयुपयोगिसृष्टिजनने हेतुः प्रतिभाति । प्रतिसर्गान्तरे एवंरूपत्वं वारयितुं सङ्गृह्णन्ति—स्वप्न इत्यादि । प्रतिसर्गे जायन्त इति प्रतिसर्गजाः । अत एवेति । मूतत्वेन सृष्टत्वादेव । [2]देवहूतिपदनिरुक्तिप्रयोजनमाहुः—

१ यतो. प. २ प्रयो: प.

स्त्रियाश्च मुक्तिः, प्रकरणं च स्त्रियाः । एतत्सूचयितुमाह—देवहूत्याः पतिरिति । देवानां हूतिर्यया । यथा याजैर्देवमार्गे तथा स्त्री दैत्यपक्षके । प्रभुरिति । देवसृष्ट्यावुत्पन्नत्वात् पश्चात्स्वातन्त्र्यम्, तां त्यक्ष्यतीत्यर्थः । एवं सृष्टिमुक्त्वोपसंहरति—मनस इति । चकाराच्छायातोऽपि । विश्वकृदिति पश्चात्पूर्ववदभिमान उत्पन्न इत्यर्थः । कारणदशायां योऽभिमानः,तदपेक्षया कार्यानन्तरमभिमानोऽनर्थहेतुरिति ॥२७॥

* अस्याः सृष्टेः प्रतिच्छायारूपां सृष्टिमन्यां निरूपयितुमुपाख्यानान्तरमारभते—

**वाचं दुहितरं तन्वीं स्वयंभूर्हरतीं मनः ।**
**अकामां चकमे क्षत्तः! सकाम इति नः श्रुतम् ॥ २८ ॥**

वाचं दुहितरमिति । अविद्या प्रथमं सृष्टा अभिमानस्ततोद्गतः । सृष्टौ च सर्वे पुरुषाः, वागेका स्त्री सरस्वती । १ । लौकिकी साऽत्र विज्ञेया, सा वेदेऽपि तिरोहिता । तिरोधानप्रवृत्त्यर्थं चरित्रमिदमुच्यते ॥ २ ॥ सत्यसृष्टौ प्रवेशे हि तिरोभूता न सा भवेत् । यज्ञात्मकोऽयं ब्रह्माऽत्र, सृष्ट्याधिक्येच्छया पुनः ॥ ३ ॥ लौकिकीमपि वाणीं स गृह्णामीति मनो दधे । ततो लौकिकभूयिष्ठं जगज्जायेत निश्चितम् । ४ । तन्नैच्छन् वैदिकाः सृष्टाः, त्यागो भेदेन रूपितः । दैत्यसृष्टौ, ततः सर्वे यज्ञा वेदाश्च लौकिकाः ॥ ५ ॥ 'न तं विदाथ' वाक्येन ते निन्द्यन्ते सदा श्रुतौ । लौकिकी लौकिकेष्वेव सकामा, न तु वैदिके । ६ । उत्तमस्य तु हीनत्वं जायते शीघ्रमेव हि । नाऽधमस्योत्तमत्वं-

प्रकाशः

यथेत्यादि । तथा च, दैत्यपक्षत्ववारणाय पदनिरुक्तिरित्यर्थः । एतेन पदकथनप्रयोजनमेव सूचितम् ।

* वाचमित्यत्र । अन्यामिति । नीहाररूपाम् । एतस्योपाख्यानस्य प्रयोजनं बोधयितुं सार्धाष्टभिस्तात्पर्यमाहुः—अविद्येत्यादि । लौकिकीति । नूतनगद्यपद्याद्यधिष्ठात्री । सा अत्रोपाख्याने सृष्टा विशेषेण ज्ञेया । सा वेदे ' सारस्वतीं मेषीमालभेत ' इत्यादिरूपेऽपि तिरोहिता, ' य ईश्वरो वाचो वदितोः सन्वाचं न वदेत् ' इति यागाधिकारिस्वरूपकथनेना (न) वस्थायिनी बोधिता । अतस्तस्या गद्यपद्यरूपलौकिकवाचश्चिरकालानवस्थित्यादिरूपतिरोधानप्रवृत्त्यर्थमिदं चरित्रमुच्यते । ननु साऽत्र प्रतिसृष्टिरूपा लौकिक्येवेत्यत्र किं गमकमत आहुः—सत्येत्यादि । तिरोभूतेति ' रोहिद्भूताम्.....' इत्यनेन तिरोभावस्य कापिलेये वक्ष्यमाणत्वाचिरोभूता । एतेन तत्कर्तुरपि तत्र ऋक्षरूपत्वकथनात् तादृशत्वं बोध्यमिति ज्ञापितम् । ननु भवतु सा, तथापि ब्रह्मणः कथमेवं मन इत्यत आहुः—यज्ञेत्यादि । तर्हि प्रतिबोधनं यदृषिभिः कृतम्, तत्कुत इत्यत आहुः—तत इत्यादि । तथा च निर्मर्यादजगदकरणार्थं बोध इत्यर्थः । त्यागप्रकारतात्पर्यमाहुः—त्याग इत्यादि । यतो भेदेन प्रकारान्तरेण तद्भावत्याग उक्तः,ततो हेतोर्दैत्यसृष्टौ तथेत्यर्थः । तेन तेषां लज्जामात्रेणाऽधर्मत्यागो यज्ञादिकरणं च सूचितम् । बलिप्रभृतयस्त्वावेशिनो न सहजा इत्यदोषः । दैत्यपक्षीययज्ञादेर्लौकिकत्वे गमकमाहुः—न तमित्यादि । अकामात्वव्रीडितत्वयोस्तात्पर्यमाहुः—लौकिकीत्यादिसार्धेन । तथा चैतत्त्रयं ज्ञापयितुमिदं द्वयमुक्तमित्यर्थः । ननु मात्स्ये शतरूपा प्रजापतेरुत्पन्ना सा मुक्ता, ततः स्वायंभुवमनोरुत्पत्तिरुक्ता, शतरूपायाश्च प्रजापत्यविनाभाव उक्तः, दोषश्च निवारितः । अत्र तु वाचो दुहितृत्वमु-

१ भेदे निरूपित . ४

हि कदाचिदपि जायते ॥ ७ ॥ दयासृष्टिर्द्वितीयेति दुहितृत्वं न चाऽन्यथा । अधर्मोऽप्ययमेवाऽत्र हीनकार्येषु या रतिः । भ्रातृणां च विवाहोऽग्रे सृष्टिभेदे निरूप्यते ॥ ७ ॥ वाच सरस्वतीं लौकिकीम् । तन्वीं कोमलाङ्गीं सुन्दरीम् । गद्यपद्याभिरूपा हि लौकिक्येव सरस्वती । स्वयंभूरिति कुलादिमर्यादाभावः सूचितः । मनो हरन्तीमिति कामनायां हेतुः । अहङ्काराविष्टत्वान्मनसस्तदधीनत्वम् २८

तमधर्मे कृतमतिं विलोक्य पितरं सुताः ।
मरीचिमुख्या मुनयो विश्रम्भात्प्रत्यबोधयन् ॥ २९ ॥

तमधर्म इति । पितरं ब्रह्माणम् । सुताः । मरीचिर्मुख्यो येषाम् । मुनय इति मननेन साक्षादधर्महेतुत्वमस्याः सृष्टेर्नाऽस्तीति ज्ञातवन्तः । विश्रम्भात् विश्वासाद्धार्ष्ट्येन । प्रत्यबोधयन्निति । यथा ब्रह्मणा पूर्वमेते बोधिताः,तमेव बोधं ब्रह्माणं प्रति बोधितवन्तः । वाचि प्रवृत्तिर्न कर्तव्या, शिष्टैः पूर्वजैरकृतत्वादपकीर्तिजनकत्वाज्जगन्नाशहेतुत्वाच्च ॥ २९ ॥

तत्र प्रथमं हेतुं साधयति—

नैतत्पूर्वैः कृतं त्वत्र न करिष्यन्ति चाऽपरे ।
यत्त्वं दुहितरं गच्छेरनिगृह्याऽङ्गजं प्रभो ! ॥ ३० ॥

नैतत्पूर्वैः कृतमिति । अत्र जगति, एतदेतादृशं कर्म, पूर्वैः सृष्ट्यादिप्रवर्तकैः कदापि पूर्वं न कृतम्, नन्वेतादृश एवाऽऽचारोऽतः परं प्रवर्तनीय इत्याशङ्कयाऽऽहुः—न करिष्यन्ति चापर इति । तस्मादयमनाचारः । तं त्वमेव करोषीत्याह—यत्त्वमिति । गच्छेरिति अभीष्टे लिङ् । यत्त्वं स्वेच्छया तां गच्छसीत्यर्थः । ननु मनस्तया हृतम्, तां तज्जः कामो हरति, मम को दोष इति चेत्तत्राऽऽह—अनिगृह्याऽङ्गजमिति । अङ्गजः कामः स्वकीयः, स एव निग्राह्यो न तु प्रवर्तनीयः, तथा सत्यधर्मः स्यादिति भावः । प्रभो इति संबोधनं तथा सामर्थ्यं सूचयति । अनेनाऽधर्मजनकत्वमपि सूचितम् ॥ ३० ॥

---

प्रकाशः।

कम्, न तु मात्स्यवदिति कुतो विशेष इत्यत आहुः—दयेत्यादि । यथेयं वाग्लौकिकी, तथा, दयासृष्टिर्जनमतीयदयासृष्टिः, द्वितीया इतो भिन्ना लौकिकीति ज्ञापनाय अस्या वाचो दुहितृत्वम् 'दयाया भगिनी मूर्तिः' इति वाक्यादन्येषां भगिनीत्वेन दयारूपत्वाय, च पुनः, अन्यथा प्रकारान्तरेण, वास्तवरूपेण न, ब्रह्मणो वागीशत्वस्य प्रागेवोक्तत्वात् । तदेतत् स्फुटीकुर्वन्ति—अधर्मोऽपीत्यादि । तया चाऽन्यात् स्वरूपमन्यत्, अतोऽत्राऽधर्मत्वम्, मात्स्योक्तायास्तु रूपं भिन्नमतो न तत्र दोष इत्यर्थः । एतेन बुद्धावतारे या वेदयज्ञादिनिन्दा भगवता कृता, सापि लौकिकवेदादिविषया । या च भूतदया स्थापिता, साप्येतादृशी, 'वेदैर्विमोहयति यज्ञकृतोऽतदर्हान्' इति वाक्यात् । अतस्तत्रापि 'यदा यदा हि धर्मस्य ग्लानिः' इति वाक्यस्य न विरोध इति ज्ञापितम् । अयमेवाऽधर्मोऽत्र नाऽन्यविध इत्यत्र गमकमाहुः—भ्रातृणां चेत्यादि । अन्यथा कर्दमपुत्रीणां मरीच्यादिभ्यो दानमपि नाऽऽज्ञापयेत् । अतः सृष्टिभेदेन दोषाभावेऽपि लौकिकसंनिधिमात्रप एवाऽत्राऽधर्मः नान्य इति न कोऽपि क्वापि सन्देह इत्यर्थः । एवमुपाख्यानतात्पर्यं सङ्गृह्य व्याख्यातुमारभन्ते—वाचमित्यादि । तदधीनत्वमिति । कामाधीनत्वम् ।

---

१ मात्सर्येण. क ग. ख.

द्वितीयं हेतुं विशदयति—

**तेजीयसामपि ह्येतन्न सुश्लोक्यं जगद्गुरो!।**
**यद्वृत्तमनुतिष्ठन् वै लोकः क्षेमाय कल्पते ॥ ३१ ॥**

* तेजीयसामिति। स्वतन्त्रेणैवैतत्कर्तुं शक्यम्, न परतन्त्रेण। न हि तेजस्वित्वमात्रेण स्वातन्त्र्यं भवति, यमादिदण्डः परं निवार्येत; तथाप्यपकीर्तिर्भवत्येव, ततोऽपि तेजस्वित्वेऽपि कीर्तिर्न भवत्येव। तदाह—न सुश्लोक्यमिति। किञ्च, त्वं जगद्गुरुः सर्वोपदेष्टा, त्वद्वाक्याज्ज्ञानमन्यस्य। तत्र वाक्ये जनकं ज्ञानं तव स्वाभाविकं चेन्न भवेत्, काव्यवदप्रामाण्यमेव स्यात्; उत्प्रेक्षाजनितत्वात्। सत्यज्ञानस्य जनकत्वे, एवं तवाऽऽचारो न स्यादिति। किञ्च। यथा त्वद्वाक्यं प्रमाणं तथा तवाऽऽचारोऽपि। ततस्त्वदाचारानुसारेण प्रवर्तमाना अधर्मेण नष्टा एव भवेयुः। अतस्तेषामपि रक्षार्थं नैवं कर्तव्यमित्याह—यद्वृत्तमिति। वरदानवत् क्षेमदानेऽपि सर्वदानं निर्वहेदिति। यथा त एव क्षेमे स्वयमेव समर्था भवन्ति, तथोपायः कर्त्तव्यः॥ ३ ॥

एवं स्वतः सामर्थ्यतश्च न कर्तव्यमिति ब्रह्माणं बोधयित्वा, भगवत्प्रेरणया क्रियत इत्याशङ्क्य भगवन्तं प्रार्थयन्ते—

**तस्मै नमो भगवते य इदं स्वेन रोचिषा।**
**आत्मस्थं व्यञ्जयामास स धर्मं पातुमर्हति ॥ ३२ ॥**

तस्मै नम इति। यद्यन्तर्यामी भगवान् प्रेरयेत्, तदैवाऽयं निवर्तेत। तेनापि प्रेरणमवश्यं कर्त्तव्यम्। इदं हि जगद्भगवता स्वस्मिन् स्थितं प्रकाशितम्। तदपि तेजसा, न तु तमसा दैत्यवत्। तस्य स्थितिर्धर्मेणैव, तस्याऽधर्मेण नाश एव। तथा सति 'उत्पतन्नेव यो हतः' इतिवदुत्पन्नमात्रमेव जगन्नष्टं भवेत्, ततोऽनुत्पाद एव श्रेष्ठः स्यात्। अथ यदि सत्यसङ्कल्पो जगत् कृतार्थतायै कृतवान्, तदा स एव जगत्कर्ता धर्ममपि पातुमर्हति ॥ ३२ ॥

एवं प्रकारत्रयेण ब्रह्माणं स्तुत्वा, क्रियया अपि प्रतिबन्धका इव पुरः स्थिताः। ततो वाचा क्रियया च रुद्धो मानसभावस्तेन त्यक्त इत्याह—

**स इत्थं गृणतः पुत्रान् पुरो दृष्ट्वा प्रजापतीन्।**
**प्रजापतिपतिस्तन्वं तत्याज व्रीडितस्तदा ॥**
**तां दिशो जगृहुर्घोरां नीहारं यद्विदुस्तमः ॥ ३३ ॥**

स इत्थमिति। गृणत इति निवृत्तिपर्यन्तं स्तोत्रं कृतवन्त इत्यर्थः। सृष्टौ चिन्ता न कर्तव्येति ज्ञापयितुमाह—प्रजापतीनिति। प्रजापतिपतिरिति तेषामपि पालनमावश्यकम्। तन्वमिति तनोः सकाशाज्जातं रूपम्। लज्जया निवृत्तिर्लोक इति सूचयितुं व्रीडित इत्युक्तम्। सा त्यक्ता तनुः प्रतिसर्गरूपत्वात् नीहाररूपा जाता, तां दिशः श्रोत्राभिमानिन्यो देवता गृहीतवत्यः। + वाग्बोधिकास्ताः सर्वत्र

प्रकाशः।

* तेजीयसामित्यत्र। तत्र वाक्ये इत्यस्य अप्रामाण्यमित्यनेनाऽन्वयः।

+ तां दिश इत्यत्र। दिग्भिर्नीहारग्रहणस्य तात्पर्यमाहुः—वाग्बोधिका इत्यादि।

वाचा सह तां योजयिष्यन्ति, अत एव 'न तं विदाथ' इति श्रुतिः । अत एव श्रुत्यर्थविदस्तामेव तनुं नीहारमिति विदुः ॥ ३३ ॥

* एवं सृष्टिप्रसङ्गेन प्रतिसृष्टिमुक्त्वा, राजसे भेदद्वयं निरूप्य, सात्त्विके भेदत्रयं निरूपयति—कदाचिदित्यादि यावदध्यायसमाप्ति । आध्यात्मिकास्तु श्रुतयः शब्दब्रह्म तु दैविकम् । धर्मप्रवर्तकाः सर्वे भूतानि स्मरणात्पुनः ॥ १ ॥ तत्र प्रथममाध्यात्मिकान् वेदान् जगज्जननार्थं ध्यानेन दृष्टवान्, तदा ते सृष्ट्यर्थं भगवदिच्छया प्रकटीभूताः । तदाह—

**कदाचिद्ध्यायतः स्रष्टुर्वेदा आसंश्चतुर्मुखात् ।**
**कथं स्रक्ष्याम्यहं लोकान् समवेतान् यथा पुरा ॥ ३४ ॥**

कदाचिदिति । स्रष्टुर्विधातुः । ध्यायत इति प्रथमतो ध्याने प्रकटीभूताः, पश्चान्मुखात् । कदाचिदिति न सर्वकल्पेषु वेदोद्गमः । कथं स्रक्ष्यामीति ब्रह्मणश्चिन्ता वेदोद्गमे हेतुः । ध्यानमेवाऽऽह—कथं स्रक्ष्यामीति । समवेतान् मिलितान् । मिलितानां विवेचनमसाधारणलक्षणैरेव भवति । यथा स्थाण्वादयः पुरुषादिभ्यो वक्रकोटरादिभिर्विविच्यन्ते, तथा श्रुत्युक्तलक्षणैः समवेता विविच्यन्त इति वेदोद्गमः॥३४॥

वेदार्थमपि चिन्तया ब्रह्मादिभिः सहोत्पादितवानित्याह—

**चातुर्होत्रं कर्मतन्त्रमुपवेदनयैः सह ।**
**धर्मस्य पादाश्चत्वारस्तथैवाऽऽश्रमवृत्तयः ॥ ३५ ॥**

चातुर्होत्रमिति । चत्वारो होतारो यत्र । ब्रह्मा होताऽध्वर्युरुद्गाता एते चत्वारो होमसाधनम्, अनुज्ञाशस्त्रहोमस्तोत्रैस्तत्कर्म चातुर्होत्रम् । तन्त्रमिति विस्तारः । उपवेदा आयुर्वेदादयः । नया नीतिशास्त्राणि, पुराणन्यायमीमांसाधर्मशास्त्राणि वा । धर्मस्य चत्वारः पादाः, सत्यं तपो दया दानमिति । आश्रमाणां ब्रह्मचर्यादीनां प्रत्येकं चतस्रो वृत्तयः । चतुर्मुखादासन्निति सर्वत्राऽनुषङ्गः ॥ ३५ ॥

+ प्रमादाद्वेदनिर्गमने नियमेनेदं न सिद्ध्यतीत्यवश्यं ब्रह्मणैव, हृदये प्रकटा वेदाः, मुखेन निर्मिता इति वक्तव्यम् । तत्रापि पूर्वादिक्रमेणाऽन्येन वा वेदाः सृष्टा इति वक्तव्यम् । तथा सति वेदादीनां क्रमः सिद्ध्येत्, अन्यथा कर्मापेक्षया क्रमकल्पनायां यजुर्वेदः प्रथमो भवेत्, प्रधानपरे वा ब्रह्मणो वेदोऽथर्वाङ्गिरसात्मकः प्रथमः स्यात् । अतः क्रमाध्ययनमन्यथा स्यात् । तथोपवेदादीनाम् । अतो विदुरः क्रमं पृच्छति—

---

प्रकाशः

तामिति । अधर्मबुद्धिम् ।

* कदाचिदित्यत्र । राजस इत्यादि । 'अथाऽभिध्यायत' इत्यादिना उक्ते राजसे सर्गे सर्गप्रतिसर्गाभ्यां भेदद्वयं निरूप्य 'कदाचित्' इत्यादिना वक्ष्यमाणे सात्त्विके सर्गे आध्यात्मिकादिभेदत्रयं निरूपयतीत्यर्थः । भूतानि स्मरणात्पुनरिति । धर्मप्रवर्तका ऋषयः पुनर्वेदार्थस्मरणादाधिभौतिकवेदरूपा इत्यर्थः ।

+ स वा इत्यत्र । प्रधानपरे वेत्यादि । तादृशे क्रमे ब्रह्मण ऋत्विजः प्राधान्याच्छेदः प्रथमः स्यादित्यर्थः ।

---

१ ब्रह्मण. एव क

## विदुर उवाच ।

स वै विश्वसृजामीशो वेदादीन्मुखतोऽसृजत् ।
यद्यद्येनाऽसृजद्देवस्तन्मे ब्रूहि तपोधन ! ॥ ३६ ॥

* स वै विश्वसृजामीश इति । मुखतोऽसृजादित्यन्तमनुवादः । तत्र हेतुरुक्तः । यद्यदिति प्रश्नविषयः । देवत्वाच्चप्रतिपादनत्वाच्छ्रुते स्वार्थं तत्सर्गं इति प्रयोजनं दोषाभावश्च निरूपितौ । स्वात्मानं प्रति तदुपदेशाभावमाशङ्क्याऽऽह—मे इति । तपोधनेति संबोधनं जन्मकर्मादिपरिज्ञापकम्, ततः सर्वज्ञत्वान्मां प्रत्यपि वक्ष्यतीति ॥ ३६ ॥

वेदानां क्रमं मुखक्रमं चाऽऽह—

## मैत्रेय उवाच ।

ऋग्यजुःसामाथर्वाख्यान् वेदान् पूर्वादिभिर्मुखैः ।
शस्त्रमिज्यां स्तुतिस्तोमं प्रायश्चित्तं व्यधात्क्रमात् ॥ ३७ ॥

देवता, द्रव्यसंबन्धः, देवतास्तोत्रम्, यागाभ्यनुज्ञा चेति यागानामर्थतः क्रमः । पूर्वादिमुखक्रमस्तु पाठार्थमुपयुज्यते । तेषां चतुर्णां विनियोगमाह—शस्त्रमिति । शस्त्रं होतुः; इज्या यजिरध्वर्योः, यजुर्वेदकृत्यम्; स्तुतिर्देवताया उद्गातुः; सामवेदकृत्यम् । प्रायश्चित्तं ब्रह्मण इति, 'प्रायश्चित्ते ब्रह्माणम्' इत्याश्वलायनसूत्रात्, एवं सप्रयोजनान् वेदान् पूर्वादिमुखैः सृष्टवानित्यर्थः ॥ ३७ ॥

वेदोपयोगिपदार्थान् वक्तुं पुराणानि सृष्टवानित्याह—

इतिहासपुराणानि पञ्चमं वेदमीश्वरः ।
सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः ॥ ३८ ॥

× इतिहासपुराणानीति । सर्वोपयोगित्वान्नाऽत्र क्रमो विवक्षितः, अतः सर्वेभ्य एव वक्त्रेभ्यो निर्ममे । सर्वदर्शन इति सर्वेषामेव वर्णानामवर्णानां स्त्रीशूद्रद्विजबन्धूनामुपयोगं पश्यन् पुराणं सृष्टवान् । चिन्त्यमेतत् ॥ ३८ ॥

चातुर्होत्रादीनामप्युद्देशात् तेषामप्युत्पत्तिक्रममाह—

षोडश्युक्थौ पूर्ववक्त्रात्पुरीष्यग्निष्टुतावथ ।
आप्तोर्यामातिरात्रौ च वाजपेयं सगोसवम् ॥ ३९ ॥

---

प्रकाशः ।

तत्र हेतुरुक्त इति । प्रश्नविषये भ्रष्टव्यांशे हेतुत्वेनोक्त इत्यर्थः । तत्प्रतिपादनत्वात् श्रुतेः स्वार्थमिति । श्रुतेर्देवप्रतिपादकत्वात् देवार्थम् । दोषाभाव इति । विदुरस्याऽपि देवत्वात्तं प्रति कथने दोषाभाव इत्यर्थः ।

× इतिहासेत्यत्र । चिन्त्यमेतदिति । सर्वदर्शनपदतात्पर्यमिदम् ।

---

१ देवता, द्रव्यसम्बन्धः, देवतास्तोत्रम्, यागाभ्यनुज्ञा चेति ख. ग. घ. ङ. च. २ इत ऊर्ध्वं 'आयुर्वेदं धनुर्वेदं गान्धर्वं वेदमात्मनः । स्थापत्यं चासृजद्वेदं क्रमात्पूर्वादिभिर्मुखैः' ॥ इति श्लोकोऽधिकः पुस्तकेषु

×षोडश्युक्थाविति। 'अप्यग्निष्टोमे राजन्यस्य गृह्णीयात्' इति श्रुते 'न वै षोडशी नाम यज्ञोऽस्ति' इति च सर्वोपयोगित्वात् षोडशी प्रथमतो गृहीत । तयोभयस्यापि सर्वोपयोगित्वम्। तावुभौ पूर्ववक्त्रात् ससृजे। अग्निष्टुदग्निष्टोमः, पुरीष्या अग्नयश्चयननामका पुरीषमस्यास्तीति पुरीषी, पुरीषी च अग्निष्टुच पुरीष्यग्निष्टुतौ, स समासान्त (?)। आप्तोर्यामोऽतिरात्रस्यैव भूमा, सविशेषोऽतिरात्रइत्यर्थ । वाजपेयोऽपि स्वतन्त्रो महाफल । गोसवश्च गोसत्रम्। तयोरपि सहभाव ॥ ३९ ॥

धर्मस्यैते चत्वार पादा विद्यादय इति—

विद्या दानं तपः सत्यं धर्मस्येति पदानि च।
आश्रमांश्च यथासंख्यमसृजत्सह वृत्तिभिः ॥ ४० ॥

* विद्या ज्ञानम्। दान तुलापुरुषादि। तपः कृच्छ्रादि। सत्य सत्यभाषणम्। पदानीति पदशब्दः। चकारादन्येऽपि धर्मपादा भगवद्रूपत्वाद्धर्मस्य सन्तीति ज्ञापितम्। आश्रमांश्चाऽसृजत्सह वृत्तिभिरिति। वृत्तिचतुष्टयसहित एकाश्रम एकस्मान्मुखाज्जात इति ज्ञापितम् ॥ ४० ॥

तत्र ब्रह्मचारिणो वृत्तिचतुष्टयमाह—

सावित्र्यं प्राजापत्यं च ब्राह्मयं चाऽथ बृहत्तथा।
वार्ता संचयशालीनशिलोञ्छ इति वै गृहे ॥ ४१ ॥

सावित्र्यमिति। सावित्र्यमुपनीतस्य गायत्रीशिक्षाकाले मौनादिसहितत्रिरात्रात्मक । तत सवत्स रपर्यन्तं प्राजापत्य वेदनतात्मकम्। ब्राह्मयं वेदग्रहणात्मकम्। बृहन्नैष्ठिकम्। गृहस्थस्य वृत्तिचतुष्टयमाह—वार्तेति। वार्ता कृष्यादिचतुष्टयम्। सचयोऽध्यापनादिना प्राप्तधनस्य सग्रह। शालीनमल्पधान्ययाचनम्, यायावर इत्यर्थ । शिलोञ्छ इति। शिला खले धान्याना हस्तेनैकैकश उद्धार, उञ्छन गृहस्थाना गृहे कण्डनादिस्थाने पतितधान्यादीना ग्रहणम् ॥ ४१ ॥

प्रकाशः।

× षोडशीत्यत्र। षोडशिन प्रथमत उक्तौ हेतु सर्वोपयोगित्वमिति बोधयितु प्रमाणमाहु—अपीत्यादि। ननु यज्ञविशेषत्वस्य हेतुत्वे किं बोधकमित्याशङ्कायां श्रुत्यन्तरमाहुः—न वा इत्यादि। तथा च, यज्ञविशेषत्वे प्र थमत उक्तौ प्रथमसंस्थारूपमग्निष्टोममेव वदेत्। 'एतेनेष्ट्वा' इति श्रुतौ तस्यैव प्राथम्यात्। अतः सर्वो- पयोगित्वमेव तथेत्यर्थ। इद श्रुतिद्वय तैत्तिरीयाणा पञ्चाष्टकसमाप्त्यनुवाके 'प्रजापतिर्देवेभ्यो यज्ञा न्' इत्यत्राऽस्ति। तत्र च षोडशपदनिरुक्तिपूर्वक सर्वोपयोगित्वं स्फुटमस्तीति ततोऽवगन्तव्यम्।

* विद्येत्यत्र। श्रीधरीये-'विद्येति शौचम्, 'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धि परमा मता' इति स्मृते। दान दया, 'भूताभयप्रदानस्य कला नार्हन्ति षोडशीम्' इति वचनात्। एव च 'तपः शौचं दया सत्यमितिपादा कृते कृता' इति प्रथमस्कन्धोक्तेरविरोध' इति व्याख्यातम्। तत्संग्रहार्थमाहु—चकारादित्यादि।

आश्रमानित्यत्र। वृत्तिचतुष्टयमिति। वर्तनप्रकारचतुष्टयं जीविकाचतुष्टय च। श्रीधरीये 'शालीनमयाचितवृत्ति' इति व्याख्यातम्, 'शिलोञ्छन कणिशकणवृत्ति' इति च।

१ वाऽथ पा २ प्राप्तम् ग

वनस्थाना वृत्तिचतुष्टयमाह—

**वैखानसा वालखिल्यौदुम्बराः फेनपा वने ।**
**न्यासे कुटीचरः पूर्वं बह्वोदो हंसनिष्क्रियौ ॥ ४२**

* वैखानसा इति । विखनसा ब्रह्मणा यानि भगवद्भजनादीनि वैखानससूत्रे उपदिष्टानि, वने स्थित्वा, तत्कर्मकर्तारो वैखानसाः, दैवादागतवृत्तिजीविन । वालखिल्यास्तपस्विन पञ्चाग्न्यादिसाधका सूर्यमुक्तान्न भक्षका वनस्था वन्यान्नाश्च । औदुम्बरा नखलोमादिस्थापका मलधारिणो वृक्षफलोपजीविनश्च । नियता रण्या फेनपा, वायुजलभक्षाः । तपोवनादिवास पूर्वसिद्धोऽनुवर्तत एवेति । न्यासिना वृत्तिचतुष्टयमाह—न्यास इति । न्यासे संन्यासे, कुटीचर पूर्वं निरूप्यः । पञ्चसप्तत्यूर्ध्वं सन्यासे आयुर्भागक्रमेणाऽऽश्रमचतुष्टयपक्षे नित्यसंन्यासो भवति । तत्र ब्राह्मण्यम्, वयः, पूर्वाश्रमानन्तर्यं च प्रयोजकम्, न ज्ञानादि । षट्त्रिंशदाब्दिक ब्रह्मचर्यमिति वेदाध्ययनकालपक्षोऽपि विकल्प्यते । 'चतुर्थमायुषो भागमुषित्वाऽऽद्यं गुरौ द्विज । द्वितीयमायुषो भागं कृतदारो गृहे वसेत् ।' इति मनुवाक्यात्प्रत्येकसमुदायपक्षौ निर्णीतौ । तत्र समुदायपक्षो नित्य । आश्रमचतुष्टयमपि क्रमेण ब्राह्मणेन कर्तव्यमिति तदेवाऽत्र ब्रह्मणा निष्पादितमित्युच्यते । प्रत्येकपक्ष काम्य । केचिदधिकारभेदेनाऽऽहुः—साधारणानां चतुष्टयमिति । ऊर्ध्वरेतसा भक्ताना ब्रह्मचर्यं नैष्ठिकम्, एक एवाऽऽश्रमस्तेषाम् । तथा सर्वथा वैराग्यरहितस्योत्कटकामस्य गार्हस्थ्यमेव उपकुर्वाणो भूत्वा यथाशक्ति वेदानधीत्य, विहितप्रकारेण कृतदारो भूत्वा, यावज्जीवमग्निहोत्रं जुहुयात् । किं बहुना, शरीरसत्थापर्यन्त धृताग्निहोत्रमपि तस्य विहितम् । अत एवाऽऽपस्तम्बकारेण सर्वे आश्रमास्तुल्या निरूपिता,

प्रकाशः

* वैखानसा इत्यत्र । श्रीधरीये 'वैखानसा अकृष्टपच्यवृत्तय । वालखिल्या नवान्ने लब्धे पूर्वसञ्चितान्नत्यागिन । औदुम्बरा प्रातरुत्थाय या दिशा प्रथम पश्यन्ति, तत आहृतै फलादिभिर्जीविन । फेनपाः स्वयं पतितै फलादिभिर्जीविन ' इति व्याख्यातम् ।

— न्यास इत्यत्र । ननु 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति श्रुतेर्जाते वैराग्ये सन्या ( सा ) द्यादिरूपतैव तत्रेति वृत्तिचतुष्टयं कथमित्याकाङ्क्षाया कुटीचरस्य पूर्वं निरूप्यत्वे हेतुमाहु —पञ्चेत्यादि । ज्ञानादीत्यादिपदेन वैराग्यसंग्रह । तथा च, नित्यपक्षे वैराग्यज्ञानादेरङ्गत्वाभावात् स्वाश्रमकर्मप्रधानस्य कुटीचरस्य युक्ता पूर्वं निरूप्यतेत्यर्थ । ननु 'षट्त्रिंशदाब्दिकमिति वा' ब्रह्मचर्यस्य बहुकालमुक्तत्वादाश्रमक्रमपक्षो न युक्त इत्यत आहु —पक्षेत्यादि । तथा च, 'यद्वैकिञ्च' इति श्रुतेर्मनोरत्यादरणीयत्वेनाऽऽश्रमक्रमपक्षेऽस्यैव मुख्यत्वात् पक्षान्तरप्रायिकत्वेन युक्त तस्य पूर्वनिरूप्यत्वमित्यर्थ । ननु प्रायिकत्वे तस्य पक्षस्याऽनावश्यकता या श्रुतिव्याकोप इत्यत आहु —प्रत्येकेत्यादि । निर्णीताविति । नित्यकाम्यभेदेन निर्णीतौ । तथा च, व्यवस्था भेदेन सार्थक्यान्न श्रुतिव्याकोप इत्यर्थ । तमेव निर्णय स्फुटीकुर्वन्ति—तत्रेत्यादिकाम्यइत्यन्तम् । प्रत्येकपक्ष इति । यावज्जीवं यथोचितमेकाश्रमपक्षः । व्यवस्थाया मतान्तरमाहु —केचिदित्यादि । इद च न श्रीधरमतम् । कुटीचरः स्वाश्रमकर्मप्रधानः, बह्वोदः कर्मोपसर्जनीकृत्य (?) ज्ञानप्रधान ,हंसो ज्ञानाभ्यासनिष्ठ , निष्क्रियः प्राप्ततत्त्व । एते च सर्वे यथोत्तर श्रेष्ठा भवन्तीत्येतावन्मात्रव्याख्यानात् (?) । अतोऽन्येषामृषीणामेव तन्मत बोध्यम् । तन्मतव्यवस्था प्रदर्शयन्ति—साधारणानामित्यादि । साधारणानामिति । पूर्वोक्ताधिकाररहितानाम् । असाधारणं तत्तदधिकार स्फुटीकुर्वन्ति—ऊर्ध्वेत्यादि । नैष्ठिकगृहस्थाधिकार स्फुटीकुर्वन्ति—तथेत्यादि । अत एवेति । प्रत्येकपक्षस्याऽपि साधकत्वादेव । आपस्तम्बकारेणेति । आपस्त०

सर्वत्रैवाऽऽश्रमः सिद्ध्यतीति । प्रजानिन्दावाक्यानि चोर्ध्वरेतसां प्रशंसापराणि योजितानि, अन्यथा श्रुतीनामन्योन्यविरोधः स्यात् । एकदेशेनाऽपि श्रुतीनां बाधो ब्राह्मणानां न कर्तव्यः । तथा वानप्रस्थे यथाशक्ति ब्रह्मचर्येण वेदाध्ययनं विधाय देहपातपर्यन्तं वने वासं तपश्च कुर्यात् । न्यासेऽपि पूर्वजन्मनि आयुर्भागक्रमेण कृतन्यासः प्राप्तज्ञानश्च दृढवैराग्यो निरन्तरमात्मचिन्तकः, भगवत्प्रेमाभावात् सतां गृहे पुनरुत्पद्यते । तस्योत्पत्तिसंबन्धात्पूर्वज्ञानं तिरोहितमिव भवति; तदोत्तरत्र जन्मन्युपनीतः । वेदाध्ययने क्रियमाणे, पूर्वज्ञानमुद्बुद्धं भवति तदा 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति श्रुत्यर्थः कर्तव्यो भवति । तदा देहपातपर्यन्तं स एवाऽऽश्रमः परिपालनीयो भवति, अन्यथा पतितः स्यात् । ततोऽप्युपनयनात्पूर्वमेव पूर्वज्ञानवैराग्याणामुद्बोधेऽनाश्रमी भवति, यथा सनकादिः शुकादिर्वा । स वेदे निन्दितो भगवच्छास्त्रे च । अत एव ब्रह्मणः सनकादिषु क्रोधः । ब्रह्मपुत्रा अपि भूत्वा मानुषभावमापन्नाः, ततोऽपि दैत्यत्वम् । प्रह्लादरूपा जाताः, तत्रापि क्लेशः । शुकस्तु इमं बाधकमवगत्य पूर्वजन्मनि ज्ञानादिसिद्धावपि रूपद्वयं विधायैकेन रूपेण ब्रह्मचर्ये वेदानधीत्य, गार्हस्थ्ये पुत्रानुत्पाद्य, पुनरैक्यं प्राप्तः; देहपातपर्यन्तं भगवत्परो जातः। सोऽत्र मर्यादायां वैदिकमार्गे न गण्यते । तत्र य आयुर्भागक्रमेण चतुष्टयं करोति, स वनवासानन्तरं पुत्रादिनिर्मितकुट्यां पुत्रादिभिरेव परिपाल्यमान आत्मचिन्तकः कुटीचरो भवति । वनस्थो भूत्वा पुत्राद्यपेक्षां [1]परित्यज्य स्वतन्त्रतया यदि संन्यासं कुर्यात्, तदा स बहूदको भवेत् । क्वचित्तीर्थविशेषे सर्वनिरपेक्षस्तीर्थवासी भवेत् । तत्र वने पक्षद्वयम्—यदि सभार्यः साग्निर्वनं गच्छेत्, तदाऽग्रे पुत्रेषु भार्यां स्थापयित्वा स्वयं कुटीचरो भवेत्; यदि पूर्वमेव भार्यादिस्त्यक्तो भवेद्वनवासार्थमेव, तदा तावत्तपः कृत्वा अग्रे संन्यस्य बहूदको भवेत् । यदि ब्रह्मचर्यानन्तरमेव पूर्वोक्तप्रकारेण ज्ञानादिसंपन्नो भवेत्, तदा संन्यासे हंसो भवेत् । सर्वत्र तीर्थेषु एकरात्रविधिना निरपेक्षः परिभ्रमेत् । तस्य मौनानीहानिलायामा दण्डा नित्याः। ततोऽपि पूर्वजन्मन्येव सिद्धज्ञानादिर्हंसो भूत्वा यो म्रियते, स उत्तरत्र योगभ्रष्टो महतां गृहे उत्पन्नः प्राप्तद्विजातिसंस्कारो जडभरतवत्तिष्ठेत्, स निष्क्रियः । तस्य तु मुक्तमाच्छादनं न लिङ्गं प्रकटम्, तस्यैव ऋषभमयचर्या । तस्य लोकसंबन्धे पातित्यम्, यथैवाऽलौकिकः। तस्य सिद्धिः, स सर्वोत्तमः। तस्य धर्मं न हीनः कुर्यात् । तस्मा-

प्रकाशः।

न्माल्येन स्मृतिकारेण । प्रजानिन्दावाक्यानीति । 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इति; 'तद्धैक आहुर्ऋषयः कावषेयाः—किं प्रजया करिष्यामो येषां नाऽयमात्मा नाऽयं लोकः' इत्यादीनि । अन्यथेति । एवमेकाश्रमपक्षानङ्गीकारे । तथा च, सर्वथा वैराग्यराहित्ये नैष्ठिकगार्हस्थ्यपक्ष इत्यर्थः। नैष्ठिकवानप्रस्थपक्षं स्फुटी कुर्वन्ति—तथा वानप्रस्थ इत्यादि । नैष्ठिकसंन्यासपक्षमाहुः—न्यास इत्यादि । अत्रैव पक्षान्तरमाहुः—ततोऽपीत्यादि । स इति । अनाश्रमिपक्षः । प्रह्लादरूपाजाता इति । पुराणान्तरस्थमिदं प्रमेयम् । तत्रापीति । प्रह्लादरूपत्वेऽपि । रूपद्वयं विधायेति । इदमपि पुराणान्तरं ज्ञेयम् । न गण्यत इति । शुकेतरस्य तथा सामर्थ्याभावान्न गण्यते । एवं नित्यकाम्यपक्षद्वयमुपपाद्य प्रकृते कुटीचरादिस्वरूपं व्याकुर्वन्ति—तत्रेत्यादि । आत्मचिन्तक इति । 'अयं हि परमो धर्मो यद्योगेनाऽऽत्मदर्शनम्' इति वाक्यादाश्रमधर्ममूतात्मचिन्तनपरः । तीर्थवासी भवेदिति । तीर्थस्य जलप्रधानत्वेन बह्वोदपदयोगसामञ्जस्यात्तथा भवेदित्यर्थः । दण्डा नित्या इति । तेन हंसस्त्रिदण्डी इत्यर्थः। परमहंसाधिकारमाहुः—ततोऽपीत्यादि । मुक्तमिति । पथि स्थितं चीरादि । तस्य सिद्धिरिति । तथैव तस्य सिद्धिः । न हीनः कुर्यादिति ।

[1] मलत्यजेन क

दधिकारव्यवस्थयैव वृत्तिचतुष्टयमाह—यन्युत्तम कर्तुं न शक्नुयात्, तदा प्रथमोऽपि प्रथम कुटीचरो भूत्वा क्रमेण निष्क्रियो भवेदिति सिद्धान्त । तथा पूर्वाश्रमेष्वपि पूर्वमुत्तमां गतिं व्रजेत्, आश्रमान्तरेषु वा उत्तमा गतिं व्रजेदिति ॥ ४२ ॥

एवमाश्रमान्निरूप्य 'उपवेदनयै सह' इति निरूपणात् नीतिभेदान्निरूपयति—

**आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्तथैव च ।**
**एवं व्याहृतयश्चाऽऽसन्प्रणवो ह्यस्य हृद्गतः ॥ ४३ ॥**

* **आन्वीक्षिकीति** । अन्वीक्षणमन्वीक्षा, तत्संबन्धिनी नीतिर्मर्यादा, आन्वीक्षिकीत्युच्यते । एषा नीतिर्ब्राह्मणानामेव, तत्राप्याश्रमश्रेष्ठानाम् । त्रयी वेदत्रयी, वेदानुसारव्यवहार कर्तव्य, यज्ञा कर्तव्या, याजनादि च वृत्ति । क्षत्रियाणा मुख्यैषा श्रुति । वार्ता चतुर्विधा, कृषिगोरक्षवाणिज्य-कुसीदात्मिका, वैश्याना मुख्या । दण्डनीतिर्दण्डप्रकार, दण्डनार्थं वा नीति । यद्यप्यय राजधर्म, तथापि शूद्रेष्वेव दण्ड सर्वथा कर्तुं शक्यत इति तेषु प्रतिष्ठित । एव चतुर्द्धा नीति । यद्यप्यान्वीक्षिकी आत्मविद्या, त्रयी च वेदत्रयम्, यज्ञाश्च तदर्था, ते पुनर्नीतिमध्ये न वक्तव्या, तथापि तेषा लौकिकेऽपि ब्राह्मणादीना परमहंसादीना वा अन्वीक्षणादिरेव कर्तव्यः, न तु सर्वथा लौकिक इत्येतदर्थं नीतिशास्त्रेऽपि तयोरुपनिबन्धनम् । तथैव चेति पूर्ववत्, पूर्वादिमुखैरेवोत्पन्ना इत्यर्थ । एव सात्त्विकबुद्धावाध्यात्मिकत्वेन वेदाद्युत्पत्तिमुक्त्वा, आधिदैविक शब्दब्रह्मस्वरूप निरूपयितुं प्रथमतो व्याहृतीनामुत्पत्तिमाह—**एव व्याहृतय इति** । यद्यपि वेद एव गायत्री, व्याहृतय, प्रणवश्च निरूपिता । समष्टिव्यष्टिभेदेन चतुष्टयम् । सप्तव्याहृतिपक्षेऽपि अष्टमत्रयाणा समष्टिः । चकारादग्रे प्रणवोऽपि । तस्य चतुर्विधत्वाभावात् केवलं स हृद्गतो हृदयादेव प्रकटीभूत । अत एव ब्रह्मणा न प्रणव उच्चारित, किन्तु 'ओँकारश्चाऽथशब्दश्च द्वावेतौ ब्रह्मण पुरा । कण्ठ भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ' इति वाक्यात् प्रणव स्वयमेव निर्गत ॥ ४३ ॥

---

प्रकाश ।

तेनेदानीन्तना परमहसा आश्रमविडम्बका धर्मध्वजा एवेति बोधितम् । आहुरिति । प्रामाणिका आहु । उत्तमामिति । 'चतुर्थाश्रम व्रजेत्' इति क्रमेण व्रजेत् ।

* आन्वीक्षिकीत्यत्र । अन्वीक्षणमिति मननम् । एवे(षे)ति । द्रव्ययज्ञकरणरूपा । तदर्था इति । आत्मविद्यार्था । एव व्याहृतय इत्यत्र । व्याहृत्युत्पत्तौ तासा मकरा (प्रकार) भेद वदन्ति । समष्टीत्यादि । भूर्भुव सुवरिति व्यस्तास्तिस्रो व्यष्टि, समस्ता समष्टि, इत्येव पूर्वादिमुखैरुच्चारणाच्चतुष्टयमित्यर्थ । 'एव व्याहृतय प्रोक्ता व्यस्ता समस्ता' इत्याश्वलायनवाक्यात् । श्रीधरीये तु 'भूर्भुव सुवरिति वा एतास्तिस्रो व्याहृतयः, तासामुह स्मैता चतुर्थीमस्य प्रवेदयते मह इति' इति तैत्तिरीयोपनिषदुक्तोऽपि प्रकारश्च तुर्यत्वस्योक्त, तमपि संगृह्णन्ति—सप्तेत्यादि । तथा च, तैत्तिरीयोक्तामष्टम च पूर्वादिमुखैः प्रकटितयानित्यर्थ । चतुर्विधत्वाभावादिति । अमात्र (?) पक्षे तथात्वादित्यर्थ ।

---

१ प्रतिष्ठिता क ख घ ङ २ उपचित क

सप्तच्छन्दसामुत्पत्तिमाह—तस्योष्णिगासीदिति सार्द्धेन—

**तस्योष्णिगासील्लोमभ्यो गायत्री च त्वचो विभोः ।**
**त्रिष्टुम्मांसात्स्नुतोऽनुष्टुब्जगत्यस्थ्नः प्रजापतेः ॥**
**मज्जायाः पङ्क्तिरुत्पन्ना बृहती प्राणतोऽभवत् ॥ ४४**

+ लोमभ्यश्चर्मभ्य उष्णिगासीत् । एतानि सप्तच्छन्दांसि न्यूनाधिकभावमापन्नानि । तत्रोत्पत्त्युपपत्तिभ्यां गायत्री बृहती च श्रेष्ठे । तत्र चतुर्विंशत्यक्षरा गायत्री, अष्टाविंशत्यक्षरा उष्णिक्, द्वात्रिंशदक्षरा अनुष्टुप्, षट्त्रिंशदक्षरा बृहती, चत्वारिंशदक्षरा पङ्क्तिः, चतुश्चत्वारिंशदक्षरा त्रिष्टुप्, अष्टाचत्वारिंशदक्षरा जगती । तत्र गायत्री त्रिपदा, अन्याश्चतुष्पदाः । तत्र उष्णिक् सप्ताक्षरपादा भवति, अतः प्रथमं निर्दिष्टा । अथवा,, उत्पत्त्याऽत्र विचारः कर्तव्यः । तत्र ब्रह्मणः शरीरे धातूनां स्थूलसूक्ष्मभेदेन छन्दसां स्थूलसूक्ष्मभेदौ । क्रमश्चोत्पत्तौ धातुक्रमेणैव । उत्पत्तिविचारे सोमाहरणाद्गायत्री प्रतिष्ठिता । उपपत्तिविचारे अल्पाक्षरापि बृहती सर्वेभ्यश्छन्दोभ्यो महत्त्वात् बृहतीति नाम प्राप्तवती, 'स बृहतीमेवास्पृशत्' इत्यादिश्रुतौ बृहत्या माहात्म्यप्रतिपादनात् । प्राणतस्तस्या उत्पत्तिरुच्यते, सर्वोपरि च । अस्थ्नां बाहुल्याज्जगत्या उत्पत्तिः । तदपेक्षया मांसस्य हीनत्वात् ततस्त्रिष्टुबुत्पत्तिः । ततो मज्जा हीनेति ततो हीनायाः पङ्क्तेरुत्पत्तिः । मध्ये बृहती निरूपितैव । स्नुतः स्नायुतोऽनुष्टुबुत्पत्तिः। त्वगपेक्षया चर्मणामाधिक्याल्लोम्नां स्पष्टमेवाऽऽधिक्यदर्शनात् बहिःस्थितत्वेन उष्णिक् प्रथमतो निरूपिता । मज्जापेक्षयापि प्राणानामन्तःस्थितत्वात् पश्चान्निरूपणम् ४४

एवं सामग्रीं विनिरूप्य शब्दब्रह्मणो देहं विनिरूपयति—स्पर्शस्तस्याऽभवदिति सार्द्धेन—

**स्पर्शस्तस्याऽभवज्जीवः स्वरो देह उदाहृतः ।**
**ऊष्माणमिन्द्रियाण्याहुरन्तस्था बलमात्मनः ॥**
**स्वराः सप्त विहारेण भवन्ति स्म प्रजापतेः ॥ ४५ ॥**

स्पर्शाः पञ्चविंशतिः, ते सर्वे एकीभूताः शब्दब्रह्मणो जीवोऽभिमानी, योऽहमिति मन्यते । स्वरा अकारादयः षोडश, स देहः। उदाहृत इति प्रमाणम्। शषसहा ऊष्माणः, ते चत्वार इन्द्रियाणि । आहु—

---

प्रकाशः।

+ तस्येत्यत्र । न्यूनाधिकभावमिति । अक्षरकृतं नहि(म)कृतं न न्यूनाधिकभावम्। चतुष्पदा इति । यद्यपि पङ्क्तिः(?)पदोच्यते, तथापि निरुक्ते पङ्क्तिः पञ्चपदा त्रिष्टुप् स्तोभत्युत्तरपदा। याश्चैस्तोभत्यात्रिष्टुभस्त्रिष्टुप्त्वमिति विज्ञायते इति ब्राह्मणोपन्यासेन पञ्चमपदस्य स्तोममात्रत्वाच्चतुष्पदा । गायत्री तु गृहस्थानां त्रिपदाऽपि संन्यासिनां चतुष्पदेति बृहदारण्यके सिद्धम् । तस्मात् सर्वाश्चतुष्पदा इत्यर्थः । सप्ताक्षरपादेति । सर्वापेक्षा(क्ष)या स्वल्पा । सोमाहरणादिति । 'तृतीयस्यामितो दिवं सोम आसीत्तं गायत्र्याहरत्' इति श्रुतेस्तथेत्यर्थः । अल्पाक्षरेति। पङ्क्त्याद्यपेक्षयाऽल्पाक्षरा । जगत्या इत्यादि । जगत्यां बह्वक्षरत्वम्, त्रिष्टुभि पङ्क्तावनुष्टुभि च ततो न्यूनाक्षरत्वं हेतुर्यथायथं बोध्यः। न चाऽक्षरविचार उष्णिहोऽधिकापि गायत्री पादविचारे न्यूनेति सा पूर्वं कुतो नोक्तेत्यत आहुः—त्वगित्यादि । प्रथमत इति । गायत्र्याः पूर्वम् ।

रित्यपि प्रमाणम् । अन्तस्था यरलवा, तस्य देहस्य बलम् । एवं चतुर्मूर्तेः स्वरूपमुक्तम् । बाह्यक्रियामुद्राचादिरूपां वदन् विहारेण तेषामुत्पत्तिमप्याह कार्यकारणयोरभेदत्वाय—स्वराः सप्तविहारेणेति । स्वराः षड्जादयः सप्त । विहारेण गतिलीलया । प्रजापतेरिति । शब्दब्रह्मणोऽस्य चाऽभेदो निरूपितः ॥ ४५ ॥

शब्दब्रह्मभावत्वेन वा जगज्जनकत्वम्, तदेवोपपादयन्नुपसंहरति—

**शब्दब्रह्मात्मनस्तस्य व्यक्ताव्यक्तात्मनः परम् ।**
**विभाति ब्रह्म विततं नानाशक्त्युपबृंहितम् ॥ ४६ ॥**

शब्दब्रह्मात्मन इति । ननु शब्दब्रह्मणः कथं जगज्जनकत्वम्, शब्दार्थयोर्द्वैरूप्यात्, ब्रह्मणैव अर्थात्मकस्य जगत उत्पादितत्वात् । तत्राऽऽह—विभाति ब्रह्मेति । अर्थात्मकं जगदुत्पादितमपि, नामव्यतिरेकेण न प्रकाशत इति विभातीत्युक्तम् । इदं सर्वं जगत् विततं ब्रह्मैव विभाति । बृहत्त्वात् बृंहणत्वाच्च ब्रह्म । बृहत्त्वाद्विततम्, बृंहणत्वान्नानाशक्त्युपबृंहितम् । शब्दब्रह्मव्यतिरेकेण परब्रह्मणः प्रकाशनं न भवति । शब्दब्रह्मणैव परब्रह्म प्रकाश्यते स्वप्रकाशमपि । स्वप्रकाशत्वमपि तस्य वेदेनैवोक्तम् । 'अनुपलब्धे तत् प्रमाणम्' इति न्यायात् । 'पराञ्चि खानि' इत्यादिवाक्यादनुपलब्धत्वम् । स्वप्रकाशमपि सौरं तेजः दिवाभीतेन न दृश्यते । न च व्यवधानं किञ्चिदपेक्ष्यते, इन्द्रियाणामेवाऽग्राहकत्वात् । नह्याकाशाग्रहणे, चक्षुषा रसाग्रहणे वा,

प्रकाशः।

शब्देत्यत्र । द्वैरूप्यादिति । वैजात्यात् । उत्पादितत्वादिति । सिद्धत्वादिति । तथा च, स्वस्य वैजात्यमुपादानत्वबाधकम्, कार्यस्याऽन्यथासिद्धत्वं च निमित्तत्वबाधकम्; अतः कथं तस्य जनकत्वमित्यर्थः । उभयदोषसमाधानपूर्वकं शब्दब्रह्मणः कर्तृत्वमुपपादयन्ति—अर्थेत्यादि । तथा च, 'विश्वं वै ब्रह्मतन्मात्रम्' इति पूर्वमुक्तत्वेनाऽत्रत्यायाः प्रक्रियायाः श्रौतसमानाधिकरणत्वादत्रयां प्रकाशनस्यैव जननपदार्थत्वात्, तस्य च रूपनामभेदेन द्वैविध्यात्, यथा रूपेण प्रकाशनं प्राजापत्यात्मना, तथा नाम्ना प्रकाशनं वेदात्मनेति विभानकर्तृत्वमुखेन तस्याऽपि जगज्जनकत्वमुक्तमित्यर्थः । ननु प्रकाशकत्वेनैव जनकत्वमत्र विवक्षितमित्यत्र किं गमकमित्यत आहुः—इदमित्यादि । तथा च, विततत्वविविधशक्तियुक्तत्वरूपब्रह्मधर्मवत्तयाऽस्य ब्रह्मत्वेनाऽपि प्रकाशनं क्रियते, न तु नाममात्रेण; अतस्तथैव विवक्षितमित्यर्थः । ननु रूपेणेव नाम्नाऽप्येवं प्रकाशनं ब्रह्मणाऽपि सम्भवतीति किं शब्दब्रह्मात्मकतयेत्यत आहुः—शब्दब्रह्मेत्यादि । ननु शब्दब्रह्मणो नाम्ना जगत्प्रकाशकत्वमेव युक्तम्, न तु परब्रह्मप्रकाशकत्वमपि, तस्य स्वप्रकाशत्वादित्यत आहुः—स्वप्रकाशत्वमित्यादि । ननु तावता ब्रह्मधर्मप्रकाशत्वमेव वेदस्य सिद्धम्, न तु धर्मिप्रकाशकत्वमपीत्यत आहुः—अनुपलब्ध इत्यादि । तथा(च)जैमिनिना औत्पत्तिकसूत्रे वेदात्मकस्य शब्दस्य अनुपलब्धेऽर्थे प्रामाण्यमुक्तम् । यदि ब्रह्म स्वत एवोपलब्धं स्यात्तद्बोधकवेदस्य प्रामाण्यमेव हीयेत, अतो धर्मिप्रकाशकत्वमपि तस्य मन्तव्यमित्यर्थः । ननु स्वप्रकाशकत्वश्रुतिविरोधे जैमिनीयस्य 'गुणे त्वन्यायकल्पना' इति न्यायेन धर्ममात्रबोधकश्रुतिपरत्वं वक्तव्यम्, न तु धर्मिपरत्वमित्याकाङ्क्षायामाहुः—पराञ्चीत्यादि । तथा च, तदपि श्रुत्यनुरोधेनैवान्यथाकल्पनं न युक्तमित्यर्थः । ननु एवमनुपलब्धत्वे स्वप्रकाशत्वहानिस्तद्बोधकश्रुतिविरोधश्चेत्यत आहुः—स्वप्रकाशमित्यादि । अपेक्ष्यत इति । अदर्शनायेमपेक्ष्यते । तथा चाऽस्मान् प्रत्यप्रकाशत्वेऽपि तस्य स्वप्रकाशत्वान्यथाभावात् श्रुतिविरोध इत्यर्थः । दिवाभीतानां दिवा तिमिरोपजननादन्ति व्यवधानमित्या(दि)शङ्कायोदाहरणान्तरमाहुः—न हीत्यादि । आकाशस्याऽपि प्रमेयत्वाद्ग्रहणार्थं चार (?) 'उद्घाटनगन्धनिमाशङ्क्य ननोऽप्यन्यदाहुः रसाग्रहण इति । तथा च, व्यवधा.

व्यवधायकमस्ति । यदपि 'अन्यद्युष्माकमन्तरं बभूव' इति व्यवधानमुक्तम्, तदपि स्वप्रकाशस्य सर्वात्मकस्य मनसि चक्षुषि च घटे प्रकाशमानस्य व्यवधायकं न भवति । अथ यदि संयुक्तेऽपि तत् व्यवधायकमिति मन्यते, तदा चक्षुषामग्रहणमेव श्रौतमस्तु, किं व्यवधानेन । 'अन्यद्युष्माकम्' इति तु भोगेच्छादिकं जातमेव निन्दार्थमनूद्यते, न तु भित्त्यादिवत् व्यवधायकम् । यदपि मायिकं पूर्वमुक्तम्, तदप्यग्रहणादेव । हेतुत्वेन व्यपदेशोऽपि आत्मव्यतिरिक्तस्य सृष्टिपक्षे उपयुज्यते, सृष्टिभेदानां निरूपणात् । अतः शब्देनैव ब्रह्मणो भानम् । 'यतो वाचो निवर्तन्ते' इति तु इन्द्रियरूपा वाक्, लौकिकश्च शब्दः, लौकिकं च मनः, अन्यथा 'तन्त्वौपनिषदं पुरुषं पृच्छामि' 'मनसैवैतदाप्तव्यम्' इति विरुद्धमापद्येत । माहात्म्यार्थं वा द्र-

---

प्रकाशः

नाभावेऽपि ग्राहकासामर्थ्यादप्रकाशनमेतेषु प्रकाशमानस्याऽपि दृष्टम्, अत उभयमपि समञ्जसमित्यर्थः । ननु 'न तं विदाथ' इति मन्त्रानुरोधेन व्यवधानादेवाऽग्रहणमुररीकार्यम्, तावताऽपि स्वप्रकाशत्वानुपल(ब्ध)त्वयोः सिद्धेः । अतः प्रकाशनाच्च व्यवधानाभावार्थमेव यतनीयम्, न तु शब्दब्रह्म प्रकाशनं करिष्यतीति, इति तूष्णीं स्थेयम् । अतः किं तस्य प्रकाश(क)त्वसाधनेनेत्यत आहुः—यदपीत्यादि । तदपीति । वाक्योक्तं व्यवधानमपि । तथा च, तस्मिन् मन्त्रे 'य इमा जजान' इति लिङ्गाज्जगत्कर्तृरूपस्यैव तद्व्यवधायकम्, न तूपादानरूपस्याऽपि; अतस्तद्ग्रहणाय शब्दब्रह्मणः प्रकाशकत्वसाधनमावश्यकमित्यर्थः । ननु तस्याऽस्य च वस्तुतो भेदाभावादत्रापि व्यवधायकं तदस्तु, तथा सति व्यर्थस्तत्साधनप्रयास इत्यत आहुः—अथेत्यादि । संयुक्त इति । चक्षुरादिसंयुक्ते । अग्रहणमिति । 'पराञ्चि खानि' इत्युक्तमग्रहणम् । तथा चाऽत्रापि व्यवधानाङ्गीकारे व्यवधानाग्रहणयोर्बाधकयोरुभयत्राऽऽपाते नाऽन्यतरवैयर्थ्यमतस्तदभावायोक्तव्यवस्थैवाऽऽदरणीयेत्यर्थः । ननु 'पराञ्चि' इति मन्त्रेऽप्यन्तरात्मेति पदादिन्द्रियाणां प्रत्यग्ग्रहणासामर्थ्यमेव बोध्यते, न तु संयुक्तग्रहणासामर्थ्यमिति न व्यवस्था वक्तुं शक्येत्यत आहुः—अन्यदित्यादि । इति तु 'ससर्जाऽग्रे' इत्यत्र जातं जीवाज्ञानभेदरूपं भोगेच्छादिकमन्यत्र सिद्धं निन्दार्थमनूद्यते, 'बभूव' इति पदात्, न तु भित्त्यादिवद्व्यवधायकत्वेन विधीयते । अतस्तस्याऽपीन्द्रियसामर्थ्यकौण्ठ्य एवोपक्षयादुक्तार्थं व्यवधायकत्वकल्पनमित्यर्थः । नन्वेवं सति सप्तमाध्याय एतच्छ्रुतिविचारे मायिकं स्वप्रच्छन्तरं व्यवधायकं यदुक्तम्, तस्य कथं सङ्गतिरित्याकाङ्क्षायामाहुः—यदपीत्यादि । अग्रहणादेवेति । व्यवधायकमिति शेषः । तथा च, पार्थक्येन व्यवधायकत्वाकल्पनात्सामर्थ्यकौण्ठ्य एवोपक्षयादनुवादकत्वादेव सङ्गतिरित्यर्थः । ननु 'बभूव' इतिवत् 'व्यतृणत्' इति भूतार्थप्रयोगस्योभयत्रापि तौल्याद्व्यवधायकस्येवेन्द्रियपराक्त्वस्याऽप्यनुवाद एवेति हेतुता कस्याऽपि न स्यात्, तथा सति यदिति हेतुत्वेन यो व्यपदेशः स विरुध्येते(ति)चेत् तत्राहुः—हेतुत्वेनेत्यादि । उपयुज्यत इति । सामर्थ्याभाव एवोपयुज्यते । तथा च, पृथग्घेतुत्वपक्षेऽन्यतरवैयर्थ्यात् परस्परोपकारकत्वमुभयोर्वक्तव्यम् । तत्रापि सूक्ष्मेक्षिकायां व्यवधानं प्रत्यसामर्थ्यस्य नोपकारकत्वम्, अपि त्वसामर्थ्यं प्रत्येव तस्योपकारकत्वम् । अत आत्मसृष्टिपक्षे अग्रहणादेवाऽज्ञानम्, व्यतिरिक्तसृष्टिपक्षे तु तदप्येतदुपकारकमित्युभयथाऽपि शब्दब्रह्मणैव तन्निवृत्तिरित्यर्थः । सिद्धमाहुः—अत इत्यादि । शब्दब्रह्मणः परमकाशकत्वे 'यतो वाचः' इत्यस्य वाक्यस्य विरोध इत्यत आहुः—यत इत्यादि । तथा च, तत्राऽर्थस्य भिन्नत्वान्न विरोध इत्यर्थः । अस्मिन् पक्षे 'शब्दोऽपि बोधकनिषेधतयाऽऽत्ममूलमर्थोक्तमाह' इति वाक्यविरोध(क) इत्यरुच्या पक्षान्तरमाहुः—माहात्म्यार्थं

यम्। उभयमपि शब्दब्रह्मण एव ज्ञायते। एतदेवाऽभिसन्धायाऽऽह—व्यक्ताव्यक्तात्मन इति। तस्य शब्दब्रह्मणो हृदयं क्वचिद्व्यक्तम्, क्वचिदव्यक्तम्, अन्यथा ब्रह्म स्पष्टतया ज्ञातं स्यात्। तथात्वे भगवत एव नियामकत्वम्। तदाह—परमिति। तत्र हेतुर्नानाशक्त्युपबृंहितमिति। अनेका: शक्तयो भगवति वर्तन्त इति तत्तदनुरोधेन तथा तथा वचनम्, अन्यथा तासां गुप्तशक्तीनां प्रकाशो न स्यात्। अतः प्रकाशनिषेधं न वदति, किन्तु गुप्तानां स्वरूपमाह। अतो ब्रह्मप्रकाशार्थं प्रवृत्तं शब्दब्रह्म तत्कार्यमपि प्रकाशयतीति। क्रियया प्रकाश्यते ब्रह्मणा, ज्ञानेन प्रकाश्यते वेदेनेति ॥ ४६ ॥

एवमाधिदैविकसृष्टिमुक्त्वा सात्त्विकीमाधिभौतिकीं सृष्टिमाह—

**ततोऽपरामुपादाय स सर्गाय मनो दधे।**
**ऋषीणां भूरिवीर्याणामपि सर्गमविस्तृतम् ॥ ४७ ॥**

ततोऽपरामुपादायेति। अपरां तनुमुपादाय अन्यादृशीं सृष्टिं कर्तुं मनो दधे। नन्वेतावतैव मरीच्यादिद्वारा सृष्टिर्भविष्यतीति किं प्रकारान्तरसृष्टचेत्याशङ्कयाऽऽह—ऋषीणामिति। यद्यपि भूरिवीर्याणि येषाम्, न हि मदपेक्षया ते वीर्यवन्तः, उत्पादिता वा पञ्चपाः; तैः किम्? तावता सर्गस्य विस्तारस्तु न भविष्यत्येव, प्रकारस्याऽनुत्पादितत्वात्। अतः प्रकारकरणार्थं शरीरान्तरेण कार्यं कर्तुं मनो दध इत्यर्थः ॥ ४७ ॥

'अशक्ये हरिरेवाऽस्ति' इति न्यायमाश्रित्य पूर्वं तपस्यल्पीयसि कृते प्रसन्नोऽपि भगवान् पुनस्तप आदिष्टवान्। तथाऽत्रापि, यद्यपि प्रकारः कर्त्तव्य इति निश्चितम्, तथापि कः प्रकारः कर्तव्य इति भूयश्चिन्तयामासेत्याह—

**ज्ञात्वा तद्धृदये भूयश्चिन्तयामास कौरव !।**
**अहो ! अद्भुतमेतन्मे व्यापृतस्याऽपि नित्यदा ॥**
**न ह्येधन्ते प्रजा नूनं दैवमत्र विघातकम् ॥ ४८ ॥**

ज्ञात्वेति। यस्मिन् स्वरूपे चिन्तिते उपायः कर्तव्य इति ज्ञातम्, पुनस्तदेव हृदये चिन्तयामास। कौरवेति आपाततो न कार्यान्निवृत्तिः कर्तव्या, किन्त्वादेहपातपर्यन्तं कार्यं कर्तव्यमिति; यथा कुरुणा कृतमितीममर्थं ज्ञापयति। तस्य चिन्तामेवाऽऽह—अहो इति। कुतोऽपि प्रकारः भगवदानुगुण्याभावे न सेत्स्यति, अन्यथा उत्पादितैरेव सर्वे सर्वकरणे जगत्पूरितमेव स्यात्। अहमेक एव यथा कृतवान्, तथा एतेऽपि मरीच्यादयो बीजरूपाः कुर्युः, तदेतावता सर्वमेव पूरितं भवेत्, अतः किञ्चिदस्ति प्रतिबन्धकम्। तच्चिन्तनेन ज्ञात्वा आश्चर्येणाऽऽह—अद्भुतमिति। य एव भगवान् सृष्ट्यर्थमाज्ञापितवान्, स एव प्रतिबध्नातीति। न च सहकार्यभावः शङ्कनीय इत्याह—व्यापृतस्याऽपि नित्यदेति। सर्वदा व्यापृतस्याऽपि

---

प्रकाशः।

**वा द्वयमिति।** तथा न, वेदेनाऽपि स्वसामर्थ्यानुसारेण बोध्यते, न त्विदमित्थमिति कार्त्स्न्येन बोधयितुं शक्यत इति माहात्म्यबोधनार्थं विरुद्धधर्माश्रयत्वरूपमाहात्म्यबोधनार्थं च विरुद्धं वाक्यद्वयमिति न तस्याऽपि विरोध इत्यर्थः। त(था)त्व इति। व्यक्ताव्यक्तहृदयत्वे। स्फुटमग्रिमम्।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे द्वादशाध्यायविवरणं सम्पूर्णम्।

मे प्रजाः, हि निश्चयेन, नैधन्ते वृद्धिं न प्राप्नुवन्ति । अतो दृष्टस्य प्रतिबन्धकस्याऽभावात् दैवमेव विघातकम् ॥ ४८ ॥

**एवं युक्तकृतस्तस्य दैवं चावेक्षतस्तदा ।**
**कस्य रूपमभूद् द्वेधा यत्कायमभिचक्षते ॥ ४९ ॥**

एवं निश्चित्य भगवदाज्ञां युक्तप्रकारेण कुर्वन् स्थितो भगवच्चिन्तनमेव कृतवान् । तदा तस्यैवं प्रकारेण युक्तकृतः, कदा भगवान् प्रसन्नो भविष्यतीति दैवं चाऽवेक्षतः, तस्याऽशक्तिं ज्ञात्वा, भगवानेव कस्य ब्रह्मणः, रूपं द्विधा कृतवान् । तदा तस्य रूपं द्वेधा अभूत् । तदा तच्छकलद्वयं कायमभिचक्षते लोकाः । का इयम्, कोऽयमिति वक्तव्ये, एकस्य विशेष्यम्, अपरस्य विशेषणं लोपयित्वा द्वयमेकीकृत्य कायमित्याहुः । अनेन स्त्री स्वतो विशेष्यरहिता, पुरुषश्च विशेषणरहितः । अत उभयं मिलितं कायशब्दवाच्यं भवति ॥ ४९ ॥

ततः किं जातमित्यत आह—

**ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत ।**
**यस्तु तत्र पुमान्सोऽभून्मनुः स्वायंभुवः स्वराट् ॥ ५० ॥**
**स्त्री याऽऽसीच्छतरूपाख्या महिष्यस्य महात्मनः ।**
**तदा मिथुनधर्मेण प्रजा ह्येधाम्बभूविरे ॥ ५१ ॥**

**ताभ्यामिति** । रूपस्य विभागाभ्यां शकलाभ्याम् । **ताभ्यामिति** भगवत्कृताभ्याम्, अन्यथा कार्यनाशे शकलाभ्यां न किञ्चिदुत्पद्येत । अतो भगवत्कृताभ्यां शकलाभ्यामेकं **मिथुनं समपद्यत** । मिथुनमेकं कार्यम्, अन्यथा पुरुषोऽर्द्धखण्ड एव, ' अर्द्धबृगलम् ' इति श्रुतेः । **समपद्यतेति** । भगवत्कृतमनायासेनैव जातमिति, ततोऽप्यग्रे कार्यं भविष्यतीति ज्ञापितम् । तद्युगलद्वयं नाम्ना निर्दिशति **यस्त्विति** । तयोर्मध्ये यः पुमान् स मनुः, मननाज्जात इति । या सृष्टिप्रकाररूपा, सा स्त्री । शतरूपेत्याख्या नाम यस्याः सा आसीदिति । मनुशब्दो यौगिक इति स्वायंभुव इत्युक्तम् । स्वराडिति भगवदंशाज्जायत इति ज्ञापयति, ऐश्वर्यादिगुणवत्त्वात् । अतस्तेनापि सृष्टिः भविष्यतीति भावः । शतानि रूपाणि यस्या इति नित्यनूतनत्वेन मनोभोगाधिक्यं सृष्ट्याधिक्यं च सूच्यते । महिषी सर्वकामदोग्ध्री । निरूपणसमये भगवदीयत्वेन भगवति प्रविष्टत्वात्, यत्र यत्र भगवांस्तत्र तत्र स इति, अस्येत्युक्तम् । इममेवार्थं ज्ञापयति—महात्मन इति । महान् भगवान् आत्मा यस्य । तस्य मिथुनस्य बीजत्वं स्थापयति—तदेति । मिथुनं मिथुनीभावः, स एव धर्म उपायः । तदा आनन्दे निविष्टाः प्रजा एधाम्बभूविरे । इममेवार्थम् ' आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते ' इति हिशब्दः सूचयति । अत्रापि हिशब्दस्तमेवार्थमाह । स्वत एव एधाम्बभूविरे, नाऽऽज्ञादिकमपि तत्राऽपेक्षितम् ॥ ५० ॥ ५१ ॥

एवं मैथुनस्य प्रकारत्वमुपपाद्य प्रथमे तं प्रकारं योजयति—

**स चापि शतरूपायां पञ्चाऽपत्यान्यजीजनत् ।**
**प्रियव्रतोत्तानपादौ तिस्रः कन्याश्च भारत ! ।**

आकूतिर्देवहूतिश्च प्रसूतिरिति सत्तम ! ॥ ५२ ॥

स चाऽपीति। स बीजभूतोऽपि, चकाराद्भगवानपि। अतस्तत्पुत्रयोर्द्विरूपत्वम्। मनुप्राधान्ये उत्तानपान्मुख्यः, स विसर्गोपयोगी। भगवत्प्राधान्ये प्रियव्रतः, स स्थानोपयोगी। कन्या चैका। भगवदीया द्वितीया, अतस्तस्याः प्राधान्यम्, परं सर्गोपयोगित्वादत्रैव कथनम्। तृतीया कन्या स्त्रीप्रार्थनया। एवं समुदायेन पञ्चाऽपत्यानि। शतरूपायामिति तस्या अधिकरणत्वमेव, न तु जनकत्वम्। तेन पञ्चाऽपत्यान्यपि न प्राकृतानीति ज्ञापितम्। प्रियव्रतोत्तानपादौ पुत्रौ। पुरुषैः सह स्त्रीणां नाम न ग्राह्यमिति तिस्रः कन्या इत्युक्तम्। भारतेति मोहाभावाय। स्त्रीप्रसङ्गोऽपि मोहहेतुः। तासां नामानि निर्दिशति—आकूतिरिति। इतिशब्दो नामान्तरव्युदासार्थः। सत्तमेति पुनः संबोधनं पूर्ववत् पुरुषसंबन्धकथनात् ॥ ५२ ॥

तासां विनियोगमाह—

आकूतिं रुचये प्रादात्कर्दमाय तु मध्यमाम्।
दक्षायाऽदात्प्रसूतिं च यत आपूरितं जगत् ॥ ५३ ॥

आकूतिमिति। रुचिर्ब्रह्मपुत्रः कल्पान्तरोत्पन्नः। कर्दमाय त्विति तु शब्दः स्वापत्यतां वारयति। कर्दमोऽपिच्छायया जातः, छायायां काल एवोत्पादको भगवद्रूपः। अतो नाऽधर्मसंबन्धः केनाप्यंशेन। मध्यमामिति महत्या नाम पुनः पुनर्न ग्राह्यमिति सूचयति। प्रसूतिरिति नाम्ना स्त्रीप्राधान्यादुत्पन्ना देयैवेति। गुणान्तराभावेऽपि चातुर्यमेव दक्षेऽस्ति। अङ्गुष्ठाज्जात इति भगवज्जातत्वम् 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः' इति श्रुतेः। अतः प्रसूतिं दक्षायाऽदादिति। प्रसूतिं चाऽदादिति चकारसंबन्धः, न तु दक्षाय प्रसूतिं चेति। ततो यज्जातं तदाह—यत आपूरितं जगदिति। महाभूतानां विस्तारेण यथा जगत् पूर्यते तथा पञ्चभिरेव जगत्पूरितमिति ॥ ५३ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां
तृतीयस्कन्धे द्वादशाध्यायविवरणम्।

---

१ पुरुषै. ब

# त्रयोदशाध्यायविवरणम् ।

---

एवं द्वादशधा सर्गस्त्रिविधो ह्युपपादितः ।
तस्य कारणरूपं हि यादृशं तदिहोच्यते ॥ १ ॥
सर्ववेदार्थरूपो हि वराह इति विश्रुतः ।
स एव कारणं सृष्टौ वैदिक्यामिति निश्चयः ॥ २ ॥
अन्यथा प्राकृती सृष्टिः, स्वप्नतुल्यैव सा भवेत् ।
अतो वैदिकसृष्टित्वज्ञापनाय वराहता ॥ ३ ॥
भूमिस्तु देवयजनं रोमभिर्बर्हिषो भवः ।
पात्राणि सर्वावयवैस्तेन यज्ञस्त्रयोदशे ॥ ४ ॥
सृष्ट्यर्थं, तस्य भवनमित्यर्थं, संगतिस्तथा ।
ब्रह्मणा सह संवादो मनोः कल्पान्तरे पुनः ॥ ५ ॥

---

प्रकाशः।

अथ त्रयोदशाध्यायं विवरिषवः सङ्गतिं वक्तुं पूर्वेपामर्थमनुवदन्तः प्रस्तुताध्यायार्थमाहुः—एवमित्यादि । तथा च, हेतुताऽत्र सङ्गतिरित्यर्थः । ननु वराहरूपस्य कथं सर्गकारणतेत्यत आहुः—सर्वेत्यादि । तथा च, सर्ववेदार्थरूपत्वेन कारणतेत्यर्थः । नन्वेवंरूपेण कुतः कारणतेत्यत आहुः—अन्यथेत्यादि । अन्यथेति । यद्युपादानत्वेन रूपेण भगवान् सर्ववेदार्थरूपो न प्रविशेत् । प्राकृतीति हेतुगर्भं विशेषणम् । ननु वराहस्य कथं सर्ववेदार्थरूपतेत्यत आहुः—भूमिरित्यादि । तथा च, यज्ञरूपत्वाद्वेदार्थरूपतेत्यर्थः । ननु भवत्वेवम्, तथापि वराहप्राकट्यकथनस्य किं प्रयोजनमित्यत आहुः—सृष्ट्यर्थमित्यादि । सृष्ट्यर्थमिति । यज्ञोत्पत्त्यर्थम् । तथा च, यदि वराहरूपेण भगवान्न प्रकटो भवेत्, तदा यज्ञप्रवृत्तिर्न स्यात्, अत इत्यर्थमेतदर्थं तस्य भवनम्, यतः सङ्गतिः कार्येण कार्यस्य सम्बन्धस्तथा अन्तःप्रवेशरूपः । अत इदं प्राकट्यप्रयोजनमित्यर्थः । नन्वस्त्वेवं शास्त्रसङ्गतिः, तथा कथासंदर्भस्तु न सङ्गच्छते । तथा हि, एकादशाध्यायान्ते 'पूर्वः परार्धोऽपक्रान्तो द्वितीयोऽद्य प्रवर्तते ।' इत्यत्र अद्येति पदात् द्वितीयपरार्धस्य प्रथमदिवसोऽयं महाकल्प इति ज्ञायते । स च वराहकल्पात्मा, 'अयं तु कल्पः' इत्यत्र तथा कथनात् । अत्र च चतुर्दशलोकसृष्टिर्वक्तव्या, सा तु नोक्ता; 'एवं व्यभाङ्क्षीदुरुधा' इति तु पद्मकल्पीयम्; अतो द्वादशाध्यायीया सृष्टिः किमाधारा? अथ तदर्थापत्त्या आधाराः कल्प्याः, तदा तेषां विद्यमानत्वाद्भूमज्जनबोधको मनुब्रह्मसंवादोऽनुपपन्नः । किञ्च, हिरण्याक्षयुद्धमपि तथा । स हि मनुपुत्रीवंशे उत्पन्नः । मनुस्त्विदानीमाज्ञया अपत्यान्युत्पादयिष्यतीति तदाद्युत्पत्तेरेवाऽभावेन युद्धस्य दूरनिरस्तत्वात् । इत्याशङ्काद्वयं निराकुर्वन्ति—ब्रह्मणेत्यादि । पूर्वकल्पे उत्पन्नस्य तस्यां पत्न्यामपत्यान्युत्पाद्य, स्वाधिकारं सर्वं निर्वर्त्य, रात्रौ सत्यलोके स्थितस्य सभार्यस्य सापत्यस्य मनोः पुनः कल्पान्तरे प्रातर्ब्रह्मणा संवादः, द्वितीयकल्पे स्वच्छुश्रूषा किं पूर्ववदेव कार्या, उताऽन्यथेत्याशयेन विज्ञापनम्, ब्रह्मणश्च पूर्ववदेवेत्याज्ञापनमित्येतद्रूपः, श्रुतार्थापत्त्यैव प्रमातव्य इत्यर्थः । न चाऽपत्योत्पादनाज्ञाविरोध इति वाच्यम्, 'सदृशान्यात्मनो गुणैः'

रसातलान्तपर्यन्तं पृथिवी पूर्वमुद्धृता ।
पश्चाद्गुल्या पञ्च लोका उद्धृता अतलादयः ॥ ६ ॥
यज्ञभूमित्वसिद्ध्यर्थं पुष्करे प्रथनं ततः ।
एषा स्थितिः पूर्वकल्पे, रसातलगता ततः ॥ ७ ॥
प्रजापतेरुद्धृतत्वान्निराधारा जलं विशेत् ।
वराहकल्पे प्रथमे सर्गोत्पत्तिर्विनिश्चिता ॥ ८ ॥
ततस्तद्भेदकल्पेषु नष्टोत्पत्तिर्न सर्वतः ।
प्रक्रियान्तरभावेन तत्र सृष्टिरिहोच्यते ॥ ९ ॥
हिरण्याक्षादिदैत्यानां रसातलगता स्थितिः ।
अपेक्षितानामर्थानां भिन्नकल्पेऽपि संभवे ॥ १० ॥
लीलाकथनसिद्ध्यर्थमेकरूपेण वर्ण्यते ।
अतो नाऽत्र विरोधोऽस्ति केनाऽप्यंशेन निश्चितम् ॥ ११ ॥

---

प्रकाशः।

इत्यपत्यविशेषणेनोत्तमादिभिस्त्रिभिर्मन्वन्तराधिपैस्तत्सिद्ध्या विरोधाभावात्। मार्कण्डेयरौचस्य(?)तिरस्कारस्य कण्ठत उक्तत्वेन तद्वदेव तस्मिन्कल्पेऽपि मन्वन्तरान्तरस्याऽर्थापत्त्यैव शक्यकल्पनत्वादिति। अर्थापत्त्यैव पूर्वकल्पीयलोकादिव्यवस्था सिध्यतीति ता व्युत्पादयन्ति—रसातलेत्यादिपदोनाभ्याम्। अत्र पञ्चलोकोद्धारः पुराणान्तरात् श्रुत्यन्तराद्वा बोध्यः। पुष्करपर्णे प्रथनं तु तैत्तिरीये श्रावितम्। 'स वराहो रूपं कृत्वोपन्य(?)मज्जत्। तत्पुष्करपर्णेऽप्रथयत्। यदप्रथयत्, तत्पृथिव्यै पृथिवीत्वम्' इति। कल्पान्तरीयव्यवस्थामाहुः—रसातलेत्यादि। ततस्तस्य कल्पस्य प्रलये, प्रजापतेः—प्रजापतिना यस्य पर्णे प्रथिता, तेन पुष्करेण पूर्वकल्पे लोककरणे तत्सारस्योद्धृतत्वात्, तस्य निःसारत्वेन स्थापनाशक्त्या, निराधारा सती जलं विशेत्। हेतुमति लिङ्। अविशदित्यर्थात्। तेन यत् सिद्धं तदाहुः—वराहेत्यादि। तथा च 'प्लाव्यमाना रसां गता' इति वाक्यार्थापत्त्या सर्वोत्पत्तिर्विशेषेण निश्चिता। ततस्तदनन्तरं तद्भेदकल्पेषु तदीयावान्तरकल्पेष्वेवमुच्यत इत्यादि। अत्रायमर्थः सम्पद्यते—पद्मकल्पप्रलये सर्वनाशे जाते, वराहकल्पारम्भे, पातालम्, रसातलम्, सत्यलोकं च सारवता कमलपर्णेन निर्माय, शीर्णकमलांशजातां मृदं पञ्चाङ्गुलिभिरुद्धृत्य, तया अतलादीन्निर्माय, शिष्टां च मृदं यज्ञभूमित्वार्थं वराहरूपेण पुष्करपर्णे प्रथयित्वा स्वयं सत्यलोकस्थितोऽन्यान् स्वरादिलोकान् कृत्वा, ततोऽविद्यादिमन्वन्तान् गृहीत्वा तत्र सुप्तः। तदा तस्य कल्पस्य प्रलये मनुकश्यपादीनां यथायोग्यमुपरिस्थितिः, दित्यादीनां रसायाम्, अन्येषां तु नाशः। ततः आदिवराहकल्पीयगात्रनिर्गमो वराहकल्पमात्रकारभूमिमज्जनाज्ञानादाज्ञापनम्, मनुषु स्वायम्भुवाधिकारस्यैव प्राथम्यमिति नियमस्य 'चाक्षुषेऽधिमन्वन्तरे' इत्य(त्र)निरस्ततत्वेन मनोस्तु सार्यं समागमान्मज्जनज्ञानमस्तीति तद्विज्ञापनम्, तदाधीनता, आदिवराहप्राकट्यम्, ततो रसाया भूम्यानयने तत्र वर्तमानेन हिरण्याक्षेण युद्धमिति विरोधो न कोऽपि। एवं भिन्नकल्पीयानामेकभावेन कथनं पुराणत्वात्, 'श्रुतौ स्मृतौ पुराणे च कल्पत्रयमुदीरितं। एवं भव्य भवत्येव संशयं मा वृथा कृथाः' इत्युमां प्रति काशीखण्डे शिववाक्यात्। तस्याऽत्र कथने प्रयोजनमाहुः—अपेक्षितानामित्यादिसार्धेन। एवं मैत्रेयेण गणमध्ये शुकोक्तौ मनुकथागति-

एवं पूर्वाध्यायान्ते सृष्टिनिरूपणार्थं मनुरुक्त । तस्य कथं सृष्टिहेतुत्वमिति विचार कर्तव्यः । यद्या थिर्दैनिको देवस्तदर्थं सम्भविष्यति । कामादयश्चेत्मनस्त्वास्तस्मात्सृष्टिस्तदा भवेत् ॥ १ ॥ तत्रापि काम जनितो दोषश्चेन्न भविष्यति । अतो द्वितीयसृष्टयर्थं-मुपोद्घातद्वय स्मृतम् ॥ २ ॥ प्रथमेऽप्यत्र भावेन वर्जिमेतद्द्वय मतम् । कारणद्वितय लोके भगवान् जीव एव च ॥ ३ ॥ अतो मनो सृष्टिहेतुत्व सिद्ध्यर्थं सर्गद्वयमध्ये तस्य स्वरूप निरूप्यते । × इद चरित्र भगवदीयमिति ज्ञापयितु मस्य दोषपरिहारार्थं विदुरमुखेन निर्णय वदन तत्प्रसङ्गमेव निरूपयति—

## श्रीशुक उवाच ।

**निशम्य वाचं वदतो मुनेः पुण्यतमां नृप ! ।**
**भूयः पप्रच्छ कौरव्यो वासुदेवकथादृतः ॥ १ ॥**

निशम्येति । वदतो मुनेर्वाचं निशम्य । मुनिर्मननेन यद्भावितम्, भगवदाज्ञया प्रकटीकरणार्थमागतम्, तदेव वदतीति तद्विस्तारस्तेनावश्य कर्तव्य इत्यभिप्रेत्य भूयः पप्रच्छ । किञ्च, पुण्यतमां वाच स्वाधिकारप्रवृत्तिक्रियारूपाम् । नृपेति सबोधनं राज्ञ , कथाश्रवण राज्ञा सुखकरमिति ज्ञापकम् । विदुरस्य कौरव्येति विशेषण दृढकर्तृत्वख्यापकम् । वासुदेवकथादृत इति प्रसङ्गादपि वासुदेवकथा कथयिष्यतीति, राज चरित्रप्रश्न , न तु राजभावेन ॥ १ ॥

तस्य कार्यं चरित्र च श्रोतव्यत्व च रूप्यते श्लोकत्रयेण, तत्र प्रथमं तस्य पूर्वस्थितिमनूद्य कार्यं पृच्छति—

## विदुर उवाच ।

**स च स्वायंभुवः सम्राट् प्रियः पुत्रः स्वयंभुवः ।**
**प्रतिलभ्य प्रियां पत्नीं किं चकार ततो मुने ! ॥ २ ॥**

स चेति । द्विरूपत्व ज्ञातमिति ख्यापनार्थं चकार । स्वायंभुवः सम्राडिति उभयानुवाद । अत एव स्वयभुव पुत्रो भगवदीय इति । तस्यैव प्रियश्च । पूर्वं स्वायभुवत्वमनूद्य तस्य भगवदीयत्व विहितम्, तेन भगवदीयत्व मुख्यम् । अतश्चरित्रश्रवणे हेतुत्वेन प्रथममुक्त , पश्चात्सृष्टिहेतुत्वार्थं भगवदीयत्वमनूद्य ब्रह्मण पुत्रत्वं विधीयते । अतो न पौनरुक्त्यम् । प्रियां पत्नीमित्यत्रापि द्विरूपता । भगवदीयत्वात् प्रियात्वम्, पतनात्पत्नीत्वमिति । प्रतिलभ्य पुनःप्राप्ति , कल्पान्तरेऽपि तद्भावेनैव प्राप्तत्वात् । उभय मिलित्वा किं चकारेति प्रश्नः । ननु मेलनमेव सुखात्मकमिति न किञ्चित्करिष्यतीत्याशङ्क्य तत इत्युक्तम् । मुने इति सबोधनं तस्य परिज्ञानार्थम् । कथ स सृष्टिं कृतवानिति प्रश्नः ॥ २ ॥

---

प्रकाशः

माहु —एवमित्यादि । विचारश्चिन्तोपोद्घातरूपा । तस्याऽऽकारमाहु —यदीया (त्या) द्वित्रयेण । द्वयमिति । भगवत्प्रादुर्भावो निर्दोषकामादिप्राकट्य चेति द्वयम् । तत्रापि द्वितीये हेतुद्वयम् । भगवत्प्रादुर्भावे सेवार्थ सेवकावश्यकत्वम्, फलत कर्मादिनाशस्य सेवकोपत्यानुवृत्त्यं चेति । अत्रेति । सर्ग । भावेनेति । कारणत्वेन । तदेव स्फुटीकुर्वन्ति—कारणेत्यादि । अत इति । भगवत्प्रादुर्भावानुरूप्यात्जीवत्वाच्च ।

× निशम्येत्यत्र । इदमिति । मिथुनीभावरूपम् । स्वाधिकारेति । राज्याधिकारेत्यर्थ ।

---

१ कारव्यान ॥

चरित्रं पृच्छति—

**चरितं तस्य राजर्षेरादिराजस्य सत्तम!।**
**ब्रूहि मे श्रद्दधानाय विष्वक्सेनाश्रयो ह्यसौ ॥ ३ ॥**

**चरितमिति** । तस्येति भगवदीयत्वं चरित्रश्रवणे हेतुः । **राजर्षेरिति** धर्महेतुत्वम् । **सत्तमेति** मिथुनवार्तया क्षोभाभावात् चरित्रं वक्तव्यमेवेति निर्द्धारितम् । कथने हेतुः—**श्रद्दधानायेति** । श्रद्धायां हेतुः—**विष्वक्सेनाश्रय इति** । तत्रापि हेतुः—**असाविति** । भगवत उत्पन्न एव भगवदाश्रयो भवति, आश्रित एव भगवदीयचरित्रे श्रद्दधानो भवति ॥ ३ ॥

* भगवदीयानामपि चरित्रं श्रोतव्यम् । निराश्रयं चरित्रं स्वस्याश्रयत्वं न संपादयति, ततो न स्थिरं भवेत् । अतो महता कष्टेन श्रुतमपि भगवच्चरित्रमस्थिरत्वान्न फलपर्यवसायीति भगवदीयानां चरित्रं श्रोतव्यम् । एतदेवाऽऽह—

**श्रुतस्य पुंसां सुचिरश्रमस्य नन्वञ्जसा सूरिभिरीडितोऽर्थः ।**
**तत्तद्गुणानुश्रवणं मुकुन्दपादारविन्दं हृदयेषु येषाम् ॥ ४ ॥**

**श्रुतस्येति** । **नन्विति** कोमलसंबोधनेन अनुभवोऽत्र प्रमाणमिति सूचितम् । श्रुतस्य भगवद्गुणानां श्रवणस्य, अग्रे वक्ष्यमाण एव, अर्थः प्रयोजनं भवतीति **सूरिभिरीडितः** । अध्ययनादिना बुद्धिवैशद्यहेतुना यः कश्चन पदार्थः श्रुतस्तस्य वा फलमाग्रिमवार्ताविशदा बुद्धिर्भगवद्गुणानां स्थित्यर्थे । पुष्कलापि बुद्धिरनेकगुणानां ग्रहणार्थे । महता श्रमेण श्रवणस्य ग्राहकत्वमपि भगवदर्थमेव । भगवदीया गुणाः श्रुताः स्थिराः फलपर्यवसायिनो भवन्ते । तत्र स्थैर्यं भगवदीयचरित्रहेतुकमिति प्रथमतः श्रुतं चरित्रं स्वस्थित्यर्थं भगवदीयचरित्रश्रवणे रुचिमुत्पादयति, अतो भगवच्चरित्रस्याऽपि भगवदीयचरित्रश्रवणं फलम् । सुष्ठु चिरं श्रमो यस्मिन् । **अञ्जसा** सामस्त्येन । सूरयो हि साधनमेव स्तुवन्ति, न फलम्; साधनाधीनत्वात् । तमर्थमाह—**तत्तद्गुणानुश्रवणमिति** । येन येन गुणेन भगवद्भक्तसंबन्धिना भगवच्चरणारविन्दं तेषां हृदये तिष्ठति, स तदीयो गुणो भगवच्चरणारविन्दस्थापकः श्रवणस्य फलम् । पूर्वश्रवणस्य तत्तद्गुणानुश्रवणं फलमिति सजातीयत्वान्न विरोधः । भगवदीया एव गुणा भक्तेषु स्थितास्तथा भवन्तीति न विरोधः । फलमुखेन गुणानां

---

॥ प्रकाशः ॥

* **श्रुतस्येत्यत्र** । श्रोतव्यत्वं व्युत्पादयन्ति—**भगवदीयानामित्यादि** । तत्र क्तप्रत्ययस्य भावे कर्मणि चाऽनुशिष्टत्वाच्छ्रुतपदेन श्रवणं तद्विषयश्चोच्यत इति द्वयं क्रमेणाऽऽहुः—**श्रुतस्येत्यादि अध्ययनेत्यादि** च । कथमीडित इत्याकाङ्क्षायां श्रुतस्येत्यादिपदार्थविचारेण प्रकारमाहुः—**आग्रिमेत्यादि** । **अग्रिमवार्ताविशदेति** । अध्ययनस्थानापन्ना या प्राथमिकी भगवद्वार्ता, तया निर्मला । श्रुतपदस्य वेदाद्यध्ययनवाचकत्वमङ्गीकृत्य तज्जनितबुद्धेः फलमाहुः—**पुष्कलाऽपीत्यादि** । **पुष्कलेति** । अध्ययनादिना प्रौढा । श्रमस्य सप्रयोजनस्याऽपि प्रयोजनमाहुः—**महतेत्यादि** । **ग्राहकत्वमिति** । शब्दनिश्चयजनकत्वम् । नन्वेवं सर्वैः प्रकारैः श्रुतादीनां भगवदर्थत्वे भगवदीयानां चरित्रस्य कथं श्रोतव्यतेत्यत आहुः—**भगवदीयेत्यादि फलमित्यन्तम्** । तथा चाऽतः श्रोतव्यतेत्यर्थः । तादृशस्य तस्य साधनस्योत्कर्षं व्युत्पादयन्ति—**येनेत्यादि** । **तदीय इति** । भगवदीयनिष्ठः । **श्रवणस्येति** । तच्चरित्रश्रवणस्य । **पूर्वश्रवणस्येति** । भगवद्गुणश्रवणस्याऽसजातीयत्वं स्फुटीकुर्वन्ति—**भगवदीया इत्यादि** ।

निरूपणात् न गुणान्तरोद्भावनेन दूषणं शङ्कनीयम्। तस्माद्भगवच्चरणारविन्दस्थापका गुणाः श्रोतव्या इति मनोश्चरित्रस्य श्रोतव्यत्वम्। अनेन प्रियत्वादिकमपि तस्य सूचितम्॥ ४॥

एवं भगवच्चरित्रपरं श्रोतारमुपलभ्य संतुष्टो मैत्रेय इत्याह—

## श्रीशुक उवाच।

**इति ब्रुवाणं विदुरं विनीतं सहस्रशीर्ष्णश्चरणोपधानम्।**
**प्रहृष्टरोमा भगवत्कथायां प्रणीयमानो मुनिरभ्यचष्ट॥ ५॥**

इति ब्रुवाणमिति। विदुरमिति भगवदाज्ञापनविषयत्वं बोधयति। विनीतमिति स्वतोऽपि कथने हेतुत्वम्। सहस्रशीर्ष्णश्चरणोपधानमिति शास्त्रार्थतोऽपि तदाज्ञापरिपालनं कर्तव्यमिति महत्त्वम्। यथा भगवच्चरणस्थापका गुणाः, तथा विदुर इति। कृष्णः साक्षाद्भगवान्, अतः सहस्रशीर्षेत्युच्यते, तस्य चरणोपधानं विदुरः। चरण उपधीयते अस्मिन्निति। यदा भगवान् पादं प्रसारयति, तदा विदुरोत्सङ्गे प्रसारयतीति। अत एव विदुरे आवश्यकगुणत्रयस्य विद्यमानत्वाद्भगवत्कथाया वचनावश्यकत्वं ज्ञात्वा प्रहृष्टरोमा जातः। यतो भगवत्कथायां मर्कर्षेण नीयमानः, स्वभावतो मुनिः, अभितोऽचष्ट हेतुपूर्वकं सर्वमुक्तवान्। विपरीतं भगवच्चरित्रम्, यद्विदुरसङ्गादुत्तरोत्तरं मैत्रेयो भक्तो जायत इति। यथा तद्गतं ज्ञानमत्र संक्रमते, तथा विदुरभक्तिरपीतरत्र। अतः प्रहृष्टरोमा॥ ५॥

ब्रह्मप्रार्थनया सृष्टिं करिष्यतीति कथनार्थं ब्रह्मप्रसङ्गमाह—

## मैत्रेय उवाच।

**यदा स्वभार्यया साकं जातः स्वायंभुवो मनुः।**
**प्राञ्जलिः प्रणतश्चेदं वेदगर्भमभाषत॥ ६॥**

यदेति। स्वभार्यया साकमिति अनिषिद्धप्रजोत्पादनसामग्रीसहितः। मनुरिति स्वभावतो धर्मपरत्वम्। स्वायंभुव इति अन्यथा अनिष्कृतः स्यात्, तेन सृष्ट्यर्थमेवोत्पादनात्। विज्ञापनार्थं प्राञ्जलिः, प्रणतश्च मनोवाग्भ्याम्। कायवाङ्मनोभिर्नम्रता सूचिता। इदं वक्ष्यमाणम्। सृष्टुर्ज्ञानवत्त्वमाह—वेदगर्भमिति॥ ६॥

विज्ञापनामाह। त्वमेक इति द्वाभ्याम्। पुत्रस्य कार्यद्वितयं, पितृशुश्रूषणं पुरः। तदाज्ञाकरणं चेति द्वयं संदिग्धमत्र हि।[१] अतोऽत्र प्रथमं पृच्छति—यद्यपि तव शुश्रूषापेक्षा नास्ति, त्वयैव सर्वे सर्वभावेनोत्पाद्यन्ते पाल्यन्ते च। अतोऽस्माभिस्त्वदुत्पन्नैः, त्वया च परिपालितैः, का शुश्रूषा तव भविष्यति? तथापि अस्माकं स्वनिष्कृत्यर्थं पितृशुश्रूषणं कर्तव्यमिति शुश्रूषणं वक्तव्यम्। शुश्रूषणं च तदेव; येन सेव्यस्य सुखं भवति, परितुष्यति च। तदज्ञातमस्माकमिति प्रश्नः। निरपेक्षतायां हेतुत्रयम्—सर्वभूतानां जन्मदातृत्वम्, वृत्तिदातृत्वम्, असहायशूरत्वं च। तत्राऽसहायशूरत्वं जन्मादेरपि प्रयोजकमिति प्रथममाह—

## मनुरुवाच।

**त्वमेकः सर्वभूतानां जन्मकृद्वृत्तिदः पिता।**

---

१ स्यातप्पा.क.प.

**अथापि नः प्रजानां ते शुश्रूषा केन वा भवेत् ॥ ७ ॥**

त्वमेक इति। त्वमेवैक समर्थ सर्वत्र, किं सेवया। किञ्च, त्वमेवैक सर्वभूतानां जन्मकृदुत्पादक। वृत्तिर्जीविका, ता प्रयच्छतीति वृत्तिद , अतो न सेवापेक्षा। किञ्च, पिता भवान्, सर्वभूतानामेव। तेन होऽनेन निरूप्यते, प्रतिबन्धकः सेवायाम्। अथापि प्रयोजनाभावे प्रतिबन्धके च विद्यमाने, न प्रजाना मुद्धारार्थे ते शुश्रूषा केन वा भवेत्? तत्कथयेत्यार्थिकोऽर्थः॥ ७ ॥

किञ्च, आज्ञापन च कर्तव्यम्, पर यत्र कार्येऽस्माकं शक्तिरित्याह—

**तद्विधेहि नमस्तुभ्यं कर्मस्वीड्यात्मशक्तिषु।**
**यत्कृत्वेह यशो विष्वगमुत्र च भवेद्गतिः ॥ ८ ॥**

तद्विधेहीति। ननु सेवाकार्ययो स्पष्टयो कथमज्ञानम्? तत्राऽऽह—नमस्तुभ्यमिति। एतावदस्माभि कार्ये सेवाया च ज्ञातम्, यत्त्व नमस्य इति। नमनातिरिक्तमशक्यमप्रयोजक च, तथापि यदि प्रयोजकत्वेन ज्ञायते, शक्य वा भवेत्, तद्वक्तव्यमित्यभिप्रायेणाऽऽह—कर्मस्विति। स्तोत्रमपि सर्वैरेव स्तुतस्य अशक्य मेव। तदाह—ईड्येतिसंबोधनेन। आत्मशक्तिषु। आत्मन सामर्थ्य येषु, स्वशक्येष्वित्यर्थ। तत्रापि यो भवति धर्मजनक, यो वाऽप्यपकीर्त्यजनक, लोकवेदाविरुद्ध इत्यर्थ। विष्वग्यश इति एकदेशेऽपि यथा नाऽपकीर्तिजनकत्वम्, यथा देशविशेषे निषिद्धकरणम्। अमुत्र चेति परलोकेऽपि यशो गतिश्च॥ ८॥

तत्र ब्रह्मा एक कृतमेवेत्याह—प्रीत इति द्वाभ्याम्—

**ब्रह्मोवाच।**

**प्रीतस्तुभ्यमहं तात! स्वस्ति स्ताद्वां क्षितीश्वर!।**
**यन्निर्व्यलीकेन हृदा शाधि मेत्यात्मनाऽर्पितम् ॥ ९ ॥**

शुश्रूषा सफला भवति। फलेन ज्ञायते शुश्रूषा जातेति, अतस्तत्फलमेव निर्दिशति। प्रीतिरपि महती, यतः सफला। तस्या फलमाह—स्वस्ति स्ताद्वामिति। युवयो कल्याण भवतु। ससारप्रवृत्तिरूपत्वात् कार्यस्य बन्धशङ्कायामेवमुक्तम्। क्षितीश्वरेत्यपरमपि फलं संबोधनेन निर्दिष्टम्, भूम्यैश्वर्यं भवत्विति। ननु शुश्रूषा काऽस्माभि कृता, कथ वा संतोष इत्याशङ्क्याऽऽह—यन्निर्व्यलीकेन हृदेति। निष्कपटेन हृदयेन मामाज्ञापयेति यदात्मना सह सर्वस्वनिवेदनम्, तदेव शुश्रूषणम्। तद्दुर्योधनवत्कापट्येनाऽपि भवतीति निर्व्यलीकेन हृदेत्युक्तम्। आत्मनेति सहार्थे तृतीया। अनेनैहिकं पारलौकिकमपि आत्मगामि सर्वं निवेदितमिति ज्ञापितम्। एतदेवाऽऽत्मसमर्पण नाम। न ततोऽन्यत् प्रभो शुश्रूषणमस्ति॥ ९ ॥

अन्यदपि ततो भविष्यतीत्याशङ्क्य परिहरति—

**एतावत्यात्मजैर्वीर! कार्या पितरि पुत्रकैः।**
**शक्त्याऽप्रमत्तैर्गृह्येत सादरं गतमत्सरैः ॥ १० ॥**

---

१ तथापि ग २ वृत्ति ग

× एतावत्यात्मजैरिति । एतावत्येव शुश्रूषा आत्मजैः कर्तव्या; यो यत् यतः प्राप्तवान्, तदेव तस्मै निवेद्यमिति । पितरि पुत्रकैरिति प्राप्तमेवोपपादयति । गुरावपचितिरित्यपि पाठे, गुरूपदिष्टस्य पदार्थस्य सिद्ध्यर्थं निस्तार्यमेव निवेदयेत् । स हि आत्मात्मीयनिस्तारार्थमुपदिशति । तदस्याऽशक्यमिति तस्मै निवेदनीयम्, स हि स्वात्मानमुद्धरतीति । उपदेशसार्थकत्वेनैव तस्याऽपचितिः, अन्यथा तस्य सेवार्थीनत्वं स्यात् । अत उभयेषां कार्यार्थमात्मसमर्पणमेवाऽपचितिः सेवा, प्रत्युपकार इति यावत् । आत्मसमर्पणस्य निदर्शनमाह—शक्त्याऽप्रमत्तैरिति । स्वशक्त्यनुसारेण सावधानैस्तद्वाक्यं सादरं गृहीत । 'मृदमानय' इत्युक्ते स्वशक्त्यनुसारेण आदरपूर्वकं मृदानयनमात्मसमर्पणस्य निदर्शनम् । अयुक्तकारणेऽपि स्वोत्कर्षार्थं मामयुक्तं कारयतीति तस्योत्कर्षासहनराहितैः ॥ १० ॥

एवं सेवामुपपाद्य कर्तव्यमाज्ञापयति—

**स त्वमस्यामपत्यानि सदृशान्यात्मनो गुणैः ।**
**उत्पाद्य, शास धर्मेण गां, यज्ञैः पुरुषं यज ॥ ११ ॥**

स त्वमिति । मत्पुत्रत्वे सति यत्कर्तव्यं तत्कृतमेव, यद्भगवदीयत्वेन कर्तव्यं तदुचितमिति ज्ञापयितुं स इत्युक्तम् । अस्यामित्यपि तथैव । अत एव आत्मनः सदृशैर्गुणैरपत्यान्युत्पादयेत्याज्ञा प्रथमा, एतदनन्तरं धर्मेण गां शास परिपालयेति द्वितीया, यज्ञैः पुरुषं भगवन्तं यजेति तृतीया । तत्र द्वयं भगवत्प्रीतिहेतुभूतमित्यवधृतम्, पृथिवीपालनस्य क्षत्रियधर्मत्वात्, यज्ञानां वैदिकधर्मत्वात् । श्रौतस्मार्ताश्च धर्माः स्वधर्माः, अतः स्वधर्मेण भगवदाराधने कृते भवान् वेदगर्भो भगवांश्च परितुष्यतीत्यविवादम्॥११॥

प्रजोत्पादने तु भवान्, भगवान् वा, परितुष्यतीत्यत्र न किञ्चित्प्रमाणमस्तीत्याशङ्कयाऽऽह—

**परं शुश्रूषणं मह्यं स्यात्प्रजारक्षया मम ! ।**

प्रकाशः।

× एतावतीत्यत्र । निस्तार्यमिति । शिष्यदेहात्मानम् (?) । ननु शिष्येण गुरौ स्वात्मनिवेदनं किमर्थं कर्तव्यम्? पितृपुत्रवदपचितेरत्र वक्तुमशक्यत्वात्, इत्याकाङ्क्षायां सोपपत्तिकं तदाहुः—स हीत्यादि । हि यतो हेतोः, स गुरुरात्मात्मीययोः शिष्यतत्सम्बन्धिनोर्निस्तारार्थमुपदिशति, भगवद्वाक्यं वदति । तत् आत्मात्मीयनिस्तरणमस्य शिष्यस्याऽशक्यं कृत्यसाध्यमित्यस्माद्धेतोस्तस्मै गुरवे निवेदनीयम्, स्वात्मात्मीयादिकमर्पणीयम् । तत्र हेतुः—स हि स्वात्मानमुद्धरतीति । तथा च, स्वोद्धारकृत्यर्थं गुरावात्मसमर्पणमित्यर्थः । ननु तावता कथं तस्य सेवात्वसिद्धिरित्यत आहुः—उपदेशेत्यादि । गुरुणा हि शिष्योद्धारायोपदिश्यते, उद्धारोन्मुख्यं च गुर्वाज्ञानुसारित्वे, अनुसारित्वं चोक्तरीत्या समर्पणे कृत इति समर्पणेन सर्वं गुरोरेव परिकरीभूतं भवतीति गुरुः स्वमुद्धरन् स्वपरिकरमप्युद्धरतीत्युपदेशः सार्थको भवतीति तेनैव तस्य सेवात्वसिद्धिरित्यर्थः। ननूपदेशेन सेवायोग्यता, सेवया चोद्धार इत्यङ्गीकारे को दोष इत्यत आहुः—अन्यथेत्यादि। तस्येति । उद्धारस्य । तथा चोपदेशस्योद्धारफलकत्वहानिरेव दोष इत्यर्थः । सिद्धमाहुः—अत इत्यादि । तथा च, प्रत्युपकारत्वेन सेवाया अपचितित्वमित्यर्थः। एतेनात्मनिवेदिततदनिवेदितकृतयोः सेवयोः स्वरूपमेव व्यक्तीकृतं ज्ञेयम् ।

१ करणेऽपि ग.

**भगवांस्ते प्रजाभर्तुर्हृषीकेशोऽनुतुष्यति ॥ १२ ॥**

**परं शुश्रूषणमिति** । पुत्रेण हि पितुः शुश्रूषा कर्तव्या । तत् प्रजारक्षयैव मम परं शुश्रूषणं भवति, मत्कर्तव्यकरणात् । 'भगवत्कर्तव्यकरणं भगवच्छुश्रूषणं परम्' इति पूर्वमवोचाम। तस्मान्मया प्रजोत्पादनीया पालनीया, सा त्वयैव क्रियत इति परं मम शुश्रूषणम्। अनेन भगवांश्च परितुष्यतीत्याह—**भगवांस्ते प्रजाभर्तुरिति**। **प्रजाभर्तुः** प्रजारक्षकस्य ते भगवान् परितुष्यति, प्रजारक्षाया अपि धर्मत्वात् । किञ्च, हृषीकेश इति प्रजोत्पादने प्रजारक्षायां च सर्वेन्द्रियाणामुपभोगात् इन्द्रियाधिष्ठाता हृषीकेशो भगवान् परितुष्यति ॥ १२ ॥

ननु प्रजानां स्वस्य चेन्द्रियभोगस्य प्रवृत्तिरूपत्वात्, प्रवृत्तेः संसारहेतुत्वाच्च, तुष्टोऽपि भगवान् सांसारिकमेव फलं दास्यतीति मुक्त्यसाधकत्वात् किं प्रजयेत्याशङ्क्य परिहरति—

**येषां न तुष्टो भगवान् यज्ञलिङ्गो जनार्दनः ।**
**तेषां श्रमो ह्यपार्थाय यदात्मा नाऽऽदृतः स्वयम् ॥ १३ ॥**

* **येषां न तुष्टो भगवानिति** । स हि हृषीकेशः सर्गलीलायां जातेषु सर्गानुकूलकृत्यैव परितुष्यति, विपरीतान्न तुष्यति । तदतोषे तु सर्वनाशः, यतो भगवान् । तस्मिन्नतुष्टे ऐश्वर्यादिवत् ज्ञानादिकमपि न सिध्येत्, अतो मोक्षोऽपि दूरे । किञ्च, यज्ञलिङ्गो भगवान्, यज्ञा लिङ्गानि यस्य । भगवदपरितोषे यज्ञफलमपि न स्यात्, तदा 'नाऽयं लोकोऽस्त्ययज्ञस्य' इत्यैहिकामुष्मिकफलासिद्धिः । किञ्च, जनार्दनो भगवान्, जनामविद्यामर्दयतीति, तेनाऽविद्यानाशोऽपि न भवेत् । अतो मोक्षो नाऽस्ति । एवं ज्ञानाभावः, कर्ममुक्तौ लोकाभावः, अविद्यानाशाभावात् मुक्त्यभावश्चेति तेषां परलोकार्थम्, मुक्त्यर्थं वा, श्रमोऽपार्थः व्यर्थः । तत्रोपपत्तिरुक्तैव । ननु धर्मस्य कृतत्वात् कथं वैयर्थ्यम्? उपपत्तिविचाराभावेऽपि उत्पत्तिविचारेण फलं भविष्यतीत्याशङ्क्याऽऽह—**यदात्मा नादृतः स्वयमिति** । न हि कृतमे धर्मोऽस्ति, आत्मानात्मनोर्विरोधे आत्मा बलीयान्, अन्तरङ्ग बहिरङ्गन्यायेनाऽपि, मुख्यगौणन्यायेनाऽपि, सर्वस्यात्मार्थत्वात्। 'अर्थद्रव्यविरोधेऽर्थो बलीयान्' इति न्यायेनाऽपि आत्मानादरे न देहादिभिर्धर्मः सिध्यति । यथा विक्षिप्तेन्द्रियस्य न शारीरो धर्मः फलाय, नाप्यैन्द्रियो धर्मो विक्षिप्ते मनसि; तथा भगवद्विमुखस्य न कोऽपि धर्मः सिध्यति । यदि देहाद्यनुरोधेन, लोकानुरोधेन वा, देहादिलोकानां बाधकत्वाद्वा, भगवदादरं न कुर्यात्, तदा तेषामेव दोषो भवेत् । भगवांश्च तानेव दण्डयेत्, यदि स्वयमेवात्मा नादृतः । **स्वयमित्यव्ययम्** । स्वत एव यदि भगवन्तं न मन्येत, तस्य सर्वनाशो भवेदिति संग्रहः॥ १३ ॥

मनुना एतदर्थमेव सत्यलोके कृतम्, सत्यस्थश्च ब्रह्मा तथाऽऽज्ञां दत्तवान्। सोऽप्यविचारयन् भूमेर्मज्जनं न जानाति, अज्ञात्वैव पृथिवीपरिपालनादिकं कुर्वित्युक्तवान् । तदा पृथिवीमज्जनं ज्ञापयति—

## मनुरुवाच ।

**आदेशेऽहं भगवतो वर्तेयाऽमीवसूदन ! ।**

---

प्रकाशः

* येषामित्यत्र । पदत्रयस्यार्थमुक्त्वा श्रमवैयर्थ्ये तस्य हेतुनां स्फुटीकुर्वन्ति—एवमित्यादि । उक्तैवेति । पदत्रयार्थविवरणेनोक्तैव ।

**स्थानं त्विहाऽनुजानीहि प्रजानां मम च प्रभो !॥ १४॥**

आदेशेऽहं भगवत इति। अहं तु भगवतो भवत आदेशे आज्ञायामेव वर्तेय तिष्ठामि। हे अमीवसूदन पापनाशक। अमीवं पापम्, तन्नाशक। परं प्रजार्थं मदर्थं च, इह सत्यलोके. स्थानमनुजानीहि आज्ञापय, देहीत्यर्थः। यतः प्रजानां मम च भवानेव रक्षको रक्षणसमर्थः। तदाह–प्रभो इति॥ १४॥

पृथिवी तु मग्नेत्याह—

**यदोकः सर्वसत्त्वानां मही मग्ना महाम्भसि।**
**अस्या उद्धरणे यत्नो देव ! देव्या विधीयताम्॥ १५॥**

यदोक इति। सर्वसत्त्वानां यदोकः स्थानम्, सा मही महाम्भसि प्रलयोदके (च) मग्ना। तस्या उद्धरणे यत्नो वा विधीयताम्। देवेति संबोधनात्सत्यलोकस्थानदानापेक्षयापि भूम्युद्धारयत्न एव मुख्यः, यतो भूमिर्देवयजनम्। यज्ञाश्च कर्तुं शक्याः।किञ्च,देव्याःपृथिव्याः।सा पृथिवी त्वयैवोत्पादिता,आदिवराहकल्पे ब्रह्मणैवोद्धृत्य पुष्करपर्णे प्रथितत्वात्। तस्मात्सत्यादौ वा स्थानं देयम्, भूम्युद्धारयत्नो वा कर्तव्यः। उभयोर्मध्ये भूम्युद्धारयत्न एव विशिष्टः, अत एव न वाशब्दः। अत्र श्लोकत्रयं विगीतमस्ति 'इत्याकर्ण्य' इति मैत्रेय वचनम्, ब्रह्मणो वचनद्वयम् 'पीतं मया जलम्, सरीसृपः' इति च॥ १५॥

एवं मनुवचनं श्रुत्वा तद्वचनपरीक्षणार्थं ज्ञानदृष्ट्या भूमिं दृष्टवान्। तदा सिन्नां तां दृष्ट्वा ब्रह्मा यत्कृतवान्, तदाह—

## मैत्रेय उवाच।

**परमेष्ठी त्वपां मध्ये तथा सन्नामवेक्ष्य गाम्।**
**कथमेनां समुन्नेष्य इति दध्यौ धिया चिरम्॥ १६॥**

परमेष्ठी त्विति। स्वातन्त्र्यपारतन्त्र्याभ्यां स्वतो युक्तिविचारणम्। भगवत्येव भारस्य स्थापनं चिन्तितं स्थिरम्। १। तत्र प्रथमं पूर्ववत्सामर्थ्येन तस्या उद्धारे यत्नं कृतवान्। तत्र हेतुः–परमेष्ठीति। परमे सर्वोत्कृष्टे आसने तिष्ठतीति। तुशब्दः सत्यादौ स्थानदानपक्षं निवारयति। अपां मध्ये तथा सन्नामिति। पूर्वमपि तस्यास्तथावस्था स्मृता। पूर्वं तु पुष्करपर्णे उपविष्टः, नालस्याऽऽधारस्य विद्यमानत्वात्, भगवदाश्रयत्वाच्च नालस्य, तत्र रसातलपर्यन्तादानीय पुष्करपर्णे प्रथितवान्। इदानीं तु सत्यलोके स्थितः कथं तामुन्नेष्य इति, क्व वा स्थापय इति भवति चिन्ता। पूर्वं परमेष्ठित्वादिसिद्ध्यर्थं चिन्तायां क्रियमाणायां साधनभूता यज्ञादयः पदार्था मनस्याविर्भवन्ति[2], तथा प्रकृतेऽपि भविष्यतीति कालकृतदोषपरिहाराय चिरं दध्यौ। तत्रापि विवेकवत्या बुद्ध्या, यथा सर्वथा साधनं स्फुरत्येव॥ १६॥

तथाप्यस्फुरणे स्वातन्त्र्यं परित्यज्य भगवदधीनतया भगवत्कृपया साधनं स्फुरिष्यतीति सोपालम्भमिव तस्य चिन्तामाह—

**सृजतो मेऽक्षिभिर्वाग्भिः स्राव्यमाना रसां गता।**

---

१ स्वयामर्थ्येन. ख. २ आविर्भवन्तिरम।

**अथात्र किमनुष्ठेयमस्माभिः सर्गयोजितैः ॥ १७ ॥**

सृजत इति । पूर्वं स्थापिताऽपि इयं भूमिर्भारेण पुनर्निमग्ना। भारे हेतुः—मे आक्षिभिरिन्द्रियैः, वाग्भिश्च सृजतः सतः । अक्षिभिर्वाग्भिरिति स्त्रीपुरुषाविव निर्दिष्टौ । तथाभावसर्गे दैत्यांशा एव मायेणोत्पन्ना इति तेषां भारहेतुत्वं पूर्वमुक्तम्, वक्ष्यते च । अत एव प्लाव्यमाना जले निमग्ना रसातलं गता, तदयप्युद्धृतत्वात् । अथ तदनन्तरम्, अत्र एतादृशेऽर्थे, अस्माभिः किं कर्तव्यम्। न च तूष्णीं स्थातुं शक्यते सर्गयोजितैः, सर्गकरणमेव ह्यस्मदादीनां प्रयोजनम् ॥ १७ ॥

एवं पारतन्त्र्येणाऽपि विचारे क्रियमाणे यदोपायो न स्फुरितः,तदा भगवत्येव भारं दत्तवान्।भारदाने हेतुमाह—

**यस्याऽहं हृदयादासं स ईशो विदधातु मे ।**
**कर्तव्यं करुणासिन्धुस्तीर्थकीर्तिरधोक्षजः ॥ १८ ॥**

यस्याऽहमिति। यस्य हृदयात्, विचारपूर्वकं यस्मादहं जातः। सर्गार्थमेनमुत्पादयामि, अनेन कार्यं सेत्स्यतीति प्रथममेव विचार्य ब्रह्मा सर्गे नियोजितः। ततो ज्ञायते—इदमपि कार्यं मम चेदशक्यम्, तदा भगवानेव करिष्यति, यत इदमपि पूर्वमेव विचारितवान्—अयमसमर्थः, इदमप्यहमेव करिष्यामि । यत ईशः, समर्थेन हि कर्तव्यम्, न तु सेवकेनैवेति नियमः। उभयोः सामर्थ्ये सेवकेनैव कर्तव्यम्। अत्र तु स एव ईश इति मे कर्तव्यं विदधातु। नन्वशक्तोऽपि लोके सेवक एव करोति, न प्रभुः शक्तोऽपि। तत्राऽऽह-करुणासिन्धुरिति। सेवकस्याऽतिकष्टेन कार्यं सिद्ध्यति, स्वस्य त्वनायासेन। तदा करुणावान् स्वयमेव करोति, परदुःखेन दुःखितत्वात् । ननु करुणावानपि ऐश्वर्यगुणयोगात् अशक्तैः सेवकैरेव कार्यं कारयति, अन्यथेशत्वं न स्यात् । तत्राऽऽह—तीर्थकीर्तिरिति । करुणासिन्धुत्वेन परिहारे सिद्धेऽपि दृष्टान्तार्थमिदं विशेषणम्। तीर्थरूपा कीर्तिर्यस्येति। तीर्थं हि सर्वेषां पापं दूरीकरोति, तत्पापं तीर्थे एव तिष्ठति । एवं जानन्नपि भगवान् स्वस्य कीर्तिं तीर्थरूपां कृतवान् । अतो यथैतत्करोति, तथा स्वयमेव भूम्युद्धारमपि करिष्यतीति भावः। किञ्च, अधोक्षजो भगवान्, अधः अक्षजं ज्ञानं यस्मात् । इन्द्रियातीतोऽपि सर्वेषां सर्वेन्द्रियहितं करोति, ज्ञानरूपो भूत्वा मोक्षं प्रयच्छतीति । अथवा, व्यवहारातीतत्वेन लोकानामुद्धारार्थं कीर्तिमेव तथा कृतवानिति तथा करणे अधोक्षजत्वं हेतुः ॥ १८ ॥

अयं पक्षः फलपर्यवसायी जात इत्याहुः—

**इत्यभिध्यायतो नासाविवरात्सहसाऽनघ ! ।**
**वराहतोको निरगादङ्गुष्ठपरिमाणकः ॥ १९ ॥**

+इत्यभिध्यायत इति। इति अमुना प्रकारेण, अभितो ध्यायतः।स एवैतत्कार्यं करिष्यतीति निर्द्धार्य, तथैव चित्तं दृढं विधाय भावयन्, तथैव क्षणे क्षणे कदा भगवान् केन रूपेण करिष्यतीति अभितो ध्यानं करोति। तदा कार्याविष्टचित्तेन यज्ञरूपे भगवति ध्याते कृते स्थानाभावात् आध्यात्मिकं रूपमप्रकटमेव कृत्वा आधिदैविकेन रूपेण प्रकटो जातः। क्रियापि तत्र प्रविष्टेत्याधिदैविकत्वम्। इतःपूर्वं तु आध्यात्मिक एव यज्ञः । स

प्रकाशः

+ इत्यभिध्यायत इत्यत्र । क्रियाऽपि तत्र प्रविष्टेति । क्रियायां प्रविष्टः क्रियावान् आध्यात्मिकः पूर्वकाण्डः, अत्र तु क्रियैव क्रियावती (ति) प्रविष्टेत्यर्थः। इतः पूर्वमिति । वराहावतारात् पूर्वम्।

१ ध्यान इति कं. ख. ग. ङ.

त्रेधा संपद्यते—यजमाननिष्ठप्रयत्नेन, वैदिकज्ञानेन, ध्यानारूढस्वरूपेण च। स त्रिविधोऽपि एकीभूतो भगवान् वराहः। तस्य क्रियैव यजमानस्य क्रिया, स्वरूपं तु तदेव सर्वयज्ञात्मकं साधिकरणम्। श्रुतिस्तत्रैवान्तर्भूतेति ज्ञापयितुं ब्रह्मणः श्वासमार्गात् निर्गतः, 'निःश्वसितमस्य वेदाः' इति श्रुतेः। वरानाहरतीति वराहः, सर्वकामप्रदः, स चासौ तोकश्च। तोको बालकः। आध्यात्मिकादिरूपेषु प्रवृद्धस्यैव फलसाधकत्वम्, एकदेशत्वात्। अत्र तु तोकोऽपि फलसाधकः, सफलत्वात्। सहसेति ध्यानांशव्यावृत्त्यर्थम्, अन्यथा एकेनाप्यंशेन आध्यात्मिकता स्यात्। अनघेति संबोधनं विश्वासार्थम्, न हि केनाप्यंशेन स पापो विश्वासमेति। तस्य रूपस्य कालसारेश्वररूपत्वज्ञापनाय उत्पत्तौ अङ्गुष्ठपर्वमात्रप्रमाणेन बहिर्निर्गतः। 'अङ्गुष्ठमात्रः पुरुषो अङ्गुष्ठं च समाश्रितः' 'ईशः सर्वस्य जगतः' 'प्रभुः प्रीणाति विश्वभुक्' इति श्रुतेरङ्गुष्ठमात्रप्रमाणस्यैव विश्वभोक्तृत्वमीशत्वंचोच्यते। यज्ञरूपस्यैव विश्वभोक्तृत्वम्। तस्यैव हि सर्वमन्नं सर्वे पशवः। अङ्गुष्ठशब्दः सर्वत्राऽङ्गुष्ठशिरोवाची ॥ १९ ॥

एवमाधिदैविकस्योत्पत्तितः स्वरूपमुक्तम्। अंशतः स्वरूपं वक्तुं भगवत्त्वज्ञापनाय कालादेः परिच्छेदकत्वाभावाय तस्यैव सूक्ष्मस्य स्थूलतां निरूपयति—

**तस्याऽभिपश्यतः खस्थः क्षणेन किल भारत! ।**
**गजमात्रं प्रववृधे तदद्भुतमभून्महत् ॥ २० ॥**

*तस्याऽभिपश्यत इति। तस्य ब्रह्मणोऽभितः सर्वतः पश्यतः सतः। रूपान्तरग्रहणे लोके जवनिकाऽपेक्ष्यते। अत्र तु पश्यत एव पूर्वमङ्गुष्ठमात्रोऽपि पश्चाद्गजमात्रं जातः। तिरोभावशङ्कानिवारणार्थं खस्थः क्षणेनेत्युक्तम्। आकाशस्थितत्वान्नाऽऽवरणम्। वृद्धौ लौकिकस्य कालस्याऽभावान्नानावरणेन तस्यैव वृद्धिः। किलेति प्रसिद्धेः, नाऽत्र प्रमाणं वक्तव्यमित्यर्थः। भारतेति विश्वासार्थम्। एवं माहात्म्यज्ञानपूर्वकं श्रोतृदोषं परिहृत्य स्थूलं रूपमाह—गजमात्रं प्रववृधे इति। गजो हस्ती, तन्मात्रमिति परिहासरूपम्। वैष्णवशास्त्रप्रसिद्धगजो वा गजेन्द्रः। मात्रपदमनिर्द्धारणासूचकम्, अन्यथा द्वितीयक्षणे ततोऽपि तावन्मात्रवृद्धः स्यात्। तथा च, क्षणस्येन्द्रियार्थसंयोग एवोपक्षीणत्वात् क्षणेनेति वचनं व्यर्थं स्यात्। प्रकर्षेण

प्रकाशः।

साधिकरणमिति। सदेवयजनम्। कालसारेति। कालाधिदैविकेत्यर्थः।

* तस्येत्यत्र। तिरोभावशङ्कैव कथमित्याकाङ्क्षायामावरणनिवारणमुखेन तां स्फुटीकुर्वन्ति—आकाशेत्यादि। यथा चतुरङ्गुलाऽपि कर्कटी वल्लीविलग्ना भूमिष्ठा एकरात्रेण पञ्चहस्ता दशहस्ता च पोषकद्रव्यकृतपूर्वरूपाद्यावरणेन तिरोहितपूर्वपरिमाणा भवति, तथाऽत्राकाशस्थत्वान्नावरणं शक्यवचनमिति ज्ञापनाय खस्थ इत्युक्तमित्यर्थः। यथाऽत्र 'कश्चित् सामुद्रः पक्षी भाषायां कुंकणे प्रसिद्धो वासरीतिनामा व्योम्न्येवाऽऽसुषप्रदेशेऽण्डं ददाति। तच्चाऽण्डं निराधारं पतत्तदैव कालेन वृद्धं पक्वं विदीर्णं च भवति, तज्जातश्च पुनरुड्डीय गच्छति, न भूमिष्ठान् स्पृशति' इति कुंकणदेशे प्रसिद्धम्, तद्वदप्यत्र न वक्तुं शक्यमिति ज्ञापनाय क्षणेनेत्युक्तमित्याशयेनाहुः—वृद्धावित्यादि। अनिर्द्धारणासूचकमिति। कालहेतुत्वानिर्धारणायाः सूचकम्। तत्रेत्युक्तिः(?)अन्यथेत्यादि।

१ रुतिथः क

वबृधे । प्रकर्षः सर्वावयवेषु यथायोग्यवृद्धिः, अत एव तदद्भुतमभूत् । यत्रैव पश्यतां युक्त्यस्फुरणं कार्यदर्शनं च तदेवाऽद्भुतम् । महदिति कार्यदर्शनमपि संदिग्धम् । न हि समुद्रः सान्तो द्रष्टुं शक्यते, तथा भगवच्छरीरमित्यर्थः ॥ २० ॥

तदा तेषां वस्तुनिर्द्धारार्थे विमर्शो जात इत्याह—

**मरीचिप्रमुखैर्विप्रैः कुमारैर्मनुना सह ।**
**दृष्ट्वा तत्सौकरं रूपं तर्कयामास चित्रधा ॥ २१ ॥**

* मरीचिप्रमुखैरिति। मरीचिरेव प्रमुखो मुख्यो येषां ब्राह्मणानाम्। त्रिविधास्तत्र ब्रह्मणःपुत्रा१, ब्राह्मणाः, क्षत्रियाः, कुमाराश्च । कुमाराः सनकादयोऽनुपनीताः । अष्टमे वर्षे ह्युपनयनम्, ते तु पञ्चवर्षा भगवदस्मरणक्षणैः; तावता कालेन पञ्चवर्षाणामेव निष्पादितत्वात्, देहोपभोक्तृकालस्यैव कर्मनियामकत्वात् । विशेषेण प्रान्ति पूरयन्तीति विप्रा ब्राह्मणा एव । मनुः क्षत्रियः । एवं मार्गत्रयस्थितैः सर्वैः सह । चित्रधा विचित्रप्रकारेण । ' सङ्ख्याया विधार्थे धा ' इत्यत्र योगविभागाच्चित्रधेति सिध्यति। तत्सौकरं रूपमिति। श्लोके निन्दितरूपत्वाद्यथा मलान्मधुकैटभादेरुत्पत्तिः, तथाऽस्यापि भवेद्वराहस्य । दैत्योऽपि वराहः श्रुतिसिद्धः, ' वराहोऽयं वाममोषः' इति श्रुतेः । ' ' पशूनां वा एष मन्युर्यद्वराहः ' इति क्रोधावतारो वा भवेत् । एवमनेकप्रकारेण तर्कितवन्तः । तर्को नाम प्रत्यक्षतो दृष्टस्य पदार्थस्य निर्वाहिकोपपत्तिः, यस्मिन्पदार्थे कल्प्यमाने दृष्टोऽर्थ उपपद्यते । तत्र प्रकृते कोऽपि पक्षो न निर्द्धारित इति चित्रधेत्युक्तम् ।२१।

यदा लोकवेदानुसारी तर्कः पदार्थनिर्द्धारणे अशक्तः, तदा अलौकिकप्रकारेण पदार्थमुत्प्रेक्षते—

**किमेतत्सूकरव्याजं सत्त्वं दिव्यमवस्थितम् ।**
**अहो बताऽऽश्चर्यमिदं नासाया मे विनिःसृतम् ॥ २२ ॥**

किमेतदिति । सूकरइति व्याजमात्रम्; दिव्यमेवैतत्सत्त्वम्, न प्राकृतम् । दिव्यत्वं निरूपयति—अहो इत्याश्चर्ये । बतेति खेदे । तेजःप्रागल्भ्यादेः परिदृश्यमानत्वादस्मदाद्यपेक्षयाऽप्यलौकिकतेजस्त्वात् किञ्चित्कारणमूवं तत्त्वमेव परं तस्य सूकररूपताऽत्याश्चर्ये हेतुः । खेदस्तु महतो विरूपत्वात् । आश्चर्यान्तरमाह—आश्चर्यमिदमिति। कालकर्मस्वभाववशेन महतोऽपि हीनभावः संभवति, तथापीदमत्याश्चर्यम्, यन्ममैव नासापुटान्निःसृतम् । न हि पुरुषात्सूकरा उत्पद्यन्ते, तत्राऽपि नासिकायाः। अनेन योनिरपि विजातीयानार्हेत्युक्तम् ॥ २२ ॥

आश्चर्यान्तरमाह—

---

प्रकाशः।

* मरीचीत्यत्र । कुमाराणां ब्राह्मणेभ्यः पृथगुल्लेखस्य तात्पर्यमाहुः—अष्टमेत्यादि । कुमारत्वस्य भेदं तात्पर्यम् । 'वराहोऽयं वाममोषः' इति श्रुतिस्तु तैत्तिरीयसंहिताषष्ठाष्टकद्वितीयप्रपाठकचतुर्थानुवाकस्था । वाममोष इति तस्य योगरूढं नाम, वामं देवानां वित्त मुष्णातीति । तस्य च दैत्यत्वं ' सप्तानां गिरीणां परस्ताद्वित्तं वेद्यमसुराणा बिभर्ति तं जहि ' इति श्रौतालिङ्गादेवाऽवसीयते ।

---

१ दिव्यमस्त्वम् ग २ तत्त्वमेव परं ग

**दृष्टोऽङ्गुष्ठशिरोमात्रः क्षणाद्गण्डशिलोपमः ।**
**अपि स्विद्भगवानेष यज्ञो मे खेदयन्मनः ॥ २३ ॥**

× दृष्ट इति । अङ्गुष्ठस्य शिर उत्तमं पर्व, तावन्मात्रं प्रमाणं यस्य । दृष्ट इति । प्रथमदर्शनम् । नासाद्वारस्य तावन्मात्रत्वादुपपत्त्योक्तम्, ब्रह्मणो ज्ञानस्य कालाद्यतीन्द्रियविषयत्वाद्वा । अत एव क्षणादित्युक्तम्। ब्रह्मवाक्यत्वान्न लौकिकन्यायेनाल्पः कालो दृश्यते। पर्वताच्च्युता स्थूला पाषाणा गण्डशिला, तेरुपमीयत इति पुरुषगुरुत्वादिभिरुच्यते । अचेतनदृष्टान्तः स्वस्य खेदसूचकः । स्वस्य पर्वतत्वेन वज्रेण पक्षच्छेद इव खेदसूचकत्वात् । आश्चर्यखेदौ वा क्रमेण निरूपितौ । एवमलौकिकप्रकारेणाऽपि पदार्थे तर्क्यमाणे निर्द्धारो न भवति । बीजमेव हि तर्केण निर्द्धारितम्, न प्रयोजनम् । न हि दिव्यस्याऽपि सत्त्वस्य प्रकृते प्रयोजनमस्ति । भूम्युद्धारार्थं भगवान् ध्यातः, अत एव स एव भूम्युद्धारार्थमेवरूपेण प्रकट इति सम्भावना । ननु पुरुषोत्तमस्य किं लोकवेदनिन्दितरूपेण प्राकट्ये कारणमित्याशङ्क्य, स्वखेदजनकत्वमेव कारणमुत्प्रेक्षते–मे खेदयन् मन इति । अपीति सम्भावनायाम् । स्विदिति निश्चये । पूर्वं बहवः पक्षा उत्प्रेक्षिताः, तत्रायं निर्द्धारितः पक्षः । अतो भगवान् परमेश्वर एवाऽयम् । तस्याऽनन्तरूपेषु यज्ञश्चाऽयं भवितुमर्हतीति, प्रकृतोपयोगित्वात् । कालमन्युरूपत्वेन दैत्यत्वं च संभाव्यते रूपेण, अन्यथा दैत्यवधो न स्यात्, मर्यादाया क्रूरेणैव क्रूरहननात् । इयं यज्ञरूपा भूमिर्वराहेणैव संरक्ष्यते । तत्र दैत्यानां यज्ञाधिकरणवेदिर्दैत्यवधं कृत्वा यदानीयते, तदा देवानां पूर्णो यज्ञो भवति । ब्रह्मणा हि सर्वेभ्यो यज्ञा दत्ताः साधिकरणाः, तेषां च वामभोगो वराहः । हननं तु विपक्षे सति । अतस्तादृशरूपमवश्यकर्तव्यमापतितमिति, ब्रह्माणमुपालभमान इव, यज्ञ एव वराहरूपं कृतवान् । अन्यस्य बीजप्रयोजनोपपादकत्वं न सम्भवति २३

[1]※ अयमपि पक्षः कार्ये निर्व्यूढे फलतो निर्द्धारितो भविष्यतीति फलनिष्पत्तिपर्यन्तं ब्रह्मणो विचार एव जात इत्याह—

**इति मीमांसतस्तस्य ब्रह्मणः सह सूनुभिः ।**
**भगवान्यज्ञपुरुषो जगर्जाऽगेन्द्रसंनिभः ॥ २४ ॥**

इतीति । सूनुभिर्मरीच्यादिभिः सह ब्रह्मणो विचारं कुर्वत एव सतः, शीघ्रं विचारान्तरानुत्पत्तये, तेषां हृदयं शमं वा भगवान् यज्ञपुरुषो जगर्ज । पूर्वं गण्डशैलसमानोऽपि पुनस्तथा वृद्ध्या मेरुसदृशो जातः । भगवानिति ऐश्वर्यादेः प्रकटितत्वान्न हेत्वस्फूर्तिः । यज्ञाङ्गे वराहरूपता, अधिष्ठातृरूपत्वे तु पुरुषत्वम्, तेनाऽर्धपुरुषो वराहः । अनेन ब्रह्माणं प्रति स्वस्य पुरुषरूपमपि प्रदर्शितमिति खेदोऽपि निराकृतप्राय ।

प्रकाश ।

× दृष्ट इत्यत्र । अन्तःस्था(?)ङ्गुष्ठमात्रस्य दर्शनं योगिश्रेष्ठानामेवेत्याशयेनाहुः–ब्रह्मण इत्यादि । बीजमिति । दिव्यत्वम् । तेषामित्यादि । असुराणामपि वामभोगो वित्तवेधो वराहोऽयं धारकत्वाद्वेदिरूपधरभूमिधारक इत्यर्थः । ननु तर्हि तद्वधो भगवता कुतो न कृत इत्यत आहुः–हननमित्यादि । अत इति । इदानीं विपक्षसद्भावात् ।

※ इतीत्यत्र । निर्व्यूढ इति । जाते । निर्व्यूह इति पाठे, निःशरीरे स्वरूपतोऽनिर्धार्यमाणे इत्यर्थः ।

१ वृद्धगाम्भ्या ख ग

यथा समेघः पर्वतो गर्जति, एवं भगवानेक एव गर्जतीत्यर्थः। संशब्दार्थश्चाऽयम् ॥ २४ ॥

अत एव ब्रह्मणो हर्षो जात इत्याह—

**ब्रह्माणं हर्षयामास हरिस्तांश्च द्विजोत्तमान्।**
**स्वगर्जितेन ककुभः प्रतिस्वनयता विभुः ॥ २५ ॥**

+ ब्रह्माणमिति। हरिरिति तथात्वं स्वभावः। तानिति मीमांसकान्। ब्रह्मणो द्विरूपो हर्षः, तेषामेकरूप इति भिन्नतया निर्देशः। हर्षणे हेतुः—द्विजोत्तमानिति। यज्ञत्वाच्चेषां हर्षः। चौर्यनिराकरणार्थं तथा गर्जनं कृतवान्, यथा सर्वत्र दिक्षु प्रतिध्वनिर्जातः। तदाह—ककुभः प्रतिस्वनयता स्वगर्जितेनेति। ननु किमित्येवं कृतवान् तत्राऽऽह—विभुरिति ॥ २५ ॥

हृष्टानां कार्यमाह—

**निशम्य ते घर्घरितं स्वखेदक्षयिष्णु मायामयसूकरस्य।**
**जनस्तपःसत्यनिवासिनस्ते त्रिभिः पवित्रैर्मुनयोऽगृणन्स्म ॥ २६ ॥**

*निशम्येति। घर्घरितमिति तज्जात्यनुकरणशब्दः, भाषायां गृहवाची। सर्वेषामेव गृहं संपादयिष्यामीति, गृहोपरि वा गृहम्; शरीरं गृहं चेति वा। अत एव स्वखेदक्षयिष्णु। सर्वेषां भूमावेव प्रतिष्ठा, जनादिष्वपि भूमेरेवाऽन्नसिद्धिः। संबन्धिनामुद्धारार्थं वा, अधिकारिणां खेदनिवृत्त्यर्थं वा, स्वमीमांसितस्याऽङ्गीकारेण वा। ननु पश्वनुकरणेन कथं खेदनिराकरणम्, तत्राऽऽह—मायामयसूकरस्येति। दैत्यान् व्यामोहयितुं मायया तथारूपं कृतवान्। मायामयत्वमतिवञ्चनाप्रदर्शकत्वम्, वेदे हि कर्ममार्गे अत्यन्तभ्रमजनकत्वात्। आलम्भने फले चैव यज्ञरूपे तथोद्गमे। उपाख्यानेषु सर्वेषु भ्रमो वै जायते श्रुतौ ॥ १ ॥ आधिदैविकरूपेऽपि मोहकत्वं तथा सुरे। यथा स्वस्मिन्नीचबुद्धिस्ततोऽपि भगवत्युत ॥ २ ॥ सूकर इति 'षू प्रसवे' इति प्रसवकर्ता। वेदा उत्पादिताः सर्वे मुक्त्यर्थं हीनभावताम्। धारयिष्यन्ति समलास्ततः सूकरउच्यते ॥ ३ ॥ जनस्तपः सत्यनिवासिन इति त्रिविधा अपि सात्त्विका उक्ताः, तैरेव स लोकः प्राप्यत इति। त्रिभिः पवित्रैर्वेदत्रयेण मार्जनीयैः, पवमानादिभिर्वा। एतेषां तु कथा भगवत्प्रसिद्ध्यर्थम्। मननाज्ज्ञानदार्ढ्यम्। स्मेति लौकिकी प्रसिद्धिः ॥ २६ ॥

एवं सर्वान् ज्ञापयित्वा यदर्थमवतीर्णस्तत्कृतवानित्याह—

**तेषां सतां वेदवितानमूर्तिर्ब्रह्माऽवधार्यात्मगुणानुवादम्।**
**विनद्य भूयो विबुधोदयाय गजेन्द्रलीलो जलमाविवेश ॥ २७ ॥**

तेषामिति। तेषां स्तोत्रकर्तॄणाम्। ब्रह्म वेदम्, भगवतो यज्ञस्य गुणानुवादनरूपम्। अवधार्य निश्चित्य। वेदोक्तो यज्ञवितानो मूर्तिर्यस्य, वेदविताना वा मूर्तो यस्य। भगवतोऽनन्तरूपत्वादनन्तशाखात्व-

---

प्रकाशः।

+ ब्रह्माणमित्यत्र। द्विरूप इति। स्वसाहाय्यकरणकृतो यज्ञत्वज्ञानपूर्वकदर्शनकृतश्चेति द्विरूपः।

* निशम्येत्यत्र। गृहोपरीति। भगवतो गृहं जलम्, तदुपरीत्यर्थः।

म् । सतामिति तथाकरणे ज्ञाने च हेतुः । विनन्द्य । विनन्दनमभिनन्दनम्, भूयोऽभिनन्दनं प्रत्येकम् । ब्रह्मवद्भगवानपि दैत्यादीनामप्युपकारं करिष्यतीत्याशङ्कयाऽऽह—विबुधोदयायेति । देवानामेवाऽभ्युदयो न दैत्यानामिति । ननु भगवान् सर्वसमर्थः सर्वगश्च; तत्रातल एवाऽऽविर्भूतः कथं न भूमिमाहृतवान् । तत्राऽऽह—गजेन्द्रलील इति । गजेन्द्रस्य लीलेव लीला यस्य । कथमत्र गजेन्द्रो जले प्रविष्टः क्रीडितवानिति तां क्रीडामनुकर्तुम्, गजेन्द्रस्य या भक्तत्वस्थापनाय । स हि भगवल्लीलामेव कृतवानिति । एका भगवतो लीला नानाकार्यप्रवर्तिका । भक्तानां सर्वसौख्यार्थं लीलां चक्रे तथाविधाम् ।।१।।२७।।

×तदानीन्तनां भगवन्मूर्तिं लीलासहितां वर्णयति—उत्क्षिप्तवाल इति द्वाभ्यां स्वरूपक्रियावर्णनभेदेन । तत्र प्रथमं स्वरूपं वर्णयति—

**उत्क्षिप्तवालः खचरः कठोरः सटा विधुन्वन् खररोमशत्वक् ।**
**खुराहताभ्रः सितदंष्ट्रवीक्षाज्योतिर्बभासे भगवान्महीध्रः ॥ २८ ॥**

ऊर्ध्वं क्षिप्तो वालः पुच्छं येन । पुच्छं तस्य दीक्षात्मकम्, दीर्घं कुशहेतुश्च । स एव यज्ञे उद्यताहेतुरिति ज्ञापयितुम् । खचर आकाशचरः, स हि सर्वेषु यज्ञियपदार्थेषु आविष्ट इवाऽसंलग्न एव तिष्ठतीति । अनेन यज्ञः पशुषु प्रतिष्ठितः क्रियामय इति ज्ञापयितुम्(१)। बलकार्यत्वात् कठोरः कठिनो निष्ठुरात्मको मन्युरूपत्वात् । खरा रोमशा त्वग्यस्य । परुषा हिंसादिजननात्, रोमशा बर्हिषो भूयस्त्वात् । त्वगुपरितनो भागः । आकृतिस्तु लोकप्रसिद्धैव ताहशी । खुरैराहतान्यभ्राणि येन । भगवतः पादचतुष्टयं स्तोमरूपं मिलितं सत् सवनद्वयात्मकं भवति । तत्रैव पशवः सोमश्च सर्वो वृष्टिकार्यरूपो हन्यते, सवनाभ्यामेव सर्वजननात् कृतं मेघैरिति । यैर्मेघैर्जलं पूरितम्, तेऽवश्यं दूरीकर्तव्याः, अन्यथा तेषु पृथिवीस्थापने पृथिव्या अस्थिरता स्यात् । जलमेघयोर्मध्ये स्थापनेऽपि मेघैः प्लावनं स्यात् । खुरैराहतत्वादन्यत्र स्थितास्तत्र वृष्टिं करिष्यन्तीति मेघानां न सर्वथानाशः । सिता दंष्ट्रा यस्य । वीक्षैव ज्योतिर्यस्य । पृथिव्याः स्थापनशोपणार्थं दंष्ट्रावीक्षयोः कीर्तनम्, मृत्योरतिक्रमार्थं कृपावलोकनार्थं च । अतो भूमावेव मृत्योरतिक्रमो भगवद्रूपा चेति विज्ञापितम् । बभास इति सर्वप्रमाणेन स्तुतः । महीध्र इति पृथिव्युद्धारेण सर्वोपकारकरणात् सर्वैः स्तूयमानत्वम् । सर्वे हि महीध्रा लोकप्रसिद्धाः पर्वताः, अयं तु भगवान्महीध्रः । ऐश्वर्यादिगुणयुक्तोऽपि भारं वहतीति दयालुत्वम् ॥ २८ ॥

एवं रूपं वर्णयित्वा क्रियां वर्णयति—

**घ्राणेन पृथ्व्याः पदवीं विजिघ्रन् क्रोडापदेशः स्वयमध्वराङ्गः ।**
**करालदंष्ट्रोऽप्यकरालदृग्भ्यामुद्वीक्ष्य विप्रान्गृणतोऽविशत्कम् ॥ २९ ॥**

+ घ्राणेनेति । पृथ्व्याः पदवीं घ्राणेन विजिघ्रन् । सा हि गन्धवती, गन्ध एव तस्या व्यावर्तकः । येन मार्गेण पृथ्वी गता, स एव मार्गस्तस्य गमने साधीयान्, तत्र हि जलं विरलम् । विशेषतो घ्राणं क्रो-

प्रकाशः।
× उत्क्षिप्तेत्यत्र । अनेनेति । रूपेण । + घ्राणेनेत्यत्र ।

१ क्रिया. क प. २ क्रिया प.

डापदेश इति वराहरूपलीला व्याजार्थमेव । सर्वज्ञोऽपि गृहीतावतारो देहानुसारेणैव चेष्टां करोतीति घ्राणेनैव पृथिवीमार्गज्ञानम् । क्रोडनस्य विचारात्मकस्य मीमांसाशास्त्रस्य व्यपदेशमात्रमत्र, यत्कर्मप्राधान्यमिति देवताया एव प्राधान्यात् तामेवोपपादयति—स्वयमध्वराङ्ग इति । अध्वरा अङ्गानि यस्य, सर्वयज्ञात्मक इत्यर्थः । अध्वानि रवो यस्येत्यध्वरः, सर्वत्रैव मार्गे अस्यैव शब्दः । न हि यज्ञव्यतिरेकेण कश्चिन्मार्गोऽस्ति, अन्ये खण्डिताः । तादृशानामप्यप्रामाण्यार्थमङ्गपदम् । यद्यप्ययं पशूनां घातकत्वेन प्रसिद्धः, तथाप्यग्रे ज्ञानप्रद इति सर्वोपास्य इति ज्ञापयितुमाह—करालदंष्ट्रोऽप्यकरालदृग्भ्यामिति । विभानुद्वीक्ष्येति । सर्वेषां हि सर्वथा हितकर्तृषु भगवतो ज्ञानं कृपा चेति । गृणत इति ज्ञानकृपयोर्भक्तिर्हेतुरित्युक्तम् । कं जलमाविशत् । भक्तान् ज्ञानसंपन्नान् कृत्वा अन्येषामुद्धारार्थं स्वयं सुख इव जले प्रविष्टः ॥ २९ ॥

मध्ये जलस्य सापराधत्वात् दण्डं कृतवानित्याह—

**स वज्रकूटाङ्गनिपातवेगविशीर्णकुक्षिः स्तनयन्नुदन्वान् ।**
**उत्सृष्टदीर्घोर्मिभुजैरिवाऽऽर्तश्चुक्रोश यज्ञेश्वर पाहि मेति ॥ ३० ॥**

+ **स वज्रेति** । यस्मिन् जले भगवानाविष्टः, येन च पृथिवी मज्जिता, स उदन्वान् । वज्रकूटवत् वज्रसमूहवदतिकठिनं यत् जाज्वल्यमानमङ्गम् । न हि वज्रातिरिक्तस्य तेजो जले तिष्ठत्यधिकं वा जायते । स हि मेघान् जलं त्याजयति । तादृशाः सर्वे यद्येकत्र भवन्ति तदा समुद्रादपि जलं त्याजयन्ति । ते पुनः कपटेन चेदागच्छेयुः, स्वरूपमेव नाशयेयुः । तद्रूपश्चाऽयं भगवान् । तादृशाऽङ्गस्य यो निपातः । वज्रपात एव न कोऽपि जीवति, तत्राऽपि समूहः, तत्रापि कापट्यम्, तत्रापि तदङ्गमेव यस्य । तस्याऽपि पातोऽनवधानदशायामुपरिपतनम् । पतनेऽपि महान् वेगः, यथा बाणो भित्त्वा गच्छति । तेन कृत्वा विशीर्णा कुक्षिर्यस्य । अनेन कुक्षेः कुक्षिर्निवार्यते, अन्यथा स्वकुक्षिरेव न पूर्येत । **उदन्वानिति** जलवत्त्वं तत्कुक्षावेव तिष्ठति, अतः कुक्षिभङ्गे नातः परं जलवृद्धिरिति सूचितम् । तथात्वं जातमिति ज्ञापयितुं तत्कार्यमाह—**उत्सृष्टेति** । उर्ध्वं सृष्टाः प्रसारिता दीर्घा ऊर्मय एव भुजाः, तैरुपलक्षितः । **आर्त्त इवेति** पातेऽप्यानन्दमयः पततीति स्त्रीभुजबन्धनवत् सुखमेव भवतीत्यार्थे इवेत्युक्तम् । सर्वजलशोषे स्वरूपमेव नश्यति, कुक्षिविदारे वृद्ध्यभावः । तदा वर्षाशोषणाभ्यां समता भवति, तदकरणे भूमेः स्थापनमेव न भवेत् । चुक्रोशेति स्पष्टमेव । तस्मिन् देवतारूपे समुद्रे दैत्यानामाधारभूते दण्ड उचित एव । तथापि देवतात्वात् सर्वदेवताभोजकं भगवन्तं प्रार्थयते—यज्ञेश्वर पाहि मेति । समुद्रस्याऽपि देवतात्वम्, 'समुद्राय स्वाहा' इति 'समुद्रियाभ्य स्वाहा' इति श्रुतेः । यज्ञेश्वरेतिसंबोधनं स्वसंबन्धज्ञापनार्थम् । दैत्यानां हननेऽपि मां पालयेति ॥ ३० ॥

एवं समुद्रदण्डनं कृत्वा, पुनर्यथा मज्जनं न करोति तथा शिक्षां दत्त्वा, स्वयं भूम्युद्धारार्थं प्रवृत्त इत्याह—

---

**प्रकाशः।**

सुख इवेति । कशब्दसूचितोऽयमर्थः ।

+ स यज्ञेत्यत्र । स हीति । वज्रो हि । कूटपदसूचितमर्थमाहुः—ते पुनरित्यादि । कुक्षेरिति । समुद्रो हि भगवतः कुक्षिस्तस्येत्यर्थः । न पूर्येतेति । गन्धुरूपत्वात् स्वस्य तत्पूरणार्थं हिंसाप्रधानमेव कर्म स्यादिति भावः । कुक्षिविदारणस्य प्रस्तुतं प्रयोजनमाहुः—सर्वेत्यादि ।

**खुरैः क्षुरप्रैर्दरयंस्तदाप उत्पारपारं त्रिपरू रसायाम् ।**
**ददर्श गां तत्र सुषुप्सुरग्रे यां जीवधानीं स्वयमभ्यधत्त ॥ ३१ ॥**

× खुरैः क्षुरप्रैरिति । तीक्ष्णैः खुरैस्तदापो दरयन् विदारयन् । उद्गतः पारो यस्य, तस्याऽपि पारो यथा भवति तथा । त्रिपरुर्यज्ञवराहः । त्रीणि पर्वाणि यस्य । पादद्वयं द्वयमेकैकं पर्व, मुखं चैकम्; तथैव सोमस्य प्रवृत्तेः । 'पद्भ्यां द्वे सवने समगृणान्मुखेनैकम्' इति श्रुतेः । 'द्वौ स्तोमौ प्रातः सवनं वहतः' इत्यादि श्रुत्या प्रातःसवनस्य द्विरूपत्वम् । मुखमपि द्विरूपमोष्ठाभ्याम् । रसायां स्थितां गां ददर्श । ततस्तामुद्धृतवानिति वदंस्तत्र हेतुमाह—तत्र सुषुप्सुरग्र इति । तत्र पृथिव्यामविकृतायाम् । पृथिव्यधिष्ठातृदेवता भगवतः शय्या भवतीति । भार्या तु सिद्धैव । अग्रे उद्धारानन्तरम् । भूमिमुद्धृत्य तस्मिन् शयनं करिष्यामीति प्रलये भगवान् शेषे शयनं कृतवान् । सृष्टौ पुनः सर्वेषु पुरेषु शयनं करोतीति, पुरुषशब्दव्युत्पत्तेः, सर्वपुरनिर्माणार्थं भूमिमुद्धरिष्यतीत्यर्थः । ननु भूमिः किमिति बहूनि शरीराणि करिष्यतीत्याशङ्क्याऽऽह—यां जीवधानीमिति । या पृथिवी सर्वेषां जीवानामाधारभूता, सा हि सर्वेषां देहान् संपादयति । अतः स्वयमभ्यधत्त, तदुद्धारे सर्वे एव जीवा उद्धृता एव भवन्तीति ॥ ३१ ॥

एवं तां गृहीत्वा निर्गच्छन्तमनुवर्णयति—

**स्वदंष्ट्रयोद्धृत्य महीं निमग्नां समुत्थितः संरुरुचे रसायाः ।**
**तत्राऽऽदिदैत्यं गदया पतन्तं सुनाभसंदीपिततीव्रमन्युः ॥ ३२ ॥**
**जघान रुन्धानमसह्यविक्रमं स लीलयेभं मृगराडिवाऽम्भसि ।**
**तद्रक्तपङ्काङ्कितगण्डतुण्डो यथा गजेन्द्रो जगतीं विभिन्दन् ॥ ३३ ॥**

स्वदंष्ट्रयेति । दैत्यानामतिबलत्वाद्भूमेरानयनप्रतिबन्धमाशङ्क्य स्वदंष्ट्रयेत्युक्तम् । न हि यमगृहीतः केनचिन्मोचयितुं शक्यते, तत्राप्याधिदैविकयमेन, अन्यथा तद्रक्षकास्तत्र विघ्नं कुर्युः । दंष्ट्राया एकत्वं महत्त्वख्यापनाय । उद्धृत्येति वचनं नीयमानायाः पृथिव्या देवता संबन्धकरणख्यापनार्थम् । नितरां मग्नामिति भूमेः सहजासुरत्वं निराकृतम् । निराधारस्याऽधस्ताद्गतिः, उपरिगतिरपि पक्षिणामिव संभवति, न तूत्थानम्, तत्राऽपि स भारः । अतस्तां गृहीत्वा सम्यगुत्थितः सम्यक् रुरुचे । समिति चोररूपेण समागतोऽपि भाराक्रान्तो न रोचते । भूम्या सह स्त्रियेवाऽन्तः संतोषेण, बहिः शोभया च, रोचनं संशब्दार्थः । तत्रापि रसाया उत्थितो लोके न रोचते, अयं तु रसातलात् । अनेन पञ्चखण्डा पृथिव्युद्धृतेति ज्ञापितम् स्वदंष्ट्रापदद्वयेन आध्यात्मिकाधिभौतिकयोर्दैत्ययोर्निराकरणमुक्तम् । आधिदैविकस्य निराकरणमाह—तत्राऽऽदिदैत्यमिति । आदित्वमाधिदैविकत्वेन । आदौ वा दैत्यत्वं प्राप्तम् । गदया पतन्तमिति शूरत्वं

---

प्रकाशः

× खुरैरित्यत्र । 'द्वौ स्तोमौ' इति श्रुतिः सप्तमाष्टकेऽस्ति । 'द्वौ स्तोमौ' प्रातः सवनं वहतो यथाप्राणश्चापानश्च; द्वौ माध्यंदिनसवनं यथा चक्षुश्च श्रोत्रम् द्वौ तृतीयसवनं, यथा वाक् च प्रतिष्ठा च । पुरुषसंमितो वा एष यज्ञो स्थूरिः इति ।

---

१ मुखे क. घ. २ अविरुद्धा पृ ''क घ. ३ ज्ञापनाय. ख ङ.

भगवदीयत्वमतिप्रतिबन्धकत्वं च सूचितम्। सुनाभेन सुदर्शनेन संदीपितस्तीव्रो मन्युर्यस्य। सुदर्शनेन मन्युजननं गदादीनां प्रतिघातसूचकम्। गदादीन्यस्त्राणि तद्युद्धे प्रतिहतानि। पश्चाद्गृहीतं सुदर्शनं विचारयति—यद्यक्रोधेन भगवान्मां क्षिपेत्, तदा गदादिरिवाऽहमपि व्यर्थः स्याम्; अतो भगवतः क्रोध उत्पादनीय इति तदीया ब्रह्मद्रोहादयः भगवते स्मारिताः; तदा क्रोधेन सुदर्शनं प्रक्षिप्तवानिति सम्यग्दीपनं फलपर्यवसायि। तीव्रत्वं फले विलम्बाभावाय। अत एव * जघान। क्रोधेन हननात् पुनरुत्पत्तिः। ननु दोषगुणयोर्विद्यमानत्वात् कथमेकान्ततो वध एव कृत इत्याशङ्क्याऽऽह—रुन्धानमिति। स हि गतिप्रतिबन्धको न भवेद्यदि, तदा न हतोऽपि स्यात्। प्रतिबन्धकत्वादवश्यं हत इत्यर्थः। नन्वचिन्त्यशक्तिर्भगवांस्तत्र तिरोहितो भवेत्, तं वा वञ्चयेत्; हननमेव कुतः कृतवानित्याशङ्क्याऽऽह—असह्यविक्रममिति। न सह्यो विक्रमः पराक्रमो यस्य। ननु तथाप्यपराधान्तरे मारणीयः, न तु स्वापराधे, 'यथानुकल्पः स्वद्रोहः' इति भगवच्छास्त्रात्। तत्राऽऽह—स इति। स दैत्यवधार्थमेव वराहरूपं गृहीतवान्, अन्यथा क्रियान्तरेणेच्छया वा भूमिं जलोपरि स्थापयेत्। ननु कल्पान्तरव्यवस्थयैव भूमिमन्यत्र स्थापयित्वा पश्चान्मारयेदित्याशङ्क्याऽऽह—लीलयेति। ननु पूर्वभक्तिमेव तस्योररीकृत्य, तं भक्तं विधाय, कृतार्थमेव कथं न कृतवान्? सर्वसमर्थत्वात्; इत्याशङ्क्योभयोस्तादृशरूपग्रहणं संवृत्तं वध्यघातकभावापन्नम्, अतो हतवानित्याह दृष्टान्तेन—इभं मृगराडिवेति। अनेन शाश्वतिको विरोधः सूचितः। दृष्टान्तेन प्राप्तं भक्षणदोषं परिहरति—अम्भसीति। उभावपि स्थलचरौ; जले मारणं स्वरक्षार्थमेव, न भक्षणार्थमिति लोके तदपि प्रदर्शितमित्याह—तद्रक्तपङ्काङ्कितगण्डतुण्ड इति। अनेन स बलादग्रे समागम्य भूमिं धृतवानिति लक्ष्यते, अन्यथा तदुदरं न विदारयेत्। अत एव कल्पान्तरे विदारणं नोक्तम्। तस्य हिरण्याक्षस्योदरभेदेन यद्रक्तं स्नुतम्, तदेव किञ्चित्काले स्थितं पङ्कप्रायं जातम्; तेन अङ्कितं गण्डपर्यन्तं तुण्डं यस्य। तस्योदरे बहुदूरे मुखं गतम्, यथाऽन्तर्गतं तस्य जीवतत्त्वं स्वमुखे समायाति, अन्यथा भगवतो भगवदीयानां च द्रोहेण तस्य नरकपातः स्यात्, नीचयोनिर्वा भवेत्। अतो भगवांस्तं स्वस्मिन्नेव स्थापितवान्। इममर्थं दृष्टान्तेन स्पष्टयति—यथा गजेन्द्र इति। स हि कमलादीनां कन्दमात्मसात्करोति। इन्द्रपदं दूरेऽपि विद्यमानं मूलं सप्ररोहमुत्पाटयतीति ज्ञापयति। जगतीमिति। यस्यां पृथिव्याम्। जङ्गमदेहा जायन्ते, तादृशपृथ्वीभेदनेन स्वाभिलषितस्वजातीयदेहोत्पादकपृथिव्यवयवसहितकन्दं भक्षयति। एतत्परिज्ञानार्थमपीन्द्रपदम्। एवं भगवानपि हिरण्याक्षस्य जीवम्, तदिन्द्रियवर्गम्, तस्याग्रिमदेहोत्पादकावयवसहितं विद्यमानदेहसंबन्धिनं दूरीकृत्य, आत्मसात् कृतवानित्यर्थः। इतरनिराकरणपूर्वकस्वग्रहणमेव विशेषभेदनम्॥ ३२॥ ३३॥

एवं दैत्यानां त्रिविधानामपि निराकरणमुक्त्वा भूम्युद्धारमुपसंहरति—

**तमालनीलं सितदन्तकोट्या क्ष्मामुत्क्षिपन्तं गजलीलयाऽङ्ग!।**
**प्रज्ञाय बद्धाञ्जलयोऽनुवाकैर्विरिञ्चिमुख्या उपतस्थुरीशम्॥ ३४॥**

प्रकाशः।

* जघानेत्यत्र। इन्द्रपदमितिपरमैश्वर्यबोधकमिन्द्रपदम्।

१ दृष्टान्तेन. ख; क्रियान्तररूपेण क ङ.

तमालेति । ईशमुपतस्थुरिति संबन्धः । सैरवेशत्वं प्रत्यक्षतो दृष्टम् । अयं यज्ञपुरुष इति भाज्ञाय । बद्धाञ्जलय इति यज्ञारम्भे नमस्काराञ्जलिर्विहितइति, 'भुवनमसि' इत्यत्र तथोक्तत्वात् । यज्ञारम्भे च प्रातरनुवाक उच्यते । प्रकृते कालस्य नियामकत्वाभावादनुवाक इत्येवोक्तम् । सर्वैः क्रियमाणानामनुवाकानां यागभेदेनाऽपि बहुत्वात् बहुवचनम् । आधिदैविकत्वाय विरिञ्चिमुख्या इति । तस्य यज्ञत्वमीशत्वं च साधयति—तमालनीलां क्ष्मां सितदन्तकोट्या उत्क्षिपन्तमिति । तमालैर्नीला, तमालवद्वा नीला । तमालास्तमोवन्नीलवृक्षाः । सृष्टावज्ञानं भयं च हेतुः । तमस्त्वज्ञानमूतम्, वन वृक्षरूपं भयहेतुः । नीलोऽपि गुण. शृङ्गारवद्रसजनकः । त्रितययोगे सर्गो रसालो भवति । सर्गोत्पादनसामर्थ्यख्यापनाय क्षमाधर्मयोगात् क्ष्मेत्युच्यते । अस्याः सजीवत्वनिराकरणार्थं दन्तकोटिसंबन्धः । देहाऽविशीर्णत्वाय सितत्वम् । दंष्ट्राऽपि स्वस्य प्रियत्वज्ञापनाय दन्तत्वेनोक्ता । कोटिपदेन भगवतो माहात्म्यम् । सर्वेषामेवेशानां भूमौ स्नेहातिशयख्यापनाय सङ्ख्यावाचकपदप्रयोगः । उत्क्षेपणमुत्तोलनम्, अनेन भूमिः स्वरसात्रागतेति ज्ञापितम् । कोट्या भूमिस्पर्शनेन वेदिरिव स्पृश्यैनोद्धृता निरूपिता । ऐश्वर्यं स्पष्टमेव । गजलीलयेत्यनेनापि ऐश्वर्यम्, यज्ञत्वम्, भक्तकृपालुत्वं च पूर्वोक्तमुपसंहृतम् । अङ्गेति कोमलसंबोधनं परिज्ञानार्थम् ॥ ३४ ॥

द्वादशार्कसमैः श्लोकैः कर्मनिर्णय उच्यते । ब्रह्मादीनामुत्तमत्वात् द्विविधं कर्म रूप्यते । १ । उभयोर्भगवत्त्वाय पङ्क्तिः पङ्क्तिर्गुणास्तथा । प्रमाणेन प्रमेयेन निर्णयो द्विविधो यतः । तत्र प्रमाणरूपं हि पङ्क्तिरादौ निरूप्यते ॥ २ ॥ ब्रह्मादीनां देवत्वात्वेऽपि यज्ञे ऋषीणामेव प्रयोजकत्वात् 'ऋषय ऊचुः' इत्याह । प्रथमतो यज्ञस्य सर्वोत्कृष्टत्वं प्रामाणिकत्वं च वदन् नमस्यति—

## ऋषय ऊचुः ।

**जितं जितं तेऽजित यज्ञभावन त्रयीं तनुं स्वां परिधुन्वते नमः ।**
**यद्रोमगर्तेषु निलिल्युरध्वरास्तस्मै नमः कारणविग्रहाय ते ॥ ३५ ॥**

÷ जितं जितमिति । ते जितमेव जितम् । यज्ञार्थं शत्रुहननं वेदे निरूप्यते, न केवलं शत्रुजयः; हननस्य दोषजनकत्वात् । अतो यज्ञार्थं शत्रुजयात् त्वयैव जितम् । किञ्च, कालेन सर्वे जिताः । कालमुत्तमपि भक्षयित्वा तद्भक्षितां पृथिवीमानीतवानसीति त्वयैव जितम् । प्रलये कालग्रस्तान्वा उत्पादयतीति 'सर्वोऽपि सावधारणः' इति ते जितमेव जितमित्युक्तम् । कदाचित्कस्यचिज्जयादिक्रिया उत्कृष्टा बह्वर्थसाधिका न भवति काकतालीयन्यायेन । नैतावता जयनिर्द्धार इत्याशङ्क्याऽऽह—हे अजितेति । न कदाऽपि केनाऽपि जित इति । एतादृशजयस्तस्य सर्वदेत्यर्थः । यज्ञैः सर्वे पदार्था भाव्यन्ते उत्पाद्यन्ते, अयं तु यज्ञान् भावयति । अतोऽपि जयनिर्द्धारः । एवं स्तुत्वा नमन्ति—त्रयीं तनुं परिधुन्वते नम इति । 'रूपविशेषे नमनं न कर्त्तव्यम्' इति निषेधोऽत्र न घटते, अस्यैव वेदरूपत्वात् । अथर्वाङ्गिरसां मुख्यतया

---

प्रकाशः ।

÷ जितमित्यत्र । कारिकासु । द्विविधमिति । प्रमाणानुरोधिप्रमेयरूपं स्वतन्त्रप्रमेयरूपं च । द्विधा निरूपणप्रयोजनमाहुः—प्रमाणेनेत्यादि । द्वेधा निर्णयार्थं तथेत्यर्थः । विवृतौ । सर्वोऽपीत्यादि । 'सर्वोऽपि वाक्यात्मपदसमूहः सावधारणः' इति न्यायादित्यर्थः । वेदरूपत्वादिति । त्रय्यात्मकत्वात् । चतुष्ट्यात्मकत्वं कुतो नोक्तमित्यत आहुः—अथर्वेत्यादि ।

ब्रह्मप्रतिपादकत्वात् ब्रह्मोपयोगित्वेन त्रयीशेषत्वेऽपि ज्ञानशेषत्वमेव मन्यमानाः, प्रमाणप्राधान्येन शास्त्रनिरूपकाः कर्माणि वेदत्रयमेव निर्द्धारितवन्तः। अतो वराहरूपं त्रयीमयमेव, वेदानामपि तस्मिन् शरीरे प्रवेशस्योक्तत्वात्। तस्य च परितः कम्पनं वेदानां विक्षेपार्थम्, अन्यथा त्रय्याश्चतुर्थशेषत्वे वेदानां यज्ञे तात्पर्यं न स्यात्, तथा सति सर्वमुक्तिरेव स्यात्। परितो धूनने न हीनभावमपि, प्रमाणस्य दृढकार्याजनकत्वात् प्राप्स्यतीति भयाऽपि नमनम्, सर्वेष्टसाधकत्वादपि। अनेन स्वार्थे वेदभ्रामणं न कारणीयमिति प्रार्थना सूचिता। ननु भवतां वेदभ्रामणे किं स्यात्? योगेन यज्ञान् दृष्ट्वा, दर्शनानुसारेण तान् विधाय, कृतार्था भविष्यन्ति भवन्त इत्याशङ्क्य, परिधूनने यज्ञदर्शनमेव न भविष्यतीत्यत्र हेतुं वदन्तो नमस्यन्ति—यद्रोमगर्तेष्विति। यस्य भगवतो रोमोद्गमस्थाने ये कूपाः, ते विशाला गर्ता इत्युच्यन्ते। तेषु सर्वे यज्ञा निलीनाः। स हि जलादुद्गत उपरि निविष्टान् वेदान् विधूननेन दूरीकरिष्यतीति ज्ञात्वा स्वस्याऽपि दूरीकरणशङ्कया श्रुत्या संबद्धा रोमगर्तेषु निलीनाः। तत्र रोमावलम्बनमस्तीति रोम्णां बर्हिष्ट्वात् यज्ञानां चलनेन स्कन्दनदोषोऽपि न भवति। 'अस्कन्नं हि तत् यद्बर्हिषि स्कन्दति' इति श्रुतेः। अतः सर्ववेदानां यज्ञानां च कारणभूतः। उभयप्रसवकर्ता देहो यस्य, तादृशायान्यत्कर्तुमशक्ता नमनं कुर्वन्तीत्यर्थः। 'कारणसूकराय ते' इत्यपि वा पाठे तुल्योऽर्थः॥ ३५॥

एवं पुरुषोत्तमत्वम्, वेदयज्ञरूपताम्, स्वस्वामित्वं च निरूप्य तदुपपादयन्तोऽतज्ज्ञान् निन्दन्ति—

**रूपं तवैतन्ननु दुष्कृतात्मनां दुर्दर्शनं देव यदध्वरात्मकम्।**
**छन्दांसि यस्य त्वचि बर्हिरोमस्वाज्यं दृशि त्वङ्घ्रिषु चातुर्होत्रम्॥ ३६॥**

+ रूपमिति। तवैतद्रूपं निश्चयेन दुष्कृतात्मनां पापसंस्कृतभूम्यवयवनिष्पादितदेहानां द्रष्टुमप्ययोग्यम्, यथा दिवाभीतस्य सूर्यरूपम्। ज्ञानभजनादिकं तु दूरे। नैतावता कर्ममार्गे काचित् क्षतिः। तत्र हेतुद्वयमाह—हे देव यदध्वरात्मकमिति। देवाः पापेभ्यस्तिरोहिता भवन्ति। धर्मश्च यज्ञः, अधर्मे न प्रकाशते। अंशान्तरं तु वराहे नास्ति, यतस्तद्रूपमध्वरात्मकमेव। एवं दुष्टदुर्ज्ञेयत्वमुक्त्वा वेदत्वमादावुपपादयन्ति—छन्दांसि यस्य त्वचीति। छन्दांसि गायत्र्यादीनि सप्त, अनन्तानि वा तानि त्वचि अन्तर्बहिर्व्याप्तायाम्। अनेन तत्र सर्ववेदनिवेशनमुक्तम्। अर्थरूपाणि वा। छन्दसामपि विनियोगात् तदाऽध्वरात्मकतैव निरूप्यते। त्रयी तु तत्रौत्पत्तिकसंबन्धयुक्ता। बर्हिरोमसु। यज्ञियाः पदार्थाः पुरुषावयवैरुत्पादिताः। तदधिष्ठातृदेवतारूपे वराहे निवेदयन्ते तदा सर्दैवाभवन्तीति। रोम्णां च बर्हिरुत्पादकत्वं वक्तव्यम्। अतो बर्हिरधिष्ठातृरोम्णां विधूननेन पतितानां कुशकाशमयबर्हिष्ट्वम्। आज्यं दृशि। आध्यात्मिकं रूपमाज्यम्,

---

प्रकाशः।

ब्रह्मोपयोगित्वेनेति। ब्रह्मिष्ठो ब्रह्मा भवतीति श्रुतेस्तदुपयोगित्वेन।

+ रूपमित्यत्र। सर्ववेदनिवेशन(?)पूर्वश्लोक एवोक्तत्वात् पुनस्तथा व्याख्यानं पुनरुक्तिमावहतीत्यरुच्या पक्षान्तरमाहुः—अर्थरूपाणीति। गायत्र्याद्यभिमानिदेवतारूपाणि। अर्थरूपाणां तेषामनुग्राह्यत्वे युक्तिमाहुः—छन्दसामित्यादि। 'गायत्रो वा अग्निर्गायत्रं छन्दः' इत्यादावर्थरूपाया देवताया एव छन्दोक्षरसङ्ख्यापूर्वकं विनियोगात, 'छन्दांसि मे रथो भवत' इत्यत्रापि तेषां साक्षादेव विनियोगाद्वा, तथेत्यर्थः। नन्वध्वरात्मकत्वे पूर्वश्लोकोक्तत्रयीरूपताविरोध इत्यत आहुः—त्रयी त्वित्यादि। तथा चौत्पत्तिकसूत्रे

१ इम स ह न

आधिदैविकं चक्षुः । अत एव चक्षुषा आज्याभिघारणम् । चक्षुषः सत्यत्वमाज्यस्य प्रजापतित्वं च तत्त्वस्यापकम् । तुशब्दः पक्षान्तरं व्यावर्तयति । 'वसन्तो अस्यासीदाज्यम्' इति । 'सरसमह्नवसन्ताय प्रायच्छत्' इति श्रुतेर्वरप्राप्तमेव वसन्तादे राज्यादिरूपत्वम् । तदत्र नोपयुज्यते । अङ्घ्रिषु चरणेषु चातुर्होत्रं चतुर्होतृवर्गः ॥ ३६ ॥

एवं द्रव्यर्त्विजां निवेशनमुक्त्वा, पात्राणां निवेशनं वराहावयवेषु सफलमाह—

**स्रुक् तुण्ड आसीत्स्रुव ईश ! नासयोरिडोदरे चमसाः कर्णरन्ध्रे ।**
**प्राशित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्वणं ते भगवन्नग्निहोत्रम् ॥ ३७ ॥**

* स्रुक् तुण्ड इति । स्रुगिति जात्यपेक्षया एकवचनम्, जुह्वभिप्रायेण वा, तुण्डे मुखे आसीत् । स्रुव इति जात्यपेक्षया एकवचनम् । स्रुवौ, अग्निहोत्रदर्शपौर्णमासयोर्भेदेन स्रुवविधानात् । इडापात्रमुदरे । अस्य भगवतः सर्वत्र यागे, सर्वत्र तत्तत्पात्रेषु, सान्निध्यसामर्थ्यार्थमीशेति संबोधनम् । इडाभागस्योदरप्रवेशसाम्येन आकृतिसाम्येन च उदरे इडापात्रस्य निवेशनम् । चमसाः सोमपानपात्राणि । कर्णरन्ध्र इति आधिदैविके चमसे यशः स्थापितम् । तदाध्यात्मिकपरव्याख्याने प्राणत्वेन निरूपितम्, तथापि यशोरूपमिति तत्कर्णे पेयमिति कर्णरन्ध्रे चमसानां निवेशनम् । प्राशित्रं ब्रह्मपात्रम्, तदास्ये मुखविवरे । ब्रह्मभागस्य दन्तास्पर्शनेन गिलनविधानात् । ग्रसने गिलनात्मके कर्मणि जिह्वामूले वा सर्वे ग्रहाः, ऐन्द्रवाय्वादिपात्राणि । तुशब्देन पात्राणां निवृत्तिरुच्यते, वाक्यमध्ये तुशब्दस्य विद्यमानत्वात् । ग्रसनस्य क्रियारूपत्वात् ग्रहा अपि सोमा एवाऽत्र ग्राह्याः, तत्पानं वा । यस्य ते भगवतश्चर्वणक्रियैवाऽग्निहोत्रं कर्म । 'अग्निहोत्रफला वेदाः' इति सर्वेषामेव यज्ञानामग्निहोत्रानुप्रवेशात् चर्वणत्वम् ॥ ३७ ॥

क्रियाणां साधिकरणानां भगवति निवेशनमाह—

**दीक्षानुजन्मोपसदः शिरोधरं त्वं प्रायणीयोदयनीयदंष्ट्रः ।**
**जिह्वा प्रवर्ग्यस्तव शीर्षकं क्रतोः सभ्यावसथ्यं चितयोऽसवो हि ते ३८**

× दीक्षानुजन्मेति । भगवान् वराह इदानीमवतीर्णः । पुनर्यजमानरूपेणाऽवतरति प्रतियज्ञम् । 'यज्ञो यजमानः' इति, 'गर्भो वा एष यद्दीक्षितः' इति च, 'क्रीते सोमे पूर्णतेजा जायत एव' इति

---

प्रकाशः।

तथा निर्णीतत्वेनाऽविनाभावात्र त्रयीरूपत्वाविरोध इत्यर्थः । तत्त्वस्यापकमिति । आधिदैविकत्वस्यापक (त्व) म् । पक्षान्तरमेव स्फुटीकुर्वन्ति–वसन्तो अस्येत्यादि ।

* स्रुक् तुण्ड इत्यत्र । इडापात्रमिति । यत्र हुतशेषं पुरोडाशं निधाय स्वं स्वं भागमृत्विजो विभजन्ति, तत्पात्रम् । आधिदैविके चमस इत्यादि । 'तत् अर्वाग्बिलश्च सद्रूर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम् । तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदाना' इति मन्त्रस्य आध्यात्मिकपरव्याख्याने 'प्राणा वै यशः' इति श्रुत्या प्राणत्वेन निरूपितमित्यर्थः ।

× दीक्षेत्यत्र । साधिकरणानामिति । अभिसहितानाम् । दीक्षाया जन्मत्वाय प्रमाणान्याहुः–यज्ञ इत्यादि । उपसदास्तिस्रः । क्रतौ प्रवर्ग्यस्य पात्ररूपत्वेऽपि कर्माधिकरणत्वेन कर्मणि प्रवेश इति ज्ञापनायाहुः–

---

१ जालाभ्यायाम् ग. २ एवमाने. ग. सर्व- ङ.

च श्रुतेः। दीक्षासंस्कारो दीक्षाख्यदेवताया यजमाने स्थापनम्, तदिष्ट्या क्षौरादिना च सिध्यति। उपसदो ग्रीवा, स एव शिरोधरशब्देनोच्यते शिरो बिभर्तीति व्युत्पत्त्या, 'ग्रीवा उपसदः' इति श्रुतेः। प्रायणीयोदनीये इष्टी। उपसदादौ सोमक्रयात् पूर्वं सोमान्ते च क्रियेत्युभयोरेकं द्रव्यमेका च देवता, एकं च पात्रमिति कालसंज्ञाभेदात् कर्मभेदः। ग्रहाणां मुखमध्ये स्थानात्प्रायणीयोदयनीययोः पार्श्वयोः स्थानमुचितमेव। उभयोर्दंष्ट्रात्वं दिक्परिज्ञापकत्वेन सर्वो हि मृत्युभिर्हतो दिशः परिजानाति, अन्यथा मवाटवीन्यायेन रजस्वलाक्षो दिशो न जानाति। मृत्युनैव हि दिशः परिज्ञाप्यन्ते। जिह्वा प्रवर्ग्य इति प्रवर्ग्यपात्रमेव शिरः, कर्म चाऽऽध्यात्मिकम्। आहुत्यनन्तरं या ज्वाला, सा आकृतिसाम्याज्जिह्वा स एव पुनः प्रवर्ग्यस्तव क्रतुरूपस्य शीर्षकं शिरः। एवं क्रियानिवेशनमुक्त्वा तदधिकरणनिवेशनमाह—सभ्यावसथ्यं चितयोऽसवो हि त इति। सभ्यावसथ्ययोरिष्टकाचयनाभावात् पृथङ्निर्देशः। शालामुखीये धिष्ण्येषु चयनं स्पष्टमेव, दर्शपूर्णमासादिष्वपि चयनविधानात्। 'अग्निहोत्रे दर्शपूर्णमासयोः पशुबन्धे चातुर्मास्येषु' इति श्रुतेः। दक्षिणाग्निप्राजहितयोरपि चयनत्वम्। शामित्रं तु प्राजहितमाहवनीयो वा। निर्मन्थ्यपक्षस्त्वनुकल्पः। असवः प्राणाः। नव वै पुरुषे प्राणाः। धिष्ण्यान्यपि नव। गार्हपत्यो दशमः ॥३८॥

नामधेयानां विनियोगमाह—

**सोमस्तु रेतः सवनान्यवस्थितिः संस्थाविभेदास्तव देहधातवः।**
**सत्राणि सर्वाणि शरीरसन्धिस्त्वं सर्वयज्ञक्रतुरिष्टिबन्धनः ॥ ३९ ॥**

* सोमस्त्विति। सोमः सोमयागः। 'सोमेन यजेत' इत्यत्र मत्वर्थस्याऽऽश्रयणात्, ओषधिपक्षेऽपि देवतात्वात्, सर्गजनकत्वेन रेतस्त्वम्। ग्रहाणां सोमत्वे अविकृतः सोमो रेतस्त्वेन वक्तव्यः। सवनानि त्रीणि। अवस्थितिः जाग्रत्स्वप्नसुषुप्तयः। संस्था अग्निष्टोमादयस्त्रयः, पञ्च, सप्त वा। तेषां सर्व एव विभेदाः तव देहधातवः। चर्म मांसमस्थि चेति त्रयः, त्वङ्मांसस्नाय्वस्थि मज्जेति पञ्च, सप्तपक्षे चर्मरुधिरयोरनुप्रवेशः, चतुष्पक्षे त्रयो रुधिरं च। सर्वथा देहधातव एव सर्वे संस्थाभेदाः। सत्राण्येकाहादीनि सहस्रसमान्तानि सर्वाण्यवान्तरभेदयुक्तान्यपि शरीरस्याऽस्थ्नां संयोगस्थानानि, तान्येव सन्धिशब्देनोच्यन्ते। सर्वयज्ञाः क्रतवश्च त्वमेव। यज्ञाः सप्तदश[१], क्रतवो द्वादशाहादयोऽश्वमेधान्ताश्चयनसहिताः।

प्रकाशः।

कर्म चेत्यादि। तस्मिन् पात्र (त्रे) दुग्धहोमरूपं यत्कर्म तदपि शिर इत्यर्थः। तस्य जिह्वात्वं साधयन्ति—आहुतीत्यादि। सभ्यावसथ्ययोरिति। सभ्यो होमरहितोऽग्निः, आवसथ्य औपासनाग्निः; तयोः। नव वा इति। एतेन पञ्चप्राणपक्षोऽत्र न संगृहीत इति ज्ञापितम्।

* सोम इत्यत्र। सोमयाग इति सिद्धान्ते सोमशब्दो यज्ञनामधेयम्। 'यदग्निष्टोमः सोमः पुरस्तात् स्यादुक्थ्यं कुर्वीत, यद्युक्थ्यं (?) स्यादतिरात्रं कुर्वीत, यज्ञक्रतुभिरेवाऽस्य देवता वृङ्क्ते' इत्यत्र सोमपदस्याऽग्निमादिसामानाधिकरण्यात्, कुर्वीतेति क्रियालिङ्गात्, यज्ञक्रतुभिरित्युपसंहाराच्च, अत्राऽपि सवनादिनाममेव प्रायपाठे द्रव्यादेर्निवेशायोगाच्च। आधुनिकमते तु तत्र मत्वर्थे लक्षणाऽऽश्रीयते, तदा सोमपदं द्रव्यवाचकमिति तस्मिन् पक्षे कथं सोमस्य रेतस्त्वमित्यत आहुः—सोमेनेत्यादि। पक्षान्तरमाहुः—ग्रहाणामित्यादि। तेषां प्रसङ्गे निवेशस्योक्तत्वादत्र तथा वक्तव्य इत्यर्थः। सप्तदशा(श) इति। आश्रावयादिषु तद-

[१] सप्तदशाहादय. क. ख. ग

इष्टयो दर्शपूर्णमासादयः । बन्धनानि नसाः ॥ ३९ ॥

एवं सर्वनिवेशनमुक्त्वा यज्ञरूपमुपसंहरन् नमस्यति—

**नमो नमस्तेऽखिलमन्त्रदेवताद्रव्याय सर्वक्रतवे क्रियात्मने ।**
**वैराग्यभक्त्याऽऽत्मजयानुभावितज्ञानाय विद्यागुरवे नमो नमः ॥ ४० ॥**

॰ नमो नमस्त इति । आदरे वीप्सा, स्वस्य स्वभोगस्य च तत्फलत्वात् । अस्य रूपान्तरत्वव्यावृत्त्यर्थं त इति । अखिला मन्त्रा, इषेत्वादयः, वस्वादयो देवताः, द्रव्याणि व्रीह्यादीनि । देवतोद्देशेन द्रव्यं मन्त्रेण देवतायै समर्प्यत इत्यलौकिको यागो मन्त्रदेवताद्रव्यात्मको भवति । पुरुषप्रयत्नस्तु लौकिकः,अभिनयरूपत्वात् स न यागः,प्रत्यक्षसिद्धत्वात् । सर्वक्रतवे सर्वयागभेदरूपाय । क्रियात्मने । अभिनयोऽपि यागाविर्भावहेतुरिति क्रियाप्यतीन्द्रिया कैश्चिदाश्रिता, वस्तुतस्तु तत्रैवाऽन्तर्भूता मन्त्राधिकरणिका यजमानाविष्टभगवन्निष्ठा । एवं सर्वत्र क्रियारूपत्वेन स्वर्गादिसाधकत्वेन रूपेण नमस्कारं कृत्वा ब्रह्ममीमांसानुसारेण वेदार्थरूपोऽप्ययमेवेत्याह—वैराग्येति । वैराग्यं विषयवैतृष्ण्यम् । भक्तिर्भगवति श्रवणादिः, स्नेहो वा । आत्मजयोऽन्तःकरणजयः । त्रयमप्यन्तःकरणशोधकम् । अत एव तैरनुभावितं यज्ज्ञानं ब्रह्मात्मानुभवः, तद्रूपाय । विद्या उपनिषत्, वाक्यार्थज्ञानरूपा, तज्जनको गुरुः । उत्तरकाण्डे एतावत्येव सामग्री षड्गुणा भगवद्रूपा । पुनर्नमनं काण्डभेदात् ॥ ४० ॥

एवं षड्भिर्यागरूपत्वं निरूप्य आधिदैविकं रूपं प्रकृतोपयोगि निरूपयति षड्भिः—

**दंष्ट्राग्रकोट्या भगवंस्त्वया धृता विराजते भूधर ! भूः सभूधरा ।**
**यथा वनान्निस्सरतो दता धृता मतङ्गजेन्द्रस्य सपत्रपद्मिनी ॥ ४१ ॥**

दंष्ट्राग्रकोट्येति । दंष्ट्राया अग्रम्, तस्य कोटिरेकदेशः । माहात्म्यार्थमेवमुक्तम् । ऊर्ध्वं धारणात्तथैव भवति । तादृश्याः क्रियाया असंभावितत्वमाशङ्क्य भगवन्निति संबोधयति । तत्रापि भगवत्प्रयत्न एव व्यापृत इत्याह—त्वया धृतेति । अन्यधृतायाः, तत्रापि दंष्ट्राग्रभिन्नाया अशोभामाशङ्क्याऽऽह—विराजत इति । भूधरेति संबोधनं योगस्य दर्शनान्माहात्म्यार्थम् । इतरभूधरसाम्याभावाय सभूधरेत्युक्तम् । सपर्वता भूमिर्धृतेत्यर्थः । सपर्वताभूमिर्निम्नोन्नता शोभारहितेव भवति । विशेषशोभायां हेतुमाह—यथा वनादिति । वनाज्जलात्, स्थलकमलिनीं गृहीत्वा वनादेव वा । अवनात् रक्षणाद्वा हेतोर्निःसरतो मत्तगजेन्द्रस्य दन्तेन धृता पत्रसहिता पद्मिनी कमलिनी । भगवदर्थमुद्धृता गजेन्द्रेण कमलिनी शोभत इत्यविवादम् । तथा यज्ञार्थं यज्ञेन समुद्धृता भूमिः सर्वपुरुषार्थसाधिकेति, भर्तृसहितेति, भर्तृपूजितेति वा,,

प्रकाशः।

शाक्षरनिर्वर्त्याः । केचित्तु ' असोमा यज्ञाः ससोमाः क्रतवः' इत्याहुः ।

॰ नमो नम इत्यत्र । प्रत्यक्षसिद्धत्वादिति । चोदनालक्षणस्याऽप्रत्यक्षस्यैव धर्मत्वेन, प्रत्यक्षसिद्धस्याऽतथात्वात् स न याग इत्यर्थः । आश्रितेति । यज्ञत्वेनाऽऽश्रिता । तत्रेति । क्रियायामिति हृदि ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे त्रयोदशाध्यायविवरणं सम्पूर्णम् ।

१ दाश्रिता ग.  २ यजमानायाविष्ट. ख. ग.

ऊर्ध्वं निर्गच्छन्ती वा, कैलासशिखरे मेघवत् विराजत एव। प्राकृतवनादपि निःसरता गजेन धृता ( भूमिः ) शुभ्राधिकरणा, आश्चर्येण लोकैर्दृश्यमाना, चित्ररूपमध्यगतेव विराजते। आकृतिः प्रकृतेऽपि तुल्या ॥ ४१ ॥

एवं भगवत्संबन्धात् भूमेः सौन्दर्यातिशयमुक्त्वा, भगवतस्तादर्थ्यदोषपरिहाराय तथा कृत्वा, भगवतो रूपातिशयमाह—

**त्रयीमयं रूपमिदं च सौकरं भूमण्डलेनाऽथ दता धृतेन ते।**
**चकास्ति शृङ्गोढघनेन भूयसा कुलाचलेन्द्रस्य यथैव विभ्रमः ॥ ४२ ॥**

त्रयीमयमिति। सौकरमपीदं रूपं वेदत्रयात्मकत्वेन स्वरूपतो महदपि, विराजमानमपि, दता धृतेन भूमण्डलेन भिन्नक्रमेणाऽधिकं चकास्ति। वेदादिमानेनाऽलौकिकं रूपमाहात्म्यम्, न तु लौकिकम्। इदं तु दन्ताग्रे भूमण्डलस्थापनेन लोकप्रसिद्धत्वात् अलौकिकापेक्षयाऽप्यधिकम्। यथा तुरगाद्यपेक्षयाऽपि चित्रादिस्थितास्तुरगादयोऽतिशोभायुक्ता भवन्ति, तथा वर्णान्तरभावमापन्ना वर्णान्तरेण धृता वर्णान्तरस्य शोभाजनिका भवति। इममेवार्थं वर्णकृतं शोभातिशयं दृष्टान्तेन स्पष्टयति—शृङ्गोढघनेनेति। श्वेतशृङ्गे आरूढेन नीलमेघेन स्थूलेन तथा मेरुः शोभते। तत्राऽपि त्रयाणामन्योन्यस्नेहेन सचेतनत्वे विलासो भवति। तदा दृश्यमानरूपमिव तद्भवतीत्यभूतोपमा विभ्रमशब्देनोच्यते ॥ ४२ ॥

एवं दम्पत्योरन्यतरसंबन्धेनाऽन्यतरशोभामुक्त्वा, तयोः पितृत्वं स्थापयन्तः स्वार्थं भूस्थापनं प्रार्थयन्ति—

**संस्थापयैनां जगतां सतस्थुषां लोकाय पत्नीमसि मातरं पिता।**
**विधेम चाऽस्यै नमसा सह त्वया यस्यां स्वतेजोऽग्निमिवाऽरणावधाः ४३**

संस्थापयेति। एनां जगतां स्थावरसहितानामुद्भवाय, सर्वेषां मातरं तव पत्नीं पितृत्वात् सम्यक् स्थापय। यथा पुत्राणामर्थे भार्यां स्थापयित्वा गृहस्थो देशान्तरे गच्छति, तथा त्वयाऽपि विधेयम्, यतस्त्वं पिताऽसि। अनेन प्रत्युपकारमनपेक्ष्यैव त्वयेयं स्थापनीया, इयं च तथैव परिपालयत्विति निरूपितम्। तथाप्यस्माभिः स्वानृण्याय पूर्णकामयोर्युवयोर्नमस्कारातिरिक्तं कर्तव्यं न भवतीति त्वया सह अस्यै नमसा विधेम। नमः आ समन्तात् विधेमेत्यर्थः। नमेत्यव्ययम्, कर्तव्यनिर्देशो वा। नमस्कारपुरःसरं पूजां करिष्याम इत्यर्थः। अथवा, अस्यै अस्याः प्रियार्थं नमसा सह त्वया सह च विधेम। भक्तिं यज्ञादिकं च कुर्वाणा आज्ञाकारिणो भविष्याम इत्यर्थः। किञ्च, इयं स्थापनीयैव, यत इयं गर्भिणी। भगवदाकृतिविशेषान् भक्तिसाधकान् प्रसविष्यतीत्यभिप्रायेणाऽऽह—यस्यां स्वतेज इति। मार्गद्वयप्रवर्तको भवान्, यथा अध्वरे त्रयीमयमग्निं यज्ञसिद्ध्यर्थमधाः, एवमस्यामपि स्वतेजः, स्वस्य पुरुषोत्तमाकृतिम्, पुरुषाकृतिं वा भूमौ स्थापितवान् ॥ ४३ ॥

इमां प्रार्थनामुक्त्वा कर्तव्यान्तरं नाऽवशिष्यत इत्यभिप्रायेण तस्य पूर्वकृतमेव चरित्रमनुवदन्तः स्तुवन्ति—

**कः श्रद्दधीताऽन्यतमस्तव प्रभो! रसां गताया भुव उद्विवर्हणम्।**
**न विस्मयोऽसौ त्वयि विश्वविस्मये यो माययेदं ससृजेऽतिविस्मयम् ४४**

कः श्रद्दधीतेति । अन्यतमस्त्वत्तोऽन्यो भूत्वा महानपि भुव उद्बिर्हणमुद्वाहम्, वहनम्, उद्धरणं वा, अन्यैरुच्यमानमपि श्रद्धां कुर्यात् । त्वन्माहात्म्यमवाङ्मनसगोचरं दृष्टाऽप्युक्तं न विश्वासं जनयति । स्वस्य माहात्म्यमेतादृशकार्यासक्तिं च मत्वा, असम्भावनया उपाख्यानानां मिथ्यात्वं परिकल्प्य, न कदाचिदनीदृशं जगदिति मन्यन्ते । तद्वाक्येनान्येऽपि च भ्रान्ता भवन्ति । यत्राऽन्यकरणमपि न मन्यन्ते, तत्र स्वकरणं दूरे । तव त्वेतदाश्चर्यहेतुरपि नेत्याह—न विस्मयोऽसाविति । असावुद्धारस्त्वयि न विस्मयः, आश्चर्यं न भवति, तव वा गर्वहेतुर्न भवति । तत्र हेतुः—विश्वविस्मय इति । विश्वमेव तव विस्मयरूपम् । यथा रेतो रूपाज्जलान्मयूरादिः पुरुषादिर्वा जायते, बीजाद्वटादिर्वा । किञ्च, विश्वमेव विस्मयमाश्चर्यं यस्मिन्निति भवत्येवेदं माहात्म्यसूचकम् । इतोऽप्यन्यन्महन्माहात्म्यं तदाह—यो माययेदमिति । इदमेव जगत्, मायया स्वप्नादौ प्रतिपुरुषं भिन्नप्रकारेण, एकस्मिन्नपि पुरुषे क्षणादन्यथारूपं च, ससृज इति । सृजत इति पाठे 'यो भवान्' इति । तत्राप्यतिविस्मयम्, पर्वताग्रे समुद्रः, दिवसे नक्षत्राणि, स्वशिरश्छेदादिर्वा; स्वयं तेनैव रूपेण पश्यतीति ॥ ४४ ॥

ननु तथापि भवद्भ्यो ज्ञानं मोक्षो वा देयः, तदर्थमधिकारो वा सम्पादनीयः । तत्कथमेतावतैव विरमणमित्याशङ्कयाऽऽहुः—

**विधुन्वतो वेदमयं निजं वपुर्जनस्तपःसत्यनिवासिनो वयम् ।**
**सटाशिखोद्धूतशिवाम्बुबिन्दुभिर्विमृज्यमाना भृशमीश ! पाविताः ॥४५॥**

विधुन्वत इति । इदं वेदात्मकं वपुः जलादुद्धृतं विधुन्वतस्तव सतः प्रसङ्गादेव वयं जनस्तपःसत्यनिवासिनस्त्वत्सटाशिखोद्धूतशिवाम्बुबिन्दुभिः, पुनः पुनरागतैर्विशेषेण मृज्यमाना घर्षणपूर्वकं प्रक्षाल्यमाना अत्यर्थमन्तर्बहिः पाविताः । अतिपवित्रैर्ज्ञानादिकं प्राप्यत एव । मुखे मन्त्रं पठन् हस्तेन मार्जनादौ लोकः किल पावितो भवति । तत्र वेदमयेनैव शरीरेण वेदार्थरूपेण बर्हिषा कण्ठोद्धतेन पवमानेन बर्हिर्मुष्ट्याकृतिरूपेण । तत्रापि तथाऽऽलोडनेन कल्याणरूपाम्बुभिर्मार्जने किं वक्तव्यमित्यर्थः । त्रिविधानां ग्रहणमेकविधाधिकारासिद्ध्यर्थम् ॥ ४५ ॥

एवं भगवन्तं स्तुत्वा, स्तोत्रमुपसंहरिष्यन्तः, स्वल्पं स्तुतमिति स्वस्य दोषं परिहरन्ति—

**स वै बत भ्रष्टमतिस्तवेषते यः कर्मणां पारमपारकर्मणः ।**
**यद्योगमायागुणयोगमोहितं विश्वं समस्तं भगवन् ! विधेहि शम् ॥४६॥**

स वै बतेति । तव गुणानुवर्णनरूपे स्तोत्रे अल्पं बह्विति विभागो व्यर्थः, त्वद्गुणानामानन्त्यात् । स्वबुद्ध्यनुसारेण तु स्तुतमेव यस्तु पुनः सर्वाण्येव भगवच्चरित्राणि कथयिष्यामीति प्रारभते, स निश्चयेन भ्रष्टमतिः । अष्टत्वमर्यादो भवतीति बतेति खेदे । भगवद्गुणेषु चित्तं प्रसारयन्नपि भ्रष्टबुद्धिर्जात इति तस्य बुद्धिभ्रंशमेवाऽऽह—अपारकर्मणः कर्मणां पारं य ईषते, भगवतः सर्वानेव गुणान् कथयिष्यामीति, तदेयं बुद्धिः समीचीना भवेत्, यदि कर्मणामन्तो भवेत् । आतानामप्यन्तो नाऽस्ति, जनिष्यमाणानां चेति वक्तुमपारकर्मण इत्युक्तम् । तत्रापि ये सर्वज्ञा वेदाः, अन्ये वा भगवद्भावं प्राप्ताः, ते वदन्तु नाम, ये पुनर्मायया मोहिताः ते कुतो वदेयुः ? विश्वस्मिन् सर्व एव च मोहिताः । तदाह—यद्योगमायेति । यदस्मात्कारणात् समस्तमेव विश्वं योगमायायाः सत्त्वादिगुणैर्मोहितम् । सा हि जगत्कर्त्री स्वकार्यसिद्ध्यर्थं मोहयत्येव,

१ विशोद्धूत. ग.

अतो मायामोहिताः स्वरूपमेव न जानन्ति, कुतो भगवद्गुणान्। अतः सर्वानेव त्वं पालयेत्याहुः—भगवन्विधेहि शमिति। पूर्ववाक्यं दयाजनकम्॥ ४६॥

तेषां स्तोत्रं सफलं जातमित्याह—

## मैत्रेय उवाच।

**इत्युपस्थीयमानस्तैर्मुनिभिर्ब्रह्मवादिभिः।**
**सलिले स्वखुराक्रान्त उपाधत्ताऽविताऽवनिम्॥ ४७॥**

इत्युपस्थीयमान इति। इतीति समाप्तिः, प्रकारवाची वा। तैर्मुनिभिरेवमुपस्थीयमान उपस्थानविषया स्तूयमानः। ब्रह्मवादिनां वचनमन्यथा मा भवत्विति, स्वखुराक्रान्ते सलिले अवनिमुपाधत्त स्थापितवान्। यतोऽयमविता, सर्वेषां रक्षकः। खुरैराक्रान्त इति जले मर्यादां भयं च सूचयति, भगवत्खुराक्रान्तत्वात्। तावज्जलं देवतारूपं जातमिति भूमेरतः परं न काऽपि चिन्ता॥ ४७॥

एवं भगवच्चरित्रमुक्त्वोपसंहरति—

**स इत्थं भगवानुर्वीं विष्वक्सेनः प्रजापतिः।**
**रसाया लीलयोन्नीतामप्सु न्यस्य ययौ हरिः॥ ४८॥**

स इत्थमिति। इत्थममुना (?) प्रकारेण रसायाः सकाशात् उर्वीमुद्धृत्य अप्सु न्यस्य ययाविति संबन्धः। एकाकिना कथमुद्धृता ? कथं वा स्थापितेति शङ्काव्युदासार्थमाह—विष्वक्सेन इति। विष्वक् परितः सेना यस्य, तस्य भगवतः सर्वत्र सर्वकार्यकरणार्थं महत्येव सेना वर्तते। स्थापने हेतुः—प्रजापतिरिति। गमने हेतुः—हरिरिति। ईश्वरसान्निध्यं प्रजानां स्वाच्छन्द्यप्रतिबन्धकम्॥ ४८॥

प्रकरणं समाप्तमिति सूचयितुमेतच्छ्रवणस्य फलमाह त्रिभिः—

**य एवमेतां हरिमेधसो हरेः कथां सुभद्रां कथनीयमायिनः।**
**शृण्वीत भक्त्या श्रवयेत वोशतीं जनार्दनोऽस्याऽऽशु हृदि प्रसीदति ४९**

य एवमेतामिति। य एतां पूर्वोक्तां भगवतः सुचिरूपां लीलां शृण्वीत श्रवयेत वा, तयोर्भगवान् प्रसीदतीति फलम्। ननु दुःखनिवृत्तिः कथं न फलत्वेनोच्यत इत्याशङ्क्याऽऽह—हरिमेधसो हरेरिति। भगवद्विषयिणी स्वकीयैव बुद्धिः सर्वं दुःखं हरति, भगवानपि हरति स्वतन्त्रतया अस्मृतोऽपि। एवं सति दुःखनिवृत्तिः स्वतः सिद्धा कथं फलत्वेन वक्तव्येत्यर्थः। ननु स्वर्गादिः कथं नोच्यते ? तत्राऽऽह—सुभद्रामिति। सर्वेभ्यः स्वर्गादिभ्योऽपि कथैव सुभद्रा, अतिकल्याणरूपा। पूर्णानन्दरूपेति यावत्। ननु कथमुच्यते सर्वत्र फलत्वेन स्वर्गादिः ? तत्राऽऽह—कथनीयमायिन इति। कथनीया माया अस्याऽस्तीति। सर्वेषां वाचि माया वर्तत इति यथासुखं वदन्तीत्यर्थः। विहितत्वात् श्रवणकीर्तनेन धर्मो भवतीति, तस्याऽभ्युदयनिःश्रेयसहेतुत्वं सिद्धमिति, तन्निराकरणार्थं श्रवणकीर्तनयोर्भक्तित्वख्यापनाय मध्ये भक्त्येतिपदम्। भक्त्या प्रेम्णा। अत एव क्रियाद्वयमपि च्छान्दसम्, शृणुयात् श्रावयेदित्यर्थः। प्रत्येकं हेतुत्वज्ञापनार्थं वाशब्दः। श्रवणं तु स्वरूपसौन्दर्यादेव भविष्यतीत्यर्थः। तदाह—उशतीमिति। उशतीं कमनीयाम्। अविधानादकस्तस्य हृदय एव प्रसन्नो भवति॥ ४९॥

ततः किं स्यादतआह—

**तस्मिन्प्रसन्ने सकलाशिषां प्रभौ किं दुर्लभं ताभिरलं लवात्मभिः ।**
**अनन्यदृष्ट्या भजतां गुहाशयः स्वयं विधत्ते स्वगतिं परः पराम् ॥ ५० ॥**

तस्मिन्प्रसन्न इति । तस्य प्रसाद एव दुर्लभः, प्रसन्ने न किञ्चिद्दुर्लभम् । तत्र हेतुः—सकलाशिषां प्रभाविति । ऐहिकामुष्मिकमोक्षाणां प्रभुः स्वामी, नियन्ता । अनेन सर्वमेव तस्य भगवति प्रसन्ने सिद्धमेवेति ज्ञापितम् । ननु भगवद्भक्तानामपि सर्वविषयाभावो दृश्यते, तत् कस्य हेतोस्तत्राऽऽह—ताभिर्लवात्मभिरलमिति । क्षणमात्रं सुखाभासजनकैर्विषयैरलम् । तर्हि कदाचिदुत्पन्ना विषयेच्छा भक्तानामपूरिता स्यादित्याशङ्क्याऽऽह—अनन्यदृष्ट्येति । गुहाशयस्तेषां हृदयाभिप्रायवित्, स्वयमेव गतिं वैकुण्ठाख्यां विधत्ते । पर इति पुरुषोत्तमः । परामिति स्वसदृशं करोतीत्यर्थः । यथा स्वस्य भोगे न काऽपि न्यूनता, तथा तस्याऽपीति भावः । परमनन्यदृष्ट्या भजनं कर्तव्यम्, भगवदर्थमेव भगवान् सेव्यः ॥ ५० ॥

नन्वेवं सति महाफलं भगवत्कथाश्रवणं यथा निर्वहति, तथोपायो वक्तव्य इति चेत्तत्राऽऽह—

**को नाम लोके पुरुषार्थसारवित्पुरा कथानां भगवत्कथासुधाम् ।**
**आपीय कर्णाञ्जलिभिर्भवापहामहो ! विरज्येत विना नरेतरम् ॥ ५१ ॥**

को नाम लोक इति । नाऽत्रोपायो वक्तव्यः, कथासौन्दर्यमेव सहजं तत्र हेतुः । ये भगवत्कथारसिकास्ते प्रवर्तन्त एव, ये पशुप्रायास्ते उपेक्षणीया एव । अथ प्रवृत्ताः कियत्कालानन्तरं कथां परित्यज्य रसान्तरे आविष्टा भविष्यन्तीति, तेषां रसान्तरव्यावृत्त्यर्थमुपायो वक्तव्य इति चेत्, तादृशो नाऽस्तीति निरूपयति—को नाम प्रसिद्धः । कोऽपि लोके माहात्म्यमज्ञात्वाऽपि, स्वतन्त्रो भूत्वा, पुरुषार्थानां सारासारविभागविदपि भूत्वा, पुरा कथानां पूर्ववृत्तान्तानां मध्ये भगवत्कथासुधां निपीय प्रसङ्गादपि भगवत्कथां श्रुत्वा, तस्या माधुर्यं मृत्युनिवर्तकत्वं च ज्ञात्वा । तत्रापि भगवत्कथावक्तुर्मुखाञ्जलिःसृतां कथां परितः शृण्वन् अक्षरमात्राऽभिप्रायमप्यत्यजन् विरज्येत, को वा अलमिति मन्येत ? अक्षसायुज्यमप्राप्तः । यत इयं कथा भवापहा । ननु विरक्ता अपि लोके दृश्यन्ते तत्राऽऽह—अहो इत्याश्चर्यमेतत् । अत्र को हेतुरिति जिज्ञासायां स्वतः स्फुरितं हेतुमाह—विनेति । स प्रायेण नर एव न भवति, वानरो वा अन्यो वेत्यर्थः ५१

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां
तृतीयस्कन्धे त्रयोदशाध्यायविवरणम् ।

# चतुर्दशाध्यायविवरणम्।

वर्णिता सर्गलीलाऽत्र त्रिविधा भगवत्कृता।
उपोद्घातस्तु तस्या वै, मतान्तरमिहोच्यते ॥ १ ॥
लौकिकी चाऽन्यभाषा च समाधेः पोषिके तु ते।
ते प्रमाणमभिप्रायात् सर्वथा पूर्ववन्न हि ॥ २ ॥
यदेव भिन्नरीत्याऽत्र रूप्यते तन्मतान्तरम्।
न तद्विरोधो दोषाय पदशास्त्रार्थयोः क्वचित् ॥ ३ ॥
कामेन क्रोधलोभाभ्यां कर्ममार्गादिनाशनम्।
वर्ण्यते येन जीवानां मुक्तानामिह सम्भवः ॥ ४ ॥
सर्गस्थित्यन्तकथनं त्रिभिस्तेषां निरूप्यते।
अतः षड्भिरिहाऽध्यायैः सर्गोपोद्घात उच्यते ॥ ५ ॥
मतान्तरे शिवोत्कर्षो ब्राह्मणोत्कर्ष एव च।
भक्तस्य विष्णोश्चैवाऽत्र लीला व्यामोहिका मता ॥ ६ ॥
अन्यथा भगवल्लीला सर्गो नैव भवेद्ध्रुवम्।

---

प्रकाशः।

अथ चतुर्दशाध्यायं विवरिषवः पूर्वसङ्गतिस्मारणपूर्वकं तेषामर्थमनुवदन्तः सङ्गतौ प्रकारविशेषमाहुः—वर्णितेत्यादि। द्वादशभिः सर्गलीला वर्णिता, तु पुनस्त्रयोदशे उपोद्घातो वर्णितः, वै निश्चयेन, तस्या उपोद्घातलीलायाः सम्बन्धिमतान्तरमिहाऽस्यां षडध्याय्यामुच्यत इत्यर्थः। ननु मतान्तरस्य कथमुपोद्घातमध्ये प्रवेश इत्याकाङ्क्षायां तत्प्रकारमाहुः—लौकिकीत्यादि। अत्र लौकिकीग्रहणं प्रसङ्गात्, मध्येऽत्र किञ्चिद्वर्तमानत्वाच्च। पूर्ववत् समाधिभाषावत् वर्णपदवाक्यार्थरूपेण न तत्र हेतुः। हि यतो हेतोः, ते उभे समाधेः समाध्युपलब्धस्याऽर्थस्य पोषिके दार्ढ्यजननेनोपष्टम्भिके, अतस्ते तथेत्यर्थः। नन्वत्र केचिदादिपदाभावात् कथं मतान्तरत्वावधृतिरित्याकाङ्क्षायां तद्बमकं रूपमाहुः—यदेवेत्यादि। तथा च तद्बमकपदाभावेऽपि प्रकारभेद एव तद्बमकमिति अर्थतो मतान्तरमित्यर्थः। ननु भिन्नरीतिकत्वे विरोधावश्यंभावात् कथं पोषकत्वमित्याकाङ्क्षायामाहुः—न तदित्यादि। न हि सर्वत्र विरोधः, किन्तु क्वचित्पदार्थस्य क्वचिच्छास्त्रार्थस्य, तत्तस्मात् कादाचित्कत्वात् विरोधो दोषाय न। तथा च, तत्तात्पर्येऽवगते आपाततः प्रतिपन्नस्य अकिंचित्करत्वात् तत्प्रकारेण पोषकत्वमित्यर्थः। एवमुपोद्घातेन पोषकताप्रकारं निरूप्य प्रस्तुतं षडध्याय्याः प्रयोजनमाहुः—कामेनेतिद्वाभ्याम्। तथा चतुर्भिर्मुक्तोत्पत्तौ हेतुकथनम्, त्रिभिस्तेषामवस्थाकथनम्, (एवं कथनं) षडध्याय्या तथोच्यत इत्यर्थः। नन्वत्र षडध्याय्यां किं मतान्तरत्वप्रयोजकं रूपमित्याकाङ्क्षायां तदाहुः—मतान्तर इत्यादि। तथा चैतच्चतुष्टयं मतान्तरत्वप्रयोजकं रूपमित्यर्थः। उपोद्घातत्वप्रकारमाहुः—अन्यथेत्यादि। यदि मार्गत्रयनाशो न स्यात्, भगवानाऽवतरेत्। यदि च व्यामोहिकां लीलां न कुर्यात्, तदा मुक्तानामुत्पत्त्यादिर्न स्यात्। यदि सा न स्यात्, तदा सर्गस्य कर्मजन्यत्वमेव स्यात्, न लीलात्वम्।

चतुर्दशे तु कामेन कर्मनाश इहोच्यते ॥ ७ ॥
आधारकथनं त्वादौ गर्भे जीवस्य संक्रमः ।
तामसः काम एषो हि ततोऽत्र शिवसंकथा ॥ ८ ॥
क्रोधोऽपि कामसंबन्धी प्रसादो भक्तिहेतुकः ।
पूर्वाध्याये वराहस्य चरित्रं तु निरूपितम् ॥ ९ ॥

÷ तत्र हिरण्याक्षवधः संक्षेपेण निरूपितः, तं विस्तरेण श्रोतुं भगवतो युद्धलीलायामासक्तमनाः विदुरः पृच्छतीत्याह—

## श्रीशुक उवाच ।

**निशम्य कौषारविणोपवर्णितां हरेः कथां कारणसूकरात्मनः ।**
**पुनः स पप्रच्छ तमुद्यताञ्जलिर्न चाऽतितृप्तो विदुरो धृतव्रतः॥ १ ॥**

निशम्येति । कौषारविणेति पितृसंबन्धात् युद्धलीलां कथयिष्यतीति ज्ञापितम् । हरेरिति तत्र च क्लेशाभावः । कारणभूतो यः सूकरो यज्ञः स आत्मनि यस्य। अनेन वराहावतारस्वरूपं तेन ज्ञातमिति सूचितम् । वराहावतारकथा पूर्वं पृष्टा, प्रकारान्तरेण पुनः पृच्छति—उद्यताञ्जलिरिति । कथां भिक्षामिव प्रार्थयति । तथा प्रार्थने हेतुः—न चाऽतितृप्त इति । विदुर इति देशकालाभिज्ञत्वेन निपुणता । अवश्यप्रश्ने हेतुः—धृतव्रत इति । स हि धृतभगवद्व्रतः, भगवत्कथाश्रवणव्यतिरेकेण स्थातुं न शक्नोति॥ १॥

संक्षेपेण पूर्वोक्तां प्रकृतोपयोगिनीं भगवत्कथामनुवदति—

## विदुर उवाच ।

**तेनैव तु मुनिश्रेष्ठ ! हरिणा यज्ञरूपिणा ।**
**आदिदैत्यो हिरण्याक्षो हत इत्यनुशुश्रुम ॥ २ ॥**

× तेनैव त्विति । तेनैव वराहेणैव । मुनिश्रेष्ठेति ज्ञाने हेतुः । हरिणेति विरोधः, कथं सर्वदुःखहर्ता तं मारितवानिति । एतद्विरोधपरिहारार्थमेव बहु वक्तव्यम् । यज्ञरूपिणेति । दैत्यत्वान्मारणस्याऽवश्यम्भावः । आदिदैत्य इति पदद्वयं मारणे अमारणे च हेतुः । आदित्वात् दैत्यानां मूलोच्छेदक एव स्यात् । हिरण्याक्ष इति। हिरण्यरूपे अक्षिणी यस्य । अनेन तस्य निधिरूपत्वं प्रदर्शितम् । एतदप्यमारणे हेतुः, मारणे वा । तद्दृष्टिस्पृष्टभूमौ सुवर्णत्वसम्भवात् सर्वसुवर्णत्वे अमृतत्वेन सृष्टेर्नस्यादिति । अनुश्रवणमुच्चारणानन्तरम्, भ्रमात् श्रुते उत्तरासम्भवात् ॥ २ ॥

---

प्रकाशः।

अतस्तदुभयनिरूपणेनोपोद्घातत्वमित्यर्थः। एवं प्रकरणार्थं सङ्गृह्य प्रस्तुतार्थं सामान्यतो विशेषतश्चाहुः—चतुर्दश इत्यादि । इहेति । षडध्याय्याम् । आधारो दितिः । शेषं स्फुटम् ।

÷ निशम्येत्यत्र । आसक्तमना इत्यनेन प्रश्नस्य विदुरोक्तौ प्रसङ्गः सङ्गतिरिति बोधितम् ।

× तेनेत्यत्र । अमृतत्वेनेति । 'अमृतं वै हिरण्यम्' इति श्रुतेर्हिरण्यस्याऽमृतत्वेन ।

अथ प्रतिबन्धकत्वेन समागतो हत इति पक्षेणाऽस्य कथं प्रतिबन्धकत्वमिति पृच्छति—

**तस्य चोद्धरतः क्षोणीं स्वदंष्ट्राग्रेण लीलया ।**
**दैत्यराजस्य च ब्रह्मन् ! कस्माद्धेतोरभून्मृधः ॥ ३ ॥**

+तस्य चोद्धरत इति । द्वयो संबन्धिनो षष्ठ्या निर्देशः संबन्धदार्ढ्यार्थः । एकः कार्यसाधकः कौतुकी, अपरो दैत्यराजत्वात् सिद्धसमस्तार्थः । अतः स्वभावतः कलहहेतोरभावात् कस्माद्धेतोरभून्मृध इति प्रश्न.३

भगवत्कथाभिनिविष्टं दृष्ट्वा समभिनन्दति मैत्रेयः—

## मैत्रेय उवाच ।

**साधु वीर ! त्वया पृष्टमवतारकथां हरेः ।**
**यत्त्वं पृच्छसि मर्त्यानां मृत्युपाशविनाशिनीम् ॥ ४ ॥**

*साधु वीरेति । वीरेति संबोधनं तादृशलीलायां मनसोऽभिनिवेशद्योतकम् । यथाकथञ्चिदपि मनोनिवेशने कृतार्थो भवेदिति त्वया साधु पृष्टम् । कर्म पूर्वोक्तमेव साधुत्वेन निर्दिष्टम् । पृष्टस्य वा साधुत्वं विधीयते । सर्वथैव तद्वाक्यं भिन्नम् । साधुत्वमुपपादयति—यद्यस्मात्कारणात् हरेरवतारकथां पृच्छसि । साधवो हि परदुःखनिवारकाः । प्रश्नस्य साधुत्वं विषयसाधुत्वात् । विषयस्य कथारूपस्य साधुत्वमुपपादयति—मृत्युपाशविनाशिनीमिति । मृत्योः पाशं विनाशयतीति ॥ ४ ॥

मृत्युपाशविनाशित्वमुपपादयति—

**ययोत्तानपदः पुत्रो मुनिना गीतयाऽर्भकः ।**
**मृत्योः कृत्वैव मूर्ध्न्यङ्घ्रिमारुरोह हरेः पदम् ॥ ५ ॥**

—ययेति । यया कथया उत्तानपदः पुत्रो ध्रुवो मुनिना नारदेन गीतया सुखार्थमपि श्रुतया मृत्योर्मूर्ध्नि अङ्घ्रिं कृत्वा स्थापयित्वा हरेः पदमारुरोह । स हि ध्रुव. शरीरमत्यक्त्वैव ध्रुवपद गतः । वीरस्ववीर्येणाऽभिनिवेशितचित्तः कथायां भवति । तपस्तु पूर्वसिद्धमेवेति तस्य न मृत्युनाशकत्वम् । भगवत्प-

---

प्रकाश

+ तस्येत्यत्र । कलहहेतोरभावादिति । एतेनाऽयं प्रश्नो न हेतुप्रश्न, किन्त्ववतारकथाया एवेति ज्ञापितम् । अत एवाऽभिनन्दने तथैवोक्तम् । एतदेव चाऽत्रोपोद्घलकम् ।

* साधु वीरेत्यत्र । पूर्वोक्तमिति । हिरण्याक्षवधकथारूपम् । पृष्टस्येति । प्रश्नस्य साधुत्वे प्रयोजकरूपमाहुः—सर्वथेत्यादि ।

— ययेत्यत्र । ननु स्वकार्यार्थं श्रुतया कथया ध्रुवस्यैवंभावः कथमभूत् । अन्येषां च कथं भवेदित्याकाङ्क्षायां पूर्वोक्तश्लोकसंबोधन हृदि कृत्वाऽभिनिवेशात्मकं स्वरूपयोग्यतासम्पादकं तत्र साधनमाहुः—वीर इत्यादि । ननु तेन तपः कृतमिति तस्य तदेव साधनं भविष्यतीति शङ्कायामाहुः—तप इत्यादि । पूर्वसिद्धमिति । अन्यथा, तादृग्वरो जन्मैव न स्यादतस्तस्य पूर्वसिद्धतपोवदिदमपि भोगादियोग्यशरीरसम्पादकमेव न तु तावत्पर्यन्तमपीत्यर्थः । तर्हि भगवत्प्रसाद एव तथास्त्विति शङ्कायामाहुः—भगवत्त्वित्यादि । तस्य व्या-

सादोऽपि कथाया व्यापाररूपत्वान्न भिन्नतया साधकः । अतो नारदोपदिष्टः सर्व एव मार्गः कथारूपो जातः । यद्यपि मात्रा भजनमुपदिष्टम्, तदपि मुनिनैव निर्द्धारितम् । भजनकथाश्रवणयोः प्राप्ताप्राप्तविवेके क्रियमाणे तपस्यादेरप्रयोजकत्वात् कथाभिनिवेश एव फलसाधकः । तत्राप्यभिनिवेशस्य स्वरूपमध्यपातात् भिन्ना कथैव हेतुः । उत्तानःपादो यस्येति । पूर्वं सोऽपि ऊर्ध्वपाद्स्तपः कृतवानिति ज्ञायते । तादृशस्याऽपि नरकरक्षको जात इति स्वपरपुरुषार्थसाधकत्वं कथाया निरूपितम् । अर्भक इति कालादेरसाधकत्वम् । विमाने समागते देहं त्यक्ष्यतीति बुद्ध्या मृत्युरपि समागतः, तदा कथाव्याप्तदेहस्य भगवच्चरणारविन्दच्छायया शान्तस्य हेयत्वाभावात्, मृत्युनोचोलितदेहो विमानपर्यन्तं मृत्योर्गमनाभावमाशङ्क्य, तस्य मस्तके पादं दत्वा तेनैव शरीरेण विमानम्, पश्चाद्ध्रुवलोकं चाऽऽरुरोह । अतः कथाऽभिनिवेशो महाफलः, स विदुरे जात इत्यभिनन्दनम् ॥ ५ ॥

यस्मिन् कल्पे वराहहिरण्याक्षयोर्युद्धकथा अतिसमीचीना, तां वक्तुं प्रक्रियान्तरमारभते—

**अथाऽत्रापीतिहासोऽयं श्रुतो मे वर्णितः पुरा ।**
**ब्रह्मणा देवदेवेन देवानामनुपृच्छताम् ॥ ६ ॥**

* **अथेति** । अत्राऽप्ययमितिहासः पूर्वं मया श्रुतः, इतिहासत्वात् । व्यासात्, पराशराद्वा । वेदसारोद्धारः समाधिभाषायाम्, इतिहाससारोद्धारो मन्वन्तर इति विवेकः । इतिहासः पुरावृत्तकथा, गर्वहेतुर्हास्यहेतुर्वा, आश्चर्याश्रयरूपता वा । अयमिति बुद्ध्युपस्थितः । पुरा ब्रह्मणा देवानामनुपृच्छतामर्थे वर्णित इति पुरावृत्तत्वं समर्थितम् । ब्रह्मणा बालकचेष्टाया वर्णितत्वात् हासहेतुत्वम्, देवतानां निदानपरिज्ञापकत्वेन गर्वहेतुत्वम्, सर्गलीलायाश्च मुक्तजीवविषयत्वेन आश्चर्याश्रयत्वम् । गर्भस्थितौ जयविजयौ देवानां प्रश्नहेतुभूताविति तद्धेतुकथनार्थमयमध्यायः । प्रकरणस्याऽप्युपोद्घात इति ब्रह्मानुक्तोऽप्यर्थ उच्यते । उक्तो वा ततः संक्षिप्य हेतुत्वार्थं भिन्नतया निरूप्यते । देवदेवेनेति देवानामिष्टदेवत्वात् कथायाः प्रामाणिकत्वम् । अनुपृच्छतामिति तत्रापि भगवत्कथायामेव तैरपि पृष्टमिति ज्ञायते ॥ ६ ॥

हेतुभूतां कथामारभते—

**दितिर्दाक्षायणी क्षत्तर्मारीचं कश्यपं पतिम् ।**
**अपत्यकामा चकमे सन्ध्यायां हृच्छयार्दिता ॥ ७ ॥**

**दितिरिति** । दाक्षायणीति पुरुषस्वभावा धृष्टा । दक्षोऽपि प्राचेतसो मर्यादादोषयुक्तो बहुभर्तृकापुत्रः, अन्यथा तस्यास्तथा धार्ष्ट्यं नोपपद्येत । क्षत्तरिति जितेन्द्रियत्वेन संबोधनम्, कामलीलाया वक्ष्यमाणत्वात् दोषाभावाय । मारीचमिति । 'मरीचिर्मनसोऽभवत्' इति मनस सङ्कल्पजनकत्वात्, संकल्पस्य कामजनकत्वाच्च । कश्यप कामावतार इति सूचितम्, अन्यथा तथा क्षोभो न भवेत्, न वा स

प्रकाशः ।

पारत्वं च कथयेति तृतीयया स्मार्यते । तर्हि भजनस्य तथात्वमस्तु, इत्यत आहु—यद्यपीत्यादि । तदभिनिवेश एव तथास्त्वित्यत आहु—तत्रापीत्यादि ।

* अथेत्यत्र । ( ब्रह्मणा वर्णितः श्रुत ) इति प्रतिज्ञाऽनुरोधात् पक्षान्तरमाहु—उक्तो वेति ।

१ आश्चर्यपीठरूपता । ख. ग

प्रवर्तेत। कश्यपमिति। ब्रह्मणः शापरूपोऽयम्। यथा ‘आसन् मरीचेः षट् पुत्राः’ इति कल्पान्तरे, तथाऽस्मिन् कल्पे मरीचिपुत्रत्वादस्याऽप्युपहासः × सम्भवति जितेन्द्रियाभिमानिनः। तदा ब्रह्मणा अयमपि शप्त इति लक्ष्यते, पौत्रीविवाहात्, एवं प्रसङ्गात्, नामनिरुक्तेश्च। पतित्वात्त्वाऽत्यन्तमनौचित्यम्। बहुस्त्रीकत्वाचक्रतोऽयं रतिकाम्यया प्रवर्तते। यथाऽग्निहोत्रादिधर्मः, तथा व्रतमपि धर्म इति। परं विधर्मत्वात् क्रोधजनकत्वम्, अपत्ये दोषसम्भवाच्च। अपत्यकामेति न वैराग्यादिना परिहर्तुं शक्या। सन्ध्यायामिति निषिद्धकामस्योद्गमनहेतुरुक्तः। हृच्छयः कामः। हृदये स्थित एव तदानीमुद्गतः, तेनाऽर्दिता भिन्नमर्मा ॥ ७ ॥

कश्यपं कर्मणि प्रवृत्तं नाशयितुं प्रवृत्तेति कथनार्थं तस्याऽग्निहोत्रकर्मोच्यते—

**इष्ट्वाऽग्निजिह्वं पयसा पुरुषं यजुषां पतिम्।**
**निम्लोचत्यर्क आसीनमग्न्यगारे समाहितम् ॥ ८ ॥**

* इष्ट्वाऽग्निजिह्वमिति। अग्निरेव जिह्वा यस्य। यदा वीतार्चिर्लेलीं यद्विभाति तद्देवानामास्यम्, यदा नीलोऽप्रकाशोऽर्चिरुदेति सोऽग्निर्भगवज्जिह्वा। पयसा नित्यहोमः। ‘रेतः सिञ्चति प्रजनने’ इति प्रकृतोपयोगित्वं च। अग्निहोत्रस्य चर्वणरूपत्वाद्यागरूपत्वाच्च पुरुषमिष्ट्वेत्युक्तम्। यजुषां पतिमिति, यजुर्वेदेनाऽग्निहोत्रमिति वाक्यात्। निम्लोचत्यर्क इति। अतः ‘अस्तमिते होतव्यम्,’ ‘सन्धौ होतव्यम्’ इति च पक्ष आदृतः। आसीनमिति अनुपस्थानपक्ष उक्तः, अन्यथा प्रजायेत। अग्न्यागार एवाऽऽसीनम्। समाहितमिति सावधानान्तःकरणो भूत्वा, इष्टं भगवन्तं ध्यायतीति लक्ष्यते ॥ ८ ॥

दितिः षड्भिः सोपपत्तिकं संवन्धं प्रार्थयते। एष इति। कामपीडाप्रतीकारो यशसाऽनुग्रहस्तथा। वैषम्यस्य च निर्द्धारो द्वाभ्यामन्ते तु याचनम् ॥ १ ॥ प्रथमं कामपीडामाह सर्वहेतुभूताम्—

## दितिरुवाच।

**एष मां त्वत्कृते विद्वन्! काम आत्तशरासनः।**
**दुनोति दीनां विक्रम्य रम्भामिव मतङ्गजः ॥ ९ ॥**

एष इति। देवतारूपः कामः प्रत्यक्षो जात इति दर्शयति। कामशास्त्रे कामः पुरुषमेव बाधते, न तु स्त्रियम्, तस्याः स्वप्रतनारूपत्वात्। पुरुषार्थश्च पुरुषस्यैव, अन्यथा पुरुषस्य स्त्रीदोषत्वं स्यात्। तस्मात्कथं बाधत इत्याशङ्क्याऽऽह—त्वत्कृत इति। त्वदर्थं मां बाधते। त्वां बाधितुमसमर्थस्त्वद्बाधार्थं मां बाधत इत्यर्थः।

---

प्रकाशः

× दितिरित्यत्र। अस्याऽप्युपहास इति। एतत्कृतो ब्रह्मण उपहासः। नामनिरुक्तेरिति। कश्यं मद्यं पिबतीति यौगिकनिरुक्तेः। तद्व्रत इति। ‘न काञ्चन परिहरेत्’ इति वामदेव्यसामोपासनव्रतः। वैराग्यादिनेति। वैराग्योपदेशादिना।

* इष्ट्वेत्यत्र। अन्यथा प्रजायेतेति उपस्थानात् पूर्वमुत्तरं च प्रज्वालनविधानात्। उपस्थानपक्षे तदानीं पुनर्ज्वलायमानोऽग्निर्जायेतेत्यर्थः।

---

१ वैदा. क. २ विधर्मजनकत्वात्. क. ३ लेलायतीव ग, लोलायत् प, ट.

अतोऽहं कामप्रेरिता त्वद्बाधां करोमीति भावः। विद्वन्निति नाऽत्र किञ्चिन्निरूपणीयम्, कामातुरायाः शास्त्रसिद्धत्वात्। आत्तशरासन इति त्वद्बाधायामकृतायां मां जीवतो मारयिष्यतीति सूचितम्। साक्षात्कारः स्वस्य पृतनात्वसूचकः। अत एव 'भ्रुवोर्मङ्गो जायते' इति 'रसदृष्ट्योऽपि निर्गच्छन्ति' इति शरवत्त्वम्। दुनोति पीडयति। दीनामिति तस्य निर्दयत्वं सूचितमस्य दयोत्पादनार्थम्। विक्रम्येति तस्याऽत्यन्तमाग्रहः। रम्भामिव महागज इति नाशनार्थं प्रवृत्तिः॥ ९॥

तस्मान्नाऽहमुपेक्षणीया, किन्तु कृपा कर्तव्येत्याह—

**तद्भवान्दह्यमानायां सपत्नीनां समृद्धिभिः।**
**प्रजावतीनां भद्रं ते मय्यायुङ्क्तामनुग्रहम्॥ १०॥**

+तद्भवानिति। कामादयः षट् बाधकाः प्रत्येकं सर्वत्र लोके। मम तु सर्वे संभूय बाधका इति ज्ञापनार्थं कामबाधां निरूप्य मात्सर्यमाह—सपत्नीनां प्रजावतीनां समृद्धिभिर्दह्यमानायां मय्यनुग्रहमायुङ्क्ताम्। लोट आत्मनेपदम्। सपत्न्येव दाहहेतुः, तत्रापि बह्वयः, तत्रापि मदपेक्षया तासां समृद्धिः, तत्रापि प्रजावत्त्वम्। अतो दोषचतुष्टयेन मात्सर्येण दाहः, तन्निवृत्त्यर्थमनुग्रहः कर्तव्यः। समृद्धिप्रजादाने ततोऽप्यधिकदाने वा दाहाऽभावः सुखं च भविष्यतीति भावः। भद्रं त इति पूर्वं बाधकत्वेन स्वस्य निरूपणात्, अप्रवृत्तावपि कदाचिद्बाधः स्यात्, तथा सत्यप्रवृत्तिरेवाऽस्त्विति शङ्कां परिहरति॥ १०॥

त्वदनुग्रहेण न केवलं दोषाभावः, किन्तु गुणो भविष्यतीत्याह—

**भर्तर्यासोरुमानानां लोकानाविशते यशः।**
**पतिर्भवद्विधो यासां प्रजया ननु जायते॥ ११॥**

भर्तरीति। सामीप्ये सप्तमी। भर्तृसमीपे आप्तोरुमानानां यशो लोकानाविशते। गर्भाधानादिसंस्कारेषु भर्त्रा सह एकासने स्त्रीणां संमाननमिति तत्कीर्तनम्। भर्तृकर्तृकं वा माननम्। तद्यशसो लोकप्रवेशमुपपादयति—पतिर्भवद्विध इति। यासां स्त्रीणां भवद्विधः पतिः प्रजया पुत्ररूपेण निश्चयेन जायते, 'तज्जाया जाया भवति यदस्यां जायते पुनः' इति श्रुतेः॥ ११॥

एवं गुणदोषौ निरूप्य नीतिमपि निरूपयति—पुरेति द्वाभ्याम्—

**पुरा पिता नो भगवान् दक्षो दुहितृवत्सलः।**
**कं वृणीत वरं वत्सा इत्यपृच्छत नः पृथक्॥ १२॥**

विवाहात्पूर्वं नोऽस्माकं पिता दक्षः। भगवानिति सर्वसमर्थः। चन्द्रमिव त्वामपि करिष्यतीति भयं जनयति। दक्ष इत्यभिचरेद्वा। दुहितृवत्सल इति स्नेहादौदासीन्याभावः। अत एव हे वत्साः कं वृणीतेत्यपृच्छत पृथक्। पृथक् इत्यन्यानुरोधाभावाय। नोऽस्मान्। विभक्त्यन्तरत्वान्न पौनरुक्त्यम्। अनेन तस्य विचारभङ्गे महानुपद्रवो भविष्यतीति प्रवृत्तौ हेतुरुक्तः॥ १२॥

---

प्रकाशः

+ तद्भवानित्यत्र। बाधकत्वेन स्वस्य निरूपणादिति। कामस्य स्वबाधकत्वेन निरूपणादित्यर्थः।

---

१ सामीप्ये. क.

इदानीमस्माकं नाऽस्ति वैषम्यम्, तव तु वैषम्यमित्याह—

**स विदित्वाऽऽत्मजानां नो भावं संतानभावनः ।**
**त्रयोदशाऽददात्तासां यास्ते शीलमनुव्रताः ॥ १३ ॥**

**स विदित्वेति ।** आत्मजानां नो भावं विदित्वा तासां मध्ये त्रयोदश नोऽस्मान् ते अददात् । यास्ते शीलमनुव्रताः समानस्वभावाः । तत्राऽपि दक्षः संतानभावनः, दुहितृसंतानं भावयतीति । संतत्यभावे दानमेव व्यर्थं स्यात् ॥ १३ ॥

एवमप्रवृत्तौ नीतिविरोधमुपपाद्य प्रार्थयति—

**अथ मे कुरु कल्याण ! कामं कञ्जविलोचन ! ।**
**आर्तोपसर्पणं भूमन्नमोघं हि महीयसि ॥ १४ ॥**

**अथेति ।** न विरोधादिशङ्कया प्रवृत्तिः कर्तव्या, किन्तु रसेनैवेति भिन्नप्रक्रमः । तव कामाभावेऽपि मे कामं कुरु, मे कामनां पूरयेत्यर्थः । कञ्जविलोचनेति प्रकृतोपयोगिरूपवत्त्वम् । दैन्यमाह—आर्तोपसर्पणमिति । महीयसि महापुरुषे आर्तानां प्रार्थना सफलैवेत्यर्थः । सर्वत्र पङ्क्तिर्निरूपणं तत्कार्यस्य भगवत्त्वाय ॥ १४ ॥

धर्माद्दक्षात्ततो भीतो लोकानां निन्दनादपि । कालकर्ममहादेवादप्रवृत्तस्त्वसान्त्वयत् ॥१॥ असान्त्वितायां भगवानपि क्रुध्यतीति तस्याः सान्त्वनं कृतवानित्याह—

## मैत्रेय उवाच ।

**इति तां वीर ! मारीचः कृपणां बहुभाषिणीम् ।**
**प्रत्याहाऽनुनयन्वाचा प्रवृद्धानङ्गकश्मलाम् ॥ १५ ॥**

**इतीति ।** वीरेति संबोधनं सान्त्वनवाक्येषु भ्रमाभावाय । मारीच इति पूर्ववत् । कृपणामिति दया । बहुभाषिणीमिति भयम् । वाचेति न प्रवृत्त्या, अन्यथा रसाभासः स्यात् । किञ्च, प्रवृद्धोऽनङ्ग एव कश्मलो यस्याः । न हि स कश्मला भुज्यते, अतः कश्मलनिवृत्त्यर्थं सान्त्वनम् ॥ १५ ॥

कामोऽभिमानात् फलतो वा निवर्तते, तत्र फलस्य साम्प्रतं कर्तुमयुक्तत्वात् साधारणवाक्यैरभिमानं जनयति—एष तेऽहमिति पङ्क्तिः—

## ( कश्यप उवाच । )

**एष तेऽहं विधास्यामि प्रियं भीरु ! यदिच्छसि ।**
**तस्याः कामं न कः कुर्यात्सिद्धिस्त्रैवर्गिकी यतः ॥ १६ ॥**

प्रार्थितस्य परिज्ञानं हेतूक्त्या तस्य साधनम् । स्त्रियाश्चतुर्भिः स्तोत्रं च प्रार्थना च निरूप्यते ।१। संसारदुःखतरणे हेतुः स्त्री स्वयमेव च । अरातितरणे दुर्गमनन्तोपकृतिर्गृहम् ।२। एवमुत्कर्षकथने साभिमाना भवेदिति । पश्चात्संप्रार्थनं युक्तं स्वकीर्तेर्हेतुताऽपि च ।३। एष कामः । तेऽहमवश्यं वि-

---

१ कल्याणकाम, पा. कल्याण काम पा २ तस्य ग ३ अयं पाठ. क्वाचित्क . ४ स्वार्तिं. क.

धास्यामि। भीर्विति विशिष्टस्त्रीत्वकथनं महत्त्वज्ञापकम्, 'विशेषास्त्वङ्गना भीरुः' इति कोशात्। प्रकृतोपयोगि च भीरुत्वम्। यदिच्छसीति पुत्रान्, भोगं, संपत्तिं च। एतदवश्यं कर्तव्यमित्युपपादयति–तस्या इति। 'संवत्सरो वै प्रजापतिः' इति श्रुतेः। 'त्रयोदशमासाः संवत्सरः' इति च कश्यपानन्दस्त्रयोदशधाऽवतीर्णः। तत्रेयं मलमासरूपा। सामान्यतस्तु स्तुतिस्तस्या इति, न हि कश्चित् स्वानन्दं नाऽनुभवति। किञ्च, यतो भार्याऽतस्त्रैवर्गिकी सिद्धिः, पुरुषार्थत्रयं भार्यासहितस्यैव यतः सिध्यति। मिलितं तस्यैव। धर्मोऽपि यज्ञात्मकस्तस्यैव, 'काञ्चनमश्रितं भवति यत्सङ्गेऽङ्गना' इति वाक्यादर्थोऽपि तदधीन एव पुरुषार्थः, अन्यथा दुःखहेतुः स्यात्, कामसमुद्रस्य तु * सा तदेव॥ १६॥

एवं तदीयं प्रार्थितमवश्यं कर्तव्यमित्युपपाद्य तां स्तौति सर्वदुःखनिवारकत्वेन—

**सर्वाश्रमानुपादाय स्वाश्रमेण कलत्रवान्।**
**व्यसनार्णवमत्येति जलयानैर्यथाऽर्णवम्॥ १७॥**

**सर्वाश्रमानिति।** अन्येषामाश्रमाणामन्नदाता गृहस्थ एव। अभार्यस्त्वभोज्यान्नः, अन्यभावेन वीरहत्वात्। अतः स्वातिरिक्ता श्रमानुपादाय स्वाश्रमेण गार्हस्थ्येन व्यसनार्णवं क्षुत्पिपासादिदुःखसमुद्रमत्येति। जलयानैर्वहित्रैः पोतैर्यथाऽर्णवमत्येति, अन्यथा मत्स्यादिभिर्ग्रस्त एव स्यात्॥ १७॥

किञ्च।

**यामाहुरात्मनो ह्यर्धं श्रेयस्कामस्य मानिनि!।**
**यस्यां स्वधुरमध्यस्य पुमांश्चरति विज्वरः॥ १८॥**

**+यामाहुरिति।** यां भार्यामात्मनोऽर्द्धमाहुः। चिद्रूपस्य स्वस्य स्वदेहः सद्रूपः, आनन्दरूपश्च भार्यायाः। अर्द्धवृगलत्वाद्वा। आहुरिति प्रमाणम्। ह्रीत्युपपत्तिरुक्तैव। 'प्रजापतिरमृतमानन्द इत्युपस्थः' इति श्रुतेः। श्रेयस्कामस्येति केषां चिन्मते भार्यासहितस्यैव कर्मण्यधिकारः। मानिनीति संबोधनमेतादृशवाक्याकथनार्थम्। एवं सुखहेतुत्वमुपपाद्य दुःखाभावहेतुत्वमुपपादयति–यस्यामिति। स्वधुरं स्वमं धुर्यो बलीवर्दः, संसारलक्षणां धुरं निरन्तरं वहति। तत्र भार्याचेदनुकूला, सा सर्वमेव भारं गृह्णीयात्। इदं च लोकसिद्धं नोपपादनीयम्। चरतीति यथासुखं परिभ्रमति, मुक्तो जायत इत्यर्थः। विज्वर इति चिन्ताज्वररहितः, अन्यथा धनादिनिमित्तं सर्वत्र चिन्ता भवेत॥ १८॥

किञ्च—

**यामाश्रित्येन्द्रियारातीन्दुर्जयानितराश्रमैः।**
**वयं जयेम हेलाभिर्दस्यून् दुर्गपतिर्यथा॥ १९॥**

---

प्रकाशः

* एष तेऽहमित्यत्र। सा तदेवेति। सा भार्या, तदेव सिद्धिरेव, सामान्ये नपुंसकम्।

+ यामित्यत्र। भार्यारूपस्यार्धस्यानन्दरूपत्वे मानमाहुः–प्रजापतिरित्यादि। तथा च तत्रानन्दोपासनाया उक्तत्वात् सम्पादकत्वेन सा तथेत्यर्थः। (ए)तादृशवाक्याकथनार्थमिति। पूर्वोक्तरीतिदैन्यवाक्याकथनार्थम्।

---

१ तर्थेय, क. ख. ग. घ. २ विधुरत्वात् घ.

**यामिति।** मां भार्यामाश्रित्य इन्द्रियलक्षणान् शत्रूनन्यायेन मारकान् भार्यासहिता वयं हेलाभिरेव जयेम, न हि ते शत्रवोऽन्याश्रमैर्जेतुं शक्याः, अत इतराश्रमैर्दुर्जयान् सभार्य एव जयति । भार्यावन्तमिन्द्रियाणि न बाधन्त इति केचित् । जयस्तु शत्रुत्वे, भार्यावतस्तदपेक्षणात्तेषां न शत्रुत्वम् । शास्त्रतः शत्रुत्वेऽपि बहिः स्वानन्दानुभवादनुपपन्नत एव हेलाभिरवज्ञयैवेन्द्रियाणां जयः । बाधकानामबाधकत्वमेव जयः, असामर्थ्यजनकत्वं वा । अबाधकत्वमात्रमत्र जय इति वक्तुं दृष्टान्तमाह—**दस्यून्दुर्गपतिरिति** । नहि चौराणां जये कश्चन पुरुषार्थः, किन्तु ते यथा न बाधन्ते तथा दुर्गाश्रयणमेव कर्तव्यम् । न तु तेषां मारणं जयः, असमानत्वात्, जयस्य कादाचित्कत्वाच्च ॥ १९ ॥

किञ्च । एकस्मिन्नपि दिवसे क्रियमाणस्य भार्योपकारस्य प्रत्युपकारो नास्तीत्याह—

**न वयं प्रभवस्तां त्वामनुकर्तुं गृहेश्वरि ! ।**
**अप्यायुषा वा कार्त्स्न्येन ये चाऽन्ये गुणगृध्नवः ॥ २० ॥**

**न वयमिति** । तां पूर्वोक्तोपकारकारिणीं त्वां प्रत्युपकर्तुं वयं न प्रभवामः । य उपकारः कर्तव्यः सोऽपि स्वार्थमेव भवतीति । यथा ऽलङ्काराः, देहपोषो वा । **गृहेश्वरीति** संबोधनात् प्रत्यहं तद्गृहे सर्वभोगान् भुञ्जानः कमुपकारं कुर्यात् ? **कार्त्स्न्येनाऽप्यायुषेति** । तस्या भोग्यत्वं कियत्कालमेवेति, तदनन्तरं परिपालनादिकं प्रत्युपकारसाधकं भविष्यतीति संभाव्य निराकरोति, तयाऽपि तावत्कालमुपकारकरणात् । **ये चाऽन्ये** देवा अपि चिरजीविनः । **गुणगृध्नव इति** तस्या एकोऽपि गुणः पुत्रजननादिः प्रतिकर्तुमशक्यः । अतो येषां तद्गुणा अपेक्षिताः इह परत्रसाधकत्वेन, तैः प्रतीकारोऽशक्य इत्यर्थः ॥ २० ॥

एवं तां स्तुत्वा कालविलम्बं प्रार्थयति—

**अथाऽपि काममेतं ते प्रजायै करवाण्यलम् ।**
**यथा मां नाऽतिवोचन्ति मुहूर्तं परिपालय ॥ २१ ॥**

**अथाऽपीति** । प्रार्थितं तु यथेच्छं कर्तव्यमेव, सुतरां प्रजानिमित्तमलमत्यर्थं करवाणि । **अथापि मुहूर्तं परिपालय**, यावत्सन्ध्यापगमो भवति । तत्र हेतुः—**यथा मां नाऽतिवोचन्तीति** । अतिक्रम्य निन्दापूर्वकं यथा न वदन्ति । अस्मत्सजातीयाः सर्वे सर्वज्ञास्त एव धर्मशास्त्रकर्तारस्तेषामज्ञातं किमपि न भवतीति तत्कथनसम्भावना ॥ २१ ॥

एवं तां प्रार्थयित्वा तस्य कालस्य स्वरूपतो दोषमाह—

**एषा घोरतमा वेला घोराणां घोरदर्शना ।**
**चरन्ति यस्यां भूतानि भूतेशानुचराणि ह ॥ २२ ॥**

**एषेति** । एषा वेला घोरतमा सर्वभोगविगर्हिता, न हि घोरा भोगाधिकरणं भवति । कालदेशयोः सर्वाधिकरणत्वात्तद्दोषोऽवश्यं परिहरणीयः । सर्वस्याऽपि कालस्य सन्ध्या रजोरूपा । सन्ध्ययैव रात्री रजस्वरा, सा परिहरणीयेति । अत एव सा पुष्पिता भवति, प्रत्यक्षतश्च तस्या रागो रजोरूपो दृश्यते । कामादिजनकत्वात् भयहेतुरपि भवति, अतो घोरतमा । घोराणां भूतादीनां च संबन्धिनी भवति । घोरदर्-

१ प्रजार्थे ग.

ना च, सर्वत्रैवाऽन्धकारव्याप्त्या । घोरसम्बन्धित्वमुपपादयति—चरन्ति यस्यां भूतानीति । तानि च भूतानि मन्त्रादिभिर्न निराकर्तुं शक्यानीत्युपपादयति—भूतेशानुचराणीति । महादेवस्य सेवकानि तानि भूतानि । इत्याश्चर्ये । कथमेतस्मिन् काले एवं प्रार्थितमिति तस्या भयमुत्पादयति ॥ २२ ॥

किञ्च । अस्य कालस्याऽधिष्ठात्री देवता महादेवः, स कामनाशकः। तच्छत्रुपरिग्रहस्तस्य काले क्रियते चेत्, सद्य स मारयिष्यतीति भय जनयन् महादेव स्तौति पञ्चि —एतस्यामित्यादिभिः—

**एतस्यां साध्वि ! सन्ध्यायां भगवान्भूतभावनः ।**
**परीतो भूतपर्षद्भिर्वृषेणाऽटति भूतराट् ॥ २३ ॥**

परिभ्रमो दर्शनं च संबन्धाभाव एव च । मारणे हेतुत्रितयं दोषाभावाय चाऽपरे ।१। तत्र प्रथम तस्य परिभ्रमणमाह, देशान्तरागमनाय । एतस्यां सन्ध्यायाम् । साध्वीति संबोधन निषिद्धकामवस्त्वव्यावृत्त्यर्थम् । भगवानित्यप्रतिहतगति । परिभ्रमणमुपकारहेतुरित्याह—भूतभावन इति । भूतानि भावयति पालयतीति । सन्ध्यायामुत्पत्तिर्यदि भवेत्, तेन तस्य च लोकस्य नाशो भवेत् । अत सर्वत्र सन्मार्गवर्तिषु भोगनिराकरणार्थं भूतपर्षद्भिः परीतः। भूतरूपा एव तस्य पर्षद सभापतयो भवन्ति । तैः सहितो वृषमारुह्य स्वयमटति भूताना राजा । भूताना स एव काल, अत स्वभृत्यरक्षार्थं भूतराट् पर्यटति । यदि कश्चिदन्याय कुर्यात्तदा पर्षद्भिस्त दण्डयति । धर्मकारिणमपि सन्ध्यायामधर्मकारिणं मारयतीति सूचयितु वृषेणाऽटतीत्युक्तम् । वृषो धर्म, यस्तमेवाऽऽरुह्य तिष्ठति स कथमन्य तादृश परिपालयेत्? धर्मस्य साक्षित्वार्थं वा ॥ २३ ॥

*एव देशान्तरगमनाभावाय तस्य परिभ्रमणमुक्त्वा, अत्र स इदानीं स्वभावत स्थितः पश्यत्येवेत्याह—*

**श्मशानचक्रानिलधूलिधूम्रविकीर्णविद्योतजटाकलापः ।**
**भस्मावगुण्ठामलरुक्मदेहो देवस्त्रिभिः पश्यति देवरस्ते ॥ २४ ॥**

×श्मशानेति । अय देवो महादेवस्त्रिभिरपि चक्षुर्भि पश्यति । गार्हपत्यादयस्तस्यैव चक्षूंषि । स च देवः, अतीन्द्रियमपि पश्येत् । देवर इति लज्जोत्पादनम् । एकजामातृणा भ्रातृत्वव्यवहाराद्देवरत्वम् । पतिरपि देवर उच्यते, अग्निरूपत्वाद्भगवत "तृतीयो अग्निष्टे पति "इति श्रुते । दैत्याना च देवं सुरा शातीति तयोपास्यो देवर । तस्याऽतिक्रम सर्वथाऽनर्थहेतु । तस्य स्वभावत एव श्मशानक्रीडापरत्वात्र तस्य मारणे काचिच्छङ्केत्यभिप्रायेणाऽऽह—श्मशाने यश्चक्रानिलो वात्या, तेनोद्धता या धूलिः, तया धूम्रा धूमरवर्णाः, विकीर्णा विद्योतमानाश्च या जटा, तासा कलापो यस्य। प्रलयकर्तृत्वादस्य जटाना प्रलयहेतुत्वात्

---

प्रकाश ।

× श्मशानेत्यत्र । महादेवस्य कथ देवरत्वमित्याकाङ्क्षाया तदुपपादयन्ति—एकेत्यादि । अय पक्ष श्रीधरेणाऽप्युक्त । परन्तु सत्या स्वायम्भुवपुत्रीत्वेन दितेश्च प्राचेतसपुत्रीत्वेनैकजामातृत्वं व्यवहारे बाधितमिति पक्षान्तरमाहुः—पतिरित्यादि । उच्यत इति । यथा पाञ्चाल्या भीमादि । भगवत इति । शिवस्य, तस्याऽष्टमूर्तिष्वग्नेरपि गणनात् तथेत्यर्थ । एतमपि पक्ष प्रसिद्धायैन्द्वमाशङ्क्य, पक्षान्तरमाहुः—दैत्यानामित्यादि । तथा च यौगिक एवाऽयं शब्दो न रूढ इत्यर्थ । प्रथमे(-म )पक्ष साधयितु युक्त्यन्तर-

भस्मधूसरत्वाभावे विकीर्णा विद्योतमाना प्रलयमेव कुर्युः । भस्मान्तरं च प्रलयमेघान् न स्पृशति, चक्रानिलादन्यो न सर्वतो भस्मसंबन्धं कारयत्यतस्तथाभाव उचित एव । किञ्च, भस्मावगुण्ठामलरुक्मदेहः । भस्मना अवगुण्ठ प्रक्षालनं यस्य । अमलं यद्रुक्मं सुवर्णम्, रजतं वा, तद्भस्मना घृष्टमत्युज्ज्वलं भवति । अतस्तस्य भस्मापेक्षाऽस्तीति स्वल्पेऽप्यपराधे मारयेदित्यर्थः । देवर इति कल्पान्तरे प्राचेतस एव, षष्टिकन्यापक्षेऽपि महादेवाय सतीं दत्तवानित्यध्यवसेयम् । प्रथममन्वन्तरे यत्र सतीजन्म, न तत्र दित्यादीनां जन्म । देवं पतिं रातीति देवरः श्वशुरो वा । तथा च मरीचिभ्रातृत्वान्महादेवोऽपि देवरः । कन्यासमये प्रार्थितो महादेवः पतिं दत्तवानिति देवरः ॥ २४ ॥

एवं लज्जां भयं चोत्पाद्य संबन्धेनाऽपराधसहनमाशङ्क्य, तस्य संबन्धापेक्षा नाऽस्तीत्याह—

**न ह्यस्य लोके स्वजनः परो वा नाऽत्यादृतो नोत कश्चिद्विगर्ह्यः ।**
**वयं व्रतैर्यच्चरणापविद्धामाशास्महेऽजां बत भुक्तभोगाम् ॥ २५ ॥**

*न ह्यस्येति । हीति युक्तोऽयमर्थः । यस्तूत्पद्यते संबध्यते वा कश्चित्, तस्य संबन्ध्यपेक्षा, महादेवस्य ब्रह्मत्वेन तदुभयाभावात् न संबन्ध्यपेक्षेत्यर्थः । अत एव लोके तस्य स्वजनो न ऽस्ति । स्वश्चासौ जनश्च, आत्मीयो नास्तीत्यर्थः । परः शत्रुः । एतद्द्वयं देहधर्मः । नाऽत्यादृत इति अत्यन्तस्नेहपात्रम्, विगर्ह्यो निन्दितो द्वेषपात्रम्, एतदुभयमन्तःकरणधर्मः, स्निग्ध एवाऽऽदृतो भवति, गर्हितः स्नेहरहित एव । ननु तस्य विषयाणामपेक्षितत्वात् य एव विषयान् प्रयच्छति यो वा निवर्तयति स तथा भविष्यतीति चेत्तत्राऽऽह—वयं व्रतैरिति । तस्य सहजो विषयभोगः, परं तेन त्यक्तः । तथापि सा अजा प्रकृतिर्विषयरूपा तस्यैव, तद्द्वैव प्राप्यते सर्वैः, यथा महाराजविभूतिः, अत एवाऽस्माभिरीश्वरसंबन्धाद्यनपेक्ष व्रतैर्नियमविशेषैराराध्य, पाशुपतादिभिर्वा, तद्द्वामजामाशास्महे । स हि सेवितः प्रसादत्वेन तां प्रयच्छति । सा हि भोगार्थमुपस्थिता पदयोः पतति । तदा स्वस्याऽनभिप्रेतां मत्वा तामुपासकेभ्यः पदेनाऽपविद्धां प्रयच्छत्य वज्ञया भोगस्याऽनभिप्रेतत्वं मन्यमानः । तत्रापि भुक्तभोगामिति दृष्टदोषेण परित्यक्तेति ज्ञापयति । अत एव तदपेक्षा सर्वस्य, न तस्य कस्याचिदपेक्षा । सर्वेषामेव सेवकत्वान्नोपेक्षाऽपि ॥ २५ ॥

नर्हि विगर्हितरूपेण किमिति तिष्ठतीत्याशङ्क्याऽऽह—

**यस्याऽनवद्याचरितं मनीषिणो गृह्णन्त्यविद्यापटलं बिभित्सवः ।**
**निरस्तसाम्यातिशयोऽपि यत्स्वयं पिशाचचर्यामचरद्गतिः सताम् ॥ २६ ॥**

यस्याऽनवद्याचरितमिति । यस्य महादेवस्य । अनवद्यमाचरितं सर्वविषयत्यागेन स्वात्मचिन्तनरूपम् । मनीषिणो बुद्धिमन्तो मोक्षोपायान्वेषिणः, अत एवाऽविद्यापटलं बिभित्सवोऽविद्याभेदनार्थं प्रवृत्ताः

---

प्रकाशः ।

मातुः—कल्पान्तर इत्यादि । श्रीधरोक्ते अस्वरसं सूचयन्ति—प्रथमेत्यादि । अत्राऽपि क्लिष्टत्वमाशङ्क्य योगान्तरमाहुः—देवमित्यादि । * न हीत्यत्र । अत एवाऽस्माभिरिति । महादेवादेवाऽस्माभिः प्राप्यत इत्यर्थः । अनभिप्रेतत्वं मन्यमान इति । उपासकानामपि सोऽनुचित इति मन्यमानः ।

---

१ एतद्वा ऽग क ग ह २ अनवद्यमर्त ब ३ अनभिप्रतम् ख

आचरितं गृह्णन्ति । न हि महादेववद्यावन्मनुष्यो न तिष्ठेत्, तावत्कस्यचिज्ज्ञानं भवति । अत एव भगवान् महादेवो नित्यनिवृत्तानर्थोऽपि लोकशिक्षार्थं पिशाचचर्यामचरत् । मतान्तरे महान् हीनभाव प्राप्नोति चेत्तदा मुच्यते, समभावे ससार, उत्कर्षाहङ्कारे हीनभावः। अत सता स्वय तथा भूत्वाऽपि शिक्षक इति गतिर्भवति । उपदेष्टा, फल वा । देवोत्तमस्य पिशाचत्वमेवाऽपकर्ष । एव मनुष्यैर्गोमृगकाकचर्या कर्तव्येत्युपदेश ॥ २६ ॥

ननु लोके निन्दितो महादेव कथमेव स्तूयते ? तत्राऽऽह—

**हसन्ति यस्याऽऽचरितं सुदुर्भगाः स्वात्मन्रतस्याऽविदुषः समीहितम् ।**
**यैर्वस्त्रमाल्याभरणानुलेपनैः श्वभोजनं स्वात्मतयोपलालितम् ॥ २७ ॥**

हसन्तीति । तत्पद गन्तुमशक्तास्तं हसन्ति निन्दन्तीत्यर्थ । यस्य सर्वोपकारार्थं प्रवृत्तस्याऽऽचरितम् । **सुदुर्भगा** इति भाग्यरहिताः । सर्वोऽपि स्वसमान दृष्ट्वा स्वाभिरुचित वा स्तौति, तद्विपरीत तु हसति । तद्वैलक्षण्यमाह—स हि पूर्णज्ञान आत्माराम । तदाह—**आत्मन्रतस्येति** । अन्ये स्वज्ञा बहिर्मुखा । अत एवाऽविदुषः, सम्यगीहित भगवच्चरित्र न जानन्ति । वैलक्षण्याभिनिवेश एव निन्दाया हेतुरिति निन्दकाना विषयाभिनिवेशमाह—**यैरिति** । **वस्त्राणि** उष्णीषादीनि, **माल्यानि** पुष्पाणि, **आभरणानि** कङ्कणादीनि, **अनुलेपनानि** चन्दनादीनि चत्वार एते पदार्था देहोपलालनहेतव । ये पुनरेतदुपलालकास्ते देहात्माभिमानिन इति निश्चितम् । वस्तुतस्त्वय देह **श्वभोजनम्**, ग्राम एव तेषा मरणसम्भवात् गृध्रादीना ग्रहणम् । केवलमुपलालने धर्मो वा भवेदिति तन्निवृत्त्यर्थमाह—**स्वात्मतयेति** । स्वपदेन भगवत्त्वेन, तदधिष्ठातृत्वेन वा उपलालन व्यावर्तितम्, अन्यथा 'भोगैरात्मानमात्मनि' इति पक्षो विरुध्येत ॥२७॥

ननु महादेवस्य पिशाचचर्याया किमित्येवमभिप्राय कल्प्यते ? शापात्पिशाचत्वं जातमित्येव कथ नोच्यत इत्याशङ्क्याऽऽह—

**ब्रह्मादयो यत्कृतसेतुपाला यत्कारणं विश्वमिदं च माया ।**
**आज्ञाकरी तस्य पिशाचचर्या अहो ! विभूम्नश्चरितं विडम्बनम् ॥ २८ ॥**

**ब्रह्मादय इति** । भवेदेतदेवम्, यद्युत्कर्षहेतुर्न स्यात् । सर्वोत्कृष्टा लोके ब्रह्मादय, ते येन महादेवेन कृता मर्यादा मोक्षमभिव्याप्य वर्तन्त इति सेतुरूपाः, तेषा परिपालका, आज्ञाकारिण इत्यर्थ । इद च विश्व यत्कारणम्, या माया कारण यस्य । सा माया आज्ञाकारिणीति । आज्ञा चेत् प्रयच्छेत्, तदा माया महादेवभोगार्थं ब्रह्माण्डकोटीः सृजेत् । एव विश्वकारण विश्वप्रवर्तकाश्च यो नियमयति, तस्य पिशाचचर्या विडम्बनमेव, अनुकरणम् । यथा ब्राह्मण कौतुकाविष्टः पिशाचादिवेषान् करोति, तदपि तस्याऽनुचितम् । यतो विभूमा, न ततोऽन्यः कश्चिन्महानस्ति, विडम्बनेन य रसयुक्तं कुर्यात् । तथापि करोतीत्याश्चर्यम् । तदाह—अहो इति ॥ २८ ॥

—एव महादेवभक्ता महादेवगुणकथनेन तत्परा करिष्यामीति कृतेऽपि स्तोत्रे सा उद्गतकामा न निवृत्ता

---

प्रकाश ।

— एवमित्यत्र । इति कृत इति । इतीच्छया कृते ।

---

१ यस्य

जातेत्याह—

## मैत्रेय उवाच ।

**एवं संविदिते भर्त्रा मन्मथोन्मथितेन्द्रिया (?) ।**
**जग्राह वासो ब्रह्मर्षेर्वृषलीव गतत्रपा ॥ २९ ॥**

एवमिति । वाचनिकेनैव प्रतीकारस्य करणात् तत्परित्यज्य कायिकं व्यापारं कृतवती । न च वक्तव्यम्, तदुक्तोऽर्थो न बुद्ध इति । एवं भर्त्रा सम्यक् वादे कृते, संवादे वा कृते, सम्यक् विदिते ज्ञाते सति वा; तथापि मन्मथोन्मथिताशया वासो जग्राह । एवं धाष्टर्यं वृषल्या भवतीति तद्दृष्टान्तः । ब्रह्मर्षेरिति क्षोभंकरणं मारणं च निवारयति । वस्त्रग्रहणे क्षोभो ज्ञातो भविष्यतीति—वासो जग्राह । इन्द्रियमथनं विवेकधैर्याद्यनुत्पादार्थम् । एकान्तत्वात्, भर्तृत्वाच्च त्रपाभावस्तस्या उक्तः ॥ २९ ॥

एवं तया कृते यज्जातं तदाह—

**स विदित्वाऽथ भार्यायास्तं निर्बन्धं विकर्मणि ।**
**नत्वा दिष्टाय रहसि तयाऽथोपविवेश ह ॥ ३० ॥**

स विदित्वेति । अथेति वचनं वञ्चनाभावार्थम् । भार्यात्वादपि तदिच्छापूरणम् । विकर्मणि कर्मनाशे । कालकृतं तद्विदित्वा, दिष्टाय कालाय नत्वा । गत्यर्थकर्मणि द्वितीयाचतुर्थ्योर्विधानात् दिष्टायेति चतुर्थी । रहसि एकान्ते, अग्निहोत्रगृहं परित्यज्य गृहान्तरे । अथेति वैदिकप्रकारेण गर्भाधानप्रकारेण तया सह उपविवेश । हेत्याश्चर्यम् । महतो विकर्मणि प्रवृत्तिः ॥ ३० ॥

एवं गर्भाधानं कृत्वा यत्कृतवांस्तदाह—

**अथोपस्पृश्य सलिलं प्राणानायम्य वाग्यतः ।**
**ध्यायञ्जजाप विरजं ब्रह्म ज्योतिः सनातनम् ॥ ३१ ॥**

अथोपस्पृश्येति । अत्रापि भिन्नक्रमः प्रायश्चित्तार्थः, क्षोभाभावार्थं वा । सलिलमुपस्पृश्येति स्नात्वा । 'प्राणायामैर्दहेद्दोषान्' इति दोषाभावार्थं प्राणानायम्य । वाग्यतः तन्निर्भत्सनाद्यकृत्वा । ध्यायन्, भगवच्चरणारविन्दं ज्ञानमार्गानुसारेण ब्रह्म ज्योतिः सर्वप्रकाशकम्, विरजमविद्यानाशकं ध्यायन् जजापेति । प्रणवार्थं ध्यायन् प्रणवं जजापेत्यर्थः ॥ ३१ ॥

एवमृषेः प्रायश्चित्तमुक्त्वा तस्या अपि यथोचितमपराधप्रायश्चित्तमाह—

**दितिस्तु व्रीडिता तेन कर्मावद्येन भारत ! ।**
**उपसंगम्य विप्रर्षिमधोमुख्यभ्यभाषत ॥ ३२ ॥**

दितिस्त्विति । तुशब्दः पूर्वभावव्यावृत्त्यर्थः । कर्मण्यवद्यं कर्मावद्यम्, अग्निहोत्रमध्ये निन्दितकरणम्, तेन व्रीडिता । पश्चात्तु न विज्ञातम् । अतस्तेन प्रसिद्धेन अपराधेन व्रीडिता सत्युपसंगम्य अ-

---

१ [illegible] २ [illegible] ३ [illegible] ४ पापाभावार्थं. ह.

भ्यभापतेति संबन्ध । भारतेति सबोधनं भ्रमाभावाय । भ्रान्त एव परमेकविध मन्यते । पूरकत्वात् भाव्यर्थज्ञानाच्च निर्मर्यत्वम् । अधोमुखीति शब्दान्तराभावाय ॥ ३२ ॥

निषिद्धाचरणाभावात् नाऽत्र स्मृत्याशुचप्रायश्चित्तम्, अङ्गत्वात्कारस्याऽपि न साक्षादधर्महेतुत्वम् । यथा अकाले कृतो धर्म अकृतो भवति, एवमकाले कृतो गभोऽकृतो भवेत्, तत्र केवलकालस्य न बाधकत्वमपि, कर्मस्वभावाना बलिष्ठत्वात्, दैत्याना स्वभावनिष्ठत्वाच्च । अत कालाधिष्ठात्री देवता महादेव कदाचित् हन्यात् ? तत्रापि ब्राह्मणक्रोधसहितो हन्यादेव । अतो ब्राह्मणक्रोधाभाव प्रार्थयितु व्याजेन महादेवभक्त तं ज्ञात्वा महादेव प्रार्थयति । इयं च प्रार्थना नैमित्तिकीति नैमित्तिकमनूद्य, तदभाव काम्यत्वेन प्रथम निर्दिशति—

## दितिरुवाच ।

**मा मे गर्भमिमं ब्रह्मन्भूतानामृषभोऽवधीत्।**
**रुद्रः पतिर्हि (?) भूतानां यस्याऽकरवमंहसम् ॥ ३३ ॥**

— मा मे गर्भमिति । इम सजात गर्भ रुद्रो माऽवधीत् । ब्रह्मन्निति सबोधन तत्प्रतीकारकरणसामर्थ्य सूचयति । मारणे उपाय —भूतानामृषभ इति । भूतप्रेरणया मारयेत् । भूतानि हि गर्भ प्रविश्य स्रावयेयु । ननु स प्रजापति प्रजानामुत्पादक, कथ प्रजा मारयेत्तत्राऽऽह—स भूताना पतिः, ये उत्पन्नास्तेषा स्वामी, यतो रुद्रो रोदयतीति । स हि बालक उत्पन्न एव रोदिति, न गर्भस्थ । अतो गर्भस्तदीयो न भवतीति गर्भ नाशयतीति वा । एवं गर्भनाशने उपपत्तिमुक्त्वा निमित्तमाह—यस्याऽकरवमहसमिति । यस्याऽपराध कृतवत्यस्मि ॥ ३३ ॥

एव सकल्पमुक्त्वा, तत्सिद्ध्यर्थं रुद्र प्रार्थयते—

**नमो रुद्राय महते देवायोग्राय मीढुषे ।**
**शिवाय न्यस्तदण्डाय धृतदण्डाय मन्यवे ॥ ३४ ॥**

नमो रुद्रायेति । स हि गुणत्रयात्मक, अहङ्कारस्य त्रिगुणत्वात्, अतो नवभिर्विशेषणैस्तत्प्रार्थना । महता नमनमेव प्रसादने हेतु । तत्र प्रथम भूताना कृपया यद्रोदन कृतवान्, सा कृपाऽत्राऽप्यनुमन्येयेति ज्ञापनार्थं रुद्रायेत्याह, अपराधसहनार्थम्—महते, प्रार्थनया अपराधसहनार्थम्—देवाय । अनेन तामसादिभावात्रय उक्त । पुनस्तानाह—उग्रायेतित्रिभि । अन्यप्रेरणया मारयिष्यतीति तां पक्षं व्यावर्तयति उग्रायेति । न हि उग्रस्याऽग्रे कश्चित्कर्तुं शक्नोति । तर्हि प्रार्थितोऽपि मारयेदित्याशङ्क्य, न केवलमुग्र

**प्रकाशः।**

— मा मे (इ)त्यत्र । अत्र कर्मावद्यविषयके प्रायश्चित्ते प्रार्थनीये रुद्रापराधकृतानिष्टप्राप्त्यभावप्रार्थनं पुन इत्याकाङ्क्षायामधर्मजनकमर्थं विचार्यतत्प्रार्थनमिति वक्तु तमर्थं विचारयन्ति—निषिद्धेत्यादि । तत्रेति । गर्भे । तत्राऽपीति । हननेऽपि । ब्राह्मणक्रोधसहित इति। 'पुरुष कर्माधीनत्वात्' इतिन्यायेन ब्राह्मणाना कर्मशेषत्वात् कर्मनाशिकाया मयि सर्वज्ञाना तेषा क्रोधसम्भवात् तत्सहित । प्रार्थयतीति । स प्रत्यपि कर्मावद्यापराधनिवारणमेव प्रार्थयतीत्यर्थ ।

* स्थलत्रय ग २ एतत्प्रभृति क

एव, किन्तु सर्वेषां कामवर्षकोऽपीत्याह—मीढुष इति। मीढ्वान् वृषभ, पति, कामवर्षक इति यावत्। किञ्च, न केवल स फलदाता, किन्तु फलरूपोऽपीत्याह—शिवायेति। कल्याणरूपाय। अत प्रार्थितो न मारयिष्यति, कल्याण च करिष्यतीत्युक्तम्। पुनस्तृतीयपर्याये सत्त्वादिभावानाह—न्यस्तदण्डायेत्यादित्रिभिः। स हि पूर्वं दक्षं हत्वा महत्युपद्रवे जाते दण्डन त्यक्तवान्। इदमपि ब्रह्मबीजम्, अतोऽमारणार्थं महादेवकृतमिममर्थं स्मारयति—न्यस्तदण्डायेति। तर्हि प्रार्थना व्यर्था, स्वत एव दण्डस्य त्यक्तत्वादित्याशङ्क्याऽऽह—धृतदण्डायेति। दुष्टमारणार्थं धृतो दण्डो येन। तर्हि स्वत एव प्रार्थ्यतां किं ममाऽग्रे कथनेनेत्याह—मन्यव इति। स हि ब्रह्ममन्युरूप। ब्रह्ममन्युनैव प्रकटो भवति, नाऽन्यथा। अतस्त्वयि प्रसन्न एव स निवर्तते, नाऽन्यथेत्यर्थ ॥ ३४ ॥

एवं नमस्कारेण रुद्रं प्रार्थयित्वा पूर्वापराधं दूरीकृत्य भर्तारं प्रसादयितुमहङ्कारे स्थिते प्रसादोऽशक्य इति तदहङ्कारनिवृत्त्यर्थं महादेवमेव प्रार्थयति—

**स नः प्रसीदतां भामो भगवानुर्वनुग्रहः।**
**व्याधस्याऽप्यनुकम्प्यानां स्त्रीणां देवः सतीपतिः॥ ३५॥**

स न इति। स पूर्वोक्तो नोऽस्मभ्य प्रसीदताम्। यतो भामो भगिनीपति। न केवलं स्वत प्रसाद, किन्तु भर्तारमपि प्रसादयुक्त करोत्विति तत्सामर्थ्यार्थं भगवानित्युक्तम्। ननु कृतेऽपराधे दण्डाभाव एव भूयान्, कुतोऽनुग्रह करिष्यतीत्याशङ्क्याऽऽह—उर्वनुग्रह इति। उरुरनुग्रहो यस्य। प्रार्थितो न केवलमबाधक एव, किन्तु फलदाताऽपीत्यर्थ। किञ्च, अस्मास्वनुग्रह कर्तुमेवोचित, यतो वयं स्त्रियो व्याधस्याऽनुकम्प्या। पुरुषार्थार्थं हि तस्याऽपि हननम्। अर्थापेक्षया कामो महान्, स च स्त्रिया सत्यैव, अतो व्याधस्याऽप्यवध्या, यत स्त्रियोऽनुकम्प्या। सर्वस्याऽऽनन्ददायिका अपि स्वयमकृतार्था भवन्तीति। किञ्च, स स्त्रीणा देव, स्त्रियो हि गौरीमेव सभर्तृका पूजयन्ति, स एव क्रीडाकर्तेति वा। किञ्च, सतीपतिरिति। स्त्रीणा स्वभावज्ञ इति ॥ ३५ ॥

* एवं महादेवे स्तुते अर्द्धं प्रसन्न कश्यप क्रोधं प्रसाद च कृतवानित्याह—

## मैत्रेय उवाच।

**स्वसर्गस्याऽऽशिषं लोक्यामाशासानां प्रवेपतीम्।**
**निवृत्तसन्ध्यानियमो भार्यामाह प्रजापतिः॥ ३६॥**

स्वसर्गस्येति। स्वस्य सर्गस्य गर्भस्य, लोक्यां सर्वलोकप्रसिद्धामाशिषमाशासाना कामयमानाम्, किं भविष्यतीति प्रवेपतीमतिकम्पमानाम्, स्वय निवृत्तसन्ध्यानियमो भूत्वा, भार्यात्वादवश्यवक्तव्यामाह। प्रजापतित्वाच्च वचनं निष्ठुरम्, अन्यथा सर्वा एव तथा कुर्यु। दयावश्यकत्वाभ्या सामीचीन्यकथनम् ॥ ३६ ॥

---

प्रकाश।

* स्वसर्गस्येत्यत्र। अर्द्ध प्रसन्न इति। स्वस्य महादेवमाहात्म्यस्य तदर्थमुक्तत्वात् तद्द्वारेण ( तदादरेण ) प्रसन्न, स्वस्य भगवद्भक्तत्वेन तत्राऽऽदराभावादप्रसन्न इत्यर्द्धं प्रसन्न।

प्रथमतो दोषफलमाह–अप्रायत्यादित्यादिचतुर्भि —

## कश्यप उवाच ।

अप्रायत्यादात्मनस्ते दोषान्मौहूर्तिकादुत ।
मन्निदेशातिचारेण देवानां चैव हेलनात् ॥ ३७ ॥
भविष्यतस्तवाऽभद्रावभद्रे ! जाठराधमौ ।
लोकान्सपालांस्त्रींश्चण्डि ! मुहुराक्रन्दयिष्यतः ॥ ३८ ॥

* तस्या दोषचतुष्टयमनुवदति हेतुत्वेन, प्रसादेऽपि विपरीतफलावश्यकत्वाय । प्रथममाह–अप्रायत्या दिति । ते आत्मनो देहस्य अप्रायत्यात् अप्रयतत्वात्, रजस्वलात्वादित्यर्थः । मौहूर्तिको दोषः सन्ध्यारूप, तत्रोत्पन्नो दुष्टो न जीवति च । उतेत्यप्यर्थे । एको दोषः सूतकवन्न दोषान्तरं दूरीकरोति, किन्तु समुच्चीयत इत्यर्थ । तृतीयं दोषमाह–मन्निदेशातिचारेणेति । ममाऽऽज्ञोल्लङ्घनेन । अत्राप्युत, देहलीत्वात् । चतुर्थो दोष –देवानां चैव हेलनादिति । देवाना भूताना, गार्हपत्यादीना वा ; हेलनमवज्ञा॥३७॥

एव चतुर्भिर्दोषैस्तव पुत्रद्वय भविष्यतीत्याह, एकैकत्र दोषद्वयसङ्क्रमात् । तत्र हिरण्याक्षे प्रथमौ, तस्य शीघ्र मरणात्, तपस्यादिकरणाभावाच्च । अभद्रे इति संबोधन पुत्रस्योभयाशत्वेऽपि मातृदोषेणैव दुष्टाविति ज्ञापयितुम्, अतस्तावभद्रौ । ननु ' माता भस्त्रा पितुः पुत्रः ' इति शास्त्राद्बीजादुष्टत्वे कथ तयोर्दोषवत्त्वमित्याशङ्कयाऽऽह–जाठराधमाविति । जठरे जातेन दोषेणाऽधमौ । उत्तमबीजमपि यथा शूद्राया मविष्ट शूद्रतामापद्यते तथेत्यर्थः । तयोर्दोषमाह–लोकानिति । लोकपालसहितान् लोकान् मुहुराक्रन्दयिष्यत । रुद्रकालजातत्वाद्रोदयितृत्वम् । चण्डि ! कोपनशीले । अयमपि दोपस्त्वैव ॥ ३८ ॥

एव तयोर्दोषमेकमुक्त्वा अन्यास्त्रीन्दोषानाह—

प्राणिनां हन्यमानानां दीनानामकृतागसाम् ।
स्त्रीणां निगृह्यमाणानां कोपितेषु महात्मसु ॥ ३९ ॥

प्राणिनामिति । प्राणिना दोषवत्त्वेऽपि दीनाना वधोऽनुचितः, तत्राप्यकृतागसा वध इत्येको दोष, स्त्रीणा निगृह्यमाणानामित्यपर । पातिव्रत्यात्त्याजन निग्रह । कोपितेषु महात्मास्विति चाऽपर, देषा भगवत्सेवाप्रतिबन्धात्कोप ॥ ३९ ॥

एव दोषचतुष्टये जाते ' भक्तद्रोहे वधः स्मृतः ' इति वाक्यात्परमेश्वरस्तौ मारयिष्यतीत्याह—

तदा विश्वेश्वरः क्रुद्धो भगवॉल्लोकभावनः ।
हनिष्यत्यवतीर्याऽसौ यथाऽद्रीन् शतपर्वधृक् ॥ ४० ॥

तदेति । मारणे हेतु –विश्वेश्वर इति । न हि, जगदीश्वरद्वय भवति । किञ्च, क्रुद्धः, भक्ताना पीड-

प्रकाश ।

* देहलीत्वादिति । पूर्वार्धसमाप्तिदेशस्य देहलीत्वादुत्तरार्धेऽपि उतेति पद सम्बध्यत इत्यर्थ ।

१ मारणात् क २ पातिव्रत्यात्त्याजन क

नात् । भगवानिति * वैकुण्ठापचारपरिहारार्थमपि तादृशयोर्नस्त्याजयिष्यतीति सूचयति । लोकभावन इति मर्यादारक्षार्थमपि तद्धननम् । स्वामिनः सेवकवधः साक्षादनुचित इत्यवतीर्य हनिष्यति वराहनृसिंहरूपेण । असाविति सोऽत्रैव तिष्ठतीति हननावश्यकत्वं सूचितम् । शतपर्वधृगिति । यथा प्राणिनां क्लेशनिवृत्त्यर्थं वज्रहस्तेनेन्द्रेण भारेण पततां पर्वतानां पक्षच्छेदः क्रियते, तद्वदीश्वरस्य तादृशवध आवश्यक इत्यर्थः ॥ ४० ॥

भर्त्रा क्रोधेन अनिष्टे श्राविते, सा विष्णुभक्ता पुत्रयोर्भगवत्संबन्धं श्रुत्वा संतुष्टा, तथेत्यन्वमोदतेत्याह—

## दितिरुवाच ।

**वधं भगवता साक्षात्सुनाभोदारबाहुना ।**
**आशासे पुत्रयोर्मह्यं मा क्रुद्धाद्ब्राह्मणात्प्रभो ! ॥ ४१ ॥**

वधं भगवतेति । तेन पूर्वं ' कोपितेषु महात्मसु ' इति महापुरुषकोप उक्तः । स शापपर्यवसायी मा भवतु । तच्छापेन भगवतापि वधे कृते सामीचीन्यं न भविष्यतीति तदभावेन केवलं भगवानेव ब्राह्मणप्रेरणाव्यतिरेकेण करोत्विति प्रार्थयति । साक्षादिति स्वहस्तेन, न तु कालादिना । सुनाभोदारबाहुनेति । वधेऽपि सुदर्शनेनैव, हस्तेनैव । यतो हस्त एव मोक्षादिसर्वपुरुषार्थदाता । आशासे, कामितोऽयमर्थो दुर्लभः; परमनभिमेतः क्रुद्धादेव ब्राह्मणाद्वधः । तथा वरो देय इति तत्र सामर्थ्यं सूचितं, प्रभो इति ॥ ४१ ॥

ब्राह्मणाद्वधोऽत्यन्तविगर्हित इति वक्तुं तस्य परलोकबाधकत्वमाह—

**न ब्रह्मदण्डदग्धस्य न भूतभयदस्य च ।**
**नारकाश्चाऽनुगृह्णन्ति यां यां योनिमसौ गतः ॥ ४२ ॥**

न ब्रह्मदण्डेति । ब्रह्मदण्डेन ब्रह्मशापेनाऽग्निरूपेण । दण्डो हि दग्धकाष्ठरूपो भवति, तद्वतोऽग्निः सर्वथैव दहेत् । तत्र हेतुः—भूतभयदस्येति । ब्रह्मदण्डदग्ध एव भूतेभ्यो भयं प्रयच्छति, नह्यन्यः स्वयं दुःखाभिज्ञः परेभ्यो दुःखं प्रयच्छति । ब्रह्मशापे तु ज्ञानादीनां नाशाद्यथाकर्तुं शक्नोति, पृथग्वा हेतुः । चकाराद्भगवद्द्वेषिणः । नारका अपि तस्य संबन्धिनस्तान्वा नाऽनुगृह्णन्ति । द्वितीयार्थे षष्ठी । चकारादन्येऽपि । अप्यर्थे वा चकारः, नारका अपि तं न स्पृशन्तीत्यर्थः । असौ ब्रह्मदण्डदग्धादिर्यां यां योनिं गतः । नारका द्विविधाः, स्थानभेदा योनिभेदाश्च । तत्र योनिभेदे दैहिकः संबन्धोऽधिको भवतीति कदाचिदनुग्रहो भवेत्, तन्निषेधार्थमाह—यां यां योनिमसौ गत इति ॥ ४२ ॥

कश्यपस्तां भगवद्भक्तां ज्ञात्वा, स्वबीजस्याऽपि सार्थकतां विलोक्य, वरं प्रयच्छति । कृतशोकानुतापेनेत्यादिभिः—

## कश्यप उवाच ।

**कृतशोकानुतापेन सद्यः प्रत्यवमर्शनात् ।**

---

प्रकाशः

* मदृत्यम । वैकुण्ठापचारेति । वैकुण्ठे जातो योऽपचारस्तन्निवृत्त्यर्थमित्यर्थः ।

## भगवत्युरुमानाच्च भवे मय्यपि चाऽऽदरात् ॥ ४३ ॥

वरः, पौत्रो वैष्णवस्तव भविष्यतीति। कारणे षड्गुणाः क्षेत्रे कार्ये बीजस्वभावतः। * अष्टादशगुणा जातास्ते कीर्त्यन्ते क्रमादिमे ॥१॥ तत्र प्रथमं तस्याः षड्गुणानाह—कृतं यत् कर्म, तत्र शोकः, स्वपुरुषार्थो मया नाशित इति, यथा पुत्रादिनाशे शोकः। एवं कृतेऽपि भोगे, जातेऽपि गर्भे, शोकः। अनुतापो मया किमर्थं कृतमिति पश्चात्तापः। द्वयोरेकवद्भावः कर्तुर्दुःखजननसाम्यात्। अन्यं गुणमाह—सद्यः प्रत्यवमर्शनादिति। प्रत्यवमर्शनमपराधक्षमापनम् (?)। अत्र विनयेनाऽऽगमनं प्रार्थना च प्रत्यवमर्शः। भगवत्युरुमानो 'वधं भगवता साक्षात्' इति पुत्रापेक्षयाऽपि भगवत्यधिकसंमाननम्। लोके पुत्रमारकोऽत्यन्तं द्विष्टः, स चेदत्यन्तं मानितस्तदाऽयं महान् गुणः। गुणद्वयमाह—भवे मय्यपि चाऽऽदरादिति। पूर्वं 'न मे गर्भम्' इत्यादि भवस्याऽऽदरः सूचितः। मय्यादरः 'प्रभो' इति संबोधनात्, ब्राह्मणाधिक्याद्वा ॥ ४३ ॥

## पुत्रस्यैव तु पुत्राणां भवितैकः सतां मतः ।
## गास्यन्ति यद्यशः शुद्धं भगवद्यशसा समम् ॥ ४४ ॥

एतैः षड्भिर्गुणैः कृत्वा. एकस्य ज्येष्ठस्य पुत्राणां चतुर्णां मध्ये एकस्तृतीयः सतां मतो भविष्यति। अनेन वंशवृद्धिरपि सूचिता। सतां मतस्तेषां प्रमाणभूतः, अन्यथा सन् सत्तम इति वा वक्तव्यः स्यात्। मतस्तु मानेनैव ज्ञातः। अनेन भगवन्मार्गे न प्रमाणमिति निरूपितम्। तस्य प्रमेयतामाह—गास्यन्तीति। प्रमातुं तदेव योग्यम्, यत्कदाचिदपि विरुद्धज्ञानविषयो न भवति, फलतः साधनतश्च। अतो भगवद्यशो यदा गीयते तदा तदाधारत्वेन प्रह्लादयशो गीयते। आधाराधेययोस्तुल्यत्वात्समत्वम्। भक्तानामाधारत्वं पूर्वं निरूपितम्। शुद्धमिति विशेषः। खण्डश आधारत्वव्यावृत्त्यर्थं सममित्युक्तम्। भगवद्यशसेति करणं वा, शुद्धत्वे समत्वे च। दैत्यानां यशः प्रायेण विषमं भवतीति मतान्तरत्वाच्च तुल्यत्वकथनमपि न दोषाय। यथा 'पुण्यश्लोको नलो राजा' इति। अत एव गास्यन्ति लोकाः ॥ ४४ ॥

एवं साधारण्येन प्रमेयत्वमुपपाद्य, असाधारण्येनोपपादयति—

## योगैर्हेमेव दुर्वर्णं भावयिष्यन्ति साधवः ।
## निर्वैरादिभिरात्मानं यच्छीलमनुवर्तितुम् ॥ ४५ ॥

योगैरिति। यथा कुन्दनकर्तारः कल्कादिभिः सुवर्णं शोधयन्ति, सर्वथाचेन्निर्दुष्टम्। तदा न विजातीयसजातीयान् परिगृह्णाति। क्षुद्रेऽपि सजातीये भगवन्तं योजयितुं शक्नोति, हीरकमिव। तत्र निकषे ज्ञाते। तथा स्वात्मानमपि भावयेत्। अतः सुवर्णे रजतादिदोषा यथा दूरीक्रियन्ते, तथा आत्मन्यपि वैरादिदोषा दूरीकर्तव्याः। अतो निर्वैरताया अवधिर्ज्ञातव्यः। प्रह्लादस्तु औत्पत्तिकतादृशगुणयुक्तः। अतो 'यथा चिति तन्मात्रेण तदात्मकत्वात्' इति न्यायेन ब्रह्मचैतन्यमिव स्वचैतन्यं क्रियते, साधनैर्भगवद्भावो वा संपाद्यते, भगवदनुग्रहात्। तथा साधुत्वार्थमन्यत्र भगवद्भावसंपादनार्थं प्रह्लादमायोऽपि सं-

प्रकाशः

* कृतेत्यत्र। अष्टादशगुणा इति। षण्णां त्रैगुण्येऽष्टादशत्वाचायन्त इत्यर्थः।

१ तद्यत्. पा

पाद्यते । तदाह—यथा सुवर्णं साधयन्ति, तथा यच्छीलमनुवर्तितुं निर्वैरादिभिरात्मानं साधयिष्यन्ति । साधवः परोपकारनिरताः ॥ ४५ ॥

एवं प्रमेयत्वं निरूप्य फलत्वं निरूपयति—

**यत्प्रसादादिदं विश्वं प्रसीदति यदात्मकम् ।**
**स स्वदृग्भगवान्यस्य तोष्यतेऽनन्यया दृशा ॥ ४६ ॥**

१ यत्प्रसादादिति । भगवान् येन तोष्यते । यद्यपि सर्वेषामात्मत्वात् स्वरूपतस्तुष्ट एव, तथापि साधनेन तुष्टस्तुष्ट इत्युच्यते । तदाह—यस्याऽनन्यया दृशेति । प्राणिनां षोडशदृष्टयो भवन्त्यन्तः; दशेन्द्रियाणि, अन्तःकरणचतुष्टयम्, आत्मा, देहश्चेति । प्राणेन सह सप्तदश । तत्सम्बन्धिनः पुत्रादयो बाह्याः सप्तदश । एवं चतुस्त्रिंशदपि दृष्टयो भगवद्विषयिका एव यस्य सोऽनन्यदृक्, सर्वभावेन प्रपन्नः । तदा सर्वभावमापन्नो भगवान् प्रसीदति । ननु भगवत्प्रसाद एव फलं कथमुच्यते ? विश्वस्यैव फलत्वात् । अन्यथा भगवानपि विश्वस्मिन् न रमेत । अत आह यस्य भगवतः प्रसादादिदं विश्वमेव प्रसीदति । भगवत्प्रसाद एव विश्वप्रसादः । अनुसन्धानभेदात् कार्यकारणभावः, अन्यथा कार्ये साधनान्तरमप्यपेक्षेत । अतो भेदव्यावृत्त्यर्थमाह—यदात्मकमिति । भगवदात्मकमेव विश्वम्, भगवति प्रसन्ने प्रसन्नमेव भवति । तदाऽस्य सर्वत्र कामचारो भवति भगवत इव । ननु भगवान् तं प्रति कथं विषयत्वमापद्यते, हीनभावापत्तेः मर्यादाभङ्गश्च स्यात् । अत आह—स्वदृगिति । स भगवान् सर्वमात्मत्वेनैव पश्यति । तथा च, तस्य प्रसादे अयमप्यात्मत्वेनैव पश्येत्, अतो न हीनत्वम्, न वा मर्यादाभङ्गः । स्वत एव भगवत्त्वात् पूर्णकामोऽपि । तदाह—भगवानिति । तस्मात्फलरूपः प्रह्लादः ॥ ४६ ॥

साधनरूपतामाह त्रिभिः, साधनानां त्रैविध्यात् । गुणरूपाणि कानिचित्साधनानि, दोषाभावरूपाण्यपराणि, अन्तरङ्गं फलरूपं चैकम् । तत्र प्रथमं गुणरूपाणि साधनान्याह—

**स वै महाभागवतो महात्मा महानुभावो महतां महिष्ठः ।**
**प्रवृद्धभक्त्या ह्यनुभावितान्तर्निवेश्य वैकुण्ठमिमं विहास्यति ॥ ४७ ॥**

स वै महाभागवत इति । यस्तूपपत्त्योत्पत्त्या च साधनवान्, स एव तच्छास्त्रे गुणयुक्तः । अतः प्रह्लादस्तादृश इति वै निश्चयेन महाभागवतः । यस्तु भगवदीयो भूत्वा भगवदीयमेव देहादिभिः करोति, जानाति, स भागवतः । यस्तु सर्वदैव तथाविधः, स महाभागवतः । अनेन भगवच्छास्त्रसिद्धं सर्वमेव साधनमुक्तम् । महात्मेति द्वितीयं साधनं ज्ञानमार्गसिद्धम् । ब्रह्मभावेन स जीवो महानात्मा भवति, अन्यथा परिच्छिन्न एव स्यात् । महत्त्वं चापरिमितमेव । महानुभाव इति तृतीयं साधनम् । कर्ममार्गानुसारेणोत्कर्षः, तत्र ह्यनुभावेनैव महत्त्वम् । कर्मणोऽनित्यत्वेन महत्त्वजनकत्वाभावात् कर्मजनितोऽनुभाव एव

---

प्रकाशः ।

१ यत्प्रसादादित्यत्र । दृष्टय इति । दर्शनसाधनानि, दर्शने विषयाश्च । कार्य इति । कार्यप्रसादार्थम् । मर्यादाभङ्ग इति । 'पराञ्चि खानि' इति श्रुतिविरोधान्मर्यादाभङ्गः । अतो नेति । आत्मत्वादात्मचक्षुष्ट्वाच्च नेत्यर्थः ।

तथात्वबोधकः। तस्य महानुभावत्वमन्यादिभिर्दोहाद्यभावात्। सर्वोत्कृष्टोऽनुभावो महान् शीघ्रप्रत्ययहेतुः, महत्प्रत्ययहेतुश्च। महतां महिष्ठः, चतुर्थो लोके उत्कर्षहेतुः कीर्तिमतामपि कीर्तिमानित्यर्थः। कीर्तिश्रियौ वा लोके महत्त्वहेतू। अत एव महतां मध्येऽत्यन्तं महान् महिष्ठः। एवं चतुर्विधं साधनमुक्त्वा पञ्चमं पुरुषार्थरूपं भगवत्स्नेहमलौकिकं साधनत्वेनाऽऽह–प्रवृद्धभक्त्येति। पूर्वसाधनैः प्रकर्षेण वृद्धा या प्रेमलक्षणा भक्तिः, तयाऽनुभावितं यदन्तःकरणं प्रेम्णा तदात्मकं संजातम्, यथा भगवान् भाति। ÷स हि स्वाश्रयः, अत एव स्वभावापन्नेऽन्तःकरणे संनिविशते। वैकुण्ठमिति यद्दर्शनार्थमेतावान् क्लेशोऽनुभूतः। इमं देहं विहास्यति, विदेहकैवल्यं प्राप्स्यति, देहसंततिर्निवर्तिष्यत इत्यर्थः। एवं सर्वशास्त्रलोकसिद्धं साधनं सफलमुक्तं गुणरूपम् ॥ ४७ ॥

दोषाभावरूपमाह—

**अलम्पटः शीलधनो गुणाकरो हृष्टः परर्द्ध्या व्यथितो दुःखितेषु।**
**अभूतशत्रुर्जगतः शोकहर्ता नैदाघिकं तापमिवोडुराजः ॥ ४८ ॥**

अलम्पट इति। लाम्पट्यमिन्द्रियविषयासक्तिर्दोषः, शीलं सुस्वभावः, तदेव धनं यस्य। सर्वेभ्य एव चौरादिभ्यो धनं संरक्ष्यते, तथा हीनानामतिक्रमादिभिः स्वशीलं संरक्ष्यते। अनेन शीलनाशो दुःशीलता च निवारिता। गुणाकर इति। गुणाः सत्यादयः प्रथमस्कन्धोक्ताः, तेषामाकरः स्थानम्। ते सर्वे दोषाभावरूपाः। लौकिका भगवत्युच्यमानास्तथैव भवन्ति। सर्वेषु गुणेषु समता, दया चोत्कृष्टे इति तयोर्विवरणमाह–हृष्टः परर्द्ध्या व्यथितो दुःखितेष्विति। स्वसमृद्ध्यैव सर्वो हृष्यति, अयं तु परसमृद्ध्याऽपीति समः। दुःखितेषु व्यथितो दयावानेव भवति, परदुःखं दृष्ट्वा कारुणिक एव दुःखितो भवति। अभूतशत्रुरिति। न भूताः शत्रवो यस्य। किं बहुना, यस्य कामादयोऽपि न शत्रवः। जगतः शोकहर्तेति सामर्थ्यम्। परदुःखप्रहाणेच्छा सहजा निरुक्ता। शोकस्त्वन्तर्हितस्तापः। बहिस्तापमपि निवारयतीति दृष्टान्तेनाऽऽह–नैदाघिकमुष्णकाले सूर्यजनितम्, तथा कलिकालादौ कालजनितमपि तापम्। उडुराजश्चन्द्रः। स हि नक्षत्रैः सह तापं दूरीकरोति। तथा सर्वपरिकरसहितः स्वसान्निध्येन असान्निध्येन वा तापं दूरीकरोतीत्यर्थः। ॥ ४८ ॥

सर्वोत्कृष्टं साधनमाह—

**अन्तर्बहिश्चाऽमलमब्जनेत्रं स्वपूरुषेच्छानुगृहीतरूपम्।**
**पौत्रस्तव श्रीललनाललामं द्रष्टा स्फुरत्कुण्डलमण्डिताननम् ॥ ४९ ॥**

अन्तर्बहिरिति। तस्य हि भगवत्प्रसादेन भक्त्या ज्ञानवैराग्याभ्यां च भगवत्साक्षात्कारो जायते। तत्र भगवान् सर्वत्र साकारः, सच्चिदानन्दरूपः, सर्वतः पाणिपादान्तः, मायाजवनिकाच्छन्नस्तिष्ठति। तत्र प्रह्लाददृष्टेर्माया न जवनिकारूपा, तां भित्त्वाऽपि भगवद्रूपं पश्यतीत्यर्थः। केचित्तु प्रसन्नो भगवान् तस्य दृष्टेरग्रे स्वस्यैकां मूर्तिं स्थापितवानत्र वर्ण्यमानाम्। तत् यत्रैव दृष्टिं प्रसारयति, तत्रैव तं पश्यतीत्याहुः।

'प्रकाशः।

÷ स या इत्यत्र। स हि स्वाश्रय इति। स भगवान्, हि यतो हेतोः, स्वप्रतिष्ठित इत्यर्थः।

१ स निविशते. ग. ङ..

तत्र यदि तद्रूपं ब्रह्मस्वरूपम्, तदा न पूर्वस्माद्विशेषः। अथोपाधिरूपम्, तदा न प्रह्लादस्योत्कर्ष इति। अन्तर्बहिर्द्रष्टा, द्रक्ष्यतीत्यर्थः। अमलमिति, यथा मध्यन्दिनवर्तिसूर्यमण्डलान्तः। अनेन दोषाभाव उक्त। अब्जनेत्रामिति दृष्ट्यैव सर्वेष्टपूरकः। अनेन सर्वे गुणा उक्ताः। एवं निर्दोषपूर्णगुणविग्रहत्वमुक्त्वा भक्ताधीनत्वमाह—स्वपूरुषेच्छेति। स्वस्य पूरुषा भक्ताः, तेषां यादृशीच्छा तदनुसारेण गृहीतं रूपं येन। तव पौत्र इति भक्त्यंशस्तस्या एव। श्रीर्लक्ष्मीः, ललना स्त्रीचिह्नरूपा, तथा ललामम्। अनेन सर्वभाग्यरूपत्वात् तद्दर्शने किञ्चिदन्यत्प्राप्तव्यं द्रष्टव्यं वा नाऽवशिष्यत इति निरूपितम्। अनेन भगवत ऐहिकफलरूपत्वमुक्तम्। स्फुरती ये कुण्डले, ताभ्यां मण्डितमाननं यस्य। ससाधनौ साङ्ख्ययोगौ स्फुरत्कुण्डले, तत्सहितो योऽयं भक्तिमार्गः स मुखमिति, सोपायमोक्षदातृत्वं निरूपितम्॥ ४९॥

एवं भगवन्माहात्म्यं तादृशं पौत्रं श्रुत्वा सर्वचिन्तारहिता जातेत्याह—

## मैत्रेय उवाच।

**श्रुत्वा भागवतं पौत्रं मुमोदत दितिर्भृशम्।**
**पुत्रयोश्च वधं कृष्णाद्विदित्वाऽऽसीन्महामनाः॥ ५०॥**

– श्रुत्वेति। विना पुत्रस्य भगवदीयत्वेन भागवतः पौत्रो न भवतीति पुत्रोऽपि भगवद्भक्तः। परं निमित्तवशादन्यथा प्रतिभासत इति मत्वा भृशं मुमोदत मुमुद इत्यर्थः। तकारश्छान्दसः, अलौकिकज्ञानबोधनार्थः। पुत्रयोरपि विनियोगः समीचीनः, भगवति प्रवेशात्, भगवल्लीलासाधकत्वाच्च। अतो ममोद्योगः सफल इति विदित्वा महामना आसीत्, यथा कश्चित् परमपुरुषार्थं साधयित्वा मुदितो भवति। अनेन दितिः परमभक्ता। एवंरूपेण भगवल्लीलां संपादयतीति विहितभक्तिमार्गाभावेऽपि भक्तेति मतान्तरेण सृष्ट्युपयोगित्वान्निरूपिता॥ ५०॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां तृतीयस्कन्धे चतुर्दशाध्यायविवरणम्।

---

### प्रकाश।

– श्रुत्वेत्यत्र। अनेनेति। उपसंहारपद्येन। परमभक्तत्वनिरूपणप्रयोजनमाह.–एवंरूपेणेत्यादि। एवंरूपेणेति। एवंप्रकारेण। तथा चाऽध्यायारम्भे विदुरप्रश्नाभिनन्दनं कथामाहात्म्यं चोक्त्वा, ततोऽपत्यनेन प्रकरणान्तरं प्रतिज्ञाय ततस्तद्वर्णयित्वा उपसंहारे यदस्या भगवति भक्तिं वदति, तेनोपक्रमोपसंहाराभ्यामस्य तात्पर्यं भगवत्येव निश्चयम्। एवंप्रकारेणाऽवतारे गुणोत्कर्षो चोपोद्घातत्वं ज्ञेयमित्याकूतं सूचितम्।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे चतुर्दशाध्यायविवरणं सम्पूर्णम्।

---

१ [illegible]

# पञ्चदशाध्यायविवरणम् ।

निरूप्यते पञ्चदशे क्रोधेन ज्ञाननाशनम् ।
बीजे जीवप्रवेशार्थं भक्तशापोऽनुवर्ण्यते ॥ १ ॥
इतिहासप्रवृत्त्यर्थं सङ्गतिश्चाऽपि रूप्यते ।
ज्ञानमूलस्य सत्त्वस्य कार्यनाशकता पुनः ॥ २ ॥
वैकुण्ठे वृक्षपक्षीणां स्त्रीणां चापि न मत्सरः ।
सर्वदोषविहीनत्वात्तत्र दोषो हरीच्छया ॥
अतः सृष्टिप्रसिद्ध्यर्थं वैकुण्ठस्य च वर्णनम् ॥ ३ ॥

एवं पूर्वाध्याये दितेर्गर्भाधानमुक्तम् । तदग्रिमं वृत्तान्तमाह—

## मैत्रेय उवाच ।

**प्राजापत्यं हि तत्तेजः परतेजोहनं दितिः ।**
**दधार वर्षाणि शतं शङ्कमाना सुरार्दनात् ॥ १ ॥**

प्राजापत्यमिति । प्रजापतिः कश्यपः, तस्य तेजो बीजमेव, बीजस्य ब्रह्मत्वात् । अत एव परतेजोहनम् । ब्रह्मतेजसा हि अन्ये हन्यन्त एव । इममेवार्थं हिशब्द आह । तस्य मारकत्वमुत्पत्तौ कालादिधर्मजन्यमिति सूचयितुं तदित्युक्तम् । शतं मानुषवर्षाणि गर्भे दधार । देववर्षाणि वा । तौ चेत् गर्भे पुष्टौ भवतः, तदा देवैर्मारयितुमशक्यौ, देवान् वा वृथा मारयेताम् । दितिपदेन न तस्याः स्वाभाविकं सामर्थ्यं सूचितम् । तस्याः सहजस्वसामर्थ्यानुसन्धानात् भयं नास्त्येव, ब्रह्मबीजत्वाच्च न देवानां वृथा मारणम् । तथापि भर्तृवाक्यात् शङ्का जातेत्याह—शङ्कमानेति । तदा तस्मिन् बीजे द्विधाभूते जयविजययोः प्रवेशो जात इति ब्राह्मं वैष्णवं च तेज एकीभूतम्, सूर्यादितेजोऽसहमानम्, स्वतेजसा तद्दूरीचकार ॥ १ ॥

---

### प्रकाशः ।

अथ पञ्चदशाध्यायं विवरीतुकामाः पूर्वाध्यायसङ्गतिं स्फुटीकर्तुमध्यायार्थमाहुः—निरूप्यत इत्यादि। तथा च, पूर्वाध्याये यथा कर्मनाशस्याऽवतारप्रयोजकता तथाऽत्र ज्ञानमार्गनाशस्य । यथा च, तत्र दितिकामस्य मुक्तोत्पत्तिप्रयोजकता, तथाऽत्र सनकादिजयादिक्रोधस्येत्यर्थः । तेनाऽध्याययोरेककार्यत्वं संगतिरित्यर्थः । मैत्रेयवाक्ये सङ्गतिमाहुः—इतिहासेत्यादि । इतिहासो ब्रह्मप्रोक्तः, तस्य प्रवृत्त्यर्थमिदानीं कथनार्थं सङ्गतिः प्रयोजकत्वरूपा, चकारादेवोक्तहेतुतारूपाऽपि रूप्यते । ज्ञानमूलस्य सत्त्वस्य कार्यज्ञाने पुनः सत्त्वनाशकता रूप्यते । पुनः शब्देन स्कन्धरूपत्वप्रयोजको वासिष्ठरामायणोक्तः सत्त्वनाशः स्मार्यते । तेन सनकादिज्ञानस्य तथात्वं स्वाभाविकमिति बोध्यते । तदपि सङ्गतावेव प्रविशतीत्यर्थः । ननु वैकुण्ठवर्णनस्याऽत्र किं प्रयोजनमित्याकाङ्क्षायां तत्सङ्गतिं सार्द्धेनाहुः—वैकुण्ठेत्यादि । पक्षीणामिति । नदीनां च नन्दीनां च शृङ्गीणां शस्त्रपाणिनाम्, इतिवदत्र च पक्षीशब्द इकारान्त इति बोध्यम् । शेषं स्फुटम् । तथा च, तदप्युपोद्घातप्रयोजकत्वेनैवोक्तमित्यर्थः ।

लोके तेन हतालोके लोकपाला हतौजसः ।
न्यवेदयन्विश्वसृजे ध्वान्तव्यतिकरं दिशाम् ॥ २ ॥

तदा तेन बीजेन हतालोके लोके सति, लोकपाला अपि कालाधीनाः कालतेजसि गते स्वयमपि हतौजसो जाताः । ते हीन्द्रादयो बलकार्यरूपाः, अतस्तेषामोज एव गतम् । तदा बलप्रकाशयोर्नाशात्त-न्निदानं ज्ञातुकामा ब्रह्मलोकं गताः, मेरुपृष्ठं वा । विश्वसृजे स्ववृत्तान्तं न्यवेदयन् । स्वस्यौजसोऽभावो-ऽप्रतिग्राहेतुत्वान्न निवेदित, किन्तु ध्वान्तमन्धकारम्, तेन दिगव्युत्पत्तिं च न्यवेदयन् ॥ २ ॥

तत्र मूलं तम एवेति तत्र निदानं पृच्छन्ति—

देवा ऊचुः ।

तम एतद्विभो ! वेत्थ संविग्ना यद्वयं भृशम् ।
न ह्यव्यक्तं भगवतः कालेनाऽस्पृष्टवर्त्मनः ॥ ३ ॥

*तम एतदिति । देवा भीता ब्रह्मणैव क्रियते दैत्यवर्द्धनम् । अतो देवविनाशः स्यादिति तेनैव-मीरणम् । १ । ज्ञानं समर्थित तस्य स्वदोषाभाव एव च । विद्यमानेऽपि तच्छान्तिस्तस्य भ-क्तकृपा तथा । २ । भक्तानामभयं तस्मात्सेवकाश्च वयं भृशम् । अतोऽस्मासु कृपा कार्या दै-त्योत्पत्तिर्हि जायते । एवमष्टविधं वाक्यं ब्रह्माणं प्रति दैविकम् । ३ । तत्र प्रथमं महत्त्वात्प्रभुमप्य-शक्तास्तमसोऽज्ञानं संभावयन्ति । हे विभो ! सर्वज्ञानादिसमर्थ । एतत्तमः सर्वथा वेत्थ, जानासि । अ-तोऽस्मान् ज्ञापयेति भावः । ज्ञापने हेतुः—यद्यस्मात्तमसो भृशं वयं संविग्नाः ; अन्धकारादोजसोऽभावात् । तर्वे स्वज्ञानं न संभवति । यदव्यक्तं भगवतो रूपं तत्त्वां प्रति न । अतो भगवतो वासुदेवगुणावता-रस्य तव नाऽस्त्यव्यक्तम्, किञ्च, अव्यक्तहेतुरपि नास्ति । कालेन हि सर्वमव्यक्ते प्रविलाप्यते, त्वं तु कालेन न स्पृष्टं वर्त्म यस्य तादृशः ॥ ३ ॥

एवं ज्ञानं तस्य समर्थयित्वा स्वदोषाभावं निरूपयन्तस्तस्य सर्वहृदयाभिज्ञत्वमाहुः—

देवदेव ! जगद्धातर्लोकनाथशिखामणे ! ।
परेषामपरेषां च भूतानामसि भाववित् ॥ ४ ॥

देवदेवेति । अन्येषां भवान् न पूज्यः, तेन तद्धृदयमप्रविष्टः कदाचिन्न जानास्यपि, वयं तु देवा अस्माकं [illegible] त्वमेवोपास्य इति संबोधनम् । किञ्च, वयं निष्कपटा एव त्वयोत्पादिताः शुद्धसत्त्वेन, अतोऽ-पि जानासीति संबोधनान्तरमाहुः—जगद्धातरिति । जगतां त्वमेव विधाता, धारयिता वा । तथापि हृ-दयज्ञानमुचितमेव । किञ्च, स्वामी हि सेवकस्य हृदयं जानाति । भवांस्तु सर्वेषामेव लोकानां ये नाथा इन्द्रादयस्तेषां शिरोमणिः । लोकनाथा एव स्वलोकस्याऽभिप्रायं जानन्ति, भवांस्तु तेषामपि । तत्रापि

प्रकाशः ।

* तम इत्यत्र । देवा इति प्रथमकारिकया अष्टानां सामान्यार्थ उक्तः, अग्रिमयोस्तु प्रतिचरणं प्रा-तिस्विक इति बोध्यम् ।

१ तव तत्परार्थं. क. ख. घ ङ २ त्व. पा.

शिखामणिरिति तेषामुपरि तत्प्रकाशकत्वेन तत्कर्मसाक्षित्वेन च वर्तमानः । अतः प्रभुत्वेन, जनकत्वेन, प्रकाशकत्वेन च परेषामस्मदाद्यपेक्षयोत्कृष्टानामपरेषां च हीनानाम्, चकारादस्माकं च सर्वेषामेव भूतानां त्वं भावविदसि । अतोऽस्मासु न किञ्चित्तिरोहितम् ॥ ४ ॥

एवं स्वदोषाभावमुक्त्वा दोषे वा विद्यमाने तत्क्षमां कारयन्तो नमस्यन्ति—

**नमो विज्ञानवीर्याय माययेदमुपेयुषे ।**
**गृहीतगुणभेदाय नमस्तेऽव्यक्तयोनये ॥ ५ ॥**

× नमो विज्ञानवीर्यायेति । ननु भगवानेव नमस्करणीयः, सर्वेषां स्वामित्वात्; गुरुर्वा, तन्मार्गोपदेष्टृत्वाद्गौणः, अहं तु नोभयरूप इति चेत्तत्राऽऽह—नमो विज्ञानवीर्यायेति । विज्ञानं ब्रह्मानुभवो वीर्यं पराक्रमो यस्य । लौकिकी क्रिया लौकिकज्ञानसहिता सर्वेषां पराक्रमहेतुर्भवति । ततोऽपि केषामेव ऋषीणां वैदिकी क्रिया पराक्रमहेतुः । ततोऽपि ब्रह्मविदामेव तेजः सार्वेश्यलक्षणः पराक्रमो ज्ञानेन सिद्ध्यति । तत्र साक्षात्कारेण विज्ञानेन भगवत एव बलं भवति । तादृशं तवापि वर्तत इति स्वेच्छया सृष्ट्याऽध्यवसीयते । अतो भगवत्स्वरूपाभिज्ञत्वात् गुरुत्वेन नमनमुचितमेवेति भावः । ननु तादृशज्ञाने संपन्ने भगवत्सायुज्यमेव भवेत् कथमेवमधिकारः स्यादित्याशङ्क्याऽऽह—माययेति । इदं शरीरमुपेयुषे स्वीकृतवते । या सृष्टिकरणभूता माया, तस्याः करणत्वनिर्वाहार्थम्, कर्त्रपेक्षायां सेवके विद्यमाने स्वामिनो व्यापृतिरनुचितेति भगवत्तुल्यताया जातत्वात्, जगद्व्यापारवर्जश्रवणाच्च, तयैव मायया कृतमिदम्; तयैव कृत्वा स्वीकृतवानित्यर्थः । ननु द्वयी गतिः, जीवानामकर्तृत्वं भगवतः कर्तृत्वं चेति तत्राऽस्ति । कर्तृत्वे भगवत्त्वान्न शरीरापेक्षा, जीवत्वे तु जातेऽपि शरीरे न भेदकर्तृत्वं सेत्स्यतीत्याशङ्क्याऽऽह—गृहीतगुणभेदायेति । गृहीतो गुणैर्भेदो येन । नाऽस्य सहजो भेदः, येनाऽकर्तृत्वं स्यात् । नाप्यभेदः, गुणैर्भेदस्य कृतत्वात् । गुणा हि भेदरूपं भगवन्तं चिद्रूपे नियोजितवन्तः । अतस्तत्कृतभेदस्य विद्यमानत्वात् तत्साम्यकृतं देहमवलम्ब्य जगत्करणं युक्तमेव । नन्वव्यक्तादीनि भूतानीति वाक्यादलौकिककर्तृत्वादेव कार्ये सिद्धे पुनः किं ब्रह्मकर्तृत्वेनेत्याशङ्क्याऽऽह—नमस्त इति । अव्यक्तस्याऽयं योनिः । अव्यक्तमस्मिन् जगत् प्रवेश्य स्वयं निवर्तते । अत एवाऽस्य रजोगुणरूपत्वम् । यथा मातापित्रोर्जगत् जायते, तथाऽस्मादव्यक्ताच्च जगज्जायत इति नाऽस्याऽनुपयोगः । अतो मातृत्वात् पुनर्नमनम् ॥ ५ ॥

---

प्रकाशः ।

× नम इत्यत्र । तेज इति । पराक्रमहेतुरिति शेषः । तत्र गमकमाहु:—सार्वेश्येत्यादि । एतस्याऽधिकारस्य मुक्तिपूर्वावस्थात्वं व्युत्पादयन्ति—या सृष्टीत्यादि । जगद्व्यापारवर्जश्रवणादिति । इदं चतुर्लक्षण्यां तुरीयेऽस्ति । तत्र मुक्तस्याऽप्यैश्वर्यं जगत्कर्तृत्वाभावश्चोक्तः । प्रकृतेऽपि तस्याः करणत्वाय (य) भगवत्कार्यार्थं कर्तृत्वाङ्गीकारेऽपि स्वतोऽभिमानाभावान्न मुक्तत्वभङ्ग इति न भगवज्ज्ञानराहित्यप्रसङ्ग इत्यर्थः । तत्राऽस्तीति । सायुज्यपूर्वावस्थायामस्ति । इत्याशङ्क्येति । इति हेतोर्मायया ब्रह्मदेहग्रहणकथनमसङ्गतमाशङ्क्य । तत्साम्यकृतमिति । गुणसाम्यकृतम् । युक्तमेवेति । भगवतस्तव च चैतन्यभेदाभा(वा)द्युक्तमेव । एवं चाऽनभिमानित्वेन गुणावतारत्वाद्भेदाभेद उक्तः । अव्यक्तस्याऽयं योनिरिति । अक्षरस्य क्षेत्रभूतः । अत इति । तथाभिमानपक्षेऽप्युपयोगसद्भावेन ।

एवमपराधक्षमापनं (?) कृत्वा तस्य भक्तकृपालुत्वं प्रतिपादयन्ति—

**ये त्वाऽनन्येन भावेन भावयन्त्यात्मभावनम् ।**
**आत्मनि प्रोतभुवनं परं सदसदात्मकम् ॥ ६ ॥**

*ये त्वाऽनन्येनेति । अत्र वाक्यापरिसमाप्तिः कृपायाः सफलत्वप्रतिपादनार्था । अतः कृपातो भक्तानामभयं वक्ष्यत्यतः कृपाहेतुरेवाऽत्रोच्यते । ये सन्तः त्वां सर्वभावेन हृदये भावयन्ति, तेषां लब्धयुष्मत्प्रसादानां न कुतश्चित्पराभव इति संबन्धः । ननु भगवत्येवाऽनन्यभावः संभवति, कथमन्यस्मिन् ? इत्याशङ्क्य अनन्यभावे हेतुचतुष्टयमाह—आत्मभावनमित्यादिपदैः । आत्मानं भावकस्वरूपं भावकस्य देहादिकं भावयतीति तथा । अनेन कर्तृत्वम् । आत्मनि प्रोतं भुवनं येन । अनेन समवायित्वम् । परं नियन्तारम् । स्थितौ सर्वप्रवर्तनादिकर्तारम् । सदसदात्मकमिति प्रलयकर्तारम् । सदसदात्मकः प्रलयः, सतामसदात्मक इति । मायात्मकत्वाद्वा प्रलयकर्तारम्, सर्वदा तस्य स्थित्यसम्भवात् जगदात्मत्वेऽपि प्राप्ताप्राप्तविवेकेन असत्स्वरूप इत्येव पर्यवस्यति । स्वकीयानां सर्वेषामुत्पत्त्यादिकर्तृत्वात्तदधीनत्वात् स्वस्याऽपि सर्वभावेन भावनं संभवतीत्यर्थः । एवं सर्वभावेन भावनं प्रसादहेतुः ॥ ६ ॥

एवं कारणनिरूपणेन प्रसादं निरूप्य, तेनाऽभयं निरूपयन्ति—

**तेषां सुपक्वयोगानां जितश्वासेन्द्रियात्मनाम् ।**
**लब्धयुष्मत्प्रसादानां न कुतश्चित्पराभवः ॥ ७ ॥**

+तेषामिति । प्रसादेनाऽभयजननेऽवान्तरव्यापारमाह—सुपक्वयोगानामिति । तस्य मुख्यात्मकत्वाद्योगद्वारा सर्वसिद्धिहेतुत्वम्, अन्यथा भगवत इव स्वतन्त्रता स्यात् । सुष्ठु पक्वो योगो येषाम् । सुपक्वो हि सर्वत्र नियोक्तुं शक्यते । योगपाके हेतुं वदन् व्यापारान्तरमाह—जितश्वासेन्द्रियात्मनामिति । जिताः श्वासा इन्द्रियाणि आत्माऽन्तःकरणं च येषाम् । प्राणेन्द्रियान्तःकरणजयस्तदीयपदार्थानामस्पर्शहेतुत्वा-

---

**प्रकाशः ।**

* ये त्वेत्यत्र । अनन्यभाव इति । सर्वभावः । भावकस्वरूपमित्यस्यैव व्याख्यानम्—भावकस्य देहादिकमिति । भावयतीति । उत्पादयति । सदसदात्मकमित्यत्र सतामसदात्मको येनेति व्यधिकरणपदो बहुव्रीहिः । सदसती आत्मा यस्येति समानाधिकरण एव चेदाभिप्रेयते, तदापि प्रलयकर्तृत्वमेवार्थ इत्याहुः—मायेत्यादि । तस्येति । सदसदात्मकस्य । ननु सदसतोरात्मा सदसदात्मक इति समासे तु न सोऽर्थ आयातीति शङ्कायामाहुः—जगदित्यादि । एवं श्रीधरोक्तरीत्या जगदात्मकत्वे तु प्राप्ताप्राप्तविवेकेन 'आत्मनि प्रोतभुवनम्' इति पूर्वो(व)विशेषणेन जगत्कारणतयैव तथात्वं प्राप्तम्, प्रलयकर्तृत्वं त्वप्राप्तमिति तयोर्विचारेणाऽऽद्ये पुनरुक्त्यापातात् असति अविद्यमाने प्रलय एव कारणत्वं पर्यवस्यतीति तदीयं व्याख्यानमुक्तमित्यर्थः । श्लोकस्य तात्पर्यार्थमाहुः—स्वकीयेत्यादि । ननु भवत्वेवं सर्वभावः, तथापि प्रकृते तत्कथनस्य किं प्रयोजनमत आहुः—एवमित्यादि ।

+ तेषामित्यत्र । मुख्यात्मकत्वादिति । आसन्यात्मकत्वात् । तदीयपदार्थानामस्पर्शहेतुत्वादिति । प्रकृतसम्बन्धिनां पदार्थानामतीन्द्रियत्वेनेन्द्रियसन्निकर्षाहेतुत्वात् ।

त् साक्षात्प्रीतिहेतुः । वेदगर्भत्वेन ज्ञानहेतुत्वात् सकारणो योगोऽवान्तरव्यापार इति नाऽनेकव्यापारत्वम् । अत एव लब्धो युष्मत्प्रसादो येन । कुतश्चित्कालादेरपि । पराभवोऽभिभवः ॥ ७ ॥

एवं भक्तेषु सफलां कृपामुक्त्वा, तस्य कृपावत्त्वं निरूप्य, स्वस्मिन् कृपां प्रार्थयितुं स्वस्य सेवकत्वमाहुः—

**यस्य वाचा प्रजाः सर्वा गावस्तन्त्येव यन्त्रिताः ।**
**हरन्ति बलिमायत्तास्तस्मै मुख्याय ते नमः ॥ ८ ॥**

* यस्य वाचेति । यस्य ब्रह्मणो वेदलक्षणया वाचा सर्वा एव प्रजाः, कन्यका इव सर्वथाऽसमर्थाः, सेवकभूता अपि स्वकार्ये अतिनिर्बन्धेन नियोजिताः, बलीवर्दास्तन्त्येव यन्त्रिताः । ब्रह्मणो वाक् वेदलोकात्मिका । अत एव येषां वेदोऽपि न नियामकस्तेषां लौकिकेन यन्त्रणम् । अनेनैव सेवकत्वं निरूपितम् । सर्वे हि प्राणिनः फलार्थं कर्म कुर्वन्ति । तत्र निष्पन्ने फले, अधिष्ठातृदेवताभिरुपस्थिते फले, यः सारांशः, तत्तैरेव स्वार्थं भिन्नं करोति । पश्चादसारं प्रयच्छति । तथा च सर्वकर्मणां यन्मुख्यं फलं सृष्टिः, भगवदाज्ञा, सुखं या; तद्ब्रह्मणे सिध्यति । धर्मतपस्यादिना योऽसारो नान्तरीयकमलमूत्रादिरमणम्, तत् जीवेभ्यः प्रयच्छतीति । एवं ज्ञात्वाऽपि तथैवकरणं यन्त्रणम् । अत एव अधमा अपि गावो दृष्टान्तीक्रियन्ते । एवं ज्ञात्वा ते निश्चिता इति । एवं सर्वदा कार्यकर्तृष्वसारभक्षकेषु कृपा उचिता । किञ्च, बलीवर्दापेक्षयाप्येते उत्तमाः । यदसारभूतमपि तुभ्यं बलित्वेन प्रयच्छन्ति, अन्यथा तत्र मध्ये मारयेत् । अतो भवान् मुख्यः प्रवर्तकोऽपि भूत्वा प्रजासु श्रेष्ठः । व्यङ्ग्येन ब्रह्मणोऽप्युपहास एवोक्तः । आसन्यरूपत्वाद्वा बलिदानसौक्षिकत्वेन मुख्यतया निरूपणम् । आ समन्तात् यत्ताः सावधानाः । अनेन कादाचित्ककरणं व्यावर्तितम् ॥ ८ ॥

एवं स्वस्य सेवकत्वमुपपाद्य कृपां प्रार्थयन्ति—

**स त्वं विधत्स्व शं भूमंस्तमसा लुप्तकर्मणाम् ।**
**अदभ्रदयया दृष्ट्या आपन्नानर्हसीक्षितुम् ॥ ९ ॥**

**स त्वमिति । हे भूमन् !** हे अधिक, कृपायां कृतायामपि न तव काचित् क्षतिरित्यर्थः । अत एवाऽस्मभ्यं संप्रयच्छ । कल्याणान्तरव्यावृत्त्यर्थं स्वाभिप्रेतमाहुः—लुप्तकर्मणां लोकानामन्धकारेण सर्वकर्मरहितानां भुवनानां संबन्धिन आपन्नान् शरणागतानस्मानदभ्रदयया दृष्ट्या ईक्षितुमर्हसीति । कृपादर्शनव्यतिरेकेण तत्र विद्यमानमपि दैन्यादिकं न प्रकाशते । अत कृपादृष्ट्या द्रष्टव्यमिति गूढोऽभिप्रायः । साधारणलोकानां दीनं दृष्ट्वा दयोत्पद्यते, परं सा व्यर्था । तथा मा भवत्वित्यदभ्रेतिविशेषणम् ॥ ९ ॥

---

प्रकाशः ।

* यस्येत्यत्र । एवं सेवकत्वमिति । यन्त्रणेन सेवकत्वम् । यन्त्रणमुपपादयन्ति–सर्वे हीत्यादि यन्त्रणमित्यन्तम् । तत्रेति । कर्मणि । तैरिति । स्वस्य करणभूतैरधिष्ठातृभिः । प्रयच्छतीति । कर्मकरेभ्यः प्रयच्छति । निश्चिता इति । बलीवर्दतुल्या निश्चिताः ।

---

१ मुख्यात्मने. पा. २ साक्षित्वेन. ग.

कस्मान्निमित्तात् कृपा विधेयेति शङ्काया दैत्योत्पत्तिर्जायत इति ततोऽभयं कर्तव्यमित्यभिप्रायेणाऽऽहु—

**एष देव ! दितेर्गर्भ ओजः काश्यपमार्पितम्।**
**दिशस्तिमिरयन्सर्वा वर्धतेऽग्निरिवैधसि ॥ १० ॥**

एष देवेति। दितेरेष गर्भः काश्यप तेनैवाऽर्पितमोजो दशदिशस्तिमिरयन् शुष्के एधसि काष्ठे अग्निरिव वर्द्धते। इदानीं दितेर्गर्भः। अनेन स्वभावतः क्रूरो भविष्यतीत्युक्तम्। तत्रापि कश्यपस्य बीजम्, तदप्योजोरूपम्। तेनैव चाऽर्पितं समर्पितम्। दितेः स्थाने समर्पितमिति तत्र न कोऽपि प्रतीकारः कर्तुं शक्य ॥ १० ॥

एवं महाभयेन देवानां वचनं श्रुत्वा, तत्र निदानं हास्यरूपमिति तत्स्मृत्वा, तदवक्तव्यमिति बीजगर्भयोर्ज्ञातत्वात् तदतिरिक्तं हेत्वन्तरं वक्तुं कथामारभत इत्याह मैत्रेय —

## मैत्रेय उवाच।

**संप्रहस्य महाबाहो ! भगवान् शब्दगोचरः।**
**प्रत्याचष्टाऽऽत्मभूर्देवान्प्रीणन्रुचिरया गिरा ॥ ११ ॥**

*संप्रहस्येति। महाबाहो इति विदुरसंबोधनं शूरत्वेन क्वापि भयं न कर्तव्यमिति ज्ञापनार्थम्। भगवा-'निति तज्ज्ञाने हेतुः, प्रतीकाराकरणे च। शब्दगोचर इत्यलौकिको वेदैकसमधिगम्य। आधिदैविको ब्रह्मा तत्राऽऽविष्टो वदतीति ज्ञापितम्। अन्यस्य भगवत्सेवकापकर्षो वक्तुमयुक्त। प्रत्याचष्ट प्रत्युत्तरं दत्तवान्। ब्रह्मणा किञ्चित्कृतमिनीयं शङ्का व्यावर्तिता। 'भगवांस्तद्विधित्सति' इत्यग्रे वक्ष्यति। आत्मभूरिति तथा कथनं स्वाऽपराधहेतु। 'मानसाः' इत्यादिवाक्येभ्योऽन्ययैव रुचिरया गिरा। तेषां यथा सुखं भवति तथा प्रीणन् प्रीतिं जनयन् ॥ ११ ॥

शापादागतजयविजययोः निस्तेजसोस्तेजसा एतज्जातमिति वक्तुं शापार्थमुपाख्यानमारभते मानसा इत्य-ध्यायद्वयेन। प्रसङ्गात्तेषां वैकुण्ठगमनमिति वक्तुं स्वभावतस्तेषां परिभ्रमणमाह—

## ब्रह्मोवाच।

**मानसा मे सुता युष्मत्पूर्वजाः सनकादयः।**
**चेरुर्विहायसा लोकाँल्लोकेषु विगतस्पृहाः ॥ १२ ॥**

×मानसा मे सुता इति। भगवता मनसि कृत ते कृतवन्त इति ज्ञापयति। मत्सुता इति सृष्टिहेतु स्वमुक्तम्। युष्मत्पूर्वजा इति भवतामज्ञाने हेतु। देवाः पश्चादुत्पन्नाः, नैवेते काश्यपा। तस्मिन्कल्पे-तथैवोत्पत्तिः। देवानां शुद्धसात्त्विकत्वात् ततः पूर्वजा गुणातीता, अनेन स्वस्य दोषो नाऽस्तीति सूचितम्।

---

प्रकाशः।

* संप्रहस्येत्यत्र। अन्ययेति। अत्रान्यत्वं 'प्रीणन्' इति पदोक्तेन कार्यस्य वर्तमानत्वेन ज्ञेयम्।

× मानसा इत्यत्र। स्वस्येत्यादि। दितिगर्भकृतो दोषः स्वहेतुको नास्तीत्यर्थः।

---

१ प्रतीकारकरण ग २ नास्तेत क ख घ

यथा मम पुत्रास्तथा भवतां ज्येष्ठा इति । सनकादय इति तपोरूपत्वात् न कस्यापि प्रतीकारः शक्यः । विहायसा आकाशमार्गेण । सामर्थ्याप्रतिरोधः श्रमाभावश्च सूचितः । सर्वेष्वेव लोकेषु विगतस्पृहाः सन्तश्चेरुर्गमनं कृतवन्तः । लोकान् अलोकान् वा प्रति, लोकोद्धारार्थमित्यर्थः । लोकानित्यत्यन्तसंयोगे वा द्वितीया । पुनर्लोकग्रहणं जनेषु प्रयोजनाभावार्थम् । तेषां पर्यटनं नित्यमिति ते परिभ्रमन्त्यतो भुवनानामेव कर्मत्वम्, न तु जनानाम् ॥ १२ ॥

तेषां प्रसङ्गात् वैकुण्ठगमनमाह—

त एकदा भगवतो वैकुण्ठस्याऽमलात्मनः ।
ययुर्वैकुण्ठनिलयं सर्वलोकनमस्कृतम् ॥ १३ ॥

+ त एकदेति । भगवतो वैकुण्ठस्येति । साक्षात्पुराणपुरुषावतारो वैकुण्ठः, तन्नाम्ना निर्मितो लोको वैकुण्ठ इत्युच्यते । स्त्रीप्रार्थनया स लोको निर्मित इति सोऽवतारः कामीति शङ्का स्यात् तन्निवृत्त्यर्थमाह-अमलात्मन इति । अमला आत्मानो यस्येति वा । यथा सत्यादिष्वविद्यावन्तास्तिष्ठन्ति, न तथा तत्रेत्यर्थः। वैकुण्ठनिलयमिति नित्यमेव स्थानम् । कृत्रिमत्वेऽपि व्यापिवैकुण्ठ एव तत्र निविष्ट इति तन्मुख्यमेव वैकुण्ठम् । अतः 'पुनर्लोकाय कल्पताम्' इति न विरोधः । 'चैत्ये च सात्वतपतेश्चरणं प्रविष्टे' इति च न विरुद्ध्यते, 'मत्येष्यताम्' इति च । 'वैकुण्ठः कल्पितो येन' इतिवाक्यात् कृत्रिमत्वं च । सनकादीनां गमनाच, लोकसाधारण्यप्रसङ्गाच । अतः कृत्रिमे सहजस्याऽऽवेशः, लोकावतारो वा । वैकुण्ठस्य [illegible] निलयमिति पुनरुक्तम् । वैकुण्ठ एव निलय इति । सर्वेषामगम्यमिति सूचयितुमाह-सर्वलोकनमस्कृतमिति । सर्वेषां जनानां नमस्करणीयम्, सर्वभुवनोत्कृष्टं वा । अन्यत्र लोके विद्यमाना लोकमुपद्रावयन्ति, अत्रत्यास्तु नैवमिति सर्वे लोका एनं नमस्कुर्वन्ति ॥ १३ ॥

सामान्यतस्तं लोकं वर्णयति चिदानन्दसद्भेदैः । तत्र प्रथमं तत्रत्याश्चेतना आनन्दरूपा इति स्वरूपोत्कर्षमाह—

वसन्ति यत्र पुरुषाः सर्वे वैकुण्ठमूर्तयः ।
येऽनिमित्तनिमित्तेन धर्मेणाऽऽराधयन्हरिम् ॥ १४ ॥

× वसन्ति यत्र पुरुषा इति । यत्र वैकुण्ठे । पुरुषा इति स्त्रीणां न सारूप्यमुक्तिः। वैष्णवपातिव्रतानां

---

प्रकाशः ।

विहायसालोकानित्यत्र आकारप्रश्लेषोऽपि शक्यवचन इत्यत आहुः—अलोकान् वेति ।

+ त एकदेत्यत्र । तस्य नित्यत्वं जन्यत्वं चोपपादयन्ति—कृत्रिमेत्यादि । लोकायेति । अक्षरसायुज्याय । एतद्वाक्यत्रयतात्पर्यमग्रिमाध्याये निरूपणीयम् । ननु तस्य व्यापित्वात्तन्मुख्यमेव वक्तव्यमित्यत आहुः—वैकुण्ठः कल्पित इत्यादि । आवेशस्य तत्तत्कार्यकालनियतत्वे कादाचित्कत्वादत्र च तादृशकार्यस्याऽप्रतीयमानत्वात् पक्षान्तरमाहुः—लोकावतारो वेति । ननु किमर्थमयं प्रयासः? पर्यातत्पुरुषेणाऽवतारविशेषलोकत्वमेव व्याख्येयमित्यत आहुः—वैकुण्ठस्य त्वित्यादि ।

× वसन्तीत्यत्र । स्त्रीणां नेति । एतेन पक्षिवृक्षादयोऽपि व्याख्याता इति न कोऽपि चोद्यावसरः । तासां स्त्रीत्वे प्रयोजकमाहुः—वैष्णवेत्यादि । तथा चाऽन्तसमये भगवद्ध्यानाभावः सारूप्याभावप्रयो-

---

१ ततस्तत्र. ग.

तु तैः सह गमनम्, तत्र च भगवद्गुणगानमिति तदग्रे वक्ष्यति । सर्वे इति न तत्र वर्णादीनां प्रयोजकत्वम् । वैकुण्ठस्येव मूर्तिर्येषाम् । आनन्दाकार एव तेषां देहः, आनन्द एव वा । तथापि स्वानन्दस्य तथात्वान्न भगवत्तुल्यत्वम् । तत्र तथात्वे हेतुमाह—येऽनिमित्तनिमित्तेति । ये भागवताः, अनिमित्तेन निष्कामेन धर्मेण, हरिमाराधयन् आराधितवन्तः । न निमित्तं लोकप्रसिद्धं कामनारूपं निमित्तं यत्र । निष्कामस्वधर्मेण श्रवणादिना धर्मरूपेण ये भगवदाराधनं कृतवन्तः ॥ १४ ॥

एवं जीवोत्कर्षमुक्त्वा भगवदुत्कर्षमाह—

**यत्र चाऽऽद्यः पुमानास्ते भगवान् शब्दगोचरः ।**
**सत्त्वं विष्टभ्य विरजं स्वानां नो मृडयन्वृषः ॥ १५ ॥**

* यत्रेति । यत्राऽऽनन्दमयो भगवान् सदंशस्य मुख्यभावरूपं सत्त्वं विष्टभ्य तिष्ठति । वैकुण्ठलोकोऽयं सर्वलोकविलक्षणः, अतश्चित आनन्दः शरीरम्, आनन्दस्य सत् शरीरम्, सतश्च मोक्षरूपतेति । अ(ए)त एव सत्त्वादयो गुणाः सच्चिदानन्दानामिति पूर्वमुक्तम् । सर्गस्त्वावृत्तिरूप इति सच्चिदानन्दानामावृत्तिरुच्यते। अत एवाऽऽश्रये आनन्दे प्रतिष्ठां वक्ष्यति । चकाराद्व्यापिवैकुण्ठे । आद्यः पुमान् पुरुषोत्तमो भगवानिति स धर्मः । शब्दगोचर इति लौकिकसंबन्धाभावः । सत्त्वस्य विशेषेण स्तम्भनं कालप्रवाहेण रजोगुणादिभिः सह मिलनाभावार्थम् । पूर्वं त्वमिलितमित्याह—विरजमिति । ननु सत्त्वस्तम्भने कः पुरुषार्थ इत्याशङ्क्याऽऽह —स्वानां नो वृष इति । ब्रह्मादीनां भक्तानां स्वामी । स्वभक्ताः कालाद्भिन्नतया सर्वेष्टैः संयोज्या इति । यतो

---

प्रकाशः

जक इत्यर्थः । न भ(ग)वत्तुल्यत्वमि(ति)न साष्टि(र्ष्टिः)। तत्र हेतुं व्याकुर्वन्ति—ये भागवता इत्यादि । तथा च तत्कृतश्रवणादीनां भक्तिरूपत्वाभावो हेतुरित्यर्थः ।

* यत्र चेत्यत्र । मुख्यभावरूपमिति । प्रथमधर्मरूपम् । एतदेव सत्त्वं रामानुजैर्द्रव्यत्वेनाऽङ्गीक्रियते, प्राकृतसत्त्वाद्विलक्षणं च । तेन सिद्धमाहुः—वैकुण्ठेत्यादि । तद्व्युत्पादयन्ति—अत इत्यादि । यतोऽन्यत्र ' यस्य पृथिवी शरीरम् ' ' यस्याऽऽत्मा शरीरम् ' इत्यादिश्रुतेर्भगवान् सद्विशेषशरीरश्चिच्छरीरश्चाऽन्तर्यामी । अत्र तु आद्यः पुमान् मूलपुरुषः स्वयं भगवान् आनन्दशरीर आस्ते । सोऽपि सत्त्वं विष्टभ्य सच्छरीरः । तदपि सत्त्वं विरजम्, रजःसम्बन्धाभावान्मोक्षरूपम् । तत्रत्याः पुरुषाश्चिदंशा वैकुण्ठमूर्तित्वादानन्दशरीरास्तदेतदन्येभ्यो वैलक्षण्यमित्यर्थः । नन्वत्र विरजं सत्त्वं सिद्धवन्निर्दिष्टम्, तावता केवलं तदस्तु । तथापि तस्य विवृतरूपत्वं कथमित्याकाङ्क्षायामाहुः—एत इत्यादि । पूर्वमिति । द्वितीयस्कन्धे ' सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः ' इत्यत्र । अत्र वैलक्षण्यबोधनप्रयोजनमाहुः—सर्गस्त्वित्यादि । एतेषामावृत्तौ ज्ञापकमाहुः—अत एवेत्यादि । आश्रय इति । द्वादशस्कन्धे । वक्ष्यतीति । ' आनन्दं प्रयन्ति ' इति श्रुत्यनुसारेणाऽऽत्यन्तिकप्रलयविचारे सोपपत्तिकं कथयिष्यति । तदेतद् द्वादशस्कन्धनिबन्धे स्फुटम्, योजनायां भगवत्कृपया दर्शितम् । एवैव रीतिर्व्यापिवैकुण्ठ इत्याहुः—चकारादित्यादि । एतेन ' ता वां वास्तूनि' इत्यादिषु श्राविते व्रज इतोऽपि विलक्षणरीत्या स्थितिर्बोधिता । सा वेणुगीतादिसुबोधिनीतो बोध्या ।

---

१ अतथात्वात् ग

यूपः स्वामी, स्वामिनो मृडनमावश्यकम् । स्वाम्यविशेषो वा । साधारणस्वाम्यपेक्षया भक्तेषु मृडयन्तयं स्वामीं, अतः सत्त्वविष्टम्भनमित्यर्थः ॥ १५ ॥

एवमानन्दस्य सत्त्वमुक्त्वा सतामुभयविधपरमपुरुषार्थत्वमाह—

यत्र नैःश्रेयसं नाम वनं कामदुघैर्द्रुमैः ।
सर्वर्तुश्रीभिर्विभ्राजत्कैवल्यमिव मूर्तिमत् ॥ १६ ॥

×यत्र नैःश्रेयसं नामेति । यत्र वैकुण्ठे उपवनमस्ति । तस्य नाम नैःश्रेयसमिति । नैःश्रेयसशब्दो योगरूढः । तत्र प्रथमं योगं समर्थयति—कामदुघैरिति । यद्वनं द्रुमैर्विभ्राजत् । सर्व एव द्रुमाः कल्पवृक्षाः, त एव तत्रत्याः¹ परमपुरुषार्थरूपाः, तत्रत्यानामपि कामितार्थदातृत्वात् । 'द्रु गतौ' इति, तद्रहिता द्रुमाः प्रतिष्ठिताः । स्वतोऽपि तेषामुत्तमत्वमाह—सर्वर्तुश्रीभिरिति । सर्वेष्वेवर्तुषु नियता पुष्पादिसम्पत्तिरूपा श्रीर्येषाम् । एवं योगार्थमुक्त्वा रूढ्यर्थमाह—मूर्तिमत् कैवल्यमिति । केवलस्य भावः कैवल्यम्, चिद्रूपाणां स्वरूपेण स्थितिः, पुनः सङ्घातसंबन्धाभावः । अनेन जीवपुरुषार्थतोक्ता । तत्र गतः 'चिति तन्मात्रेण' इतिवत् कैवल्यमापद्यते । तदप्येकं रूपं भगवतः, यदौडुलोमिमतसिद्धम् । यदात्मत्वेन चाऽऽत्मवादिनो वदन्ति, भगवांश्च 'अहमात्मा गुडाकेश!' इति प्रथमं विभूतित्वेनोक्तवान् । सा कैवल्यमूर्तिः । तदेव नितरां श्रेयोरूपम्, 'आत्मलाभान्न परं विद्यते' इति श्रुतेः। तस्मादत्र वने प्रविष्ट आनन्दमयो भवति, ब्रह्मानन्दं च प्राप्नोतीति सतः परमपुरुषार्थत्वम् ॥ १६ ॥

एवं लोकस्य सर्वलोकवैलक्षण्यार्थं सच्चिदानन्दधर्मैरैश्वर्यं प्रतिपाद्य सर्वदोषाभावार्थं मोहाद्यभावमाह पद्भिः—

वैमानिकाः सललनाश्चरितानि यत्र
गायन्ति लोकशमलक्षपणानि भर्तुः ।
अन्तर्जले नुविकसन्मधुमाधवीनां
गन्धेन खण्डितधियोऽप्यनिलं क्षिपन्तः ॥ १७ ॥

*वैमानिका इति । तत्र स्त्रीणां न मोहजनकत्वम्, तिर्यग्जीवानां न मदः, लतागुल्मादीनां पुष्पप्रधानानामपि न मात्सर्यम्, भगवद्भक्तस्त्रीणां न कामजनकत्वम्, लक्ष्म्या अपि नाऽभिमानलक्षणो मानात्मकः क्रोधः, लोभश्च तत्रैव प्रतिष्ठित इति न तस्याः स्वस्मिन् परमपुरुषार्थबुद्धिः, किन्तु भगवत्येवेति सर्वदोषाणामभाव उक्तो भवति । तत्र प्रथमं स्वाभाविकस्त्रीणां स्वभावदुष्टानामपि स्वदोषपरित्यागेन भगवद्गुणपरतोच्यते —वैमानिका इति । विमानैकसिद्धा वैमानिका गन्धर्वादयः । ते ह्यागन्तुकाः स्वभावगमनप्रयत्नाभावात्, सौकर्याभावाच्च। वैमानिका एव भवन्ति। तेषां तत्र गमने आदरेण गानमेव हेतुः । सललनाः सस्त्रीकाः।

प्रकाशः ।

× यत्र नैःश्रेयसमित्यत्र । द्रु गतावित्यादि । द्रवणं द्रुः, तस्य मा निषेधो यत्र ते द्रुमाः, समासान्तष्टच् । जीवपुरुषार्थरूपतां व्युत्पादयन्ति—तत्र गत इत्यादि । यदात्मत्वेनेति । यदिति पदच्छेदः । स्फुटमन्यत् ।

* वैमानिका इत्यत्र । षण्णां तात्पर्योक्तौ—तत्रैवेति । भगवत्येव ।—

¹ योगरूढिभेदेन द्विविधः. क.

अनेनोभयोरन्योन्यमोहसम्भवो निरूपितः । यत्र वैकुण्ठे भर्तुश्चरितानि गायन्ति । ते गन्धर्वादयस्तदीया एव । भर्तुरित्यैहिकपारलौकिकनिर्वाहकत्वेन तद्गुणगानमावश्यकमिति सूचितम् । एवं गुणगानस्य स्वोपकारकत्वमुक्त्वा परोपकारकत्वमाह—लोकशमलक्षपणानीति । तस्य लोकस्य, सर्वेषामेव वा शमलं मार्गान्तरस्थितलोकसम्बन्धजातम्, नित्यं वा; तस्य क्षपणं तत्रैव विलयप्रापणं यैः । ते हि गन्धर्वा रूपं भगवन्तमुपासते, अतोऽप्सरसस्तेषु प्रतिष्ठिताः । गन्धर्वेषु योगव्युत्पत्त्या गन्धं वान्तीति पृषोदरादित्वाद्गन्धर्वा भवन्ति अप्सरसस्तु गन्धमेव भगवन्तमुपासते । उभयथाऽपि सस्त्रीकाणां गन्धपरत्वम् । अतो गन्धेन खण्डितधियोऽपि गन्धवाहं वायुम्, सर्वदा परमाराध्यं क्षिपन्तः सन्तो गुणानेव गायन्ति । गन्धस्य प्रबलत्वाय दोषाभावमाह—अन्तर्जल इति । जलमध्ये सुष्ठु विकसद्भिर्विकासेन प्रसरद्रूपं मधु मकरन्दो यासाम् । माधवी काचिल्लता, यत्र वसन्त ऋतुराधिदैविकः प्रतिष्ठितः । सरसं च तस्येति विकसन्मधुत्वम् । अतस्तादृशीनां गन्धो वरप्राप्तः पृथिवीसंबन्धाभावादमाकृतः । अतस्तेषां सहजोपास्योऽपि भगवद्गुणगानार्थं तैः परित्यक्त इत्याधिदैविकोऽपि मोहो नास्तीत्युक्तम् ॥ १७ ॥

एवं गन्धर्वाप्सरसामुक्त्वा पक्षिणां दोषाभावमाह—

**पारावतान्यभृतसारसचक्रवाकदात्यूहहंसशुकतित्तिरिबर्हिणां यः ।**
**कोलाहलो विरमतेऽचिरमात्रमुच्चैर्भृङ्गाधिपे हरिकथामिव गायमाने ॥ १८ ॥**

पारावतेति । एते पारावतादयो नव गुणभिन्नाः तेषामपि स्वतः सिद्धा वाक् तेषां वागेव ब्रह्म । चित्रस्वनत्वमेव तेषां माहात्म्यम्, अत एव प्रातरनुवाके तेषां वाक्यात् पूर्वमेवाऽऽरम्भः, अन्यथा देवानां तद्वाङ्माधुर्यपरत्वं स्यात् । अन्यभृतः कोकिलः, दात्यूहश्चातकः, बर्ही मयूरः । य इति प्रसिद्धोऽपि कोलाहलः । तद्वाक्ये व्याकरणाभावात्, पदवाक्यानामभावे शब्दराशित्वादनभिव्यक्तः कोलाहलत्वेनोक्तः। वस्तुतस्तु तेऽपि भगवद्गुणानेव गायन्ति, न हि तत्रत्याः पक्षिणोऽन्यद्वदन्ति शुद्धसत्त्वस्य तथा लोकत्वेनाऽऽविर्भावात् तत्र वृक्षपक्ष्यादीनां सम्भवः । सोऽपि कोलाहलः क्षणमात्रमेव विरमते । भृङ्गाधिपे भ्रमरश्रेष्ठे, हरिकथामिव गायमाने सति । अनेन तेषां स्ववाग्गर्वो नास्तीति सूचितम्, भृङ्गस्याऽऽधिपत्यं च मन्यन्ते, तस्य भगवत्सान्निध्यसम्भवात्, कुन्तलानां तत्साम्याच्च । भृङ्गाणामधिपो वा आधिदैविकः । तस्य वाग्रागरूपेति रागं कृत्वा गास्यतीति बुद्ध्या कोलाहलो विरमते । तस्याऽप्यनभिव्यक्तवाक्त्वात् रागपर्यवसानं ज्ञात्वा स्ववागिव तदपीति तदवधारणार्थम् । चिरमात्रं भगवत्कथागाने सौम्यो राग उपयुक्त इति यदा तद्गानानुसारेण भृङ्गरवः । उच्चैःशब्दात् भगवदाज्ञा प्रायेण जातेति सन्देहः ॥ १८ ॥

एवं पक्षिणां दोषाभावमुक्त्वा लतादीनां पुष्पप्रधानानां मात्सर्यलक्षणदोषाभावमाह—

**मन्दारकुन्दकुरबोत्पलचम्पकार्णपुन्नागनागबकुलाम्बुजपारिजाताः ।**

---

प्रकाशः ।

मार्गान्तरस्थितलोकसम्बन्धजातमिति । यथा सनकादय इदानीमागताः, तथा शिवादयोऽपि स्वान्तरङ्गसेवकसहिताः समायान्ति, तत्सम्बन्धकृतमन्यावेशात्मकम् । तत्रैवेति । गान एव । सरसं च तस्येति । सामान्ये नपुंसकम् । माधव्या इत्यर्थः । वरप्राप्त इति । भगवत्प्रसादात्प्राप्तः ।

**गन्धेऽर्चिते तुलसिकाभरणेन तस्या यस्मिंस्तपः सुमनसो बहु मानयन्ति १९**

मन्दारेति । मन्दारो देवतरुर्भूमावप्रसिद्धः । कुन्दकुरबकोत्पलचम्पकाः सर्वत्र प्रसिद्धाः । अर्णः काश्मीरप्रसिद्धः। पुन्नागनागकेशरबकुलाम्बुजा अपि प्रसिद्धाः। पारिजातो मन्दारवत् । एते पुष्पप्रधाना अतिपरिमलयुक्ताः, तथापि तुलसिकाभरणेन भगवता तुलस्या गन्धेऽर्चिते, यस्मिन् वैकुण्ठे तस्या एव तपः सर्वे एव सुमनसो भूत्वा मन्दारादयो बहु मानयन्ति । न केवलं बहिर्बहुमानम्, किन्तु अन्तःकरणेऽपीति सुमनस इत्युक्तम् । तपसा हि हीन उत्तमतां व्रजति । तुलसिका भगवत आभरणम्, वनमाला तत्सम्भवेति । तुलस्यमृतोद्भवा, यथा लक्ष्मीः । भगवत्प्रसादाच्च तया तपः कृतमित्यवसीयते । वृन्दात्वे या तस्यां प्रसादः। सा हि जालन्धरपत्न्यभूत्मघोः कन्या; जालन्धरवधार्थं च तां परिगृहीतवान् । तस्या पातिव्रत्यं तपः, तप एव वा पूर्वसिद्धम् । गुणकृतसौन्दर्याभावाय भगवता सा तथैव स्थापिता । भक्तिमार्गे तस्या माहात्म्यं सर्वतोऽधिम् । एवं प्रकारत्रयेण स्वभावसात्त्विकराजसतामसा अपि स्वदोषमभिमानं दूरीकृत्य यत्र वैकुण्ठे अस्वाभाविकधर्ममङ्गीकृतवन्त इत्युक्तम् ॥ १९ ॥

इदानीं मुख्यतया स्त्रीणामेव सहजदुष्टत्वात् दोषाभावः प्रतिपाद्यते । तत्र सर्वाः स्त्रियोऽन्या आधिभौतिक्यः । लक्ष्मीर्द्विविधा, आध्यात्मिकी लोकसंबन्धिनी, आधिदैविकी भगवद्भक्ता भगवदानन्दरूपा । त्रिविधानामपि स्त्रीणामानन्दरूपत्वात् सहजो दोषः संभवति, स निराक्रियते । तत्र प्रथमं भगवदीयानां स्त्रीणां दोषाभावमाह—

**तत्संकुलं हरिपदानतिमात्रदृष्टैर्वैदूर्यमारकतहेममयैर्विमानैः ।**
**येषां बृहत्कटितटाः स्मितशोभिमुख्यः कृष्णात्मनां न रज आदधुरुत्स्मयाद्यैः॥२०॥**

+ तत्संकुलमिति । तद्वैकुण्ठं विमानैः संकुलम् । तेषां विमानानां प्राप्त्युपायमाह—हरिपदानतिमात्रदृष्टैरिति । हरिपदयोरानतिमात्रं येषाम्, तैर्दृष्टानि । भक्तिमार्गानुसारेण भगवति नम्रत्वे तादृशविमानदर्शनम् । श्रवणादिषड्भिर्भक्तिर्वा । मात्रशब्दोऽवधिवाची । सख्याद्यभावेऽप्यानतिपर्यन्तेनैव भक्तिमार्गेणेति तत्प्राप्तिरिति वा । वैदूर्यमारकतहेममयैरिति विमानानां त्रैविध्यमुक्तम् । तत्र वैदूर्यं तामसमिव, मारकतं सात्त्विकमिव, हेम राजसमिव । भक्तानामपि त्रैविध्यात् त्रिविधप्राप्तिः । अनेन भक्तानां तत्र विमानेषु स्थितिरुक्ता भोगातिशयाय । येषां विमानानां संबन्धिन्यो भोगार्थमेव स्थिताः । बृहत्कटितटा इति । भोगमेव पोषयन्ति । मोहकत्वं च सहजमित्याह—स्मितशोभिमुख्य इति । स्मितेन शोभायुक्तं मुखं स्मितशोभि, स्मितशोभि मुखमासामस्तीति स्मितशोभिमुख्यः । दर्शनेनैव मोहकत्वमुक्तम् । रसद्वयसिद्ध्यर्थं च विशेषणद्वयम् । अमोहकत्वे हेतुः—कृष्णात्मनामिति । भगवद्भक्तानां मनसि ता न रज आदधुः, कामं नोत्पादितवत्यः । न च ता विभावाद्यचतुरा इति मन्तव्यम्, यत उत्स्मयाद्यैरपि हास्यादिसर्वभावैरपि न रज आदधुः। वैकुण्ठस्य माहात्म्यं कृष्णात्मत्वेनैव, तत्रैव कृष्णा(?)त्मानो भवन्तीति । कृष्ण आत्मनि येषां

---

प्रकाशः ।

+ तत्सङ्कुलमित्यत्र । अवधिवाचीति । उत्तरावधिवाची । रसद्वयसिद्ध्यर्थमिति । गुप्तप्रकटरससिद्ध्यर्थम् । वैकुण्ठस्य माहात्म्यमिति । तत्र हेतुरिति शेषः । तदेवोपपादयन्ति—कृष्ण इत्यादि । कृष्ण आत्मान इत्यादि । कृष्णे भगवति आत्मानोऽन्तःकरणानि भवन्तीति दोषाणां कामादीनां भगवत्त्वेना

-मिति पक्षे दोषाणामदोषत्वं वा, अकृष्णात्मनां तत्राभावात् । नामविशेषकथनाद्रजउत्पत्तिहेतुत्वं वा । व्रजवद् वैकुण्ठोत्कर्ष एव भवति । अन्यत्रापि तस्य न दोषत्वम्, अन्यथा तत्र तेषामेव कीर्तनं विरुध्येत २०

एवं भगवदीयस्त्रीणां दोषाभावमुक्त्वा लक्ष्म्यास्तत्र गर्वः सम्भवति, तदर्थमेव तन्निर्माणात्, अथापि तस्या-स्तद्दोषाभावमाह—

**श्री रूपिणी क्वणयती चरणारविन्दं लीलाम्बुजेन हरिसद्मनि मुक्तदोषा ।**
**संलक्ष्यते स्फटिककुडय उपेतहेम्नि संमार्जतीव यदनुग्रहणेऽन्ययत्नः ॥ २१ ॥**

÷ श्री रूपिणीति । सर्वस्मिन्नेव जगति विद्यमानलक्ष्म्याः सा देवता, अतो रूपिणीत्युच्यते । ब्रह्मान-न्दस्य नीरूपस्य रूपं सञ्जातमित्यलौकिकार्थं वा रूपवती सा निरूप्यते । यद्यपि सौन्दर्यवदाभरणादिकम-प्यभिमानहेतुरस्ति, तथापि नाऽभिमान इति वक्तुं क्वणयतीत्युक्तम् । चरणारविन्दं नूपुरशिञ्जितैः क्वण-यती सशब्दं कुर्वती । रूपित्वम्, चरणक्वणनम्, लीलाम्बुजं च तस्याः सर्वेषां वेद्यमिति नान्यद्वर्णितम् । रूपवत्त्वं प्रतिमाया अपि भवतीति क्वणनमधिकं निरूपितम् । लीलाम्बुजेनाऽप्युपलक्षिता स्त्र्यन्तरव्यावृ-त्त्यर्थम्, यतः सैव पद्मकरा भवति । मुक्तो दोषो यया, स्थिरा । लोके आधिभौतिकचाञ्चल्यं दोषः । लीलाम्बुजयुक्तेन प्रसारितहस्तेनोपलक्षिता वा । हरिसद्मनीति । तत्र सर्वेषां सहजदुःखाभावः । दुःखाभावपू-र्वकविषये सत्यवश्यं गर्वो भवत्येव, तथापि तत्र संमार्जतीव संलक्ष्यते । ननूचितमेव गृहिण्या गृहसंमार्ज-नमिति, तन्निवृत्त्यर्थं तस्याः प्रतिबिम्ब एव तथा दृश्यत इति ज्ञापनार्थं गृहं विशिनष्टि—स्फटिककुडय उपेतहेम्नीति । एकस्फटिकत्वे शोभा न स्यादिति बहवः स्फटिका वक्तव्याः । तत्र योजकद्रव्यान्तरसंब-न्धे पुना रजःसंबन्धः स्यात्, अत उपेतं हेम सन्धिषु यत्रेति । प्रतिबिम्बाधिक्यार्थं वा । अतस्तत्र रजः-संबन्धाभावेऽपि सैव निरभिमाना तिष्ठतीति तथोक्तम् । सर्वस्याऽपि वैकुण्ठस्याऽतिशोभायुक्तत्वात् लक्ष्म्यैव शोभा क्रियत इति तथोत्प्रेक्षणम् । तत्रत्यानां न लक्ष्मीपरत्वं वा, तेन तथोत्प्रेक्षा । अनेन लक्ष्म्याः, अन्ये-षामपि तत्कृतो दोषो नास्तीत्युक्तम् । आदराभावस्त्वत्यलौकिक इति ज्ञापयितुमाह—यदनुग्रहणेऽन्ययत्न

---

प्रकाशः ।

ऽदोषत्वम् । स्त्रीणां पुंसां सहभावेऽपि भगवत्कथागानादिपुरःसरमेव तथात्वाददोषत्वमित्यर्थः । तत्र हेतुः—अकृष्णात्मनामित्यादि । उभयेषामप्येकविधत्वादित्यर्थः । नामविशेषाकथनादिति । येषामिति सा-मान्यवचनेन तथात्वात् । तदेति । रजउत्पत्तिहेतुतायामपि तदनुत्पादकत्वे । अन्यत्रापि तस्य न दोषत्व-मिति । भूमिष्ठभगवद्धामस्वपि तत्स्थस्त्रीसौन्दर्यस्य स्त्रीपुंसभावस्य वा न दोषत्वमित्यर्थः । अत्र गमकमाहुः—अन्यथेत्यादि । तेषामित्यादि । कामोत्पादकगुणानाम् ।

÷ श्रीरित्यत्र । क्वणयतीत्युक्तमिति । एतेनाऽऽभरणवत्त्वमुक्तम् । इति तथोक्तमिति । एतद्बोध-यितुं दासीकार्यकर्तृत्वमुक्तम् । ननु प्रकारान्तरेणाऽपि शक्यवचनत्वात् किमित्येवं कथनमित्यत आहुः—सर्वस्येत्यादि । तथोत्प्रेक्षणमिति । सम्मार्जनकर्तृत्वेनोत्प्रेक्षणम् । लक्ष्म्या शोभाकरणोक्तौ आगन्तुकशो-भाभावोऽप्यायातीत्यरुच्या पक्षान्तरमाहुः—तत्रत्यानामित्यादि । लक्ष्मीपरत्वमिति लक्ष्मीनियम्यत्वम् । तत्कृत इति । लक्ष्मीकृतः । तथा चैतावद्बोधनाय तथा कथनमित्यर्थः । नन्वेवं सति 'न मन्यते स्वयमनु-वर्तती भवान्' इत्यादि वाक्योक्त आदराभावो न युज्यत इत्यत आहुः—आदरेत्यादि । अत्यलौकिक

इति । यस्या अनुग्रहणेऽनुग्रहार्थमन्येषा ब्रह्मादीना यत्न ॥ २१ ॥

एवमाध्यात्मिकच्या गर्वाभावरूप दोषाभावमुक्त्वा आधिदैविक्या मानाभिमाने न स्त इत्याह—

**वापीषु विद्रुमतटास्वमलामृताप्सु प्रेष्यान्विता निजवने तुलसीभिरीशम् ।**
**अभ्यर्चती स्वलकमुन्नसमीक्ष्य वक्रमुच्छेषितं भगवतेत्यमताङ्ग[1]यच्छ्रीः॥२२॥**

*वापीष्विति । निजवने लक्ष्मीवने, तुलसीभिः साधनैः, वापीष्वीशमभ्यर्चती स्ववक्र भगवतोच्छेषितमित्यमन्त । सा हि भगवद्भजन कुर्वाणा, भजनस्य स्वस्य भगवच्चुम्बनमेव महाफलत्वेन ज्ञातवती । तस्याः कथमभिमान स्यात् ? तुलसीभिश्च पूजयतीति न सापत्न्यादिभाव । अवस्थास्मारकत्वेन वापी दास्योरुपयोग । कदाचिदवभावव्यावृत्त्यर्थं वापीष्विति बहुवचनम् । प्रवालास्तटे यासामिति प्रतिबिम्बस्फुटता । विद्रुमास्तटेषु यासाम्, तटच्छायाया मालिन्याभावाय । अमलमिति नैर्मल्यं मुख्य प्रतिबिम्बे हेतु, अमृतजलत्व च, लवणजले विवर्णप्रतीते । जले च पूजार्थं ध्यातो भगवान् प्रेष्याप्रतिबिम्बे स्फुरित । सकचग्रहचुम्बने ऊर्ध्वं मुख भवति । एतदेव महापुरुषार्थ इति ज्ञातवती । प्रेष्यान्वितेति शङ्काभावार्थं च । निजवन इति भगवदागमनाभावाय । यत्र तस्या एतावदेव मनोरथ सिद्धम्, तत्र कथं गर्वादिभाव । स्वलकमिति कचग्रहणार्थं वचनम् । ऊर्ध्वनासिकता तदैव भवति । उपविष्टायास्तु तावदेव, यत इयमभ्यर्चती । यस्य वैकुण्ठस्य श्री । तुलसीभिरिति बहुवचनं लक्ष्यादिपूजाद्युपलक्षकम् । ईशमिति पूजायामपि पतित्वेन नाऽवहेला । अभितोऽङ्गादिसहितपूजन महाफलत्वाय । चुम्बनमात्रेणैव कृतार्थताज्ञान परमभक्तत्वबोधकम्, आत्मसमर्पणं तु जातमिति । उच्छेषितममंस्तेति नियाविरतिरपि सूच्यते, साक्षात्फले सम्भवति किमित्येव क्रियत इति ॥ २२ ॥

एव सर्वदोषाभावमुक्त्वा दोषवता तत्र गमनमेव नाऽस्तीत्याह—

**यन्न व्रजन्त्यघभिदो रचनानुवादाच्छृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः ।**
**यास्तु श्रुता हतभगैर्नृभिरात्तसारास्तांस्तान् क्षिपन्त्यशरणेषु तमःसु हन्त!॥२३॥**

×यन्न व्रजन्तीति । अनेन सस्काररूपा अपि दोषास्तत्र न सन्तीति समर्थितम् । यद्वैकुण्ठ ते न व्रजन्ति, ये अघभिदो रचनानुवादादन्यविषया कथा शृण्वन्ति । अन्यविषयककथाश्रवणं वैकुण्ठगमने साधने सत्यपि प्रतिबन्धकम्, अन्यथा साधनाभावादेव न गच्छेयु, किमेतत्कथनेन । अघ भिनत्तीत्यघभित् भगवान्, तस्य पापनाशकत्व सहजम् । तस्य रचना चरित्रम् । चरित्रस्य स्वातन्त्र्याभावाऽसमास । रचनाया अनुवाद श्रवणानुसारेण कीर्तनम्, कृतानुकीर्तन वा, न तूत्प्रेक्षासिद्ध काव्यवत् । तस्मादन्यवि-

प्रकाशः।

इति । वैराग्यपरमकाष्ठाभिज्ञापक ।

* वापीष्वित्यत्र । भजनस्य स्वस्य भगवच्चुम्बनमिति । स्वकृतभजनस्य भगवत्कृतम्वमुखचुम्बनम् । प्रेष्यान्वयवाप्योरवस्थास्मारकत्व विवृण्वन्ति—जले चेत्यादि । यच्छ्रीरित्यत्र यदिति भिन्न पदमिति अभिप्रेत्याहु —यत इत्यादि । यच्छ्रीरित्येक पदमित्यभिप्रेत्याहु - यस्येत्यादि । इदमेवाऽऽधिदैविकगर्वाभावम्। क्रियत इति । मनोरथ क्रियते ।

× यन्नेत्यत्र । सस्काररूपा इति । वासनारूपा । तदभाव समर्थयन्ति—अन्यविषयेत्यादि ।

१ लक्ष्म्यादि क ग

पयाः कथा इति केनाऽपि प्रकारेण भगवत्संबन्धरहिताः, भगवद्विरुद्धदैत्यादिकथा वा । तासामेमेलनादन्यत्वम् । अत एव ताः कुकथाः । तेषां धर्माणां दोषत्वात् दैत्यानां पराक्रमोऽपि ब्रह्महत्यारूपो भवति । ननु भगवत्कथाया अपि श्रुतत्वात् कथं तासामेव फलम् ? तत्राऽऽह—मतिघ्नीरिति । पूर्वसिद्धां भगवत्कथामतिं नाशयन्त्येव, यदि श्रुता भवेयुः, विषवत् । किञ्च, न तासां केवलं प्रतिबन्धकत्वम्, किन्तु स्वतन्त्रतया अनिष्टसाधकत्वं चेत्याह—यास्तु श्रुता इति । पुण्ये विद्यमाने तेषां श्रवणमेव न सम्भवतीति हृतभगैरित्युक्तम् । भाग्यं सुखानुभवहेतुरदृष्टम्, तद्यदा केनाऽपि निमित्तेन नश्यति, तदा कुकथाश्रवणे मतिरुत्पद्यते । ननु तेषां विवेकधैर्यादेर्विद्यमानत्वात् पश्चाद्भगवत्कथां श्रोष्यन्तीत्याशङ्क्याऽऽह—आत्तसारा इति । नराणामल्पसारत्वात् तदपि कुकथाभिर्गृह्यते, तदा सत्सामग्र्या गतत्वात् तानशरणेषु तमःसु दैत्यस्थानेषु दूरादेव प्रक्षिपन्ति । हन्तेति खेदे । महता कष्टेन श्रुताः पश्चाद्घातुका जाता इति । तांस्तानिति वीप्सा । न कोऽपि तादृशो निस्तरतीति ज्ञापितम् । श्रवणे संपन्न एव, मननाद्यपेक्षापि नाऽस्ति । तदैव क्षिपन्तीति न मुक्तिवेदकः सहायोऽपेक्ष्यते । तेषां च स्थितौ मध्ये को वेद किं भवेदिति । तादृशानां बहुत्वसम्भवाद्बहुवचनेन वीप्सा ॥ २३ ॥

एवं तामसानां दोषवतां तत्रागमनपूर्वकं तमःप्रवेशमुक्त्वा राजसानामूर्ध्वाधोगतिरहितानां मध्ये परिभ्रमणेन क्लेशं दृष्ट्वा शोचन्नाह—

**येऽभ्यर्थितामपि च नो नृगतिं प्रपन्ना ज्ञानं च तत्त्वविषयं सहधर्म यत्र ।**
**नाऽऽराधनं भगवतो वितरन्त्यमुष्य संमोहिता विततया ननु मायया ते॥२४॥**

* येऽभ्यर्थितामपीति । ये नृगतिं प्रपन्ना भगवत आराधनं न वितरन्ति, ते निश्चयेन अमुष्य मायया मोहिताः । नृगतिं मनुष्यत्वम् । तस्या दुर्लभत्वमाह—नोऽभ्यर्थितामिति । ब्रह्मादिभिरपि नृगतिः प्रार्थ्यते, सर्वस्याऽपि प्रकृतिरूपत्वात् । यथा कनकात्सर्वमेव कुण्डलादिकं भवति, न तु कुण्डलात् । अत एव ब्रह्मादीनामपि नृगतिः प्रार्थ्या । न इति षष्ठी संबन्धमात्रविवक्षया, नृगतेर्वैलक्षण्यप्रतिपादनार्था । या नृगतिर्ब्रह्मत्वं संपादितवती, नाऽऽसुरीति यावत् । षष्ठ्या सूचितं विशेषमाह—ज्ञानं च तत्त्वविषयमिति । यत्र नृगतौ तत्त्वविषयं ज्ञानं तत्त्वज्ञानं भवति । ब्रह्मज्ञानं सुलभम्, तद्भावापन्नानां प्रापञ्चिकपदार्थानां वैदिकानां वा ज्ञानं दुर्लभम् । तत्त्वविषयमिति विषयपदं तत्त्वेन ज्ञानं वारयति । तदा बाधितं स्वरूपमेव ज्ञातं स्यात् । तद्दैत्यज्ञानेऽपि तुल्यम् । चकारात्स्वरूपज्ञानम् । सहधर्मेति धर्मज्ञानसहितम् । एवमपि सति भगवत आराधनाभावो मायाकार्य एव । वितरणं नाम मर्यादाव्यतिरेकेण दानम्, तथा सर्वेन्द्रियैः सर्वथा सर्वदा भगवद्भजनम्, न तु स्मार्तवत् पूजामात्रं सकृदाराधनं वा । मायामोहः शास्त्रेण निवर्तयितुं शक्यत इति दृष्टेऽपि शास्त्रे यदि वितरणम्, तन्मायामोहकार्यं न भवतीत्याशङ्क्याऽऽह—विततया । नन्विति कोमलसंबोधनेन नाऽत्रान्यथाकथनं शङ्कनीयमिति ज्ञापितम् । सा हि वितता शास्त्रेऽप्यन्यथाबुद्धिं संपादयति । साऽपि मायाविन एव, सृष्ट्यर्थे मोहाभावात् ॥ २४ ॥

---

प्रकाशः।

केनाऽपीति । साक्षाद्वा, भगवदीयकथात्वेन वा । एक इति । कोऽपीत्यर्थः । बहुवचनेनेति । 'तमस्सु' इति बहुवचनेन ।

* येऽभ्यर्थितामित्यत्र । तद्दैत्यज्ञानेपि तुल्यमिति । तत्त्वत्वेन ज्ञानम् । सापि मायाविन एवेति ।

तत्र गमने साधनमाह—

यच्च व्रजन्त्यनिमिषामृषभानुवृत्त्या दूरेहमा ह्युपरि नः स्पृहणीयशीलाः ।
भर्तुर्मिथः सुयशसः कथनानुरागवैक्लव्यबाष्पकलया पुलकीकृताङ्गाः ॥२५॥

× यच्च व्रजन्तीति । चकाराद्यापि वैकुण्ठम् । यद्वैकुण्ठं हरेरनुवृत्त्या व्रजन्ति । हे अनिमिषामृषभेति इन्द्रसंबोधनम् । तस्य भगवदनुकम्पयैवेन्द्रत्वमाप्तिः । सर्वदुःखहर्तुरित्यनुवृत्तौ क्लेशाभावः । विमानदर्शनं भगवदानतिमात्रेणाऽपि भवति, प्राप्तिश्च । स्वतो वैकुण्ठगमनं तु हरेरनुवृत्त्यैव । आनतिरेव वाऽनुवृत्तिः। अन्यार्थं तत्र कीर्तनात् पुनः स्वावसरे कीर्तनम् । तस्या अनुवृत्तेरत्र निदर्शनमाह—दूरेहमा इति । अहङ्कारस्तेषां दूरे । हीति भगवद्भजनस्य दोषनिवर्तकत्वात् तदा अहङ्कारलक्षणो दोषो निवर्तत एव, अनिवृत्तौ तु भजनं नास्तीत्यवगन्तव्यमिति बोधयति । न उपरि व्रजन्तीति सत्यलोकोपरि स वैकुण्ठलोको वर्तत इति बोधितम् । ये निरन्तरं हरेरनुवृत्तिं कुर्वन्ति, ते शुद्धसात्त्विकस्वभावा भवन्तीति नः स्पृहणीयं शीलं येषाम्, तादृशा भवन्ति, अत एव न उपरि गच्छन्ति। यद्यपि वयमपि हरेरनुवृत्तिं कुर्मः, तथाप्यस्माकं न तदेकस्वभावः, अत एव न दूरेहमाः । अत एव तेषां शीलं स्पृहणीयम् । तेषां परिज्ञानार्थं लक्षणमाह—भर्तुरिति । स ह्यत्रापि परिपालकः, तेन देहादिनिर्वाहचिन्ताऽपि तेषां नास्ति, अन्यथा निर्वाहोऽपि न भवेदिति च । मिथ इति रसाविर्भावार्थमुक्तम् । सुयशस इति विषयोत्कर्षः । लौकिकानामपि यशः कीर्त्यते, यशःकीर्तने धर्मो भवतीति । इदं पुनर्यशो धर्मज्ञानभक्तिजनकत्वात् सुयशो भवति, अत एव कथनेऽनुरागः । कथानुरागेणैव कथयन्ति, न तु निर्बन्धेन फलान्तरेण वा कथनम् । सोऽप्यनुरागो नासक्तिमात्रम्, किन्तु सफलं सलक्षणं चेत्याह—वैक्लव्येति । अनुरागेण शरीरे वैक्लव्यं जायते, सर्वकार्यासमर्थं भवति, इदं फलम् । लक्षणद्वयमाह—बाष्पकलया पुलकीकृताङ्गा इति । बाष्पाणां कला उत्तरोत्तराभिवृद्धिः । अन्तः स्थितो भगवदानन्दः सर्वमेव संसारतापं बहिः करोति, तदा तस्य बाष्पा मुखतो निःसरन्ति, तेषां कलया सह । तयैव कलया प्रकाशमाना रोमाञ्चयुक्ताङ्गाश्च भवन्ति । अतो वैकुण्ठगतानां दोषः शङ्कनीयोऽपि नेत्यर्थः ॥ २५ ॥

एवं नवभिर्निर्दुष्टे वैकुण्ठे स्वतो निर्दुष्टाः सनकादयः परमं दोषं कृतवन्त इति महदाश्चर्यमिति वक्तुमाह—

तद्विश्वगुर्वधिकृतं भुवनैकवन्द्यं दिव्यं विचित्रविबुधाग्र्यविमानशोचिः ।
आपुः परां मुदमपूर्वमुपेत्य योगमायाबलेन मुनयस्तदथो विकुण्ठम् ॥ २६ ॥

---

प्रकाशः।

तादृशी अन्यथाबुद्धिजनिका माया मायाविनोऽसुरमोहकस्यैव, न तु सृष्ट्याद्यर्थं मोहकस्य ।

× यच्चेत्यत्र । एकविषयत्वात् 'हरिपदानति·····' इति श्लोकस्थं हरिपदं मनसि कृत्याऽऽहुः—सर्वदुःखहर्तुरित्यादि । हरिपदस्य तच्छ्लोकस्थस्याऽनुषञ्जनेऽनुवृत्तिरप्यानतिरूप्यै(पै)वायातीति पुनरुक्तिदोषसम्भवे तत्परिहारमाहुः—आनतिरित्यादि । अनिवृत्तावितिति । अहङ्कारानिवृत्तौ । सुरत इति । ··· पमार्गात् ।

×तदिति । तद्वैकुण्ठ योगमायाबलेनाऽऽपुरिति सबन्ध । भक्त्यैव गतं तत्स्थान हितकरं भवति, न तु स्वयोगबलेन गतम् । तत्रापि सर्गकर्त्री या योगमाया, तया सृष्ट्यर्थं नीता कथमनर्थं करिष्यन्तीति भाव । तत् भक्त्यैव गन्तव्यमिति वक्तु विशेषणमाह—**विश्वगुर्वधिकृतमिति** । विश्वगुरुणा वेदादिप्रवर्त्तकेन अधिकृतमधिष्ठितम् । गुरो स्थाने धाष्टर्येन न गन्तव्यम्, नापि रिक्तहस्तादिना । किञ्च, तत्स्थान भुवनैकवन्द्यम्, न तु पदा आक्रमणीयम् । तथा च सत्यनर्थो भवेदेव । किञ्च, दिव्य तदलौकिकम्, लौकिकप्रकारेण न गन्तव्यम् । अत एव विरक्तानामपि लौकिकदृष्ट्या गमने दोषोत्पत्ति । किञ्च, **विचित्रविबुधाग्र्यविमानशोचिः** । विचित्राणि यानि विबुधाग्र्याणा विमानानि, तै शोचि कान्तिर्यस्य । ब्रह्मादयोऽपि तत् स्थान पदा अस्पृष्ट्वा अलौकिकानि विमानान्यारुह्य अधस्तात् स्थितास्तस्योत्कर्षं सपादयन्ति । विमानाना विचित्रता छन्दोमयत्वादिना । न हि तादृशं यथाकथञ्चिद्गन्तव्यम् । एव चतुर्विधोत्कर्षसहितम्, विकुण्ठ कदापि भङ्गरहितम्, स्थानमुपेत्यमुदमापु । तस्याऽलौकिको धर्मस्तैरपि प्रत्यक्षीकृत इत्यर्थ ॥२६॥

सा हि योगमाया भगवता सृष्ट्यर्थमाज्ञप्ता स्वयं सृष्टिं विधाय तद्दर्शनार्थं भगवन्तमाकारयितुं भीता तद्द्वारपालकावुपायेन तत्र नेतु मुनीनानीतवती बलात् । भगवता तयोर्द्वारपालकत्वं दत्तम् । तौ चेद्भूमिपालकौ भवत , तदा भूमिर्द्वार भवेत्, तदा भूमिमध्यात् द्वारत्वसिद्ध्यर्थं भगवानाविर्भवेत्, तदा स्वकृत्य पश्येत् इति गूढाभिप्राय । तानानीय यत्कर्तव्य तत्कृतवतीत्याह—

**तस्मिन्नतीत्य मुनयः षडसज्जमानाः कक्षाः समानवयसावथ सप्तमायाम् ।**
**देवावचक्षत गृहीतगदौ परार्ध्यकेयूरकुण्डलकिरीटविटङ्कवेषौ ॥ २७ ॥**

*तस्मिन्नतीत्येति । तस्मिन् वैकुण्ठे षट् कक्षा अतीत्य मुनयः सप्तमाया देवावचक्षतेति सबन्ध । मुदमपि प्राप्य, तन्माहात्म्य स्पष्टमप्यनुभूय, मायामोहवशात् तौ क्रोधदृष्ट्या दृष्टाविति । कक्षा रक्षकसहितद्वाराणि । तत्र विरक्तत्वादेरर्थादिषड्गुणप्रतिपादिका वैराग्यान्ता अतीता , भक्ति सप्तमी । भक्ताश्चेत्तदप्यतिक्रम्य गच्छेयु , तदभावात्तत्र रक्षकौ दृष्टौ । **असज्जमाना** इति षट्कक्षातिक्रमे हेतुः । **समानवयसाविति** वृद्धिक्षयहेतुकालाभावयुक्तौ, वैकुण्ठे कालस्याऽनियामकत्वात् । कालस्य तुल्यत्वेन तदीये कर्मस्वभावयोरपि तुल्यता । **अथेति** भिन्नप्रक्रमे । तेषामप्यसज्जमानता गता, एतयोरपि पूर्ववदनिवारकत्व गतम् । **सप्तमायामिति** । नेय पूरणी कक्षेति ज्ञापनार्थं ङीप्प्रत्ययाभाव । सप्तम्यप्येषा प्रथमा भवति । तत्राऽनयो नाऽस्तीति साधिकरणत्वेन निर्दिष्टा । **देवाविति** वस्तुत एतेषामप्युपास्यौ, एते मनुष्या । तथापि मुनय इति तेषा तत्र गमनम् । किञ्च, एतौ गृहीतगदौ । आसन्य एतदधीन , तेन दैत्यनिवारणसमर्थौ । ततस्तयोराज्ञाकरणे कृतार्था एव भवन्ति । किञ्च, भगवत्सारूप्यमपि प्राप्तौ । तावनुवर्णयति–**परार्ध्येति** । परार्ध्यानि केयूरकुण्डलकिरीटानि हस्तकर्णशिरोभूषणानि । अनेन तयो कर्माणि सिद्धानि, सांख्ययोगौ ज्ञान च । आसन्यस्तु तदधीन एवेति मृत्युदैत्यजय स्वत सिद्ध । तैरपि विटङ्कौ वेषो ययो । तैरलौकिकप्रकारेण भगवद्द्वारपालकयोग्यवेषौ । तयो कर्मादिकमपि भक्त्युपयोगीत्यर्थ ।

---

प्रकाश ।

×तद्विधेरयत्र । छन्दोमयत्वादिनेति । अत्र (?) ' छन्दासि मे रथो भवत ' इति श्रुतिरत्रानुसन्धेया । आदिपदेन भगवत्प्रसाद ।

* तस्मिन्नित्यत्र । विटङ्क इति । सुन्दर । तैरिति । परार्ध्यकेयूरादिभि ।

किञ्च—

**मत्तद्विरेफवनमालिकया निवीतौ विन्यस्तयाऽसितचतुष्टयबाहुमध्ये ।**
**वक्त्रं भ्रुवा कुटिलया स्फुटनिर्गमाभ्यां रक्तेक्षणेन च मनाग्रभसं दधानौ । २८ ।**

×मत्तद्विरेफेति । मत्तद्विरेफवनमालिकया निवीतौ । तयोश्चतुर्विधान्यपि कर्माणि सिद्धानि, उत्पत्तिस्थितिप्रलया मोक्षश्चेति लौकिकानि, वैदिकानि दिव्यानि, भगवदीयानि च, तैः संबद्धा तयोः कीर्तिर्वनमाला । तामनुवर्णयति । मत्ता ये द्विरेफा भ्रमराः । द्विरेफशब्दो रूढः, सर्वेषां शीघ्रप्रतीतेः, अन्यथाप्रतीतौ बर्बरशब्दादिव्युदासोऽपि न प्रतीयेत । मत्तद्विरेफसहिता वनमाला । रेफोऽत्रामितेजः, लौकिकवैदिकामितेजोवद्वेदसहिता वनमाला । सापि प्रेमसंबन्धान्मत्तभ्रमरैरेव संबद्धा । वनमालिकयेति ताभ्यां वनमालाशोभा । तथा निवीतौ कण्ठलम्बितौ । सा कीर्तिस्तत्कर्मसहितेति वक्ष्यमसितचतुष्टयबाहुमध्ये विन्यस्तयेत्युक्तम् । अनेन तयोर्हृदये भगवान्, वनमाला, कमलम्, हस्तचतुष्टयम्, पत्राणीति निरूपितम् । एवंविधावपि, वक्त्रं कुटिलया भ्रुवा उपलक्षितम्, स्फुटनिर्गमाभ्यां श्वाससहिताभ्यां नासिकाभ्यां सहितम्, रक्तेक्षणेन च मनाग्रभसं क्रोधसहितं दधानौ । एतावद्रूपं भगवत्सारूप्यातिरिक्तं मायया कृतम् । वक्त्रं दधानाविति भक्तिमार्गनिष्ठौ । तत्र दोषत्रयं कामादिरूपम् । कुटिला भ्रूः क्रोधस्य सूचिका । नासिकाद्वयवायुरेते न प्रवेशनीया इत्यन्तःस्थितभगवद्दर्शनलक्षणमहाधनलोभेन चिन्तया श्रान्तयोः स्फुटं निर्गतो लोभस्य सूचकः । स्वस्याऽधिकारं मत्वा, स्वयं पूर्णकामौ भूत्वा, कामितः स पदार्थ एतेषां मा भवत्विति काममूलकक्रोधसूचकोऽक्ष्णोरारक्तिमा । त्रिभिर्दोषैः कृत्वा मनाग्रभसमुद्धरलं मुखम् । अत एतयोर्भक्तावन्तरायभूतं दोषत्रयं जन्मत्रयं संपादयिष्यति । मनाक् च संरम्भस्तदवहेलया ॥ २८ ॥

एवं तयोर्गुणदोषौ निरूप्य मुनीनां गुणदोषान् निरूपयति—

**द्वार्येतयोर्निविविशुर्मिषतोरपृष्ट्वा पूर्वा यथा पुरटवज्रकपाटिकायाः ।**
**सर्वत्र तेऽविषमया मुनयः स्वदृष्ट्या ये संचरन्त्यविहता विगताभिशङ्काः २९**

द्वार्येतयोरिति । ज्ञानमार्गे अविषमदृष्टिः, शङ्काभावः, मननम्, आत्मज्ञानं चेति चत्वारो गुणाः । ते यदि भगवन्माहात्म्यज्ञानपूर्वकास्तद्धर्मेष्वादरयुक्ताः, तदा भक्तिमार्गेऽपि गुणा भवन्ति । लौकिकदोषनिवृत्त्यर्थमेव ते ज्ञानमार्गे गुणत्वेनोक्ताः । अधिकृतयोरुल्लङ्घनम्, भगवत्स्थानस्य सामान्यदर्शनम्, अन्त-

---

प्रकाशः

× मत्तद्विरेफेत्यत्र । द्विरेफशब्दस्य यौगिकरूढत्वं केचिदिच्छन्ति, केचिच्च लाक्षणिकत्वम् । तत्र बाधकमाहुः—सर्वेषामित्यादि । "द्विरेफपुष्पलिड्भृङ्गषट्पद····" इति कोशवाक्येन शीघ्रं प्रतीतेः । पूर्वं रेफद्वयविशिष्टभ्रमरपदोपस्थितिस्तद्वाच्यस्य पक्षिण इति विलम्बस्याऽननुभावात् । तथाङ्गीकारे तु भ्रमरपदवदन्येऽपि बर्बरबर्करशर्करामदराद्या रेफद्वयवन्तः शब्दा वर्तन्ते इति तेभ्यो विवेकोऽपि सहसैव प्रतीयेत, अविवेके विनिगमनादौर्घट्यात् । अतस्तन्मतद्वयमप्यसङ्गतमित्यर्थः । एते न प्रवेशनीया इति । एव इति पदच्छेदः ।

---

१ निविशे. क. ख. ङ. च. २ तद्धर्मे चादरयुक्ताः. क. तद्धर्मेष्वादरयुक्ताः. ग. तद्धर्मे चादरयुक्ता. घ.

रङ्गबहिरङ्गयोस्तुल्यतया ज्ञानम्, तद्गतासाधारणगुणागणनं च चत्वारो दोषाः। तेन दैत्ययोनिः, स्वरूपज्ञानाभावः, बहुकालं गर्भवासक्लेशः, यातना चेत्यनिष्टचतुष्टयं फलितम्। दोषाणां प्राबल्यान्मार्गान्तरगुणा अप्यत्र निवृत्ता, तेन क्लेशो न दोषाय। एतयोर्मिपतोरेव सतोस्तावविगणय्य। द्वारि अन्तरङ्गभूताया निविविशुः। अपृष्ट्वेति। किं भगवान् करोति, अवसरोऽनवसरो वेति प्रष्टव्यम्, तदपृष्ट्वा प्रविष्टा इत्यर्थः। पूर्वद्वारो यथा प्रविष्टाः, तथेयमपि द्वा। पुरटवज्रकपाटिकाया इति द्वारमाहात्म्यम्। पुरटं सुवर्णम्, तत्सहिता ये वज्रा हीरकाणि, तैरेव निर्मितौ कपाटौ यस्याः, कपाटिके वा। एवं पूर्वार्द्धे दोषा निरूपिताः। मार्गान्तरस्थान् गुणानाह—सर्वत्रेति। ते अविषमया दृष्ट्या चरन्ति, अत एव केनाप्यविहता इति, स्वस्मिन् विद्यमानमपि ज्ञानं परस्मिन् कार्यसंपादकमिति, सानुभावं निरूपितम्। अत एव विगताभिशङ्काः। विगता अभितः शङ्का येषाम्। *ब्रह्मविदश्चेत् तदा दोषो न भवेत्। तत्रैवैते गुणत्वेनोक्ताः। एते स्वात्मविद.। स हि चिद्रूपं ब्रह्म। तत्रापि मननपर्यन्तं व्यापृताः। तदप्यात्मरूपं न सर्वदा तेषामनुभवविषयः। तत्र स्वरूपधर्मयोर्मध्ये परिच्छेदधर्मस्य बलिष्ठत्वात् परिच्छेदाहङ्काररहितमेवाऽऽत्मज्ञानं गुणरूपम्, अन्यथा संसारिणामपि तत्सम्भवान्मोक्षः स्यात्। आत्मा हि भगवद्विभूतिरिति विभूतिमत्समीपे परधर्मांस्त्यजतीति न तेषामन्यत्र प्रच्युतिः॥ २९॥

एवमेतेषां गुणदोषान्निरूप्य यथाक्रममतिक्रममाह—

**तान्वीक्ष्य वातरशनांश्चतुरः कुमारान् वृद्धान् दशार्धवयसो विदितात्मतत्त्वान्।**
**वेत्रेण चाऽस्खलयतामतदर्हणांस्तौ तेजो विहस्य भगवत्प्रतिकूलशीलौ ३०**

÷ तान्वीक्ष्येति। तत्र प्रथमं द्वारपालकृतातिक्रमो निरूप्यते। तत्र तयोः सहजत्वात् तेषां निवारणे हेतुः—वातरशनानिति। ते हि दिगम्बराः, बालका अपि कटिसूत्रवन्तो भवन्ति। अत एवैषां रशनानिषेधः। भ्रान्ता इव तद्दृष्ट्या प्रतीता.। चत्वारोऽप्येकविधा इत्याश्चर्यमपि। कुमाराः पञ्चवार्षिकाः, कालेन तेषां शरीरस्य कौमारपर्यन्तमेव भोगः कृत इति। उत्पत्तिकालविचारे तु ते वृद्धाः, परार्द्धमितायुषो ब्रह्मणस्य एवोत्पन्नाः। अत एव दशार्द्धवयसः। पञ्चवार्षिका इति केचित्। तेषां या मानुषदशा

---

प्रकाशः

* द्वारीत्यत्र। ननु ज्ञानमार्गस्याऽपि भगवता स्वप्राप्त्युपायतया कथनात् तद्गुणानां कथमत्र दर्शनप्रतिबन्धकतेत्याकाङ्क्षायां तज्ज्ञानमिदं न भवति, यदुपायभूतमिति बोधयितुं ‘मुनयः स्वदृष्ट्या’ इति पदसूचितं तात्पर्यमाहुः—ब्रह्मविद इत्यारभ्य स्यादित्यन्ते (न)। स हीति। आत्मा हि। मननपर्यन्तं व्यापृता इति। न निदिध्यासनपराः। अत एव तदपि मतमप्यात्मस्वरूपं सर्वदा तेषां नाऽनुभवगोचरम्। तत्रापि हेतुस्तत्रेत्यादिनोक्तः। स्वरूपं चिद्रूपम्; धर्मोऽणुत्वम्, परिच्छेद इति यावत्। तथा चाऽधिकाराभावेन मार्गबन्धात् प्रतिबन्धकतेत्यर्थः। ननु तद्गतधर्माणां यदि नात्मज्ञानत्वं धर्मत्वं तदाऽन्यत्राऽपि गतिविघातः स्यात्, तथा सति मूलोक्तान्येतद्विशेषणानि विरुध्येरन्, अतो मार्गभेदप्रतिपादनं न समञ्जसमित्यत आहुः—आत्मा हीत्यादि। परधर्मानिति। विभूतिमतो भगवतो धर्मान्। तथा चाऽन्यत्रामतिरोधान्न विशेषणविरोध इत्यर्थः।

– तानित्यत्र। अत एवेति। बालत्वाभावादेव।

परार्द्धद्वयपरिच्छिन्ना तत्रार्द्धवयसः, एकस्य परार्द्धस्याऽविक्रान्तत्वात् । तेषां ज्ञानवृद्धत्वमप्याह–विदितात्मतत्त्वानिति । विदितमात्मतत्त्वं यैरिति । वेत्रं लकुटविशेषः, चकारान्मुखेन च । अस्पृहयतामिति यथा ते स्खलिता भवन्ति, यथा दण्डं प्रसारितं इत्यर्थः । एवं कर्तुमनुचितास्त इत्याह–अतदर्हणानिति । तत् स्खलनं नार्हन्तीति । ते हि स्थिरीकृत्य वा प्रष्टव्याः, विज्ञापनेन वा अनवसरो ज्ञापनीयः । तदुभयमकृत्वा स्खलनमेव कारितवन्तौ । ताविति पूर्वोक्तौ दोषसहितौ निरूपितौ । तेजो विहस्येति । सर्वथा नाऽज्ञानात्तथा करणम्, किन्तु ज्ञात्वैव । यत्तेषां ज्ञानम्, सर्वपरित्यागलक्षणः स्वधर्म, देहाद्यभिमानाभावश्च, स तेजः । तद्विहस्य । दोषत्वेन पाषण्डित्वेन वा तद्गणनं विहसनम् । तदविगणय्य । तेजःकृतं धाष्टर्च दोषं मत्वा । तत्र दण्डचिकीर्षा हास्ये हेतुः, न तु कौतुकमात्रम् । अत एव भगवतः प्रतिकूलं शीलं ययोः । अनेन स्वामिसेवकधर्मोऽपि तयोर्न सिद्ध इत्युक्तम् । गर्वस्तु भगवत्प्रतिकूले धर्मे, दैत्यधर्मत्वात्, अत एव प्रतिकूलपदम् । शीलमिति तद्धर्मस्य दुर्लङ्घ्यता सूचिता ॥ ३० ॥

एवं तयोरतिक्रममुक्त्वा मुनिकृतातिक्रममाह—

**ताभ्यां मिषत्स्वनिमिषेषु निषिध्यमानाः स्वर्हत्तमा ह्यपि हरेः प्रतिहारपाभ्याम् ।**
**ऊचुः सुहृत्तमदिदृक्षितभङ्ग ईषत्कामानुजेन सहसा त उपप्लुताक्षाः ॥ ३१ ॥**

+ ताभ्यामिति । ताभ्यामिति चतुर्थी । तयोरर्थे शापमूचुरित्यर्थः । शापमिति नोक्तम्, विचारपूर्वकमग्रे वक्ष्यमाणत्वात्, इदानीमविचारितत्वात् । क्रोधेन वचनमर्थाच्छापरूपं भवतीति ज्ञातव्यम् । अत एव निषिध्यमानाः, मैव शापो देय इति । गमननिषेधस्तु कृत एवेति वर्तमानप्रयोगो नोपपद्येत । अनिमिषेषु मिषत्स्विति देवानामुभयत्र साक्षित्वं निरूपितम् । ते ह्यनिमिषाः सर्वसाक्षिणः । तैरेव निषिध्यमाना इति नैकव्याद्वसीयते । तत्रत्यैः सर्वैरेव वा । ताभ्यामेव निषिध्यमाना इति ताभ्यामिति तृतीया वा । वस्तुतस्तु प्रवेशनिषेध एव ताभ्यां क्रियते, वर्तमानसामीप्येऽपि वर्तमानप्रयोग उपपन्नः । सुष्ठु अर्हत्तमा इति निषेधानौचित्ये हेतुः । अर्हाः सदाचाराः, तथापि यथाशास्त्रं परमहंसा अर्हत्तमाः, तत्रापि ज्ञानिनः स्वर्हत्तमा इति । *तर्हि निषेधः कथं कृत इत्याशङ्क्याऽऽह–हरेः प्रतिहारपाभ्यामिति । स हि सर्व*दुःखहर्ता । अन्तःप्रवेशे भगवदतिक्रमे महान् दोषो भविष्यतीति तेनैव भगवता प्रतीहारा द्वारपालका रक्षिताः सर्वत्र बहवः, तेषामेतावधिपती । अतो द्वारपालकानां रक्षार्थम्, तयोरपि रक्षार्थम्, निषिद्धा इत्यर्थः । तर्ह्येतेषां क्रोधे को हेतुः ? तत्राऽऽह–सुहृत्तमदिदृक्षितभङ्गे सति ईषत् कामानुजेन क्रोधेन त उपप्लुताक्षाः । तेषामात्मविदां सर्वत्राऽऽत्मबुद्धिरेव, भगवत्यप्यात्मबुद्धिः । भगवानप्यात्मविदिति सुहृन्मित्रम्, तत्रापि तद्गुणैरन्तःकरणनैर्मल्यं भवतीति सुहृत्तमः, स्वस्याऽभीप्सितज्ञानसाधकत्वात् । तस्य दिदृक्षितं दिदृक्षा दर्शनेच्छा । यस्त्वस्मभ्यमेतावदुपकारं कृतवान् स द्रष्टव्य इति, फलस्य जातत्वात् साधने स्वल्पः कामः । दिदृक्षितस्य भङ्गे सत्यल्पत्वात् प्रतिबन्धे भङ्ग एव जातः, न त्वेतत्समाधानं कृत्वा पुनर्द्रष्टव्य इतीच्छा तेषु स्थिता । अत एव ईषत्कामस्याऽनुजः । महति कामे प्रतिरुद्धेऽपि क्रोधो न भवति

प्रकाशः।

+ ताभ्यामित्यत्र । ताभ्यामित्यत्र तृतीयां विहाय चतुर्थीव्याख्याने बीजमाहुः–गमननिषेध इत्यादि। दर्शनेच्छाया हेतुपूर्वकमाकारमाहुः–यस्त्वित्यादि । स्वल्पत्वे गमकं प्रमाणं चाहुः–दिदृक्षितस्येत्यादि, अत एवेत्यादि च ।

यथेश्वरवाक्ये, अर्थार्थिनो वा । तेषामपि विचारो नोत्पन्न इत्याह—सहसेति । उपप्लुतान्यक्षीणि येषाम् । अनेन तयोर्गुणा अपि तेषां न प्रत्यक्षा जाता इत्युक्तम् । उपप्लवः प्रलयः सर्वनाशरूपः, स तेषां जात इति तथोक्तम् ॥ ३१ ॥

तेषां वचनमाह—को वामिहेत्यादित्रिभिः—

## मुनय ऊचुः ।

**को वामिहेत्य भगवत्परिचर्ययोच्चैस्तद्धर्मिणां निवसतां विषमः स्वभावः ।**
**तस्मिन्प्रशान्तपुरुषे गतविग्रहे वां को वाऽऽत्मवत्कुहकयोः परिशङ्कनीयः ३२**

÷ तयोः स्वाभाविको दोषः स्वामिद्रोहस्तथाऽपरः । स्वस्याऽन्तरङ्गमिश्रत्वात्तदुल्लङ्घनमेव च ॥ १ ॥ दोषस्तृतीयो नाऽत्रोक्तो मिश्रकार्ये परं कृतम् । तथा वचनसंदर्भात्सोच्यते जन्मसंख्यया ॥ २ ॥ तत्र प्रथमं तयोः स्वाभाविकं दोषमाहुः—इह वैकुण्ठे, उच्चैर्भगवत्परिचर्यया पूर्वजन्मनि कृतया, भूमेः सकाशादिहागत्य निवसतां भगवत्सेवकानां मध्ये को वां युवयोरेव विषमः स्वभावः ? अस्मासु दोषबुद्धिः, 'नाऽर्थदा पुरुषद्विषाम्' इति पुरुषे द्वेषस्य निन्दितत्वात् । कैश्चित् प्रवेष्टव्यं कैश्चिन्नेति केचिदाहुः, तदा द्वारपालकाधिकारदानं भगवतो विरुध्येत । आत्मीयानामपि मातापित्रोरप्यनवसरे गमनमुचितं न भवतीति लौकिकार्थं तथाकरणं द्वारपालयोरुचितमेव । तथा नूतनानां महतामुपहासः क्रोधदर्शनं वैकुण्ठवासिनामुचितम्, सामान्यधर्मानुरोधेनैव विशेषधर्माणां कर्तव्यताया उचितत्वात् । तेषां मते सर्वं कर्मजन्यमेव, तत्रापि भोगरूपम्, भक्तिमार्गस्याज्ञातत्वात् । अतो निरन्तरभगवत्सेवयाऽत्राऽऽगत्य स्थितिर्भवतीति मन्यन्ते । तत्रापि वैकुण्ठे ये भगवत्समानधर्मा ब्रह्मण्या धर्मनिष्ठप्रीतियुक्तास्तेषां मध्य इति । तेनैतयोः सहजवैकुण्ठादागमनं निवारितम् । स्वस्य मुखाद्वचनं निःसरतीति । को वेत्यधिक्षेपे । क इत्याधिक्षेपे, वेत्यनादरे वा । ननु त्रैविध्यात् केचन विषमस्वभावा अपि भवन्तीति चेत्तत्राऽऽह—तस्मिन् प्रशान्तपुरुषे गतविग्रह इति । अयं विषमस्वभावः स्वार्थम्, भगवदर्थं वा ? स्वार्थं चेत्, न युवां भगवदीयौ । तत्र हेतुमाह—प्रशान्तपुरुष इति । प्रकर्षेण शान्ताः पुरुषा यस्य । तस्य हि सर्वे पुरुषाः शान्ता एव । शान्तिस्तु ज्ञान एव, अतो वैषम्यं भगवदीयत्वाभिमानोचितम् । भगवदर्थं च नाऽपेक्ष्यत इत्याह—गतविग्रह इति । गतो विग्रहः कलहो यस्य । विशेषेण ग्रह आग्रहो वा । विग्रहो देहो वा । देहाभावान्न केनाऽप्यनिष्टं कर्तुं शक्यम्, कलहाभावात् न कश्चित् द्विष्टः, आग्रहाभावात् नाऽनौचित्यं भगवान् मन्यते । अतो विषमस्वभाव उत्पत्त्या चोपपत्त्या चाऽत्र बाधितः। वां युवयोः । एवं तयोर्विषमस्वभावं निन्दित्वा स्वातिक्रमदोषं तयोरुपपादयन्ति—को वाऽऽत्मवदिति । कुहकयोर्वञ्चकयोः को वा आत्मवत्परिशङ्कनीय इति । दुष्ट एव हि अन्यत्र दोषं मन्यते, अतो युवयो-

---

प्रकाशः ।

÷ को वामित्यत्र । कारिकायाम् । सेति । मिश्रकृतिः । कार्यद्वारा वैषम्यस्वरूपं प्रकटयन्ति—आत्मीयानामित्यादि—उचितत्वादित्यन्तम् । अधिक्षेपं वक्तुं तन्मूलभूतविचारस्वरूपमाहुः—तेषां मत इत्यादि—आगमनमित्यन्तम् । तत्र हेतुः—निवारितमित्यादि । एतस्य विचारस्याऽऽपातमतिमन्नतां बोधयन्ति—आग्रहेत्यादि ।

दोषोऽस्तीत्यवसीयते । परिचर्याया एव वैकुण्ठागमनहेतुत्वं मन्यन्ते, न तु निष्कपटपरिचर्यायाः । अतः कपटेन परिचर्यां कृत्वा वैकुण्ठे समागत्याऽधिकारं प्राप्य, स्वभावादधिकाराच्च, यथा वयं तथाऽन्योऽप्यत्रा गमिष्यतीति यत्रैव स्वस्याऽस्वारस्यं तत्रैव विषमदृष्टिः, न तु विषयपरिज्ञानादिति तस्य पक्षस्याऽऽक्षेपः । वयं तु न परिशङ्कनीया इति भावः । निषेधस्तु परिशङ्काङ्गीकारे स्वस्याऽपि कुहकत्वं सेत्स्यतीति । तस्माद्वयं निर्दुष्टाः, युवामेव सदुष्टौ, निर्दुष्टे दोषारोपात् । आग्रहाविष्टबुद्धिर्नात्यन्तं युक्तिमपेक्षते, अतोऽस्मिन्पक्षे न समर्थोपपत्तिः । तथाऽग्रिमपक्षेऽप्यवगन्तव्यम् ॥ ३२ ॥

स्वामिद्रोहमाह—

**न ह्यन्तरं भगवतीह समस्तकुक्षावात्मानमात्मनि नभो नभसीव धीराः । पश्यन्ति यत्र युवयोः सुरलिङ्गिनोः किं व्युत्पादितं ह्युदरभेदि भयं यतोऽस्य ३३**

न ह्यन्तरमिति । इह वैकुण्ठे शुद्धसत्त्वात्मके रजस्तमसोरभावात् तत्कृतमुचनीचत्वमपि नाऽस्ति । किञ्च, भगवति नाऽस्त्यन्तरम्, तेन ये ज्ञानादिमन्तस्ते भगवद्रूपा इति तेषु भगवति चाऽन्तरकरणं स्वामिद्रोहः । किञ्च, समस्तकुक्षाविति । समस्तं कुक्षौ यस्य । वैकुण्ठवासिनः सर्वे पूर्वं तस्य कुक्षावेव स्थिताः, इदानीं वा नारायणोदरे सर्वे तिष्ठन्तीति । अतः प्रथमपक्षे वैकुण्ठवासिष्वन्तरमनुचितम्, द्वितीयपक्षे सर्वेष्वेव । तस्य समस्तकुक्षित्वं श्रुत्यनुभवसिद्धम् । तत्र श्रुतिः—' आत्मैवेदं सर्वम् ' ' यस्मिन्निदं सं च वि चैति सर्वम् ' इति च । अनुभवं कीर्तयन्ति—आत्मानमात्मनि नभो नभसीव धीराः पश्यन्तीति । आत्मानं स्वात्मानम् । आत्मनि भगवति । आत्मनश्च पुनः सर्वत्वज्ञानात् सर्वं भगवति भविष्यति, स्वदृष्टान्तेन वा । तत्र प्रथमपक्षो वादिनं प्रति वक्तव्यो न भवतीति दृष्टान्तपक्षमेव दृष्टान्तेन स्पष्टयति—नभो नभसीवेति । यथा घटाकाशो विद्यमानेऽपि घटे महाकाश एव, महाकाशे वा; तथा सर्व आत्मानः सोपाधयोऽपि भगवानेव, भगवति वा । अत्र प्रमाणम्—धीराः पश्यन्तीति । श्रुतिर्ब्रह्मवादे भगवद्वादे वाऽप्युपपद्यते, तथाप्यनुभव आत्मवाद एव स्वाधीनः, अतो धीरा इत्येवाऽधिकारिविशेषणम् । धैर्यं हि आत्मनो महाफलत्वज्ञानात् फलान्तरेच्छाभावपूर्वकेन्द्रियादिजयः, चित्तस्थैर्यमेव वा धैर्यम् । एवं सर्वकुक्षित्वं प्रतिपाद्य तत्रापराधः कृत इत्याहुः—यत्र भगवति, सुरलिङ्गिनोर्युवयोः । देवानां लिङ्गमात्रम्, वस्तुतस्तु दैत्या एव । तृतीया दैवगत्याऽपि करणं सम्भवतीति नोक्ता । षष्ठ्या तु स दोषस्तेषां संबन्धीति बोध्यते । उदरं भिनत्तीत्युदरभेदि, तस्य भयम् । ' यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति ' इति श्रुतिः । ये भगवद्भावं प्राप्तास्ते उदरशब्देनोच्यन्ते, तेष्वन्तरं कुर्वन् भयं प्राप्नोतीत्यर्थः । उत् ऊर्ध्वमरमप्यन्तरमिति च । उत् ऊर्ध्वं लौकिकापेक्षयाऽप्याधिकं शास्त्रतो भेदसमर्थनम्, अरमपि तत् । भृत्यापराधे स्वाम्येवैवं करोतीति लोके प्रतीतिर्भवेत् । तदोदरभेदिनां यद्भयम्, तदस्मिन्नपि

---

प्रकाशः ।

न हीत्यत्र । सर्वत्वज्ञानादिति । ' आत्मैवेदं सर्वम् ' इतिश्रुत्युक्तसर्वत्वज्ञानात् । तस्य भयमिति । ' यतोऽस्य व्युत्पादितम्, तत्किम् ' इति मूलशेषोऽत्र; तदेतद्धृदिकृत्य व्याकुर्वन्ति—यदेत्यादि । य इत्यादिनोक्तमन्तरशब्दस्य भगवद्भूतवाचकत्वपक्षे लक्षणया सम्बन्धिबोधकत्वं ज्ञेयम् । लक्षणादोषादरुच्या पक्षान्तरमाहुः—उदूर्ध्वमित्यादि । तेन स्वामिनो भयं व्युत्पादयन्ति—भृत्येत्यादि । भयं भवेदिति ।

१ सर्वयोपपत्ति. क. म.

कृतं भवेदिति युक्त एव तव स्वामिद्रोहो जात इति हिशब्दार्थः। सेवककृतत्वात् भगवत एतदङ्गीकर्तव्यम्, तथा सति भयं भवेदिति गूढाशयः॥ ३३॥

एतदनङ्गीकारे तु स्वामिनो भयं न भविष्यत्येव, तदेतयोरेव भयं भवत्विति शास्त्रार्थसिद्ध्यर्थं भगवति मैत्रीनिर्वाहार्थं च तयोः शापं प्रयच्छन्ति—

**तद्धाममुष्य परमस्य विकुण्ठभर्तुः कर्तुं प्रकृष्टमिह धीमहि मन्दधीभ्याम्।**
**लोकानितो व्रजतमन्तरभावदृष्ट्या पापीयसस्त्रय इमे रिपवोऽस्य यत्र॥ ३४॥**

× तद्वामिति। अमुष्य भगवतः सर्वेषां परमस्य स्वामिनः, अस्मदाद्यनुग्रहार्थं विकुण्ठस्थाने संस्थितस्य। विकुण्ठशब्देन शुद्धं सत्त्वम्, तद्भर्तुरित्यस्मदादिसत्त्वस्याऽपि भर्तृत्वात् तस्य प्रकृष्टं कर्तुमिहाऽस्मिन्नर्थे यदुचितं तद्धीमहि, ध्यानेन साक्षात्करिष्यामः। वां युवाभ्याम्। मन्दधीभ्यामिति। ताभ्यामेव चेदनिष्टं दीयते, तदा ताभ्यामेव भगवत इष्टं भवतीति चतुर्थीतृतीये। ध्यानेन निश्चितमर्थमाहुः—लोकानितो व्रजतमिति। अन्तरभावेन या दृष्टिः कृता क्रूरा, तया कृत्वा, इतोऽधस्तनान् लोकान् व्रजतम्। इदं हि सत्त्वस्थानम्, ततोऽधस्तना राजसतामसाः। तत्रैकः केवलराजसः, द्वितीयो राजसतामसः, तृतीयस्तामस इति। अवान्तरलोकानां बहुत्वसम्भवात् त्रीनिति वक्तुं विशिनष्टि—पापीयसस्त्रय इति। अस्य भगवतो रिपवो भगवदीयैर्हेयत्वेन ज्ञाताः, 'कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्' इति वाक्यात्। ते च पापीयसः संबन्धिनः, न भगवदीयाः, किन्तु तद्विरोधिनश्च। अतो भगवद्विरोधि कामादित्रयं येषु लोकेषु, तान् लोकानितो व्रजतमित्यर्थः॥ ३४॥

पूर्वं शापपर्यवसायित्वमज्ञात्वा कृतोऽतिक्रमः। जाते च शापेऽमूर्चा वाग्गदादिभिर्दूरीकर्तुमशक्येति तेषां प्रार्थनयैव शापो गमिष्यतीति बुद्ध्वा तेषां प्रसादनं कृतवन्तावित्याह—

**तेषामितीरितमुभाववधार्य घोरं तं ब्रह्मदण्डमनिवारणमस्त्रपूगैः।**
**सद्यो हरेरनुचरावुरु बिभ्यतस्तत्पादग्रहावपततामतिकातरेण॥ ३५॥**

तेषामिति। शापस्त्वङ्गीकृतो ग्लानिहेतुर्न भवतीति तदङ्गीकारार्थं ततोऽधिकं मा वदन्त्विति तेषां पदयोः पतितौ। इत्यमुना पूर्वोक्तप्रकारेण तेषामीरितमवधार्य, तदुक्तश्चाऽर्थो ब्रह्मदण्ड इति निश्चित्य, अस्त्रपूगैश्चाऽनिवार्यं मत्वा, हरेरनुचरावपि तेषां पदयोरपतताम्। तत्रापि पादग्रहौ, तेषां पादान् गृहीत्वा तत्र पतितावित्यर्थः। सद्य इति। विलम्बे पुनः शापो भगवद्दण्डो वा भवेदिति। माया वा ततो निर्गतेति हरेरनुचराविति भगवदभिप्रायाभिज्ञौ, स्थानान्तरे गमनमत्वरिष्टमिति। ■ हि सर्वदा हरिः, अन्यत्र दुःखहर्ता कोऽपि नास्तीति। तेषां वा मनसि जातं दुःखं दूरीकर्तुं तथा कृतवन्तौ, यत एतयोः स्वामी हरिः। किञ्च उरु बिभ्यतः, अधिकं च भयं प्राप्तवन्तौ, श्रुत्यर्थस्तदेव जात इति। अतिकातरेणेति तेषां दयोत्पादनार्थं स्वस्य दैन्यं ज्ञापितवन्तौ॥ ३५॥

प्रकाशः।

वाशिष्ठरामायणोक्तशापपदिदानीमपि भवेत्।

× तद्धामित्यत्र। प्रकृष्टमिति। प्रकर्षम्, कल्याणमिति यावत्। चतुर्थीतृतीये इति। वामिति चतुर्थी, मन्दधीभ्यामिति तृतीया। वाक्यशेषस्तु ताभ्यामेवेत्यादिना व्याख्यात एव।

१ स्थापितवन्तौ क. घ. ङ. च.

एवं चरणयोः पतित्वा एकं प्रार्थयतः—

**भूयादघोनि भगवद्भिरकारि दण्डो यो नौ हरेत सुरहेलनमप्यशेषम् ।**
**मा वोऽनुतापकलया भगवत्स्मृतिघ्नो मोहो भवेदिह तु नौ व्रजतोरधोऽधः॥३६॥**

* भूयादघोनीति । अघोनि पापसहिते भगवद्भिर्योदण्डः कृतः, स भूयात् । तथा कथने हेतुः—यो दण्डो नौ आवयोः सुरहेलनं भगवदवज्ञाम्, भगवद्दैवतावज्ञां च । अशेषं सर्वमेव हरेत । यदि तद्वचः शापो नाऽङ्गीकृतः स्यात्, तदा वरमपि न प्रयच्छेयुरिति तदङ्गीकरणम् । प्रार्थनामाह—मा वोऽनुतापकलयेति । वो युष्माकं योऽनुतापः, वृथैव शापो दत्त इति; तस्य कलया लेशेन नौ आवयोरधोधो व्रजतोरपि मोहो मा भवतु । कामक्रोधलोभैर्नरक एव भवति, न संसारः; मोहेन च संसारो भवत्यतस्तत्प्रार्थनमुचित मेव । जायमानोऽपि मोह आवश्यकत्वात् तत्तज्जन्मनि भगवत्स्मृतिघ्नो मा भवेत्, किन्तु जायमानमप्य-ज्ञानं मोहात्मकं भगवत्स्मरणमेव संपादयतु । तु पुनरिह भगवति मोहो भवतु, भगवद्वैराग्यं मा भवत्विति । 'व्रजतम्' इति भगवद्वाक्यात् फलं शीघ्रमेव भविष्यतीति ज्ञापितम् । तथा स्मरणमपि भवत्विति प्रार्थ-नायां भावः । अधोध इति दैन्यं ज्ञापितम् । दैत्याद्राक्षसा निकृष्टाः, तेभ्योऽपि मनुष्या इति; राक्षसा-नामपि देवयोनित्वात् ॥ ३६ ॥

एवं प्रार्थितेऽपि प्रसादे, अङ्गीकारेण दत्तेऽपि, साक्षाददानं पश्चात्तापव्याकुलानामुचितमेव, विवेकेन सर्वमतिरोधो वा । एवं सति सर्वनिर्द्धारार्थं भगवानागत इत्याह—

**एवं तदैव भगवानरविन्दनाभः स्वानां विबुध्य सदतिक्रममार्यहृद्यः ।**
**तस्मिन्ययौ परमहंसमहामुनीनामन्वेषणीयचरणौ चलयन्सहश्रीः ॥ ३७ ॥**

एवं तदैवेति । एवं सति तदैव भगवान् विबुध्य तस्मिन् स्थाने ययाविति सम्बन्धः । तदैवेति न ज्ञापनापेक्षा । तत्र हेतुः—भगवानिति । तर्हि पूर्वमेव कथं न प्रतीकारं कृतवानित्याशङ्क्याऽऽह—अर-विन्दनाभ इति । सृष्टिजनकोऽयम्, यतः कमलनाभः । अतः पूर्वं न कृतवानित्यर्थः । तत्रैवं संदेहः—किं भगवता मुनीनामपराधो बुद्धः, आहोस्वित्सेवकयोरिति; उभयत्र युक्तीनां सम्भवात् । तत्र निर्द्धारार्थमाह—स्वानां विबुध्य सदतिक्रममिति । स्वसेवकानामेवाऽपराधः, यतः सतामतिक्रमः कृत इति । अनेन प्रथमापराधस्तयोरिति सूचितम् । लोकेऽपि यः प्रथममपराध्यति स दण्ड्यः । ननु तेषामेव कथं नापराध. ? यदप्रष्ट्वैव प्रविष्टा इति । तत्राऽऽह—आर्यहृद्य इति । आर्याः सन्मार्गवर्तिनो मर्यादायां श्रेष्ठाः, ते हृद्या यस्य । अतो भगवदन्तःकरणे ते रोचन्त इति तेषामागमनं नाऽपराधः । आर्याणां हृद्यो वा । अतोऽप्यागमनं तेषामुचितमेव । तस्मिन् स्थाने ययौ, उभयोः कृतिसमर्थनार्थम् । यत् सेवकाभ्यां निवारितास्ते पुनरन्तः प्रवेशयितुं न युक्ता इति स्वयमेव तत्र गतः, न त्वाकारितास्ते । न वा पश्चात्ते समानीताः, सत्कृता वा । तेषामपि चरणारविन्ददर्शनाकाङ्क्षा वर्तत इति चरणावेव चालयंस्तत्र गतः । एवं सत्युभयेषां खेदो भवेत् ।

प्रकाशः

* भूयादित्यत्र । भगवदवज्ञामित्यादौ भगवत्पदं सनकादिपरं बोध्यम्, तेषु मूले 'भगवद्भिः' इति भगवत्पदप्रयोगात् । भगवत्परं वा भवतु, 'ब्राह्मणाः प्रभवो दैवम्', इति वाक्यात् ।

१ दा ख. प.

सेवकानामुचित एव खेद , मुनीनामपि, **परमहंसमहामुनीनामन्वेषणीयौ** तौ चरणाविति । परमहंसाश्च ते महामुनयश्च । परमहंसा इत्यनेन धर्मनिष्कर्ष उक्त , **महामुनीनामिति** ज्ञानोत्कर्ष । उभयोत्कृष्टा विशिष्टस्यैव भगवतश्चरणान्वेषिणो भवन्ति, काण्डद्वयार्थस्य सिद्धत्वात्, भक्तिरेवाशिष्यत इति । **चलयन्निति** चालयन्नित्यर्थ । **सहश्रीः** लक्ष्मीसहित । तयाऽपि सहागमन तथा, तस्या स्थित्या ह्यनवसरत्वमिति । सा पुनर्बहिरप्यानीता, तेन सेवकाना खेदः । अनवसरबोधान्मुनीनाम् । × लक्ष्म्या संतोषार्थमिति केचित् । कदाचित् लक्ष्म्या गर्वे जाते, तन्निवृत्त्यर्थं लोकान्तर परिकल्प्य, तत्र जयविजयौ द्वारपालकौ निवेश्य, स्वय प्रविष्टस्ताभ्या लक्ष्म्या निरोध कारितवान् । तत प्रभृति तस्या मनसि तयोरस्वरसोऽस्तीति । केचित् पुनर्जन्मत्रयरूपकार्यार्थं शेषलक्ष्मीसुदर्शनान्यागतानीत्याहु ॥ ३७ ॥

समागत भगवन्त वर्णयति—त त्वागतमित्यादिपञ्चभिः । पूर्वं वैकुण्ठवर्णनाया भगवान्न वर्णित इति पञ्चविधाप्रवर्तकत्वेनाऽत्र वर्णित । **समागमक्रियायुक्तम्, समागमनहेतुकम्** । **समागत्य स्थित चाऽपि, दृष्टम्, नतमिति क्रमः** ॥ १ ॥ तत्र समागच्छन्तं वर्णयति—

**तं त्वागतं प्रतिहृतौपयिकं स्वपुम्भिस्तेऽचक्षताऽक्षविषयं स्वसमाधिभाग्यम् ।**
**हंसश्रियोर्व्यजनयोः शिववायुलोलच्छुभ्रातपत्रशशिकेसरशीकराम्बुम् ॥ ३८ ॥**

* **तं त्वागतमिति** । तं भगवन्तम् । सेवकवन्न भवतीति तुशब्द । **आगतमिति** दृष्टिपर्यन्त शीघ्रमेव समागतम् । **स्वपुम्भि** स्वसेवकै **प्रतिहृत**मग्रे स्थापित **गमनौपयिक** पादुकादि यस्य । तयोश्चरणपतितत्वात् ते मुनय एवाऽचक्षत । ते पूर्वमपि तथैव हृदये दृश्यते, तथापीदानी **मक्षविषयमचक्षत** । स हि स्वेच्छया अचक्षुर्विषयोऽपि चक्षुर्विषयो जात । तेषा प्रत्यभिज्ञामाह—**स्वसमाधिभाग्यमिति** । स्वस्य समाधि भजत इति, समाधेर्वा भाग्यम् । कदाचित्समाधौ एवभूतो भगवानाविर्भवति, तदा समाधेर्भाग्य भवतीति । एव समाधावपि दुर्लभ इदानीं चक्षुर्विषयो जात इति तेषा भाग्यम् । समागमश्रमाभावाय छत्रेण चामराभ्या च सहित वर्णयति । हसस्येव श्रीर्ययो । उभावपि श्वेतौ चामरौ रत्नदण्डौ अग्रे नम्रौ नम्रपुच्छाविव भासेते । तयोर्व्यजनयोर्य शिवो वायुः, तेन लोलच्छुभ्र यदातपत्र छत्रम्, स एव शशी अमृतस्रावी चन्द्र , तस्य केसरा अमृतबिन्दुयुक्तकिरणा इव परितो बद्धा मुक्तामाला । तद्गता मुक्ता एव वायुना लोला शीकराम्बुप्राया भवन्ति । शीकरा अल्पकणा । वायुना भगवन्तमस्पृशन्त्यत शीकराम्बुत्वम् । अत्राम्बुपद शैत्यसूचनार्थम् । सर्वत्रैव शीकरा बहुजलप्राया जाता इति वाऽम्बुपदम् । केसरपदेन सौरभ्य लक्षितम् । मान्द्यशैत्ये स्पष्टे । शशित्वात् तापहारित्व सिद्धम् । अम्बुत्वात्तृषाऽपि । आतपत्रत्वादेव छाया । हसत्वात्क्षीराजनकत्वम् । कल्याणो वायुरित्युत्कृष्टसर्वगुणो वायुरत्र निरूपित । अत एव व्यजनयो संबन्धी उक्तः, अन्यथा महाभूतो वायुश्चालनेनाऽभिव्यक्तो भवेत् । स च चालनादिधर्मसहित इति न निसर्गत शीतल ॥ ३८ ॥

---

प्रकाशः ।

× एव वदेत्यत्र । लक्ष्म्या इत्यादिनोक्त मतद्वय टीकाकारान्तराणाम्, न श्रीधरस्येति बोध्यम् । 'श्रीमानित्य निष्कामान्यपि विभूतिभि पूरयित्वा क्षमापयितुम्' इति श्रीधरीये व्याख्यानात् ।

* त त्वेत्यत्र । कारिकायाम् । हेतुकमिति । त्वार्थ च ।

एवमागच्छन्तं वर्णयित्वा तस्याऽऽगमनहेतुरूपं वर्णयति—

**कृत्स्नप्रसादसुमुखं स्पृहणीयधाम स्नेहावलोककलया हृदि संस्पृशन्तम्।**
**श्यामे पृथावुरसि शोभितया श्रिया स्वश्चूडामणिं सुभगयन्तमिवाऽऽत्मधिष्ण्यम् ३९**

* कृत्स्नप्रसादसुमुखमिति। भगवतो वैकुण्ठे स्थितिः, वैकुण्ठनिर्माणम्, विवादस्थाने समागमनं च सर्वेषामुपकारार्थे। ब्रह्माण्डे यदि वैकुण्ठस्थानं न भवेत्, तदा कुत्र गत्वा ब्रह्मादयः कार्यं निवेदयेयुः; यदि वा तत्र भगवान् न तिष्ठेत्, तदा निवेदिते कार्ये कथमवतरेत्; यदि वा तत्र भगवान् नागच्छेत्, तदा कथं सर्वसमाधानं भवेदिति। अतः संपूर्णा एव ब्रह्माण्डे ये वर्तन्ते, तेषां प्रसादार्थं सुमुखम्। अनेन भगवदागमनं कस्याऽपि नाऽपकारि, मुनीनां जयविजययोश्च। अङ्गमित्यस्य सर्वाणि विशेषणानि। स्पृहणीयधाम। स्पृहणीयं धाम तेजो यस्य। दीपादिकान्तिः सर्वेषां न स्पृहणीया, नाऽपि सर्वदा; इदं त्वानन्दरूपमिति स्पृहणीयत्वम्। धामपदं कान्त्यैवाऽऽनन्दजनकमिति। अनेन पर्यवसानविचाराभावेऽपि सर्वेषां प्रसादहेतुर्भवतीत्युक्तम्। किञ्च, स्नेहावलोककलया हृदि संस्पृशन्तमिति। कालान्तरे फलदानं दूरे तिष्ठतु, इदानीमेव स्नेहपूर्वकं यदवलोकनं करोति, तस्याऽवलोकनस्यैकदेशेनाऽपि भावितेन भगवान् हृदये निविशति। कलया सह वा हृदि सम्यक् स्पृशन्तम्। अनेन सर्वेषां हृदये तापापनोदो ज्ञानजननं च सूचितम्। एवं विशेषणत्रयेण कार्यतो बहिरन्तश्च सर्वसुखदायि भगवदङ्गमित्युक्तम्। एवमङ्गमात्रस्यैव गुणानुक्त्वा आभरणानामुपयोगमाह—श्यामे पृथाविति। श्यामवर्णे स्थूले वक्षःस्थले, कषपाषाणे सुवर्णरेखेव, श्रीवत्से या लक्ष्मीस्तया कृत्वा स्वश्चूडामणिं वैकुण्ठं सुभगयन्तं सौभाग्ययुक्तं कुर्वन्तम्। आत्मधिष्ण्यं स्वनिवासस्थानम्। भगवान् यत् श्रीवत्सलक्षणं स्वस्याऽसाधारणं रूपं गृहीत्वा तिष्ठति, तद्वैकुण्ठशोभार्थम्; अन्यथा तादृशं रूपं किमर्थं गृह्णीयात्? सर्वस्याऽपि जगतः शोभा स्वर्गः, तस्यापि मुकुटमणिर्वैकुण्ठः, तस्याऽपि शोभा वक्षःस्थलस्थितलक्ष्म्या। अनेन लोकवत् स्थानादिसौन्दर्येण भगवत्सौन्दर्यं न, किन्तु भगवत एव सर्वं सुन्दरं भवतीति निरूप्यते। वैकुण्ठस्य शोभां कुतो जनयतीत्याकाङ्क्षायामाह—आत्मधिष्ण्यमिति। इवेत्यनेन नैतावदेव प्रयोजनम्, किन्त्वन्यदप्यस्तीति सूचितम्। श्रिया विना न कापि शोभा। सा च चञ्चलेति तस्या रमणार्थं श्यामं शृङ्गाररूपम्, स्थूलमालिङ्गनयोग्यम्, तस्याः स्वानन्दत्वादुरःस्थलमासनं कृतम्। हृदये हि सर्वस्य सुखम्, सर्वमेव भगवद्धृदये वर्तत इति सर्वस्याऽपि सुखमपि जनयति। इदमपि वचनमात्रम्, वस्तुतस्तु ब्रह्माण्डमध्ये आनन्दोऽभिव्यक्तस्तिष्ठति भगवद्रूपः, तेन सर्वं सुखितमिति। एवं श्रीवत्सस्य प्रयोजनमुक्तम्॥ ३९॥

पीताम्बरादीनां प्रयोजनमाह—

**पीतांशुके पृथुनितम्बिनि विस्फुरन्त्या काञ्च्याऽलिभिर्विरुतया वनमालया च।**
**वल्गुप्रकोष्ठवलयं विनतासुतांसे विन्यस्तहस्तमितरेण धुनानमब्जम्॥ ४०॥**

---

प्रकाशः।

* कृत्स्नेत्यत्र। अङ्गविशेषणपक्षे संस्पृशन्तमित्यादौ पुंस्त्वमार्षम्। अङ्गपदं वा प्रेमादिपदवत् पुंनपुंसकयोरिति बोध्यम्। उपयोगमिति। मदर्शनस्य प्रयोजनम्। एवमग्रे विनियोगादिशब्देऽपि बोध्यम्।

पीतांशुक इति। पीतमंशुकं यस्य, एतादृशे स्थूलनितम्बयुक्ते कटितटे, पीताम्बरोपरि विस्फुरन्त्या काञ्च्या, भ्रमरैर्विशेषेण विरुतया वनमालया च आत्मधिष्ण्यं सुभगयन्तमिति संबन्धः। आत्मनः स्वस्य पुरुषोत्तमस्य धिष्ण्यं जगद्रूपं वा। पीतमम्बरं वेदः, तद्भूमौ भक्तं यज्ञादिद्वारा हृदयादिशुद्धिं संपाद्य, आत्मनामात्मनो वा धिष्ण्यत्वं, धिष्ण्यमन्तःकरणादिकं वा शोधयति। नितम्बा हिमालयादिसमीपभूमयः, ते पृथवः सर्वफलजनकत्वात् कर्मभूमिरूपाः। तद्यदि भगवानाधिदैविके रूपे पीताम्बरं स्थापयति तदैवाऽत्र वेदः प्रचरति, तदैव च भगवतोऽधिष्ठानं सर्वेषां हृदयं भवति। तत्र विस्फुरन्ती या काञ्ची काञ्चननिर्मितं दाम उपनिषदर्थरूपम्, तया सुतरामेव महतां हृदयमधिष्ठानं भवति। विस्फुरन्त्येति योगादिसहितया। यद्येतादृशी ब्रह्मविद्या न भवेत्, तदा कुत्राऽपि भगवत्स्थितिर्न भवेदिति। वनमालया च भगवद्गुणकीर्त्तनरूपया। अलयो भ्रमरा मृत्युरहिताः षड्गुणयुक्ता भगवद्भक्तास्तेषां गुणानां वक्तारः, सत्कीर्तितभगवद्गुणव्यतिरेकेणाऽपि भगवान् न हृदये तिष्ठति। अतो मूले पीताम्बरकाञ्चीदामवनमालानां धारणे भूमौ मार्गत्रयं प्रसिद्धं तिष्ठतीत्यर्थः। चकाराद्भगवत्कृपया च उपवीतादिरूपया। एवं त्रयाणां विनियोगमुक्त्वा वलयादित्रयस्य विनियोगमाह—वल्गुप्रकोष्ठे वलयो यस्य। चत्वारो भगवद्धस्ताश्चतुःपुरुषार्थरूपाः, तत्र तत्र क्रियास्तत्तत्साधका हस्तरूपाः, तेषां शोभा भगवतश्चतुर्मूर्त्तेर्ज्ञाने भवति। वलयाः तज्ज्ञानात्मकाः, ते चेत्तत्र न प्रतिष्ठिताः, तदा न कोऽपि पुरुषार्थः सिध्येदिति पुरुषार्थसिद्ध्यर्थं वलयोपयोगः। गरुडो हि कालात्मा, स भगवत्पराक्रमेण प्रतिरुद्धः, अन्यथा भक्तानपि भक्षयेत्। विशेषेण नता या भगवन्माया, तस्याः पुत्रो गरुडः कालः। सैव श्रद्धेति वैष्णवतन्त्रे। तस्यांऽसे स्कन्धे, प्राणिनामदृष्टे प्रवाहे वा, विन्यस्तो हस्तो येन। इतरेणेति वचनात् भक्तानामर्थे एको व्यापारः, लोकानां भ्रामणार्थे चाऽपर इति। तदाह—इतरेण धुनानमब्जमिति। इतरेणेति विशेषतो भगवत्संबन्धरहितानेव मोहयतीति ज्ञापितम्। अब्जं जगदात्मकं कमलम्, भगवच्छब्दार्थं वा लीलाकमलमितरेषु कम्पयति ४०

[1]कुण्डलादित्रयस्य विनियोगमाह—

**विद्युत्क्षिपन्मकरकुण्डलमण्डनार्हगण्डस्थलोन्नसमुखं मणिमत्किरीटम्।**
**दोर्दण्डषण्डविवरे हरता परार्घ्यहारेण कन्धरगतेन च कौस्तुभेन ॥ ४१ ॥**

विद्युत्क्षिपदिति। विद्युतमपि क्षिपती ये मकराकृते कुण्डले, तयोर्मण्डनमर्हति यद्गण्डस्थलम्, ऊर्ध्वा नासिका च; ताभ्यां युक्तं मुखं यस्य। मणियुक्तं किरीटं यस्येति च। शिरो द्विधा वर्णितम्, वृत्तरूपं कोशस्थानरूपं च। साङ्ख्ययोगौ कुण्डले, विद्युन्मृत्युः, कपोलद्वयं च प्रेमप्रपत्ती। साङ्ख्ययोगौ तयोरक्रम, वैतृष्ण्ये भगवत्स्मरणे चोपयुज्येते। तौ चेन्मृत्युनिवारकौ भवतः, तदैवाऽस्मिन् शास्त्रे उपयुक्तौ। मकरो हि जलग्राहः प्राकृतं शरीरादिकं ग्रसति, तथाऽभिमानं शरीरं च साङ्ख्ययोगौ ग्रसतः। ताभ्यां कृतमण्डनस्याऽप्राकृतरूपस्य योग्यं भवति गण्डस्थलम्। तादृश एव भक्तिप्रपत्ती उत्पद्येते। यतः सर्वदोषाभावो नासिका, सा चेदूर्ध्वा भवति, तदा भक्तिमार्गः शोभते। औपनिषदं ज्ञानं शिरः, तत् साध्यं पारमेष्ठ्यं वा। तदपि मणियुक्तकिरीटयुक्तम्, मणिस्तत्र भगवत्स्थाने गच्छन्तो भक्ताः। ते चेत्तत्र न गच्छेयुः, सत्यलोकस्य शोभैव न स्यात्। अतो मणिमत्किरीटं यन्मुकुटे स्थापयति, तेन भक्तास्तत्र प्रतिष्ठिता भवन्ति। हारस्य प्रयोजनमाह—दोर्दण्डषण्डविवरे हरता परार्घ्यहारेणेति। दोर्दण्डाश्चत्वारः, तेषां षण्डं समूहः।

१ एतदारभ्य इति न.

तस्य विवरे मध्ये हरता; हरतीति हरन्; मनोहरेण । त्रैलोक्यशोभां वा हरता, उपलक्षणे तृतीया । मुक्ताहारो मुक्ताः सर्वे हारा एवेति । ते हि स्वसंघातं हरन्ति, तेषां समूहो हारः । ते चाऽस्मिन्ब्रह्माण्डे परार्घ्याः । परं ब्रह्मण आयुः, तदर्घ्यं मूल्यं येषाम् । ब्रह्मण उत्पत्तिक्षणमारभ्य तत्समाप्तिपर्यन्तं ब्रह्माण्डान्तरे कृतपुण्यपुञ्जा ये, ते परार्घ्याः । परार्घ्येति पाठे अस्मिन्नेव ब्रह्माण्डे पूर्वोक्तन्यायेन परार्द्धमायुर्हरन्तीति परार्घ्याः । ते च ते हाराश्चेति । ते च भगवता महता प्रयत्नेन संरक्षितास्तेभ्यः परितो दोर्दण्डाः । अशक्यप्रतीकारदोषनिवृत्त्यर्थं पुनर्विवरे स्थापिताः । दीपो दण्डत्वम्, बाधकत्वेन समागतानां प्रहरणार्थम्, न तु रक्षामात्रार्थत्वम् । एवं हारमुक्त्वा कौस्तुभविनियोगमाह–कन्धरा कण्ठः, कं शिरो धारयतीति; सुखधारकश्च । तद्गतेन कौस्तुभेनाऽप्युपलक्षितः । कौ पृथिव्यां स्तोत्रेण भान्तीति ये भगवद्भक्ता मुक्ताश्चैत्यस्य तत्त्वात्मकाः, तेषां समूहः कौस्तुभम् । ते चाऽऽनन्दधारके योजिताः । कौस्तुभं चेद्भगवान्न स्थापयेत्, भक्तानां ब्रह्मानन्दो न स्यात् । चकारादन्यदपि कण्ठाभरणं लक्ष्यते, गोपिकादितत्स्वरूपम् । यथास्थितचकाराच्च वक्षस्थलेऽपि कौस्तुभस्य स्थितिर्बोध्यते । तदा गोपिकादीनामन्येषां वा भक्तानां जगत्प्रकाशकर्त्वं सिद्ध्यति ॥ ४१ ॥

एवमाभरणादीनां विनियोगमुक्त्वा अङ्गगतसौन्दर्यस्य माहात्म्यस्य च विनियोगमाह—

**अत्रोपसृष्टमिति चोत्स्मितमिन्दिरायाः स्वानां धिया विरचितं बहुसौष्ठवाढ्यम् ।**
**मह्यं भवस्य भवतां च भजन्तमङ्गं नेमुर्निरीक्ष्य नवितृप्तदृशो मुदा कैः ४२**

∸ अत्रोपसृष्टमिति । इन्दिराया उत्स्मितं सौन्दर्यगर्वोऽत्रोपसृष्टम्, वत्स इव स्तनपानार्थं भगवत्सौन्दर्यलेशप्राप्त्यर्थं प्रस्थापितमित्यर्थः । इतीति समाप्तिसूचकम्, हस्तेन दर्शयति च । त्रैलोक्यसौन्दर्यं चाऽत्रोपसृष्टम्, चकारात् ब्रह्माण्डात् परभूतमपि । स्वानां भक्तानां निश्चयात्मिकया बुद्ध्या च यद्विशेषेण रचितं ध्यानादिना परिकल्पितम् । सौन्दर्यजनितगर्वश्चोपसृष्टः । सौन्दर्यमेवोपसृष्टम्, गर्वो वा; ततोऽप्युत्कर्षं माप्स्यतीति । ये पुनर्लक्ष्म्या भगवति गर्वं प्रतिपादयन्ति, ते लक्ष्म्या दोषमेव कथयन्तीत्युपेक्षणीयाः । शङ्कितमपि तदिति मत्तैः कथमेवं धिया क्रियेत । भगवत्सौन्दर्यप्राकट्यस्याऽयं विनियोगः स्पष्ट एवोक्तः । संस्थानविशेषस्य विनियोगमाह–बहुसौष्ठवाढ्यमिति । सौष्ठवमवयवविन्यासप्रकारः । तच्च सौष्ठवं ब्रह्मणा निर्मितकमलादिषु वर्तते । तावत् ब्रह्मणा ज्ञायते तावत् सौष्ठवं तस्य । ततोऽप्यधिकं बहुसौष्ठवम्, तेन च तद्रूपमाढ्यम् । तादृशपि सौष्ठवं पूर्णमित्यर्थः । अनेन ब्रह्माण्डेऽस्मिन् ब्रह्मनिर्मितातिरिक्ता अपि भगवदीया बहवः पदार्था भवन्तीति सूचितम्, अन्यथा मूले तथा सौष्ठवं न प्रकाशितं स्यात् । एतावद्दूरे सृष्टिपदार्थानामुपयोग इति नाऽधिकं वर्ण्यते । मूलत्वख्यापनाय माहात्म्यमाह–मह्यं भवस्य भवतां च भजन्तमङ्गमिति । मह्यमिति षष्ठ्यर्थे चतुर्थी भगवत्स्वरूपस्य स्वफलत्वख्यापिका । राजसतामससात्त्विकानामाधिदैविकादिभेदभिन्नानां सर्वेषामेव भजनीयमङ्गम् । भजनीयमिति वक्तव्ये भजन्तमिति सफलं भजनं निरूपयति, 'ये यथा मां प्रपद्यन्ते' इति वाक्यात् । भजनीयमिति पाठस्तु स्पष्टः । सर्वेषां भजनीयरूपप्राकट्येन सर्वे एवाऽनीश्वरवादा निरस्ताः, अन्यथा आप्तमहाफलानां कथं भजनीयः स्यात् ? मोक्षोपयोगि-

---

प्रकाशः।

∸ अत्रोपसृष्टमित्यत्र । चकारस्य उत्स्मितपदेनाऽन्वयमभिप्रेत्याहुः–गर्वश्चोपसृष्ट इति । 'ये पुनरि-त्यादि । इदं न श्रीधरमतम्, 'इन्दिराया उत्स्मितम्, अहमेव सर्वसौन्दर्यनिधिरित्यहंकरणम्, अत्र भग-

पदार्थाश्चैते न भवन्ति, अधिकारिणां कथं भजनीयः स्यात्? सृष्टौ च कथनं विरुध्येत, नित्यं च ब्रह्मादीनां भगवद्भजनम्; अतो मतान्तरव्यावृत्त्यर्थमेव भगवत्प्राकट्यमिति सर्वेषां भगवद्भजनं सूचयति। तेन सनकादयो भगवन्तं दृष्ट्वा तथात्वं ज्ञातवन्त इति निरीक्ष्य नेमुरित्युक्तम्। सर्वे विशेषास्तेषां दृष्टौ स्फुरिता इति नमनं कृतवन्तः। नमने प्राप्तं दोषं वारयति—नावितृप्तदृश इति। न विशेषेण तृप्ता दृशो येषाम्। नमस्कारस्य दर्शनप्रतिबन्धकत्वात् बाह्ये तेषां न रस इति नमस्कारो ज्ञापयेत्, तद्व्यावृत्त्यर्थमावितृप्तदृश इत्युक्तम्। ननु तथापि साधनात्फलमुत्कृष्टमिति दर्शनं परित्यज्य कथं नेमुस्तत्राऽऽह—मुदेति। सकृद्दर्शनेनैव पूर्ण आनन्दो गङ्गायां घट इव निमग्नः, अतो मुदैव नेमुः। मुदैव हि ते नामिताः, पूर्णानन्दाश्चरणयोः पतिता इत्यर्थः। तथा दृष्टिर्न तृप्तेति तेषां तुच्छत्वं निराकृतम्। कैः शिरोभिः। शिरसा नमस्कारो ब्रह्मविदां ब्रह्मत्वसूचकः ४२

एवं कृते भगवद्धर्माः प्रविशन्तीति ज्ञापनार्थं तेषु भगवद्धर्माः प्रविष्टा इत्याह—

**तस्याऽरविन्दनयनस्य पदारविन्दकिञ्जल्कमिश्रतुलसीमकरन्दवायुः।**
**अन्तर्गतः स्वविवरेण चकार तेषां संक्षोभमक्षरजुषामपि चित्ततन्वोः॥४३॥**

* तस्याऽरविन्दनयनस्येति। तेषां चित्ततन्वोः भगवच्चरणसंबन्धिवायुः संक्षोभं कृतवान्, तचाऽयुक्तम्, यतस्ते अक्षरोपासकाः। आत्मरूपब्रह्मोपासकास्ते देहेन्द्रियान्तःकरणधर्माध्यासरहिताः। अतस्तेषां न क्वापि क्षोभः। भक्तिरसस्तु नास्त्येव। तथापि भगवत्सान्निध्यात् भगवदीया धर्मा यथा महादोषं दूरीकुर्वन्ति तथाऽतिशयमप्यादधते। तत्र तेष्वतिशयाधाने संस्कारा उच्यन्ते—तस्यारविन्दनयनस्येति। स हि प्रसिद्धः सर्वानेव स्वापेक्षितान् भक्तान् करोति, तथैतेऽपि भगवदपेक्षिताः। अनेनेच्छयैव ते भक्ताः कृता इति ज्ञापितम्। किञ्च, अरविन्दनयनस्येति। कमलनयनस्य दृष्टचैव ते संस्कृता इति। अरविं धतीति रविव्यतिरक्तं खण्डयतीत्युपजीव्यातिरिक्तं धर्मं तेषामपि दूरीकरोतीति तेषां विरुद्धधर्मान् निवर्तयति। नयनं हि प्रापकम्, प्रापणरूपत्वात्। अतो दृष्टया बाधका धर्मा दूरी कृताः, प्रयोजकाश्च स्थापिता इत्युक्तम्। किञ्च, पदारविन्देति पादयोः स्पर्शस्तेषु वृत्तः। पद्यते ज्ञायते इति पदं ज्ञानात्मकम्, तत्स्पर्शे तेषां विशेषज्ञानमपि गतम्, वयमात्मविद एवेत्याग्रहो निवृत्त इत्यर्थः। तदप्यरविन्दं स्वप्रकाशातिरिक्तमात्मनि दूरीकरोतीति ज्ञानधर्मो निरूपितः। तस्य किञ्जल्काः केसराः, खण्डशो दोषनिवर्तकाः, तैरौषधैरिव मिश्रो यो भक्तिनिष्ठभक्तत्वापादकशरीरजनकरजोमिश्रो वायुर्घ्राणमार्गेणाऽन्तः प्रविष्टः (स) स्थूलशरीरनिरपेक्षमेव मध्ये शरीरमुत्पादयति। तदा चित्तदेहयोः पूर्वयोरंशतो ग्रहणत्यागकरणात्संक्षोभो युक्त एव। गन्धस्य हि द्वारं नासिका, अतस्तत्र गन्धस्य प्रतिबन्धो न जात। अयं च गन्ध आधिदैविक इति स्वशब्दप्रयोगः, तेषां सर्वेषामेव साधनस्य तुल्यत्वात्। अत एव चतुःसनोऽपि प्रह्लादो भक्तो जातः। जयविजयगता भक्तिश्चतुर्षु स्या-

प्रकाशः।

त्सौन्दर्यं उपसृष्टमस्तंगतम्' इति व्याख्यानात्। अतोऽन्यस्य बोध्यम्। मतान्तरव्यावृत्त्यर्थमिति। शिवभागवतशक्तिभागवतादिमतादिव्यावृत्त्यर्थम्।

* तस्येत्यत्र। ज्ञापितमिति। तस्येतिपदेन ज्ञापितम्। अरविन्देत्यस्य निरुक्तिमाहुः—अरविन्यतीत्यादि। उपजीव्यातिरिक्तं धर्ममिति। तेषामुपजीव्यः प्रकाशो ज्ञानात्मकः, तद्व्यतिरिक्तमित्यर्थः। आधिदैविक इति। 'घ्राणं च गन्धः' इति वाक्यात् घ्राणेन्द्रियात्मकः।

१ भगवत्प्राकट्यात् क. ख. घ ङ. २ ज्ञानमपि. ग, विशेषाज्ञानमपि. ख.

पितेत्यर्थः । ज्ञानं च तेषां ताभ्यां दत्तमिति ॥ ४३ ॥

ततो भक्तवचे प्रणामं कृतवन्त इत्याह—

**ते वा अमुष्य वदनासितपद्मकोशमुद्वीक्ष्य सुन्दरतराधरकुन्दहासम् ।**
**लब्धाशिषः पुनरवेक्ष्य तदीयमङ्घ्रिद्वन्द्वं नखारुणमणिश्रयणं निदध्युः ॥४४॥**

*ते वा इति । ते चत्वारोऽपि वै निश्चयेन भक्त्या व्याकुलिता भगवदीयमङ्घ्रिद्वन्द्वं निदध्युः। भक्तिर्हि भगवत्संबन्धं सर्वतः प्रापयितुं सकृदेव सर्वं देहेन्द्रियादि क्षोभयति । तत्र ज्ञानादिना न निर्वृतिः, अन्योन्यविरोधान्न समाधानम्, अतः केवलं सर्वसमाधानकर्तृभगवच्चरणारविन्दद्वन्द्वं निदध्युः । ध्यानात्पूर्वं तेषामनिर्वृतौ हेतुमाह—अमुष्येति । स्वस्य भक्तत्वमुत्पादितवतो वदनमेवाऽसितपद्मकोशो नलिकमलमुकुलम्, उद्वीक्ष्य, लब्धाशिषो भूत्वा, अनुरागदृष्टिं प्राप्य, पुनरवेक्ष्य; बहुधा नमस्काराः, बहुधा च मुखदर्शनम्, माहात्म्यज्ञानम्, स्वरूपसौन्दर्यं चाऽन्तःकरणं दृष्टिं च वशीचकार । जीवस्तु तदुभयानुरोधी पर्यायेण तयोः समाधानं कृतवाँस्तथापि तद्द्वयं न समाहितम्, उभयोरेकधासमाधानाभावादेकोपद्रव सिद्ध एव । असितपद्मकोशमित्यभूतोपमा । देशान्तरे तादृशकमलसम्भवः । ऊर्ध्ववीक्षणे नयनस्य हेतुत्वार्थं तथोक्तम् । तद्धि न सर्वकृष्णम् । रूपतो ज्ञानतश्चाऽस्य तथात्वं भविष्यतीति ख्यापनार्थं पद्मपदप्रयोगः । सजातीया जातीयपोषका इति, कोशपदेन तद्गतानां रक्षा सूचिता । उर्ध्ववीक्षणेन चरणयोः पतिता एव ते मुखारविन्दं पश्यन्तीत्युक्तम्। सुन्दरतरं यत् कुन्दपुष्पम्, तद्वद्धासो यस्य । इयमेव ह्याशीः। सुन्दरतरत्वेन पूर्वावस्थानिवारकमायामग्नत्वावधिपूर्वावस्थाकृतसुखनिवृत्त्यभाव उक्तः । तरप्प्रत्ययेन चाधिक्यमुक्तम्, ब्रह्मानन्दाद्भजनानन्दस्य महत्त्वात् । सुन्दरतरमधरं वा । तदा तत्र परमानन्दादाधिकरसो लोभात्मकः स्थापित इति तद्रसस्पर्शी हासो गोपिकानामिव सुखदः । तस्य सुन्दरतरत्वमानन्दमूर्तेरक्षरानन्दाद्भजनानन्दाच्च महानानन्द इति ज्ञापयति, अन्यथा केवलमोहोऽनिष्टहेतुः स्यात् । कुन्दपुष्पसाम्यता भौतिकरागव्यावृत्त्यर्था । मोहोऽपि भक्त्यर्थमेव न विपर्यार्थः । कुं पृथ्वीं द्यति खण्डयतीति कुन्दम् । एतादृशं प्रसादं प्राप्य पुनरवेक्षणं स्वहृदये भगवच्चरणारविन्दाविर्भावार्थम् । अत एव तदीयमङ्घ्रिद्वयमाविर्भावात् चित्ते निगृह्यत इति निदध्युः । द्वन्द्वपदमवताराभिप्रायम् । साकारब्रह्मवादे नाऽन्यथासिद्धिः स्यात् । तस्य चरणस्य भक्तिमार्गसिद्धस्य सर्वपुरुषार्थदातृत्वज्ञापनार्थम्—नखा एव ये अरुणमणयः, तेषामाश्रयणं यत्र । ते हि चिन्तामणिरूपा अरुणवर्णाः, अनुरागपूर्वकत्वात् । अनेन तेषां सर्वोऽपि मनोरथः पूर्ण इति सूचितम् ॥ ४४ ॥

---

प्रकाश-।

※ ते वा इत्यत्र । सकृदिति । एकवारम्, युगपदेवेत्यर्थः । तत्रेति । क्षोभे । समाधानमिति । पक्षपातः । हेतुत्वं व्युत्पादयितुं तन्नेत्रभगवन्मुखयोः समानं धर्ममाहु-—तद्धीत्यादि । तथा च, पोषणार्थमुद्वीक्षणमित्यर्थ । इयमिति । हासावगतप्रसादरूपा । सुन्दर(तर)त्वेनेति । हासस्य तथात्वेन । महादस्य ऊतिलीलोपयोगित्वेनैतेष्वधिकाराभावाद्वक्ष्यमाणव्याख्यानस्य प्रकृतानुपयुक्तत्वेऽपि स्वरूपविचारेणाहुः—सुन्दरतरमधरं वेति । अन्यथेति । तत्तदुपयोगिसौन्दर्यबाधे । अन्यथासिद्धिरिति । पुनरुक्तिः ।

---

१ निवृतिः. क. २ तेषामनिवृत्तौ. क. ३ इ F क. ख. ग. ङ.

एवं तेषां भक्तकृत्यमन्तरुक्त्वा स्तोत्रादिलक्षणं वाक्यमाहुः—

**पुंसां गतिं मृगयतामिह योगमार्गैर्ध्यानास्पदं बहु मतं नयनाभिरामम् ।**
**पौंस्नं वपुर्दर्शयानमनन्यसिद्धैरौत्पत्तिकैः समगृणन्युतमष्टभोगैः ॥ ४५ ॥**

× पुंसामिति । भगवति स्तुतिर्युक्तैव, न त्वसद्गुणारोपभूता । ननु ज्ञात्वा हि भगवद्गुणा वक्तव्याः, भक्तैरेव च ज्ञायन्ते गुणाः, एते च पूर्वं न भक्ता इति कथं गुणज्ञानमित्याशङ्क्य, भक्तत्वाभावेऽपि पूर्वमेते योगिनः, तत्र योगसिद्ध्यादिकं भगवता जातमिति, तेन मार्गेण तादृशं माहात्म्यं ज्ञायत इति वक्तुं योगोपयोगित्वेन भगवन्तं विशिनष्टि पञ्चभिर्विशेषणैः । योगे प्रथमं ध्येयं रूपम्, अन्ते च योगसिद्धिप्रदम्, मध्ये त्रीणि रूपाणि । निरन्तरध्यानेन तस्मिन्नादरः, तदा बहुमतं तद्भवति । ततो भगवत्साक्षात्कारः, तदा नयनाभिरामो भवति बहिर्दर्शनं दत्त्वा । अन्तरपि स्वदेहान्तर्हृदये प्रादेशमात्रं द्वितीयस्कन्धोक्तं पुरुषं पश्यति, तदा तदुक्तप्रकारेण फलं भवति । अवान्तरफलं चाऽणिमादिरूपं भवतीति तत्रैवोक्तम् । योगस्य बहुविधत्वात् तत्तत्फलदानार्थमिदमेव रूपं ध्यायत इति सर्वफलदातृत्वं तस्य ज्ञायत इति वक्तुम्, नानाविधगतिम्, मोक्षरूपां वा, मृगयतां पुंसां ध्यानास्पदमित्युक्तम् । पुरुषा एव योगिन इति पुंसामित्युक्तम् । बहुकालं योगं विधाय योगबलेन सार्वज्ञ्ये जाते प्राणिनां का गतिरित्यपेक्षायां तन्निश्चयार्थमपि भगवान् ध्यायत इति मृगयतामित्युक्तम् । पुरुषरूपमन्तर्यामिरूपमेव, साक्षात्फलसाधकत्वेन तस्यैवोक्तत्वात् । बहुभ्योऽणिमाद्यष्टैश्वर्यं प्रयच्छन्नपि स्वयं रिक्तो न भवतीति विज्ञापनार्थमनन्यसिद्धैरित्युक्तम् । भगवतोऽणिमादयो नाऽन्यत्र सिद्धाः, अतो दीयमाना अपि नाऽन्यत्र स्वतो गच्छन्ति, किन्त्वंशत एव । तत्र हेतुरौत्पत्तिकैरिति, न हि स्वाभाविका गच्छन्ति । अष्टभोगा अणिमादयः । मनसा सह षट् ज्ञानेन्द्रियसुखानि, गुह्यभोगौ वा अष्टभोगाः । अष्टभागैरित्यपि पाठे स एवार्थः । सम्यग्गृणनमग्रे स्पष्टीभविष्यति ॥ ४५ ॥

स्तोत्रमाहुः पञ्चभिः—

## कुमारा ऊचुः ।

**योऽन्तर्हितो हृदि गतोऽपि दुरात्मनां त्वं सोऽद्यैव नो नयनमूलमनन्त! राद्धः ।**
**यर्ह्येव कर्णविवरेण गुहां गतो नः पित्राऽनुवर्णितरहो[1] भवदुद्भवेन ॥ ४६ ॥**

*योऽन्तर्हित इति । योगे लोके तथा भक्तो भवान् विख्यातमङ्गलः । सर्वात्मना वयं दासा लब्धं तत्र च यत्फलम् । १ । एतावतैव तैः स्तोत्रं कृतं भक्त्याऽतिविह्वलैः । अपराधस्य करणाच्चाऽधिकं स्फुरितं हृदि । २ । तत्र प्रथमं भगवन्तं ब्रह्मत्वेन स्तुवन्तः शास्त्रार्थपरत्वं स्तुतिपरत्वं वा मा भवत्विति पूर्वदर्शनेन यो दृष्टः स एवाऽयमिति प्रत्यभिज्ञां वदन्तस्तस्याऽन्तर्यामित्वं समर्थयन्ति—योऽन्तर्हित इति । यस्त्वं दुरात्मनां हृदि गतोऽप्यन्तर्हितः, सोऽद्यैव नोऽस्माकं नयनमूलं नो राद्धो न सिद्धः; किन्तु यर्ह्येव कर्णविवरेण हृदयं गतः, तदैव परावृत्तचक्षुषा दृष्ट इति नयनमूलं तदैव राद्धः । ब्रह्म प्रकारद्वयेन निश्चीयते, शास्त्रतोऽनुभवतश्च । तत्र शास्त्रं दुष्टानां ब्रह्मसाक्षात्कारो न भवतीत्याह, न

प्रकाशः

× पुंसामित्यत्र । तत्रैवोक्तमित्यन्तं विशेषतात्पर्यकथनम्, तदग्रे व्याख्या ।

* योऽन्तर्हित इत्यत्र । कारिकायाम् । लोक इति । सर्वलोकवन्द्ये वैकुण्ठलोके । शास्त्रार्थपरत्वमिति । स्ववाक्यस्य शास्त्रार्थानुवादकत्वम् । समर्थयन्तीति । हृदिगतत्वकथनादिना समर्थयन्ति । शास्त्रतोऽनुभव-

१ ' रहो ' इति पाठो बहुषु पुस्तकेषूपलभ्यते ।

तु सतां साक्षात्कारो भवतीति, तथा सत्यनुवादकत्वं स्यात् । अत उपनिषदामात्मब्रह्मवाक्यरूपाणामनधिकार्यसाक्षात्कारविषयप्रतिपादकत्वम् । तदेव प्रथममत्राप्याह–**यस्त्वं दुरात्मनां हृद्गतोऽप्यन्तर्हित** इति । स त्वमेव । अनेन शास्त्रप्रतिपाद्यो भगवानेवेति निरूपितम् । स एव हृदये प्रकाशत इत्यनुभवमाह–**सोऽद्यैवेति** । बहिरिन्द्रियविषयत्वेनात्मत्वं स्यादितीदमप्यस्माकं चक्षुरात्मदर्शनाभ्यासवतामावृत्तमेवेति न बहिर्दर्शनमिति वक्तुं पूर्वदर्शनेन सह साजात्यं प्रतिपादयन्त आहुः–**अद्यैव नयनमूलं राद्ध** इति। एतद्दर्शनस्याऽप्रथमदर्शनत्वादनादर एव, प्रथमदर्शनस्यैव अनधिगतार्थज्ञानत्वेनाऽऽदरविषयत्वात् । भक्तिमार्गानुसारेणाऽप्यन्तर्भगवत्साक्षात्कारो जात इति वक्तुम्–**कर्णविवरेण गुहां गत** इत्युक्तम्, अन्यथा अन्तरेव तस्याऽऽविर्भाव उक्तः स्यात् । ' प्रविष्टः कर्णरन्ध्रेण ' इति तु भगवच्छास्त्रम् । पूर्वमपि वयं भवदीया एव, अन्यथाऽस्मत्पिता ब्रह्मा भवद्रहस्यमस्मासु न वदेत् । न च ब्रह्मा शास्त्राधिकारं न जानातीति वक्तव्यम्, यतस्तव साक्षादौरसः पुत्रः । अतः ' **स्वानां भावसरोरुहम्** ' इति न विरोधः ॥ ४६ ॥

एवं भगवन्तं परब्रह्मत्वेन स्तुत्वा, आरोपेणैवं कथनमित्याशङ्कां व्यावर्तयन्ति—

**तं त्वा विदाम भगवन्परमात्मतत्त्वं सत्त्वेन संप्रति रतिं रचयन्तमेषाम् ।**
**यत्तेऽनुतापविदितैर्दृढभक्तियोगैरुद्ग्रन्थयो हृदि विदुर्मुनयो विरागाः ॥ ४७ ॥**

+ **तं त्वा विदामेति**। तमेव परब्रह्मरूपं त्वां विदामः। अन्यथा ज्ञात्वा अन्यथाकथनार्थमुत्प्रेक्षा भवति; तथा प्रकृते नाऽस्ति, किन्तु त्वां **परमात्मतत्त्वमेव** जानीमः । एते हि साङ्ख्यानुसारिणः, एतेषां तत्त्वपदप्रयोगः सर्वत्र । तत्त्वं सहजं रूपम् । तत्र तत्त्वेष्वात्माऽप्येकं तत्त्वम् । तत्र तेषामप्यात्मनस्त्रैविध्यम्। अस्मदादिजीवा अंशभावाः, तेऽप्यात्मान इत्युच्यन्ते । यश्च प्रकृत्यधिष्ठाता मुख्यः, सोऽप्युच्यते पञ्चविंशतितत्त्वेषु परः श्रेष्ठः । ततोऽप्युत्तमोऽसङ्गोदासीनः परमात्मा, स एव प्राप्य इति तं त्वां जानीम इत्य-

---

प्रकाशः ।

तथेति ।' तं त्वौपनिषदम् ' इति, ' मनसैवाऽनुद्रष्टव्यम् ' इति श्रुतेस्तथेत्यर्थः । शास्त्रमिति । ' न संदृशे तिष्ठति रूपमस्य' 'न चक्षुषा पश्यति कश्चनैनम्' इति, ' न तं विदाथ ' इति, ' नाऽयमात्मा बलहीनेन लभ्यः' इत्यादिश्रुतिरूपम् । ननु तर्हि 'तमक्रतुं पश्य(तं)(ति वीत)शोकः'इत्यादिश्रुतीनां का गतिरित्यत आहुः–न तु सतामित्यादि । तथा सतामित्यादि । तथा तत्र ' धातुः प्रसादात् ' इति ' यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्' इति साधनान्तरस्य श्रुत्यन्तरे कथनात् तत्रापि न सत्त्वमात्रेण साक्षात्कारकथनमित्यर्थः। ननु को दोषः सत्त्वमात्रेण साक्षात्काराङ्गीकार इत्यत आहुः–तथा सतीत्यादि । अनुवादकत्वमिति ।'आत्मा वा रे द्रष्टव्यः' 'मनसैवा(नु)द्रष्टव्यम्' इत्यादीनां तथात्वम्। ननु स्वभावगोचरत्वप्रतिपादने कथं नाऽनुवादक(त्व)मित्यत आहुः–इदमित्यादि। इदमिति। परोक्षेण प्रतीयमानम् । तथा चाऽत्रापि साधनद्वारकस्यैवाऽनुभवस्य कथनात्र श्रुतीनामनुवादकत्वमित्यर्थः। तदिदं सूचयन्ति–एतस्येत्यादिना । नन्वनुग्रहं विना आवृत्तचक्षुष्ट्वमपि नेदृग्दर्शनप्रयोजक(त्व)मित्यत आहुः–भक्तीत्यादि। अन्यथेति । अनुग्रहसहकारित्वस्याऽविवक्षितत्वे । नन्वेवं कथनेन कथं भक्तिमार्गानुसारावगम इत्याहुः–प्रविष्ट इत्यादि । तथा च, भगवच्छास्त्रानुसाराच्चदवगम इत्यर्थः ।

+ तं त्वा विदामेत्यत्र एते हि सांख्यानुसारिण इति । हंसगीतायां तथा सिद्धत्वात्तथा ।

र्थः । ननु तस्य स्वप्रकाशत्वमात्मवृत्तिवेद्यत्वं वा सम्भवति, न तु चक्षुर्विषयत्वमित्याशङ्क्य तन्मतानुसारेण परिदृश्यमानत्वं समर्थयन्ति—सत्त्वेन सम्प्रति रतिं रचयन्तमेषामिति । इदानीं वैकुण्ठे स्थितानामेषां भक्ता-नां प्रीत्युत्पादनार्थं शुद्धं सत्त्वं पुरुषरूपं कृत्वा तिष्ठसीत्यर्थः । असङ्गोदासीन एव स्वभक्तानुरोधेन तथा करोति, अन्यथा तस्य फलत्वं शास्त्रार्थत्वं च न स्यात् । किञ्च, यदि भगवान् सत्त्वाविर्भावं न कुर्यात्, तदा ज्ञानमपि न सिद्ध्येदित्याह—यत्तेऽनुतापविदितैरिति । यदा जीवात्मा सञ्चरन् बहुकालं बहून् क्ले-शान् प्राप्नोति, तदा भगवतः कृपा उत्पद्यते, अथ स्वानन्दानुभवयोग्यं क्लेशं प्राप्नोतीति । स क्लेशो भ-गवतेव जात इति कृपानुतापरूपेण निरूप्यते, अन्यथा लौकिका योगप्रकारा लौकिकबुद्धिगम्या न भ-वन्तीति भगवत्कृपयैव तादृशयोगमार्गाणां परिज्ञानम् । त एव दृढा भवन्ति, भक्तिप्रधानाश्च । भक्तिमार्गे सिद्धयोगा वा । भगवतः सत्त्वाविर्भाव एवैतद्भवति । किञ्च, उद्ग्रन्थयोऽपि कृपयैव भवन्ति । अहङ्का-रग्रन्थिः रजस्तमोभ्यां दृढो भवति, तद्भगवत्सत्त्वप्राकट्येनैव शिथिलो भवतीति । किञ्च, मुनयोऽपि तेनैव भवन्ति, विरागाश्च । भक्तियोगैश्च वेदनं न केवलैः, किन्तु भगवत्सत्त्वसहितैरेव । अतः सर्वोपकारित्वा-त्सत्त्वप्राकट्यमित्यर्थः ॥ ४७ ॥

एवं सन्मार्गानुसारेण सत्त्वरूपमेतदिति निरूप्य भक्तिमार्गानुसारेण तद्रूपं परमपुरुषार्थरूपमेवेत्याहुः —

**नाऽऽत्यन्तिकं विगणयन्त्यपि ते प्रसादं किन्त्वन्यदर्पितभयं भ्रुव उन्नयैस्ते ।**
**येऽङ्ग ! त्वदङ्घ्रिशरणा भवतः कथायाः कीर्तन्यतीर्थयशसः कुशला रसज्ञाः ४८**

+ नाऽऽत्यन्तिकमिति । हे अङ्ग ! ये त्वदङ्घ्रिशरणास्ते आत्यन्तिकमपि न विगणयन्ति । निवृत्त-सजातीयस्य संसारस्य पुनस्तत्राऽऽत्मन्यनुत्पाद इति मोक्ष आत्यन्तिक उच्यते । सोऽपि स्वकृतसाधन-साध्यो न भवति, किन्तु भगवान् प्रसन्नः सिद्धवत्कारेण तं प्रयच्छति । तादृशं ते न गृह्णन्तीति दूरापा-स्तम्, यतो विगणयन्त्यपि न । ननु भक्ता भगवत्प्रसादं कथं न गणयेयुः ? तत्राऽऽह—विगणयन्तीति । गणयन्ति, परं यथा भक्तिं विशेषाकारेण प्रसादत्वेन गणयन्ति, तथा आत्यन्तिकं न गणयन्तीत्यर्थः । अत्राऽगणना नाऽवगणना, किन्तु भगवत्प्रसादेषु गण्यमानेषु नान्तरीयकमिति तद्गणना न कुर्वन्ति । यत्र मोक्षस्यैवेषा व्यवस्था, तत्र किन्त्वन्यत् । तुशब्दो विषयासक्तिपक्षं व्यावर्त्तयति, अत्यन्तविषयासक्ता मोक्षं न मन्यन्त इति । ननु भक्त्युपयोगिपदार्था भगवत्सेवौपयिका भक्तैरपेक्ष्यन्त एव, कथं तेषामगणनेत्या-शङ्क्याऽऽह—अन्यदिति । अन्यद्भगवत्सेवानौपयिकम् । परम्परोपयोग्यपि न भवतीति विज्ञापनार्थं विशे-षणान्तरमाह—अर्पितभयमिति । भयं मृत्युः । भगवदीयपदार्थानामिदमेव निदर्शनम्, यद्भयजनकं न भव-ति, न वा नश्वरम् । तत्र हेतुः—भ्रुव उन्नयैस्त इति । ते भगवतो या भ्रूः स एव कालः, तस्योर्ध्वं न-यनं सर्वप्रतीकारातिक्रमेण कार्यसाधनम्, न हि भगवान् स्वाभिप्रेतान् विषयांस्तथा करोति । मोक्ष-स्याऽगणनायामुपपत्तिमाह—येऽङ्गेति । अङ्गेतिसम्बोधनं श्रवणादिभावे भगवतस्तुल्यतया कोमलसंबोधन-प्रतिपादकम्, तादृशभक्तेरङ्गभावाद्वा । अनेनाऽपि मोक्षस्याऽगणना निरूपिता, मोक्षदाता भगवानेव

प्रकाशः ।

+ नाऽऽत्यन्तिकमित्यत्र । किमात्यन्तिकमित्यपेक्षायां तत्स्वरूपमाहुः—निवृत्तेत्यादि । कथं न गणये-युरिति । 'अद्याप्तार्तिकरणाः' इत्यत्र प्रसादवैमुख्ये दोषस्य दर्शितत्वात्कथं न गणयेयुः । तेषामिति । मोक्षादन्येषाम् । अङ्गभावादिति । विषयत्वेनाङ्गभावात् । तेषामिति । भक्तानाम् ।—

यस्यामङ्गमिति । तेषां सर्वामेव सामग्री मोक्षादप्यधिकामाह । तत्र तेषामादौ गृहं निरूप्यते—त्वदङ्घ्रिशरणा इति । तयाङ्घ्रिद्वयमेव तेषां शरणम्, रक्षकं वा । एकत्राऽऽधारत्वम्, अपरत्र नियोज्यत्वम् । यच्चरणप्रसादलेशरूपाः सर्वे मोक्षादयः । भगवद्भक्तिः स्वतन्त्रा सप्तविधा, उत्तरोत्तराधिका च । तत्र प्रथमकक्षायामेव स्थिता न गणयन्ति, किमुत चरमकक्षायां स्थिता इति सूचयितुमाह—भवतः कथाया इति । ये कथाया रसज्ञाः । भगवदीयो रस उभयत्र प्रतिष्ठितः, रूपलीलायां नामलीलायां च । तत्र रूपलीलायामासक्ता भगवदनुरोधमपि कुर्वन्ति, अन्यथा सेवायाः कर्तुमशक्यत्वात् । अतोऽत्र कथारस एव निरूप्यते । कथारसोऽनुभवेनैव ज्ञायत इति रसज्ञा इत्युक्तम् । यथा कामादिषु हृदये विद्यमानेष्वेव सत्सु कामिन्यादिनामरूपरसा अनुभूयन्ते, नापि रसास्वादनव्यतिरेकेण किञ्चिदन्यत्तादृशं प्रमाणमस्ति, न वा अधिकारिणि कामाद्यभावे स रसः स्फुरति, रसानामधिकारिणं मत्येव स्फुरणनियमात् । अतो रसज्ञा एव निरूपिताः । स चाऽधिकारः शास्त्रानुभवाभ्यां प्रेमज्ञानाभ्यामेव भवति । रसान्तराविष्टचित्तानामत्र रसो नोत्पत्स्यत इति तद्व्यावृत्त्यर्थं भगवतो विशेषणमाह—कीर्तन्यतीर्थयशस इति । कथा हि यशःप्रतिपादिका । यशो हि, सर्वेषां भगवतश्च, श्रवणे रसजनकं भवति । स्वाभाविकोऽन्यो रसः प्रथमरसासक्तिं वारयतीत्यनुभवसिद्धम् । विशेषाकारेणाऽपि पूर्वरसनिवर्तकमिति विशेषणद्वयम्, कीर्तन्यं तीर्थरूपमिति । कीर्तनीयं तदेव भवति, कीर्तयितुर्येन रसो जनितो भवेत्, शास्त्रतो वाऽनुभवतो वा । अनुभवतो रसजनकावर्थकामौ, शास्त्रतो धर्ममोक्षौ । यत् सर्वानुगुणं तत् कीर्तनीयम्, तल्लोके नाऽस्तीति रसचतुष्टयप्रतिपादकं भगवद्यश एवेति कीर्तन्यपदेनोक्तम् । तीर्थं हि द्विविधम्, गुरुरूपं जलरूपं च; बाह्याभ्यन्तरोपकारजननभेदेन निरूपितम् । सर्वपुरुषार्थामीप्सुस्तदुभयं सेवते विशेषसाधनासमर्थः । स्थितिनिर्वाहके च ते । अतो मरणान्तं तत्र स्थितौ सुखेनैव पुरुषार्थो भवतीति । यत्र काऽपि पुरुषार्थे आसक्तो भगवद्यश एव शृणुयात् तीर्थरूपत्वादित्यर्थः । अत्र च स्वाभाविकमधिकारसूचकं विशेषणमाह—कुशला इति । नैपुण्यं बुद्धितीक्ष्णता चाऽपेक्ष्यत इत्यर्थः ॥ ४७ ॥

एवं भक्तिमार्गानुसारेण भगवन्तं स्तुत्वा स्वस्याऽपराधाभावाय स्वदोषं कीर्तयन्ति शपथप्रकारेण—

**कामं भवः स्ववृजिनैर्निरयेषु नः स्ताच्चेतोऽलिवद्यदि नु ते पदयो रमेत ।**
**वाचस्तु नस्तुलसिवद्यदि तेऽङ्घ्रिशोभाः पूर्येत ते गुणगणैर्यदि कर्णरन्ध्रः ॥ ४९ ॥**

कामं भव इति । जयविजयावस्माभिर्व्याजेन शप्ताविति पक्षो नाऽस्ति, किन्तु भगवद्दर्शनलालसतया; अन्यथाऽस्माकमनिष्टं भवत्वित्याहुः—कामं भव इति । स्ववृजिनैः स्वकृतपापैः । नियतदुःखदं पापं वृजिनमित्युच्यते, नियमेन दुःखदं वा । अतो यः परस्मै दुःखं प्रयच्छति, स हि स्वयमपि दुःखं प्राप्नो-

---

प्रकाशः ।

अपरत्रेति । रक्षकत्वे । सप्तविधेति । दास्यपर्यन्ता । एतेषां दास्यपर्यन्तमेवाऽऽगतत्वात् । तादृशमिति । अनुभवजनकम् । स इति । रसज्ञानुकूलः । स्वाभाविक इति । स्वभावत एव रसात्मकः । ते इति । उभे तीर्थे ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे पञ्चदशाध्यायविवरणं सम्पूर्णम् ।

रसि, अतो नोऽस्माकं भवो निरयेषु स्तात्, कामादीनां निरयद्वारत्वश्रवणात् । ' पापीयसस्त्रयः ' इति वाक्याच्चयोः कामादिदानम् । निरयेष्विति बहुवचनं न त्रित्वपरम्, देशादिविशेषे दानस्याऽधिकफल-जनकत्वात् । स्तादिति प्रार्थनायां लोट् । अङ्गीकारेऽनङ्गीकारे चोभयथा हेतुमाहु—चेतोऽलिवदिति । यथा भ्रमरो रसाविष्ट. कालमपि न गणयति, रात्रावपि तत्र स्थितो बद्धो भवति, तथा नश्चेतस्ते पदयोर्यदि रमेत, तदा देहस्य नरके स्थितिर्नोऽस्माकं बाधिका । किञ्च, तदेवाऽस्माकं निरये वासो भविष्यति, अलिवद्यदि पदयो रतिर्भवेत् । स हि मधुलोभेन पुष्पपीडामविगणय्य मधु पिबति, तथा वयमपि फलार्थिनश्चेत् दर्श-नार्थं द्वारपालयोरपराधं कृतवन्त', अन्यथा न भवत्वित्यर्थः । एवं मानसमुक्त्वा वाचनिकमाहुः—वाच-स्त्विवति । यदि नो वाचस्तुलसीवत् । स्वरूपगन्धादिरहिता अपि चरणारविन्दे शोभते यथा तुलसी, तथा वाचोऽपि पदचातुर्याद्यनपेक्षा भगवद्गुणप्रतिपादकत्वेनैव यदि शोभायुक्ताः स्युः, तदापि नरके वासो न बाधकः । तुशब्दः पूर्वपक्षं व्यावर्तयति, तेन न समुच्चयः । किञ्च, यथा तुलसी परप्रेरणया चरणाविष्टा भवति, एवमन्यप्रेरणया भगवद्गुणा अस्मद्वाचि निविष्टा भवेयुः, तदा नरको भवतु । यदा स्वत एव नि-विष्टाश्चेत्, तदा न भविष्यतीत्यर्थः । कायिकमाहु—पूर्येतेति । ते गुणसमूहैर्गुणानामवान्तरजातिभेदै-र्वा यदि कर्णरन्ध्रः पूर्येत, अलमिति मन्यते, सर्वदा वा पूरितमेव तिष्ठति, निरन्तरश्रवणेन यथाऽन्यत्र प्रविष्टोचथा; पूर्ववदित्यर्थः ॥ ४९ ॥

एवं स्वापराधे स्वयमेव स्वदण्डमनूद्य, समागतानां किमेतदेव फलमिति, शङ्कायां समागमनफलं जात-मित्याहुः—

**प्रादुश्चकर्थ यदिदं पुरुहूतरूपं तेनेश ! निर्वृतिमवापुरलं दृशो नः ।**
**तस्मा इदं भगवते नम इद्विधेम योऽनात्मनां दुरुदयो भगवान्प्रतीतः ५०**

प्रादुश्चकर्थेति । यदिदं रूपम्, हे पुरुहूत, प्रादुश्चकर्थ, तेन प्रादुर्भूतरूपेण दृशो निर्वृतिमवापुः । दृष्टीनां परमसंतोषो जात इत्यर्थः । एवं सुखदातुः प्रत्युपकारोऽपि नमस्कारेणैवेत्याहु—तस्मा इदमिति । तस्मै भगवते इदं नम इद्विधेम । न हि शास्त्रानुसारेण कर्तुं शक्यते, अतोऽनुकरणमात्रमिति इदित्यु-क्तम् । इदित्यव्ययमिवार्थे । पुरुहूतेति यज्ञात्मकता, पुरुभिर्हूयत इति, पुरुधा वा इन्द्रादिरूपेण हूयत इति । स्वार्थे प्रादुर्भाव आगमनमेव, अन्तःकरणे तु सुखं न जातमिति भावः । शापदानेन चित्ते ग्लान्युत्पत्तेः । न चैतत्फलमस्माभिरिति मन्तव्यम्, यतोऽनात्मनां भवान् दुरुदयः प्रतीतो दृष्टः । न विद्यते आत्मा येषाम् । यैरात्मैव नाशितो बहिर्मुखत्वादिभिस्तेषां दुरुदयः, दुःखार्थमनुदयो वा । इदमिति प्रदर्शयन्तो नमस्कुर्वन्ति । भगवानुपकारकर्तेत्याश्चर्यार्थम्—तस्मै भगवते इत्युक्तम् । प्रतीत इति प्रमाणम् ॥ ५० ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां
तृतीयस्कन्धे पञ्चदशाध्यायविवरणम् ।

---

# षोडशाऽध्यायविवरणम् ।

---

मुनिमानससंतोषस्ततः स्तोत्रं तथाविधम् ।
शापस्थापननिर्धारो षोडशे विनिरूप्यते ॥ १ ॥
भक्तानां तु कृतिः सत्या वाक् सत्या ब्रह्मवादिनाम् ।
मनो भगवतः सत्यमित्यध्यायविनिर्णयः ॥ २ ॥
मनसः प्रबलत्वाद्धि तेषां नान्यविरोधिता ।
पूर्वयोरनभिप्रेतं तृतीयादेव सुस्थिरात् ।
अतो भगवतः सर्गलीलायां दुर्बलार(ऽय)तिः ॥ ३ ॥

एवं पूर्वाध्याये अर्द्धतुष्टानां मुनीनां स्तोत्रमुक्तम् । तयोः पूर्णसंतोषार्थं भगवान् ब्राह्मणस्तोत्रं कृतवानित्याह—

## ब्रह्मोवाच ।

**इति तद्गृणतां तेषां मुनीनां योगधर्मिणाम् ।**
**प्रतिनन्द्य जगादेदं विकुण्ठनिलयो विभुः ॥ १ ॥**

इति तद्गृणतामिति । पूर्वोक्तप्रकारेण गृणतां तेषां भीतानां मुनीनां शास्त्रानुसारिणां वचनं प्रतिनन्द्य। तच्छब्देन वचनं प्राप्यते । प्रतिनन्दनं बहिरेव कृतम्, प्रतिनन्दनस्यैवाऽग्रे वक्ष्यमाणत्वात् । इदं वक्ष्यमाणं जगाद । ननु किमित्येवं जगाद, यतो भक्तानां दुःखं भवति । तत्राह—विकुण्ठनिलय इति । विकुण्ठस्थानं निलयो यस्य । गृहागतानां संतोषः कर्तव्य इति । नन्वेवं सति भक्ताः पीडिता भवेयुरित्याशङ्क्याऽऽह—विभुरिति । स्वभृत्यान् सर्वप्रकारेणापि मोचयितुं समर्थ इत्यर्थः ॥ १ ॥

प्रथमतः सेवकयोरपराधं समर्थयति—

---

प्रकाशः ।

अथ षोडशाध्यायं व्याख्यातुकामाः सङ्गतेः पूर्वनिरूपितत्वादध्यायार्थमाहुः—मुनिमानसेत्यादि । विनिरूप्यत इति । एव पदार्थसङ्घो लोभकृतभक्तिनाशशेषतया भगवदवतारमुक्तोत्तरत्वेः प्रयोजकभूतो निरूप्यत इत्यर्थः । तेन सिद्धमाहुः—भक्तानामित्यादि । सत्यत्वमत्र विषयाव्यभिचारित्वम् । तत्रापि भगवन्मनःसत्यत्वमेव मुख्यतया प्रतिपाद्यमित्याहुः—मनस इत्यादि । तेषां भक्तानां ब्रह्मवादिनां च मन[illegible] प्रबलत्वान्नान्यविरोधिता, न भगवन्मनोविरोधित्वम् । तत्र गमकम्—पूर्वयोरित्यादि । तथा च, [illegible] न्मनसो विषयाव्यभिचारित्वादेव देहेन्द्रियासुहीनानामपि तदानीं मनःप्रभृतिगम्बन्ध इति सर्गो[illegible] मस्येत्यर्थः। अत्र मूलस्थं गमकमाहुः—अत इत्यादि । अयतिः स्थितिर्[illegible] । तथा च, 'विप्र[illegible] हन्तुं नेच्छे' 'एतर्हि भगवांस्त्वद्विधित्सति' इति वाक्याभ्यां तथाऽवगम्यत इत्यर्थः ।

---

१ श्रीशुक उवाच । इति पाठो बहुषु पुस्तकेषूपलभ्यते		१ [illegible] । [illegible]

## श्रीभगवानुवाच ।

एतौ तौ पार्षदौ मह्यं जयो विजय एव च ।
कदर्थीकृत्य मां यद्वो बह्वक्रान्तामतिक्रमम् ॥ २ ॥

*एताविति । एतौ जयविजयौ, तौ पूर्वकल्पे मधुकैटभौ, मह्यं वरदानान्मदुत्सङ्गे मृताविति मया वैकुण्ठे समानीतौ । तदानीं बहूनां सेवकानां विद्यमानत्वात्सन्देहनिवृत्त्यर्थं नाम गृह्णाति—जयो विजय एव चेति । मदर्थं यो जयः स एकः जयनामा च । इन्द्रियादीनामन्यार्थं जयो ज्ञानमार्गे, मदर्थं जयो भक्तिमार्गे, अन्तःकरणजय इत्यर्थः । विविधो जयः इन्द्रियादीनां द्वितीयः । अत एवैतौ मम पार्षदौ, पर्षदि सभायां योग्यौ । यथाऽन्तःकरणे तज्जयो भगवत्स्थितौ हेतुर्भवति, तथा वैकुण्ठस्थितावेतावेव हेतुभूतौ । अत एवैतयोरुत्पत्तिविमर्शनेनाऽपराधकरणं युक्तमेव । न हि साक्षान्मनसा भगवान् गन्तुं शक्यः, किन्तु जयेनैव शक्य इति भगवत आनन्दरूपस्य सहजसुखत्वेन मनसः प्रवृत्तियोग्यत्वेऽपि जयप्रतिबन्धान्न भगवद्गमनम् । अत एव मां कदर्थीकृत्य, व्यवहारेऽपि ब्रह्मण्यत्वादिमद्धर्मान् दूरीकृत्य, यो युष्माकमतिक्रमः बह्वक्रान्ताम् ॥ २ ॥

अत एवैतयोर्दण्ड उचित इत्याह—

यस्त्वेतयोर्धृतो दण्डो भवद्भिर्मामनुव्रतैः ।
स एवाऽनुमतोऽस्माभिर्मुनयो ! देवहेलनात् ॥ ३ ॥

+ यस्त्वेतयोरिति । तुशब्दो दण्डान्तरव्यावृत्त्यर्थः । यो जन्मत्रयात्मको दण्डः, स एवाऽनुमतोऽस्माभिः । भवद्भिर्मया चेति, सेवकसहितेन मया वा । उभावपि दण्डनीयावित्येतयोरित्युक्तम् । अनुव्रताः सधर्माः । मत्कार्यं कृतमिति, ममाऽत्र महान् सन्तोष इति, तेषां कृत्यभिनन्दनम् । मुनय इति संबोधनं काकतालीयकरणव्यावृत्त्यर्थम्, अभिप्रायज्ञानार्थं वा । नन्वेतयोः कोऽपराधः ? द्वाररक्षा तु स्वधर्म इति । तत्राऽऽह—देवहेलनादिति । अस्मद्देवा ब्राह्मणाः, परोक्षदेवो यज्ञः, प्रत्यक्षदेवो यज्ञाधिष्ठाता विष्णुरिति । स एवेत्येवकारेण इदानीमन्यो न वक्तव्य इति सूचितम् ॥ ३ ॥

× एवमपराधदण्डौ निरूप्य, सेवकापराधं दूरीकृत्य, दण्डापराधं स्वापराधं च दूरीकरोति प्रार्थनया—

तद्वः प्रसादयाम्यद्य ब्रह्म दैवं परं हि मे ।

---

प्रकाशः।

* एतौ तावित्यत्र । इन्द्रियादीनामित्यादिना जयविजयस्वरूपनिरुक्त्या पूर्वदत्तस्वरूपं विवृतमस्तीति प्रतिभाति । तथा च, यथा विष्वक्सेनादयस्तन्त्राधात्मकाः, तथा युवामुक्तविधजयविजयात्मकौ भूयास्तामिति । अत एवेति । वरदानादेव । गन्तुमिति । प्राप्तुम् । अत एवेति । आगन्तुकानां मनःप्रतिबन्धादेव । अक्रान्ताम् । अकार्षीम् ।

+ यस्त्वित्यत्र । देवहेलनादित्यस्य ब्राह्मणयज्ञविष्णूनां हेलनादित्यर्थो बोध्य इत्येतदर्थमाहुः—अस्मद्देत्यादि ।

× तद्व इत्यत्र । दण्डापराधमिति । दण्डकरणापराधम् । अत्र विवक्षितस्य विष्णोः स्वरूपमाहुः—

**तद्धि ह्यात्मकृतं मन्ये यत्स्वपुम्भिरसत्कृतम् ॥ ४ ॥**

**तद्वः प्रसादयामीति** । युष्मानथ प्रसादयामि, यतोऽपराधो जात इति । अपराधो हि महत्यल्पस्य भवति, प्रकृते तु कथमपराध इति चेत्तत्राऽऽह–**ब्रह्म दैव परमिति** । मम दैवं देवता, ब्रह्म ब्राह्मणजाति । **परमिति** विष्ण्वपेक्षयाऽपि । आधिदैविको विष्णुर्देवो भवति, '**विष्णुर्वा अकामयत, पुण्य श्लोकं शृण्वीय न मा पापकीर्तिरागच्छेदिति । स एत विष्णवे श्रोणायै पुरोडाश त्रिकपाल निरवपत्**' इति श्रुते । तद्व्यावृत्त्यर्थमाह–**परमिति** । प्रत्यक्षश्रुतौ देवापेक्षया ब्राह्मणानामुत्कर्षविधानात्, '**एते वै देवाः प्रत्यक्ष यद्ब्राह्मणा इति**' । तदाह–हिशब्देन । ननु भवत कोऽपराधस्तत्राऽऽह–**तद्धि ह्यात्मकृत मन्य इति** । यत् **स्वपुम्भिः** स्वमेवकैरसत्कृतम्, तदहमात्मकृतमेव मन्ये । हि युक्तोऽयमर्थ, भृत्यकृता एव स्वामिकृता भवन्तीति, अन्यथा भृत्यापराधे स्वामिनो दण्डो न स्यात् । अनेन मयैव भवन्तो निवारिता इत्यप्युक्तम् । कृतमपि तद्युक्तमेव, द्वारपालकधर्मत्वात् । अत एव हि द्वयमन्योन्य हेतुभूतम् । यद्यप्येतादृशे लोक स्वाम्यपराध न मन्यते, तथाप्यह मन्ये; यतस्ते स्वपुरुषा ॥ ४ ॥

प्रसादश्चाऽत्र सर्वथा कर्तव्य, अन्यथा महदनिष्ट स्यादित्याह—

**यन्नामानि च गृह्णाति लोको भृत्ये कृतागसि ।**
**सोऽसाधुवादस्तत्कीर्तिं हन्ति त्वचमिवाऽऽमयः ॥ ५ ॥**

* **यन्नामानीति** । महतामपि लोकापवादाद्भय भवति । अत एव भृत्ये कृतागसि लोको यस्य स्वामिनो नाम गृह्णाति । **नामानीति**बहुवचन तस्य सर्वसम्बन्धेनाऽधिक्षेपार्थ सर्वाण्येव नामानि गृह्णाति, चकारात्तस्य गुणान् कर्माणि च निन्दार्थमुद्घाटयति । किमतो यद्येवमत आह–**सोऽसाधुवाद इति** । स लोकैरुच्चार्यमाणोऽसाधुवादः । असाधुत्वेन कीर्तनमपकीर्तिरिति यावत् । **तत्कीर्तिं हन्ति**, यद्विषयक स्वयम् । ननु विद्यमाना कीर्ति प्रसिद्धा कथ हन्यादित्याशङ्क्य दृष्टान्तेन समर्थयति–**हन्ति त्वचमिति** । **आमयो** रोग श्वित्रादि, यथा शरीरे विद्यमान एव तस्य त्वचं हन्ति, तस्य रूपमेव मर्दयति ॥ ५ ॥

नन्वीश्वरस्य सर्वनियन्तुर्दासानुदासस्य तुच्छस्याऽन्तःप्रवेशाभावे को वा अपराधः ? लोको हि तु, महाराजगृहे क्षुद्राणा प्रवेशो नाऽस्तीति, कथमपकीर्तिं वदेदित्याशङ्क्याऽऽह—

**यस्याऽमृतामलयशःश्रवणावगाहः सद्यः पुनाति जगदाश्वपचाद्विकुण्ठः ।**
**सोऽहं भवद्भ्य उपलब्धसुतीर्थकीर्तिश्छिन्द्यां स्वबाहुमपि वः प्रतिकूलवृत्तिम् ।६।**

**यस्येति** । उपजीव्यत्वाद्ब्राह्मणातिक्रमे ममाऽपकीर्ति घटेदेव । उपजीव्यत्व च मम कीर्तिस्तदधीनेति । तदेवाह–यस्य ममाऽमृतममलं यद्यशः, तस्य श्रवणावगाहः, आ श्वपचात् श्वपचं मर्यादीकृत्य, जगदेव

प्रकाश ।

आधिदैविक इत्यादि । तथा च यज्ञाधिष्ठाता भगवदंशो य स विष्णुरित्यर्थ । द्वयमिति । स्वकृतं स्वैरसत्कृत च ।

* यन्नामानीत्यत्र । तत्कीर्तिमित्यादि । यद्विषयकोऽपराधस्तद्विषयिणीं कीर्तिम् ।

१ तद्धीत्यात्मकृतम् क　२ सर्वसम्बन्धिन' क ग ह

सर्वं पुनाति। एवं जगत्पवित्रकीर्तित्वादहं विकुण्ठः कुण्ठरहित। कस्मिन्नप्यंशे दोषरहित इत्यर्थ। एतादृशोऽप्यहं पुरुषोत्तमो भवद्भ्य एवोपलब्धा सुतीर्थरूपा कीर्तिर्यस्य तादृश। यशः पराक्रमजन्यम्, कीर्तिः सदाचारजन्या। मम यशो जगति पावित्र्यमपि संपादयति, मन्नाम्ना दुष्टरूपपापनिग्रहात्। पराक्रमो हि दोषनिवारणरूपः। स चेद्दोष सहजोऽपि भवेत्सोऽपि मद्भयान्नश्येत्, अतश्चण्डालदेहे उत्पादकोऽपि दोषो नश्यति। अतो वैकुण्ठस्थान यशःपुञ्जेन विराजमानं मम सामर्थ्यसूचक वर्तते। तथापि कीर्तिं, साधवश्चेत् कीर्तयेयु, तदेव भवति। तेन कीर्त्या ये मम सेवकाः सदाचारा, ते मत्परायणा भवन्ति, निरन्तरं कीर्तनेन कृतार्थाश्च भवन्ति। अतस्तीर्थभूतकीर्तिसंपादकत्वेनोपजीव्या ब्राह्मणा। अतस्तेषु योऽपराध करोति, मद्बाहुरूप इन्द्रोऽपि, तमपि छिन्द्याम्। अत एव बृहस्पत्यतिक्रमे इन्द्रस्य महती पीडा सूचा राज्यभ्रंशादिरूपा। अतो युक्तमेव प्रसादनमित्यर्थ। कीर्तिर्लक्ष्मीस्तथा भोगस्त्रय विप्रप्रसादत। भृगोः कन्या यतो लक्ष्मीर्मुखं चाऽपि द्विजा मम ॥ १ ॥ ६ ॥

तत्र कीर्तिं निरूप्य ब्राह्मणाधीना लक्ष्मीं निरूपयति—

**यत्सेवया चरणपद्मपवित्ररेणुं सद्यः क्षताखिलमलं प्रतिलब्धशीलम्। न श्रीर्विरक्तमपि मां विजहाति यस्याः प्रेक्षालवार्थ इतरे नियमान्वहन्ति ७**

* यत्सेवयेति। स्त्रियः स्वभावतो दुष्टाश्चञ्चलाश्चाऽपि नित्यशः। आचारजनिता कीर्तिर्ब्राह्मणाश्च नियामकाः ॥ १ ॥ ईश्वरस्य तु याः पत्न्यस्ता विरक्ते न हि स्थिराः। भृगोराज्ञा ततः प्राप्य स्थिरा लक्ष्मीस्ततो मयि ॥ २ ॥ स्वोत्कर्षं वर्णयति ब्राह्मणोत्कर्षार्थम्। येषा ब्राह्मणाना सेवया चरणपद्मे पवित्रो रेणुर्यस्य। सेवाजनित संस्कारश्चरणे तिष्ठतीति चरणसंबन्धी य कश्चन रेणुः, स गङ्गावत्पवित्ररूपो भवति। रेणुरिति पाठे एतावद्भिन्नं वाक्यम्। द्वितीयान्तपाठे तु पूर्वार्द्धविशेषणान्युद्देश्यानि ब्राह्मणसेवासाध्यानि। विरक्तिरपि तत एव, विरक्तिविरोधी नियतो लक्ष्मीस्थितिलक्षणो धर्मोऽपि तत एव। लक्ष्म्या माहात्म्य ब्राह्मणमाहात्म्यार्थम्। सद्य क्षतमखिलाना मल येन। प्रतिलब्ध शील येन। यस्या लक्ष्म्याः प्रेक्षालवार्थे इतरे ब्रह्मादयो नियमान् कृच्छ्रादीन्, भगवद्व्रतानि वा, वहन्ति। लक्ष्मीकटाक्षकामनया तपः कुर्वन्तीत्यर्थ। पापनाशकत्वमपि ब्राह्मणसेवया, तद्वाक्यादेव नियमात्, सारस्वतकल्पे सर्वस्य ब्राह्मणाधीनत्वाच्च। वस्तुतस्त्वपहतपाप्मा भगवान्, अत एव लोकानामपि तत्संबन्धात् पापनाश, लक्ष्म्या अपि दोषनिवृत्तिः। प्रभूणा भोगाभिनिविष्टाना सदाचारपरिपालनलक्षण सुस्वभावो महापुरुषागमनेन महापुरुषसेवया संपद्यते, रागनिवृत्तिरपि तदनुरोधादेव। वस्तुतस्तु धर्मो भगवत्येव प्रतिष्ठित इति निर्दुष्टत्वाच्च रागानाचाराभाव ॥ ७ ॥

ब्राह्मणाधीन स्वस्य भोगमाह—

**नाऽहं तथाऽद्मि यजमानहविर्विताने श्च्योतद्घृतप्लुतमदन्हुतभुङ्मुखेन। यद्ब्राह्मणस्य मुखतश्चरतोऽनुघासं तुष्टस्य मय्यवहितैर्निजकर्मपाकैः॥ ८ ॥**

---

प्रकाशः

* यत्सेवयेत्यत्र। भगवान्स्वस्य स्वोत्कर्षं यद्वदति, तल्लोकदृष्ट्याऽनुचितमिवेत्याशङ्क्य तत्तात्पर्यमाह — स्त्रियादि। तथा चाऽत्रो न दोष इत्यर्थ।

— नाऽहं तथाद्मीति। स्वभावतोऽहं स्वमुखेनाऽनश्नन्नेव तिष्ठामि, 'अनश्नन्नन्यो अभिचाकशीति' इति श्रुतेः। गौणं च मम मुखद्वयम्, अग्निर्ब्राह्मणश्च कार्यरूपम्। तत्राऽन्यपेक्षयाऽपि ब्राह्मणो मम मुखं समीचीनम्। तदाह—नाऽहं तथा हुतभुङ्मुखेनाऽद्मि। तर्हि यज्ञाना वैफल्यं स्यादित्याशङ्क्याऽऽह—अद्म्यपि तथा नाऽद्मीति। अदनमपि वह्नेः सर्वभक्षकत्वात् काष्ठादिभक्षकत्वाच्च तस्य मुखत्वेऽनिष्टं भविष्यतीति न निषिध्यते, किन्तु निषेधेऽन्य एव हेतुरिति वक्तुमाह—यजमानहविर्वितानं श्च्योतद्घृतप्लुतमिति। यजमानपदेन सत्रनिषेधः, क्रूरत्वात्, बहुकर्तृकत्वाच्च, 'किमेते सत्रिणः' इति श्रुतेः, गणान्नत्वाच्च। हविर्यज्ञाः पश्वादिव्यतिरिक्ताः, अतो हविःशब्देन पश्वादिकं निषिध्यते। वितानं विस्तारयज्ञे। श्च्योतद्घृतप्लुतमिति। उभयतश्च्योतता घृतेन प्लुतं हविर्हुतमुद्मुखेनाऽदन्। अग्नौ प्रथमत आज्यश्च्योतनम्, पश्चाद्धविषः प्रक्षेपः, पुनः श्च्योतनमिति। तथापि हुतं भक्षयतीति, मन्त्रहोत्राद्यपेक्षित्वान्महता शब्देन हुतत्वाच्च तथा न भक्षणम्। ब्राह्मणमुखे तु नाऽयं दोषः। ब्राह्मणस्य विशेषणमनुग्रासं चरत इति। प्रतिकवलं भक्षयतः। तत्र पुरोनुवाक्यार्थे, याज्यार्थे, देवतार्थे, वषट्कारार्थेत्येकस्यामाहुत्यां चतुर्णां भागाः। अत्रैक एव प्रतिकवलं भक्षयति, स हि मुखत एव भक्षयति, मुखस्याऽपि मुखमिति विशिष्टम्। यथा मेर्विशेष उक्तः, तथा ब्राह्मणमपि विशिनष्टि—तुष्टस्येति। मयि तुष्टस्य, विषयव्यतिरेकेणाऽपि केवलं मय्येव प्राप्ते तुष्टस्य। अनाहितैः रहितैरपि निजकर्मपाकैस्तुष्टस्येति, कर्मवशात् प्राप्तेऽपि दुःखेऽनुद्विग्नस्य, भगवति वा समर्पितैः। कर्मसमर्पणं कृत्वा तुष्टस्येत्यर्थः ॥ ८ ॥

एवं स्वोपकारेण ब्राह्मणान् स्तुत्वा स्वरूपतोऽपि ते महान्त इत्याह—

**येषां बिभर्म्यहमखण्डविकुण्ठयोगमायाविभूतिरमलाङ्घ्रिरजः किरीटैः।**
**विप्रांस्तु को न विषहेत यदर्हणाम्भः सद्यः पुनाति सहचन्द्रललामलोकान्॥ ९**

* येषामिति। महत्त्वं हि महतामनुवृत्त्या। महत्त्वं हि द्विविधम्, लौकिकमलौकिकं च। लौकिकमुत्तरोत्तरभावापन्नं भगवति विश्रान्तम्। सर्वलोकप्रसिद्धो हि भगवान् पुरुषोत्तमः, वेदप्रसिद्धोऽपि। तेन ज्ञापनं ब्राह्मणाधीनमित्यलौकिकज्ञानं तेषां वर्तत इति ते भगवज्ज्ञापका इति। 'ये यथा मां प्रपद्यन्ते' इति न्यायेन तदनुवृत्तिमपि भगवान् करोति। तेषामवयवत्वात् तदुत्कर्षो न स्वापकर्षं करोति। अधिकारोऽपि स्वेनैव दत्त इति, स्वधर्म एव तत्र विहित इति, स्वोत्कर्ष एव। यथा च ते अलौकिकप्रकारेण भगवन्तमुत्कृष्टमाहुः, तथा भगवानपि लोके तेषामुत्कर्षमाह—येषाममलाङ्घ्रिरजः किरीटैरहं बिभर्मि। अग्रे ब्राह्मणवृन्दं गच्छेत् रजः उत्थापयति, तद्रजः किरीटेषु सम्बद्धं भवति। पावित्र्यं नामैकं भगवत्स्वरूपं सर्वपदार्थेषु सहजं तिष्ठति, सत्कारैराधीयते च। तत्र ब्राह्मणेषु पावित्र्यं पादयोः सहजम्, अतस्तेषां चरणरजोऽमलं भवति। किरीटैरिति सर्वदा धारणं सूचितम्। अवतारभेदैर्मूलरूपेण वा तथा करोतीति वा। अखण्डा विकुण्ठा योगमाया

प्रकाशः।

। नाहमित्यत्र। तस्येति। सर्वभक्षस्य लौकिकाग्नेः। कर्मसमर्पणमिति। तैत्तिरीयप्रश्नाष्टके 'यविष्ठो ह सायहव्य' इत्युपाख्यानोक्त यज्ञेय(?)प्रतिष्ठापनरूपं कर्मसमर्पणम्। 'कर्मशुद्धिसमर्पणम्' इत्युक्तं वा।

* येषामित्यत्र। महतामनुवृत्त्या कथं महत्त्वमित्यत उपा(पपा)दयन्ति—महत्त्वं हीत्यादि। नन्वनुवृत्तौ कथं न लौकिकमहत्त्वक्षतिरित्यत आहुः—येषामित्यादि। तथा करोतीति। नमनेन धरति।—

१ महत्त्व, क ग

विभूतिश्च यस्य । माययोत्पत्तिस्थितिप्रलयाः, विभूत्या सर्वसौख्यम् । एवं सति न कस्याऽप्यपेक्षा, सर्वैरपेक्षित एव भवति । न च तयोर्नित्यशक्त्योर्विच्छेदो वा कार्याक्षमता वा संभवति । येषामिति । नाऽन्यद्विप्रत्वात्तेषां गुणान्तरमपेक्ष्यत इति ज्ञापितम् । विप्रपदेन योगोऽपि सूचितः । विशेषेण पूरणं च तेषां सहजो धर्मः । ज्ञानभक्तिव्यतिरेकेण चिदानन्दौ न पूरितौ भवत इति ज्ञानभक्तिमन्त एव योगेन विप्रा इति निरूपितम् । एतदुभयसद्भावे नाऽन्यदपेक्षितमिति । संस्कारस्त्वानुषङ्गिकः । अनेनैवोपकारेण भगवता तथा क्रियते । तुशब्देन योगरहिता व्यावर्त्यन्ते । एतादृशान् ब्राह्मणान् को न विशेषेण सहेत ? को वा तद्भारं नाऽङ्गीकुर्यात् ? भारस्त्वतिक्रमादिरूप एव भवति, अतस्त्वन्यलभ्यत्वाद्विप्रापराध इति नोक्तम् । येषामतिक्रमो मया सह्यते, तत्र कथमन्यो न सहत इत्यर्थः । ननु मायाविभूत्योर्विद्यमानत्वेऽपि पावित्र्यस्याऽभावाद्भगवान् विप्रापराधं सहतु नाम, कथमन्येन सोढव्य इत्याशङ्क्याऽऽह—यदर्हणाम्भ इति । यस्य ममाऽर्हणाम्भश्चरणोदकं गङ्गा, सहचन्द्रललामलोकान् महादेवसहितांस्त्रीनपि लोकान् पुनाति । धर्मः कृतः कर्तारमेव पुनाति, संबद्धं वा; न तु मह(?)त्कालपर्यन्तम् । परम्परासंबद्धान्, दूरस्थान्, बहून्, सर्वतामसभेदसहितान् यत् पुनाति तदर्हणसंबन्धेनैवेति ज्ञापयति—अर्हणाम्भ इति । सद्य इति, 'सद्यः पुनाति गाङ्गेयम्' इति वाक्यात् । भगवतः कालनियामकत्वान्न तत्संबन्धिनां कालापेक्षा । चन्द्रललामेति सर्वदाहकत्वेन तामसी शक्तिः स्वीकृतेति तत्तापव्यावृत्त्यर्थममृतमयश्चन्द्रः स्थापितः । क्रियाजनितो दोषश्च न तेन निवर्तेत इति गङ्गा स्थापिता, अन्यथा तावान् दोषो नाऽन्येन निवर्तेत इति सूचयति । ९ ।

एवं ब्राह्मणातिक्रमः सोढव्य इत्युक्त्वा, ये न सहन्ते तेषां विपक्षे बाधकमाह—

**ये मे तनूर्द्विजवरान्दुहतीर्मदीया भूतान्यलब्धशरणानि च भेदबुद्ध्या ।**
**द्रक्ष्यन्त्यघक्षतदृशो ह्यहिमन्यवस्तान् गृध्रा रुषा मम कुषन्त्यधिदण्डनेतुः १०**

× ये मे तनूरिति । ये द्विजवरादीन् भेदबुद्ध्या द्रक्ष्यन्ति, तान् यमलोके गृध्रा कुषन्तीति संबन्धः । 'मृत्योः स मृत्युमाप्नोति' इति श्रुत्या क्वचिदपि भेददर्शने संसारो भवतीत्युक्तम् । एतादृशेषु भेददर्शनेन यमयातना भवतीत्यधिकमुच्यते, 'यदा ह्येवैषः' इति श्रुतेः । अत्र भेदो भगवद्भेदः, स्वभेदस्य पूर्वसिद्धत्वात् । ननु विद्यमाने भेदे लोकप्रसिद्धे द्रष्टणां को दोष इत्याशङ्क्याऽऽह—मे तनूरिति । यदि योगी महस्रं शरीराणि गृह्णाति, तथापि स एक एवः जीवस्यैकत्वात्, तथाऽनन्तमूर्तिः । तत्रापि यज्ञरूप आधिभौतिकशरीरद्वयं गृह्णाति, हविर्मन्त्रात्मकत्वाद्यागस्य । तत्र मन्त्रा ब्राह्मणेषु प्रतिष्ठिताः, हविर्धेनुषु । ते चेद्ब्राह्मणा गावश्चाऽन्ये भवेयुः, तदा तेभ्य उद्धृतेषु मन्त्रत्वं हविष्ट्वं च न स्यात्, भगवद्व्यतिरिक्तास्ते लौकिका एव भवन्तीति । अत एवाऽन्यैरुच्चारिता मन्त्रा एव न भवन्ति, लौकिकवाण्योच्चारितत्वात् । अतस्ते ममैव तनवः । तान्निर्दिशति—द्विजवरान् दुहतीरिति । यज्ञोपयोगित्वान्नाऽत्र विप्रपदम्, द्विजत्वमेवाऽत्रोपयोगि । जन्मोक्त-

---

प्रकाशः ।

संस्कार इति । उपनयनादिरूपः । अनेनेति । चिदानन्दपूरणरूपेण । येषामतिक्रम इति । यत्कृतोऽतिक्रमः सूचयतीति । गङ्गासम्बन्धेन सूचयति ।

× ये म इत्यत्र । स्वभेदस्येत्यादि । जीवभेदस्य । 'यथाऽग्नेः' इति, 'बहु स्याम्' इतीच्छया व्यु-

---

१ दोषम्. ब

र्थार्थ द्विजपदम्, कर्मोत्कर्षार्थे वरपदं च। दुहतीरिति कर्तरि दुहधातोरतृंप्रत्यय सहजदोहार्थ, तास्वेव हविष उत्पत्ते, अग्निहोत्रार्थमेव च वत्सोत्पत्ते। मदीया इति गवामधिको गुणः। मित्रत्वाद्भगवतोऽपि सर्व सखित्वात्तद्धर्मप्रतिष्ठया तदीयत्वम्। अथवा, मदीया इति भिन्न एव निर्देशः, भक्तिमार्गानुसारेण भगव द्भोगापयिकहविर्दोहकर्तृत्वात्। भूतान्यलब्धशरणानीति रक्षकत्वेन ज्ञानमार्गानुसारेण धर्मो निरूपितः। तत्रापि रक्षकत्व भगवन्निष्ठमिति भेदाभाव उचित एव। एव मार्गत्रयोपयोगिपदार्थान् ये मत्तो भिन्नान् जानन्ति, तेषा विशेषभयम्। ननु भगवत्त्वाज्ञानेऽपि, वस्तुतस्तेषा भगवत्त्वात्तद्दर्शने कथ नरकपातस्तत्रा ऽऽह—अघक्षतदृश इति। अघेन भेदजनितेन क्षता दृष्टिर्येषाम्। ब्रह्मवध इव भेदोऽप्यधर्महेतुः। अय वधो ज्ञानमयः, तथापि क्रियामयाद्विशिष्ट', मूलविषयत्वात्। दण्डोऽपि चक्षुष एव। ननु व्यवहारे भेदो ऽपेक्षित इति कथ तस्य दोषजनकत्वम्। तत्राऽऽह—अहिमन्यव इति। न व्यवहारमात्र निषिध्यते, किन्त्वन्त करणारूढदोषत्वेन। सर्पे स्वल्पोऽप्यपराधो न विस्मर्यत इति, यथान्ते च प्रयत्नं कुर्वन्ति, तथा हृदयेन चेद्दर्शन तदा दण्ड इत्यर्थ। गृध्रमुखे प्रविष्ट चक्षुर्न कदाचिदप्यावृत्त भवतीत्यनिर्मोक्ष सूचित। रुषेति चक्षुषो विद्यमानत्वादेवैतैर्भगवदपराध कृत इति चक्षुषि रोष। मम रुषा सहिता वा गृध्रा कुर्वन्तीति। तैर्जन्यते नाश एव, न तूपघातमात्रम्। अधिक दण्डान् नयतीत्यधिदण्डनेता यम। अल्प दण्डस्तु राजव्याध्यादिभिरेव क्रियत इति निरूपयति यमम्॥ १०॥

एव विपरीते बाधकमुक्त्वा सन्माननाया प्रसादमाह—

## ये ब्राह्मणान्मयि धिया क्षिपतोऽर्चयन्ति तुष्यद्धृदः स्मितसुधोक्षितपद्मवक्त्राः। वाण्याऽनुरागकलयाऽऽत्मजवद्गृणन्तः संबोधयन्त्यहमिवाऽहमुपाहृतस्तैः ११

ये ब्राह्मणानिति। क्षिपतोऽपि ब्राह्मणान् अर्चयन्ति, तैरहमेवोपाहृतः। सर्वपुरुषार्थरूपोऽहं तत्समीपे चेत् स्थित, सिद्धा एव सर्वे पुरुषार्था। तेषु बन्धुत्वेनाऽपकारभयात्, लोकापकीर्तिभयाद्वा, दम्भेन वा यद्यर्चयन्ति, तदा नेद फलम्। किन्तु मयि धिया भगवद्विषयकबुद्ध्या गच्छन्तीति। अथवा, मयि या बुद्धिरस्ति, ब्राह्मणा सर्वथा उपास्या इति, तादृशबुद्ध्या। क्षिपता गालीं प्रयच्छतोऽर्चयन्तीति विरोधप्रदर्शनेन नाऽयमर्थ कश्चित्सेत्स्यतीति भगवदुपाहृतेर्नाऽतिप्रसक्तेति सूचितम्। तत्रापि तुष्यद्धृदः। ते चेत् क्रोधमन्तरेव स्थापयेयु, तदा महदनिष्ट स्यादिति तेषा क्रोधस्य बहिर्निर्गमने महान्ममोपकारो जात इति ज्ञान हृदयतोषे हेतु। इदमतिमाहात्म्यज्ञाने भवति। किञ्च, स्मितेन सुधारूपेणोक्षित पद्मसदृश वक्त्र येषाम्। माहात्म्यज्ञाने विद्यमानेऽपि स्नेहेनैव दोषसहनम्। मन्दहासस्त्वन्त.क्षोभाधजननज्ञापक। तद्गतस्नेहरसस्तन्निष्पीडनेन प्रकटो भवतीति बालकवचसामाक्रोश परमसन्तोषहेतुर्भवतीति स्मितस्य सुधात्वम्। तस्याऽमृतत्वं स्वकार्य जनयतीति तदुक्षितवक्त्रत्वमुक्तम्। तथा सति वक्त्रमतिविकसितं भवतीति वर्णस्पर्शयोर्धर्मजनितयोरत्राऽऽविर्भाव इति ज्ञापनार्थं पद्मपदम्। एवमन्त करणकायिकसतोषमुक्त्वा वाचनिक सतोषमाह—वाण्येति। वाण्या अनुरागाः कला भवन्ति, चन्द्रमस इव वृद्धिहेतवः। एव

प्रकाश।

चरणेन प्रागेव सिद्धत्वात्। धर्म इति। हसपरमहसधर्म, तादृशानन्यगृहाश्रमत्वादिति। रक्षकत्वमिति। ज्ञानमार्गरक्षकत्वम्। दण्डोऽपीति। गृध्रकृतकुशन( कोपण )रूपो दण्ड।

१ तिग स घ ह च

कायवाङ्मनःप्रीति पुर एव भवतीति दृष्टान्तेन तथाकर्तृणा ब्रह्मभावो निरूपितः । अर्चनं कायिकद्रव्यं, गृणनं वाचा । सबोधयन्तीति व्यवहारार्थम्, सम्यक् बोधार्थं वा । आक्रोशेऽपि न तेषु वैषम्यं कदाचिदपीति सूचितम् । एतादृशाना दृष्टान्तोऽहमेव । ज्ञापनार्थमेवमुक्तम्, न तु स्वोत्कर्षार्थम् । यथा भृगवतिक्रमे मया कृतमित्यर्थ । अहमुपाहृत इति फलवाक्यं भिन्नम्, अतो न पौनरुक्त्यम् । तेषामुत्कर्षार्थमन्ते कीर्तनम् ॥ ११ ॥

एतन्निरूपणस्य प्रकृतोपयोगमाह—

**तन्मे स्वभर्तुरवसायमलक्षमाणौ युष्मद्व्यतिक्रमगतिं प्रतिपद्य सद्यः ।**
**भूयो ममान्तिकमितां तदनुग्रहो मे यत्कल्पतामचिरतो भृतयोर्विवासः १२**

* तन्मे स्वभर्तुरिति । यत एव ब्राह्मणाना स्वरूपम्, मया च तथा मन्यते । तदज्ञानात् तां युष्मद्व्यतिक्रमगतिं प्रतिपद्य भूयो ममाऽन्तिकमिताम् । अयं ममाऽनुग्रहो भक्तिरक्षार्थः । अत्र हेतुर्नाऽस्तीति ममैवाऽयमनुग्रह इत्युक्तम् । अधिकोऽप्यनुग्रहः कर्तव्य इति चेत्तत्राऽऽह—यत्कल्पतामिति । यस्मादनुग्रहात् भृतयोर्भृत्ययोः, भक्त्या पूरितयोर्वा । विवासः परदेशवास । अचिरतः कल्पताम्, शीघ्रमेव परिसमाप्यताम् । जन्ममरणक्लेशाभावाच्छापो विवासत्वेनैवोक्त । ममाऽन्तिकमिति पुनर्दासभाव प्राप्नुताम् । जीवानां तु त्रयो भावा उत्कर्षोत्कर्षहेतवः । जीवाः स्वभावतो दासा देहभावोऽधमस्ततः१ ब्रह्मभावः स्वतः श्रेष्ठस्तत्स्वभाव इह स्थिताः । देहभावस्तु तच्छापः स्वभावोऽनुग्रहः स्मृतः २ सायुज्ये ब्रह्मभावः स्यान्नाऽन्यथेति विनिश्चयः । सायुज्ययोग्यताकाले ब्रह्मभावो निरूप्यते ३ भगवानेव हि ब्रह्म नाऽन्यो भवितुमर्हति । एकं च ब्रह्म सर्वेषां तथात्वे न विरुद्ध्यते ४ भगवत्करणा-

प्रकाश ।

* तन्म इत्यत्र । ननु शापदूरीकरणे समर्थस्य भगवत तच्छापस्थापने पुन स्वदासत्वस्य तदनुग्रहत्वेन प्रार्थने च किं बीजमित्याकाङ्क्षाया तत्र भगवद्विचारितमाहु —जीवानामित्यादि । तुर्विशेषावधारणे । जीवाना त्रयो भावा अवस्थाविशेषाः । उत्कर्षोत्कर्षहेतवः। उत्तरोत्तरमुत्कर्षाधायकाः । तत्र जीवाः स्वभावतो दासाः, क्रीडार्थमुत्पादितत्वात् । ततो हेतोस्तेषा देहभावः । अधमो निकर्षावस्था । अतस्तद्रहितो दासभावो जीवानामुत्कर्षहेतुः पूर्वावस्थारूप । ब्रह्मभावः स्वतः श्रेष्ठ इति । स्वाभाविकाद्दासभावादुत्कृष्ट । इह वैकुण्ठे तत्स्वभावे स्थिताः केवलेन स्वरूपेण दासभूता स्थिता । तु पुन, तच्छापः सनकादिशापो देहभाव । तथा सति तत उत्कृष्टः स्वभावः केवलस्य दासभाव एवेति । स एवाऽनुग्रह इति । स्मृतो भगवता विचारित । ननु केवलदासत्वस्य देहभावेऽपि सत्त्वेनाऽप्रयोजकत्वाद्ब्रह्मभावसाहित्यमवश्यमपेक्षितम्, अत स एवोत्कृष्टतर कुतो न प्रार्थित इत्यत आहुः—सायुज्य इत्यादि । किमत्र गमकमित्यत आहु —सायुज्ययोग्यताकाल इत्यादि । बाधाभावो योग्यता । तथा चोत्कृष्टतमसायुज्यावस्थापूर्वकाले स निरूप्यते, अत स तदैव भवति । तच्च न दितिमितमत स न प्रार्थित इत्यर्थ । ननु सायुज्यदित्साभावेऽपि तेषा ब्रह्मभावावस्थासम्भवे को दोष इत्यत आहु.—भगवानित्यादि । विरुध्यत इति । ऐक्यं व्याकुप्येत। तत्र हेतु —लोके भगवत्करणात्। वैकुण्ठे भगवत्त्वस्य प्रकटनात्। असङ्गोदासीनताया ब्रह्मभावो न विरुद्धः, कार्याभावात् । भगवत्ताया तु विरुद्ध, कार्यकरणात् । अत ऐक्यव्याकोप एव दोष इत्यर्थः ।

१ कार्तार्थं ख २ स्वभावा विनिश्चयने । ग

श्लोके भावना दुर्बला मता । दासभावादतो नाऽन्यत् काम्यं भवति कस्यचित् ५ अतो हि भगवान् भर्ता जीवानामिति निश्चयः । अभिप्रायस्तु तस्याऽपि ब्रह्मभावमभीप्सुभिः ६ ब्राह्मणातिक्रमो नैव कर्तव्य इति निश्चयः । अतो दण्डस्तु सोढव्यो नो चेदग्रे फलं न तत् ७ एवं भगवता आपः स्थिरीकृतः ॥ १२ ॥

एवं भगवान् प्रसन्नो जात इति ज्ञात्वा गताधयो मुनयः सम्यक् स्तोत्रं कृतवन्त इति वक्तुम्, प्रथमं भगवद्वाक्येन तेषामाधिर्गत इत्याह–अथ तस्योशतीमितित्रिभिः—

## ब्रह्मोवाच ।

**अथ तस्योशतीं देवीमृषिकुल्यां सरस्वतीम् ।**
**नास्वाद्य मन्युदष्टानां तेषामात्माऽप्यतृप्यत ॥ १३ ॥**

* भगवतो वाक्यं शब्दार्थभेदेन चिन्तानिवारकम् । तत्र शब्देनैव निःसन्दिग्धं चिन्ता निवारिता, अर्थस्तु भगवद्वाक्यानां सर्वतोमुखत्वादनिर्द्धारित इति स्वरूपतो निर्द्धारितोऽपि फलतो न निर्द्धार इति सम्यक् चिन्तां न दूरीकृतवान् । तथापि दृष्टसामग्र्या बलवत्त्वात् सर्वमेवाऽन्तःकरणं चिन्तावत्त्वेऽपि निर्मलं जातमिति श्लोकत्रयम्, शब्दार्थसागरभेदात् । प्रथमं शब्देन तेषां सुखं जातमित्याह–अथेति । भिन्नप्रक्रमोऽर्थपर्यालोचनाभावाय । उशतीं कमनीयाम्, अनेन तस्या दुःखदूरीकर्तृत्वं रूपमुक्तम् । युक्त्यर्थं विशेषणान्तरमाह–ऋषिकुल्यामिति । ऋषिकुल्योम्याम् । ऋषयो हि मन्त्रद्रष्टारः, अलौकिकानुभावाश्च मन्त्राः; तत्र हितकर्त्री सतोऽप्यलौकिकानुभावा भवतीति स्वसामर्थ्याद्दुःखदूरीकर्तृत्वम् । किन्च–देवीमिति । द्योतकत्वात् कान्त्यर्थो भवति, काऽन्यथा हृदयप्रकाशिका भवति । अतोऽपि दुःखदूरीकरणम् । किञ्च –सरस्वतीमिति । सर इत्युदकनाम । आधिदैविकीति तदुदकममृतं भवति । तेषां हृदयं मन्युना दष्टं मृतप्रायम् । तदमृतेन जीव्यते, कान्त्या प्रकाश्यते, अलौकिकभावेन कार्यसमर्थं क्रियते, परमानन्दश्च प्राप्यत इति चत्वारि विशेषणानि । एतादृशीं सरस्वतीमास्वाद्याऽपि, स्थितानामात्मा नाऽतृप्यत, अलमिति नोक्तवान् । यद्यर्थोऽपि श्रुतं स्यात्, तदाऽर्थः पूर्ण इति इच्छा पूर्येत । स्वरूपतः श्रवणे तु आनन्देऽलंबुद्ध्यभावान्न निवर्तते । सर्पदष्टो हि मन्त्रेण जलं पाय्यते, न च स तृप्यति, विषज्वालाभूयस्त्वात् । आत्मनोऽपि दंशे सर्वाङ्गे ज्वाला जातेति त एव दष्टा निरूपिताः ॥ १३ ॥

प्रकाशः।

सर्वाहंग्रहोपासनादौ ब्रह्मभावभावना किमिति विधीयते, तत्राहुः–भावना दुर्बलेति । तत्र हेतुः–मतेति । न हि तदानीं ब्रह्मभावो भवति, किन्तु ब्रह्मभूतं मन्यते । अतः कार्यविरोधाभावात् फलस्य स्वा(य)त्तत्वसम्पादनाय विधीयते । तथा तावन्मात्रं भवतीति सा दासभावापेक्षया दुर्बला । अतो लोकस्थस्य कस्यापि दासभावादन्यत्काम्यं न भवति । अत एवं विचारणाद्धेतोः, हि निश्चयेन, जीवानां भगवान् भर्ता सर्वनिर्वाहक इति निश्चयः। तथा सति यो यो विचाराभिप्रायः सिद्धस्तमाहुः–अभिप्राय इति सार्धेन । तथा च, शापस्थापने दासत्वस्याऽनुग्रहत्वेन प्रार्थनं इदं बीजमित्यर्थः । तदेतदाहुः–एवमित्यादि ।

* अथेत्यत्र । निःसन्दिग्धमिति । भगवानस्मासु प्रसन्नो न वेति सन्देहराहित्यं यथा स्यात्तथा । न निर्वतत इति । इच्छा न निवर्तते ।

१ ब्रह्मेव उवाच । पा.　२ मरदष्टे ग. घ. ड. ।

एव शब्दत फलमुक्त्वा अर्थानुसन्धानेनाऽपि यज्जातं तदाह—

**सती व्यादाय शृण्वन्तो लघ्वीं गुर्वर्थगह्वराम् ।**
**विगाह्याऽगाधगम्भीरां न विदुस्तच्चिकीर्षितम् ॥ १४ ॥**

• सतीमिति । सा हि सन्मार्गप्रतिपादिका, अत समुदायार्थपरिज्ञानेन सुख जातमेव । **व्यादाय** श्रवणमपावृतकर्णरन्ध्रे श्रवणम् । लघ्वी सा स्वरूपत , तेनाऽऽलोचयितु शक्यत इति सुखदायिनी । एव विशेषणद्वयेनाऽर्थद्वाराऽपि सुखदातृत्व निरूपितम् । फलत साधनतश्च न सुखदातृत्व जातमित्याह—**गुर्वर्थगह्वरामगाधगम्भीरामिति** । अर्थो हि गम्भीर , पुरुषोत्तमस्य भगवतो हीनाना सेवकजीवाना च विपरीतधर्मप्रतिपादकत्वात् । श्रुतपदार्थाना श्रुतार्थापत्त्या निर्णय कृत्वा संदेहो दूरीकर्तव्य इति चेत्तत्राऽऽह—**अगाधगम्भीरामिति** । अगाधत्वाच्च तत्र श्रुतार्थापत्ति कल्प्यते । पदार्थाना तलस्पर्शे तत्कल्पना युक्ता । गम्भीरत्वाच्च मज्जनेनाऽपि तलस्पर्शो न सम्भवति । एतावता भगवान् किञ्चिद्गम्भीरमुक्तवानित्यध्यवसीयते। तथापि किमयमेव वदतीति तच्चिकीर्षित न विदु । विगाहनमन्त प्रवेश । विचार्याऽपि न विदुरित्यर्थः १४

एव वाक्य किञ्चिज्ज्ञात्वाऽपि भगवन्त दृष्ट्वा मुदिता सन्त स्तोत्र कृतवन्त इत्याह—

**ते योगमाययाऽऽरब्धपारमेष्ठ्यमहोदयम् ।**
**प्रोचुः प्राञ्जलयो विप्राः प्रहृष्टाः क्षुभितत्वचः ॥ १५ ॥**

त इति । योगमाया हि भगवद्वैभवयोग्यान् पदार्थान् सृजति । न ते प्राकृता , नाऽपि ब्रह्मसृष्टा , अत पारमेष्ठ्यापेक्षयापि महोदयरूपा । योगमायया आरब्धा पारमेष्ठ्यमहोदया यस्य । अत सामग्रीं दृष्ट्वा परमानन्दो बहुविधो भासत इति प्रहृष्टा जाता । स्वय विप्रा अपि, मनसाऽपि तादृशं नाकल्पितमिति, माहात्म्यज्ञानात् प्राञ्जलय । तद्दर्शनेनाऽन्त पूर्णानन्दो रोमकूपद्वारा निर्गच्छन् कुपिता त्वच कृतवान् । सा हि वायुदेवताका, वायोश्च संचारो नास्तीति कोप उचित एव । क्षुभितेति पाठेऽपि समानोऽर्थ १५

विरोधं परिहरन्त एव स्तोत्र कुर्वाणाः प्रथम विरोधमनुवदन्ति—

**मुनय ऊचुः ।**

**न वयं भगवन्विद्मस्तव देव ! चिकीर्षितम् ।**
**कृतो मेऽनुग्रहश्चेति यदध्यक्षः प्रभाषसे ॥ १६ ॥**

**न वयमिति** । विरुद्धार्थप्रतिपादकत्वे सति न विरोध , किन्तु मनसा तद्व्यवस्थाशक्तौ सत्याम् । मनो हि वाचो भर्ता, स चेत्प्रसुरविरोध सम्पादयति, किं दासीना विरोधेन । तदपि नास्तीति स्वानुभवेनाऽऽहुः—हे भगवन् , स एव तदनन्तर देव ! तव चिकीर्षित न विद्मः । ज्ञाने त्वभिप्राय कल्प्येत । अकल्पनाया हेतुभूतं विरोधमाह—कृतो मेऽनुग्रह इति । यस्त्वमध्यक्ष सर्वसाक्षी प्रभु , सेवकान् प्रति वदस्यनुग्रहः कृत इति तदर्थतो विरुद्धम् ॥ १६ ॥

विरोधान्तरमाह—

---

१ भगवद्योग्यान् । क रा ग छ   २ कुपित ऊ । पा

**ब्रह्मण्यस्य परं दैवं ब्राह्मणाः किल ते प्रभो ! ।**
**विप्राणां देवदेवानां भगवानात्मदैवतम् ॥ १७ ॥**

**ब्रह्मण्यस्येति** । त्वं तु ब्रह्मण्यः, ब्राह्मणानां हितः, तेषां सर्वपुरुषार्थसाधकत्वेन तदुपास्यः । अथापि ब्राह्मणाः किल ते परं दैवमिति प्रभाषसे । किलेति प्रसिद्धे । न हि तद्वाक्ये ब्राह्मणमुख्यत्वप्रतिपादके ' येषां बिभर्मि ' इत्यत्र सन्देहोऽस्ति । भागभेदेन तदुभयं संगच्छत इति पक्षं खण्डयति—**प्रभो** इति । सर्वसमर्थो भवान् केनाऽप्यंशेन ब्राह्मणापेक्षायुक्त इत्यर्थः । किञ्च, विप्राणाम्, देवानाम्, देवदेवानामपि भगवानात्मा दैवतं च । आवश्यक उपास्यश्च । आत्मनो वा दैवतम्, चिदंशानां भगवत्सेवकत्वात् ॥ १७ ॥

नन्वस्मदुक्तप्रकारेणैव वेदो वदतीति तथैव शास्त्रार्थोऽस्त्वित्याशङ्कयाऽऽहुः—

**त्वन्नः सनातनो धर्मो रक्ष्यते तनुभिस्त्वया ।**
**धर्मस्य परमो गुह्यो निर्विकल्पो भवान्मतः ॥ १८ ॥**

* **त्वन्न इति** । त्वमेव नः सनातनो धर्मः, यज्ञरूपत्वात्, ब्रह्मरूपत्वाच्च । ' यज्ञेन यज्ञमयजन्त देवाः ' ' अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् ' इति । त्वयैव तनुभिरवतारैः स्वधर्मो रक्ष्यते, ' यदा यदा हि धर्मस्य ' इति वाक्यात् । किञ्च, त्वं धर्मस्य परमो गुह्यः । धर्मस्याऽत्यन्तं गोप्यस्त्वमेव । धर्मो ह्यन्यगतो धर्मिणं गोपायति; यथा जलगतमौष्ण्यं वह्निं गोपायति, तथा जीवेष्वागतो धर्मो ब्रह्म गोपायति । स हि तस्यैव, क्रियाशक्तिरूपत्वात् । तस्य गोप्यो हि भक्तियोगोऽपि भवति, तथापि भगवान् परमो गुह्यः । तस्य ब्रह्मैव गुह्यमिति कथं भगवानित्याशङ्कयाऽऽह—भवानेव निर्विकल्पो मत इति । ' पूर्ववद्वा ' इति सिद्धान्तेन सर्वकल्पनाशून्यं ब्रह्म । तदेव पश्चात् धर्मरूपेणाऽऽविर्भूय तत्सहितं भगवानित्युच्यते । भगवतो वा एकं रूपं निर्विकल्पं ब्रह्म । उभयथाऽपि धर्मस्य परमो गुह्यः ॥ १८ ॥

ज्ञानस्याऽपि गुह्य इत्याह—

**तरन्ति ह्यञ्जसा मृत्युं निवृत्ता यदनुग्रहात् ।**
**योगिनः स भवान्किंस्विदनुगृह्येत यत्परैः ॥ १९ ॥**

**तरन्तीति** । निवृत्ताः परमहंसाः । यस्याऽनुग्रहं प्राप्य अञ्जसा मृत्युं तरन्ति । उभयतः कूलङ्कषा नदीव मृत्युः सर्वेषां मज्जनकर्ता, अतस्तस्य तरणमुक्तम् । योगिन इत्यधिकारिविशेषणमनुमहे, न तु तरणे योगो हेतुः । एतादृशो भवान् सर्ववेदरहस्यः किमन्यैरनुगृह्येत ? तत्रापि परैरप्रयोजकैः । गृहीत इत्य-

प्रकाशः

* त्वन्न इत्यत्र । धर्मस्य कथं भगवान् गोप्य इत्याकाङ्क्षायामुपपादयन्ति—धर्मो हीत्यादि । स हि तस्यैवेति । स धर्मः तस्य भगवत एव धर्मभूतः । धर्मत्वे हेतुः—क्रियेत्यादि । पूर्ववद्वेति । इदमधिकरणं साधनाध्यायद्वितीयपादे वर्तते । अर्थस्तूक्त एव । उभयव्यपदेशसूत्रानुसारेण मुख्यं सिद्धान्तमाहुः—भगवतो वेत्यादि ।

१ तव. पा. २ निर्विकारो. पा.

पि पाठे परैः कृत्वा यत्कर्म, किं किमर्थम्, स्विदिति निश्चये, अनुगृह्णीतः किमर्थमनुगृह्णीयात्। अन्यैः स्वस्य माहात्म्यं संपाद्य परानुग्रहं किमर्थं कुर्यादित्यर्थः। एतादृशस्याऽनुग्रहवचनं बाधितार्थमिति प्रतिभाति। सत्यवाक्यत्वाच्च तदपि न संगच्छते, अतोऽज्ञानमेव ॥ १९ ॥

किञ्च, ब्राह्मणकृपया लक्ष्मीः स्थिरेति वचनं सर्वथा बाधितार्थमिति प्रतिभातीत्याह—

**यं वै विभूतिरुपयात्यनुवेलमन्यैरर्थार्थिभिः स्वशिरसा धृतपादरेणुः ।**
**धन्यार्पिताङ्घ्रितुलसीनवदामधाम्नो लोकं मधुव्रतपतेरिव कामयाना ॥ २० ॥**

**यस्तां विविक्तचरितैरनुवर्तमानां नाऽत्याद्रियत्परमभागवतप्रसङ्गः ।**
**स त्वं द्विजानुपथपुण्यरजःपुनीतः श्रीवत्सलक्ष्म किमगा भगभाजनस्त्वम् ॥ २१ ॥**

× यं वै विभूतिरिति । विभूतिर्लक्ष्मी । यं भगवन्तमनुवेलमन्यैरर्थार्थिभिः शिरसा धृतपादरेणुरप्युपयाति सेवार्थं गच्छति । तत्रापि भक्तेव । तां च भवान् नात्याद्रियत्, स कथं द्विजानुपथपुण्यरजसा पुनीतः सन् श्रीवत्सलक्ष्म अगा इति श्लोकद्वयान्वयः। विप्रप्रसादात् लक्ष्म्याः स्थैर्यमिति पक्षो न संगच्छते, भक्त्यैव तस्याः स्थिरत्वात्। न च तस्या भक्तिर्ब्राह्मणसाध्या, भक्तौ ब्राह्मणानामपि भक्तत्वेनैवोपयोगात्। ब्रह्मभावानन्तरं भक्त्यधिकारात् ब्रह्मभावप्रापणार्थं तदपेक्षेति चेत्, तस्याः सिद्ध एव ब्रह्मभावः, 'मम योनिर्महद्ब्रह्म' इति वाक्यात्, ब्रह्मानन्दरूपत्वाच्च तच्छरीरस्य। अतः साक्षात्परम्परया वा तस्या भक्तौ ब्राह्मणानामनुपयोगात्, भक्त्यैव च स्थैर्याद्भगवद्वाक्यं चिन्त्यम्। किञ्च, ब्राह्मणा भिक्षुका अर्थार्थिनामिन्द्रादीनामुपसर्पकाः, ते च लक्ष्म्याश्चरणरेणूपासकाः। अत उपजीव्योपजीव्यत्वात् तस्याः कथं ब्राह्मणाधीनत्वम्? किञ्च, सा हि भोग्यभावमेव त्यक्तवती, तेन तस्याः फलत्वमेव नाऽस्ति। सा हि रसान्तरे प्रविष्टा, न हि भक्तिरसे कामरसः प्रविशति। भगवानपि 'ये यथा मां प्रपद्यन्ते' इति वाक्यात् भक्तत्वेनैव तां स्वीकरोति, यथा तुलसीम्। अतस्तस्या गुणा अपि नाऽपेक्ष्यन्ते। सा हि तुलसीमपि निर्गुणां बहु मन्यते, ततोऽपि हीनभावं च। भ्रमरा नानापुष्परसेष्वासक्ताः, तेऽपि यदि भक्तिमाहात्म्यात् तुलसीरस एव मकरन्दाभासेऽप्यासक्ताः, तदा मयाऽपि तथैव विधेयमिति भ्रमरलोकमेव कामयते। एवमपि सति लब्धपदा सा पुनः स्वभावं प्राप्स्यतीति भक्तत्वेऽपि तां नाऽत्याद्रियत्। तदपेक्षयाऽपि स्वभावत एव निर्दुष्टा भगवति लब्धपदा अपि हेत्वभावाच्च पूर्वावस्थां प्राप्नुवन्ति, ते परमभागवताः तेष्वेव प्रकृष्टः सङ्गः। एतादृशलक्ष्म्याः कथमसाधारणधर्मत्वम्? तत्रापि भवान् भगवच्छब्दार्थः। नित्या

---

प्रकाशः।

× यं वै विभूतिरित्यत्र। तस्या भक्तिरिति। लक्ष्म्या भगवति भक्तिः। भक्तौ ब्राह्मणानामपीत्यादि। 'विप्राद् द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखात् श्वपचं वरिष्ठम्' इति, 'किं पुनर्ब्राह्मणाः पुण्याः' इत्यादिवाक्यैरन्यथा निश्चयेन तथेत्यर्थः। ननु सत्यम्, भक्तत्वेनैव भक्तावुपयोगः; परं सामान्यभक्तानाम्, न [illegible] भवादृशाम्; अतो 'वत्सेवया' इति मद्वाक्यं नानुपपन्नमित्याकाङ्क्षायामाहुः—ब्रह्मेत्यादि। 'ब्रह्मभूतः प्रसन्नात्मा न शोचति, न काङ्क्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्।' इत्यादिवाक्यैरन्यथाऽवगमात् इति भक्तौ ब्रह्मभूतानामेव मुख्यः, न सामान्यानाम्, अतो ब्रह्मभूतब्राह्मणप्रसादात् लक्ष्म्याः स्थिरेति पक्षो न युक्त इत्यर्थः। ब्रह्मभावप्रापणार्थमिति। लक्ष्म्यास्तथात्वार्थम्। ते चेति। इन्द्रादयश्च। रसान्तर इति। भक्तिरसे। हीनभावं चेति। मन्यत इत्यर्थात्। असाधारणधर्मत्वमिति।

एव भगवति षड् गुणाः, ब्राह्मणानुग्रहजन्यत्वे कृत्रिमता स्यात् । व्यामोहनलीलापरत्वेन तु अलौकिकप्रकारेण वयं न व्यामोहनीयाः, साधारणेन तु विशेषज्ञानस्य जातत्वान्न व्यामोहो भविष्यतीति तात्पर्यम् । विशेषेण मूर्तिर्यस्या इति भगवद्भजने भगवदुपयोगिनी सर्वसामग्री निरूपिता । तस्याः समीपगमनमेव, न तु भोगपर्यवसानामित्युपेत्युक्तम् । अन्यैरिति भगवद्विमुखैः । भगवद्वैमुख्ये हेतुः—अर्थार्थिभिरिति । धनाभिनिविष्टचित्ता न भगवत्संमुखा भवन्ति । बाला एव ते स्तनपानव्यग्रा मातरमेव मन्यन्ते । स्वशिरसा धृतपादरेणुरिति भक्तस्यैवाऽन्येषां प्रवृत्तिः, तेषां चेयमुपास्या देवता । तस्या अपि चरणरेणवस्तदीयशरीरसंपादकाः । शिरसा स्थापनं तेषामेव प्रथमसंबन्धार्थम् । तुलस्या अलौकिकत्वे तल्लोकाकाङ्क्षित्वं न भक्तिहेतुकमिति धन्यार्पितेत्युक्तम् । कृत्रिममात्रत्वे भगवत्संबन्धो न सम्भवतीति धन्येति । धनमर्हन्तीति धन्याः । लक्ष्म्या आधिभौतिकं रूपमर्हन्तीति भगवद्भक्तानि । सेवका धन्याः, अन्ये धनिनोऽपि न धनमर्हन्ति, श्वान इव गङ्गाजलम् । अत एव न तस्य धनस्य भगवदुपयोगः । धनस्य स्वोपयोगात् तदधिका तुलसी तैर्भगवति समर्प्यते । अङ्घ्रौ समर्पणं भक्तिहेतुकम् । तुलस्या नवदाम चरणे समर्प्यते, अन्यथा बहुतुलसीदाने चरण आच्छन्नः स्यात् । तद्भगवच्चरणारविन्द एव तिष्ठति, भक्तप्रसादे वा तत्कण्ठेषु । उभयथाऽपि नैतादृशं स्थानमन्यदस्तीति तद्धाम भ्रमरस्य । तथात्वे हेतुमाह—मधुव्रतपतेरिति । मध्वेव व्रतं यस्य । नियमाद्धर्म इति पक्षे मधुव्रतेऽपि धर्मः । मधुव्रतानां पतिरिति भ्रतिनामिव तत्संबन्धित्वेन कृतार्थः परम्परयाऽपीति सूचितम् । इवेति ब्रह्मानन्दस्य हीनभावव्यावृत्त्यर्थमुपमा निरूपिता । कामयानेवेति वा, कामितोऽर्थः श्रद्धायुक्तो भवतीति । एवमपि भजने भगवतश्चेत्तत्फलं भवेत्तदापि ब्राह्मणवाक्यस्य हेतुत्वं कल्प्येताऽपि, तदपि नास्तीत्याह । + यस्तामिति । यः प्रसिद्धो लक्ष्म्याः प्रसादत्वं वदति, सोऽपि वदत्येव, न तु तां मन्यते, यतस्तां नाऽभ्याद्रियत् । तत्र हेतुः—परमभागवतेषु प्रकृष्टः सङ्गो यस्येति । ते हि परमा असाधारणा, लक्ष्मीसहितं नोपासते, अंशेन सेवाया व्यभिचारात् । अतस्तदनुरोधेनाऽपि न लक्ष्म्या सह रमणम् । एतादृशस्त्वं द्विजानामनुपथं मत्पुण्यरजः । भगवतो द्विजानुगमनमेव न सम्भवति, ईश्वरत्वात् ।

---

प्रकाशः ।

ब्राह्मणानुग्रहासाधारणधर्मत्वम् । साधारणेनेति । भगवद्वाक्यतात्पर्यानवगमेऽपि शास्त्रानुभवाभ्यां साधारणप्रकारेण । प्रथमसम्बन्धार्थमिति । प्रथमं शिरस एवोत्पत्तेः, तस्यैतत्सम्बन्धे सर्वस्य शरीरस्य योग्यता भवतीति तस्य सम्बन्धार्थम् । अनुवेलपदं तु न व्याख्यातम्, अर्थस्तु सेवासमयं लक्ष्मीकृत्येति । धन्यार्पितेत्युक्तमिति । धन्यार्पिता लौकिक्येवेति तल्लोकाकाङ्क्षित्वं भक्तिहेतुकमेव नेर्ष्याहेतुकमित्यर्थः । कृत्रिममात्रत्वमित्यादि । अन्यार्पिततया आगन्तुकमात्रत्वे ' भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ' इति वाक्याद्भगवत्सम्बन्धो न भवतीति तदर्पकाणां भक्तत्वज्ञापनाय धन्यपदमित्यर्थः । तद्व्युत्पादयन्ति—धनमित्यादि । तस्येति । अनर्हसम्बन्धिनः । तदधिकेति । लक्ष्म्याधिभौतिकरूपादधिका । चरण इति । चरणसमीपे । तदिति । तुलसीदाम । तद्धामेति । भ्रमरस्य स्थानम् । व्रतमिति । नियत आहारः, 'पयोव्रतो ब्राह्मणो यवागूव्रतो राजन्यः ' इत्यादौ तथा दर्शनात् । तत्सम्बन्धित्वेनेति । तुलसीदामसम्बन्धित्वेन । तत्फलमिति । तज्जनित आनन्दविशेषः ।

+ यस्तामित्यत्र । प्रसिद्ध इति । भगवानेव । एतादृश इति । लक्ष्म्यनभीप्सुः ।

ते हि पादचारिणोऽर्थार्थ्यनुवर्तकाश्च । दूरे तद्रजसः पुण्यत्वम्, मार्गरजसोऽपवित्रत्वात् । तेन च पावित्र्यं ततोऽपि दूरे । श्रीवत्सरूपं लक्ष्म चिह्नं किमर्थं त्वमगाः प्राप्तवानसि ? यतस्त्वं भगभाजनः सहजश्र्यादिधर्मयुक्तः ॥ २० ॥ २१ ॥

— एवं विरोधमुक्त्वा तस्य तात्पर्यं कल्पयन्तो धर्मरक्षार्थं वचनमिति कल्पयितुम्, धर्मो भगवता सर्वथा रक्षित इति धर्मरक्षां हेतुत्वार्थमाह—

**धर्मस्य ते भगवतस्त्रियुग ! त्रिभिः स्वैः पद्भिश्चराचरमिदं द्विजदेवतार्थम् ।**
**नूनं भृतं तदभिघाति रजस्तमश्च सत्त्वेन नो वरदया तनुवा निरस्य २२**

धर्मस्येति । हे त्रियुग ! युगत्रय एव भगवदाविर्भावः, न कलौ । अत एव कलौ धर्मोऽपि नास्ति, रक्षकाभावात् । युगत्रय एव भगवदाविर्भावे तत्रैव रक्षायां च हेतुमाह—त्रिभिः स्वैः पद्भिरिति । भगवांस्त्रिपात्, यज्ञस्य सवनत्रयात्मकत्वात् । स्वैरसाधारणैः । अतो द्विपाच्चतुष्पाच्च लोकसिद्ध इति तद्वैलक्षण्यं न दोषाय । पद्भिरिति वा द्वित्वसङ्ख्या, तेन पङ्गुणेषु द्वाभ्यां द्वाभ्यामेकैकस्मिन् युगे धर्मरक्षा । ज्ञानवैराग्याभ्यां सत्ये, यशःश्रीभ्यां त्रेतायाम्, ऐश्वर्यवीर्याभ्यां द्वापर इति कलौ न कोऽप्यवशिष्यते धर्मो धर्मरक्षकः । किञ्च, सत्त्वेन पाल्यते धर्मः । केवलसत्त्वस्य प्रवृत्तिः सत्ये, रजसा सहितस्य त्रेतायाम्, सत्त्वसंबन्धयोग्येन रजसा तमसा च द्वापरे धर्मरक्षा । कलौ तु सत्त्वस्य तत्संबन्धिनश्चाऽभावान्न रक्षा । जगदपि भगवता धर्मार्थमेव रक्षितमित्याह—चराचरमिदमिति । यद्यपि धर्मोऽपि भगवान्, जगदपि; तथापि धर्मार्थमेव जगत् पाल्यते । तदाह—द्विजानां देवानां चार्थे इदं जगत् नूनं भृतमिति । ननु स्वरूपेणैवाऽत्र धरणम्, किं सत्त्वेन गुणैर्वेत्याशङ्क्याऽऽह—तस्य जगतोऽभिघाति नाशकं रजश्च तमश्च । विक्षेपेण नाशयति रजः; आवरणेन तु तमः । उभयथाऽपि जगद्धर्मार्थं न भवति, अतो रजस्तमश्च सत्त्वेन निरस्य नूनं भृतमिति संबन्धः । सत्त्वस्योभयनिराकरणे सामर्थ्यमाह—नो वरदया तनुवेति । ब्रह्मादीनां वेदानामूर्ध्वगतिदातृत्वात् वरदत्वम्, अन्यदपीष्टं प्रयच्छतीति च । तदेव सत्त्वं तनुरूपं जातम् । तनोतीति तनुः । अतोऽनन्तस्वरूपजननसामर्थ्यात् तयोर्निरसनसामर्थ्यम् । अतस्त्वं धर्मरूपो देवब्राह्मणेषु प्रतिष्ठित इति ब्राह्मणोत्कर्षस्तद्रक्षापरनामेत्यन्तःप्रीतिहेतुत्वात् तथोच्यत इति भावः ॥ २२ ॥

* विपरीते बाधकमाह—

---

प्रकाशः ।

किमगा इत्यत्र मूले काकुर्वा प्रश्नो वा । उभयथापि न तस्याः ब्राह्मणप्रसादजन्यत्वम्, किन्तु स्वाभाविकत्वमिति निर्णीतम् ।

— धर्मस्येत्यत्र । तस्येति । 'यत्सेवया' इति 'येषां बिभर्मि' इति वाक्यस्य । लोकसिद्ध इति । स्मृतिसिद्धः । 'मुखेनैकम्' इति श्रुतौ द्वयोरेव सत्त्वयोः । पादत्वं सिद्धमिति नैवं त्रिपात्त्वं युक्तमित्यरुच्या पक्षान्तरमाहुः—पद्भिरिति । वा द्वित्वसङ्ख्येति । यथा 'दर्शपूर्णमासाभ्याम्' इत्यत्र यागत्रिकद्वित्वमादाय द्वि(त्व)संख्या; तथाऽत्र गुणद्विकत्रित्वमादाय पद्भिरिति त्रित्वसंख्येति त्रित्वप्रयोजिका गुणगता द्वित्वसङ्ख्येति भिन्न एव प्रकार इति न श्रुतिविरोध इत्यर्थः ।

* न त्वमित्यत्र । विपरीते बाधकमिति । धर्मारक्षणे, वेदमार्गनाशरूपं

**न त्वं द्विजोत्तमकुलं यदिहाऽऽत्मगोपं गोप्ता नृप ! स्वर्हणेन ससूनृतेन ।**
**तर्ह्येव नङ्क्ष्यति शिवस्तव वेदपन्था लोकोऽग्रहीष्यदृषभस्य हि तत्प्रमाणम् ।२३।**

* न त्वमिति । यदि त्वं द्विजोत्तमकुलं न गोप्ता, तर्ह्येव तव शिवो वेदपन्था नङ्क्ष्यति । तत्र हेतुः—लोकोऽग्रहीष्यदिति । ऋषभस्य प्रभोर्यत् प्रमाणम्, तल्लोकोऽग्रहीष्यत् । द्विजोत्तमानां धर्मज्ञानसहितानां कुलं समूहः । यद्यस्मात् कारणात् । यद्वा, कुलमात्मगोपम्, आत्मानं स्वात्मानं वा भवन्तं गोपायतीति । आत्मा स्थितश्चेत् स्वमार्गे गच्छेत्, अत आत्मा प्रथमतो रक्षणीयः । तदनन्तरं स्वमार्गरक्षा । स्वात्मानं प्रति ये समायान्ति येन मार्गेण, स स्वमार्गः । तत्रापि भक्तानामागमनप्रतिबन्धकनिवृत्तिरेव रक्षा । ते चेद्भगवद्रक्षका भवेयुर्धर्मज्ञानयुक्ताश्चेद्भक्तिमार्गप्रवर्तकाः, तदा ते रक्षणीया इत्यर्थः । तेषां रक्षा त्रिविधा; स्वरूपतः, संतोषजननेनाऽन्तः, प्रतिष्ठाजननेन च बहिः । तत्र स्वरूपतो रक्षाऽवतारैः क्रियत एव । अथाऽवशिष्यतेऽन्तर्बहिश्च । तदाह—स्वर्हणेन ससूनृतेनेति । सुष्ठु अर्हणं पूजा कायिकी, तेन बहीरक्षा तेषां प्रयोजनसाधिका, अन्यथा लोकसंमाननाभावे भगवन्मार्गोपदेशो न स्यात् । सूनृतेन चाऽन्तः । परिसंतोषोऽनेनोक्तः । एतस्य सहभावोऽन्तस्तोषस्य भगवत्कार्यहेतुत्वाय । अतो मार्गप्रवर्तकरक्षाभावे मार्गो नश्येदेव । तर्ह्येवेति पाषण्डप्रवृत्तेः सुगमत्वात् । न च बहूनां मार्गाणां विद्यमानत्वात् किं वेदमार्गेणेत्यत आह—शिव इति । अन्ये यादृच्छिकाः, कस्यचिदेव दुःखेनाऽपि फलसाधकाः, वेदमार्गस्तु शिवः कल्याणरूपः । ननु ब्राह्मणानां सन्माननाभावे कथं वेदो न रक्षितः स्यादित्याशङ्क्याऽऽह—लोकोऽग्रहीष्यदिति । लोकस्तु स्वामी भगवान् यं मन्यते तमेव मन्यते । ब्राह्मणैरेव वेदमार्गो बोध्यते, नाऽन्यैरिति तेषां संमाननाभावे अप्रवृत्तिः, पाषण्डतुल्यता वा स्यात् । नृपेति संबोधनं धर्मरूपत्वाय, वर्षणाद्वा ॥ २३ ॥

नन्वेवं सति वैषम्यप्रतिपादनान्मम प्रभुत्वं न स्यादित्याशङ्क्याऽऽह—

**तत्तेऽनभीष्टमिव सत्त्वनिधेर्विधित्सोः क्षेमं जनाय निजशक्तिभिरुद्धृतारेः ।**
**नैतावता त्र्यधिपतेर्बत ! विश्वभर्तुस्तेजः क्षतं त्ववनतस्य स ते विनोदः २४**

÷ तत्तेऽनभीष्टमिति । तद्ब्राह्मणानां रक्षार्थं सन्मानम्, तेऽनभीष्टमिव । अथवा, पूर्वश्लोके वेदमार्गनाश

प्रकाशः ।

बाधकम् । तर्कपूर्वं तत्समर्थयन्ति—यदीत्यादि । अत्र यत्पदस्य यदीति संभावनार्थकत्वं कालार्थकत्वं वा, तर्कवाक्ये चान्वयः । हेतुवाक्ये तु तत्पदस्य विद्यमानत्वेन नित्यसम्बन्धादेव यत्पदप्राप्तिः । अस्मिन् पक्षे यत्पदस्य दूरान्वयात् प्रकारान्तरमन्यत् द्वयमाहुः—द्विजोत्तमानामिति, यद्वेति च । तदेदं हेतुवाक्यम्—यस्माद् द्विजोत्तमकुलं तस्मात्त्वं गोप्तेति, यस्माद्वा आत्मगोपं तस्मात्त्वं गोप्तेति । ततो यदि न गोप्ता, तर्ह्येव वेदपन्था नङ्क्ष्यतीति तत्पदबलादेव यदीत्यस्याऽध्याहारः । आत्मरक्षकरक्षणस्य कथं वेदमार्गरक्षणहेतुत्वमित्यत उपपादयन्ति—आत्मा स्थित इत्यादि । वेदमार्गस्य स्वमार्गत्वं समर्थयन्ति—स्वात्मानमित्यादि । स्वमार्गस्वरूपमाहुः—तत्रापीत्यादि । तत्रापीति । स्वमार्गेऽपि । तथा च, प्रवाहनिरूपणे निर्वाह एव ध्येत्यर्थः । त इति । ब्राह्मणाः । सूनृतेन चेति । रक्षेत्यर्थात् ।

÷ तत्त इत्यत्र । अनभीष्टमिवेति । वैषम्यापादकत्वादनभिमतम् । तथा च, स्थित्यर्थतया परा·

१ देव पा. २ भाषेत पा.

उक्त', अतस्तद्वेदनाशनं तेऽनभीष्टमिव । सर्वथाऽभीष्टाभावोऽनुभीष्टम्, अस्याभीष्टाभावस्त्वनभीष्टमिव । प्रथमपक्षे रक्षा एवार्थः, द्वितीये नाशः; कालत्वात्, सर्वकर्तृत्वाच्च । तत्र हेतुः—सत्त्वनिधेरिति । सत्त्वनिधेः रक्षाऽभीष्टा, नाशस्त्वनभीष्टः । विधित्सोरिति । स एव तथा विधातुमिच्छति । जनाय हि क्षेमं विधातुमिच्छति, जायमाना स्वकृतेनैव हि सम्यक् भवन्तीति । अथवा, सत्त्वनिधेर्नाशोऽनभीष्टः । जनानां क्षेमकरणं तन्नाशः, उत्पत्तेर्वेदनाश एव भवति । उत्पत्त्यर्थं क्षेमश्चेत्, उत्पन्नानां वा वैदिकस्य संस्कारकत्वे पाषण्डाद्दुर्बलत्वम् । पुरुषार्थप्रतिपादकत्वे देहनिर्वाहकपाषण्डाद्दुर्बलत्वम् । निजशक्तिभिरुद्धृतारेरित्युभयत्र हेतुः । स्वस्याऽसाधारणसामर्थ्यैरुद्धृता अरयो येन । उभयत्राऽपि प्रतिबन्धकाभावो भगवच्छक्त्यैव सिद्धः । ननु तथापि स्वस्य दोषजननेन परोपकारः सिध्यति, धर्मरक्षायां स्वेक एव दोष इति चेत्तत्राऽऽह —नैतावतेति । स्वस्य नमनमात्रं न दोषः, नमतां नमनमिति व्युत्पत्तेः । नम्रभावो हीनानामेव हीनत्वबोधकः, उत्कृष्टानां तु भारसूचक एव । ये हि महाभारवन्तो भवन्ति ते नम्रा भवन्ति, अतो नम्रत्वं, मनम्रत्वं वा नैकान्ततो दोषरूपम्, गुणरूपं वा; अतस्तव महत्त्वं सिद्धमिति । हीनावनतिः कौतुकार्थं भवत्यभिनयरूपत्वात् । स एव हि रसजनकः । महत्त्वमाह—अधिपतेरिति । यतेति हर्षे, स्वस्तिसम्माननापरिज्ञानात् । विश्वभर्तुरित्यपि माहात्म्यम् । विश्वं हि यो बिभर्ति स हि लोके भाराक्रान्त इव नम्रो भवति, अन्यथा लोका भर्तुर्भारं न ज्ञापयेयुः । अतो नमनस्य प्रयोजनद्वयम्, लोके स्वस्य भर्तृत्वज्ञानम्, स्वार्थे तु विनोदः । अवनतस्य सोऽवनतिरूपः पदार्थः, ते विनोद इति संबन्धः । अनेन दोषः परिहृतः॥२४॥

एवं पूर्णान्तःकरणा[1] भूत्वा, भगवता यो दण्डः स्थापितः, तत्राप्यभिप्रायापरिज्ञानात्, स्वापराधं दूरी कुर्वन्ति—

**यं वाऽनयोर्दममधीश ! भवान्विधत्ते वृत्तिं नु वा तदनुमन्महि निर्व्यलीकम्।**
**अस्मासु वा य उचितो ध्रियतां स दण्डो येऽनागसौ वयमयुङ्क्ष्महि किल्बिषेण।**

---

प्रकाशः ।

र्थम् अतो वैषम्याभावान्न ब्रह्मत्वक्षतिरित्यर्थः । पूर्वश्लोके ब्राह्मणरक्षाया एव वाक्यार्थत्वात्तत्पदेन तस्यैव परामर्श इत्यभिप्रेत्यैवं व्याख्यातम् । एतस्याऽपुष्टार्थत्वादेकदेशपरामर्शित्वं तत्पदस्याऽङ्गीकृत्य पक्षान्तरमाहुः—अथवेत्यादि । पक्षद्वयेऽपि यथायथमनभीष्टत्वप्रयोजकरूपद्वयमाहुः—कालेत्यादि । तथा च, कालत्वाद्रक्षाऽनभीष्टा, सर्वकर्तृत्वान्नाशोऽनभीष्ट इत्यर्थः । स एवेति । सत्त्वनिधिरेव । स्वकृतेनैवेति । भगवत्कृतेनैव । तन्नाश इति । वेदनाश । तद्व्युत्पादयन्ति—उत्पत्तेरित्यादि । उत्पत्तेरिति । 'जायस्व म्रियस्व ' इति प्रवाहप्रवेशात् । रक्षापक्षे जनाय क्षेमं विधित्सोरित्यस्याऽर्थमाहुः—उत्पन्नानां चेति । उत्पन्नानामर्थे क्षेमश्चेदित्यन्वयः । प्रथमपक्षे अनभीष्टा, अस्मिन् पक्षे वेदरक्षाऽभीष्टेति तस्या अनभीष्टत्वेऽभीष्टत्वे च क्रमेण हेतुद्वयमाहुः—वैदिकस्येत्यादि । एवमत्राऽर्थस्य व्याख्यानद्वयेन साम्यप्रतिपादनाद्भगवति वैषम्यं परिहृतम् । दोषजननेनेति । हीननम्रभावरूपदोषजननेन । एक एवेति । मुख्य एव । रसजनक इति । अत्र रसो बीभत्सो बोध्यः । स्वस्तिसंमाननापरिज्ञानादिति । अविनाशस्य संमाननस्य च तात्पर्यापरिज्ञानात् ।

---

1 पूर्णान्तःकरणा. क.

* यं वाऽनयोरिति । हे अधीश ! अस्माकं तयोश्च । अधिकेशत्वं नाम वेदयुक्त्याद्यपेक्षयाऽपि, वेदादीनां नियामकत्वं वा; अत एवाऽस्मदुक्तप्रयोजकम् । अनयोर्भवान् वृत्तिं यं वा दमं विधत्ते, तदनुमन्महि । वृत्तिर्जीविका, द्वारि स्थित्वा सर्वेषां निवारणं कर्तव्यम् । तदा निवारिताः स्वप्रवेशार्थं स्वकीयं धनं धर्मं वा दास्यन्तीति वृत्तिदानम् । स्वयं वा द्वारे परिपालनं करोतीति स्वतन्त्रतया वा वृत्तिदानम् । अस्मदुक्तो वा दण्डोऽन्यो वा, यमेव दण्डं भवान् विधत्ते तदनुमन्महि । भवदिच्छानन्तरमस्माभिरपि स्वीक्रियत इत्यनुमाननम् । एतदपि नाऽनुरोधात्, किन्तु निर्व्यलीकम् । स्वस्याऽप्यपराधात् दण्डश्चेत् सदप्यङ्गीक्रियत इत्याहुः–अस्मास्विति । वेत्युभयत्राऽनादरे । सङ्कोचो न कर्तव्य इत्यभिप्रायेणाऽऽहुः–य उचित इति । ध्रियतां स दण्ड इति । इदानीं वाक्यमात्रमुक्त्वाऽन्येन तत्फलं संपादनीयमिति न, किन्तु इदानीमेव स दण्डोऽस्मासु स्थापनीयः । अथवा, स एव वा दण्डो जन्मत्रयात्मकोऽस्मासु स्थापनीयः । तत्र स्वस्याऽपराधमाहुः–येन कारणेन अनागसौ निरपराधौ वयं किल्बिषेण अयुङ्क्ष्माहि योजितवन्तः । स दण्डः सहैवोभयेषां जन्मत्रयमिति । अस्मासु वेति पक्षे तेषां दण्डेऽस्तु न वेत्यौदासीन्यम् । एवं सर्वभावेन भगवतो माहात्म्यं निरूपितम् ॥ २५ ॥

भगवांस्तु शापाद्भीता इति तान् ज्ञात्वा शापं स्वकृतमित्याह—

## श्रीभगवानुवाच ।

**एतौ सुरेतरगतिं प्रतिपद्य सद्यः संरम्भसंभृतसमाध्यनुबद्धयोगौ ।**
**भूयः सकाशमुपयास्यत आशु यो वः शापो मयैव निहितस्तदवैत विप्राः २६**

एताविति । सुरेतरगतिं दैत्यत्वम्, राक्षसत्वम्, मनुष्यत्वं च । इतरत्वं समाने भवतीत्यसुरमनुष्ययोर्देवतुल्यत्वं 'द्वया ह प्राजापत्याः' इत्यत्र निरूपितम्, राक्षसा अपि बीजपराक्रमाभ्यां देवतुल्या इति । यक्षादयस्तु न स्वतन्त्राः, कुबेरस्तु देव एव; अतस्त्रिविधामेव सुरेतरगतिं प्रतिपद्य सद्य एव भूयो ममाऽन्तिकमुपयास्यतः । यो वो युष्माभिर्दत्तः शापः स मयैव निहित इति, तदवैत । निमित इति पाठे नितरां मयैव मितः । विप्रा इत्यदीर्घदर्शित्वम् । ननु सुरेतरगतिप्राप्तौ शीघ्रं कथं भवत्समीपागमनम्, तत्तज्जन्मकर्मणां भोक्तव्यत्वादित्याशङ्क्याऽऽह–संरम्भसंभृतसमाध्यनुबद्धयोगाविति । क्रोधसंरम्भेण सम्यग्भृतो यः समाधिः, तेनाऽनुबद्धो योगः । योगेन सर्वपापक्षय इति पूर्वमवोचाम । भूयः सकाशमुपयास्यत इति शापान्तः । परिमितशापदानं मत्कृतः शाप इत्यवैतेति निर्भयार्थम् ॥ २६ ॥

एवमागतानां मुनीनां सर्वदुःखदूरीकरणमुक्तम् । इदानीं सर्वेषां यथायथं प्रतिगमनमाह–अथेति । तत्र प्रथमं योगिनां प्रतिगमनं द्वाभ्यामाह कृतकरिष्यमाणप्रमेयभेदेन—

## ब्रह्मोवाच ।

**अथ ते मुनयो दृष्ट्वा नयनानन्दभाजनम् ।**

---

प्रकाशः

* यं वेत्यत्र । इति वृत्तिदानमिति । अस्मिन् पक्षे वयमपि स्वकीयं धर्मं दद्म इति पूरयनुमाननं ज्ञेयम् । तेषां दण्ड इति । अस्मदुक्तस्तेषां दण्डोऽस्माकमेवाऽस्त्वित्यर्थः ।

१ भगवत्समीपागमनम् ग. ङ.

वैकुण्ठं तदधिष्ठानं विकुण्ठं च स्वयं प्रभुम् ॥ २७ ॥

अथेति । पुनस्ते स्वभावं प्राप्ताः, यतो मुनयः । यस्य या निष्ठा तस्य स एव गुणः, विपरीतो दोषः । ते ह्यन्तरेव भगवन्तं पश्यन्ति, न बहिः । बहिर्दर्शनं च नोपकारीति प्रतिजग्मुः । बहिर्दर्शने एको गुणो जात इत्याह—नयनानन्दभाजनमिति । इन्द्रियाणि हि परमैश्वर्यसंबन्धात् सुखं पञ्चधा विभज्य रूपादिभेदेन तमानन्दमनुभवन्ति, करणत्वाज्जीवस्यापि सुखजनकानि । अयं च भगवानानन्दमूर्तिर्लावण्यपूर इति नयनानन्दस्य भाजनम् । तद्भाजनं द्वयमपीत्याह—वैकुण्ठं तदधिष्ठानं विकुण्ठं चेति । ननूभयोस्तुल्यतया नयनानन्दभाजनत्वं कथमुच्यते ? तत्राऽऽह—स्वयं प्रभुमिति । लोकः स्वयमेव, वैकुण्ठोऽपि स्वयम्; तथापि प्रभुत्वेन भगवत्स्फुरणे लोकत्वेन तत्स्फुरणात्, अक्षरस्य भगवत्त्वाच्चोभयोस्तथात्वमित्यर्थः ॥ २७ ॥

अग्रिमकृत्यमाह—

भगवन्तं परिक्रम्य प्रणिपत्याऽनुमान्य च ।
प्रतिजग्मुः प्रमुदिताः शंसन्तो वैष्णवीं श्रियम् ॥ २८ ॥

* भगवन्तं परिक्रम्येति । प्रदक्षिणा नमस्कार आज्ञाप्रार्थनमेव च । आगत्यतोपभावश्च गमने स्तोत्रमेव च ॥ १ ॥ समागतानां पञ्चाङ्गं तोषलक्षणमुच्यते । यथागतिगतिः कार्ये प्रसङ्गं वारयेदिति २ प्रतिजग्मुरागमनप्रकारेणैव पुनर्गता इत्यर्थः । बहिर्दर्शनस्याऽधिकत्वात् प्रकर्षेण मुदिताः । वैष्णवीं श्रियमिति शान्तिप्रसादलक्षणाम् । पूर्वस्मादयमेव विशेषः ॥ २८ ॥

भगवतो निर्गमनं वक्तुं सेवकयोः समाधानमाह—

भगवाननुगावाह यातं मा भैष्टमस्तु शम् ।
ब्रह्मतेजः समर्थोऽपि हन्तुं नेच्छे मतं तु मे ॥ २९ ॥

भगवानिति । अनुरोधे हेतुः—अनुगाविति । तेषां वाक्यविश्वासे कारणम्—भगवानिति । यातमित्याज्ञा शापेन गमनाभावार्थम्, अनेन तयोः स्वधर्मो रक्षितः । अत एव—मा भैष्टम् । शापेन गमने सति भयं भवति । ननु कृते कारणे कथं फलं न भविष्यतीत्याशङ्क्याऽऽह—अस्तु शमिति । भवतां कल्याणमस्तु । इदानीं सालोक्यम्, गतानां तु सायुज्यं भविष्यतीत्यर्थः । इदानीं लोके कौचिद्भवन्तौ, पश्चाल्लोकरूपावेव भविष्यत इति ' लोकाय कल्पताम् ' इति वाक्यम् । चरणपदमपि तमेवार्थं वक्ति । भविष्यतोश्चरणभावश्च सिद्धः, नैकट्यं [illegible] तदा महत् । किं ब्राह्मणानामनुरोधेनैवं क्रियते ? नेत्याह—ब्रह्मतेज इति । ब्रह्मत्वं किल दूरीक्रियत आधिदैविकं ब्रह्मतेजः, इदं त्वाधिभौतिकम् । अतः समर्थोऽपि ब्रह्मतेजो हन्तुं नेच्छे, सृष्ट्युपयोगित्वात् । अतो मम मतम् । नु इति निश्चये । अभिप्रायं तु भगवानेव जानाति, वचनात् न कल्प्यते, कल्प्यमानोऽपि कार्यानुरोधेन कल्पनीय इति ॥ २९ ॥

तर्हि ब्रह्मशापस्य का गतिः ? तत्राह—

---

प्रकाशः।

* भगवन्तमित्यत्र । आगत्यतोषा(प)भाव इति । आगमनानां तोषपूर्त्यभावः ।

---

१ ०प्रार्थनमेव च.

मयि संरम्भयोगेन निस्तीर्य ब्रह्महेलनम् ।
प्रत्येष्यतं निकाशं मे कालेनाऽल्पीयसा पुनः ॥ ३० ॥

*मयीति । ब्रह्मशापस्य प्रायश्चित्तं कर्तव्यम् । प्रायश्चित्तानन्तरं हि पुरुषः शुद्धः, शुद्धेनैव हि विहितं कर्तव्यम्, भगवद्भक्तानां च प्रायश्चित्तं भगवत्स्मरणमेव । तच्च स्मरणं लौकिकं भवति, शुद्धस्यैव हि वैदिके अधिकारात् । लौकिकत्वात् प्रायश्चित्तत्वं च । नित्यता तु स्मरणस्य प्रथमप्रवृत्तानाम्, यावद्भगवदीया भवन्ति । पश्चात्तु पापमेव नोत्पद्यते । भगवदिच्छया तु तदुत्पत्तिः । तदिच्छाया बलिष्ठत्वात् स्मरणं न सम्भवति । लौकिके तु बाधाभावात् भगवत्सायुज्यादिसाधकत्वाभावेऽपि प्रायश्चित्तत्वमस्ति, दोषनिर्घातकत्वस्य स्मरणसहजधर्मत्वात् । कामादयो हि केवललौकिका लौकिकपोषहेतवः । क्रोधोऽत्र शापे हेतुर्जात इति क्रोधेनैव स्मरणं भविष्यति, अन्यथा विस्मरणमेव स्यात् । एवं गोपिकानां कामोऽपि । ब्रह्मणा हि कामेन वाक् त्रस्ता, अत एव वाचा न प्रजापतेर्होमः । 'वाक् च मनश्चार्तीयेताम्' इत्युपाख्याने [1]तथा निरूपणात् । सैव वाक् गोपिकाः । भयेन शुक्राचार्येण त्रस्ताः कालनेमिप्रभृतयः, ते हि बृहस्पतिमुरीकृतवन्तः स्वपौरोहित्यगमनभयात् क्षिप्ता इति भयेनैव स्मरणं कंसस्य । अन्ये च देवा यथायथं तत्तत्संबन्धिनो बृहस्पतिदुर्वासःप्रमृतिभिः शप्ता इति संबन्धस्नेहादेव स्मरणं यादवादीनाम् । एते चत्वारोऽपि शापात् तथोत्पन्नाः, तथा स्मरणेन तत्तच्छापं हित्वा [2]स्वभगवदीयेनैव रूपेण भगवत्पदं प्राप्ताः । तथाऽत्रापि 'अस्तु शम्' इति वाक्यात् भगवत्पदप्राप्तिः । भगवति च क्रोधसंरम्भयोगेन ब्रह्मापचारलक्षणं दोषं निर्हत्य, मे निकाशं समीपम्, आतिनैकट्यं वा द्वारापेक्षया चरणे, अल्पीयसा कालेन पुनः प्रत्येष्यतमिति । क्रोधसंबन्धस्य लोके अपुरुषार्थत्वात् पुरुषार्थत्वाय योगपदम् ॥ ३१ ॥

एवं तयोः सान्त्वनमुक्त्वा भगवान् यथास्थानं गत इत्याह—

द्वाःस्थावादिश्य भगवान् विमानश्रेणिभूषणम् ।

---

प्रकाशः ।

* मयीत्यत्र । लौकिकत्वादिति । स्मरणस्य तथात्वात् । ननु स्मरणस्य प्रायश्चित्तरूपत्वे पापापनोदोपरमकरणापत्त्या 'स्मर्तव्यः सततं विष्णुः' इत्यादि वाक्योक्ता नित्यता बाध्येतेत्यत आहुः—नित्यतेत्यादि । तथा च, प्रथमकक्षायां प्रायश्चित्तरूपता, पश्चात्तु स्वाभाविकत्वात्फलरूपता वा, अवश्यकर्तव्यं चेति न तद्बाध इत्यर्थः । नन्वेवं सति प्रकृते कथं पापोत्पत्तिरित्यत आहुः—भगवदिच्छयेत्यादि । ननु लौकिकाद्बलिष्ठं वैदिकं स्मरणं तत्र चैतेऽधिकारिणोऽपीति, तेनैव कुतो न पापनिवृत्तिरित्यत आहुः—स्मरणं न संभवतीति । कर्मव्यासङ्गान्न संभवति । न चैतेषां ज्ञानेऽधिकारः 'पापीयसत्रय इमे' इति शापेन प्रतिबन्धादित्यर्थः । एवं प्रतिपादने भगवद्वाक्यमेव 'हन्तुं नेच्छे' इति बीजभूतं ज्ञेयम् । नन्वेवं सति लौकिकेऽप्युक्तन्यायापत्तिरित्यत आहुः—लौकिके त्वित्यादि । बाधाभावादिति । लौकिकप्रतिकूलभगवदिच्छाभावात् । नन्वस्त्वेवम्, तथापि संरम्भस्यैव स्मारकताया अज्ञापने किं बीजमित्यत आहुः—कामेनेत्यादि । बृहस्पतिमिति । शुक्राचार्ये तपोर्थं गते तद्रूपं कृत्वा आगत(तो) बृहस्पतिरिति पुराणान्तरे कथनात् । क्षिप्ता इति । अधिक्षिप्ता धिक्कृताः । यादवादीनामित्यत्राऽऽदिपदं पाण्डवोपलक्षकम् । तेषां च शापः पद्मेन्द्रोपाख्याने प्रसिद्धः । तेन स्नेहसम्बन्धावुभावपि पाण्डवयादवयोः ज्ञापकौ ज्ञेयौ ।

---

1 स्वभगवद्रूपेण. ग.  2 प्रारम्भस्य. ग.

सर्वातिशयया लक्ष्म्या युक्तं स्वं धिष्ण्यमाविशत् ॥ ३२ ॥

×द्वाःस्थाविति। आदिश्येति वचनात् नाऽन्यथाकरणं संभवति। भगवतः खेदो भविष्यतीत्याशङ्क्याऽऽह—भगवानिति। ऐश्वर्यज्ञानवैराग्याणां खेदनाशकत्वात्। नन्वेतावुभौ निष्कासितौ दुष्टौ चेत्, अन्येऽपि तथा भविष्यन्तीति तन्निष्कासनमपि कर्तव्यम्, अन्यौ च द्वारपालकौ कर्तव्यौ। तदुभयमकृत्वा कथं गृहे गत इत्याशङ्क्याऽऽह—विमानश्रेणिभूषणमिति। विमानानां श्रेण्यः, तासां भूषणमलङ्कारभूतम्। वैकुण्ठस्थितानि विमानानि सार्थकानि। अतो विगतो मानो येषामिति तदतिरिक्ताः सर्वेऽभिमानरहिताः, अतो निर्दुष्टा इत्यर्थः। त एव तत्र साधारणा अपीति श्रेणिपदम्। तेषामपि भूषणमिति सर्वथा सर्वदोषरहितं स्थानमित्यर्थः। अत एवाऽन्ये न विनियुक्ताः, एतौ सदोषाविति। परं द्वारस्थत्वेन नियुक्तौ, न त्वन्यप्रतिरोधार्थम्, मुनीनां वाक्येन तथा निर्णयात्। पुनस्तत्रैव गमने हेतुः—सर्वातिशयया लक्ष्म्येति। सर्वेभ्योऽतिशयया। लक्ष्म्यर्थं कृतत्वात् लक्ष्मीस्तं सर्वभावेनाऽलङ्कृतवती, अतः सर्वातिशयया शोभया युक्तं भवति। स्वकीयं स्वरूपभूतं च तत् स्थानमिति नाऽन्यत्र गमनम् ॥ ३२ ॥

एवं भगवतो गृहप्रवेशमुक्त्वा तयोरन्यत्र गमनमाह—

तौ तु गीर्वाणऋषभौ दुस्तराद्धरिलोकतः।
हतश्रियौ ब्रह्मशापादभूतां विगतस्मयौ ॥ ३३ ॥

तौ त्विति। तत्र तयोर्निश्चीय स्थितिं व्यावर्तयति तुशब्दः। तौ हि विचारकौ, भगवदाज्ञापरिपालनादेव निस्तार इति। तथा ज्ञाने हेतुः—गीर्वाणऋषभाविति। दुस्तरादिति तस्य लोकस्य तरणं दुःखेनाऽप्यशक्यम्। तत्रापि—हरिलोकतः। स हि सर्वदुःखनिवारकः। तत्रापि प्रकाशमानो लोकः, अन्यत्राऽज्ञानमेवेति भावः। वैकुण्ठस्थितयोर्या शोभा स्थिता, सा ब्रह्मशापाद्गता; अतस्तत्र स्थातुमपि न शक्यते, तत्रत्यैः सह साधर्म्याभावात्। किञ्च, विगतः स्मयो गर्वो ययोः। अत एवैतयोः पूर्वं गर्वः स्थितः, न तु निर्दुष्टौ। ततो निष्कासिताविति। लोकस्योपकारित्वख्यापनार्थं लोकत एव विगतस्मयाविति हेतुहेतुमद्भावो निरूपितः ॥ ३३ ॥

एवं तत्कृतमुपकारं प्राप्य तौ गतावित्याह—

तदा विकुण्ठधिषणात्तयोर्निपतमानयोः।
हाहाकारो महानासीद्विमानाग्र्येषु पुत्रकाः ! ॥ ३४ ॥

*तदेति। वैकुण्ठधिषणात् तयोर्निपतमानयोः सतोः, तदा हाहाकार आसीत्, अयुक्तं जातमिति विमानाग्र्येष्विति तेषां दर्शनयोग्यता निरूपिता। हाहाकारवर्णनं तयोर्दयासूचकम्, अत एवाऽत्र प्रतीकारो न कर्तव्यः, क्लिष्टयोरधिकक्लेशापत्तेः। पुत्रका इति स्नेहेन संबोधनं स्वस्य दयावत्त्वज्ञापनार्थम् ३४

---

प्रकाशः।

× द्वाःस्थावित्यत्र। त एव तत्र साधारणा इति। वैमानिका एव वैकुण्ठे साधारणजनरूपाः। उपकारित्वख्यापनार्थमिति। गर्वनिवारकत्वेन तथात्वार्थम्।

* तदेत्यत्र। (अ)प्रतीकार इति। दिनिगर्भे प्रतीकारः।

तयोर्निरूपणस्य प्रकृतोपयोगमाह—

तावेव ह्यधुना प्राप्तौ पार्षदप्रवरौ हरेः ।
दितेर्जठरनिर्विष्टं काश्यपं तेज उल्बणम् ॥ ३५ ॥

तावेवेति । अधुना तावेव दितेर्जठरनिर्विष्टं काश्यपं तेजः प्राप्तौ । गर्भे प्रवेश एवाऽत्र, न तु प्रकारान्तरेणाऽन्नादिषु संक्रमः । सुरभावान्निर्गतत्वादसुरत्वम् । तयोर्योग्यं बीजमित्याह—उल्बणमिति । स्वभावत एवोल्बणम्, अन्यायेन निर्गतत्वात् । तत्रापि दितेर्जठरनिर्विष्टम् । तयोरापद्दशेयमिति ख्यापनार्थं पूर्वावस्थाकीर्तनम्—हरेः पार्षदप्रवराविति ॥ ३५ ॥

तर्ह्यन्धकारे किं कारणम् ? तत्राऽऽह—

तयोरसुरयोरद्य तेजसा यमयोर्हि वः ।
आक्षिप्तं तेज एतर्हि भगवांस्तद्विधित्सति ॥ ३६ ॥

*तयोरिति । तौ ह्यधुना असुरौ, अतस्तत्तेजसा वो(?)युष्माकं तेज आक्षिप्तम् । भगवत्तेजसा दैत्यतेज आक्षिप्तं भवति, दैत्यतेजसा च देवानाम् । किञ्च, मुनीनामपकारसंस्मरणात्—हि वः । यमयोर्हि वः इति पाठेऽपि भवतामेव यमौ, अत एव भवतां तेज आक्षिप्तं भवति । तर्हि प्रतीकारः कर्तव्य इति चेत्तत्राऽऽह—भगवांस्तद्विधित्सतीति । एतर्हीदानीं भवतामुपद्रवं भगवानेव विधित्सति, केन प्रतीकारः कर्तव्य इत्यर्थः ॥ ३६ ॥

तर्हि का गतिरित्याकाङ्क्षायामाह—

विश्वस्य यः स्थितिलयोद्भवहेतुराद्यो योगेश्वरैरपि दुरत्यययोगमायः ।
क्षेमं विधास्यति स नो भगवांस्त्र्यधीशस्तत्राऽस्मदीयविमृशेन कियानिहाऽर्थः॥३७

विश्वस्येति । का भवतां चिन्ता, स एव शान्तिं करिष्यति । तत्र हेतुः—यो विश्वस्य स्थितिलयोद्भवहेतुरिति । यस्तूत्पादयति, स एव पालयतीत्यधुनाऽपि स एव पालयिष्यति । अथ यदि न पालयिष्यति, तदा प्रलयकर्तृत्वात् प्रलयं करिष्यतीति न चिन्ता कर्तव्या, प्रलयस्याऽवश्यम्भावात् । तथापि क्लेशाचिन्तेति चेत् तदुत्पादनमपि करिष्यतीति न चिन्ता कर्तव्या । किञ्च, न केवलं भवतामेव तेन कार्यं कर्तव्यम्, किन्तु विश्वस्यैव । यतो विश्वस्यैव स उत्पत्त्यादिकर्ता । ननु साधारणदाहेऽपि यथा पलायनेन जङ्घालुर्न दह्यते, तथाऽस्मासु प्रतीकारस्त्वया कर्तव्य इत्याशङ्क्याऽऽह—योगेश्वरैरपि दुरत्यययोगमाय इति । भगवतो योगमाया सर्वक्लेशहेतुः, सा हि दुरत्यया । साधनेषु योगो महान्, तस्याऽपि ये ईशाः

---

प्रकाशः ।

* तयोरित्यत्र । भवनामे(व)यमाविति । 'स यमो देवानामिन्द्रियं वीर्यमयुवत, तद्यमस्य यमत्वम्' इति यमपदनिर्वचनाद्भवतामेवेन्द्रियवीर्यनाशकावित्यर्थः ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे षोडशाध्यायविवरणं सम्पूर्णम् ।

स्वाधीनयोगाः; तैरपि योगमायातिक्रमः कर्तुमशक्यः । अतो न मया प्रतीकारः । तर्हि त्वचोऽप्युत्कृष्टो वक्तव्य इति चेत्तत्राऽऽह—आद्य इति । न हि तदपेक्षया कश्चिदाद्योऽस्ति, यो वक्तव्यः स्यात् । तर्हि स एवोच्यतामित्याशङ्क्याऽऽह—क्षेमं विधास्यतीति । सोऽनुक्तोऽपि स्वयमेव क्षेमं विधास्यति । तत्र हेतुः—त्र्यधीश इति । अन्यथा लोकद्वयमेव स्यात्, यदि ताभ्यां दिवो नाशः स्यात् । ननु ताभ्यां नाशे कृते पश्चात् कथं पालयिष्यतीत्याशङ्क्याऽऽह— भगवानिति । ननु तथापि त्वया शुभाशंसनं कर्तव्यम्, अस्माभिर्वा त्वद्वचनेन तपस्यादिकं कर्त्तव्यमिति चेत्तत्राह—तत्राऽस्मदीयविमृशेनेति । यथा पर्जन्येऽवर्षति ततः पूर्वं घटेन क्षेत्रसेचनम् । यदि देवो न वर्षेत् सेकेनाऽपि न सस्योत्पत्तिः, वृष्टौ सत्यां सेको व्यर्थ एव। तत्राऽस्मदीयेन विमर्शेन । तत्र सेर्गे, इहेदानीम्, कियान् वा अर्थः ? स सर्वार्थमेव शुभं करिष्यतीति किं प्रत्येकप्रयासेन फलासाधकेनेत्यर्थः ॥ ३८ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां तृतीयस्कन्धे षोडशाध्यायविवरणम् ।

---

## सप्तदशाध्यायविवरणम् ।

कामादिना मार्गनाशा उपोद्घातेन वर्णिताः ।
सृष्टिमात्रप्रयोगाय तत्फलं वर्ण्यते शुभम् ॥ १ ॥
उत्पत्तिस्तामसी प्रोक्ता स्थितिर्वै राजसी मता ।
सात्त्विकः प्रलयश्चेति विपरीतं फलं तयोः ॥ २ ॥
उत्पत्तिर्द्विविधा प्रोक्ता स्वरूपानिष्टभेदतः ।
यावद्बुद्धिरिहोत्पत्तिः; कायवाग्दोषवर्णनम् ॥ ३ ॥
सजातीयविजातीयक्लेशदानाय जन्मनः ।

---

प्रकाशः ।[१]

अथ सप्तदशाध्यायं विवरिषवः पूर्वत्रय्या एतस्याः सङ्गतिमाहुः—कामादिनेत्यादि । सृष्टिप्रयोगायेति । सृष्टेः प्रकर्षो भगवत्प्रयुक्तत्वम्, तस्य सम्बन्धाय । तथा च सृष्टिं प्रत्युपोद्घातः, एतत्त्रयीं प्रति तु तेषां हेतुतेति त्रय्योर्हेतुहेतुमद्भावः सङ्गतिरित्यर्थः । त्रयाणां क्रमेणाऽर्थमाहुः—उत्पत्तिरित्यादि । तयोरिति । जयविजययोः । फलं शाप(फ)लं शापजन्यम् । विपरीतम् । लोकविलक्षणम्, पर्यवसानं उत्कर्षाधायीत्यर्थः । एवं सामान्यतस्त्रयाणामर्थमुक्त्वा विशेषं विभजन्ते—उत्पत्तिरित्यादिसार्धैश्चतुर्भिः । तत्र सपादैस्त्रिभिः प्रथमार्धः पूर्वं विमृश्यते । कायेतिचरणोऽग्रिमार्धेन संबध्यते । ननु भवत्वेवम्, सपरिकरात्तदुत्पत्तिः, त-

१ मायानतीकार' क २ स्वर्गे. ग.

शापस्त्वेक इति प्रोक्तो हिरण्याक्षो न चाऽपरः ॥ ४ ॥
आधारस्तु स एवोक्तो द्वितीये दोषवर्णनम् ।
उत्पत्तिरेव शापेन नीचयोनौ निरूपिता ॥ ५ ॥
स्थितिनाशौ तयोस्तस्माद्धरावेवाऽत्र वर्ण्यते ।
कृष्णेन सहिता लीलाः स्थितिस्तस्य महात्मनः ॥ ६ ॥
निधनं चाऽपि तस्यैव कल्याणवचनान्मतम् ।
स्वरूपोत्पत्तिरन्यत्र हेतुरित्युच्यते बहु ॥ ७ ॥
अनिष्टसूचकं तत्र ज्ञानं दुःखप्रणाशनम् ।
अतः सप्तदशेऽध्याये दुःखाभावस्तथोद्गमः ।
अनिष्टसूचनं दोषौ वर्ण्यन्ते पञ्च सम्भवे ॥ ८ ॥

तत्र प्रथमं निदानज्ञानेन भयनिवृत्तिमाह—

## मैत्रेय उवाच ।

**निशम्याऽऽत्मभुवा गीतं कारणं शङ्कयोज्झिताः ।**
**ततः सर्वे न्यवर्तन्त त्रिदिवाय दिवौकसः ॥ १ ॥**

+ निशम्येति । आत्मभुवा ब्रह्मणा गीतं कारणं निशम्य शङ्कया उज्झिता जाताः । आत्मभुवेति कारणम् । गीतमिति हर्षेण सार्वजनीनमुक्तमिति फले निःसन्देहः। शङ्का स्वनाशे । पीडामात्रं तु परिच्छि-

---

प्रकाशः ।

थापि सन्नियोगशिष्टत्वात् प्रसङ्गाच्चोभयोः कथाऽत्र वक्तव्या, तत्रैकस्यैव कुत उक्तेत्यत आहुः—शाप इत्यादि । तुः शङ्कानिरासे । शाप एक इति प्रोक्तः; द्वितीयोऽप्युत्पत्त्या तूक्तः, सङ्क्षेपेण प्रवृत्त्या च । ॥ पुनः। हिरण्याक्ष आधारः, दितिदोषतः प्रथममुत्पन्नत्वादाधारदोषबहुलः । चोऽवधारणे । अपरो हिरण्यकशिपुस्तादृशो न । अतः स एवोक्तो विशेषाकारेणोक्तः । द्वितीये हिरण्यकशिपौ उत्त्वणवीर्यजन्यत्वात् दोषवर्णनम्, 'अकुतोमृत्युरुद्धतः' इत्यनेनौद्धत्यमात्रवर्णनम् । किञ्च, इदमुत्पत्तिप्रकरणम्, अत उत्पत्तिरेव तयोर्नीचयोनौ शापेन निरूपिता, स्थितिनाशौ तु तस्माद्भगवतः सकाशात् । अतस्तदवतारान्तरस्याऽत्र प्रकृतत्वान्न द्वितीयस्य स्थितिनाशकथोक्ता, किन्तु प्रकृतत्वादेकस्यैवोक्तेरित्यर्थः । द्वितीयतृतीययोराहुः—हरावित्यादि । अत्राऽस्मिन् प्रकरणे तस्य महात्मनः प्रकृष्टान्तःकरणस्य हिरण्याक्षस्य । कृष्णेन सहिता लीला इति हरावेव स्थितिः । च पुनस्तस्य निधनमप्येवं हरावेव मतम् । तत्र गमकम्—कल्याणवचनादिति । 'अस्तु शम्' इति भगवद्वचनात् । एवं सपादेनाऽभिमयोरर्थो विमृष्टः । अतः परं द्वाभ्यामुपपत्त्या प्रकृतार्थमाहुः—स्वरूपेत्यादि । अन्यत्रेति । अन्येषामप्युत्पत्त्यादौ । तत्र ज्ञानमिति । तद्विषयकं निदानज्ञानम् । दोषाविति । वाक्कायदोषौ । सम्भव इति । उत्पत्तौ ।

+ निशम्येत्यत्र । आत्मभुवेति कारणमिति । स ह्यात्मनो भूर्देवानामुत्पत्तिस्थानम्, अतः कारणत्वादुक्तं तद्धितकरं चेतिभावः ।

न्नत्वात् सोढव्यमिति शङ्कयैवोज्झिता जाताः, इष्टानिष्टयोः कालस्य च निर्द्धारितत्वात् । शङ्कानिवृत्त्यनन्तरं च सर्वे त्रिदिवाय न्यवर्तन्त । दिवौकस इति तत्र गमनावश्यकत्वम् ॥ १ ॥

उत्पत्तिमाह—

दितिस्तु भर्तुरादेशादपत्यपरिशङ्किनी ।
पूर्णे वर्षशते साध्वी पुत्रौ प्रसुषुवे यमौ ॥ २ ॥

दितिस्त्विति । ऋषिविचारेण सद्य एवोत्पादनीयौ, तथापि दित्या तथा न कृतमिति तुशब्दः । भर्तुः कश्यपस्य, आदेशात् वाक्यादाज्ञारूपात्, अपत्ये विषये परितः शङ्कायुक्ता जाता । तया शङ्कया तयोर्दोषनिवृत्त्यर्थं मारकः कालः प्रतीक्षितः । स हि वर्षशतात्मको भवति, अतः पूर्णे वर्षशते पुत्रौ प्रसुषुवे । उभौ पुत्रौ जनितवती । तौ यमलावपि दुःखदातृत्वाद्यमावित्युक्तौ । पुत्रापराधेन भर्ता स्वात्मानं त्यक्ष्यतीति भयाच्छतवर्षधारणमिति बोधयति—साध्वीति । एते वर्षा मानुषाणाम् ॥ २ ॥

एवमुत्पत्तिमुक्त्वा तस्यास्तामसत्वं ज्ञापयितुमनिष्टसूचकान् बहूनुत्पातान् वर्णयति । कालप्रतीक्षा कृतेति संवत्सरात्मकः कालस्तत्राऽनिष्टसूचक इति द्वादशभिरनिष्टानि, फलं चैकेनोच्यते । तत्र प्रथमं सामान्यमनिष्टमाह—

उत्पाता बहवस्तत्र निपेतुर्जायमानयोः ।
दिवि भुव्यन्तरिक्षे च लोकस्योरुभयावहाः ॥ ३ ॥

उत्पाता इति । तत्राश्रमे, तदा वा । तयोर्जायमानयोः सतोः, त्रिविधा अपि जाताः । तेषां देशभेदेनैव त्रैविध्यमाह—दिवि भुव्यन्तरिक्षे चेति । सात्त्विकराजसतामसक्रमोऽत्र । चकारादात्मनि भूतकृतानि च । तेषां फलमाह—लोकस्योरुभयावहा इति । लोकस्येति सामान्यतः, सतां वा । उरुभयमावहन्तीत्यधिकं भयं लोकनाशात्, धर्मनाशाद्वा ॥ ३ ॥

उद्देशत उक्त्वा स्वरूपतस्त्रिविधानाह—

सहाचला भुवश्चेलुर्दिशः सर्वाः प्रजज्वलुः ।
सोल्काश्चाऽशनयः पेतुः केतवश्चाऽऽर्तिहेतवः ॥ ४ ॥

*सहाचला इति । एतेऽपि दिव्या इति केचित् । पर्वतसहिता भुवः खण्डशश्चेलुः । अनवच्छिन्ना चेत्, भूधचालेति वदेत् । सहाचला इत्यचलानामपि पृथक् चलनम् । दिग्दाहोऽन्तरिक्षस्थः, अन्तरिक्षे प्रतिष्ठिता दिश इति । सर्वा अष्टौ । जज्वलुरिति न धूममात्रम् । दिव्यानाह—सोल्काश्चाऽशनय इति । उल्का अग्निसदृशा नक्षत्ररूपाः, तत्सहिता अशनयो वज्राः । केतवः शतं धूमकेतुप्रभृतयः । सर्वेषां साधारण्येन भयजनकत्वेऽपि केतूनामार्तिजनकत्वमधिकम् । यैः पातो दृश्यते, तेषां शरीरे पीडा भवतीति विशेषः । आर्तिहेतवो यमदूतादयो वा ॥ ४ ॥

---

प्रकाशः।

* सहाचला इत्यत्र । दिव्यानाहेति । एतेनोक्ता उत्पाता नारदसंहितोक्तेभ्यो भिन्नविधास्ततोऽपि भीषणा इति ज्ञाप्यते । तेन तद्विरोधो न दोषः ।

भौतिकमाह—

वायुर्ववौ सुदुःस्पर्शः फट्कारानीरयन्मुहुः।
उन्मूलयन्नगपतीन्वात्यानीको रजोध्वजः॥ ५॥

×वायुरिति। वायुर्द्विविधः, वात्यारूपः सदागतिश्च। उभयविधोऽप्यनिष्टसूचक इत्याह। तत्र सदागतेरनिष्टसूचकरूपमाह—सुदुःस्पर्श इति। निरन्तरगमनमेव स्वभावतोऽनिष्टसूचकम्, तत्रापि सुष्ठु दुष्टः स्पर्शो यस्य। फट्कारानीरयन्निति दुष्टशब्दाननुकुर्वन् वातीत्यर्थः। मुहुरित्येकस्मिन्नपि धाराप्रवाहे बहुधा शब्दजननम्। वात्यारूपस्याऽनिष्टलक्षणमाह—उन्मूलयन्निति। नगपतीन् वृक्षश्रेष्ठान् मूलत उत्पाटयन् भ्रमणवायुर्गगनपर्यन्तं रज उत्थापयतीत्यर्थः॥ ५॥

मेघानामनिष्टलक्षणमाह—

उद्धसत्तडिदम्भोदघटया नष्टभागणे।
व्योम्नि प्रविष्टतमसा न स्म व्यादृश्यते पदम्॥ ६॥

उद्धसदिति। ऊर्ध्वं हसन्त्य इव यास्तडितः, तत्सहिता येऽम्भोदाः, तेषां या घटा समूहः, तया कृत्वा नष्टो भागणस्तेजःसमूहो यत्र। एतादृशे व्योम्नि प्रविष्टं यत्तमः, तेन कृत्वा किमपि पदम्, ज्योतिषामन्येषां वा, न व्यादृश्यते स्म। स्मेति लौकिकं प्रमाणं संमत्यर्थमुच्यते। तडितां हासतुल्यता ऽनिष्टम्, अत्यन्तं तमश्च। तमस इति पाठे तमसः पदं मेघादिकं न दृश्यत इत्यर्थः॥ ६॥

समुद्रस्याऽनिष्टलक्षणमाह—

चुक्रोश विमना वार्धिरुदूर्मिः क्षुभितोदरः।
सोदपानाश्च सरितश्चुक्षुभुः शुष्कपङ्कजाः॥ ७॥

चुक्रोशेति। विमना इव वार्धिः समुद्रश्चुक्रोश। ऊर्ध्वमूर्मयो यस्य। क्षुभितमुदरं यस्य। मकराद्युद्वेगेन ज्ञायते। सोदपानाः कूपादिसहिताः सरितः पुष्करिण्यश्च शुष्कपङ्कजा जाताः। सरित एव वा ७

मुहुः परिधयोऽभूवन्सराह्वोः शशिसूर्ययोः।
निर्घातो रथनिर्ह्रादा विवरेभ्यः प्रजज्ञिरे॥ ८॥

चन्द्रसूर्ययोरेकदैव राहुग्रस्तयोर्मुहुः परिधयोऽभूवन्। निर्घातो निरभ्रविद्युत्पातो जात इत्यर्थः। निर्ह्रादाः शब्दाः, रथघोषसदृशाः। विवरेभ्यः प्रदरेभ्यः, कन्दरादिभ्यः, पातालादिभ्यो वा सर्पादिबिलेभ्यो वा प्रकर्षेण जाताः॥ ८॥

अन्तर्ग्रामेषु मुखतो वमन्त्यो वह्निमुल्बणम्।
शृगालोलूकटङ्कारैः प्रणेदुरशिवाः शिवाः॥ ९॥

---

प्रकाशः।

× वायुरित्यत्र। सुष्ठु दुष्ट इति। स्फुटं दुष्टः।

अन्तर्ग्रामेषु मुखत उल्वणं वह्निं वमन्त्यः शिवाः शृगाल्यः शृगालोऽप्युल्कटङ्कारैः सहिता वाचः प्रणेदुः प्रकर्षेण नेदुः । अशिवा इति लोकेऽपि तेषाममङ्गलत्वं प्रसिद्धमिति ज्ञापितम् ॥ ९ ॥

शुनामाह—

संगीतवद्रोदनवदुन्नमय्य शिरोधराम् ।
व्यमुञ्चन्विविधा वाचो ग्रामसिंहास्ततस्ततः ॥ १० ॥

संगीतवदिति । *यथा लोके गीतं भवति, यथा वा रोदनं पाश्चात्त्यानाम्* । शिरोधरां ग्रीवामुन्नमय्य विविधा वाचो व्यमुञ्चन् । ततस्ततः परितः । ग्रामसिंहाः श्वानः ॥ १० ॥

गर्दभानामनिष्टलक्षणमाह—

खराश्च कर्कशैः क्षत्तः खुरैर्घ्नन्तो धरातलम् ।
खार्काररभसामत्ताः पर्यधावन्वरूथशः ॥ ११ ॥
रुदन्तो रासभत्रस्ता नीडादुदपतन्खगाः ॥ १२ ॥

खराश्चेति । गर्दभाः कर्कशैः खुरैर्धरातलं घ्नन्तः, तज्जातिशब्देन खार्कारेण, रभसमत्यन्तमामत्ताः, रभसा वा मत्ताः, वरूथशः पर्यधावन् । तच्छब्देनाऽनिष्टान्तरमाह रुदन्तः खगा रासभत्रस्ताः सन्तः नीडादूर्ध्वमपतन् । रासभशब्देन तेऽपि भीता इत्यर्थः ॥ ११ ॥ ॥ १२ ॥

पशूनामनिष्टलक्षणमाह—

घोषेऽरण्ये च पशवः शकृन्मूत्रमकुर्वत ।
गावोऽत्रसन्नसृग्दोहास्तोयदाः पूयवर्षिणः ।
व्यरुदन् देवलिङ्गानि द्रुमाः पेतुर्विनाऽनिलम् ॥ १३ ॥

घोषे आभीराणां गृहे, अरण्ये च भयात् शकृन्मूत्रं चाऽकुर्वत । गोमययुक्तं वा मूत्रमकुर्वत । गावश्चाऽत्रसन् । असृग्दोहा रुधिरदोह्यः । तोयदा मेघाश्च पूयवर्षिणो जाताः । पूर्वं तेषामाच्छादकत्वमेवोक्तम् । देवलिङ्गानि देवप्रतिमा विशेषेणाऽरुदन्, शब्दं नेत्राज्जलं चाऽत्यजन् । द्रुमाश्चाऽनिलव्यतिरेकेण पेतुः ॥ १३ ॥

ग्रहयुद्धं च जातमित्याह—

ग्रहान्पुण्यतमानन्ये भगणांश्चाऽपि दीपिताः ।
अतिचेरुर्वक्रगत्या युयुधुश्च परस्परम् ॥ १४ ॥

+पुण्यतमान् शुक्रादीन् । अन्ये शनैश्चरादयः, आलक्ष्य पेतुरिति संबन्धः । अपीडयन्निति पाठ्यर्थात् ।

---

प्रकाशः

+ ग्रहानित्यत्र । आलक्ष्य पेतुरिति सम्बन्ध इति । अग्रे च वक्रगत्येति वक्तव्यत्वात्तस्याश्चाऽति-

---

१ कर्कशैस्तीक्ष्णैः । हे क्षत्तः ! खार्कारो गर्दभजातीयः शब्दः, तस्मिन्रभस सम्भ्रमो येषाम् । वरूथशः सूथशः । ११ । खगानामाह—'क' पुस्तके तु इयं व्याख्या ।

भगणाः सर्वाण्येव नक्षत्राणि। दीपिता जाताः, केनचित् ज्वालिता इव जाता इत्यर्थः ॥ १४ ॥

एवं निमित्तान्युक्त्वा तेषां फलमाह—

**दृष्ट्वाऽन्यांश्च महोत्पातानतत्त्वविदः प्रजाः।**
**ब्रह्मपुत्रानृते भीता मेनिरे विश्वसंप्लवम् ॥ १५ ॥**

अन्याननुक्तानपि महोत्पातान् सूर्यपातचन्द्रपातरूपान्। अतत्त्वविदः प्रजा अस्य विश्वस्य संप्लवं प्रलयमेव मेनिरे। परं ये चत्वारो मूलभूताः सनकादयस्तद्व्यतिरेकेण। सर्व एव भीता जाताः, प्रलयं च मेनिरे ॥ १५ ॥

एवमनिष्टलक्षणानि सफलानि निरूप्य वृद्धिरूपामुत्पत्तिमाह—

**तावादिदैत्यौ सहसा व्यज्यमानात्मपौरुषौ।**
**ववृधातेऽश्मसारेण कायेनाऽद्रिपती इव ॥ १६ ॥**

मधुकैटभौ आदावेव दैत्यत्वं प्राप्ताविति वा, दितिपुत्राणामादिभूतौ वा। सहसा कारणकालविलम्बव्यतिरेकेण। व्यज्यमानमात्मनि पौरुषं ययोः। व्यज्यमानात्मानौ पुरुषाविति वा। तौ हि पूर्वजन्मनि भगवत्सारूप्यं प्राप्तौ, इदानीमपि तथैव व्यज्यमानदेहौ सन्तौ पुरुषौ जातौ, न तु रूपान्तरेणेत्यर्थः। अथवा, व्यज्यमान आत्मनि पुरुषो याभ्याम्। अन्तश्चेद्भगवांस्तादृशरूपो भवति, तदैव बहिरन्यश्चतुर्भुजादिरूपो भवति; तथेमावपि वैजयन्त्यादियुक्तौ। अश्मवत्सारेण दृढेन कायेन, अद्रिपती इव मेरू इव, ववृधाते ॥ १६ ॥

तयोर्वृद्धिं वर्णयति—

**दिविस्पृशौ हेमकिरीटकोटिभिर्निरुद्धकाष्ठौ स्फुरदङ्गदाभुजौ।**
**गां कम्पयन्तौ चरणैः पदे पदे कट्या सुकाञ्च्याऽर्कमतीत्य तस्थतुः ॥१७॥**

दिविस्पृशाविति। हेमकिरीटयोःकोटिभिर्दिविस्पृशौ। द्वितीयार्थे सप्तमी, अलुक् च। स्फुरदङ्गदयुक्तौ भुजौ। अङ्गदावित्यङ्गदा, 'सुपां सुलुक्' इत्याकारादेशः। पदे पदे गां कम्पयन्ताविति भूमिं रसातलं नेतुमुद्यताविव। कार्येण तयो रूपमनुमेयमित्यर्थः। सुकाञ्च्या शोभना काञ्ची यत्र तादृश्या, कट्या अर्कमतीत्य तस्थतुः। एतावदूर्ध्वप्रमाणौ यावता कटिः सूर्यमण्डलादूर्ध्वं भवति ॥ १७ ॥

एवं तयोर्वृद्धिमुक्त्वा नामकरणादिसंस्कारानाह—

**प्रजापतिर्नाम तयोरकार्षीद्यः प्राक्स्वदेहाद्यमयोरजायत।**
**तं वै हिरण्यकशिपुं विदुः प्रजा यं तं हिरण्याक्षमसूत साऽग्रतः ॥१८॥**

प्रजापतिः कश्यपस्तयोर्नामाऽकार्षीत्। तन्मध्ये प्राग्यः स्वदेहाद्रेतोरूपेण अजायत। यद्यपि

---

प्रकाशः।

चारेण सम्बन्धात् ग्रहानिति द्वितीयायाश्चाऽतियुयुधुरित्यनेनाऽसम्बन्धात् पूर्वश्लोकस्थां क्रियामादायैवं व्याख्यातम्।

स्वस्मिन् न प्रवेश, तथापि पश्चादपि तथोत्पन्नबीजसम्बन्धात् स्वदेहादजायतेत्युक्तम्। तत्र हि बीजमेव पुत्रत्वे कारणम्। यमयोर्मध्ये य पश्चात् उत्पद्यते मातृत, स पितृत प्रथममुत्पन्न इति ज्ञेयम्, क्रमेण प्रविष्टयोर्वैपरीत्येनैव निर्गमनसम्भवात्। त हिरण्यकशिपुं विदुः प्रजाः। सा दितिर्यमग्रे असूत, त हिरण्याक्ष विदुरित्यर्थ। अतो हिरण्याक्ष प्रथमत उत्पन्नोऽपि कनिष्ठः ॥ १८ ॥

तत्र हिरण्यकशिपोर्दोषरूप वासनाया वक्तव्यमिति स्थितिमात्रमत्र सूच्यते द्वितीयस्याऽतिक्रमाभावाय—

**चक्रे हिरण्यकशिपुर्दोर्भ्यां ब्रह्मवरेण च।**
**वशे सपालॉल्लोकांस्त्रीनकुतोमृत्युरुद्धतः ॥ १९ ॥**

अयं द्विभुजोऽपि भुजद्वयेनैव, ब्रह्मवरेण च सह, लोकपालसहितांस्त्रीनेव लोकान् वशे चक्रे। तस्य धर्मो मोक्षश्च नाऽस्तीत्याह—अकुतोमृत्युरुद्धतश्च जात इति। मृत्युरेव नाऽस्तीति मृत्युविशेषे मुक्तिः सुतरामेव नास्ति। उद्धतत्वान्न धर्म, नम्रभाव एव तदुत्पत्ति ॥ १९ ॥

एव सामान्यतो हिरण्यकशिपुपराक्रममुक्त्वा हिरण्याक्षस्य दोषत्वज्ञापनाय कृतमुपद्रव स्वर्गादावाह—हिरण्याक्षोऽनुज इत्यादिषड्भि। प्रयत्नश्च भयोत्पत्तिरूप कार्य च तस्य तत्। तेन गर्वस्ततो मादस्तस्मात्सर्वभयं पुनः ॥ १ ॥ प्रथमं तस्य देवविरोधार्थं यत्नमाह—

**हिरण्याक्षोऽनुजस्तस्य प्रियः प्रीतिकृदन्वहम्।**
**गदापाणिर्दिवं यातो युयुत्सुर्मृगयन् रणम् ॥ २० ॥**

हिरण्याक्षोऽनुज इति। हिरण्यकशिपोरनुज। तस्येवाऽस्याऽपि जगत्त्रय वश इत्युक्त भवति। प्रिय इति तस्य प्रीतिविषयत्वात् हिरण्यकशिपुकृत जयादिकमप्येतद्धामीत्युक्तम्। अयमपि प्रीतिकृत्, समानशीलव्यसनाभावे प्रीतिर्नोत्पद्यत इति। ज्येष्ठप्रीत्यर्थं देवविरोधार्थं यत्न कृतवानित्याह—अन्वह गदापाणिर्भूत्वा रण मृगयन्, न दर्शनार्थं नारदवत्, किन्तु युयुत्सुः, देवै सह युद्ध करिष्यन् दिवं ययौ ॥२०॥

ततो देवाना भयोत्पत्त्यर्थं देवदृष्ट तस्य रूपमनुवर्णयति—

**तं वीक्ष्य दुःसहजवं रणत्काञ्चननूपुरम्।**
**वैजयन्त्या स्रजा जुष्टमंसन्यस्तमहागदम् ॥ २१ ॥**

तं वीक्ष्येति। प्रथमत एव तस्य दुःसहो जवो वेग। दूराद् दृष्ट एव क्षणेनैवाऽऽगत्य मारयतीति प्रतीकारासामर्थ्यम्। रणत्काञ्चननूपुरमिति। विरुदावली तस्य निरूपिता जयपरम्पराप्रतिपादिका। वैजयन्त्या श्रिया जुष्टमिति भगवदीयत्वज्ञापकम्, स एव हि वैजयन्त्या जुष्टो भवति। अंसन्यस्तमहागदमिति श्रम साधनाधिक्य चोक्तम् ॥ २१ ॥

एव चतुर्भिर्विशेषणैर्भयजनकं रूपमुक्त्वा भीता देवा पलायितवन्त इत्याह—

**मनोवीर्यमदोत्सिक्तमसृण्यमकुतोभयम्।**
**भीता निलिल्यिरे देवास्तार्क्ष्यत्रस्ता इवाऽहयः ॥ २२ ॥**

---

१ [illegible]

मनोवीर्येति । मन उत्साहः, वीर्यं पराक्रमः, मदो गर्वः; तैः कृत्वा उत्सिक्त उच्छलितः, मर्यादामतिक्रान्त इति यावत् । अतृण्यो निरङ्कुशः । भ्रातुर्नियामकत्वेऽपि तस्यैव तथा कारकत्वादौद्धत्येन नियामकत्वम् । सुनिरङ्कुशः । अत एव न विद्यते कुतश्चिद्भयं यस्य । एवं त्रिदोषयुक्तं दृष्ट्वा भीताः सन्तो युद्धमकृत्वैव निलिल्यिरे लीना जाताः । ननु स्वधनादिकं विहाय कथं लीना इत्याशङ्क्याऽऽह–तार्क्ष्यत्रस्ता इवाऽहय इति । गरुडो हि सर्पान् जीवग्राहं मारयति, न धनादिदानेनाऽपि त्यजति, तथाऽयमिति मत्वा स्वप्राणरक्षार्थं लीना जाता इत्यर्थः ॥ २२ ॥

ततोऽपि गर्वो जात इत्याह—

**स वै तिरोहितान् दृष्ट्वा महसा स्वेन दैत्यराट् ।**
**सेन्द्रान् देवगणान् क्षीबानपश्यन् व्यनदद्भृशम् ॥ २३ ॥**

समानतायां शत्रुत्वम् । पुरुषस्य पुरुषो भवति समानः, न तु क्लीबः । देवत्वं शूरत्वं वा दूरे । महाभिमानश्चैवं मन्यते । ननु कालादिना सर्व एव तिरोहिता भवन्ति, किमाश्चर्यमिति चेत्तत्राऽऽह–महसा स्वेनेति । अयुध्यमाना अपि तत्तेजसैव ते तिरोहिताः, यथा सौरप्रभयाऽन्धकारः । इन्द्रसहितान् सर्वानेव देवविशेषान् स्वकार्येणाऽपि कार्यासाधकान्, स्वरूपेणाऽप्यनुपयुक्तान् । अत एवाऽपश्यन्, भृशं व्यनदत् । तिरोहितज्ञानं क्लीबज्ञाने हेतुः । स्वेनैव महसा तिरोहितान् दृष्ट्वा स्वेनैव महसा दैत्यराट् जात इति भिन्नं वाक्यम् । अत एव क्लीबादिधर्मयुक्तानपि तान् अपश्यन् भृशं व्यनदत् । निकटस्थाश्चेत् नादेनैव मरिष्यन्तीति ॥ २३ ॥

एवं कृत्वा, सुतरां गर्भस्थान्, महागर्वेण ज्वलद्देहः समुद्रे जलक्रीडां कृतवानित्याह—

**ततो निवृत्तः क्रीडिष्यन् गम्भीरं भीमनिःस्वनम् ।**
**विजगाहे महासत्त्वो वार्धिं मत्त इव द्विपः ॥ २४ ॥**

* महामदं[1] ज्ञापयति–ततो निवृत्त इति । क्रीडिष्यन्निति । स्वर्गात् क्रीडार्थमेव समुद्रे आगतः । क्रीडा हि कामसाध्या भवतीति स्थिते क्रोधे युद्धाभिनिवेशे वा क्रीडा न भविष्यतीति ततो मायानिवृत्तः । देवापेक्षया समुद्रं महान्तं ज्ञात्वा समागत इति वक्तुं समुद्रं विशिनष्टि–गम्भीरं भीमनिःस्वनमिति । भयजनकमगाधजलं गम्भीरम् । अनेन समता, शोषाभावश्च तस्य सूचितः । भीमनिःस्वनमिति प्रतिपक्षवाक्यजननायुद्धार्थत्वमपि ज्ञातम् । मत्तत्वादेवं ज्ञानम् । तथापि न युद्धरसेन समागतः, किन्तु क्रीडिष्यन्नेवेति तदाधिक्यम् । विगाहनं मध्ये पातः । तथाकरणे सामर्थ्यमाह–महासत्त्व इति । महत्सत्त्वं यस्येति । अत्रैवं ज्ञातव्यम् । प्रथ-

---

प्रकाशः ।

* ततो निवृत्त इत्यत्र । पूर्वं त्रयोदशाध्यायारम्भे वाराहादिवाराहकल्पाभ्यां कथासंदर्भ उपपादितः, इह तु मतान्तरत्वात् प्रकारान्तरेणोपपादयन्ति–अत्रैवं ज्ञातव्यमित्यादि । अत्रेति मतान्तरे । अस्मिन्

---

[1] महामाद क. ख. ध. ट. च.

कल्पे एतावुत्पन्नौ, मृत्योश्च जयाच्च कल्पान्ते मरणम् । तदैव लोकत्रयं वशे कृतवान्(?)ततो मोहमस्तयो रसातले शयनमादिवराहकल्पे प्रलये च । तत्राऽऽदिवराहकल्प सपूर्णो न वृत्त इति भूम्युत्पत्तिः । देवाना क्रिय्प्रजाना च सृष्टिं कृतवान् ब्रह्मा । तदाऽय कनिष्ठो ज्येष्ठे शयान एव ब्रह्मण प्रात काले स्वर्ग गत । सामिकृतत्वाच्च मध्ये पुनर्भूमिर्निमग्ना । ततोऽपि निवृत्त प्रलयोदक एव पतितो देवाना सृष्टत्वादैत्याधिपतित्वाच्च वरुणो रसातले समानकटाहाशपश्चिमभागे वा स्थितः । मन्वादीना जातत्वात् नारदादयोऽपि पद्मकल्प एवोत्पन्ना उपरि स्थिता । दिती रसातले, कश्यपस्तु उपरि । मग्नाया पृथिव्या जलस्य बाधकत्वाभावात् दैत्योपभोग । अतो नारदवाक्यात् वराहसबन्ध इति सर्वमेव युक्तम् । पुराणानि च एकचतुर्युगवार्तामेव कथयन्ति विशेषत , सामान्यधर्माश्चाऽनूद्यन्ते । चतुर्युगान्तरवार्ता कल्पान्तरवार्ता च मतान्तरमिति न तद्विरोध शङ्कनीय. । श्रुतार्थापत्तिरत्र प्रमाणम् । मत्तत्वादेर्वाब्धिमपि प्रविष्टः । तत्र जल निरन्तरमुत्पद्यते । विवेकसहितमदान्मत्त इवेत्युक्तम्, अन्यथा द्विप इत्येव वदेत् । महाघोषं जनयन्नित्यर्थे दृष्टान्त । द्विपशब्देन च तस्य मज्जनाभाव सूचितः, शुण्डव्यतिरेकेण तस्याऽन्तर्जलप्रवेशात् ॥ २४ ॥

ततोऽपि तत्रत्याना महानुपद्रवो जात इत्याह—

**तस्मिन्प्रविष्टे वरुणस्य सैनिका यादोगणाः सन्निधयः ससाध्वसाः ।**
**अहन्यमाना अपि तस्य वर्चसा प्रधर्षिता दूरतरं प्रदुद्रुवुः ॥ २५ ॥**

हिरण्याक्षे प्रविष्टे वरुणस्य सैनिका युद्धकुशला यादोगणा जलेऽविबलवन्तो निधिसहिता सर्वाधिव्यतिरिक्ता सर्वत पुष्टाः ; एतादृशा अपि ससाध्वसा जाताः । अत एवाऽहन्यमाना अपि देववत् तस्य वर्चसा तेजसैव प्रकर्षेण धर्षिता गतसत्त्वा कृता इति दूरतर प्रदुद्रुवु ॥ २५ ॥

एव तस्य सर्वोपद्रवकारित्वेन कायिकीं चेष्टामुक्त्वा वाचिकीं वदन् पूर्वचरित्रसबन्धमेव वदति—स वर्षपूगानिति पद्भि —

**स वर्षपूगानुदधौ महाबलश्चरन्महोर्मीन् श्वसनेरितान्मुहुः ।**
**मौर्व्याऽभिजघ्ने गदया विभावरीमासेदिवांस्तात ! पुरीं प्रचेतसः ॥२६॥**

तत्र पूर्व समुद्र आत्मान महान्त मन्यत इति ज्ञात्वा तस्य हस्तप्रायास्तरङ्गान् गदया ताडितवानित्याह । स हिरण्याक्ष । वर्षपूगानिति कल्पान्तपर्यन्तम् । महाबल इति कालेन तस्य बलक्षयाभाव उक्त । तत्रैव समुद्रे चरन् स्वश्वासवायुना निमितानप्यूर्मीन् तदुत्थान् ज्ञात्वा, मौर्व्या तृणविशेषवद्गया महागदया अभितो जघ्ने । श्वासेनैव यदीत्थं , तदा चलने ताडने वा किं वक्तव्यम् । एव समुद्रनिमर्द्दे क्रियमाणे ततोऽप्यधिकोर्मीन् दृष्ट्वा तस्याऽधिपतिं मरणं ताडयितु तत्पुरीमासेदिवान्, पुर्या निकट प्राप्तवान् । तत्रत्यैव वा । तदृश गत इत्यर्थ । प्रचेतस इति प्रपञ्चित्वाच्च तस्य भयं पलायन वा ॥ २६॥

प्रकाशः ।

प्रवेशे पारऽप गृगजनम्, शेष पूर्ववदेव । नन्वस्त्वेवम् . तथापि ' स भवान् दह्यमानाया सपत्नीनामृृतेति ' इति दितिवाक्य कथ सगच्छते ? पद्मकल्पे कालोत्पन्नप्रश्नोत्पन्नयोरेव सर्गेयारस्तत्त्वेनाऽत्र तेषामभावादित्याकाङ्क्षायामाहु —पुराणानीत्यादि ।

१ दिवम पृथिव्या च क २ तत्रागत क प ख ३ पूर्णा क प ४ उपर्यधानैव क उपधारौव प ख
५ समस्त एव वा ग

तत्र गत्वा तमुपहसतीत्याह—

**तत्रोपलभ्याऽसुरलोकपालकं यादोगणानामृषभं प्रचेतसम्।**
**स्मयन्प्रलब्धुं प्रणिपत्य नीचवज्जगाद मे देह्यधिराज! सङ्गरम्॥ २७॥**

तत्रोपलभ्येति। मारयेदेव तम्, परं दैत्यानां रक्षक इति न मारितवानित्याह—असुरलोकपालकमिति। असुराणां यावन्तो लोका रसातलादिस्थिताः, तेषामयं पालकः। ये असुरलोके उपद्रवकर्तारः, तन्मारका यादोगणाः, लोकपोषकाश्च। अत्र लोके गजाश्वा इव तेऽपि वरुणस्यैव वशे भवन्ति। अतो न हन्तव्य इत्याह—यादोगणानामृषभमिति। किञ्च, स्वभावतोऽपि प्रकृष्टचित्तयुक्तो गर्वादिरहितः, अतो मारणाद्यकृत्वा, ततोऽपि गर्वयुक्तः स्मयन् अल्पं हसन्, प्रलब्धुं वक्रोक्त्या वञ्चयितुम्, नमस्कृत्य सेवकादपि हीनवत् जगाद, अल्पाक्षरैर्विनयपूर्वकं किञ्चिदुक्तवान्। तदेवाऽऽह—हे अधिराज! सङ्गरं देहीति। अयं मां न जानातीति हास्यम्; कार्येणैतज्ज्ञापनीय इति प्रलम्भवचनम्; प्रणिपातो गर्वोत्पादनार्थः; स्वस्य नीचानुकरणमवगणनार्थम्, अन्यथा संयुगे न प्रवृत्तो भविष्यतीति। अधिराजेति संबोधनं तव भयं नास्तीति ज्ञापनार्थम्, त्वयैव सह युद्धं कर्तव्यमिति वरप्रार्थना। सङ्गरं युद्धम्॥ २७॥

एवं याचयित्वा तूष्णींभूते तस्मिन् प्रोत्साहयति गुणान् वदन्—

**त्वं लोकपालोऽधिपतिर्बृहच्छ्रवा वीर्यापहो दुर्मदवीरमानिनाम्।**
**विजित्य लोके किल दैत्यदानवं यद्राजसूयेन पुराऽयजत्प्रभुः!॥ २८॥**

त्वं लोकपाल इति। त्वं यथा भगवान्, तथा षड्गुणैश्वर्ययुक्तः। तस्य षड्गुणानाह—आदौ त्वं लोकपाल ईश्वरः, सर्वपत्यपेक्षयाऽधिपतिस्त्वम्, 'स वै पतिः स्यात्' इति न्यायेन वीर्यवानेवाऽधिपतिर्भवति। अत एव बृहच्छ्रवा अधिककीर्तिमान्। स्पष्टमेव यशः। दुर्मदवीरमानिनां वीर्यापह इति श्रीः। शत्रुजये श्रीर्भवतीति। दुर्मदाश्च ते, वीरा वयमिति मानिनश्च; यावता च तेषां वीर्यं गच्छति तावत्कर्तेति। ते चेन्निःश्रीका भवेयुस्तदैवमिति स्वस्य श्रीमत्त्वम्। ज्ञानमाह—विजित्य लोके किल दैत्यदानवमिति। 'मिथ्याज्ञानेन च तमो ज्ञानेन च परं पदम्' इति वाक्यात् दैत्यानां ज्ञानप्रतिपक्षत्वम्। तत्र दैत्या राजसाः, दानवास्तामसा इति। उभयेषां द्वन्द्वैक्यम्। ज्ञानेनैव हि ते निराकर्तुं शक्यन्त इति। किञ्च, कर्मणाऽपि ते निराकर्तुं शक्या इति यद्राजसूयेन पुराऽयजदित्याह। देवानां लोकपालानां वीर्याधिकारात् क्षत्रियत्वे[1] तेषां परमोत्कर्षहेतू राजसूय इति। तेन दैत्यजयः। प्रभुरिति वैराग्यम्, सापेक्षमसमर्थं भवतीति निरपेक्ष एव प्रभुः॥ २८॥

एवं कृते स्तोत्रे प्रार्थितमभिधातुं मुख्यषड्गुणैश्वर्यसंपन्नमेव निर्दिष्टम्, प्रलम्भवाक्येनोत्पन्नमपि क्रोधं दूरीकृत्य, तथोक्तवानित्याह—

## मैत्रेय उवाच।

**स एवमुत्सिक्तमदेन विद्विषा दृढं प्रलब्धो भगवानपां पतिः।**
**रोषं समुत्थं शमयन्स्वया धिया व्यवोचदङ्गोपशमं गता वयम्॥ २९॥**

---

१ क्षत्रियत्वम् ग.

स एवमिति । ननु स्वयं दैत्यपतिः कथं दैत्यानामहितमुक्तवान् । तत्राऽऽह—उत्सिक्तमदेनेति । दैत्यानां मदे विद्यमानेऽपि सर्वमज्जनार्थं न तदुत्सेकः, अस्य तूत्सेकात् सर्वनाशं करिष्यतीति तन्नाशः कर्तव्य इत्यर्थः । शिक्षाभावायाऽऽह—विद्विषेति । विशेषेण द्वेष्टीति तथा । दृढमिति मर्मोद्घाटनम् । अशक्तोऽन्यथा कथयतीत्याशङ्काव्यावृत्त्यर्थमाह—भगवानिति । तर्हि कथं न मारयतीत्याह—अपां पतिरिति । न हि जलस्थितो वह्निर्ज्वलति, अत एव समुत्थितमपि रोषमशमयदात्मज्ञानेन । तदाह—स्वया धियेति । विशेषेण स्पष्टतया अवोचत् । किं त्वया युद्धमात्रमपेक्ष्यते, मया सह युद्धं वा ? तत्र द्वितीये उत्तरमाह । हे अङ्गेति कोमलसंबोधनं ज्ञानपूर्णत्वबोधकम्, न हि स्वाङ्गं केनचिदुपहन्यते । वयमुपशमं शान्तिं गताः, शस्त्रसंन्यासं गृहीतवन्त इत्यर्थः ॥ २९ ॥

युद्धमात्रं चेदपेक्ष्यते, तदाऽप्येक एवास्ति सर्वेच्छापूरको नाऽन्य इत्याह—

**पश्यामि नाऽन्यं पुरुषात्पुरातनाद्यः संयुगे त्वां रणमार्गकोविदम् ।**
**आराधयिष्यत्यसुरर्षभेहितं मनस्विनो यं गृणते भवादृशाः ॥ ३० ॥**

*पश्यामीति । तुच्छा हि त्वां न मन्यन्ते, ज्ञानी हि आक्रोशं न करोति, इत्याराधयिष्यतीत्युक्तम् । अन्यस्तु अनात्मा न पूजयिष्यतीति । अत्र प्रमाणं मम ज्ञानम् । तदाह—पश्यामीति । पुरुषात् पुरातनादन्यं न पश्यामीति भिन्नं वाक्यं ज्ञानपरम्, अन्यथैवं भङ्ग्या न वदेत् । पुरुषो हि पौरुषयुक्तः, अन्ये सर्वे प्राकृतशरीरसंबन्धात् स्त्रियः, त एव हि परिदृश्यन्त इति । पुरातनादिति बलाधिक्यज्ञापनार्थम्, कालेन हि बलह्रासो भवतीति । अत एव यः संयुगे युद्धे त्वामाराधयिष्यति । संतोषोत्पादनं ह्याराधनम् । संतोषस्तु स्वज्ञानादधिकज्ञाने । तदर्थं तस्य ज्ञानमाह—रणमार्गकोविदामिति । युद्धमार्गेषु परम्परासिद्धेषु युद्धप्रकारेषु कोविदम् । असुरर्षभेति संबोधनमात्मत्वेऽपि मारणार्थम् । आ समन्तात् ईहितं यस्य, सर्वप्रकारेण युद्धाभिज्ञम् । असुरर्षभेषु वा ईहितं यस्य; यथा महान्तोऽसुरा भवन्ति, तथा त्वमित्यर्थः । असुरर्षभा ईहितं यस्येति वा वधे हेतुः, एतद्वधे सर्व एवाऽसुरा हता भवन्ति । असुरर्षभे वा हिरण्यकशिपावहितम्, विधेयविशेषणमेतत् । तस्यैवंकरणे किं सामर्थ्यमित्यत आह—मनस्विनो यं गृणत इति । मनस्विनः शूरा दृढमनसो यं भगवन्तं गृणते । तेन सह युद्धं कृत्वा पराजिता अपि तमेव स्तुवन्ति । एतद्वचनं प्रोत्साहकम्, महता हि सह युद्धं कर्तव्यम् । भवादृशा इति स्तुतिः ॥३०॥

प्रकाशः ।

* पश्यामीत्यत्र । आ समन्तादीहितं यस्येति । अत्र ईहितपदं चेष्टितवाचकम् । असुरर्षभेहितमित्येकपदपक्षेऽर्थमाहुः—असुरर्षभेष्वित्यादि । ईहितमिति वाञ्छितार्थकम् । अस्मिन्नपि पक्षे हिरण्याक्षबोधकस्य त्वामित्यस्य विशेषणमिदम् । तथा त्वमिति । अत्र तथेति पदच्छेदः । भगवद्वाचकस्य यमित्यस्येदं विशेषणमित्यभिप्रेत्य पक्षान्तरमाहुः—असुरर्षभा इत्यादि । एवमपि क्लिष्टत्वात् पक्षान्तरमाहुः—असुरर्षभे वेत्यादि । विधेयविशेषणमिति । क्रियाविशेषणम् । तथा च, तस्मिन्नहितं यथा स्यात्तथा त्वामाराधयिष्यतीत्यर्थः ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे सप्तदशाध्यायविवरणं सम्पूर्णम् ।

---

१ एतत्तूष्णीमाह ग.

एवं युद्धार्थं प्रतियोगित्वेन भगवन्तं निरूप्य तस्य प्राप्तिमाह—

**तं वीरमारादभिपद्य निर्भयः शयिष्यसे वीरशये श्वभिर्वृतः।**
**यस्त्वद्विधानामसतां प्रशान्तये रूपाणि धत्ते सदनुग्रहेच्छया॥ ३१॥**

तं वीरमिति। सोऽपि भगवान् वीरः, युद्धमेवाऽभीप्सते। तदर्थमेव शापादिदानमिति भावः। कालविलम्बोऽपि नास्तीत्याह—आरात् निकट एवेति। अभिपद्येति। यथा शलभोऽग्नौ पतति, तद्वत्पतिष्यसीति भावः। तथापि त्वं निर्भयो मृत्युभयरहितः, न हि भगवन्तं प्राप्य कश्चिन्मृत्युना म्रियते, अतो मृत्युभयरहित इत्यर्थः। विस्मय इति पाठे विगतगर्वः, तावदेव गर्व इति। ततः कस्य जयो भविष्यतीत्याशङ्कायामाह—त्वमेव वीरशये शयिष्यस इति। रणाङ्गणे शयनं करिष्यस इत्यर्थः। वित्वाऽपि निर्भयत्वज्ञापनार्थम्। रणाङ्गणेऽपि शयनं सुखादपि सम्भविष्यतीति तन्निवृत्त्यर्थमाह—श्वभिर्वृत इति। मृतमेव श्वानो वेष्टयन्तीति। ननु युद्धमात्रे प्रार्थिते कामितपूरको भगवान् किमिति मारयेदित्याशङ्क्याह—यस्त्वद्विधानामिति। यद्यपि त्वत्कामितं तावदेव, तथापि देवानां कामितं त्वन्मरणमिति मारयिष्यति। यतः—असतां प्रशान्तय एव नानाविधानि रूपाणि भगवान् बिभर्ति वराहादीनि, अन्यथा अवतारप्रयोजनं न स्यात्। नन्वात्मा भगवान् किमिति मारणार्थमेवं रूपाणि करोतीत्याशङ्क्याह—सदनुग्रहेच्छयेति। स तु रूपाणि सतामनुग्रहार्थमेव गृह्णाति। धर्मरक्षार्थमेव प्रवृत्तिः, आनुषङ्गिकं त्वसतां मारणं नान्तरीयकमिति। अनेन पुनरपि कामो नोत्पत्स्यत इत्यप्युक्तम्, अन्यथा पुनः कालान्तरे एवंभावे कः समाधानं कुर्यादिति भावः॥ ३१॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां तृतीयस्कन्धे सप्तदशाध्यायविवरणम्।

---

## अष्टादशाध्यायविवरणम्।

× अष्टादशे स्थितिस्तस्य भगवत्सन्निधौ स्फुटा।
निरूप्यते, तथा शापात्पारुष्यं विजयस्ततः॥ १॥
स्थित्यध्यायोऽयमाख्यातो ब्रह्मणा तत् स्थिरीकृतम्।
उत्पत्तावेव शापो हि मारणं ब्रह्मवाक्यतः॥ २॥

---

प्रकाशः।

× अथाऽष्टादशाध्यायं विवरीतुमवसररूपां सङ्गतिं बोधयन्त एवाऽध्यायार्थमाहुः—अष्टादश इत्यादि स(म्पादने) पादेन। ननु समाप्तौ मारणोपक्रमस्याऽप्युक्तत्वान्नैकान्ततः स्थित्यध्यायत्वं निश्चेतुं शक्यमित्याकाङ्क्षायामाहुः—ब्रह्मणेत्यादि। 'आक्रीडयाल्वदेव' इति कथनेन विनाशसामर्थ्यसान्निध्याभावबोधनात् ब्रह्मणा पारुष्यं सर्ववाक्यैः स्थिरीकृतम्। अतः सुखेन स्थित्यध्यायत्वं निश्चेतुं शक्यमित्यर्थः।

१ अपीति नास्ति क. ख. घ.

युद्धमात्रे हरीच्छा हि कायवाङ्मनसा तु सा ।
उभयोरुद्यमोक्त्यैव युद्धं मानसमीरितम् ॥ ३ ॥
कायिकं चाऽग्रिमाध्याये मध्यमं मध्यमे मतम् ।
अतो विरोधवाक्यानामुभयेषां न दूषणम् ॥ ४ ॥
प्रसङ्गो दर्शनं वाक्यं त्रिभिर्भक्तानुरोधनम् ।
पुनराक्षेपवाक्यं च शत्र्वैक्यकरणं तथा ॥ ५ ॥
वाक्योपशमनं वाक्यं त्रिभिर्मानस्तथोद्यमः ।
युद्धं पाड्भिर्भगवत्स्थात् ब्रह्मप्रार्थनमन्ततः ॥ ६ ॥
उभयोर्वचनं पाड्भिर्युद्धं चैव तयोभयोः ।
स्थितिरेषा तस्य हरौ तत्पोपकमिहाऽपरम् ॥ ७ ॥

प्रथमं युद्धार्थं तयोः प्रसङ्गमाह—

## मैत्रेय उवाच ।

तदैवमाकर्ण्य जलेशभाषितं महामनास्तद्विगणय्य दुर्मदः ।
हरेर्विदित्वा गतिमङ्ग! नारदाद्रसातलं निर्विविशे त्वरान्वितः ॥ १ ॥

तदैवमिति । जलेशो वरुणः । तदा एव तद्वचनमाकर्ण्य महामना उत्साहयुक्तो जातः । यद्यपि मरणं श्रुतम्, तथापि तदविगणय्यैव महामना जात इति सम्बन्धः । तत्र हेतुः—दुर्मद इति । दुष्टो मदः स्वानिष्टं न बोधयतीति । भगवन्तं भक्त एव जानातीति नारदः पृष्टः । भगवत्कार्यकर्तृत्वात् नारदस्याऽपि समागमनम् । अतो नारदाद्धेतोः, हरेर्गतिं विदित्वा, तत्सद्भावदेशस्य श्रुतत्वात्, युद्धाभिनिविष्टस्त्वरान्वितो रसातलं निर्विविशे ॥ १ ॥

ततो दर्शनमाह—

दद‍र्श तत्राऽभिजितं धराधरं प्रोन्नीयमानावनिमग्रदंष्ट्रया ।
मुष्णन्तमक्ष्णा स्वरुचोऽरुणश्रिया जहास चाऽहो! वनगोचरो मृगः ॥ २ ॥

यथाऽन्यदर्शने तस्याऽवज्ञोत्पन्ना, न तथा भगवद्दर्शने इति ज्ञापयितुं भगवन्तं विशिनष्टि । तत्र रसातले अभिजितम्, धराधरम्, प्रोन्नीयमानावनिम्, मुष्णन्तमिति चतुर्धा । परात्रमस्तथा कार्यमिति धर्म

### प्रकाशः ।

नन्वेवं सति मर्से(सर्पे)तन्मारणं किमिति प्रार्थ्यत इत्याकाङ्क्षायाम्, तदपि पर्यवसानतः स्थितेरेव बोधकमित्येतदुपपादयन्ति—उपचादित्यादिसार्धाभ्याम् । सेति । युद्ध इति । मध्यममिति । वाचिकम् । तथा च, यदि ब्रह्मा न वदेत मारयेदेव, युयुत्साया अपूरितत्वात् । अत इच्छाबोधकत्वाद्ब्रह्मवाक्यमपि स्थितावेव पर्यवस्यतीत्यर्थः । एवमध्यायार्थं निरूप्य तद्गतानि वाक्यानि विभजन्ते—प्रसङ्ग इत्यादिद्वाभ्याम् ।

१ इतिरिष्टा ग २ हि ग ३ मारणयारणम्, मारणवारणम् ख प ह ४ तत्त्वेषम् ग ५ उन्नीयमानम ख ग घ ङ

रत्वबोधनम् । शत्रोः पराजयश्चेति सहजं तच्चतुष्टयम् । १ । अमितो जितं यस्य । आकारदर्शनेनैव तस्य सर्वतो जयो लक्ष्यते । धरां बिभर्तीति तथा । धरायां वा अधरं यस्य । तत्र दृष्टवत् इत्यतोऽपि भगवद्दर्शनेऽपि न स्वस्मिन् भगवति वा क्षोभ उत्पन्नः । दंष्ट्राया अग्रमग्रदंष्ट्रा * पूर्वं निरूपिता, तया प्रोह्यमाना अवनिर्येन । अनेन शत्रुः कार्यासक्त इति सूचितम् । स्वस्य हिरण्याक्षस्य रुचः, अरुणश्रिया अक्ष्णा मुष्णन्तम् । दैत्यः सुवर्णवर्णः, कार्याभिनिविष्टस्य भगवतोऽप्यक्षि अरुणवर्णम्, रजोगुणप्राकट्यात् । अनेन भगवद्ग्रे स्यात्मानं भगवन्तं च न दृष्टवान् इत्युक्तम् । एवं ज्ञात्वाऽपि अग्रिमभगवल्लीलेच्छायाः प्राधान्यात् जहास । ददर्श जहास च । चकारादग्रिमवचनान्यपि संगृहीतानि । तान्याह—अहो वनगोचरो मृग इति । हास्यरूपं चैतत् । अहो आश्चर्यम्, मृगोऽरण्यवासी अवनगोचरः, वनरहितभूमौ तिष्ठतीति । वने जले वा चरतीति तादृशो मृगोऽयमिति । भगवद्बुद्ध्या समागतम्, अयं तु वनगोचरो मृग इत्यर्थः ॥ २ ॥

अस्तु यथा तथा रूपम्, युद्धं तु कर्तव्यमित्यभिप्रायेणाऽऽह—

**आह्येनमेह्यज्ञ ! महीं विमुञ्च नो रसौकसां विश्वसृजेयमर्पिता ।**
**न स्वस्ति यास्यस्यनया ममेक्षतः सुराधमाऽऽसादितसूकराकृते ! ॥ ३ ॥**

एनं भगवन्तमेवमाह—हे भगवन्, एहि । कदाचिदात्मानं न जानातीति तथा संबोधनम् । युद्धार्थमाकारयामि । कार्यान्तरेऽहं व्यापृत इति चेत्तत्राऽऽह—महीं विमुञ्चेति । ननु प्रारब्धं कर्म परिसमाप्य पश्चादन्यत्कर्तव्यमिति चेत्तत्राऽऽह—नो रसौकसां विश्वसृजेयमर्पितेति । इयं भूमिरस्मदीया, रसौकसामर्थे विश्वसृजा अर्पितत्वात् । अतोऽन्यस्य भूमिर्न नेया । क्षत्रियधर्मेण चेन्नीयते, तदा युद्धं कृत्वा नेतव्येत्युभयथाऽपि एनां विमुञ्च, अस्मदीयेति । न चिन्ताऽप्येतत्याः कार्या, यतो नोऽस्माकमेषा । न हि स्वामिनि विद्यमाने अन्यस्य चिन्ता युक्तेति भावः । शरीरवन्न्यायतश्चेयं पात्येति ज्ञापनार्थं ब्रह्मणा समर्पितत्वकीर्तनम् । तथाप्यत्यजन्तं प्रत्याह—न स्वस्ति यास्यसीति । मम ईक्षतः सतः, अनया सह स्वस्ति यथा भवति तथा न यास्यसीत्यर्थः । संबोधनद्वयमधिक्षेपजनकम्, क्रोधोत्पादनार्थम् । महद्भिरपि दैवैरस्मद्विरोधे कार्यं कर्तुं न शक्यते, येषां रूपमत्युत्तमम् । रूपेणैव हि महत्त्वममहत्त्वं च ज्ञायते । आसादिता स्वीकृता सूकरवदाकृतिर्येन । पूर्वस्य हेतुः ॥ ३ ॥

दैवप्रेरणया समागतमिति चेत्तत्राऽऽह—

**त्वं नः सपत्नैरभवाय किं भृतो यो मायया हंस्यसुरान् परोक्षजित् ।**
**त्वां योगमायाबलमल्पपौरुषं संस्थाप्य मूढ ! प्रमृजे सुहृच्छुचः ॥ ४ ॥**

त्वं नः सपत्नैरिति । नः सपत्नैर्देवैस्त्वं किमभवाय भृत इत्यधिक्षेपप्रश्नः । कार्यं तु महद्भिरेव न भविष्यतीति कथं त्वयेति ते देवा असाध्यकार्ये नियोजकास्तत्वाऽहिता एवेत्यर्थः । नन्वहं विष्णुः, स्वतन्त्र-

प्रकाशः ।

* ददर्शेत्यत्र । पूर्वं निरूपितेति । 'आयणीयोदयनीयदंष्ट्रः' इत्यनेन निरूपिता ।

१ एवाह. प. ङ.

तया भवच्छत्रुः, कथं देवप्रेरित इत्युच्यत इति चेत्तत्राऽऽह—यो मायया हंसीति। त्वं हि ज्ञातो विष्णुरेव सत्यम् । अभिज्ञानमाह—यस्त्वमसुरान् मायया कापट्येनैव हंसि । मायैव करणम्, ' ये यथा मां प्रपद्यन्ते ' इति वाक्यात्, 'मायेत्यसुराः' इति श्रुते॰; मोक्षाभावार्थं च । अनिष्टनिवृत्त्यर्थं वा माययैव हंसि। कापट्ययुद्धं न वीरत्वबोधकम् । तदाह—परोक्षजिदिति । परोक्षे समागत्य जयं संपादयसीत्यतः प्रत्यक्षे युद्धं न कर्तव्यम्। भूमिं त्यक्त्वा गच्छेत्युपदेशः । तर्हि न क्रियत इति चेत्तत्राऽऽह—त्वां योगमायाबलमिति। तव तु न सहजं बलम्, किन्तु योगमायया । सा त्वस्मदीयेत्यस्मत्स्थाने सा न प्रभविष्यतीत्यल्पमेव पौरुषं स्वतो भविष्यतीत्यर्थः । अत एव सम्यक् स्थापयित्वा सुहृच्छुचः प्रमृजे; ये त्वया मारिताः, तेषामनृणो भविष्यामीत्यर्थः । अहं मारितशत्रूणां संबन्धीति मां न जानासीति तथा संबोधनम् ॥ ४ ॥

ननु देवानां विद्यमानत्वात् कथं दैत्यानां शोकाभावस्तत्राऽऽह—

**त्वयि संस्थिते गदया शीर्णशीर्षण्यस्मद्भुजच्युतया ये च तुभ्यम् ।**
**बलिं हरन्त्यृषयो ये च देवाः स्वयं सर्वे न भविष्यन्त्यमूलाः ॥ ५ ॥**

त्वयि संस्थित इति । अस्मद्भुजच्युतया गदया शस्त्राभेद्येऽपि शरीरे प्रहारेण व्यथिते सम्यक् स्थितिः। अस्मद्भुजच्युतयेति महाबलसंबन्ध उक्तः । ततः किमत आह—ये च तुभ्यं बलिं हरन्ति, ऋषयो देवाश्च । अन्येऽपि स्वतन्त्रा येऽभिमानिनः, तेऽपि सर्वे भवन्मूलका एवेति स्वयमेवाऽमारिता अपि न भविष्यन्ति, उद्भवं न प्राप्स्यन्तीत्यर्थः । तत्र हेतुः—अमूला इति ॥ ५ ॥

एवं दुष्टवचनान्यपि भक्तहितार्थमङ्गीकृतानीत्याह—

**मैत्रेय उवाच ।**

**स तुद्यमानोऽरिदुरुक्तितोमरैर्दंष्ट्राग्रगां गामुपलभ्य भीताम् ।**
**तोदं मृषन्निरगादम्बुमध्याद्ग्राहाहतः सकरेणुर्यथेभः ॥ ६ ॥**

स तुद्यमान इति । अरिर्हिरण्याक्षः, तस्य दुरुक्तय एव तोमरा भल्लविशेषाः, यैर्गजस्तुद्यते । तथा तुद्यमानोऽपि भीतां गामुपलभ्य तोदं मृषन्नेव अम्बुमध्यान्निरगात् । अयुक्तेऽपि तथा निःसरणे दृष्टान्तः—ग्राहेणाऽऽहतः करेणुसहितो यथेभ इति ।

अत्र भगवतो युद्धलीला प्रतिपाद्यत इति, विरोधिनोश्च युद्धसम्भवात्, गदाप्रहार इव विरोधिवचनान्यपि युक्तान्येव । यदि वचनान्यन्यथा व्याख्यायन्ते, तदाऽन्यथा क्रियाऽपि व्याख्येया । सा चेन्नटवद्व्याख्याता, तुल्यं वचनेष्वपि । तथापि भक्तानां श्रवणकटुत्वाद्वचनान्यन्यथा व्याख्यायन्ते, न तु स भागवतार्थः । वस्तुतो हिरण्याक्षो भक्तः, भारती च । तथा सति तानि वाक्यानि स्तुतिपराण्येवेति पुनर्व्याख्यायते—अहो इति स्वभाग्यमभिनन्दति । वने गोभिरुपनिषद्भिश्चर्यते ज्ञायत इत्यधिकारिविशेषण वेदान्तसमधिगम्यो यः, सोऽस्मानिदानीं मृगयतीत्याश्चर्यम् । अत एव भगवन्तं प्रत्याह—हे भगवन्, एहि, अस्मदुद्धारार्थमागच्छ । पृथिवीगमनं न मन्यत इति चेत्तदाह—अज्ञमहीं विमुञ्चेति । अज्ञा चाऽसौ मही च, सा चास्मद्दुःखं न जानाति । भक्तो हि परदुःखाभिज्ञः, अतः सा त्यक्तव्या । नो रसौकसामर्थे । रस एव ओकः स्थानं येषाम् । वयं रसिका भक्ताः, अतोऽस्मदुद्धारं प्रथमतः कुर्वित्यर्थः । तर्हि पृथिव्याः का गतिरिति

१ भा०१।१।११ द. २ तर्हि क

चेत्तत्राऽऽह–विश्वसृजेयमर्पितेति । इयं न स्वभावतस्तव स्थाने समागता, किन्तु ब्रह्मणा अर्पिता । अर्पितत्वात् पुनः प्रत्यर्पणं कर्तव्यम्, तदा ब्रह्मैव तदुद्धारं करिष्यतीत्यर्थः । वयं त्वनन्यगतिकाः, इयं तु सगतिकेत्यपि विशेषः । किञ्च, यद्यस्मदुद्धारमकृत्वाऽनया सह गमिष्यसि, तदा परमदयालोस्तव सुखं न भविष्यतीत्याह–न स्वस्ति यास्यसीति । अनुद्धृतस्य मम ईक्षत एव सतोऽनया सह सुखं न यास्यसीत्यर्थः । न हि भक्तमनुद्धृत्य सदयः कश्चिद्भार्यया सुखमश्नुते । देवास्त्वदुद्धारं न मन्यन्त इति चेत्तत्राऽऽह–सुराधमेति । सुरा अधमा यस्मात् । ते हि निकृष्टाः, किं तेषां संमत्येत्यर्थः । ननु श्रान्तोऽहं भूम्युद्धारेण, रूपान्तरेणोद्धरिष्यामीति चेत्तत्राऽऽह–असादितसूकराकृत इति संबोधनम् । न सादिता अवसादं प्रापिता सूकराकृतिर्येन । इदानीमप्येतद्रूपं नाऽवसन्नम्, अतो भूम्युद्धारमकृत्वा मामुद्धरेत्यर्थः । ननु देवैर्भूम्युद्धारार्थं प्रार्थितोऽहम्, ते हि भूमौ मामाराध्य मुक्ता भविष्यन्ति; अतो बहूपकारसिद्धेर्भूमिरेवोद्धर्त्तव्येति चेत्तत्राऽऽह–त्वं नः सपत्नैरिति । नः सपत्नैः शत्रुभिः सनकादिभिः, तत्सहितैर्देवैर्वा, किमभवाय मोक्षाय भृतो धृतः, भूमौ भगवद्भजनेन मोक्षो भविष्यतीति । तत्तु न भविष्यति, भक्तद्रोहात् । यतोऽस्माकं ते सपत्नाः शत्रवः, न हि भक्तद्रोहे मुक्तिर्भवति । नन्वहमपि भवतां शत्रुरेवेति चेन्नेत्याह–यो मायया हंसीति । त्वं तु असुरान् कापट्येन मारयसे, लोकव्यामोहनार्थम् । वस्तुतस्तेभ्यः सायुज्यं प्रयच्छसि, यतस्ते असुराः; असून् प्राणान्, रान्ति शब्दायन्ते–शब्दयुक्तान् कुर्वन्ति–प्राणघोषं शृण्वन्ति । योगिन इत्यर्थः । प्राणं स्तुवन्तीति वा । न ह्यासन्योपासका मृता भवन्ति, 'मृत्युमत्यमुच्यत' इति श्रुतेः । किञ्च, परोक्षजिद्भवान् । पराणि अक्षाणि इन्द्रियाणि येषाम्, तानेव जयतीति परोक्षजित् । इन्द्रियारामानेव मारयसीत्यर्थः; असुरान् वा । परोक्षजित् । असुरान् लक्षीकृत्य परोक्षं यथा भवति तथा जयतीति । लोकानां स्थानेऽसुरा जिता इति वदति, वस्तुतस्तु तदधीनो भवति, यथा बलिस्थाने । तर्हि समागतेन त्वया किं कर्तव्यमित्यपेक्षायामाह–त्वामिति । त्वां संस्थाप्य शुद्धच्छुचो मृजे । तर्हि समागतेन किम्? योगेन, शास्त्रेण वा सम्यक् स्थापनं क्रियतामित्याशङ्क्याऽऽह–योगमायाबलमिति । योगमायाया अपि बलं यस्मात् । 'ज्ञानिनामपि चेतांसि' इति वाक्यात् योगादिभ्योऽपि योगमायैव बलिष्ठा; तस्या अपि बलं त्वत्तः; स कथं योगेन वशीक्रियत इत्यर्थः । ननु पुरुषरूपं हृदये चिन्त्यताम् 'एवं पुरा धारणया' इति वाक्यानुसारेण । तत्राऽऽह–अल्पपौरुषमिति । पुरुषसंबन्धि रूपं पौरुषम्, अल्पं पौरुषं यस्मात् । ब्रह्माण्डकोटिविग्रहो भवान् । अत एव त्वामेव संस्थाप्य सकुटुम्बः कृतार्थो भविष्यामि । ननु ज्ञानाभावात् तव कथं मोक्षः? तत्राऽऽह–हे मूढप्रेति । मूढेष्वपि प्रकर्षो यस्य, अतस्त्वं मूढानपि कृतार्थान् करोषीति न भक्तिमार्गे ज्ञानापेक्षेत्यर्थः । किञ्च, न केवलमहमेव सकुटुम्बो मुक्तो भविष्यामि, किन्तु सर्व एव भक्ता एवं कृते परमविश्वासेन कृतार्था भविष्यन्तीत्याह–त्वयि संस्थित इति । अस्मद्धेतोस्त्वयि संस्थिते सति, भुजच्युतया गदया शीर्णे शीर्षणि च सति, ये च तुभ्यमृषयो देवाश्च बलिं हरन्ति, चकारात् भक्तेभ्योऽपि, ते सर्वे अमूला न भविष्यन्ति, सर्वे एव समूला भविष्यन्तीत्यर्थः । भगवांश्चेद्धृदये स्थिरो भवति, तदा गदा सुषुम्णानाडी, गतिं ददातीति; भुजानां क्रियाशक्तीनां च्युतिर्यया; तया ब्रह्मरन्ध्रभेदे सति, प्राणादीनां तेन मार्गेण गमने, स्वस्य च भगवति योगे सर्व एव सायुज्यं प्राप्ताः समूला एव भविष्यन्तीत्यर्थः । एवमन्यपराणां शब्दानामन्यपरता योजनीया । तुद्यमाना व्यथायुक्ता ये दैत्याः, तत्सहितो भगवान् भक्तैः कृत्वा जातः । अरयो दुरुक्तितोमरा येषामिति । तेषां परभेदकान्यसद्वाक्यानि

१ चेत्तत्राह. ग. घ. ङ, २ दधातीति. क. घ. ङ.

कदापि न सन्ति, ते हि भक्ता नारदादयः । तैः कृत्वा हिरण्याक्षादिसहितो भगवान् जात इति तत्संबन्धेन स्वविस्मरणं भवतीति भूमेर्भयम् । दंष्ट्रायाश्च यमत्वात्, तदन्ते स्थिता अपि । भगवद्दृष्ट्यभावे पुनः स यमो ग्रसिष्यतीति दैत्यभाव एव तेषां तोदात्मकः । तं भगवान् वस्तुतो न सहते । तेषां तद्भावदूरीकरणार्थं यदि दृष्टिर्व्याप्येत(?),तदा भूमेर्भयं भविष्यतीति तेषां तोदं सहन्नेवाऽम्बुमध्यान्निर्गतः, जले ते यद्यपि संस्कर्तव्याः । ननु किमिति तथा कृतवानित्याशङ्क्य दृष्टान्तमाह—ग्राहेणाहतः, तं गृहीत्वैव यथा करेणुसहितो महागजः । गजस्तु कालाधीन एवेति ग्रहास्तत्र बाधका भवन्ति, ते चेदबाधकाः, तदा करेणुसहितो मोदत इति । दैत्यत्वं भगवतो न बाधकमिति सुखक्रियासाधकत्वात् सेवकस्त्रीसहित एव निर्गत इत्यर्थः ॥ ६ ॥

एवमुभयसहितस्य भगवतश्चरित्रमुभयेषां हितरूपमाह द्वाभ्याम्—

**तं निःसरन्तं सलिलादनु द्रुतो हिरण्यकेशो द्विरदं यथा झषः ।**
**करालदंष्ट्रोऽशनिनिःस्वनोऽब्रवीद्गतह्रियां किं त्वसतां विगर्हितम् ॥ ७ ॥**

**तं निःसरन्तमिति** । प्रथमं हिरण्याक्षस्य कृतार्थतामाह—तं भगवन्तं सलिलान्निःसरन्तमनुद्रुतः । यदैव भगवान् सलिलान्निर्गतः, तदैव भगवत्सायुज्यार्थम्, सैन्धवखिल्यवत्, अनु पश्चात् द्रुतः, कठिनभावं त्यक्तवान् । दैत्यत्वं गतमित्यर्थः । यथाऽग्निसन्निधाने घृतं विलीनं भवति तथेति द्रुतपदं ज्ञापयति । प्रातीतिकार्थे तु संज्ञे धावन्नागत इत्यर्थः । ततः किं जातमित्याकाङ्क्षायामाह—हिरण्यकेश इति । सूर्यमण्डलस्थिता मूर्तिर्भगवतो हिरण्यकेशरूपा भवति, अतस्तादृशं रूपं गृहीतवानित्यर्थः । ननु भगवत्सन्निधिमात्रेण कथमस्य दिव्यरूपप्राप्तिरित्याशङ्क्याऽऽह—द्विरदं गजेन्द्रमनु यथा झषो हूहूर्गन्धर्वो दिव्यरूपं प्राप्तवान् तथेत्यर्थः । प्रासङ्गिकं फलमेतज्जातमित्युक्तम्, उत्तमं फलं वक्ष्यति सायुज्यात्मकम् । ननु तस्य मृत्युः किं जात इत्याशङ्क्याऽऽह—करालदंष्ट्र इति । करालेषु दंष्ट्रा यस्येति । करो भगवदीयोऽलं येषां भगवद्भक्ताः, तेष्वेव दंष्ट्रारूपो यमो गत इत्यर्थः । अथवा, करालेषु सुदर्शनादिष्वेवाऽस्यापि मृत्युः स्थितः। ननु बाधका ग्रहाः किं जातास्तत्राऽऽह—अशनिनिःस्वन इति । शनिरहितानामदुष्टानां ग्रहाणां नितरां स्वनो यत्र । सर्व एव शुभग्रहा एकीभूता इति ग्रहदोषो निवृत्त इत्यर्थः । अत एव भगवन्तं प्रत्याह—गतह्रियामिति । ह्रीशब्देन देहाद्यभिमानरूपाः सर्व एव धर्मा उक्ताः । तुशब्देन तेषां पूर्वधर्मराहित्यमुक्तम्। एवं मुक्तजीवानां निस्त्रैगुण्ये विचरतां किं विगर्हितमिति प्रश्नार्थः । तत्रापि अः कृष्णः, तस्य सतां परमभक्तानाम् । यद्यपि निस्त्रैगुण्याः, तथापि भक्तविरोधिनः पदार्थाः कर्तव्या न वेति सन्देहात् प्रश्नः । प्रतीयमानपक्षे तु शीघ्रं भगवन्तमनुद्रुतः । तस्य तथा सामर्थ्यसूचकम्—हिरण्यकेश इति । तस्य गतिप्रतिबन्धकोऽपि जात इति दृष्टान्तः । ननु युद्धार्थिनो युद्धादाने कथं क्रोधस्तत्राऽऽह—कराला दंष्ट्रा यस्येति । स्वभावतः क्रोधयुक्त इत्यर्थः । अनेन मारयितुमेव प्रवृत्त इत्युक्तं भवति । तथापि स्वस्य वीर्यगर्वात् मारणमकृत्वैव, मम वचनमेव वज्रतुल्यमिति दुष्टेनैव वचनेन तथोक्तवानित्याह—अशनि निःस्वनोऽब्रवीदिति । 'आहूतो न निवर्तेत' इति शास्त्रात् युद्धार्थमाकारितस्य पलायनं शूराणां लज्जाजनकमपि भवति । अतो मुख्यधर्मलज्जापरित्यागे केवलं प्राणरक्षकाणां किं विगर्हितमित्युपहासः। असत्पदेन धर्मराहित्यमप्युक्तम्। अनेन स्वनिवृत्त्यर्थं युद्धायोग्यता निरूपिता । अत एव भगवान् स निवर्तिष्यतीति तदाक्षेपकाणि वचनान्युक्तवान्, यथा न निवर्तेत ॥ ७ ॥

एवमुक्तो भगवान् शीघ्रं भूमिस्थापनकार्यं कृतवानित्याह—

स गामुदस्तात्सलिलस्य गोचरे विन्यस्य तस्यामदधात्स्वसत्त्वम्।
अभिष्टुतो विश्वसृजा प्रसूनैरापूर्यमाणो विबुधैः पश्यतोऽरेः॥ ८॥

× स गामुदस्तादिति। स भगवान्, सलिलस्य उदस्तादुपरि। गोचरे निर्भयदेशे; तत्रैव हि गावश्चरन्तीति। वैकुण्ठे वा स्थित्वा यत्पश्यति तत्स्थानं गोचरमित्युच्यते। ज्योतिर्मण्डलमध्ये वा, अत एव तत्राऽतिप्रकाशः। तादृशे स्थाने गां विन्यस्य, तत्स्थानरक्षकदेवेषु न्यासमिव स्थापयित्वा, तस्यां देवानां भगवदीयमिति ज्ञापनार्थं स्वसत्त्वमदधात्। अत एवाऽस्यां पृथिव्यां सर्वत्र भगवन्मूर्तयः, भगवद्गुणाः, भक्ताश्च तिष्ठन्ति। स्वसत्त्वं नाम शुद्धं सत्त्वगुणम्, तदेव हि धारकं सामर्थ्यं रूपं च। एवं कृते देवानां संतोषो जात इति तैः स्तोत्रं पुष्पवृष्टिश्च कृतेत्याह—अभिष्टुत इति। विश्वसृजा अभिष्टुतः, विबुधैः मरूनवर्षैश्चाऽभिवर्षितः; उभयमुभयेषां वा। पूर्वं हिरण्याक्षस्य युद्धाकरणे अवज्ञा जाता, तां निराकर्तुमाह—पश्यतोऽरेरिति। उत्कर्षो ह्यरिदृष्टः परममुत्कर्षं संपादयतीति च। स्तुतिपक्षे किमिति देवैरभितः स्तुतः, पुष्पवृष्टिश्च कृतेत्याकाङ्क्षायामाह—अरेः पश्यत इति। नैतत्स्तोत्रादिकं काम्यम्, नित्याचाऽतिरिक्तम्; अतो नैमित्तिकमिति ज्ञापयितुं निमित्तद्वयं निर्दिशति। भूमौ समागतायां सर्वत्र यागादिधर्मा भविष्यन्ति, ते सर्वे द्रष्टव्याः; तथाऽनुग्रहार्थं स्तोत्रकरणम्। पश्यतो हेतोः। स्वस्यैव रूपं पश्यद्भविष्यतीति स्तुत्या प्रसन्नस्तथा करिष्यति। प्रसूनवृष्टिश्चाऽरेर्हेतोः, देवानां शत्रुभयं महत्, तन्निवृत्त्यर्थं च। अस्मत्सामृद्धिर्भवन्निमित्तमिति ज्ञापयितुं तथा करणम्॥ ८॥

भगवानेवं भूमिं कृतार्थां कृत्वा भक्तहिरण्याक्षप्रश्ने उत्तरं दातुमुपक्रमं कृतवानित्याह—

परानुषक्तं तपनीयोपकल्पं महागदं काञ्चनचित्रदंशम्।
मर्माण्यभीक्ष्णं प्रतुदन्तं दुरुक्तैः प्रचण्डमन्युः प्रहसंस्तं बभाषे॥९॥

*ननु भगवान् किमर्थमुत्तरं प्रयच्छतीत्याशङ्क्याह—परानुषक्तमिति। परस्मिन्ब्रह्मण्यनुषक्तम्। यो हि सन्मार्गे गन्तुमिच्छति, स उपदेष्टव्य इत्यर्थः। ननु तथापि भगवदुक्तं न ग्रहीष्यतीत्याशङ्कां वारयति—तपनीयोपकल्पमिति। अत्यन्तं तापयोग्य उपकल्पो यस्य। तस्य देहेन्द्रियसामग्री सर्वाऽपि परमतपसा सिद्धा; अतस्तेषा एतत्त्वाऽश्रुते। किञ्च—महागदमिति। महानगदोऽस्य। सर्वरोगनिवर्तिका महती भक्तिस्तस्य वर्तत इति स एव तस्य महानगदः। तथापि कालादिजनितबुद्धिदोषसम्भवात् कथमेकान्ततो वाक्यग्रहणमित्याशङ्क्याऽऽह—काञ्चनचित्रदंशमिति। काञ्चनाऽलौकिकीं भक्तिं प्रति चित्रो दंशो यस्य। भगवता हि तथा चिह्नं कृतमस्ति, येन परमा भक्तिरुत्पत्स्यते। मुनीनां शापलक्षणो दंशो विचित्रो भवति; देहस्थितमसमचीनं दूरीकरोति, स्वतन्त्रभक्तिं च स्थापयति। लोके हि सर्पादिना दष्टो विपरीतो भवति। अत एव मर्माणि

---

प्रकाशः।

× स गामित्यत्र। स्वस्यैव रूपं पश्यद्भविष्यतीति। स्तुतिकर्तृरूपं भगवन्तं पश्यत् भविष्यतीत्यर्थः।

* परानुषक्तमित्यत्र। भगवत्कृतचिह्नस्वरूपमाहुः—मुनीनामित्यादि।

---

१ इतीलाभिकम् क. ध.　　२ अतस्ततनुः. क.　　३ विचित्रः. ग. ग. घ.

स्वस्य पापच्छिद्राण्यभीक्ष्णं प्रकर्षेण तुदन्तम्; परममिन्द्रियनिग्रहं कुर्वन्तम् । अतः सर्वसाधनयुक्तत्वादयमुपदेष्टव्यः । ननु 'ईश्वराज्ज्ञानमन्विच्छेत्' इति वाक्यात् महादेव एव तमुपदेक्ष्यति, किं स्वोपदेशेनेत्याशङ्क्याह–दुरुक्तैः प्रचण्डमन्युरिति । यद्यपि महादेवो गुरुर्भवति, तथापि दुरुक्तैः प्रचण्डो भवति, अवाच्यानि बहूनि सन्तीति । प्रकृष्टा वा चण्डिका यस्य । तत्र गते सा व्यामोहयेत्, लोकाश्चाऽन्यथा वदेयुः । प्रचण्डो मन्युर्यस्येति । मन्युः शिव. । सर्वथा गुणातीतस्य भक्तिरसास्वादनं न भविष्यतीति प्रकर्षेण हसन् । व्यामोहनमपि फलपर्यवसायीति प्रकर्षः । तं पूर्वप्रश्नकारिणं बभाषे । उत्तरदानेन सन्देहं दूरीकृतवानित्यर्थः ।

कथापक्षे तु भगवान् भूमिं स्थापयित्वा तद्वधं करिष्यन् वचनैः क्रुद्धं करोतीत्याह–परानुपक्तमिति । परा पृष्ठतोऽनुपक्तम्, यदि देवानां पुरस्कारं दृष्ट्वा गच्छेद्गच्छेदेव, न गच्छतीति मारणीयः । ननु सर्वात्मा भगवान् कथ नोपेक्षते ? तत्राऽऽह–तपनीयोपकल्पमिति । तपनीयं सुवर्णमयमुपकल्पमङ्गदादिकं यस्य । अनेन तस्य चाऽहंकारो निरूपितः । तस्य वा उपकल्पं प्राप्तदैत्यादिसामग्री सम्यक् तपनीया, अतो मारणीय इत्यर्थः । युद्धयोगोऽपि भवतीत्याह–महागदमिति । महती गदा यस्य । काञ्चनं सुवर्णमयं चित्रं दंशं यस्य । स्वरक्षायां कवचम्, परमारणार्थं गदा । परप्रोत्सहनार्थं चाऽभीक्ष्णं मर्माणि प्रकर्षेण तुदन्तम्। भक्तानुरोधेन यद्भगवानलौकिकं करोति, तन्मर्मेत्युच्यते । लौकिकभक्तवाक्यव्यावृत्त्यर्थम्–दुरुक्तैरिति । एक एवाऽर्थः सुशब्दैरनिष्टशब्दैश्चोच्यत इष्टद्विष्टभेदेन; यथा जेता, यथा घातुक इति । अतो निर्दुष्टपूर्णगुणा अपि भगवतो दुरुक्तैरुच्यमाना मर्मरूपतामापन्नाः, अत एव तत्स्पर्शे तुदन्ति । भगवदपकर्षं श्रुत्वा अन्तःस्थितो महादेवस्तद्वधार्थं प्रचण्डो जात इति प्रचण्डमन्युरित्युक्तम् । प्रहसितं युद्धसमारम्भोत्साहसूचकम् । तामिति पूर्वोक्तदुष्टवाक्यम् । तमालक्ष्य बभाषे ॥ ९ ॥

यद्भुनावं पुरस्कृत्य यथा तेनाऽप्यध्यान्युक्तानि, तथा भगवानप्याह त्रिभिः–

## श्रीभगवानुवाच ।

**सत्यं वयं भो वनगोचरा मृगा युष्मद्विधान्मृगये ग्रामसिंहान् ।**
**न मृत्युपाशैः प्रतिमुक्तस्य वीरा विकत्थनं तव गृह्णन्त्यभद्र ! ॥ १० ॥**

सत्यमिति । भो इति सामान्यतः संबोधनम्, भगवद्विरोधिनो नाम न ग्राह्यमिति ज्ञापनार्थम् । वयं वन एव गोचरा इदया॰, न तु गृहे । सत्यमेवैतत् । वने जले वा तव गोचरा जाता इत्यपि सत्यम् । मृग इति यदुक्तम्, तदपि सत्यमेव । मृगयन्तीति मृगाः । अस्मासु सर्व एव यौगिकोऽर्थः सिध्यति, यतो वयं सर्वकर्तारः सर्वशब्दवाच्याश्च । भक्ने यदुक्तं मृगा वध्या इति, तत्राऽप्यस्माकं योगोऽस्तीत्याह–मृगा इति । मृगयन्तीति मृगाः । पारधावपि ये हन्यन्ते, ते ग्रामसिंहान् मृगयन्तीति । श्वानो हि तन्मारकाः, न हि

---

प्रकाशः ।

अन्यथा वदेयुरिति । दैत्योऽयमिति वदेयुः ।

सत्यमित्यत्र । मृगयन्तीति मृगा इति व्युत्पत्तौ 'मृगये' इति मूलमेव बीजं ज्ञेयम् । मृगं करोतीति मृगयते, नामधातुप्रयोगात् । अत्र 'व्यत्ययो बहुलम्' इत्यनुशासनाद्बहुवचनस्थाने एकवचनं बोध्यम् । तदाहुः–मर्वकर्तार इत्यनेन । पारधाविति । मृगयायाम् ।

तद्व्यतिरेके पारधिर्भवति, 'श्वा मृगग्रहणे शुचिः' इति वाक्यसिद्धत्वात्। परमत्र कश्चन विशेषोऽस्तीति सिद्धमर्थमनुवदति—युष्मद्विधानिति। यादृशा वयं मृगाः, तादृशा एव ग्रामसिंहा भवन्तीति। यदि मृगत्वेन स्तूयते, तदाऽस्माभिरपि सिंहत्वेन स्तूयत इति तथा वचनम्। अथ यदि निन्दार्थमुच्यते, तद्बाधितार्थत्वात् विपरीतार्थत्वाच्चाऽप्रमाणमिति न गृह्णीम इत्याह—न मृत्युपाशैरिति। देवदैत्ययोः साधारणविरोधप्रतिपादनार्थं बहुवचनम्। उत्तरार्द्धे तु निन्दनं तेनैव कृतमित्येकवचनम्। सर्वे च निन्दिता इति देवपक्षे तु बहुवचनमेव। यदि कोऽपि त्वद्वचनमङ्गीकुर्यात्, तदाऽस्माभिरप्यङ्गीक्रियते। अनङ्गीकारे हेतुः—मृत्युपाशैः प्रतिमुक्तस्येति। यथा सन्निपाती वल्गति, तदा मृत्युपाशैः प्रतिमुक्तो बद्धः। एकेनाऽपि पाशेन बद्धो न मुच्यते, किं पुनर्बहुभिः। तस्य तस्मिन् दिवसे कालकर्मस्वभावा भगवांश्च, सर्व एव मारकत्वेनोपस्थिता इति पाशबाहुल्यम्। प्रतिकूलतया मुक्तः प्रतिमुक्त इति। किञ्च, धीरा हि वाक्यं न गृह्णन्ति, किन्तु कृतिमेव। तत्राऽपि विकत्थनं न गृह्णन्ति। युद्धभूमौ सिद्धं जयादिकमन्यत्र कीर्त्यते, तत्रैव विकत्थनं ज्ञातिविरुद्धं को वा गृह्णीयात्? तत्रापि तव, एकाकिनोऽसहायस्य। माहात्म्यं च चोरवदुपद्रवकर्तृत्वादित्याह—हे अभद्रेति। अभद्रं पापम्। अपकर्ता प्रसिद्धोऽपि अपकीर्तिहेतुरेव ॥ १० ॥

यच्चाप्यधर्मकर्तृत्वेन वयं निर्दिष्टा 'महीं विमुञ्च' इति, तत्राप्युत्तरमुच्यते—

**एते वयं न्यासहरा रसौकसां गतह्रियो गदया द्राविताः स्ते।**
**तिष्ठामहेऽथापि कथंचिदाजौ स्थेयं क्व यामो बलिनोत्पाद्य वैरम् ॥ ११ ॥**

×एते वयमिति। ये भवत्संबन्धिनो न्यासहराः, ते वयमेते। स्वरूपप्रदर्शनेन चौरत्वं निराकृत्य प्रभुत्वं स्थापितम्, न तु चौरत्वस्यैवानुवादः। अनेन यज्ञोऽहमित्यप्युक्तम्। न वा यथोचितं कर्तव्यमिति निर्वेदनमर्थः। वक्रोक्तावपि सत्यत्वान्न्यासहरणस्यैते वयमिति निर्देशो दूषणाङ्गीकारपरः स्यात्, अनुवादत्वाभावात्। यदप्युक्तं गतह्रियामिति, तत्राऽऽह—गतह्रिय इति। युद्धमकृत्वा ये पलायन्ते विकत्थन्ते च, ते गतह्रियः। एतदपि सत्यमेव, न हि ह्रीमान् सेवकेन युध्यते। गता प्राप्ता ह्रीर्येनेति वा, 'त्रयो वै गतश्रियः' इत्यत्र तथा निर्णयात्। अन्तर्बाधहेतावपि स्वकीय एव बाधहेतुपदार्थपरित्यागो गतह्रीत्वम्। बहिस्तथात्वमाह—गदया द्राविताः स्त इति। अयुध्यमानस्य ततोऽपसरणं पलायनमेव। मृगा हि लकुटं दृष्ट्वा पलायन्त इत्युचितमेव द्रावणम्, लज्जाभावश्च। तर्ह्यनृतत एव किमिति, पलायनं कथं न क्रियते? इत्याशङ्क्याऽऽह—तिष्ठामहेऽथापीति। अथापि, स्वापकर्षे विद्यमानेऽपि, उत्कर्षो भविष्यतीति बुद्ध्या आजौ संग्रामे कथञ्चित्तिष्ठामहे। कथञ्चिदिति कियत्कालम्। स जानाति भगवांस्तु संग्रामे बहिर्मुखानां पुरतो न तिष्ठति, तथापि भक्तानां ग्लानिव्यावृत्त्यर्थं कथञ्चित्तिष्ठाम इत्यर्थः। किञ्च, बलिना वैरमुत्पाद्य क्व यामः? गन्तव्यदेशाभावादपि स्थीयत इत्यर्थः। बलिष्ठो हि पलायने अन्विष्याऽपि मारयेत्, अतो निग्रहस्य सिद्धत्वात् युद्धमेव क्रियत इति कथञ्चित् स्थीयत इति वक्रोक्तिः। न्यासहरणेन आज्ञाऽकरणेन च वैरोत्पादनम् ११

---

प्रकाशः।

× एत इत्यत्र। अनेनेति। क्रियाशक्तिपूर्णताबोधकेन वाक्येन। दूषणाङ्गीकारपरः स्यादिति। तत्परो युक्त इत्यर्थः।

एवमुक्ते तद्बुद्धौ दीनभावः समायास्यति, ततो युद्धमकृत्वैव गमिष्यतीत्याशङ्क्याऽऽह—

**त्वं पद्रथानां किल यूथपाधिपो घटस्व नोऽस्वस्तय आश्वनूहः ।**
**संस्थाप्य चाऽस्मान्प्रमृजाऽश्रु स्वकानां यः स्वां प्रतिज्ञां नाऽतिपिपर्त्यसभ्यः १२**

+त्वं पद्रथानामिति। पदातीनां रथानां च ये यूथपाः,तेषामपि भवान् किलाऽधिपः। पादरूपा रथा येषामिति वा; अनेन यथासुखं रथबले सामर्थ्यवन्त इत्युक्तम् ; तेषां यूथपाः सेनापतयः। अतस्त्वया एकाकिना युद्धं न कर्तव्यम्, किन्तु सर्वैः संभूत्यागन्तव्यमिति स्वोत्कर्षः सूचितः। नोऽस्मान् घटस्व। वयमपि बहवः, महता हि महद्भिः सह युद्धं कर्तव्यमिति। तदपि युद्धं न कौतुकरूपमिति, किन्तु अस्वस्तये अकल्याणाय, एकतरमारणस्याऽऽवश्यकत्वात्। अथवा, न इति संबध्यते, तदा हि स प्रोत्साहितो भवति। विपरीतवाक्ये वञ्चनोक्तिः। उभयथाऽप्यस्माकं क्षतिरेव, तुच्छजयात्सेवकमारणाच्च। अत एव भगवता न इत्युक्तम्। अस्तु यथा कथञ्चित्। अनूहः सन् आशु घटस्व। कस्मिन्नप्यंशे विचारो न कर्तव्यः। ऊहो विचारः। विप्रभावयुक्तो वा अनूहः, अप्रत्यूह इत्यर्थः। ततः किं स्यादत आह वक्रोक्त्या—संस्थाप्य चाऽस्मान्, चकारात् देवानपि, स्वकानामश्रु प्रमृज। संस्थापनमात्रेणैव अश्रूणि निवृत्तानीति, कथञ्चित्क्लेशैः स्थास्यतीति, बहूनां संबन्धि एकैमश्रित्युक्तम्। युद्धकरणपक्षे बहूनामुपकारः, स्वस्य परमल्पमारणेन मनसि हीनता। युद्धे गुणान्तरमप्यस्तीत्याह—यः स्वां प्रतिज्ञामिति। यस्तु स्वस्य प्रतिज्ञामाधिक्येन न पिपर्ति न पूरयति, सोऽसभ्यः। अतोऽस्मिन्पक्षे प्रतिज्ञापूरणात् सभ्यत्वस्य सिद्धत्वात्, बहूनामुपकाराच्च युद्धं सर्वथा कर्तव्यमित्यर्थः॥ १२ ॥

एवमन्योन्यं वाक्ययुद्धं निरूपितम्, ततः कायिकं युद्धं जातमित्याह—सोऽधिक्षिप्त इति षड्भिः। द्वाभ्यां युद्धं तु दैत्यस्य आरम्भो युद्धमेव च। प्रतीकारश्च युद्धं च द्वयं भगवतः पुनः। मिथयुद्धं ततः स्थूलमुपसंहार एव च ॥ १ ॥ तत्र प्रथमं हिरण्याक्षयुद्धं श्लोकद्वयेनाऽऽह। युद्धे हि क्रोधो मुख्यसामग्री, सा प्रथममुच्यते—

## मैत्रेय उवाच ।

**सोऽधिक्षिप्तो भगवता प्रलब्धश्च रुषा भृशम् ।**
**आजहारोल्बणं क्रोधं क्रीड्यमानोऽहिराडिव ॥ १३ ॥**

सोऽधिक्षिप्त इति। भगवता अधिक्षिप्त इति क्रोधे हेतुः। स तु भक्ते वा, अल्पे वा, न भवतीति स इत्युक्तम्। स दैत्यो महाबलश्च। तदा भगवता स्वभाव आविर्भावित इति भगवतेत्युक्तम्। अधिक्षेपो 'मामसिंहान्' इति। प्रलब्धो वक्रोक्त्या वञ्चितः 'एते वयम्' इत्यादिभिः। चकारात् युद्धार्थमाकारितश्च। तत्रापि रोषेण प्रलब्धः, न तु हितोपदेशेन। अतो दोषत्रयस्य जातत्वात् तस्य त्रिदोषरूपो

---

प्रकाशः।

+ त्वमित्यत्र। न इति। हे पुरुषेत्यर्थः।

---

१ रथपतन. ग २ अतः. ब. प. ङ. ३ क्रेशाः. ग. प. ङ. ४ एवमस्ति. ग रा. घ. ५ अयुद्ध'''ग. प. ङ ६ अन्य. ग. ७ प्रथम उच्यते ङ.

महान् क्रोधो जात इत्याह—आजहारेति । क्वचित् स्थापितमिवाऽऽनीतवानित्यर्थः । उल्बणम् । अनिष्टपर्यवसायी । सहजक्रोधयुक्तः साधने अनर्थपर्यवसायी भविष्यतीति किंवक्तव्यमित्यत्र दृष्टान्तमाह—नीयमान इति । यथा अहिराट् सर्पश्रेष्ठः, कालियोऽन्यो वा ॥ १३ ॥

स यथा स्वपौरुषं प्रकटयति, तथा प्रकटितवानित्याह—

**सृजन्नमर्षितः श्वासं मन्युप्रचलितेन्द्रियः ।**
**आसाद्य तरसा दैत्यो गदयाऽभ्यहनद्धरिम् ॥ १४ ॥**

सृजन्निति । अत्यमर्षितः श्वासं सृजन् गदयाऽभ्यहनदिति संबन्धः । अन्तःस्थितक्रोधेन श्वास उत्पन्नः, बहिःस्थितेन तु क्रोधेन मन्युशब्दवाच्येन प्रकर्षेण चलितानीन्द्रियाणि यस्य तादृशो जातः । एवं तस्य क्रोधव्याप्तिरुक्ता । अत एव शीघ्रमासाद्य भगवन्निकटं समागत्य । भगवता सह युद्धमयुक्तमित्याशङ्क्य तस्य जातिं निर्दिशति—दैत्य इति । महान्तु पश्चादेव मारयति, न प्रथममिति भगवदुक्तपक्षकथनार्थं तस्य प्रथमं मारणमाह—गदयाऽभ्यहनदिति । सिंहो वा, दुःखनिवारको वा, मारितः स्वस्यैवाऽनिष्टहेतुरिति सूचयितुं हरिमित्युक्तम् । एवं मारणान्तं तस्य युद्धं निरूपितम् ॥ १४ ॥

भगवत्कर्तृकं युद्धं श्लोकद्वयेनाऽऽह—

**भगवांस्तु गदावेगं विसृष्टं रिपुणोरसि ।**
**अवञ्चयत्तिरश्चीनो योगारूढ इवाऽन्तकम् ॥ १५ ॥**

× भगवांस्त्विति । तुशब्दः, तद्वत् क्रोधं न कृतवान्, किन्तु शान्त एव तत्प्रतीकारं कृतवानित्याह । भगवतः प्रतीकारे सामर्थ्यं स्वशब्देनोक्तम् । गदावेगमिति । गदा सामस्त्यादस्यैव वेगः, निकटे हि हन्यते इति । तत्राप्युरसि विशेषेण सृष्टम्; तत्रापि रिपुणा । अवञ्चने हेतुत्रयं निरूपितम् । तथापि वञ्चनं कृतवानित्याह—अवञ्चयदिति । कथमवञ्चयदित्याशङ्क्य प्रकारमाह—तिरश्चीन इति । अतिवेगेन भगवान् तिर्यक् जातः । ननु निकटे जायमानः प्रहारः कथं तिर्यग्भावमात्रेणाऽपगच्छेत् ? तत्राऽऽह—योगारूढ इवेति । योगो हि प्राणवशीकरणे हेतुः, अन्तको हि प्राणहारकः, स हि योगेन प्राणं लीनं करोति, तदा मृत्युः प्राणमन्वेषयन्नपि न प्राप्नोति । एवं भगवान् शत्रोः समक्षं स्वरूपं कृतवान् । तावतैव तिरोहित इति प्रहारस्थाने लीनत्वात् वञ्चनं जातमित्यर्थः ॥ १५ ॥

एवं पूर्वकृतप्रतीकारं कृत्वा तूष्णीं स्थितेऽपि, पुनर्मारणार्थं प्रवृत्तः पश्चाद्भगवता ताडित इत्याह—

**पुनर्गदां स्वामादाय भ्रामयन्तमभीक्ष्णशः ।**
**अभ्यधावद्धरिः क्रुद्धः संरम्भाद्दष्टदच्छदः ॥ १६ ॥**

पुनर्गदामिति । स्वां मौर्वीमभीक्ष्णशो भ्रामयन्तमिति । दृढप्रतीकारार्थं परिभ्रमणस्य पूर्वकालता च

---

प्रकाश ।

× भगवानित्यत्र । स्वशब्देनेति । भगवच्छब्देन ।

---

१ स्वतापम् ग २ भ्रातान् विध्रान्. घ ३ पूर्वमस्तप्रतीकारम् ख घ

निरूपिता । हरिर्वराहो मारयितुमभ्यधावत्, धावनं कृत्वा निकटे गत इत्यर्थः । तस्य पूर्वप्रयासवैय र्थ्यादत्यन्तं क्रोधसम्भ्रमेण दष्टो दच्छदो दन्तानां छादनरूपमोष्ठं येन । 'ये यथा मां प्रपद्यन्ते' इत्ये तदर्थमेव कृतवानिति भावः ॥ १६ ॥

ततः किं कृतवानित्याकाङ्क्षायामाह—

**ततश्च गदयाऽरातिं दक्षिणस्यां भ्रुवि प्रभुः ।**
**आजघ्ने स तु तां सौम्य! गदया कोविदोऽहनत् ॥ १७ ॥**

ततश्चेति । गदया कौमोदक्या । दक्षिणस्यां भ्रुवि । आसुरी (?) मृत्युस्तस्य नश्यत्विति पुरुषत्वात् द क्षिणस्यां भ्रुवि ताडितः । ननु कथं सूक्ष्मे स्थाने ताडयितुं शक्यत इत्याशङ्क्याऽऽह—प्रभुरिति । तां कौ मोदकीं गदाम् । हे सौम्य, स्वगदया मौर्व्या, गदायुद्धे कोविदः पण्डितोऽहनत् ॥ १७ ॥

एवमन्योन्ययुद्धमुक्त्वा उपसंहरति—

**एवं गदाभ्यां गुर्वीभ्यां हर्यक्षो हरिरेव च ।**
**जिगीषया सुसंरब्धावन्योन्यमभिजघ्नतुः ॥ १८ ॥**

एवं गदाभ्यामिति । बहुकालयुद्धोपयोगाय गुर्वीभ्यामिति । हर्यक्षो हिरण्याक्षः । हरिर्वाऽक्षाणि यस्य वर्तत इति समानत्वाय हर्यक्षपदप्रयोगः । हरिर्भगवान् । उभयत्र हरिपदप्रयोगोऽवधाय । जयार्थ मेव यत्नो न वधार्थमिति जिगीषयेत्युक्तम् । सुष्ठु संरब्धावित्युभयोर्युद्धहेतुरुक्तः । अन्योन्यमभितो जघ्न तुः ॥ १८ ॥

एवं भगवतो युद्धलीलामुक्त्वा तां वर्णयति—

**तयोः स्पृधोस्तिग्मगदाहताङ्गयोः क्षतास्रवघ्राणविवृद्धमन्य्वोः ।**
**विचित्रमार्गांश्चरतोर्जिगीषया व्यभादिलायामिव शुष्मिणोर्मृधः ॥ १९ ॥**

तयोः स्पृधोरिति । अन्योन्यस्पर्द्धिनोः । तिग्मगदाभ्यामाहते अङ्गे ययोः । दुःखानुभावेन युद्धान्नि वृत्तिमाशङ्क्य कोपाधिक्यं सहेतुकमाह—क्षतास्रवघ्राणविवृद्धमन्य्वोः । गदाप्रहारेण यत् क्षतम्, तस्मात् स्रवत् यद्रुधिरम्, तस्य घ्राणमास्वादनम्, तेन विवृद्धो मन्युर्ययोः । गदया विचित्रमार्गांश्चरतो रिति युद्धलीलाया रसाभिनिवेश उक्तः । अत्राऽपि जिगीषैव हेतुः, स्वरूपतोऽभिप्रायतश्च जिगीषेति । ननु वैरिणोः कथं जयमात्रं हेतुरित्याशङ्क्याऽऽह—इलायामिव शुष्मिणोरिति । इला भूमिः । एकत्राऽ धिकरणसप्तमी, इतरत्र निमित्तसप्तमी । यथा पृथिव्याः कामभवौ वृषभावतिपुष्टावन्योन्यजिगीषया युद्ध युक्तौ, वाशितार्थे वा तयोर्मृधो यथा । व्यभात् युद्धं शोभते स्म ॥ १९ ॥

एवं लीलया युद्धे क्रियमाणे भगवता तस्य मृत्युर्न भविष्यतीत्याशङ्क्य, ब्रह्मा स्वयमागत्य तद्वधार्थं प्रार्थयति द्वाभ्याम्—

**दैत्यस्य यज्ञावयवस्य मायया गृहीतवाराहतनोर्महात्मनः ।**

१ गदया क. ख. ग.

**कौरव्य ! मह्यां द्विपतोर्विमर्दनं दिदृक्षुरागादृषिभिर्वृतः स्वराट् ॥ २० ॥**

*दैत्यस्येति । आगमनप्रार्थनाभेदेनोभयोः समानबलत्वं निरूपयितुं स्वरूपं वर्णयति । तत्र दैत्यत्वमेव युद्धादावुपयोगीति तदेवोक्तम् । यज्ञा अवयवा यस्य, अनेन क्रियाशक्तिस्तत्र पूर्णेत्युक्तम् । ननु यो यज्ञावयवः, स कथमेवंरूप इति दूषणं दूरीकुर्वन्नेव सामर्थ्यविशेषमाह–मायया गृहीतवाराहतनोरिति । महात्मन इति तादृशस्य युद्धकरणे हेतुर्न ज्ञायत इति सूचितम् । कौरव्येति संबोधनं महतां चरित्रे विश्वासार्थम् । जलयुद्धपक्षे तु तेन न दृश्यत इति तद्व्यावृत्त्यर्थम्, मह्यां पृथिव्यां द्विपतोर्विशेषेण मर्दनं दिदृक्षुः स्वयमभ्यगात् । ननु ब्रह्मणो हिरण्याक्षवधे किं प्रयोजनं सिध्येदित्यत आह–स्वराडिति । स हि सर्वस्यापि सर्गस्य राजा, इन्द्रादयस्तदंशाः । साक्षित्वाय ऋषीणामागमनम् ॥ २० ॥

तयोर्युद्धं दृष्ट्वा, लीलां कुर्वाणावेताविति मत्वा, वधार्थं प्रार्थयत इत्याह—

**आसन्नशौण्डीरमपास्तसाध्वसं कृतप्रतीकारमहार्यविक्रमम् ।**
**विलोक्य दैत्यं भगवान्सहस्रणीर्जगाद नारायणमादिसूकरम् ॥ २१ ॥**

आसन्नशौण्डीरमिति । भगवत उत्कर्षो युक्तः, तस्याऽयुक्त इति तदेव वर्णयति । आसन्नं स्वीकृतं शौण्डीरं येन । शौण्डीरं साहसोत्साहः । भगवतः सकाशादपास्तं साध्वसं यस्य । कृतः प्रतीकारो येन । न केनाऽपि हार्यो हर्तुं योग्यो विक्रमो यस्य । एतादृशं दैत्यं विलोक्याऽयमजेय इति ज्ञात्वा स्वपितरं भगवन्तम्, सर्वावताराणां प्रथमावताररूपम्; भगवांश्चेन्मारयितुमिच्छेत्तदैवाऽस्य मरणं भवेद्, न तूदासीनतयेति मत्वा, आदिसूकरमाहेति संबन्धः । तादृशज्ञानमस्तीत्यत्र हेतुः–भगवानिति । नन्वेवमुच्यमाने स चेद्ब्रह्माणमेव मारयेत्, तदा का गतिः स्यादित्याशङ्क्याऽऽह–सहस्रणीरिति । सहस्रं नयतीति । ब्रह्मा हि स्वसदृशान् सहस्रं योगान्नयति, अतो नाऽस्य भयमित्यर्थः ॥ २१ ॥

ब्रह्मा मारणार्थं तस्य दूषणान्येवाऽऽह–एष इति द्वाभ्याम्—

## ब्रह्मोवाच ।

**एष ते देव ! देवानामङ्घ्रिमूलमुपेयुषाम् ।**
**विप्राणां सौरभेयीणां भूतानामप्यनागसाम् ॥ २२ ॥**

'भक्तद्रोहे वधः स्मृतः' इति भगवद्धृदयात् अयं भक्तद्रोहमेव कृतवानित्याह–एष हिरण्याक्षः । हे देवेति संबोधनमेव पक्षपातबोधनार्थम् । देवद्रोहात् वधो न दोषायेति ज्ञापयितुं देवानामित्युक्तम् । अङ्घ्रिमूलमुपेयुषामिति मुख्यो हेतुः । विप्राणां सौरभेयीणामिति । ब्राह्मणानां गवां यज्ञोपयोगित्वात् तद्विरोधेन यज्ञवराहेणाऽवश्यं मारणीय इति प्रकृतावतारोपयोगित्वेनोक्तम् । सामान्यतो विष्णो रक्षाकर्तृत्वात् तत्त्वेन रक्षार्थं भूतानामप्यनागसामित्युक्तम् । निरपराधीनि भूतानि सर्वथा रक्षकेन रक्षणीयानीति । चतुर्भिर्हेतुभिरयं मारणीय इति हेतवो निरूपिताः ॥ २२ ॥

---

प्रकाशः ।

* दैत्यस्येत्यत्र । तेन न दृश्यत इति । जलेन युद्धं न दृश्यते ।

तस्याऽपि दोषचतुष्टयमाह—

**आगस्कृद्भयकृद्दुष्कृदस्मद्राद्धवरोऽसुरः ।**
**अन्वेषन्नप्रतिरथो लोकानटति कण्टकः ॥ २३ ॥**

आगस्कृदिति । प्रथमतो निरपराधिनं सापराधं बोधयति, मिथ्यैवाऽपराधं संपादयतीत्यर्थः । ततो भयं जनयति निर्भर्त्सनादिभिः । ततो दुष्टं मारणम्, सर्वस्वहरणादिकं वा करोति । अन्येषामपि दोषाणामुत्पत्त्यर्थं तस्य बलमाह–अस्मद्राद्धवर इति । अस्मत्तो राद्धः सिद्धो वरो यस्येति । देववरं प्राप्य कथं दुष्टो जात इत्याशङ्क्याऽऽह–असुर इति । सर्पाणां पयःपानवत् । चतुर्थं दोषमाह–अयं कण्टक इति । गतिभेन नाशयति । अल्पोऽपि परमदुःखद इत्यर्थः । अप्रतिरथश्चाऽयम्, न विद्यते लोके प्रतिरथो युद्धे समानो यस्य । अत एव प्रतिरथमन्वेषयन् लोकानटति । अतो दुष्टो दुरात्मा हन्तव्य इत्यर्थः २३

अस्योपेक्षा न कर्तव्येत्याह—

**मैनं मायाविनं दृप्तं निरङ्कुशमसत्तमम् ।**
**आक्रीड बालवद्देव ! यदाशीविषमुत्थितम् ॥ २४ ॥**

मैनमिति । एनं माक्रीड, मा क्रीडयेत्यर्थः । एनं वा लक्षीकृत्य क्रीडां मा कुर्वित्यर्थः । तत्र हेतवश्चत्वारः । मायाविनमिति । अयं च मायावी, अस्य बलं न ज्ञायते, अतो यदैव क्षीणबलो भविष्यति तदैव पलायनं करिष्यतीति इदानीमेव हन्तव्यः । किञ्च, दृप्तोऽयमनिमित्तः, उपेक्षाया जगदेव मारयिष्यतीति । किञ्च, निरङ्कुशमिति । त्वद्व्यतिरिक्तोऽन्योऽस्य न नियामकोऽस्ति, अतोऽस्य नान्यः प्रतीकारः । स्वयमेव कालान्तरे बाल्यं त्यक्ष्यतीति न मन्तव्यम्, यतोऽयमसत्तमः । अत एव बालवद्देव ! माक्रीड । बालो क्षुद्रकं न विचारयति । किञ्च, अयं त्वय्यप्यपकारं करिष्यतीत्याह–यदाशीविषमुत्थितमिति । उत्थितं सर्पं । चेष्टया यदा शयानः सर्पः उत्थापितश्चेद्धन्तव्य एव, अन्यथाऽपकारं कुर्यात् २४

किञ्च, स्वभावत एवाऽयं बलिष्ठः, सन्ध्याकाले अत्यन्तं बलिष्ठो भविष्यति, अतो यावदस्य वृद्धिकालो नाऽऽयाति, तावदेव हन्तव्य इत्याह—

**न यावदेष वर्धेत स्वां वेलां प्राप्य दारुणः ।**
**स्वां देवमायामास्थाय तावज्जह्यघमच्युत ! ॥ २५ ॥**

न यावदिति । वृद्धौ दोषमाह–दारुण इति । स्ववेला सन्ध्या, तदा हि ते दैत्या उत्पन्नाः, एतयोरपि तदैव जन्म । कथं तर्हि मारणीयः ? इत्यत आह–स्वां देवमायामिति । देवमाया ह्यसुरबाधिका, 'रजस्तमश्चाभिभूय सत्त्वं भवति भारत!' इति वाक्यात् । वधे दोषो भविष्यतीति न मन्तव्यम्, यतोऽयमघरूपः । एतद्युद्धे त्वस्मिन् सन्देहो न कर्तव्य इत्याह–अच्युतेति ॥ २५ ॥

सन्ध्या स्वतोऽपि बाधिकेत्याह—

**एषा घोरतमा सन्ध्या लोकच्छम्बट्करी प्रभो ! ।**
**उपसर्पति सर्वात्मन् ! सुराणां जयमावह ॥ २६ ॥**

* एषा घोरतमेति। एषा देवानां सन्ध्या। ज्योतिश्चक्रस्य स्थितत्वात्, मध्ये च पृथिव्याः स्थापितत्वात्। ब्रह्मादीनां देवतात्वात् देवमानेनेत्यध्यवसीयते । अथवा, ब्रह्मणो वा एतद्दिनम्, 'लोकच्छम्बट्करी' इति वचनात्, तस्य संवत्सरान्तादिन एव कल्पप्रलयात् । प्रथमपक्षे सन्ध्यायां लोकनाशकत्वं स्वाभाविकमिति तथोच्यते । ज्योतिश्चक्रपरावृत्त्या मानुषमेव वा मानम् । अधिष्ठात्र्यो देवता वा भगवत्सेवार्थमागतस्य कालस्य परम्परयैव आविर्भवन्तीति सन्ध्या सैवोच्यते; तथैवाऽभिजिदपि । एवं चतुर्ष्वपि पक्षेषु समाधातुं शक्येष्वप्ययमेव ज्यायान् । 'छम्बट्'–शब्दो वैदिको नाशवाचको रिक्तपर्यायः, 'तेनैकाष्टकान् छम्बट्कुर्वन्ति' इति श्रुतेः । अत एव सन्ध्याऽपि लोकनाशिका, दैत्योऽपि । उभयोर्मिलने महाननर्थो भविष्यतीति ततः पूर्वमेव दैत्यो मारणीय इत्यर्थः । तथा सामर्थ्यं सूचयति–**प्रभुरिति** । सर्वेष्वेवाऽवतारेषु सत्त्वांशव्यवधानात् ज्ञानतिरोभावमिव मन्यते, ततो बोधनम् । प्रहरत्रयं जातमस्ति, अतो निकट एव सन्ध्या भविष्यतीत्युपसर्पतीत्युच्यते । सर्वरक्षा तवाऽऽवश्यकीति तथा संबोधयति–**सर्वात्मन्निति** । एकमारणेन बहूनां रक्षाजननात् सर्वात्मकत्वेऽपि मारणं न विरुद्धम् । तथापि सर्वथा न मारणीयः, रक्षामात्रमेव कर्तव्यमिति चेत्तत्राऽऽह–**सुराणां जयमावहेति** । सत्त्वकाले सुराणां जयः कर्तव्यः ॥ २६ ॥

नन्वहमेव मारयिष्यामि, किमिति बोध्यत इत्याशङ्क्याऽऽह—

## अधुनैषोऽभिजिन्नाम योगो मौहूर्तिको ह्यगात् ।
## शिवाय नस्त्वं सुहृदामाशु निस्तर दुस्तरम् ॥ २७ ॥

×**अधुनैष इति** । तदधिष्ठात्री देवता मत्पक्षेत्येष इत्युक्तम् । अभिजिन्नक्षत्रं मध्याह्ने राशिद्वारा मिलतीति तथोच्यते । तुलासंक्रमणस्य दिनाष्टके गते, तस्मिन्नेव दिवसे उत्तराषाढाचतुर्थपादे, मध्यन्दिने सति मुहूर्तमात्रमभिजिद्योगो भवति । 'ते देवास्तस्मिन्नक्षत्रेऽभ्यजयन्' इत्युपाख्याने अभिजिन्नक्षत्रे देवानां दैत्यजय उक्तः । स तु निकट एव गतः; तदैव मारणीयो भवेदित्यनपजय्यजयत्वात् । अथवा, 'पापपराजितमिवतु' इति श्रुतेः, अभिजिन्नक्षत्रं नाऽत्यन्तमुत्कृष्टम्, पापेन पराजितत्वात् । तस्मात्सोऽपि गतः सन्ध्या च नाऽऽगता, अतो मारणीय इत्यर्थः । सुहृदां देवानां नः शिवाय । एवं दुष्टं दुस्तरं मृत्युरूपमाशु निस्तर, नितरां तर ॥ २७ ॥

---

प्रकाशः ।

* एषेत्यत्र । अयमेवेति । देवतासमागमनरूपसन्ध्यापक्ष एव ।

× अधुनेत्यत्र । तथोच्यत इति । 'योगत्वेनोच्यते । ते देवा इत्यादि ।' 'अभिजिन्नाम नक्षत्रम् । उपरिष्टाद(दा)षाढानाम् । अवस्ताच्छ्रोणायै । देवासुराः संयत्ता आसन् । ते देवास्तस्मिन्नक्षत्रेऽभ्यजयन् । यदभ्यजयन्, तदभिजितोऽभिजित्त्वम् । यं कामयेतानपजय्यं (य्यं) जयेदिति । तस्मिन्नक्षत्रे यातयेत् । अनपजय्यमेवजयति ।' पापपराजितत्वमिव स्थिति । श्रुत्युदित उपाख्याने इत्यर्थः ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशेऽष्टादशाध्यायविवरणं सम्पूर्णम् ।

---

१ एकाष्टकां. न ख. ग. २ मेलने. ग., मिलनेन. ख. ३ जयः. क. ख.

नन्वस्य जीवनादृष्टे विद्यमाने कथं म्रियत इत्याशङ्क्याह—

**दिष्ट्या त्वां विहितं मृत्युमयमासादितः स्वयम्।**
**विक्रम्यैनं मृधे हत्वा लोकानाधेहि शर्मणि ॥ २८ ॥**

दिष्ट्येति। यदयमेतस्मिन्नवसरे त्वां प्राप्तः, तेन ज्ञायते नाऽस्त्यस्य जीवनादृष्टमिति। अस्य मृत्युस्त्वमेव, अतोऽयं स्वयमेव त्वां मृत्युं दिष्ट्या आसादितः प्राप्तवान्। यथा मृत्युः रोगादिना पराक्रमेण तं हन्ति, एवमेनमपि विक्रम्यैव संग्रामे हत्वा, परमसुखे सर्वानेव लोकान् स्थापयेति प्रार्थना। युद्धे मारणाच्च दोषोऽपि ॥ २८ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां तृतीयस्कन्धे अष्टादशाध्यायविवरणम्।

---

# एकोनविंशाध्यायविवरणम्।

एवं स्थितिर्हरौ तस्य पूर्वाध्याये निरूपिता।
प्रलयो ब्रह्मणो वाक्यात् भगवत्कृत ईर्यते ॥ १ ॥
एकोनविंशे भगवान् क्रीडन्निव महासुरम्।
सुराणां महदर्थाय हतवानिति वर्ण्यते ॥ २ ॥

* एवं ब्रह्मणा स्तोत्रे क्रियमाणेऽपि भक्तत्वान्मारयिष्यति न वेति सन्देहे सत्याह—

## मैत्रेय उवाच।

**अवधार्य विरञ्च्यस्य निर्व्यलीकामृतं वचः।**
**प्रहस्य प्रेमगम्भीरं तदपाङ्गेन सोऽग्रहीत् ॥ १ ॥**

अवधार्येति। भगवांस्तद्वाक्यं विचारितवान्, किमयं देवभावात् द्वेषेण वदति, आहोस्विदेवमेवेति। तन्निश्चित्य तथैव करिष्यामीत्यङ्गीकृतवान्। विरञ्च्यशब्देनाऽपि तस्याऽसत्यवाक्यत्वं निराकृतम्। रविशब्दो विपरीतः; विरं रविं चिनोतीति विरञ्च्यः, सूर्यादिनिर्माताऽयम्, नान्धकारनिर्मातेति। अतो निर्व्यलीकम्। अमृतं हितकारि मिष्टं च। एवंगुणयुक्तं वचः सत्यमित्यवधार्य, ब्रह्माणं भीतं मत्वा प्रहस्य, सान्निध्ये ज्ञानोत्पत्त्य-

---

गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृतः प्रकाशः

* अथ एकोनविंशाध्यायं व्याख्यातुमारभमाणा अवसररूपां सङ्गतिं स्मारयन्ति—एवमित्यादि।

भावाय वा, प्रेम्णा गम्भीरं तद्वचः कटाक्षेणैवाऽग्रहीत् । प्रेमगर्भेणेति पाठे—दृष्टिः प्रेमसहिता, अधिकं च प्रेमोत्पादयिष्यतीति तेषां निर्भयत्वं बोधयति । स इति भगवान् । भूम्युद्धारं कृत्वा नाऽन्तर्हितः, तस्मिन् रूपे च * नाऽन्तःप्रवेशित इति बोधयति ॥ १ ॥

एवं वधपूर्वभावं भगवदिच्छामुक्त्वा, हननात्पूर्वं सर्वात्मत्वात्तस्य कामनां पूरयति । तस्य हि युद्धं कर्तव्यमिति महती कामना, जयश्च भवत्विति; अतः प्रथमं तदुभयं सम्पादयति । तत्र प्रथमं युद्धे तस्य जयं संपादितवानित्याह—ततः सपत्नमिति पञ्चभिः । दैत्यजयोऽग्रे वक्तव्य इति प्रथमं भगवत्कर्तृकं युद्धमाह । युद्धं तस्य प्रतीकारो दैत्यधर्मश्च साधकः । सर्वलोकप्रसिद्धिश्च भक्तानामाशिषस्तथा ॥१॥ सर्वेषामेव हृदये जयस्तस्य समागतः । इति दर्शयितुं देवास्तदाहुरिति रूप्यते ॥ २ ॥—

ततः सपत्नं मुखतश्चरन्तमकुतोभयम् ।
जघानोत्पत्य गदया हनावसुरमक्षजः ॥ २ ॥

× ततो ब्रह्मवाक्यानन्तरम्, सपत्नं शत्रुम्, जघानेति संबन्धः। प्राप्त्यर्थम्—मुखतश्चरन्तमिति । मुखत इति संमुखे, मुख्यत्वेन वा । मुखादेव चरति । अन्तस्तु मारणेच्छायामुत्पन्नायां तस्याऽपि हृदये मरणं समागतमिति मुखत एव युद्धे चरणमुक्तम् । एवं ज्ञात्वाऽपि निर्भयः, पलायनाभावायोक्तम् । उत्पत्योत्प्लुत्य, उपरि पतित्वा वा । अक्षजो भगवान्, ब्रह्मणो नासापुटाज्जात इति । गदया हनावताडयत् । हनुर्मुखाधोऽस्ति ॥ २ ॥

ततः प्रतीकारमाह—

सा हता तेन गदया रहिता भगवत्करात् ।
विघूर्णिताऽपतद्रेजे तदद्भुतमिवाऽभवत् ॥ ३ ॥

सा हता तेनेति । दैत्यः स उपरि पतन्तीं गदां कौमोदकीं स्वगदयाऽभ्यहन्, तदा सा कौमोदकी तेन हता भगवत्कराद्विगलिता, आकाशे भ्रमणं प्राप्य, विघूर्णिता अपतत्—भूमौ पतिता, न तु भिन्ना; किन्तु भूमिं प्राप्य रेजे। भगवतो हस्तात्कौमोदकीपातोऽत्यद्भुत इत्याह—तदद्भुतमिति । अद्भुतादप्याश्चर्यमिवेत्यनेनोक्तम् । भगवद्धस्तादेव पात आश्चर्यम्, ततोऽपि कौमोदक्याः; सा शासन्यरूपा, दैत्यास्तत एव विहता भवन्ति; स हि अपहतपाप्मा । अतोऽत्राश्चर्यादप्याश्चर्यम् । भगवता चेत् कामना पूर्यते, तदा मर्यादामुल्लङ्घ्याऽपि पूर्यत इति तथा जातम् ॥ ३ ॥

भगवत्कृतमेवेतदिति ज्ञापयितुं तस्य धर्मबुद्धिरुच्यते, अन्यथा दुष्टो निष्कारणं लोकेषु आगस्कृत्, भयकृत्, दुष्कृत्, कथं तदा तूष्णीं भवेत्? नाप्याह भगवत्सामर्थ्यादिति; अतो धर्मो निरूप्यते—

---

प्रकाशः ।

* अवधार्येत्यत्र । नाऽन्तः प्रवेशित इति । स्वार्थे णिचि नाऽन्तःप्रविष्ट इत्यर्थः ।

× तत इत्यत्र । मारणेच्छायामिति । भगवतस्तन्मारणेच्छायाम् ।

---

१ मधा० ग०

**स तदा लब्धतीर्थोऽपि न बबाधे निरायुधम् ।**
**मानयन् स मृधे धर्मं विष्वक्सेनं प्रकोपयन् ॥ ४ ॥**

स तदेति । तदा कौमोदकीपातानन्तरम्, लब्धतीर्थोऽपि—भगवानशस्त्र इदानीं जेतुं शक्यत इति लोकदृष्ट्या जयावसरे विद्यमानेऽपि—निरायुधं भगवन्तं न बबाधे । ननु जयाकाङ्क्षी कथं न बबाधे ? तत्राऽऽह—मानयन्स मृधे धर्ममिति । संग्रामे निरायुधः शत्रुर्न मारणीय इति धर्मः, तं धर्मं परिपालयन् न मारितवानित्यर्थः । इमं धर्मं भगवत्कृतजयार्थं प्रतिपाद्य, तस्य धर्मस्य सहजत्वाभावाय तस्याऽभीष्टमन्यदित्याशङ्क्याऽऽह—विष्वक्सेनं प्रकोपयन्निति । विष्वक् परितः सेना यस्य । अनेन तस्य भ्रान्तत्वं सूचितम् । तूष्णींभावोऽपि जयप्रतिपादकः, भावं चोद्गिरति ' जितं मया ' इति । एवं दैत्यस्य जयबुद्धिर्निरूपिता ॥ ४ ॥

लोकानां जयबुद्धिमाह—

**गदायामपविद्धायां हाहाकारे विनिर्गते ।**
**मानयामास तद्धर्मं सुनाभं चाऽस्मरद्विभुः ॥ ५ ॥**

गदायामिति । अपविद्धायां ताडनेन पतितायां सत्याम्, लोके च सर्वत्र हाहाकारे विनिर्गते सति । गदापातहेतुको हाहाकारः । भगवानपि लोकानुसारी तस्य जयमङ्गीकृतवानित्याह—मानयामास तद्धर्ममिति । तस्याऽऽयुधरहितवधाभावलक्षणं धर्मं मानयामास, अन्यथा भगवदनङ्गीकृतो धर्मः फलदायी न भवेत् । ततः किं कृतवानित्याह—सुनाभं चाऽस्मरादिति । सुनाभं सुदर्शनम्, चकारात् स्वस्य भावं च । ननु स्मरणमात्रेण कथं स्वभावस्य, भगवत्त्वस्य, सुदर्शनस्य चाऽऽगमनमित्याशङ्क्य बोधयति—विभुरिति । स हि सर्वसमर्थः ॥ ५ ॥

तदा भगवद्भक्तानामपि तस्य जयो हृदये समागत इति पुनर्भगवन्तं सायुधं दृष्ट्वोज्जीविता अविलम्बेन तद्वधार्थं प्रार्थयन्ति—

**तं व्यग्रचक्रं दितिपुत्राधमेन स्वपार्षदमुख्येन विषज्जमानम् ।**
**चित्रा वाचोऽतद्विदां खेचराणां तत्र स्माऽऽसन्स्वस्ति तेऽमुं जहीति ॥ ६ ॥**

तं व्यग्रचक्रमिति । तं पूर्वोक्तप्रकारेण क्रीडाकारिणम् । सुदर्शनमपि भगवल्लीलां न हृदयेन मानयति, न वा गदायाः पातम्; अतो दैत्यवधार्थं व्यग्रं चक्रं यस्य । ननु भगवान् सृष्ट्यर्थं प्रवृत्तः कथं तं मारयति ? दैत्या अप्युत्पादनीया इत्याशङ्क्याऽऽह—दितिपुत्राधमेनेति । दितेः पुत्राणां मध्ये अधमेन । न ह्यधमेन सृष्टिरुत्तमा भवति । अधमत्वं च दैत्यमर्यादाभावात् । अतो वध्य इति सुदर्शनादिस्मरणम् । ननु हीनेन तेन सह युद्धं किमर्थं करोति ? सुदर्शनेन वध एव परं कर्तुमुचित इत्याशङ्क्याऽऽह—स्वपार्षदमुख्येनेति । स हि पार्षदानां मध्ये मुख्यः, अतः स्वसेवकमुख्येन सह क्रीडा उचितेत्यर्थः। युद्धार्थं तेन सह विशेषेण सज्जमानमासक्तमुक्तम् । अत एव देवानामेतन्मर्माऽजानतां केवलमाकाशे स्थित्वा पश्यताम्, तत्र तस्मिन्नवसरे विचित्रा वाचो जाताः । कश्चिदाह मारयिष्यतिः कश्चिन्नेति; कश्चित् शक्यः;

१ बाधाभाव...ग

कश्चिदशक्य इत्येवं चित्रा वाच । स्मेति प्रसिद्धे । आशीर्वादमाहुर्व्यग्रा सन्ते –ते स्वस्त्यस्तु, अमु च जहीति। कुशल शत्रुजयश्च द्वय प्रार्थयन्ति । चित्रा वागेव वैयग्र्ये हेतुः, वैयग्र्याच्च × तथा वचनम् । इद तु वचन न चित्रमिति । इतिशब्दस्य प्रकारवाचित्वेऽपि वाक्यत्रयनिरूपण कर्तव्यं स्यात् ॥ ६ ॥

+ एव सर्वजनीन तस्य जय निरूप्य युद्ध निरूपयति–स तं निशम्येत्यष्टादशभि ,सर्वथावप्रतिपाद्या हि भगवतो लीलेति । दशभिः सत्ययुद्धं तु मायायुद्धं तथाऽष्टभिः । द्विविधेनाऽपि युद्धेन क्रीडति स्मेति वर्ण्यते ॥१॥ दैत्यस्य युद्धसंरम्भः पश्चाद्युद्धं सवाचिकम् । प्रतीकारोक्तिभिश्चैवं क्रोधाद्युद्धं पुनस्तथा ॥ २ ॥ ततः पौरुषनाशोऽभूत् भगवल्लीलया रिपोः । एव पङ्क्तिर्गदायुद्ध द्वाभ्यां शूलेन चैव हि ॥ ३ ॥ मुष्टिभिश्च तथा द्वाभ्यां स्वदेवास्त्रात्तथा स्वतः । युद्ध निरूपित तस्य माया सामान्यवर्णनम् ॥ ४ ॥ चतुर्भिस्तद्विशेषाश्च तस्याऽप्युक्ता प्रतिक्रिया । मायायुद्ध ततः पङ्क्तिः स्वयं तूत्तरहेतुकम् ॥५॥ दुर्निमित्तदर्शियुद्धं मारणार्थमिहोच्यते । एकेन मारण चैव मरण च ततो महत् ॥ ६ ॥ मृतस्य वर्णन चैव त्रिभिरित्येप सग्रहः । स्तोत्र भगवतो यानमुपसहार एव च ॥ ७ ॥ माहात्म्य द्विविधं तस्य श्रवणस्य निरूपितम् । गुणोपसहृतिश्चैव दृष्टान्तार्थमिहोच्यते ॥ ८ ॥ जात जनिष्यमाण च फलमत्र निरूप्यते । द्वाभ्या द्वाभ्या ततः पङ्क्तिः श्रवणस्य फल ततम् ॥ ९ ॥ प्रथमं स्वायुधगदया युद्धमाह द्वाभ्यामुद्योगयुद्धभेदेन—

## स तं निशम्याऽऽत्तरथाङ्गमग्रतो व्यवस्थितं पद्मपलाशलोचनम् ।

---

प्रकाश ।

× तं व्यग्रेत्यत्र । सुदर्शनवैयर्थ्ये हेतु –तथा वचनमिति । आशीर्वचन मारणवचन च । एतदतिरिक्त चित्रवचनस्य कल्पने बीजमाहु –इद त्वित्यादि ।

+ स तं निशम्येत्यत्र । कारिकासु । मायायुद्धमिति । मायापूर्वकमन्यच्च युद्धम् । प्रतीकारोक्तिभिश्चैवमिति । प्रतीकारसहिता उक्तयस्ताभिरेवम्, एकैकेनेत्यर्थ । पुनस्तथेति। एकेन । एकादशस्याऽर्थमाहु –स्वदेवास्त्रादिति पादोनेन । तथा । एकेन । स्वत स्वेच्छयैव । स्वस्य दैत्यस्य देवो माया, तस्याऽस्त्रात्, ' असु क्षेपणे ' क्षेपात् । मायासामान्यस्य वर्णन यस्मिन्, तादृश युद्ध निरूपितमित्यर्थ । षोडशस्यार्थमाहु –तस्याऽप्युक्ता प्रतिक्रियेति। सुदर्शनप्रयोगेण मायाप्रतिक्रियाऽप्येकेनोक्ता । उपसहरन्ति–मायायुद्ध ततः पङ्क्तिरिति । तेन हेतुना, उक्तै पङ्क्ति श्लोकैर्मायायुद्धमुक्तमित्यर्थ । अग्रिमयोरर्थमाहु –स्वयमित्यादि । ' विनष्टासु ' इति पद्योक्तं स्वयरूपोपगूहनात्मक युद्धं तु उत्तरहेतुक सुदर्शनप्रयोगोत्तरदुर्निमित्तहेतुकम् । तत्पूर्वश्लोके दितेर्दुर्निमित्तदर्शि । एतयो कथ युद्धे निवेश इत्यत आहु –युद्धमित्यादि । मारणहेतुरूपत्वाद्युद्धे निवेश इत्यर्थ । एवमष्टादशाना तात्पर्यमुक्तम् । इत्येप सग्रह इति । एव प्रकारेणैकविंशतिभिस्तन्नाशस्य सग्रहः । अग्रिमाणा तात्पर्यमाहुः–स्तोत्रमित्यादि । मरणस्य तयोर्भगवतश्च स्तोत्र यथाक्रममेकैकेन; भगवतो यानमेकेन, उपसहार एकेन । अग्रे इति कौपारवेत्यादिभि पङ्क्ति श्रवणफलमुच्यते । तात्पर्यमाहुः–माहात्म्यमित्यादिभि । द्विविधमिति । प्रत्यक्षमुपपाद्य च । द्वितीयस्तस्य कैमुतिकस्य तात्पर्यमाहुः–गुणोपसहृतिरित्यादि । गुणोपसहृतिरिति सदाचारपराक्रमादिगुणानामेकत्र सत्ता । एतदुभयविध माहात्म्यमग्रे दृष्टफलत्वेन वक्तव्यम् । स्फुटमन्यत् ।

---

१ द्वयम् २ तत क ख

विलोक्य चामर्षपरिप्लुतेन्द्रियो रुषा स्वदन्तच्छदमादशच्छ्वसन् ॥ ७ ॥

स तं निशम्येति। जयानन्तरं हि प्राणिन उत्साहो भवति। अकस्माद्भगवतः साधनान्तरप्राप्तौ भगवदुत्कर्षं दृष्ट्वा क्रुद्धो जात इत्याह—स दैत्यः, अग्रतोऽग्रे, तं भगवन्तम्, आचरथाङ्गं निशम्य श्रुत्वा। क्रोधात् दृष्टमपि श्रुतमिव मन्यते। निशाम्येति पाठः स्पष्टः। पद्मपलाशलोचनमिति चक्रायुधः कमलनयनस्तस्याऽन्तकाले ध्येय इति वर्णितम्। शत्रोर्जये जातेऽप्यक्षोभदृष्टिं वा। तादृशं दृष्ट्वा भगवतोऽक्षोभलक्षणमुत्कर्षमसहमानोऽमर्षपरिप्लुतेन्द्रियो जातः। अमर्षेण क्रोधेन परिप्लुतानि मग्नानि इन्द्रियाणि यस्य। पुनरुद्गतेन क्रोधेन स्वदन्तच्छदमधरमादशत् दष्टवान्। पुनरन्तः प्रवृद्धेन क्रोधेन श्वसन्नपि जातः। एवं युद्धार्थं क्रोधत्रयं कारणं निरूपितम्। उत्कर्षदृष्टौ मात्सर्यात् चक्रदृष्टेस्तु घातकः। स्वाभिमानान्महान् रोषो विलम्बं न सहेत्तथा ॥ १ ॥ एवं युद्धार्थं तस्य क्रोधो वर्णितः ॥ ७ ॥

युद्धमाह—

करालदंष्ट्रश्चक्षुर्भ्यां व्याचक्षाणो दहन्निव।
अभिप्लुत्य स्वगदया हतोऽसीत्याहनद्धरिम् ॥ ८ ॥

करालदंष्ट्र इति। कराला दंष्ट्रा यस्य दैत्यस्य। यमस्तद्दंष्ट्रायामागत इति स्वाधिदैविकसामग्रीसहित उक्तः। चक्षुर्भ्यां व्याचक्षाण इति पूर्णा दृष्टिस्तत्रैव निरूपिता, तेनाऽन्यत्र दृष्टिर्व्यावर्त्यत इति विचारान्तरेणाऽपि युद्धाभावशङ्का व्यावर्तिता। सतीं दृष्टिं व्यावर्तयितुमाह—दहन्निवेति। स्वाविद्याम्, जगद्वा। रूपवदौष्ण्यस्पर्शोऽपि चक्षुषो जात इति दहन्नित्युक्तम्। तथाप्यग्निराश्रयं दग्ध्वैव परं दहतीतीवेत्युक्तम्। एवं क्रूरदृष्ट्या दृष्ट्वा स्वगदया सहितः, आभिमुख्येन गत्वा, अहतोऽसीत्यहनत्। अयं हि यज्ञः; यथा 'स्वधिते मैनं हिंसीः' इति, 'न वा उ वैतन्म्रियसे' विपरीतमिव वदन् अहनत्। ननु विपरीतवादे को हेतुः? तत्राऽऽह—हरिमिति। स हि सर्वदुःखहर्ता कथं वा हतो भवेत्। अथवा, अयुद्धयमानं कथं मारयसीत्याशङ्क्याऽऽह—आहतोऽसीत्यहनत्। पूर्वमासमन्तात् हतवानसीत्यर्थः। मुखेनाऽपि मारणं कृत्वा मारयतीति केचित्। स्तुत्यर्थत्वे—हतोऽसि प्राप्तोऽसीत्यगमदित्यर्थः ॥ ८ ॥

एवं तस्य युद्धमुक्त्वा तस्य प्रतीकारमाह—

पदा सव्येन तां साधो! भगवान् यज्ञसूकरः।
लीलया मिषतः शत्रोः प्राहरद्वातरंहसम् ॥ ९ ॥

*पदा सव्येनेति। पश्चाच्चनो वामपादः सव्यपादुच्यते। तां गदां भगवान् लीलया प्राहरत्, पादघातेन तां भूमौ पातितवानित्यर्थः। साधो! इति संबोधनं विश्वासार्थम्। साधूनां रक्षार्थं वा तथा कृतवानिति सूचितम्। भगवानिति अवज्ञया प्रहारेण तथा करणे सामर्थ्यम्। यज्ञसूकर इति तदर्थमेवाऽवतार इत्यवश्यं प्रतिक्रियाकरणम्। लीलयेति पुनः क्रोधोत्पादनार्थम्। मिषत इति तस्यास्तथात्वाय। वातरं-

प्रकाशः।

* पदेत्यत्र। तस्यास्तथात्वायेति। तद्गदाया भगवत्कृतप्रहारासहत्वाय।

१ प्रहारणम्. ग. २ आभिद्रुत्य पाठः ३ दुष्टस्पर्शः क. ग. ड. ४ अतो हतः क. ख. घ.

हरामीति गदाया उत्कृष्टत्वं प्रतिक्रियाभावाय ॥ ९ ॥

एवं प्रतीकारं कुर्वन्नेव क्रोधं जनयित्वा वाचाऽपि क्रोधं जनयति—

**आह चाऽऽयुधमादत्स्व घटस्व त्वं जिगीषसि ।**
**इत्युक्तः स तया भूयस्ताडयन्ननदद्भृशम् ॥ १० ॥**

आह चेति । उक्तवानपि—आयुधं गृहाण; तदनु घटस्व युद्धं कुरु, युद्धार्थं वा सज्जो भव; यतस्त्वं जिगीषसि । वचनत्रयं तस्याऽभिमानभङ्गार्थम् । निरभिमानस्य कार्ये पतितस्य ग्रहणम्, निर्लज्जस्य कार्ये पुनर्युद्धकरणम्, भ्रान्तस्य कार्यमेतादृशोऽप्यहं जेष्यामीति । एवमुक्तेऽपि क्रोधवशात् व्यङ्ग्यमज्ञात्वा, स एव दैत्यः, तयैव गदया, भूयस्ताडयन् भृशमनदत् । इदं तस्य द्वितीयं युद्धं मध्यमभावेन ॥ १० ॥

अस्याऽपि प्रतीकारमाह—

**स तामापततीं वीक्ष्य भगवान् समवस्थितः ।**
**जग्राह लीलया प्राप्तां गरुत्मानिव पन्नगीम् ॥ ११ ॥**

स तामापततीमिति । पूर्वं तस्य विचारः 'दैवगत्या भूमौ पतिता गदा, न तु बुद्धिपूर्वकं तेन तथा कृतमिति' अतो मारणम् । एतज्ज्ञात्वा द्वितीयवारं भगवान् प्रकारान्तरं कृतवान् इत्याह—स तामापततीं वीक्ष्येति । गदामुपरि पतन्तीं वीक्ष्य तिरोभावादिकमकृत्वा यथापूर्वमेव सम्यगवस्थितः । ततः प्राप्तां स्वोपरि समागतां तां गदां लीलया जग्राह । उभयोरभिप्रायं समर्थयंस्तथाकरणमुपपादयति दृष्टान्तेन—गरुत्मानिव पन्नगीमिति । पन्नगी हि 'गरुडो मया भक्षणीयः, अस्मत्पतिपुत्रादि हन्ति' इति शीघ्रमायाति; गरुडस्तु 'भक्ष्यं मया प्राप्तम्' इति मोदकवत्तां गृह्णाति । एवं वेगेन समागतां मारणार्थमागतां क्रीडार्थं गृहीतवानित्यर्थः ॥ ११ ॥

एवं प्रतीकारमुक्त्वा तेन तस्य मध्यमभावोऽपि गत इत्याह—

**स्वपौरुषे प्रतिहते हतमानो महासुरः ।**
**नैच्छद्गदां दीयमानां हरिणा विगतप्रभः ॥ १२ ॥**

स्वपौरुष इति । पुरुषो हि स्वतन्त्रः, तस्य परप्रतिबन्धरहितं यत्सामर्थ्यम्, तत्पौरुषं यदा पुनः पुरुषान्तरसामर्थ्येनोपहन्यते तदोपहतं भवति । अन्तस्तस्य नाशे बहिश्च कार्यं न भवति । पौरुषं तु पूर्वमेव नष्टमिदानीं ज्ञातमित्यर्थः । बलवता वा प्रतिबद्धम् । स्वशब्देनाऽत्र गदाकृतं तद्द्वारा स्वगतम् । अस्य क्षत्रियत्वात् शस्त्रद्वारैवाऽभिमानो मुख्यः, अतस्तस्मिन् प्रतिहते हतमानोऽपि जातः। तदाऽभिमानाभावात् पराथर्यं कृतवान् । असुरस्तु क्रूरः, शरीरबलमपि तस्य सहजं भवति; अयं तु महासुरः, असुरदेवाख्यः; अतोऽस्य पौरुषद्वयमवशिष्यत इत्युक्तं भवति । अत एव पुनर्दीयमानामपि गदां नैच्छत् । यदि गृह्णीयात्, कियत्कालं युद्धमपि कुर्यात् । भगवत्तेजसा संबद्धत्वात् देवतान्तरसामर्थ्याविर्भावाद्ग्रहणम् । एवं ज्ञात्वैव भगवताऽपि दीयते; देवतान्तरसम्बन्धो माऽस्त्विति वा । दाने हेतुः—हरिणेति । तदा भगवतो दया तस्मिन् जाता । पूर्वं वैष्णवं तेजस्तस्मिन् स्थितमिति प्रभा स्थिता, गदाद्वारा च समागता; पुनश्चेद्गृह्णीयात् पुनः प्रतिसंक्रामेत् । तदभावात् विशेषेण गता प्रभा यस्य तादृशो जात इत्यर्थः ॥ १२ ॥

तदा देवान्तरवरप्राप्तं शूलं गृहीतवानित्याह—

**जग्राह त्रिशिखं शूलं ज्वलज्ज्वलनलोलुपम्।**
**यज्ञाय धृतरूपाय विप्रायाऽभिचरन्यथा ॥ १३ ॥**

×जग्राहेति। शूलं सूच्यग्रम्। भेदकमग्रत्रयमुक्तम्। त्रिशिखं त्रिशूलमिति यावत्। शिखापदप्रयोगोऽग्निवद्दाहकमपि तदिति सूचयितुम्, अन्यथा देवताप्राप्तं न स्यात्। ज्वलन् यो ज्वलनः, तद्वल्लोलुपम्। अनेन सुदर्शनवदस्यापि लज्जेव जाता, न चेत् प्रतीकारार्थं स्वयमेव प्रवर्तितुमिच्छति। देवताप्रेरणयेति सूचितम्। तामसी शक्तिर्वा कृत्यारूपाऽत्र भवतीति इति तथात्वम्। देवता ह्युपजीव्यव्यतिरेकेणाऽन्यत्र शक्ता। सर्वासामेव देवतानां यज्ञ उपजीव्यः, तत्रापि साक्षात्प्रकटः; तद्विरोधे स्वात्मैव न सिध्येत्। तमेव मारयितुम्, तेनैव, यो यतते स भ्रान्तः। उपजीव्यत्वं दृष्टान्तेन स्पष्टयति—विप्रायाऽभिचरन् यथेति। अभिचारो हि मन्त्रसाध्यः, स च ब्राह्मणाधीनः; तेनैव मन्त्रेण तस्यैव ब्राह्मणस्याऽपराधकरणं न युज्यत इत्यर्थः ॥ १३ ॥

ततः किं जातमित्याकाङ्क्षायामाह—

**तदोजसा दैत्यमहाभटार्पितं चकासदन्तः ख उदीर्णदीधिति।**
**चक्रेण चिच्छेद निशातनेमिना हरिर्यथा तार्क्ष्यपतत्रमुज्झितम् ॥ १४ ॥**

*तदोजसेति। ओजोऽत्र देवताप्राप्तं तेजो मनसि स्थितम्। देवताप्राधान्यख्यापनाय दैत्यस्य भटत्वम्; देवतायाः प्रेरणसामर्थ्याय महाभटत्वम्; भगवति विरोधख्यापनाय दैत्यत्वम्। अर्पितमिति। समर्पितम्, अन्यथा देवतान्तरभजनदोषः स्यादिति परमार्थः। खे आकाशे चकासत् प्रकाशयुक्तम्। अन्तरुदीर्णा दीधितिर्यस्य। रुद्रा ह्यन्तरिक्षदेवाः, तत्रैव च तेषां शोभा। अन्तर्दीधितिवर्णनं तस्या देवताया उत्साहज्ञापनार्थम्, स्वस्थाने तस्य बलं बहु भवतीति। स्थानान्तरे तस्य बलक्षये हानिर्युक्तेति शङ्काव्यावृत्त्यर्थं तत्रैव चक्रेण चिच्छेद। ननूभयोः सजातीयत्वात् कथमन्येनाऽन्यस्यच्छेदनम्? तत्राऽऽह—निशातनेमिनेति। निशाता तीक्ष्णा नेमिर्यस्य। ननु कल्पान्तरे सुदर्शनस्य महादेवांशत्वात् कथं तेन शूलप्रतिघात इत्याशङ्क्याऽऽह—हरिरिति। सर्वदुःखहरणार्थं भगवानेव तथा कृतवानित्यर्थः। भगवतोऽपि देवतातिक्रमोऽयुक्त इति चेत्तत्राऽऽह—हरिर्यथेति। यथा इन्द्रः। तार्क्ष्यस्य गरुडस्य पतत्रं पक्षं तेनैवोज्झितं यथा छिनत्ति, तद्वत्। वज्रमप्यप्रतिहतम्, गरुडोप्यवध्यः; तथाप्युभयरक्षार्थं तेनैकं पतत्रं त्यक्तम्; तथा भगवताऽपि महादेवेन तत् शूलं त्यक्तं सुदर्शनसत्यत्वाय। अतो न कोऽपि विरोधः। देवता तत् शूलं परित्यज्य अन्यत्र गतेत्यर्थः। एवं देवबलमपि निराकृतम् ॥ १४ ॥

---

**प्रकाशः।**

× जग्राहेत्यत्र। उपजीव्यव्यतिरेकेणाऽन्यत्र शक्तेति। उपजीव्यभिन्ने एव शक्तेत्यर्थः।

* तदोजसेत्यत्र। सजातीयत्वादिति। 'रुद्रात्प्राप्तं चक्रम्' इतिपक्षे रौद्रत्वेन, अन्यथा तु तेजोरूपत्वेन साजात्यात्।

---

१ पुनम् ख. ग. २ निशातस्तीक्ष्णः ग

ततः स्वसामर्थ्यं प्रकटितवानित्याह—

**वृक्णे स्वशूले बहुधाऽरिणा हरेः प्रत्येत्य विस्तीर्णमुरो विभूतिमत् ।**
**प्रवृद्धरोषः स कठोरमुष्टिना नदन् प्रहृत्याऽन्तरधीयताऽसुरः १५**

+वृक्णे स्वशूल इति । देवताया गतत्वात् स्वस्यैव शूलं वृक्णम् । अरिणा चक्रेण । तस्य सामर्थ्यं पूर्वमुक्तम् । हरेरिति संबन्धिसामर्थ्यात् नोपजीव्यविरोधः । लक्ष्मीलोभादेवमहमुपेक्षित इति ज्ञापयन्निवं विभूतिमत् इत्युक्तम् । भगवद्वक्षो मुष्टिना प्रहृत्याऽन्तरधीयतेति संबन्धः । प्रतिकूलतया आगमनं मोक्षाभावं सूचयति, अन्यथा 'मामुपेत्य तु कौन्तेय' इति वाक्यात् भगवत्समीपे गतस्य कृतार्थतैव स्यात् । उरो मर्मस्थानम् । विस्तीर्णमिति सर्वमुष्टिसंबन्धार्थं; विशेषेण स्तीर्णं वा संवरणाशक्यम् । ननु शस्त्रे हते किमनेन भविष्यतीत्याशङ्कयाऽऽह—प्रवृद्धरोष इति । प्रकर्षेण वृद्धो यो रोषः, तेन विचारो न जात इति। ननु क्रोधेऽपि कथं विचारस्य न प्रवृत्तिः ? तत्राऽऽह—स इति । पूर्वोक्तः । अतो विवेकाद्यभावात् न विचारोत्पत्तिः । मुष्टेः साधनत्वायाऽऽह—कठोरेति । अनेन तस्य महत्त्वं सूचितम् । नदन्निति स्वात्मानं ज्ञापयन्ननवधानव्यावृत्त्यर्थम् । सर्वस्मिन्नपि बले क्षीणे असुरत्वात् प्रहृत्याऽन्तरधीयत । अस्य प्रतीकारे किमवशिष्यत इति तिरोधानम् ॥ १५ ॥

अप्रतीकारे सति प्रत्याहारेण किं कृतमित्याशङ्कायामाह—

**तेनेत्थमाहतः क्षत्तर्भगवानादिसूकरः ।**
**नाऽकम्पत मनाक् क्वापि स्रजा हत इव द्विपः ॥ १६ ॥**

तेनेत्थमाहत इति । क्षत्तरिति संबोधनं विवेकित्वज्ञापनार्थम् । यथा पुत्रेण ताड्यते, यथा वा स्त्रिया स्रजा । भगवानिति अकिञ्चित्कारे हेतुः । अवताररूपेऽपि विचार्यमाणे न मुष्टिप्रहारेण किञ्चिद्भवति । तत्राऽप्यादिसूकरोऽतिकठिनः । मनागपि नाऽकम्पत । पश्वादिदेहेषु मक्षिकोपवेशेन कम्पो भवति । प्रहारस्याऽधमं कार्यं कम्पः; तत्राऽप्येकदेशे; तत्राऽपि धातेन देहचलनवन्मनाक्; तदपि न । साधनस्य साध्याजननं कथं संगच्छत इत्याशङ्कयाऽऽह—स्रजा हत इव द्विपः । न हि स्रजा हतो हस्ती कम्पते । न प्रहारमात्रं दुःखजनकम्, किन्त्वल्पस्य महत्; तथा चेत् प्रकृतेऽपि तुल्यमित्यर्थः ॥ १६ ॥

एवं तस्य सहजं युद्धमुक्त्वा मायिकमाह—

**अथोरुधाऽसृजन्मायां योगमायेश्वरे हरौ ।**
**यां विलोक्य प्रजास्त्रस्ता मेनिरेऽस्योपसंयमम् ॥ १७ ॥**

---

प्रकाशः ।

+ वृक्ण इत्यत्र । किमवशिष्यत इति । अर्थात् किमपि नाऽवशिष्यते इत्यर्थः ।

---

१ इति. ग. २ स्थापयन्. ख. ग. ३ आसुरत्वात्. ख. घ. ४ सर्वो पाठ.

+ अथोरुधेति। प्रकारान्तरेण नानाप्रकारां दैत्यानामुपास्यभूतां मायामसृजत्। 'मायेत्यसुराः, तद्धैतान् भूत्वाऽवति' इति श्रुतेः। भगवन्मोहनार्थं मायानिर्माणम्; परं भ्रान्तः। अन्यत्रैवैतत् कर्तव्यम्, न तु योगमायाया ईश्वरे। सर्वा माया योगमायाया अंशाः, तस्या अपि भगवानीश्वरो नियन्ता; तत्रापि सर्वदुःखहर्ता। अन्याश्च मायाः प्राणिनां दुःखदाः; अतो विचार्याऽपि, लीनामपि, मायां परदुःखदां हन्ति। तत्र स्वस्य सर्वस्वभूतां चिन्मायां भगवन्निकटे योजयेत्, तदा तां मारयन् स्वस्य सर्वस्वमेव नाशयेदिति तस्य दुर्बुद्धित्वप्रतिपादनार्थं सप्तम्यन्तं पदद्वयम्। तर्हि किमिति प्रयुक्तवानित्याशङ्क्य, लोके माया जये परमसाधनमिति। तस्याः स्वरूपं गुणाश्च वक्तव्याः; तत्र गुणानाह—यां विलोक्येति। यां मायां विलोक्य, सर्वा एव प्रजाः, स्ववधशङ्कया प्रथमतो भीताः, पश्चान्महतीं दृष्ट्वा अस्योपसंयममेव मेनिरे। जगतः प्रलय एव जात इति ज्ञातवत्यः॥ १७॥

मायायाः स्वरूपमाह—

**प्रववुर्वायवश्चण्डास्तमः पांसवमैरयन्।**
**दिग्भ्यो निपेतुर्ग्रावाणः क्षेपणैः प्रहिता इव॥ १८॥**

प्रववुरिति। चण्डा वायवोऽसह्याः, प्रकर्षेण ववुः—वान्ति स्म। किञ्च, पांसवं तम ऐरयन् प्रकटितवन्तः। तथा पांसुवृष्टिर्जाता, यथा महानन्धकारो भवति। तृतीयं रूपमाह—दिग्भ्यो निपेतुर्ग्रावाण इति। सर्वतः पाषाणा अपतन्। ते पाषाणाश्च न करकावत् पतन्ति, किन्तु क्षेपणेन—दुर्गादिस्थयन्त्रेणौपधबलेन—यथा पतन्ति। क्षेपणैः प्रहिताः प्राणिनो घातयन्ति, तद्वदित्यर्थः। एषा माया तामसी त्रिविधा॥ १८॥

राजसीमाह—

**द्यौर्नष्टभगणाऽभ्रौघैः सविद्युत्स्तनयित्नुभिः।**
**वर्षद्भिः पूयकेशासृग्विण्मूत्रास्थीनि चाऽसकृत्॥ १९॥**

द्यौर्नष्टभगणेति। स्वर्गो मेघैः कृत्वा नष्टज्योतिश्चक्रो भवति। अभ्रौघैरिति मेघानामवान्तरजातिभेदा उक्ताः। विद्युतस्तडितः, स्तनयित्नवो गर्जितानि, ताभ्यां सहितैः सात्त्विकैः। राजसतामसयोर्द्धर्मयोरत्र सहभावः प्राणिगर्भवधार्थः। मेघानां कार्यमाह—वर्षद्भिरिति। षट् मलानि वर्षन्ति पूयादीन् (?)। पूयकेशासृजः एकप्रकाराः, भयानका बीभत्साः; विण्मूत्रास्थीनि केवलबीभत्सानि। चकारादन्यान्यपि भयानकानि। असकृद्वारं वारमिति सहजत्वज्ञापकम्॥ १९॥

सात्त्विकीमाह—

**गिरयः प्रत्यदृश्यन्त नानायुधमुचोऽनघ!।**
**दिग्वाससो यातुधान्यः शूलिन्यो मुक्तमूर्धजाः॥ २०॥**

---

प्रकाशः।

+ अथोरुधेत्यत्र। माया जये इत्यत्र मायेति भिन्नं पदम्।

---

१ एतान्. ख. ग. २ अन्याः ख. ३ इदं नाऽस्ति. ग. घ. ४ सात्त्विकाः।जसयोः ग.

गिरय इति । नानायुधमुचः खड्गादीन्यनेकान्यायुधानि मुञ्चन्तीति, साक्षान्मारकत्वं साधनतोऽपीति । अनघेति संबोधनं विश्वासार्थं भयाभावार्थं च । सात्त्विकमायाया आधिदैविकान्याह—दिग्वासस इति । यातुधान्यो राक्षस्यः, स्वभावतो भयानकाः; दिगम्बराः स्वरूपतोऽमङ्गलाः; शूलिन्यो गृहीतशूलाः साधनतो घातुकाः; मुक्तमूर्द्धजा मुक्तकेशाः, रूपतो भयानकाः ॥ २० ॥

लौकिकप्रकारेणाऽपि मायाया युद्धोपयोगिस्वरूपमाह—

**बहुभिर्यक्षरक्षोभिः पत्त्यश्वरथकुञ्जरैः ।**
**आततायिभिरुत्सृष्टा हिंस्रा वाचोऽतिवैशसाः ॥ २१ ॥**

बहुभिर्यक्षरक्षोभिरिति । यक्षराक्षसभेदोऽग्रे वक्तव्यः । बहुभिरिति तेषामवान्तरजातयो गृहीताः । दैत्यत्वे एते योधाः । स्वभावतश्चतुर्विधां सेनामाह—पत्त्यश्वरथकुञ्जरैरिति । पदातयः, अश्ववाराः, रथाः, गजाश्च सेनाङ्गाः । एवं रूपेणैव मारकत्वमुक्त्वा वचनेनापि तथात्वमाह—आततायिभिरिति । शस्त्रपाणिभिः सर्वैरेवोर्ध्वं सृष्टा वाचो जाताः, मारय ताडयेत्याद्याः । तासां विशेषणद्वयमाह—हिंस्राः स्वरूपतो हिंसाजनकाः, यथा खंदृफद्जहीत्याद्याः । अतिवैशसाश्च प्राणिघातमन्त्ररूपाः, यैर्नृपशवो मार्यन्ते ॥२१॥

एवं चतुर्विधं मायारूपमुक्त्वा तस्याः प्रतीकारमाह—

**प्रादुष्कृतानां मायानामासुरीणां विनाशनम् ।**
**सुदर्शनास्त्रं भगवान्प्रायुङ्क्त दयितं त्रिपात् ॥ २२ ॥**

प्रादुष्कृतानामिति । यास्तु मायाः, तेन विसृष्टा अपि भगवद्भयात् न प्रादुर्भूताः, ता न मारिताः । यास्तु प्रादुर्भूताः, तत्र स्वकीया अपि सजातीयप्रतिबन्धार्थं प्रादुर्भूताः; तद्व्यावृत्त्यर्थमाह—आसुरीणामिति । विशेषेण नाशनं यस्मात्, पुनस्तासामन्यत्राऽप्यनुत्पत्तेः । सुदर्शनास्त्रमिति शस्त्ररूपे सुदर्शने मन्त्रात्मकं सुदर्शनास्त्रं योजयित्वा, पश्चात् सुदर्शनं प्रक्षिप्तवानित्यर्थः । ननु सा देवता सात्त्विकीति न तां मारयेदित्याशङ्क्याऽऽह—दयितमिति । तदत्यन्तं प्रियम्, प्रियस्य हितं करिष्यत्येवेत्यर्थः । त्रिपाद्यज्ञः, सवनत्रयात्मकत्वात् । मायाविनाश एव यज्ञोत्पत्तेस्तस्य तदावश्यकत्वमित्यर्थः। यज्ञस्य परकृतिसाध्यत्वव्यावृत्त्यर्थमाह—भगवानिति ॥ २२ ॥

एवं मायायुद्धमप्युक्त्वा, तस्य कामनां पूरयित्वा, मारणार्थमिच्छां कृतवान्; तदा तस्य मृत्युसूचकं दुर्निमित्तं जातमित्याह—

**तदा दितेः समभवत्सहसा हृदि वेपथुः**
**स्मरन्त्या भर्तुरादेशं स्तनाच्चाऽसृक् प्रसुस्रुवे ॥ २३ ॥**

तदा दितेरिति । स्वस्थाने स्थिताया दितेस्तस्मिन् काले हृदये कम्पो जातः । भयं कारणे प्रथमं प्रविष्टं कार्ये चेत् समायाति, तदा नियतं भवतीति तथा वचनम् । वेपथुः। आराद्विभियदानं पूर्वमुक्तम् । पुत्रमरणमेव भविष्यतीति च ज्ञातवती, तदाह—स्मरन्त्या भर्तुरादेशमिति। 'तदा विश्वेश्वरः क्रुद्धः' इति कश्यपवाक्यं स्मृत्वा, अकस्माद्धृदये कम्पे जाते, पुत्रनाशमेव निश्चितवतीत्यर्थः । किंच, निमित्तान्तरमपि जातमित्याह—स्तनाच्चाऽसृक् प्रसुस्रुव इति । इदं पुत्रनाशसूचकमेव, स्तन्यं दुग्धं तस्य पोषकम्, रुधिरं नाशकमिति । चकारात् हृदयं तथैव वर्ततीत्युक्तम् ॥ २३ ॥

एवं निमित्ते जाते विनष्टायामपि मायायाम्, सर्वस्मिन्नेव पौरुषे प्रतिहते, यदि नाऽऽगच्छेत्; तदा भगवानक्लिष्टकर्मा न मारयेदिति सूचनार्थं तस्य पुनरतिक्रममाह—

**विनष्टासु स्वमायासु भूयश्चाऽऽव्रज्य केशवम्।**
**रुषोपगूहमानोऽमुं ददृशेऽवस्थितं बहिः॥ २४॥**

*विनष्टास्विति। सर्वा एव माया विनष्टाः, स्वांशे यावत्यः पतिता इति ज्ञापयति—स्वेति। पूर्वं मुष्टिमारणे यथा समागत, भूयश्चाऽपि तथैव समागत्य रोषेण भगवदुपगूहनं कृतवान्, धृत्वा स्थानान्तरं नेष्यामीति। तदा सूक्ष्मो भगवान् जातः, तस्य हस्तान्मध्ये विनिर्मुक्तो बहिरेवाऽवस्थितः। तदा तं निकटे स्थितं भगवन्तं दृष्टवानित्याह—ददृशेऽवस्थितमिति॥ २४॥

**तं मुष्टिभिर्विनिघ्नन्तं वज्रसारैरधोक्षजः।**
**करेण कर्णमूलेऽहन्यथा त्वाष्ट्रं मरुत्पतिः॥ २५॥**

**तं मुष्टिभिरिति।** एवमप्यमारयन्तं भगवन्तं पुनर्मुष्टिभिरताडयत्, यथा बालको मातरं पितरं वा। विशेषेण निघ्नन्तमिति तथा मारणे हेतुः। हेत्वन्तरमाह—वज्रसारैरिति। वज्रपातादपि कठिनैः। उद्वेगान्मारणं व्यावर्तयति—अधोक्षज इति। इन्द्रियजन्यं ज्ञानं कर्म वा न भगवन्तं स्पृशतीति बहिर्मुखत्वान्मारणमिति भावः। मारणप्रकारमाह—करेण कर्णमूलेऽहन्निति। अग्रिमपादः करः। सुदर्शनेन हनने मुक्तिः स्यादिति क्रियाशक्त्या हनने पुनर्भवश्च सूचितः। एतद्वधे प्रयोजनमाह—यथा त्वाष्ट्रं मरुत्पतिरिति। वृत्रो हि तेजोऽस्त्रायुधसम्पदो गिलितवान्, तद्वधे पुनः प्राप्ताः; अन्यथा अतिप्रवृद्धो लोकानेवाऽऽवृणुयात्। अतो लोकरक्षार्थम्, देवहितार्थम्, स्वस्य सेवकसिद्ध्यर्थं च हतवानित्यर्थः॥ २५॥

तस्य हिरण्याक्षस्य हननानन्तरं जातं स्वरूपमनुवर्णयति—

**स आहतो विश्वसृजा ह्यवज्ञया परिभ्रमद्गात्र उदस्तलोचनः।**
**विकीर्णबाह्वङ्घ्रिशिरोरुहोऽपतद्यथा नगेन्द्रो लुलितो नभस्वता॥ २६॥**

**स आहत इति।** विश्वसृजा अवज्ञयाऽऽहतोऽपतदिति संबन्धः। आ ईषत्। ननु भगवतस्तस्य वधे क उपकार इत्याशङ्क्याऽऽह—विश्वसृजेति। सृष्ट्यर्थं तस्य वध इत्यर्थः। स हि रजोगुणाभिमानी रजः प्रतिबध्य तिष्ठति। ईषद्धननं च तन्मात्रनिराकरणाय, न तु रजसः। इममेवार्थं हिशब्द उपपादयति, तदमारणे रजसः कार्याक्षमत्वात्। यद्यपि रज एव ततः पृथक्कर्तुं शक्यते, न मारणमपेक्षितम्; तथापि प्रयत्नस्य तुल्यत्वात् हननमेव कृतम्। तदाह—अवज्ञयेति। मरणं भगवत उद्देश्यं न भवतीत्यर्थः। परिभ्रमद्गात्रं यस्य, करेण ताडितो भ्रमतीति। उदस्ते लोचने यस्य; ऊर्ध्वं निर्गते लोचने। स हि केवलराजसोऽपि बीजवशात् सत्त्वसहितोऽपि भवति। सत्त्वेन चोत्तरत्रोपकारः, प्रकृते च नाशः; अन्यथा रजःप्रतिबन्धः स्यात्। अत एव प्रथमं रजसो विक्षेपमाह—परिभ्रमद्गात्र इति। लोचने तु सत्त्वं बीजजीव-

प्रकाशः।

* विनष्टास्वित्यत्र। स्वांश इति। स्वदाये।

१ मकारो नाऽस्ति. क प. २ कोपेन. ग.

भेदादुभयविधमिति लोचने इति द्विवचनम् । परिभ्रमणेन बहुधा रजसः प्रवृत्तेर्बाह्वादीनां विक्षेपणम् । वर्णानामस्मिन् कल्पे नानाप्रकारेणोत्पत्त्यर्थं बाहवोऽङ्घ्रयः शिरोरुहाश्च विकीर्णा येन । विकीर्णेति । क्रियाशक्तिर्गतिर्जन्म विकीर्णं तस्य चेति विकलतया तस्य सर्वे संस्कारा निवारिताः । अन्तरिक्ष एव प्राणा गता इति तस्याऽग्रे राक्षसत्वं ÷ भक्तत्वं च । भूमौ तु प्राणा न गता इत्याह—व्यसुरपतदिति । तथात्वे ज्ञापकं दृष्टान्तेनाऽऽह —यथा नगेन्द्र इति । वृक्षश्रेष्ठो यथा नभस्वता वायुनोन्मूलितः पततीत्यर्थः ॥ २६ ॥

मृतं वर्णयति—

**क्षितौ शयानं तमकुण्ठवर्चसं करालदंष्ट्रं परिदष्टदच्छदम् ।**
**अजादयो वीक्ष्य शशंसुरागता अहो! इमां को नु लभेत संस्थितिम् २७**

क्षितौ शयानमिति । मृत्युग्रस्तो हि विवर्णो भवति, अयं तु भगवता उपसंहृत इति न कुण्ठं वर्चो यस्य । करालदंष्ट्रा यस्येति मरणसमये यमस्य करालत्वादग्रे राक्षसत्वम्; अधरस्य लोभस्य स्नेहेन विद्धत्वा-न्मानुपत्वं च; परितो विद्धत्वान्मरणान्तं लोभः । अस्य मरणं सर्ववादिसम्मतत्वेन समीचीनमिति ज्ञापयितुं ब्रह्मादीनां स्तोत्रम् । फलस्य कर्मविरुद्धत्वात् हिरण्याक्षेण तादृशी गतिः प्राप्तेत्याश्चर्यम् । संस्थितिं मृत्युम् । विरुद्धकर्ता नैवं प्राप्नोतीति को नु लभेतेत्याश्चर्योक्तिः । फलविरुद्धा तस्य कृतिर्लक्षणैव निरूपिता । २७ ।

न चैतत्फलं तादृशमेवेति शङ्कनीयम्, किन्तु परमोत्कृष्टयोगस्यैतत्फलमित्याह—

**यं योगिनो योगसमाधिना रहो ध्यायन्ति लिङ्गादसतो मुमुक्षया ।**
**तस्यैव दैत्यऋषभः पदा हतो मुखं प्रपश्यंस्तनुमुत्ससर्ज ह ! ॥ २८ ॥**

* यं योगिन इति । यं भगवन्तम्, योगिनो जितयोगाः, योगेनैव समाधिं प्राप्य एकान्ते तत्र ध्यायन्ति । असतः प्राकृतात्, लिङ्गात् समुदायात्, मुमुक्षया । अस्य वराहस्य मानस्यपि मूर्तिर्मार्गान्तरस्थैरपि चिन्तिता समाधौ मोक्षमुत्पादयति, तत्र साक्षाद्भगवान्; तस्या अपि गतिदायी, भक्तानामाश्रयभूतः पादः । अयं च स्वधर्मनिष्ठ इत्याह—दैत्यऋषभ इति । किञ्च, मरणकाले ज्ञानं पूर्णम्, यतो मुखं पश्यन् तनुमुत्ससर्ज । तां सन्ततिमेव त्यक्तवानित्यर्थः । ब्रह्मा देवान् प्रति तस्य फलमाहाऽऽश्चर्यमिति ॥ २८ ॥

एवमपि मरणे जन्मान्तरसंबन्धे सति च विस्मयेन विस्मितान् प्रत्याह—

**एतौ तौ पार्षदावस्य शापाद्यातावसद्गतिम् ।**
**पुनः कतिपयैः स्थानं प्रपत्स्येते ह जन्मभिः ॥ २९ ॥**

---

प्रकाशः ।

÷ स आहत इत्यत्र । भक्तत्वमिति । रुद्रभक्तत्वम्, अन्तरिक्षस्य रुद्र(त)त्वादिति । अत्र व्यसुत्वं लक्षणैरेव ज्ञाप्यते । एवं च भगवत्कृतेन घातेन उच्छ्वसमपि पादविकिरणाद्बोध्यम् । तथात्वे इति । स्थानान्तरे पतने ।

* यमित्यत्र । तस्या अपीति । प्रकृतेरपि । तां संततिमिति । दैत्यसन्ततिम् ।

१ वेति क. ङ. च. २ निरुद्धत्वात् ग., विरुद्धत्वात् ख. घ. ३ निरुद्धत्वात् ग. विरुद्धत्वात् च

एताविति । तौ पूर्वोक्तौ । अस्यैव पार्षदाविति एवं फलं नाऽऽश्चर्यम् । एवंभावे हेतुमाह–शापा द्यातावसद्गतिमिति । तर्हि कदा निस्तार इत्याकाङ्क्षायामाह–पुनः कतिपयैरिति । अनेन सहजन्मनां त्रैविध्यम् । सम्भावनया बहुवचनम्, कर्मणां दुर्ज्ञेयत्वात् ॥ २९ ॥

एवं तं स्तुत्वा भगवतोऽनवगाह्यमाहात्म्यमवगत्य तं नमति—

## देवा ऊचुः—

**नमो नमस्तेऽखिलयज्ञतन्तवे स्थितौ गृहीतामलसत्त्वमूर्तये ।**
**दिष्ट्या हतोऽयं जगतामरुन्तुदस्त्वत्पादभक्त्या वयमीश ! निर्वृताः ३०**

×नमो नम इति । आदरे वीप्सा । एकं भगवतः कार्यं बहूनि फलानि साधयतीति भगवतो बहु कार्यं निरूपयन्ति । तत्र प्रथमं सृष्ट्यर्थं यज्ञाविर्भावो निरूप्यते, अन्यथा कदाचित्केचन यज्ञाः केषांचिदाविर्भूता भवन्ति, अत्र तु सर्व एवाऽऽविर्भाविताः । तदाहुः–अखिलयज्ञतन्तव इति । अखिला ये यज्ञतन्तवो यज्ञसंस्था[1], तद्रूपो भवान् । किञ्च, रक्षा भगवतो धर्मः साक्षाद्विशेषाकारेण; तदप्यनेन रूपेण सिद्धमित्याह–स्थित्यर्थं गृहीता अमला सत्त्वमूर्तिर्येन । अमलं गुणान्तरासंबद्धम् । धर्मग्लानिरपि निवर्तितेत्याह–दिष्ट्या हतोऽयमिति । परमभाग्येनाऽयं हतः । धर्मो हि भाग्यम्, धर्मस्य पोषकम् । एतद्वधे धर्मरक्षायां बीजमाह–जगतामरुन्तुद इति । अरुर्मर्म । देवभक्तिरक्षाऽप्यनेन सिद्धेत्याह–त्वत्पादभक्त्येति । वयं देवाः । ईशेति संबोधनं सर्वत्र सामर्थ्यबोधकम्, एकस्यैव सामर्थ्यस्य तथात्वबोधकं वा । निर्वृताः सुखिताः; हिरण्यकशिपोरौद्धत्याभावात्, उपस्थितदुःखनाशाद्वा ॥ ३० ॥

एवं भगवानवतारं कृत्वा तदुपसंहारं चकारेत्याह—

## मैत्रेय उवाच ।

**एवं हिरण्याक्षमसह्यविक्रमं स सादयित्वा हरिरादिसूकरः ।**
**जगाम लोकं स्वमखण्डितोत्सवं समीडितः पुष्करविष्टरादिभिः ॥ ३१ ॥**

एवमिति । असह्यविक्रमं हिरण्याक्षं सम्यक् सादयित्वा स्वं लोकं जगामेति संबन्धः । असह्यविक्रम इति तद्गतो दोषो मारणे हेतुः । हरिरिति तस्य तथाकरणे स्वधर्मो हेतुः । आदिसूकर इति शीघ्रं तिरोभावे हेतुः । आदिपदं चाऽलौकिकपरम्, तेन तस्य दोषाभावः । स्वमित्यावश्यकम् । यद्यप्यत्रापि स्थितिः कीर्तिजनिका भवति, तथाप्यखण्डितोत्सवो लोको वैकुण्ठाख्यः । उत्सवा हर्षहेतवो न कदाचिदपि खण्डिता भवन्तीत्यवतारकार्यसमाप्तिं सूचयति । पुष्करविष्टरादिभिः कमलासनब्रह्मादिभिः सम्यक् स्तुतः ३१

---

प्रकाशः ।

× नमोनम इत्यत्र । परमभाग्येनेति । एकं पदम्, महाभाग्येनेत्यर्थः । वयं देवा इति । देवानां विष्णुभक्तिः स्वाभाविको धर्म इति वामनपुराणे प्रसिद्धम् । तथात्वबोधकमिति । अनेककार्यकारित्वबोधकम् ।

---

[1] आविर्भूता.. क. ड.

एवं वराहचरित्रमुक्त्वा तस्य चरित्रान्तरमप्येवं भविष्यतीत्याशङ्क्याऽऽह—

**मया यथानूक्तमवादि ते हरेः कृतावतारस्य सुमित्र ! चेष्टितम् ।**
**यथा हिरण्याक्ष उदारविक्रमो महामृधे क्रीडनवन्निराकृतः ॥ ३२ ॥**

*मयेति । अस्तु वा, मा वा; यावत् यथानूक्तम्, गुरुपरम्परया प्राप्तम्, अस्मद्गुरुणा यथोक्तम्, तथा ते तुभ्यमवादि । आवश्यककरणे हेतुः— हरेरिति । कृतावतारस्येति गुरूणामपि ज्ञाने हेतुः । सुमित्रेति संबोधनं गुह्यकथनार्थम् । सुष्ठु मित्रमिति यथाऽहं तथेति, नाऽत्र गोप्यमिति, सम्यक्कथने हेतुः । परम्परायामन्यत्वं वारयति—यथा हिरण्याक्ष इति । उदारो विक्रमो यस्य । सर्वेषां गायकानां सर्वेष्वेव वीरेषु कीर्तिः, तेभ्यः स्वसामर्थ्यात् सर्वं प्रयच्छतीति । महामृधे लौकिकसंग्रामे हिरण्याक्षकृते सति, क्रीडनवत् काष्ठपुत्रिकावत्, निराकृतः । यथा भगवता कृतम्, तथाऽस्मद्गुरुभिरुक्तम्; तथैव मयोक्तमित्यर्थः ॥ ३२ ॥

×अस्य चरित्रस्य त्रिविधं फलमाह, एतद्दृष्टमन्यद्दृष्टमदृष्टं च पङ्क्तिः । द्वाभ्यां द्वाभ्यामेकैकम् । तत्र प्रथमं तस्यां कथायां श्रुतायां विदुरदृष्टमाह द्वयेन—इतीति कथनोपपादनाभ्याम्—

## सूत उवाच ।

**इति कौषारवाख्यातामाश्रुत्य भगवत्कथाम् ।**
**क्षत्ताऽऽनन्दं परं लेभे महाभागवतो द्विजाः! ॥ ३३ ॥**

तत्र प्रथमं कथायां श्रुतायां तस्य किं जातमित्याकाङ्क्षायामाह—इत्यमुना प्रकारेण । कुषारोः पुत्रः कौषारवो मैत्रेयः । पितृनाम्ना तन्निर्देशः कथने विश्वासार्थः । भगवत्कथामिति कथाया अपि प्रभुणा निरूपिताः। क्षत्तेति विचक्षणः, मोहकलीलां परित्यज्य मुख्यलीलाग्रहणार्थमुक्तः । परमानन्दं कथायामेव विद्यमानं श्रोतृविशेषादभिव्यक्तं लेभे । तथात्वे हेतुः—भागवत इति । शौनकादीनां तथात्वाभावात् बाधितार्थत्वमाशङ्क्य निराकरोति—हे द्विजा इति । वेदोक्तकर्मादिभारवत्त्वात् तदस्फूर्तिरिति भावः ॥ ३३ ॥

अत एव तदुपपादयति—

**अन्येषां पुण्यश्लोकानामुद्दामयशसां सताम् ।**
**उपश्रुत्य भवेन्मोदः श्रीवत्साङ्कस्य किं पुनः? ॥ ३४ ॥**

अन्येषामिति । पुण्या श्लोका कीर्तिर्येषां नलादीनाम् । कीर्तियशसोः पूर्वं वैलक्षण्यमुक्तम्, सदाचारपराक्रमकृतम्, वैदिकलौकिकभेदेन भिन्नम् । उभयवत्त्वे सत्त्वम् । प्रमोदे वा त्रयं हेतुः । कृपालुत्वादयः सद्धर्मा अन्तःकरणोत्कर्षहेतवः। बहुधाऽऽवर्तितं सत्कर्म, सानुभावं सत्, पुण्यकीर्तित्वमापद्यते । उद्दामं यशो

---

प्रकाशः

* मयेत्यत्र । आवश्यककरण इति । अवश्यमवतरणे ।

× इति कौषारवेत्यत्र । आहेति । सूतमुखेन व्यास आह ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे एकोनविंशाध्यायविवरणं सम्पूर्णम् ।

---

येषाम्, अव्याहतपराक्रमजन्यमित्यर्थः । तेषां कथामुपश्रुत्य, मोदः श्रवणसुखं भवेत् । श्रीवत्साङ्कपदेन सदाचारः सर्वे गुणाश्च निरूपिताः, लक्ष्मीस्थानत्वात् । तदप्यङ्कं चिह्नमिव । एतादृशान्यपि चिह्नानि बहूनीति कैमुतिकन्यायो युक्तः ॥ ३४ ॥

तस्य चरित्रान्तरं संवादार्थं तथाविधमाह—यो गजेन्द्रमिति द्वाभ्यां स्वरूपफलभेदेन । तत्र स्वरूपमाह—

**यो गजेन्द्रं झषग्रस्तं ध्यायन्तं चरणाम्बुजम् ।**
**क्रोशन्तीनां करेणूनां कृच्छ्रतोऽमोचयद् द्रुतम् ॥ ३५ ॥**

यो गजेन्द्रमिति । यो हरिः, झषग्रस्तं नक्रधृतम्, चरणेन निमग्नं वा, कृच्छ्रतोऽमोचयत् । मोचने हेतुः—ध्यायन्तमिति । चरणाम्बुजमिति प्रेममक्तिमार्गेण ध्यानं निरूपितम् । क्रोशन्तीनां करेणूनामिति दीनता निरूपिता । कृच्छ्रतस्तस्मात् सङ्कटात् । शीघ्रममोचयत् । दृष्टद्वारा भगवानेव फलप्रद इत्युक्तम् । तथा सति इदं परित्यज्य कोऽन्यमदृष्टं भजिष्यतीति वक्ष्यति । भजनीयसाधकं दयासाधकं चैतच्चरित्रमिति तदेव प्रकृतोपयोगित्वादानन्दजनकत्वेनोच्यते । झषोऽत्र नक्रो जलचरविशेषः, सर्व एव नक्रा झषा इत्युच्यन्ते । तेन शरीरेणैवोद्धारे करेणुकृता दया हेतुः, सर्वथोद्धारे ध्यानमिति विशेषः । अनेन साधनाभावोऽप्युक्तः । गजश्रेष्ठो हि महामत्तो भवति, झषग्रस्तः सर्वसाधनरहितो भवति । जातिस्वरूपप्रतिबन्धानां दुष्टत्वात् भगवत्प्रसादो दुर्लभ इति गजेन्द्रनिरूपणम् । अवस्थास्वरूपसंबन्धानां दुष्टत्वात् लौकिकत्वाच्च एकेनैव ध्यानेन तत्संबन्धिनामपि सुखं कृतवानिति करेणूनां कीर्तनम् ॥ ३५ ॥

एवमनेकार्थप्रतिपादकं चरित्रमुक्त्वा येनांशेनाऽत्र दृष्टान्तत्वम्, तद्रूपं कीर्तयन् भजनं फलरूपं समर्थयति—

**तं सुखाराध्यमृजुभिरनन्यशरणैर्नृभिः ।**
**कृतज्ञः को न सेवेत ? दुराराध्यमसाधुभिः ॥ ३६ ॥**

तमिति । वैषयिकसुखादप्यधिकसुखसाधकानि यत्र साधनानि फलं चाऽलौकिकं महत् स सुखाराध्यः, सुखेनैवाऽऽराधयितुं शक्यः । तत्राऽतिप्रसङ्गनिवारणाय विशेषणमाह—ऋजुभिरिति । अवक्रैः कायवाङ्मनोभिः; न वक्रं गृह्णन्ति, न वक्रमाचरन्तीति । अयमपि तेषां स्वाभाविको धर्मः, न त्वागन्तुकः साधनभूतः । एतादृशा मार्गान्तरेऽपि भवन्तीति तद्व्यावृत्त्यर्थमाह—अनन्यशरणैरिति । न विद्यते अन्यत् शरणं येषाम् । अनेन शरणागतौ अक्षालन्याय उक्तः । अशरणाश्च न तिष्ठन्तीत्यर्थात् भगवच्छरणाः । नृभिः साधारणैर्मनुष्यैः । अभिमानाभावाय प्रकृतोपयोगिविवेकाय चोक्तम् । कृतज्ञ इति । जनकत्वादन्तर्यामित्वात्, पालकत्वात्, पूर्वभजने विशेषोपकारकरणाद्वा यो भगवत्कृतं जानाति, स को वा न सेवेत ? अकृतज्ञस्तु न सेवते । तत्र भगवद्गुणा एव हेतव इत्याह—दुराराध्यमिति । अन्यथा पाक्षिकभजनीयः स्यात् । न हि ते न भजन्तीति, किन्तु भगवानेव दुराराध्यो दुःखेनाऽप्याराधयितुमशक्यः । असाधवः शिश्नोदरपराः ॥ ३६ ॥

एवं भजनसमर्थनमुक्त्वा अलौकिकं फलमाह—यो वै हिरण्याक्षवधमिति द्वाभ्याम्, पापानिवर्तकं फलजनकं च । तत्र प्रथमं पापनिवर्तकत्वमाह—

**यो वै हिरण्याक्षवधं महाद्भुतं विक्रीडितं कारणसूकरात्मनः ।**

---

१ अप्युक्तः ख. २ श्रेष्ठेति नास्ति क. ग. ट. ३ ततः क. घ.

**शृणोति गायत्यनुमोदतेऽञ्जसा विमुच्यते ब्रह्मवधादपि द्विजाः! ॥ ३७ ॥**

हिरण्याक्षवधमिति । अन्यथा हिरण्याक्षस्य ब्राह्मणत्वाद्वधः श्रोतव्यो न स्यात् । महाद्भुतमिति मवान्तरसिद्धम्, वधस्य हितरूपत्वाद्वा । महानद्भुतो भवतीति महत्त्वं श्रोतृणामप्युपकारसाधकत्वात् । तथापि श्रोतव्यतायां हेतुमाह–विक्रीडितमिति । विशेषेण क्रीडितं यत्र । भगवतो युद्धलीला हि तत्र स्पष्टा, भगवत्सम्बन्धेन शोधितत्वात् तथात्वम् । कारणसूकरात्मन इति यज्ञार्थं सृष्ट्यर्थं च तथाकरणं युक्तमित्युक्तम् । 'कर्तुः शास्तुरनुज्ञातुः' इति न्यायेन त्रयाणां फलमाह–शृणोति गायत्यनुमोदते इति । श्रवणं मुख्यम्, गानं शास्त्ररूपम् । सुखस्य तत्र दृष्टकारणत्वात् तस्याऽप्रायाश्चित्तत्वमाशङ्क्याऽऽह–गायतीति । अनुमोदनं तादृशम्, यदुभयनिर्वाहकम् । क्रियमाणस्तोत्ररूपमिति केचित् । अञ्जसेति । सर्वत्र सर्वभावेन श्रवणम्; अर्थतः, तात्पर्यतः, शब्दतश्च । कीर्तनेऽपि एतत्त्रयम्, हेत्वभावश्च । अनुमोदनमपि हेत्वभावात् । तदा वधमात्रदोषाद्विमुच्यते । प्रधानपरं न भविष्यतीत्याह–ब्रह्मवधादपीति । द्विजा इति ज्ञानार्थमुक्तम् । ज्ञाने सत्यन्यस्याऽपि भवतीति ज्ञातव्यम् । यज्ञसंबन्धात् द्विजस्यैव भवतीति वा ॥ ३७ ॥

फलजनकत्वमाह—

**एतन्महापुण्यमलंपवित्रं धन्यं यशस्यं पदमायुराशिषाम् ।**
**प्राणेन्द्रियाणां युधि शौर्यवर्धनं नारायणोऽन्ते गतिरङ्ग! शृण्वताम् ॥ ३८ ॥**

एतदिति । चतुर्विधपुरुषार्थसाधकमेतत् । तत्र धर्मो द्विविधः, स्वर्गादिफलसाधको देहादिसंस्कारसाधकश्च । तदुभयरूपमाह–महापुण्यमलंपवित्रमिति । अव्यभिचारिश्रेयःसाधनं महापुण्यम्, सर्वथाऽन्तःकरणपवित्रहेतुरलंपवित्रम् । अर्थो द्विविधः, धनरूपो यशोरूपश्च 'यशःश्रियामेव' इत्यत्र वक्ष्यते । तदुभयमाह–धन्यं यशस्यमिति । कामस्त्रिविधः, जीवनभोगशत्रुजयात्मकः; 'शरीरारोग्यमैश्वर्यमरिपक्षक्षयः' इति वाक्यात् । तत्त्रयमाह–आयुषामाशिषां च पदम्, प्राणेन्द्रियाणां युधि धैर्यवर्द्धनमिति । आशिषः पुत्रादयो विषयाः[1], तेषामिदमेव पदम्, अस्योपाख्यानस्य तत्प्राप्तिहेतुत्वात् । प्राणो बलसाधनम्, इन्द्रियाणि करणानि । पूर्वत्र वा संबन्धः, भक्ष्यभोगात्मको विषय इति । युद्धे धैर्यवर्द्धनं यस्मादिति । धैर्यादेव जयः, धैर्यस्य बलेन्द्रियसहकारित्वात् तत्संबन्धित्वेन निरूपितम् । क्षेमशूरव्यावृत्त्यर्थम्–युधीति । मोक्षसाधकत्वमाह–नारायण इति । अस्मच्छास्त्रे नारायणप्राप्तिरेव मोक्ष इत्येकविध एवोक्तः । तत्र भगवच्छास्त्रे नारायणप्राप्तिस्त्रिविधा–ब्रह्माण्डविग्रहे नारायणे सायुज्यम्, अक्षरे, पुरुषोत्तमे वा । तत्त्रयमपि नारायणशब्द एव वदतीति नारायणपदप्रयोगः । 'नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः' 'नराणां समूहो नारम्' इति, 'आपो नारा इति प्रोक्ताः' इति च । प्रथमार्थे पुरुषोत्तमः, द्वितीयेऽक्षरम्, तृतीये ब्रह्मपिता । अस्य श्रवणात्त्रिविधो भवतीति नारायणपदम् । अङ्गेति संबोधनमप्रतारणाय स्नेहबोधकम् । गतिर्भवतीत्यर्थः । गतिशब्दः पर्यवसानफलवाचकः । शृण्वतामिति प्रधानस्यैवैतत्फलमुक्तम् ॥ ३८ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां
तृतीयस्कन्धे एकोनविंशाध्यायविवरणम् ।

---

१ तद्रूपम् ग. घ. ङ. २ अन्यविषया. ख. घ.

# विंशाध्यायविवरणम् ।

भगवत्कृतसर्गस्तु सोपोद्घातो निरूपितः (?) ।
चतुर्दशभिरध्यायैरुच्यते हरये परः ॥ १ ॥
गुणवैषम्यभावेन सर्गाः पूर्वं निरूपिताः ।
गुणवैषम्यभावोऽत्र द्विविधो वर्ण्यते स्फुटः ॥ २ ॥
आधिदैविकभावोऽत्र नाऽस्तीति द्वैधवर्णनम् ।
आधिभौतिकमेकेन चतुर्भिश्च तथा परम् ॥ ३ ॥
भूतमात्रेन्द्रियाधियां हरौ ज्ञानोपयोगिनाम् ।
गुणाः स्वभावतः केऽत्र पुष्टिमार्गोपयोगिनः ॥ [illegible] ॥
निरूप्यन्ते हरेरुक्ताः प्रत्येकं त्रिविधा यथा ।
आधिदैविकमाध्यात्ममाधिभौतिकमेव च ॥ ५ ॥
चतुर्भिश्च चतुर्भिश्च तथैकेनोच्यते क्रमात् ।

---

### गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृतः प्रकाशः

अथ विंशाध्यायं विवरिषवः प्रकरणान्तरस्याऽऽरप्स्यमाणत्वात् प्रथमतः सङ्गतिं वक्तुं पूर्वप्रकरणार्थानुवादपूर्वकमेतस्याऽर्थमाहुः—भगवदित्यादि । ईरित इति । एकोनविंशतिभिरीरितः । हरय इति हर्यर्थम् । तस्य च स्वार्थपरार्थभेदेन सर्गद्वैविध्यात् प्रथमं परार्थमुक्त्वाऽधुना स्वार्थ उच्यते; अतोऽवसरसङ्गतिरित्यर्थः । अत्र सोपोद्घात इति कथनादुपोद्घातप्रकरणस्य मध्यस्थस्य ब्रह्मरूपकर्तृनिरूपकत्वादेवं प्रत्यपि हेतुतेति तेन सह हेतुहेतुमद्भावोऽपीति च । ननु करणभूतस्य गुणवैषम्यस्याऽपि मध्यमप्रकरणे निरूपितत्वात्तस्य कुतो न हेतुताप्रयोजकत्वमित्यत आहुः—गुणेत्यादि । स्फुट इति । विंशे षड्विंशे च क्षोभपदस्य कण्ठत उक्तत्वात् स्फुट इत्यर्थः। तथा च, यस्मादत्र पुन(र्नि)रूप्यते, तस्मान्न तत्र गुणवैषम्ये हेतुताप्रयोजकत्वम्, किन्तु पूर्वान्वयस्यैव तथेत्यर्थः । एवं सङ्गतिं सोपपत्तिकां निरूप्य वैषम्यद्वैविध्ये हेतुमाहुः—आधिदैविकेत्यादि । अत्र एतत्प्रकरणोक्ते सर्गे 'एते देवाः कला विष्णोः' इतिवद्देवत्वस्य तत्त्वेष्वकथनात् प्रकारभेददर्शनेन पूर्वानुवादस्याऽशक्यवचनतया तेषां ग्रहीतुमशक्यत्वाच्च आधिदैविकत्वं नाऽस्तीत्यतस्तथेत्यर्थः । वर्णने क्रममाहुः—आधिभौतिकेत्यादि । एकोनविंशेन भौतिकं वैषम्यम्। तथा चतुर्भिर्हरौ हर्यर्थम्। भगवत्प्रादुर्भावयोग्यत्वाय ज्ञानोपयोगिनां भूतमात्रेन्द्रियधियां गुणसंस्काररूपं जन्मोच्यते । तथा च, पञ्चाध्यायात्मकमेकमाद्यमवान्तरप्रकरणमित्यर्थः । अग्रिमस्य प्रकारमाहुः—गुणा इत्यादि । अथाऽस्मिन् प्रकरणे स्वभावतः पुष्टिमार्गोपयोगिनो ये भूतमात्रेन्द्रियधियां गुणाः संस्काररूपास्ते क इत्याकाङ्क्षायाम्, हरेः कपिलस्योक्ता ये निरूप्यन्ते, ते यथा यथावत् आधिदैविकादिभेदेन प्रत्येकं त्रिविधाः। अतः क्रमात् पूर्वं चतुर्भिराधिदैविकम्, च पुनश्चतुर्भिरध्यात्मम्, च पुनरेकेनाऽऽधिभौतिकमित्येवं तेषां त्रैविध्यमुच्यते । तथा चैवं नवाऽध्यायात्मकं द्वितीयमवान्तरप्रकरणमित्यर्थः। आधिदैविकादीन् विष-

भक्तिसाङ्ख्यात्मविज्ञानयोगैश्चत्वार आद्यके ॥ ६ ॥
आध्यात्मिकः काल एव माहात्म्यकरणे तथा ।
तदधीनं जगत्सर्वमित्यथाऽस्तु द्वितीयके ॥ ७ ॥
मुक्त एव हरेरर्थे भूतत्वेनोपयुज्यते ।
अतो मुक्तिः स्त्रियाश्चैव पूर्वेषु द्विविधेष्वपि ॥ ८ ॥
धर्मादयोऽपि द्विविधास्तत्रोच्यन्ते क्रमादिमे ।
सर्गे तेषामनुत्पत्तौ मार्गस्तेषां न वै भवेत् ॥ ९ ॥
यादृशा भगवन्मार्गे जीवचिन्तनाचिन्तिताः ।
एकविंशतिभिस्तेऽत्र निरूप्यन्ते क्रमात् स्फुटाः ॥ १० ॥
भगवच्चिन्तिता ये वै पञ्चविंशतिभिस्तु ते ।
अन्यत्सर्वं कालकृतं चत्वारस्तेऽपि वर्णिताः ॥ ११ ॥
त्रिविधा अपि तेऽप्युक्ता मुख्यो मोक्षस्तथाऽन्तिमः ।
मूलम्, सर्गस्त्रयाणां तु मुख्यो मोक्षः फलं तथा ॥ १२ ॥
चतुर्दशभिरध्यायैरतः सर्गो निरूपितः ।
तद्विंशतितमेऽध्याये सङ्कीर्णः सर्ग उच्यते ॥ १३ ॥
षड्भिर्हो हरिकार्यार्थमत्रोक्ताः सकला हरौ ।

---

### प्रकाशः

दीकुर्वन्ति–भक्तीत्यादि । तथा चाऽऽधिदैविके भक्त्यादयश्चत्वारो गुणाः क्रमेण भूतादिसंस्कारकाः । आध्यात्मिके कालाद्याश्चत्वारस्तथा । आध्यात्मिक इति । संवत्सरात्मकः । माहात्म्यकरणे इति द्विवचनम्। करणपदेन मुक्तसङ्गतया विवरणमुच्यते । तदधीनं जगत् सर्वमिति एषा बुद्धिर्बुद्धिसंस्काररूपा । अथ द्वितीयके । आध्यात्मिकप्रकारे । अस्तु । कालादिसंस्कृतं भूतादिकं क्रमेण सर्गरूपमस्तु इत्यर्थः । तृतीये एक एवाऽध्यायः कुत इत्यपेक्षायामाहुः–मुक्त एवेत्यादि।आधिदैविकाध्यात्मिकभेदेन द्विविधेष्वपि हरेरर्थे संस्कृतेषु सत्सु शिष्टो मुक्तः । मुक्तदेह एव भूतत्वेन भौतिककक्षानिविष्टत्वेनोपयुज्यते । अतो हेतोः । स्त्रियाश्चैव स्त्रिया अपि मुक्तिरुच्यते । अतो निराकाङ्क्षत्वात्तृतीय एकोऽध्याय इत्यर्थः । एवमेकधा विभज्य प्रयोजनान्तरेण विभागान्तरमाहुः–धर्मेत्यादि । तत्र तेष्वध्यायेषु क्रमादिमे धर्मादयो द्विविधाः पुरुषार्था अप्युच्यन्ते । तत्कथनहेतुः–सर्ग इत्यादि । तथा च, तन्मार्गप्रचारार्थं द्विविधास्त उच्यन्त इत्यष्टावध्याया इत्यर्थः । द्वैविध्यं कुत इत्यपेक्षायामाहुः–यादृशा इत्यादि । एकविंशतिभिरिति । एकविंशादारभ्य चतुर्भिः । एवं पञ्चविंशतिभिरित्यत्राऽपि बोध्यम् । अग्रिमाणां प्रयोजनमाहुः–अन्यादित्यादि । अन्यद्भगवन्मार्गीयव्यतिरिक्तं तच्चतुष्टयं कालकृतमिति ज्ञापयितुं ते धर्मादयश्चत्वारोऽप्यूनत्रिंशादारभ्य चतुर्षु वर्णिता इत्यर्थः । अतः परमध्यायद्वयं वक्तुं सर्वं संगृह्याऽऽहुः–त्रिविधा इत्यादि । एवं त्रिविधा अपि तेऽप्युक्ताः–यद्वत्त्वेन मुख्यत्वेन चोक्ता–इति मुख्यो मुखे भवो विशेषस्तेषां मोक्षः । अन्तिमस्त्रयस्त्रिंशो मूलमुक्तिरूपः । तुः शङ्कानिरासे । त्रयाणां धर्मप्रभृतीनां सर्गोऽस्ति, तथा मुख्यः परमो मोक्षस्तेषां फलमस्ति । अत उभयथा विभागेऽपि प्रयोजनसत्त्वात्त्रयेत्यर्थः । एवं प्रकरणान्यध्यायांश्च विभज्य प्रस्तुतस्याऽर्थमाहु–त(दि)त्रेत्यादि । संकीर्ण इति । सत्यपि वैलक्षण्ये स्वरूपतोऽल्पत्वाद्विविच्य ज्ञातुमशक्यः । सर्ग इति । वैषम्यपूर्वकः सर्गः । हराविति । तादा-

सर्गमेकविधं ज्ञात्वा विसर्गे प्रश्न ईदृशः ॥ १४ ॥
तथापि शास्त्रमेवाऽत्र वक्तव्यमिति निश्चयः।
अभिप्रेतं न तस्याऽपि तथैवेत्यन्यथोच्यते ॥ १५ ॥
प्रश्नद्वयं तु कुरुते शौनकः प्रकृतौ महान्।
विसर्गविषयं त्वाद्यं भक्तानां तु तथा परम् ॥ १६ ॥
एकेन पञ्चभिश्चैव मूलारम्भो हि भेदकः।
परीक्षिच्छुकयोरत्र विरामो नैव दृश्यते।
सूत एव ततो वक्ता तुल्यार्थत्वान्न दूषणम् ॥ १७ ॥

तत्र शौनकः, सर्गः सविशेषः श्रुत इति, विसर्गं पृच्छति—

## शौनक उवाच।

**महीं प्रतिष्ठामध्यस्य सौते! स्वायम्भुवो मनुः।**
**कान्यन्वतिष्ठद् द्वाराणि मार्गायाऽवरजन्मनाम् ॥ १ ॥**

**महीं प्रतिष्ठामिति।** पूर्वानुवादपूर्वकं हि प्रष्टव्यम्। हिरण्याक्षवध उपोद्घात इति न स पूर्वोक्तत्वेन गृह्यते। भूमिश्च मनोरर्थे समाहृतेति मनोरेव चारित्रं पृच्छति। प्रकर्षेण स्थिता प्रतिष्ठा; सर्वेषां वा जीवानामियमेव प्रतिष्ठेति, देहस्य तन्मूलकत्वात्। तदर्थमेवोद्धृतेति स एव तामधिष्ठाय स्थितः। प्रतिष्ठां प्राप्तः सर्वं करोतीति कृतिप्रश्नावसरः। शुकादिभिरिदं नोक्तमिति त्वया वक्तव्यमिति ज्ञापनार्थं सौत इति संबोधनम्; हे सूतपुत्र! कथाकथनं तस्य कुलपरम्परागतो धर्मः। मनोः सृष्ट्यावश्यकत्वाय स्वायम्भुवेतिपदम्। मनुरिति धर्मप्रवर्तकत्वात् नाऽन्यथाकरणम्। ब्रह्मणा तु द्वारद्वयमेव कृतम्, मनः शरीरं च। यथा-

---

प्रकाशः।

त्म्येन साक्षाद्भगवन्निष्ठाः। तथा चाऽस्य वैलक्षण्यस्य दुरापत्वात्तथेत्यर्थः। नन्वत्र द्वितीयः सर्ग एव चेद्वक्तव्यस्तदा व्यासेन शुकेन वक्तव्यः, विदुरप्रश्नादिकं किमित्युच्यत इत्यत आहुः—सर्गमित्यादि। ईदृश इति। भगवदुपयोगिकार्यविषयकः। तथा च विवक्षितसर्गानुकूलत्वात्तदुच्यत इत्यर्थः। नन्वानुकूल्येपि प्रश्नस्य विसर्गविषयकत्वान्मैत्रेयस्य तावदेव वक्तव्यम्, न तु सर्गोऽपीति तेन कुत उच्यत इत्यत आहुः—तथापीत्यादि। तथा च, प्रश्नाभावेपि शास्त्रमेव तदर्थं वक्तव्यम्, अतः प्रसङ्गात्तेनोच्यत इत्यर्थः। ननु तदुक्ताविदं प्रासङ्गिकमित्यत्र किं गमकमत आहुः—अभिप्रेतमित्यादि। अपिशब्दात् विदुरस्य। तथा चोपेक्षया यथा कथञ्चित् कथनमेव प्रासङ्गिकत्वगमकमित्यर्थः। ननु भवत्वेवम्, तथापि शौनकाद्युक्त्युपन्यासस्य किं प्रयोजनमत आहुः—प्रश्नद्वयमित्यादि। तथा च, तस्याऽतिसात्त्विकज्ञापनाय तदुपन्यास इत्यर्थः। ननु तर्हि 'एवमुग्रश्रवाः' इत्यस्य किं प्रयोजनमत आहुः—मूलेत्यादि। भेदक इति। सूताधिकारस्य भेदकः। तथा चैतदर्थं तद्वाक्यमित्यर्थः। शेषं स्फुटम्।

महीमित्यत्र। सविशेष इति। तज्जनकव्यापारादिसहितः।

---

१ सर्गोयेतिपाठः ख. २ अपि ख. ग.

न्येऽपि शरीरान्मनसश्च जातास्तथैव जनकाः स्युः, तदा जगद्वैविध्यं न स्यादिति विशेषप्रश्नः—कान्यन्त तिष्ठद् द्वाराणीति । अवरजन्मनां मनोः सकाशादर्वाचीनजन्मयुक्तानाम् ॥ १ ॥

एवं मनोर्धर्मात्मनः कार्यं पृष्ट्वा, स्वापेक्षया विदुरं भक्तं ज्ञात्वा, तत्पृष्टमेव त्वया वक्तव्यमित्यभिप्रायेण तेन सर्वथा पृष्टं भविष्यतीत्यर्थे प्रमाणमाह त्रिभिः—

क्षत्ता महाभागवतः कृष्णस्यैकान्तिकः सुहृत् ।
यस्तत्याजाऽग्रजं कृष्णे सापत्यमघवानिति ॥ २ ॥

*क्षत्ता महाभागवत इति । सोपपत्तिकभक्तत्वं तस्य मूलं निरूप्यते। उत्कृष्टप्रश्नकर्तृत्वं सोपपत्तिकमाह हि । १ । प्रथमं विदुरस्य भागवतत्वं निरूपयति । यस्त्वसिधाराव्रतं करोति स महाभागवतो भवति । विदुरस्य भागवतत्वे मुख्यमेतद्बीजम्; तदाह—क्षत्ता महाभागवत इति । क्षत्ता असिधाराव्रतकर्ता, पुराणान्तरे राजसूये युधिष्ठिरं प्रति भगवता तद्व्रतमुपदिष्टम्—" स्वयं पुष्टश्च तरुणः सकामः स्त्रिया । नित्यं स्थितोऽपि मनसा विकारं यो न गच्छति । स्त्रियः सर्वाङ्गसंहृद्याः सर्वाभरणभूषिताः । अप्राप्तकामास्तं प्राप्य साभिलाषा अपि स्वयम् । स्वकीयासु तथाऽन्यासु स्वभार्यास्वपि कुत्रचित् । पञ्चाब्दमध्यवर्त्तिष्टेदसिधाराव्रतं तु तत् । ' क्षत्ता तथा भवतीति तस्य महाभागवतत्वम् । दृष्टप्रकारेणाऽपि महाभागवतत्वमाह—कृष्णस्यैकान्तिक इति । एकान्ते हित ऐकान्तिकः । स्वामिकार्यप्रसङ्गानां तथात्वेऽपि यतो दृढः । यः केवलं हरेरर्थे सर्वथा यत्नवान् स्वतः । प्रसङ्गादपि न स्वार्थे महाभागवतस्तु सः । किञ्च, सुहृत्, सुष्ठु हृदयं यस्य; अन्येऽपि दोषास्तस्य न सन्तीति । सांसर्गिकोऽपि दोषो नाऽस्तीत्याह—यस्तत्याजेति। अग्रे जातः पितृसमो भवति। 'भ्रातॄणामेकजातानाम्' इति न्यायेन तत्पुत्रः स्वपुत्र एवेति पूर्वपरापेक्षापरित्यागेन भगवद्वैमुख्यमात्रं ज्ञात्वा धृतराष्ट्रं दुर्योधनादिसहितं त्यक्तवानित्यर्थः । वस्तुतः कृष्णे अघवानपि न भवति, तथापि भगवदङ्गीकृतपाण्डवविरोधादघवान् । इतिशब्दः प्रकारवाची, सम्भावनावाची वा ॥ २ ॥

एवं सोपपत्तिकं भागवतत्वमुपपाद्य तथात्वं तस्योचितमेवेत्याह—

द्वैपायनादनवरो महित्वे तस्य देहजः ।
सर्वात्मना श्रितः कृष्णं तत्परांश्चाऽप्यनुव्रतः ॥ ३ ॥

द्वैपायनादिति । भगवदंश एव महाभागवतो भवतीति भगवदंशत्वनिरूपणार्थम्—वेदव्यासात् महित्वे अनवरः, अवरो न भवति, न्यूनो न भवतीत्यर्थः । महोऽस्यास्तीति मही, महिनो भावो महित्वम् । तादृशे धर्मे विचार्यमाणे यथा महित्वं वेदव्यासे, तथैव विदुरे । उत्सवोऽत्र भगवत्स्मरणादिकम् । ' मह उद्धव उत्सवः ' इति कोशादकारान्तो महशब्दः । यथा ज्ञानम्, भगवत्स्मरणम्, भगवद्धर्मप्रवर्तकत्वं वा

प्रकाशः।

* क्षत्तेत्यत्र । तस्य मूलमिति । स्वकरिष्यमाणप्रश्नमूलम् । तत्र गमकमाहुः—उत्कृष्टेत्यादि। हि गमकहेतोर्द्वाभ्यामुत्कृष्टत्वं तस्याऽऽह, अग्रे न संवादस्याऽऽहाऽतस्तथेत्यर्थः । एतदिति । क्षत्तृत्वम् । तथात्वेऽपीति । विरुद्धत्वे ।

वेदव्यासे, तथेति। तत्र हेतुमाह—तस्य देहज इति। वेदव्यासस्यायं बीजज पुत्रोऽत्यन्तरङ्ग, अतो युक्तमेव तस्य तथात्वमिति। इद तु ततोऽप्यधिकम्—सर्वात्मना श्रितः कृष्णमिति। वेदव्यासस्याधिकारित्वात् न सर्वात्मनाऽऽश्रितत्वम्। सर्वात्मभावेन ऐहिकपारलौकिकदैहिकात्मीयादीनां कार्यकरार्थं भगवन्तमेवाऽऽश्रयतीति तथा।—सर्वरूपत्व भगवतो वपु नामविशेषमाह। भक्तिमार्गे रसिकश्चाऽयमित्यधिकारिज्ञानिभक्ताद्विशेषमाह—तत्पराँश्चाऽप्यनुव्रत इति। भगवत्परान् भक्ताननुव्रत सेवमान। एव सर्वप्रकारेण तस्य भागवतत्व युक्तम्॥ ३॥

एव विदुर भक्तत्वेन स्तुत्वा तस्य प्रश्नस्योत्तमत्वमाह—

**किमन्वपृच्छन्मैत्रेयं विरजास्तीर्थसेवया।**
**उपगम्य कुशावर्त्त आसीनं तत्त्ववित्तमम्॥ ४॥**

किमन्वपृच्छादिति। पृष्टे कथन रोषाभावं च प्रतिपादयितुमाह—मैत्रेयमिति। स हि मित्राया सुत। नन्वत्यन्तभगवद्भक्तोऽपि गुणवशात्, कालवशाद्वा; लौकिकम्, प्राकृतं वा पृच्छेत्। तद्व्यावृत्त्यर्थमाह—विरजास्तीर्थसेवयेति। य साधनेन निष्पाप, रजोगुणरहितो वा जात, स नाऽन्यत् पृच्छति। रजस एव निराकृतत्वात् दूरे तम। तत्रापि महता कष्टेन, विषमे देशे गत्वा, सत्सङ्गे सति कथमन्यत्पृच्छेदित्याह—उपगम्य कुशावर्ते इति। गङ्गाद्वारस्थानान्तर्गतदेशविशेष कुशावर्ते, तस्मिन् आसीनमिति। तत्रापि तत्त्वविदा मध्ये श्रेष्ठम्, न हि तादृशे देशे तादृशोऽन्यत्पृच्छति। अलौकिकं गूढ स एव जानातीति तत्त्ववित्तममित्युक्तम्॥ ४॥

+ किं प्रश्नमात्र वक्तव्यम्, आहोस्विदुत्तरम्, उभयं वा? तथा सति तस्यैवाऽग्रहे भगवत्कथारसाभिनिवेशो न स्यादित्याशङ्क्य निरूपणं भगवत्कथार्थमित्याह—

**तयोः संवदतोः सूत! प्रवृत्ता ह्यमलाः कथाः।**
**आपो गाङ्गा इवाऽघघ्नीर्हरेः पादाम्बुजाश्रयाः॥ ५॥**

तयोरिति। तयोर्विदुरमैत्रेययो संवदतोः सतोर्मध्ये कथाः प्रवृत्ताः स्वत एव भवन्ति। सूतेति सम्बोधन तादृशकथाज्ञानार्थम्, तस्य सैव वृत्तिरिति। यथा वीराणा युद्धे रुधिरप्रवाहा, ते समला, एतास्त्वमला इति। अमलत्व कीदृशमित्यपेक्षाया दृष्टान्तेन स्पष्टयति—आपो गाङ्गा इवेति। आप स्वभावत एव मेध्या, तत्राप्युत्कर्षो गङ्गाया; साक्षाद्भगवद्रूपा इत्यर्थ। अघघ्नीरिति पापनाशिका, अपराधनिवर्तिका वा। स्वयं निर्मला एवाऽन्यमपि तथा कुर्वन्ति, ब्रह्मदण्डदग्धा अपि गङ्गया पाविता इति। तथात्वे उभयोरेक हेतुमाह—हरेः पादाम्बुजाश्रया इति। चरणाम्बुजाश्रया उभया॥ ५॥

तत किमत आह—

**ता नः कीर्तय भद्रं ते कीर्तन्योदारकर्मणः।**

---

प्रकाशः।

+ द्वैपायनेत्यत्र। सर्वरूपत्वमिति। भजनीयसर्वरूपत्वम्। अत्र पद्ये सर्वात्मनेत्यादिना, सर्वरूपस्येत्यादिना च यथायथं शरणमार्गीयभक्तिमार्गीयौ सर्वात्मभावौ विवेचितौ ज्ञेयौ।

+ किमित्यत्र। तस्येनेति। तत्संवादत्वेन।

## रसज्ञः को नु तृप्येत हरिलीलामृतं पिबन् ॥ ६ ॥

×ता नः कीर्त्तयेति। सूतत्वाद्देयं चेत्तत्राऽऽह–भद्रं त इति। ते भद्रमस्तु, ब्राह्मणानामाशीष एव देयाः। कथानामाधिक्ये हेतुमाह–कीर्तन्यान्युदाराणि कर्माणि यस्येति। भगवतः कर्मणां स्वभावद्वयम्, यः कश्चन तानि कीर्तयेदेव, अफलार्थी फलार्थी च। अफलार्थिनो नित्यविधिः–कीर्तन्यानीति। फलार्थिनस्तु सर्वाण्येव फलानि। पात्रापात्रविचारव्यतिरेकेणैव सर्वफलदातृण्युदाराणि; तस्मात् कीर्तनीयानि। सर्वेषु पदार्थेषु सन्ति रसाः, रसज्ञं प्राप्याऽभिव्यक्ता भवन्ति। भगवतस्तु कर्माण्यभिव्यक्तान्येव, रसज्ञः परमपेक्ष्यते। कथानां स्वविषयरुच्युत्पादकत्वं पूर्वमवोचाम। यथाऽऽमयेनौषधेन क्षुज्जायते, एवमन्नेन च तृप्यते। अन्नमेव चेत् क्षुज्जनकं स्यात्, कथं तृप्येत? तद्वत् रसज्ञः को वा, नु निश्चयेन, तृप्येत? पीतेनाऽमृतेनोत्तरत्रेच्छोत्पादनात्। स हि दुःखहर्ता स्मरन्नेव; दुःखं चाऽऽत्मतिरोभावात्, तिरोभावकश्च प्राकृतो गणः, स भूयानिति। कालादिरपि। अतो निरन्तरोत्पद्यमानदुःखनिवृत्त्यर्थं हरिः स्मर्तव्यः। किञ्च, लोके आलस्याद्युद्वेगादिषु लीलया स्वास्थ्यं भवति; स्वस्याऽन्यस्य वा, क्रियमाणया कीर्त्यमानया वा। मृत्योर्भयं सर्वेषाम्, तत्राऽवश्यापेक्षममृतम्। किञ्च, पानस्य कियत्कालव्यवधाने, कालादिना, प्राकृतैर्वा, मध्ये रसान्तरोत्पादने अलं मन्येताऽपि; अस्मरणाद्वा। पिबन्नेव कथं तृप्येतेत्यर्थः ॥ ६ ॥

सर्गलीला प्रथमत आरभ्यत इति ज्ञापयितुं व्यासः स्वयमाह—

## एवमुग्रश्रवाः पृष्ट ऋषिभिर्नैमिषायनैः ।
## भगवत्यर्पिताध्यात्मस्तानाह श्रूयतामिति ॥ ७ ॥

* एवमुग्रश्रवा इति। उग्रं श्रवःकीर्तिर्यस्येति। इदमुग्रत्वं भगवत्कीर्तिविरोधिनिराकरणार्थम्। रोमहर्षणस्याऽयं पुत्रः, उग्रश्रवा इति नाम्ना। ऋषयो हि ज्ञात्वा पृच्छन्ति, अनेन कार्यसिद्धिर्भविष्यतीति। नैमिषमेवाऽयनं येषाम्; वैष्णवक्षेत्रे स्थिता देशगुणेनाऽपि वैष्णवा भवन्तीति। आत्मनि यावान् परिकरो बाह्याभ्यन्तरभेदेन देहादिः, बुद्ध्यादिर्वा; तत्सर्वं भगवत्येवाऽर्पितं येन, तादृशस्यैतदेव कृत्यम्; अतस्तान्प्रत्याह–श्रूयतामिति। स्वस्य वक्तृत्वं सिद्धम्; तेषां श्रोतृत्वं स्थिरीकरोति–श्रूयतामिति। शुकस्तु मध्ये न विरत इति तस्य प्रश्नेनोत्तरम्। विदुरवाक्यं शुकोऽप्याहेति ज्ञातव्यम् ॥ ७ ॥

सूतस्तु विदुरः प्रश्नं कृतवानित्याह—

## सूत उवाच ।

## हरेर्धृतक्रोडतनोः स्वमायया निशम्य गोरुद्धरणं रसातलात् ।

---

प्रकाशः ।

× ता न इत्यत्र। पूर्वमिति। द्वितीयस्कन्धस्य तृतीयाध्याये 'ज्ञानं यदा प्रतिनिवृत्तगुणोर्मिचक्रम्' इति श्लोके।

* एवमित्यत्र। ज्ञातव्यमिति। 'कुत्र क्षत्तुर्भगवता' इति श्लोके संवादस्य सर्वस्याऽपि पृष्टत्वात्तदनुरोधेन ज्ञातव्यमित्यर्थः।

---

१ प्रश्नो नोत्तरम् ख. ग. ङ., प्रश्नोत्तरम् घ.

**लीलां हिरण्याक्षमवज्ञया हतं संजातहर्षो मुनिमाह भारतः ॥ ८ ॥**

+हरेरिति। शुकस्तु प्रश्नमेवाऽऽह, अयं तूपोद्घातमनुवदति, विदुरप्रश्नेनैव विशेषतो हिरण्याक्षवधभक्तत्वात्। सर्वदुःखहरणार्थमेव क्रोडतनुर्भगवता धृता। स्वमाययेति स्वाधीनया मायया, यथा... परिवर्तमानया। लोकप्रदर्शनार्थं तथाभावं बोधयति, संपादयति वा; अत एव मायया धृतक्रोड...स्तस्य चरित्रद्वयम्—भूम्युद्धरणमिष्टरूपम्, हिरण्याक्षहननमनिष्टनिवृत्तिरूपम्। उभयं श्रुत्वा संजात...ः। अनुवादेऽपि भगवतो माहात्म्यज्ञापनार्थमुभयोर्लीलात्वमाह मध्ये—लीलामिति। उभयं लीला। ...रण्याक्षो भगवदीय इति स एव लीलात्वेनोक्तः। विशेषणपर्यवसाने तु लक्षणा, गौरवं च स्यात्; हि...ण्याक्षचरित्रं चाऽधिकं स्यात्। एवं सर्वं लीलैव भवति। हर्षोत्पत्ती रुच्युत्पादकत्वेन। मुनिमित्यभिम...नार्थम्। भारत इति भक्तेः रसान्तराजननार्थम् ॥ ८ ॥

## विदुर उवाच।

**प्रजापतिपतिः सृष्ट्वा प्रजासर्गे प्रजापतीन्।**
**किमारभत मे ब्रह्मन्! प्रब्रूह्यव्यक्तमार्गवित् ॥ ९ ॥**
**ये मरीच्यादयो विप्रा यस्तु स्वायम्भुवो मनुः।**
**ते वै ब्रह्मण आदेशात्कथमेतदभावयन् ॥ १० ॥**
**सद्वितीयाः किमसृजन्स्वतन्त्रा उत कर्मसु।**
**आहोस्वित्संहताः सर्वे इदं स्म समकल्पयन् ॥ ११ ॥**

प्रजापतिपतिरिति। विदुरस्त्वेवं मन्यते, भक्तो हि ब्रह्मा सृष्टिं कृतवानेव; अतः परं भक्त्युपयोग्येव ...द्धित्कार्यं करिष्यतीति। किमारभतेति ब्रह्मकार्यविषयकः प्रथमः प्रश्नः। भक्तेन भगवदर्थमेव सृष्टा इति ...रीच्यादयोऽपि कीदृशान् भक्तानुत्पादितवन्त इति द्वितीयः प्रश्नः। तत्राऽपि प्रकारत्रयं भक्तजनने तारतम्य...पनार्थम्। सद्वितीया इति। सद्वितीयाः सभार्याः; तथा सति भाक्तभक्तोत्पत्तिः। स्वतन्त्रा एकाकिनः, तथा

---

प्रकाशः।

+ हरेरित्यत्र। ननु लीलायाः कर्मात्मकत्वाद्भूम्युद्धारस्य लीलात्वं युक्तम्, न तु हिरण्याक्षस्य पुरुषत्वा...त्याशङ्क्याहुः—हिरण्याक्ष इत्यादि। भगवदीय इति। भगवत्क्रीडोपकरणात्मकः। तथा च, तस्यापि ...लीलेच्छासम्पादितशरीरत्वेन लीलाशेष इति लीलात्वेनोक्त इत्यर्थः। ननु किमित्येवं कल्प्यते? तद्धनन...न लीलात्वं वक्तव्यमित्याशङ्कायामाहुः—विशेषणेत्यादि। अत्र हि विशेषणभूतं हतपदं कर्मव्युत्पन्नम्, ...न भावव्युत्पन्नत्वमङ्गीकार्यम्, हिरण्याक्षपदस्य तदन्वयार्थं तद्गतद्वितीयायाः षष्ठ्यर्थे लक्षणाऽङ्गीकार्येति ...पर्यवसाने लक्षणा गौरवं च स्यात्। हिरण्याक्षकृते भगवल्लीलायामप्रवेशात्तच्चरित्रस्य सर्गलीलामध्यपा...ताभावेनाऽधिकं स्यात्, अतः स पक्षो न युक्तः। एवमस्मदुक्तरीत्याऽस्य(?)ङ्गीकारे तु यथा यागपदेन कर्म...विषयपदार्थसङ्ग्रहः, यथा च 'राज्ञां देवी' इत्यत्र तदुपकरणसंग्रहः सापेक्षवृत्तिकत्वादेवं लीला...शब्दस्यापि सापेक्षवृत्तिकत्वेन तच्छेषभूतं सर्वं लीलैव भवति, प्रचुरप्रयोगाच्च न लक्षणादिदोष इत्यभिप्रे...ो व्याख्यानित्यर्थः।

सति ज्ञानिभक्तोत्पत्तिः । संहता मिलिताः, तथा सति परमभक्तोत्पत्तिरिति । यदि ब्रह्मा प्रजापतिसृष्ट्यनन्तरं न किंचित् कुर्यात्, प्रजापतिरेव भवेत्, न तु प्रजापतिपतिः । सर्गस्य प्रवाहवत्प्रवर्तमानत्वान्न मरीच्यादिभ्यो विशेषः । प्रजापतिसृष्टिव्यतिरेकेण केवलं प्रजासृष्टौ रक्षकाभावात् प्रजा अमर्यादाः स्युः; तत्सृष्टौ तु तैरेव प्रजा भविष्यन्तीति प्रजासर्गे प्रजापतीनेव सृष्टवान् । सृष्ट्वेत्येवाऽनुवादः । पूर्वशेषपत्यावृत्त्यर्थमारभतेत्युक्तम् । ब्रह्मन्निति ज्ञानार्थम् । म इति स्वाधिकारिज्ञानात् । ब्रह्मणस्ततोऽप्यलौकिककरणज्ञानार्थमाह—अव्यक्तमार्गविदिति । अव्यक्त इति कारणरूपं ब्रह्म, तस्य मार्ग उत्पत्तिप्रलयप्रकारः । कथं तस्मादेते समायान्ति, कथं प्रविशन्तीत्येतद्भवानेव जानाति । सर्वस्याऽपि कारणमव्यक्तमिति तथोक्तम् । द्वितीयं प्रश्नमाह—ये मरीच्यादय इति । मरीच्यादयः स्वतन्त्राः स्रष्टाः, मनुस्तु सभार्यः । ते सर्वे सृष्टौ नियोजिताः । निश्चयेन ब्रह्मण आदेशादेतत् जगत् कथमभावयन्? उत्पादितवन्त इत्यर्थः । कर्मण्युत्पादनादिष्वन्येष्वपीति भिन्नं वाक्यम्, न ह्युत्पादनमात्रेणैव सर्वं भवति. । सर्व इति वचनात् त्रिचतुराः, सर्वे वा कृतवन्त इति प्रश्नः । इदमिति परिदृश्यमानस्य कार्यस्य विद्यमानत्वादवश्यं कृतिः, प्रकारः संदिग्ध इति प्रश्नः । स्मेति प्रसिद्धे, नेदं जगन्मायिकम्, भ्रमसृष्टं चेति कथनार्थम् । अतः सम्यगकल्पयम्, कात्स्न्र्येनाऽभिव्यक्तं केन प्रकारेण कृतवन्त इति प्रश्नः ॥ ९ ॥ १० ॥ ११ ॥

× सृष्टिभेदान् वक्तुं साधारणीं सृष्टिमनुवदति षड्भिः, भगवद्गुणत्वाय । महत्तत्त्वमहङ्कारः सकार्योऽण्डं तथैव च । नारायणत्वं पद्मं च ब्रह्मा चेत्यत्र षट् क्रमात् ॥ १ ॥ प्राकृताः षडिमे सृष्टा एकादश तु वैकृताः । सगुणास्तु नवैतेषु पुरुषो भगवत्कृतः ॥ २ ॥ निर्गुणः प्रोच्यते पुम्भिः शब्दब्रह्मात्मनो (?) ऋषिः । एवं सप्तदश प्रोक्ता यज्ञात्मानो मता इमे ॥ ३ ॥ तेनैव प्रथमं देवस्तृप्यते सर्गलीलया । अतस्तदर्थसर्गोऽयं नाऽन्यथेति निरूपितम् । वेदे सर्गोऽयमेवोक्तस्तस्मादुभयतो महान् ॥ ४ ॥ प्रथमतो महतः सृष्टिमाह—

## मैत्रेय उवाच ।

**दैवेन दुर्वितर्क्येण परेणाऽनिमिषेण च ।**
**जातक्षोभाद्भगवतो महानासीद्गुणत्रयात् ॥ १२ ॥**

---

### प्रकाशः ।

× दैवेनेत्यत्र । साधारणीमिति । सर्वकल्पेष्वेकरूपाम् । प्राकृताः सृष्टा इति । भगवता सर्वसृष्टिकारणत्वेन सृष्टाः । वैकृता इति । तत्तत्सृष्टिकारणभूताः । मन्वविद्यादिऋष्यन्तगणनायां सर्गा बहवो भवन्तीति कथमेकादशेत्याकाङ्क्षायां विभाजकोपाधिविचारेण तावत्त्वमित्याशयेनाहुः—सगुणा इत्यादि । एतेष्वेकादशसु पुरुषो मनुसर्गः, पुम्भिः पूर्वसृष्टैः स्तुत इति निर्गुणः प्रोच्यते । शब्दब्रह्मात्मनः सकाशाज्जात ऋषिः, ऋषिसर्ग एकादश इत्यर्थः । समुदायसङ्ख्याप्रयोजनमाहुः—एवमित्यादि । 'एष सप्तदश प्रजापतिः'' इति श्रुतेरस्य सर्गस्य यज्ञियाक्षरसमानसङ्ख्याकत्वादिमे यज्ञात्मानो मताः । देवो भगवान् सर्गलीलया प्रथमं तेन यज्ञेनैव तृप्यते । अतोऽयं सर्गस्तदर्थो भगवदर्थः । नाऽन्यथा न जीवार्थ इतीदं निरूपितं सङ्ख्यया बोधितम् । तथा चेदं समुदायसङ्ख्याप्रयोजनमित्यर्थः । संख्यामात्रस्याऽनिर्णायकत्वमाशङ्क्य हेत्वन्तरमाहुः—वेद इत्यादि । उभयत इति । सङ्ख्यातः शब्दतश्च, प्रमाणतः प्रमेयतश्चेति वा । एवं सङ्ख्यातात्पर्यमुक्त्वा वैलक्षण्यं बोधयितुं व्याकुर्वते—प्रथमत इत्यादि । अथ इत्यादि । तथा च,

दैवेनेति। अयं महान्, न प्रकृते., किन्तु ब्रह्मण एव गुणत्रयम्याजातः। अत्र त्रयो गुणाः-दैवम्, पर, कालश्चेति। दैवं भगवदिच्छा, काम इति यावत्। तस्य तु स्वरूपमिदमित्थतया वक्तुमशक्यमिति दुर्वितर्क्यमुक्तम्। स कामो देवसंबन्धी, 'सोऽकामयत' इति श्रुतेः। स च कामो न निरूपित इति निरूपकाणामतर्क्य। परोऽत्र पुरुषोऽक्षरं वा, स राजसः। अनिमिषः कालस्तामसः। चकारान्निमित्तमापद्यन्ते कर्मस्वभावादयोऽपि कालादिभेदाः। एतैस्त्रिभिर्गुणैरपि जातः क्षोभो यस्य, तस्माद्भगवतः पुरुषोत्तमान्महानासीत्। एते भगवद्गुणा एवेति न तत्त्वपदप्रयोगः। गुणत्रयादिति सच्चिदानन्देभ्यः, तदंशेभ्यो वा ॥ १२ ॥

महतः सकाशात् सकार्यस्याऽहङ्कारस्य सृष्टिमाह—

रजःप्रधानान्महतस्त्रिलिङ्गो दैवचोदितात्।
जातः ससर्ज भूतादिर्वियदादीनि पञ्चशः ॥ १३ ॥

*रजःप्रधानादिति। महांस्त्रिगुणात्मकोऽपि अहङ्कारसृष्ट्यर्थं रजःप्रधानो जातः। स त्रिविधोऽपि रजोभेदकृत एव। तत्रापि भगवदिच्छा प्रेरिकेत्याह—दैवचोदितादिति। स जात एव त्रिविधोऽपि पञ्चशः ससर्जेति संबन्धः। तत्र भूतादिस्तामसः। स आकाशादीनि भूतानि पञ्च, मात्राश्च पञ्चेति। एवमिन्द्रियादिरपि; ज्ञानेन्द्रियाणि, कर्मेन्द्रियाणि, प्राणादीनि, नागादीनि च। सृष्टवान् देवादिश्च तत्तदभिमानिदेवदिगादीन् पञ्च; वह्न्यादींश्च; मनः, अन्तःकरणदेवताचतुष्टयं च। एवं पञ्चशस्त्रिलिङ्गोऽप्युत्पादितवानित्यर्थः ॥ १३ ॥

तैर्ब्रह्माण्डनिर्माणमाह—

तानि चैकैकशः स्रष्टुमसमर्थानि भौतिकम्।
संहत्य दैवयोगेन हैममण्डमवासृजन् ॥ १४ ॥

---

प्रकाशः।

सत्त्वरजस्तमःस्थानापन्ना एत इत्यर्थः। न निरूपित इति। 'बहु स्यां प्रजायेय' इति श्रुतौ सामान्याकारेणोक्तोऽपि येन प्रकारेण बहुत्वम्, येन च प्रकारेणोघनीचत्वादिरूपः प्रकर्षः, तेन विशेषाकारेणाऽनिरूपितः। स राजस इति। रजःस्थानापन्नः। न तत्त्वपदप्रयोग इति। तत्त्वं हि तस्य भावः, धर्म इति यावत्। अत्र तु धर्मिण एव तथाऽऽविर्भावान्न तत्त्वपदप्रयोग इत्यर्थः। एवं च पूर्वस्मादस्य वैलक्षण्ये गुणभेदः, साक्षाद्भगवतः कारणत्वम्, तत्त्वपदाप्रयोगश्चेति गमकत्रयमत्रोक्तम्। सच्चिदानन्देषु गुणपदप्रयोगस्याऽप्रसिद्धत्वात् पक्षान्तरमाहुः—तदंशेभ्यो वेति। द्वितीयस्कन्धोक्तेभ्यः सत्त्वादिभ्यः।

* रजःप्रधानादित्यत्र। अत्रापि वैलक्षण्यमाहुः—स इत्यादि। त्रिविधोऽपि। अहङ्कारः। रजोभेदकृत एवेति। पूर्वत्र तत्त्वपदप्रयोगात्, द्वितीयस्कन्धे च[1] 'महतस्तु विकुर्वाणाद्रजःसत्त्वोपबृंहितात्। तमःप्रधानात्' इति महद्विशेषणात्, अत्र तु 'रजःप्रधानात्' इति गुणान्तरोपबृंहणानुक्तेश्च। देवताचतुष्टयमिति। चन्द्ररुद्रब्रह्मचैत्याः।

---

[1] भाग. २. ५. २

तानि चेति । असमर्थत्वान्नपुंसकनिर्देशः । चकाराद्देवादयोऽप्येकैकं कार्यार्थं क्षोभयितुमशक्ता इत्युक्तम् । एकैकशः प्रत्येकं ब्रह्माण्डनिर्माणे अशक्ताः, यतः सर्वभूतात्मकं ब्रह्माण्डम् । अतः संहत्य भगवदिच्छया प्रकाशबहुलं सुवर्णमयं ब्रह्माण्डमसृजन् । अत्रोपसर्गो नानार्थोऽपि प्रकृते रक्षावाचकः, दृढमनश्वरमवृद्धिक्षयमण्डमसृजन्निति ॥ १४ ॥

तत्र प्रविष्टो भगवान् नारायणो जात इत्याह—

**सोऽशयिष्टाऽब्धिसलिले आण्डकोशो निरात्मकः ।**
**साग्रं वै ( संपूर्ण ) वर्षसाहस्रमन्ववात्सीत्तमीश्वरः ॥ १५ ॥**

स इति । अब्धिसलिल इति प्रलयोदके । पूर्वं वा समुद्रनिर्माणम्, 'अप एव ससर्ज' इति वाक्यात् । स एवाऽण्डः कमलकोशात्मको जातः, यथाऽण्डात्पक्षी भवत्येवं कोशात्मको जातः । स आण्डकोश इत्युच्यते । स हि भगवदर्थं सृष्ट इति नाऽन्यस्तत्र प्रवेशमर्हति, अतो निरात्मक एव संपूर्ण वर्षसाहस्रमशयिष्ट । ततो भगवान्, अनु उत्पत्त्यनन्तरम्, अवात्सीत् तत्रैव वासं कृतवान्, तं प्रविवेशेति वा । तत्र प्रयोजनादिजिज्ञासा न कर्तव्येत्याह—ईश्वर इति ॥ १५ ॥

एवं नारायणत्वमुक्त्वा तस्मात् पद्मोद्भवमाह—

**तस्य नाभेरभूत्पद्मं सहस्रार्कोरुदीधिति ।**
**सर्वजीवनिकायौको यत्र स्वयमभूत् स्वराट् ॥ १६ ॥**

तस्य नाभेरिति । प्राकृतपद्मवत् तस्य विकासजनकसूर्याद्यपेक्षाभावमाह—सहस्रमर्काः, तेभ्योऽप्युरुरधिका दीधितिर्यस्य । न केवलं तस्य जगत्प्रकाशकत्वम्, किन्तु जगदाधारत्वमपीत्याह—सर्वजीवानां समूहस्थानमिति । उत्पादकं च तदेवेत्याह—यत्र कमले स्वयं भगवानेव, स्वराट् ब्रह्मा. अभूत् । ततः सर्वं भविष्यतीति भावः ॥ १६ ॥

यथा ब्रह्मणः सकाशात् सृष्टिर्भवति, तथोपायमाह—

**सोऽनुविष्टो भगवता यः शेते सलिलाशये ।**
**लोकसंस्थां यथापूर्वं निर्ममे संस्थया स्वया ॥ १७ ॥**

× सोऽनुविष्ट इति । भगवता सह अनुविष्टः प्रविष्टः । को भगवानित्याकाङ्क्षायामाह—यः शेत इति । सलिलमेवाऽऽशयो गृहम् । नारायण इत्यर्थः । ततः किं जातमत आह—लोकसंस्थामिति । लोकानां सम्यक्व्यवस्था, जातिगुणस्थानभेदेन यथा पूर्वकल्पे स्थिता । नन्वस्याः सृष्टेस्तथा सति को विशेष इत्याशङ्क्याऽऽह—संस्थया स्वयेति । अत्र स्वयमेव भगवान् तथा स्थितः, आकृतिमात्रसमता तु पूर्वेण । एवं षड्विधा मूलसृष्टिर्निरूपिता ॥ १७ ॥

* कार्यसृष्टिनिरूपणे प्रथमं तामसीं सृष्टिमाह—ससर्जेति त्रिभिः, कार्यकरणतत्कार्यभेदेन—

---

प्रकाशः।

× सोऽनुविष्ट इत्यत्र । अत्रापि वैलक्षण्यं बोधयन्ति—अत्रेत्यादि ।

* ससर्जेत्यत्र । कार्यकरणेत्यत्र । करणपदेन छाया बोध्या । तेन अत्रापि वैलक्षण्यं बोधितम् । पूर्वं दशमे 'अबुद्धिकृतः' इत्युक्तम्, एकादशे च करणं नोक्तम्, परन्तु 'अज्ञानवृत्तयः' इति कथनादज्ञानमेव

**ससर्ज च्छाययाऽविद्यां पञ्चपर्वाणमग्रतः ।**
**तामिस्रमन्धतामिस्रं तमो मोहो महातमः ॥ १८ ॥**

तत्र प्रथमं स्वस्मिन् विद्यमानतमसा तामसं पञ्चविधं कार्यमाह—छाययाऽविद्यामिति । आत्मा देहस्तथा छाया सात्त्विकादिविभेदजाः । तामसी तत्र वै छाया तस्यामपि हरिः स्वयम् ॥ १ ॥ तत्तच्छाया हि करणमविद्यां प्रति नाऽन्यथा । एतस्याः पञ्च पर्वाणि, पूर्वस्मात्तु विशिष्यते ॥ २ ॥ ससर्जाग्रेऽन्धतामिस्रमिति पूर्वप्रकल्पना । अन्यथेयं समाख्याता महामोहफला मता ॥ ३ ॥ अत्र प्रथममविद्यायाः पर्वणां मध्ये तामिस्रम्; भगवतो वैमुख्ये महाभोगेच्छा परमं बाधकम्, तदनु भोगेच्छा, ततोऽप्यज्ञानं स्वल्पम्, ततोऽपि पुत्रादिषु विकलेषु सकलेष्वहमेव विकलादिरिति । एतस्य वैराग्यजनकत्वादज्ञानात्समीचीनता । ततोऽपि देहाहङ्कारो भगवत्सेवौपयिकत्वादुत्कृष्ट इति । प्रकृत एव स्वयं क्रमः । अग्रत इति । अग्रिमेयं छायेति लक्ष्यते, अन्यथा प्रथमानिरूप्योऽग्रिमो भवत्येव ॥ १८ ॥

यया मूर्त्या एषा छाया भवति तां मूर्तिं जहौ—

**विससर्जाऽऽत्मनः कायं नाऽभिनन्दंस्तमोमयम् ।**
**जगृहुर्यक्षरक्षांसि रात्रिं क्षुत्तृट्समुद्भवाम् ॥ १९ ॥**

विससर्जेति । तस्यास्तामसत्वं कार्यवशादवगम्यते । वस्तुत इयं सृष्ट्युपयोगिनीति तस्या अभिनन्दनमुचितम्, तदपि न कृतवान् । तत्र हेतुः—तमोमयामिति । अस्यां स्थितायां भगवद्वैमुख्यं * भविष्यतीति तां तनुं त्यक्तवान् । अतेजसां हरिवैमुख्यं सुखकरमिति तामन्ये यक्षरक्षांसि जगृहुः । सा रात्र्यभिमानिनी देवता जाता । त्यक्तायास्तस्याः कार्यमाह—क्षुत्तृट्समुद्भवामिति । पूर्वकल्प एवोत्पन्नानि यक्षरक्षांसि, अ-

प्रकाशः ।

तत्र करणमिति । वैलक्षण्यान्तरं कारिकाभिः स्पष्टयन्ति—आत्मेत्यादि । विशिष्यत इति । अविद्यारूपं भिन्नमुत्तमं च भवतीत्यर्थः । महामोहफलेति । महामोहोत्तमपर्विका । परमं बाधकमित्यादि । एतेषां बाधकरूपत्वेऽपि भगवदुपयोगित्वमेवं ज्ञेयम् । तथाहि—इन्द्रस्य यथा मखभङ्गघृतरुहरणयोरुच्यमाने क्रोधजनकमज्ञानं तामिस्रं महाभोगेच्छारूपं भक्तौ बाधकमपि गोवर्धनोद्धरणाद्युपयोगि; अत एवाऽग्रेऽनुग्रहो बोधितः ‘मखभङ्गोऽनुगृहता’ इति । एवमन्धतामिस्रमपि बभ्रूग्रसेनयोर्भोगेच्छारूपं भगवल्लीलोपयोगि, ‘न्यबोधयद्देवनिपारय’ इति वाक्यात् । उग्रसेनादीनां भोगेच्छा तु राजधर्मेषु भगवन्नारदसंवादे ‘दास्यमैश्वर्यवादेन ज्ञाते(ती)नां वै करोम्यहम् । अर्धभाक् चास्मि भोगानां वाग्दुरुक्तानि च क्षमे’ इति भगवद्वाक्येषु ‘बभ्रूग्रसेनयो राज्यं नाप्तुं शक्यं कथंचन’ इत्यादिनारदवाक्येषु च स्पष्टम् (१) । एवं तमःपर्वरूपमज्ञानं च मातृचरणादीनां ‘ सद्यो नष्टस्मृतिः ’ इत्यादिषु स्फुटमेव । पुष्ट्युपयोगित्वमत्रैव ‘ततोपि’ इत्यादिना विवृतमिति सर्वं सुस्थम् । प्रकृत इति । सप्तम्यन्तमिदम् । अग्रिमेति । स्वदर्शनयोग्या । यथा पृष्ठस्थे सूर्ये तथेत्यर्थः । एवमर्थानुक्तौ बाधकमाहुः—अन्यथेत्यादि । तथा चाऽग्रत इत्यस्य वैयर्थ्यापत्तिरित्यर्थः ।

* भविष्यतीति । यथा प्रक्षिप्ताध्यायोक्तवत्साहरणे जातम्, तथा भविष्यति । अत्र च तादृशानुपयोगकथाच्छया तत्कार्यं नैतत्कर्तृत्वस्य प्रमाण इत्यपि स्फुटतीति बोध्यम् ।

१ स्नात्मा ग. २ निष्क्रिनः क ख

ष्टदेवसर्गमध्ये गणनात् । अथवा, पूर्वोक्तायाः पञ्चपर्वाया एतानि देवताः, अतः पञ्चपर्वा सदेवोत्पन्नेति । अत्रैव तेषामुत्पत्तिः । अत एव स्वकारणभूतां तां जगृहुः ॥ १९ ॥

तस्याः स्पर्शमात्रेण यक्षरक्षसां क्षुत्तृट् जातेत्याह—

**क्षुत्तृड्भ्यामुपसृष्टास्ते तं जग्धुमभिदुद्रुवुः ।**
**मा रक्षतैनं जक्षध्वमित्यूचुः क्षुत्तृडर्दिताः ॥ २० ॥**

× क्षुत्तृड्भ्यामिति । ततः पूर्वमस्मिन् कल्पे क्षुत्तृड्द्वयो न स्थितः। स्थितावपि देवाधिष्ठानसहितौ न स्थिताविति कामादिवत्पूर्वं स्थितौ, वृक्षाणामिव सद्यौ । अतो महद्भ्यां क्षुत्तृड्भ्यामुपसृष्टा भक्षान्तरस्याऽसृष्टत्वात् ब्रह्माणं जग्धुमेवाऽभिदुद्रुवुः । पूर्वं नपुंसकत्वेन निर्दिष्टा अपि । प्रतिनिर्देशे पुंस्त्वेन निर्देशो ब्रह्मापेक्षयाऽपि बलिष्ठत्वात् । अत्र केचिदाहुः—मा रक्षतैनमिति । एनं ब्रह्माणं मा रक्षत । इदानीं माययाऽविद्यया वा क्षुत्तृडुपशान्तिं कुर्यादपि, तथाप्येनं मा रक्षत, पुनरुपद्रवान्तरमुत्पादयिष्यतीति । अन्ये त्वाहुः—जक्षध्वमिति । 'जक्ष भक्षहसनयोः' इति भक्षणार्थो जक्षिः, यक्षधातुर्वा भक्षणार्थः । ननु कथं पितरमेवमूचुरित्याशङ्क्याऽऽह—क्षुत्तृडर्दिता इति । नहि पीडितः किञ्चिज्जानाति धर्माधर्मम् ॥ २० ॥

ततः किंजातमित्याकाङ्क्षायामाह—

**देवस्तानाह संविग्नो मा मां जक्षत रक्षत ।**
**अहो मे यक्षरक्षांसि प्रजा यूयं बभूविथ ॥ २१ ॥**

÷ देवस्तानाहेति । देवत्वात्तस्य तथा ज्ञानम्, तामसोत्पादनात् तस्य तथा भयम् । भगवदिच्छयैव तथा जातमिति तन्निराकरणार्थं स्वयं देहे त्यक्ते भगवतः कोपादेवं जातमिति लक्ष्यते, अन्यथा दैन्यमात्रे कृते ते न त्यजेयुः । मा मां जक्षत रक्षतेत्याह । मां मा जक्षत मा भक्षतेत्यर्थः, किन्तु रक्षत । तत्रोपपत्तिमाह—अहो मे यक्षरक्षांसीति । अहो इत्याश्चर्ये । न हि पुत्राः पितरं भक्षयन्ति, यतो मे यक्षरक्षांसि प्रजाः, पुत्रा इत्यर्थः । ननु यक्षरक्षसां पुत्रत्वे किमस्माकं तत्राऽऽह—यूयं मे यक्षरक्षांसि बभूविथ । 'मा रक्षतैनं यक्षध्वम्' इति वचनात् यूयं यक्षरक्षांसि, अत एव मे प्रजा बभूविथ । प्रजेति जातिवचनम् । सर्वेऽपि मम प्रजामात्रम्, तेन मध्यमपुरुषैकवचनमुपपद्यते । एवं प्रार्थनया सह चतुर्भिः प्रथमसृष्टिर्निरूपिता ॥ २१ ॥

सात्त्विकीं सृष्टिमाह—

**देवताः प्रभया या या दीव्यन्प्रमुखतोऽसृजत् ।**
**तेऽहार्षुर्देवयन्तो विसृष्टां तां प्रभामहः ॥ २२ ॥**

---

प्रकाशः।

× क्षुत्तृड्भ्यामित्यत्र । देवाधिष्ठानसहिताविति । क्षुत्तृट्पदार्थाविति शेषः।

÷ देव इत्यत्र । तन्निराकरणार्थमिति । तामसोत्पत्तिनिराकरणार्थम् । एवं जातमिति । भयमात्रं जातं । अन्यथेति । सर्वथा मारणेच्छायाम् ।

---

१ यूयमेव. ख. ग.

देवता इति । प्रभा यथा दीपस्य, यथा वा मणे , सूर्यादेर्वा, तथा ब्रह्मणोऽपि, अतस्तया प्रभया देवता असृजत् । प्रभया सृष्टा देवता विशिनष्टि—या या प्रमुखतो दीव्यन् । सम्मुखतया या या देवता क्रीडन्ति, उपास्या देवता सूर्यादिरूपा , ता एव प्रमुखत उपासकम्य क्रीडन्ति । एव ता॰ सृष्टा दोषाभावेऽपि भिन्नभावोत्पत्तेस्तामपि तनु विससर्ज । ततो ब्रह्मणा विसृष्टा ता प्रभारूपाम् , त एव देवा, पूर्वं स्त्रीत्वेनाऽप्युक्ता , अहारिषुः हृतवन्त , गृहीतवन्त इत्यर्थं । अहोरूपा दिनरूपाम् । अहाग्निपुरिति पाठेऽप्यर्थ स एव ॥ २२ ॥

रजसा सृष्टिमाह—

**देवोऽदेवाञ्जघनतः सृजति स्माऽतिलोलुपान् ।**
**त एनं लोलुपतया मैथुनायाऽभिपेदिरे ॥ २३ ॥**

देव इति । पूर्वं तत्तद्भावापन्नस्तत्तत्सृष्टिं करोति, दैत्यसृष्टिं तु देवभावापन्नः करोतीत्याह—देव इति । अदेवान् देवप्रतिपक्षान् । जघनत इति गुह्यस्थानात् कटिस्थानाद्वा, कटिमारभ्य जानुपर्यन्ताद्वा, यत्रैव कामसबन्ध । अतिलोलुपानिति उत्कटकामान् । कामस्तु स्त्रीसम्भोगात्मको मुख्यः । मैथुन पुरुषेऽपि भवतीति ते असुरा , एनं प्रजापतिम् , मैथुनार्थमभिपेदिरे । । यथा मातु सङ्गो निषिद्ध , तथा पितृस ङ्गोऽपि, तथापि लोलुपतया तथा कृतवन्त । कामेनाऽस्थिरत्व लोलुपता, कामो ,विवेकादीना नाशक २३

तत किं जातमत आह—

**ततो हसन्सभगवानसुरैर्निरपत्रपैः ।**
**अन्वीयमानस्तरसा क्रुद्धो भीतः परापतत् ॥ २४ ॥**

तत इति । प्रथमतो हसन् जात । तेषा लज्जाभावेन हास्यम् । तदनन्तर सभगवान्, भगवता स हितो जातः, भगवद्धर्म एव तस्य स्थिरो जातः, न दैत्यधर्म , अन्यथा तैः सह क्रीडा कुर्यात् । रसाभासेन प्रवृत्ता इति निरपत्रपाः। अन्यतो लज्जाऽपत्रपा । असुराश्च स्वभावतो रजःप्रधानाः,अतस्तै , अन्वीयमानस्तरसा प्रथमत क्रुद्धो जात , क्रोधेन कामो निवर्तनीय इति । तदनन्तर भीत , अभीताननिवृत्तान् दृष्ट्वा तत परापतत् परायन कृतवानित्यर्थ ॥ २४ ॥

स गच्छन् वैकुण्ठ गत , यत्र भगवानधिष्ठायाऽऽस्त इत्याह—

**स उपव्रज्य वरदं प्रपन्नार्तिहरं हरिम् ।**
**अनुग्रहाय भक्तानामनुरूपात्मदर्शनम् ॥ २५ ॥**

स उपव्रज्येति । लौकिकोपायेन नैते शान्ता भविष्यन्ति, अलौकिकस्तूपायो भगवत एव भवतीति ज्ञापयितुमाह—वरदमिति । वरो ह्यलौकिकपदार्थप्राप्त्युपाय । ते वरा लोके इष्टप्राप्तिरूपा इति तथात्वप्रयर्थमाह—प्रपन्नार्तिहरमिति । दैत्या अपि गता इति तेषामपि पदार्थविदार्तिं हरेदन आह—प्रपन्नेति । यतो हरिः । किञ्च, भक्तानामनुग्रहार्थमेव वैकुण्ठमधिष्ठाय स्थितः । तदाह—अनुग्रहायेति । भक्तानामनुग्रहार्थम् । भक्ताना यादृश रूपमनुरूपम, तादृशमात्मनो दर्शन यस्य । आत्मा स्वरूपम् । लोके सपात, परं तु सच्चिदानन्दरूपमेव, नाऽन्यदात्मान्तरमस्ति । पौराणिकास्त्वस्तीत्याह ॥ २५ ॥

एवं भगवन्तं गत्वा, असुरैः पीडितत्वात् स्तोत्रनमस्कारादिकमकृत्वैव विज्ञापनामेवाऽऽह—

**पाहि मां परमात्मंस्ते प्रेरणेनाऽसृजं प्रजाम् ।**
**ता इमा यभितुं पापा उपाक्रामन्ति मां प्रभो ॥ २६ ॥**

पाहीति । तव प्रेरणेनाऽहं प्रजामसृजम् । तत्र दैत्यरूपा इमाः प्रजाः, मामेव यभितुमुपाक्रामन्ति-अतः पाहीति संबन्धः । पालनसामर्थ्यम्, मम प्रेर्यत्वम्, तव प्रेरकत्वं च न सन्दिग्धम्; यतस्त्वं परमात्मा । परमश्चासावात्मा चेति नियामकभूत आत्मा । अत एव त्वयाऽहं प्रेरितः । एते एवंविधा उत्पत्स्यन्तीति भवानेव जानाति, नाऽहम् । अतो दोषसमाधानमपि त्वयैव कर्तव्यमिति दोषविज्ञापना । निकटे चाऽतिक्रमणं जायत इति शीघ्रसमाधानम् । तत्र सामर्थ्यज्ञापकम्-प्रभो इति ॥ २६ ॥

ननु त्वयोपार्जिताः प्रजाः; त्वं पिता ते च पुत्राः; अतोऽन्यतररहितं कर्तुमशक्यम्, उभयोस्तु हितं विरोधे कथं भविष्यतीत्याशङ्क्य, दैत्येषु प्रसादाभावादन्यतररहितमेव प्रार्थयितुमाह—

**त्वमेकः किल लोकानां क्लिष्टानां क्लेशनाशनः ।**
**त्वमेकः क्लेशदस्तेषामनासन्नपदां तव ॥ २७ ॥**

त्वमेक इति । अनासन्नपदामिति विपरीते वचनादासन्नपदां त्वमेव, एकोऽसहायः, तेषामदृष्टादिकमप्यनपेक्ष्य, किलेति प्रसिद्धे, क्लिष्टानां लोकानां क्लेशं नाशयसि । कालादिकृतश्च क्लेशः । तर्ह्यन्येषूपेक्षा स्यात्, तद्व्यावृत्त्यर्थमाह—त्वमेकःक्लेशद इति । अनासन्नपदामिति वाक्यात् 'सुखं दुःखं भवो भावः' इति शास्त्रानुसारेण नाऽत्र क्लेशदानम्, किन्तु भक्तिप्रवर्तकरूपेण । यथा कालादयोऽधिकारिणो दुःखदाः, तथा भगवानपि स्वतन्त्रतया दुःखद इति त्वमेकः क्लेशद इत्युक्तम् । अनासन्नपदां त्वमेक एव क्लेशदः । ननु कथमेवं शास्त्रार्थो वैषम्यापादकः, तत्राऽऽह—तवेति । तव भूत्वा ये अनासन्नपदः, तेषामित्यर्थः । अनेन त्वदीयानां नाऽन्यः सुखदुःखदाता, किन्तु त्वमेवेत्युक्तम् कालस्य साधारणत्वाद्दुःखदानेऽपि त्वं निवारक इति । ततोऽस्मद्दुःखं दूरीकर्तव्यम्, एते च निराकार्या इति ॥ २७ ॥

तद्भगवतो नाऽत्यन्तमभीष्टमित्युभयसमाधानमाह—

**सोऽवधार्याऽस्य कार्पण्यं विविक्ताध्यात्मदर्शनः ।**
**विमुञ्चाऽऽत्मतनुं घोरामित्युक्तो विमुमोच ह ॥ २८ ॥**

सोऽवधार्येति । दोषस्य निदानापरिज्ञानेन तन्निवर्तकत्वे भगवतो मर्यादानाशकत्वं स्यादिति तदर्थमाह—विविक्ताध्यात्मदर्शन इति । विविक्तः सम्यक्तया इतरवैलक्षण्यपूर्वकं विवेचितः अध्यात्मा ब्रह्मसङ्घातस्थितसकलपदार्थः तत्र दर्शनं प्रत्यक्षतया ज्ञानं यस्येति । एतादृशो भगवान् ब्रह्माणमाह—विमुञ्चाऽऽत्मतनुमिति । यया तन्वा दैत्याः सृष्टाः, सा घोरा भवति, कारणतया तादृशकार्यानुत्पत्तेः[1] । एवमुक्तो ब्रह्मा तां विमुमोच । विमोचनार्थं वा विविक्ताध्यात्मदर्शन इति ब्रह्मणो विशेषणम् । हेत्यार्श्चर्ये२८

भिन्नस्वभावेनोत्पादितत्वात् सा देवताऽपि दैत्यहितकारिणी, देवत्वाद्भामिका च जातेत्याह—तामित्यनुवर्णयति त्रिभिः—

1 कारणान्यथात्वे. ग.

* तां क्वणच्चरणाम्भोजां मदविह्वललोचनाम् ।
काञ्चीकलापविलसद्दुकूलच्छन्नरोधसम् ॥ २९ ॥
अन्योन्यश्लेषणोत्तुङ्गनिरन्तरपयोधराम् ।
सुनासां सुद्विजां स्निग्धहासलीलावलोकनाम् ॥ ३० ॥

देवता हि यादृश्या भावनया दृश्यते, तादृशी भवति । ते च कामातुरास्ता स्त्रिय रूपवती दृष्टवन्त । यादृशाश्च प्रकारास्तेषा मनसि रोचन्ते, ते ते देवतात्वात् तस्या दृष्टा अनुवर्ण्यन्ते । यावच्च दैत्यैर्न स्पृष्टा, तावद्बहि स्थिता तथाऽऽत्मान प्रदर्शितवती । यदा पुन सा स्पृष्टा, तदा तेष्वेव सनिविष्टा सन्ध्याभिमानिनी देवतेति दृष्टाया वर्णनम्, स्तोत्रम्, निकटे गमनम्, कामलीलया च प्रश्नपूर्वक वर्णनमित्यष्टाभिस्त प्रशसा निरूप्यते । ततो ग्रहणमेकेन, अर्द्धेन चाऽनुभव । क्वणन्तौ चरणावेव अम्भोजतुल्यौ यस्या । तस्या देहे अनावृत द्वयमेव, पादौ मुख च, अन्यद्वस्त्रादिकम् । अतस्तेषा हीनाङ्गे स्पृहेति प्रथमतश्चरणवर्णनम् । नेत्रयो सुखजनकत्वादम्भोजत्वम् । ततो मुखवर्णन स्वाभिलषितप्रकारेण । मदेन विह्वले लोचने यस्याः । काञ्चीकलापेन विलसत् यत् दुकूलम्, तेन छन्नं रोधः कटिभागो यस्या । अनेन प्रकटाभरणं वस्त्र च निरूपितम् । काञ्च्या कलापत्वम्, कला पातीति, श्लथवस्त्रधारकत्वमित्यर्थः[१] । अशानामप्युत्कृष्टत्वात् कलापतुल्यसमूहरूपा वा । रोधश्शब्दः कामकुण्डे स्नानार्थिना तटत्वबोधक । अन्योन्यश्लेषणौ, उत्तुङ्गौ ऊर्द्ध्वमुद्गतौ, निरन्तरौ मध्ये छिद्ररहितौ, पयोधरौ स्तनौ यस्या ॥ २९ ॥ ३० ॥

एव रूप द्वाभ्यामुक्त्वा स्त्रीभावमनुवर्णयति—

गूहन्तीं व्रीडयाऽऽत्मानं नीलालकवरूथिनीम् ।
उपलभ्यासुरा धर्म सर्वे संमुमुहुः स्त्रियम् ॥ ३१ ॥

× व्रीडयाऽऽत्मानं गोपयन्तीम्[२] । अत्राऽऽत्मा स्त्रीभावमापन्न, स यथैव चेष्टया गुप्तो भासते, व्रीडया तादृशीं चेष्टा करोतीत्यर्थ । परिदृश्यमानावयवान् वस्त्रेण गोपायतीति केचित् । यथा बाह्या पदार्था बुद्ध्या परिकल्पिता, तथा व्रीडाऽप्यत्र । नीलवर्णा ये अलकाः, तेषा समूहयुक्ता च । अनेन तस्या स्वलक्षणानि निरूपितानि ।

केचिदेनामाध्यात्मिकीं वर्णयन्ति । चरणक्वणन पद्ध्यादिशब्दा , अर्थोदयास्तमययुक्तो चन्द्रसूर्यौ लोचने, आरक्ता मेघा कान्ची, आकाशमेवाऽम्बरम्, तटा दिश , कामुकीकामुकयोर्मनोरथावेव स्तनौ, चक्रवाकौ वा, उत्तमा नासिका शुका , दन्ता कुन्दादय , शोभना द्विजा यस्या इति पक्षिणो वा योगात्, स्निग्धो यो

प्रकाशः ।

* तामित्यत्र । कलाप(?)समूहतुल्यरूपा वेति । कलापशब्दो बर्हे समूहे च वर्तते इति तदुभयमुक्तम् ।

× गूहन्तीं व्रीडयेत्यत्र । श्रीधरमतमाह —परिदृश्यमानेत्यादि । पुन श्रीधरमतमाह, अन्येषां वेदम् । केचिदित्यादि । तत्राम्बरस बोधयितुमाह —एत इत्यादि । आधिदैविकस्वरूपस्य तादृशत्वज्ञापका एव, न तु गौण्या कथनमात्रम् । यद्येव नाऽङ्गीक्रियते तदा स्त्रीरूपो वाक्यार्थ असम्भवन् बाधितः स्यात, मोहर्थग्रहणाभिवर्णनादिवाक्याना च विरोध स्यादित्यर्थः ।

१ अन्यान्यश्लेषण क ग घ   २ गोपयन्ती ग   गोपयन्ती ङ.   ३ चोऽपिच क ग

हास, पुरुषेण सह सम्बन्धसूचक, तत्र या लीला तया सहितमेवाऽवलोकन यस्या । तत्काले कामिनीनाम्, विकसितपुष्पस्थभ्रमरादीना वा, भावा । प्रतिक्षण सन्ध्यातिरोभाव एव गूहनम्, लज्जा तदानीन्तन सत्कर्माणि, अन्धकार एव केशपाशः । एते धर्मा ज्ञापका एव, नत्वेतन्मात्रम्, अन्यथा वाक्यार्थो बाधित स्यात्, सर्ववाक्यविरोधश्च । अतो ज्ञापकत्वेनैव एतेषा वर्णनमुचितम् । देवतायामस्तथात्वाभावे लोके सन्ध्या या तथा भावा न भवेयुरिति ।

एव ता वर्णयित्वा तद्दर्शनकार्यमाह—उपलक्ष्येति । धर्मेति विदुरसबोधन मोहाभावाय । हे धर्मराजेत्यर्थ । एकदेशसबोधन साम्प्रत राजत्वाभावात् विद्यमानधर्ममात्रबोधकम् । सर्वे असुरा संमुमुहुः । मोहे हेतु स्त्रीत्वमेव, अतोऽन्ते निरूपणम् ॥ ३१ ॥

दृष्टाना तद्भावेन मुग्धाना भावप्रतिपादक वाक्यमाह—

**अहो रूपमहो धैर्यमहो अस्या नवं वयः ।**
**मध्ये कामयमानानामकामेव प्रसर्पति ॥ ३२ ॥**

× अहो रूपमिति । रूपमनूद्याश्चर्यत्व विधीयते । अहो धैर्यमित्यपि तथा । चेष्टया कामस्त्वस्या अपि महानिव लक्ष्यते, तथापि या न लोलुपा, अत आश्चर्यमस्या धैर्यमित्यर्थ । एतद् द्वयमपि भुक्तभोगाया, जरठाया वा, नाऽऽश्चर्यहेतुरित्याशङ्क्याऽऽह—अहो अस्या नव वय इति । नवमनुपभुक्तम्, प्रत्यग्रविकसितं वा, वय उद्दिश्य आश्चर्यत्व विधीयते । एवं दोषत्रयं तस्या कामलक्षणसंनिपातजनकम्, सा कथमकामेव । अस्या अकामत्वज्ञापकं विशेषसर्पणमेव, स्तम्भोऽपेक्ष्यते मुख्यः । भावादीना दृश्यमानत्वादकामेव । किञ्च, न केवलमस्या आन्तरा एव दोषा, किन्तु बाह्या अपीत्याह—मध्ये कामयमानानामिति । वय सर्व एव कामयमाना, तेन कामस्याऽऽवश्यकत्वात्, चेष्टकत्वाच, मध्ये कथमकामा भवेदित्यर्थ ॥ ३२ ॥

परिचयाभावादिति चेत, तर्हि 'संवादेन परिचिता करिष्याम' इत्यभिप्रेत्य सवादार्थं यत्न कृतवन्त इत्याह—

**वितर्कयन्तो बहुधा तां सन्ध्यां प्रमदाकृतिम् ।**
**अभिसंभाव्य विश्रम्भात्पर्यपृच्छन्कुमेधसः ॥ ३३ ॥**

वितर्कयन्त इति । प्रमदाकृतिं तां सन्ध्यां बहुधा वितर्कयन्तः पर्यपृच्छन्निति संबन्ध । बहुधेति स्वरूपसबन्धाद्यर्थम्, न [illegible] स्त्रीत्वे तस्याः सम्भोग्यत्वे वा सन्देह, किन्तु सन्देहरूपाण्यग्रे प्रक्ष्यन्ते । प्रश्नात्पूर्वं स्वत एव ज्ञानार्थं वितर्कः । प्रकर्षेण मदो यस्य सकाशात् । स्त्रीरूपा च सा देवता । अभितः संभाव्य स्तुत्वा, कुशलादिकं च पृष्ट्वेत्यर्थ । विश्रम्भादिति विश्वासात्, इयमस्मान् भजिष्यतीति । परितो नामगोत्रादिभेदेन । कुमेधस इति देवतात्वाज्ञानात्, न हि देवता भोग्या भवति । दर्शयैव सा, न [illegible] स्पृश्येत्यर्थ ॥ ३३ ॥

प्रश्नत्रयमाहु —

**काऽसि कस्याऽसि रम्भोरु! को वाऽर्थस्तेऽत्र भामिनि ! ।**

---

प्रकाशः

× अहोइत्यत्र । विशेषसर्पणमिति । स्वाकारगोपनम् ।

**रूपद्रविणपण्येन दुर्भगान्नो विबाधसे ॥ ३४ ॥**

काऽसीति । जातिकुलप्रश्नः । कस्याऽसीति सम्बन्धिप्रश्न , पितुर्भर्तुश्च । अत्राऽऽगमने च किं प्रयोजनमिति तृतीय । परिचर्यार्थमेव ते प्रश्ना , न तूत्तरज्ञाने किञ्चित्प्रयोजनमस्ति । भामिनीति स्तोत्रम्, हे भव्ये । आपाततो ज्ञायते महती, महतो महत् कार्यं तवेति । परमेकमेव तवाऽसामीचीन्यम्, यद्रूपद्रविणपण्येन दरिद्रानस्मान् बाधसे इति । रूपमेव द्रविण सुवर्णादि, तदेव च पण्यम्, बहुद्रव्येण च प्राप्यम्, वय च दुर्भगा , तन्मूल्यद्रव्यरहिताः; अतो बाधसे । केचित्तामसा उपायमज्ञात्वा एवमुक्तवन्त ॥३४॥

अन्ये त्वाहु —

**या वा काश्चित्त्वमबले ! दिष्ट्या संदर्शनं तव ।**
**उत्सुनोपीक्षमाणानां कन्दुकक्रीडया मनः ॥ ३५ ॥**

या वा काश्चिदिति । त्वं या काचित् । वा इत्यनादरे । श्चिदिति सम्भावनायाम् । संबन्धे सभावनाया वाऽनादर । हे अबले इति सबोधनेन, बलरहिताया शुश्रूषण कर्तव्यमिति, पादसवाहनादिक करिष्याम इति ज्ञापितम् । वयं न दुर्भगा , किन्तु सुभाग्या इति निश्चितम् , यतः सदर्शन तव जातम् । एतद्दिष्ट्या । सापराधा वदन्ति–उत्सुनोपीति । तत् त्वं सर्वथा देवता, देवताभजनं देवतादर्शन च नाऽल्पभाग्यैनेत्यपि सूचयन्ति । त्व नोऽस्माक कन्दुकक्रीडया मन उत्सुनोपि । यथा ग्रावभि सोमोऽभिषूयते, तथा मन ऊर्ध्वमभिषुणोपि, यत ऊर्ध्वमेव नोत्सर्पति । कन्दुकक्रीडा तु देहचालनेन भवति, तत्रावयवाना सवरणविवरणे भवत , अतो यद्दर्शनाकाङ्क्षि चित्तम्, तत् क्षणे क्षणे सभृतं भवतीति मनस खेदः ॥ ३५ ॥

अन्ये सात्त्विका , नैषोपालम्भ्या, किन्तु स्तुत्या, अत स्तोत्रेण प्रसन्ना भविष्यतीत्यभिप्रेत्य स्तोत्र कृतवन्त —

**नैकत्र ते जयति शालिनि ! पादपद्मं घ्नन्त्या मुहुः करतलेन पतत्पतङ्गम् ।**
**मध्यं विषीदति बृहत्स्तनभारभीतं श्रान्तेव दृष्टिरलसा सुशिखासमूहः ॥३६॥**

*नैकत्रेति । कामशास्त्रे हि कामिन्येव देवता, 'ताः स्तुम ' इति वाक्यात् । अलौकिकरूपवर्णनमेव महत्त्वेन कथन स्तोत्रमिति तदाह–हे शालिनि मनोहरे, विनययुक्ते वा, ते पादपद्म नैकत्र जयति । प्रसिद्ध पद्म तु जल एव शोभते, तव तु सर्वत्रेति विशेष । पादपद्मपद च भक्तिसूचकम् । एकत्र न जयति, किन्तु सर्वत्र । नैकत्र अनेकत्र वा । पादपद्मस्य चलने हेतुमाह–घ्नन्त्या इति । मुहुर्वार वारम्, करतलेन पतत्पतङ्गं घ्नन्त्या । कन्दुकार्थं गच्छन्ती मध्ये समापतान् भ्रमरान् करतलेन घ्नन्ती । तेऽपि पतङ्गा पतन्तो भवन्ति । जात्यपेक्षया त्वेकवचनम् । सात्त्विकत्वाद्वा सूर्यमेव तथा मन्यन्ते, अस्त गच्छन् सूर्यं घ्नन्त्याश्चिरणैर्हन्यत इति । मध्य विषीदतीति खेदनिराकरणार्थमस्माभिर्वा कल्पनी स्तम्भनीयाविति भाव । शृङ्गाराङ्गिपाद । उत्तमस्त्रियाश्च लक्षण कृशमध्यत्वम्, अन्यथा तृतीयदाखे यन्था केऽपि न

प्रकाश ।

* नैकत्रेत्यत्र । न शब्देन सह समासमभिप्रेत्याहु –अनेकत्र वेति ।

१ ख ग घ   २ घ्नन्त्या ख घ ङ   ३ दर्नीलयितम्. ख घ ङ

सगच्छेरन् । विषादहेतु –गृहस्तनभारेण भीतमिति । न केवलं विषादमात्रम्, किन्तु भङ्गो भविष्यतीति भयमपि । तेन सुप्त्वैव स्थातव्यमिति भाव । किञ्च, दृष्टिरपि ते श्रान्तेव, रसेन पूर्णा आलस्ययुक्ता च जाता । श्रमो बहि कार्येण शारीर, आलस्य मनस । मुग्ध शिखासमूहो यस्या । अत उत्सङ्गे शयनं कर्तव्यमिति भावः ॥ ३६ ॥

एव स्तुत्वा तूर्णीं स्थिता ताम्, 'अप्रतिषिद्धमनुमतं भवति' इति ज्ञात्वा सर्वे ता गृहीतवन्त इत्याह-

**इति सायन्तनीं सन्ध्यामसुराः प्रमदायतीम् ।**
**प्रलोभयन्तीं जगृहुर्मत्वा मूढधियः स्त्रियम् ॥ ३७ ॥**
**प्रहस्य भावगम्भीरं जिघ्रन्त्यात्मानमात्मना ॥ ३८ ॥**

इतीति । सायन्तनीं पश्चिमाम्, सन्ध्यां प्रमदामिवाचरन्तीमात्मना च प्रलोभयन्तीं काममुत्पादयन्तीम्। स्त्री चेत्प्रलोभयन्ती जाता, तदा सिद्धा जातेति ज्ञात्वा, जगृहुरालिङ्गितवन्त, यत एते मूढधिय । न क्षण पुत्रा अपि तत्त्व न जानन्तीति तथा वचनम् । ततः किं जातमित्याशङ्क्याऽऽह–ते सर्वे तामालिङ्ग्य, स्वस्मिंस्तस्या प्रविष्टाया भूताविष्टा इव आत्मनैवाऽऽत्मानं जिघ्रन्ति स्म। प्रथमतस्तया आलिङ्गिता इव सतुष्टा, क्षणात्तामदृष्ट्वा, अस्मान् वञ्चयितुं लीनेति, भावगम्भीर यथा भवति तथा प्रहस्य, पश्चादात्मानमेव स्त्रिय ज्ञात्वा, नियामकं रूपादिकमदृष्ट्वा, कमलगन्धा ता मत्वा घ्राणेन ज्ञातुं जिघ्रन्ति॥ ३८ ॥

**कान्त्या ससर्ज भगवान्गन्धर्वाप्सरसां गणान् ।**
**विससर्ज तनुं तां वै ज्योत्स्नां कान्तिमयीं प्रियाम् ।**
**त एव चाऽऽददुः प्रीत्या विश्वावसुपुरोगमाः ॥ ३९ ॥**

* एवमेकप्रकारेण प्रथमं त्रिविधा सृष्टिमुक्त्वा द्वितीयेन प्रकारेणाऽऽह–कान्त्या ससर्जेति। कान्तिर्लावण्यम् । एषा सात्त्विकी सृष्टि । राजसीति केचित्, साध्या पितरश्च सात्त्विका इति । तच्चिन्त्यम् । भगवानिति पुनर्मूलप्रवेश, आरब्धगुणाना समाप्तत्वात् । गन्धर्वाप्सरसां गणानित्यवान्तरजातिभेदान् । विससर्जेति। तामपि तनु निससर्ज, सा ज्योत्स्नाऽभवत्, यत कान्तिमयी सा। कान्तिमतीमित्यपि पाठे तथा । सा हि ब्रह्मण प्रिया, गन्धर्वाप्सरसा वा, ते हि ज्योत्स्नायामेव रमन्त इति । अत एव त एव गणास्तामाददु । चकारात् भौतिकीं च ज्योत्स्नाम् । विश्वावसुर्मुख्यो वेदे, ' विश्वावसुः पर्यमुष्णात् ' इति श्रुते, ' विश्वावसुः पूर्वचित्तिर्गन्धर्वाप्सरसाम् ' इति विभूतिवाक्याच्च ॥ ३९ ॥

तामसीं सृष्टिमाह—

---

प्रकाश ।

* कान्त्येत्यत्र । एक प्रकारेणेत्यादि । तामसतामसतामससात्त्विकतामसराजसप्रकारेणोक्त्वा, सात्त्विकसात्त्विकसात्त्विकतामससात्त्विकराजसप्रकारेणाऽऽहेत्यर्थ । सात्त्विकीति एतज्जनिकायास्तनो प्रकाशकत्वात् प्रियत्वाच्च तत्कार्यभूता इयमपि सात्त्विकीत्यर्थ । राजसीत्यादि । इद न श्रीधरमतम् । मतान्तरे दूषणमाहु –चिन्त्यमिति । युक्त्यभावाच्चिन्त्यमित्यर्थ ।

---

१ आत्मनश्च ग घ ङ

**सृष्ट्वा भूतपिशाचांश्च भगवानात्मतान्द्रिणा ।**
**दिग्वाससो मुक्तकेशान् वीक्ष्य चामीलयद्दृशौ ॥ ४० ॥**

*सृष्ट्वेति। तन्द्री आलस्यनिद्रा, तया भूतानि पिशाचांश्चाऽसृजत् । न चैषा सृष्टिरेतावती, किन्त्वधिकाऽप्यस्तीति ज्ञापयितुं सृष्ट्वेति क्त्वाप्रत्ययः । दृशोर्मीलनं चाऽऽलस्यनिद्रायामवान्तरं कारणम् । सृष्टाः पिशाचा दिग्वाससो मुक्तकेशाश्च । तानमङ्गलान् दृष्ट्वा, दृशावमीलयत् । निमिलिनेन चोन्मादो गणउत्पन्न इति । तनुद्वयं च त्यक्तम् ॥ ४० ॥

तत्रैकस्या विनियोगमाह—

**जगृहुस्तद्विसृष्टां तां जृम्भणाख्यां तनुं प्रभोः ।**
**निद्रामिन्द्रियविक्लेदो यया भूतेषु दृश्यते ।**
**येनोच्छिष्टान्धर्षयन्ति तमुन्मादं प्रचक्षते ॥ ४१ ॥**

जगृहुरिति । भूतपिशाचा एव तां जगृहु.। विशेषेण सृष्टा विसृष्टेति योगेन पूर्ववद्ग्रहणमपि सूचितम्। विसृष्टा त्यक्ता । तयोर्भेदार्थं पूर्वस्या नामाह—जृम्भणाख्यामिति । आलस्यनिद्रायां हि समागतायां जृम्भा भवतीति । असमीचीनाया अपि ग्रहणे हेतुः—प्रभोरिति । द्वितीयां पूर्वसंदिग्धामिदानीं लक्षयति—निद्रामिति । निद्रा एव तनुर्द्वितीया, पूर्वा तु जृम्भणाख्या । तस्या देवतारूपाया निद्रायाः कार्यद्वारा लक्षणं निरूपयति—इन्द्रियविक्लेदो यया भूतेषु दृश्यते इति । निद्रया हि इन्द्रियाणि सर्वाणि लीनानि भवन्ति, स्रवन्ति च निद्रया । तयैवाऽऽधिदैविकया चक्षु स्रावादिकमपि भवति । अतस्त्रिविधमपि कार्यमिन्द्रियविक्लेदशब्देनोच्यते । तां ये गृहीतवन्तस्तानाह—येनोच्छिष्टानिति । स गणस्तून्मादलक्षणः, येन सा गृहीतेत्यर्थादुक्तं भवति, अन्यथा निरूपणवैयर्थ्यापत्तेः । तेषामुन्मादसंज्ञा कथं जातेत्याशङ्क्याऽऽह—येन कारणेन उच्छिष्टान् । भोजनादिना, मलोत्सर्गादिना वा, उच्छिष्टा भवन्ति, तांस्ते धर्षयन्ति । तत्तेन कारणेन तं गणमुन्मादं प्रचक्षते । उद्गतो मादो यस्येति । उन्मत्ता एव ह्यनवहितान् धर्षयन्ति, अतस्तं गणमुन्मादं प्रचक्षते । यद्वा, भूतपिशाचा एव जृम्भणाख्यां निद्रां च गृहीतवन्तः । निद्रया द्वितीयतन्वोत्पादितं च गणं धर्षणार्थं करणत्वेन गृहीतवन्तः । तथा सति स गणः पिशाचमध्य एवाऽन्तर्भूतो ज्ञेयः । धर्षयन्ति पिशाचाः—आचक्षते अभिज्ञाः ॥ ४१ ॥

राजसीं सृष्टिमाह—

**ऊर्जस्वन्तं मन्यमान आत्मानं भगवानजः ।**
**साध्यान् गणान् पितृगणान् परोक्षेणाऽसृजत्प्रभुः ॥ ४२ ॥**

+ऊर्जस्वन्तमिति। इडो(ड्)र्जश्शब्दौ शक्तिविशेषवाचकौ। इन्द्रियाणां विषयग्रहणसामर्थ्यविशेषसंपादिका आत्मनिष्ठा शक्तिर्विचारकारणभूता चोर्जश्शब्देनोच्यते । क्षुत्पिपासाभिवृद्धिकर्त्री तु शक्तिरिड्शब्देनोच्यते । अत एव शाखाच्छेदने एते काम्ये 'इषेत्वोर्जेत्वा' इति । एते शक्ती भगवत एव, जीवे ओषधि-

प्रकाशः ।

* सृष्ट्वेत्यत्र । त्यक्तमिति । निर्मीलितं त्यक्तम् ।

\+ ऊर्जस्वन्तमित्यत्र । अत एवेत्यादि । इन्द्रियसामर्थ्यसम्पादकत्वतदभिवृद्धिकर्तृत्वाभ्यामेव सा.

१ [illegible] क. ख. ८

वनस्पतिषु च प्रतिष्ठिते । ‘ ऊर्ग्वा अन्नाद्यं दधि ’ ‘ ऊर्ग्वा उदुम्बरम् ’ इति च; ‘ इषे प्राणाय, ऊर्जेऽपानाय’ इति च । यस्तु ऊर्ग्युक्तः स ऊर्जस्वान्। यदेवं ब्रह्मणोऽभिमानो जातः। भगवानिति मूलोक्तसंबन्धज्ञापकः। अज इत्यभिमाने हेतुः, अन्यथा भगवान् सर्वरूपो नाऽऽत्मानं तथाऽभिमन्यते । तदा परोक्षेण भावेन साध्यान् पितृगणांश्चाऽसृजत् । अदृष्टं सर्वं परोक्षम् । अत एव साध्या अतिरिक्तभागिनो जाताः- पितरश्च न्युब्जभागिनः, ‘ परोक्षभागिनश्च ह्येते ’ इति श्रुतेः । अत उभयेषां सृष्टिरदृष्टैव कृता । तथा सृष्टौ सामर्थ्यम्-प्रभुरिति ॥ ४२ ॥

तामपि तनुं विससर्ज—

**तं त्वात्मसर्गं तत्कायं पितरः प्रतिपेदिरे ।**
**साध्येभ्यश्च पितृभ्यश्च कवयो यद्वितन्वते ॥ ४३ ॥**

तं त्वात्मेति । अत एव ते उभये, आत्मसर्गं स्वोत्पादकम्, तस्य ब्रह्मणः कायं शरीरम्, मुख्यतया पितरः प्रतिपेदिरे । लोकेऽप्यन्तं पितर एव प्रसिद्धा इति । तेन शरीरेणोभयेषां विनियोगमाह— साध्येभ्यः पितृभ्यश्चेति । यद्येन शरीरेण वितन्वते लोकाः, अतिरिक्तेन श्राद्धेन च ॥ ४३ ॥

पुनस्तृतीयं गुणत्रयसर्गमाह—

**सिद्धान्विद्याधरांश्चैव तिरोधानेन सोऽसृजत् ।**
**तेभ्योऽददात्तमात्मानमन्तर्धानाख्यमद्भुतम् ॥ ४४ ॥**

+सिद्धानिति । एते सात्त्विकाः । सिद्धा ज्ञानसिद्धाः, विद्याधराः कर्मसिद्धाः, उभयानपि तिरोधानेनैवाऽसृजत् । तिरोधानविद्यारूपो यो भावः, तेनाऽसृजदित्यर्थः । तां च तनुं पूर्ववन्न त्यक्तवान्, किन्तु तेभ्यो दत्तवानित्याह—तेभ्य इति । आत्मानं देहमददात् । असंदेहार्थं तस्य नानाऽऽह—अन्तर्धानमित्याख्या यस्य । अद्भुतमिति स्वतो दाने हेतुः ॥ ४४ ॥

राजसीमाह—

**स किन्नरान्किम्पुरुषान्प्रत्यात्म्येनाऽसृजत्प्रभुः ।**
**मानयन्नात्मनाऽऽत्मानमात्माभासं विलोकयन् ॥ ४५ ॥**

स किन्नरानिति । किन्नराः किम्पुरुषाश्च देवगायकाः, तान् प्रत्यात्म्येन प्रतिबिम्बेनाऽसृजत्। प्रभुरिति पूर्ववत् । न प्रतिबिम्बमात्रेण तेषां सृष्टिः, किन्तु सन्मानपुरःसरमित्याह—मानयन्निति । आत्मना प्रतिबिम्बरूपेण, आत्मानं बिम्बरूपम्, मानयन्नसृजदिति संबन्धः । लोकोऽपि दर्पणादौ मुखं पश्यन्नात्मानं बहु मन्यते । किञ्च, नापि सन्माननमात्रसहितेन, किन्त्वात्माभासं विलोकयन्नेवाऽसृजत् । तेन दर्शनेन सन्माननेन सहितेन प्रतिबिम्बेनाऽसृजदित्यर्थः ॥ ४५ ॥

---

प्रकाशः ।

न्नाद्यस्येन्द्रियवीर्यरूपतया तत्तन्त्रे पवित्रार्थं ‘इषेत्वेति शाखामाच्छिनत्ति’ इत्यनेन विहिते शाखाच्छेदने तथेत्यर्थः । उभयत्र प्रतिष्ठितत्वे प्रमाणमाहुः—ऊर्ग्वेत्यादि ।

\+ सिद्धानित्यत्र । तृतीयमिति । राजसराजसराजससात्त्विकराजसतामसभेदभिन्नम् ।

---

१ मूलसम्बन्ध'''ख. मूलोक्तसम्बन्धः क घ. ङ. २ ह्येताः ख. ग. ङ. ३ तनोः 'क.

तेन कार्ये त्रिरूपता जातेत्याह—

ते तु तज्जगृहू रूपं त्यक्तं यत्परमेष्ठिना।
मिथुनीभूय गायन्तस्तमेवोपासि कर्मभिः ॥ ४६ ॥

÷ते त्विति। इदं रूपं ब्रह्मणा त्यक्तमेव, यतः स परमेष्ठी, परमां निष्ठां प्राप्तवानिति. 'तेन स परमां काष्ठामगच्छत्' इति श्रुतेः। ततो यज्जातं तदाह—मिथुनीभूयेति। ते उभयेऽपि स्त्रीपुरुषरूपेण जाता, (?) माननस्याऽयं धर्मः। उपासि च प्रातः काले, कर्मभिर्ब्रह्मकृतैरुत्कर्षहेतुभिर्मिथुनीभूयैव रसाभिव्यक्त्यर्थं, तमेव ब्रह्माणं गायन्तो जगृहुरिति संबन्धः। गानं दर्शनकृतम् ॥ ४६ ॥

तामसीं सृष्टिमाह—

देहेन वै भोगवता शयानो बहुचिन्तया।
सर्गेऽनुपचिते क्रोधादुत्ससर्ज ह तद्वपुः ॥ ४७ ॥

देहेनेति। भोगवता स्थूलेन देहेन। भोगो विषयभोगः, तद्वान् स्थूलो भवत्येव। इदं लोकप्रसिद्धमिति वै निश्चयेनेत्युक्तम्। बहुचिन्तया शयानो जातः, पतित्वा स्थित इत्यर्थः। चिन्तायां हेतुः—सर्गेऽनुपचित इति। कामस्याऽपूर्तौ क्रोधो जातः, क्रोधाच्च तद्वपुरुत्ससर्ज॥ ४७ ॥

त्यक्ताद्वपुषः सृष्टिर्जातेत्याह—

येऽहीयन्ताऽमुतः केशा अहयस्तेऽङ्ग जज्ञिरे।
सर्पाः प्रसर्पतः क्रूरा नागा भोगोरुकन्धराः ॥ ४८ ॥

येऽहीयन्तेति। अमुतः शरीरात् ये केशा अहीयन्त। अनेन क्रोधात् स्वकेशाकर्षणमपि कृतवानिति ज्ञायते। त एव केशा अहयो जाताः। अहयः सर्पाः, नागा इत्यवान्तरभेदाः। क्रियावन्तोऽफणाधाश्च सफणास्तु तथा परे। नागा अजगराः प्रोक्ता मध्यमाः सविषाः स्मृताः। यतोऽहीयन्त, अतो ऽहयः। क्रोधायद्धावनं कृतवान्, ततः प्रसर्पतो देहाधे जाताः, ते सर्पाः। पतितात् क्रियारहिताधे जाताः, ते नागाः। स्थूलाकारात् देहात् क्रियारहितात् यज्जाताः, अतः भोगोरुकन्धराः। महान् भोगः, उरुः कन्धरा च येषाम्। कन्धराः फणस्थानानि। उरुशब्दस्य मध्ये प्रयोगादुभयसंबन्ध। भोगाधे वोरुकन्धरा, भोगापेक्षया वा ॥ ४८ ॥

एवं नवविधां सृष्टिमुक्त्वा स्वस्य गुणातीतभावनया कांचित् सृष्टिं कृतवान्। तामाह—

स आत्मानं मन्यमानः कृतकृत्यमिवाऽऽत्मभूः।
तदा मनून्ससर्जाऽन्ते मनसा लोकभावनान् ॥ ४९ ॥

प्रकाशः।

÷ ते त्वित्यत्र। अयमिति। (?)स्त्रीत्वपुंस्त्वाभ्यां भवनरूपः। दर्शनकृतमिति। दर्शनधर्मः। प्रतिबिम्बधर्मास्तु किन्नराः। किम्पुरुषा मिथुनीभावश्चेति स्वाप्रतिबिम्बः सम्माननं त्रयाणां कार्यं निर्दिष्टम्।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे विंशाध्यायविवरणं सम्पूर्णम्।

स आत्मानमिति । यदैव पुरुषः स्वस्मिन् गुणातीतेऽवतिष्ठते तदैव कृतकृत्योऽहमित्यात्मानं स मन्यते ॥ १ ॥ इवेति भावनया तथात्वात् । एवं भावे हेतुः–आत्मभूरिति । आत्मनो भगवतः सकाशात् जातः । तदा मनून् ससर्ज । मनसा शरीरस्थानीयेन । मनवोऽत्र चतुर्दश मुख्याः, अन्येऽपि बहवस्तद्विधाः । स्वसृष्टेरन्ते । नाऽतः परं ब्रह्मणः सृष्टिः, ऋषिसृष्टिस्तु वेदात्मकभगवतः । एतेषामुत्कर्षमाह–लोकभावनानिति । लोकाननुभावयन्ति धर्मादिभिरिति ॥ ४९ ॥

तदा ब्रह्मा स्वस्य सामर्थ्यं तेभ्यो दत्तवानित्याह—

तेभ्यः सोऽत्यसृजत्स्वीयं पुरं पुरुष आत्मवान् ।
तान् दृष्ट्वा ये पुरा सृष्टाः प्रशशंसुः प्रजापतिम् ॥ ५० ॥

तेभ्य इति । पुरं ब्रह्माण्डात्मकम् । सदैव तेभ्यः कालतो विभज्य दत्तवान्, यतः स पुरुषः । ते हि पुरं पालयिष्यन्ति, स्वयं शयिष्यत इति । तदा बहवो मनवो ब्रह्मस्थानीया जाता इति पूर्वसृष्टानां सुखं जातमित्याह–तान् दृष्ट्वेति । ये मन्वपेक्षया पुरा सृष्टाः, ते प्रजापतिं प्रशशंसुः ॥ ५० ॥

प्रशंसामेवाऽऽह—

अहो एतज्जगत्स्रष्टुः सुकृतं बत ! ते कृतम् ।
प्रतिष्ठिताः क्रिया यस्मिन्साकमन्नमदामहे ॥ ५१ ॥

अहो इति । सृष्टिरत्यन्ताश्चर्यरूपा, वयमपि तेनैव सृष्टाः, एतेऽपि । तथापि कारणतुल्यत्वेऽप्युत्तमा जाता इत्येतत्फलमेव जगत्स्रष्टुः सुकृतम् । बतेति हर्षे, स्वकारणादुत्तमं जातमिति । हेत्वन्तरमप्याह–प्रतिष्ठिताः क्रिया यस्मिन्निति । यस्मिन् कृते मनुरूपे, क्रिया धर्मादिरूपाः, प्रकर्षेण स्थिताः। अनेन धर्मो मोक्षश्च सिद्ध उक्तः । साकमन्नमदामह इति चाऽर्थः कामश्च । एवं सर्वपुरुषार्थसाधकता ॥ ५१ ॥

उत्कृष्टभगवद्भावेन सृष्टिमाह—

तपसा विद्यया युक्तो योगेन सुसमाधिना ।
ऋषीनृषिर्हृषीकेशः ससर्जाऽभिमताः प्रजाः ॥ ५२ ॥

तपसेति । ज्ञानकर्मभक्तिभिर्हृषीकेशो भगवान्, ऋषीन् सर्ववेदादिप्रवर्तकान्, अभिमतप्रजारूपान्, ससर्ज तपोऽत्र ज्ञानम्, विद्या भक्तिः । योगेन युक्तो भगवद्भावं प्राप्तः, समाध्यन्तेन योगेन वा युक्तः। सैवैः भगवता वा, इन्द्रियपतित्वात् स्रष्टुः । ऋषयो जितेन्द्रियास्त्रिविधाश्च; ज्ञाननिष्ठाः, कर्मनिष्ठाः, भक्तिनिष्ठाश्चेति । ऋषिश्चासौ हृषीकेशश्च, शब्दार्थब्रह्मरूप इत्यर्थः ॥ ५२ ॥

भगवतः पक्षुणा एकीभूताः कर्तृविशेषणभूता इति सृष्टेभ्य एकैकमंशमदादित्याह—

तेभ्यो ह्येकैकशः स्वस्य देहस्यांशमदादजः ।
यत्तत्समाधियोगर्द्धितपोविद्याविरक्तिमत् ॥ ५३ ॥

तेभ्य इति । हि युक्तश्चाऽयमर्थः, यदंशपुरस्कारेण ये सृष्टाः, तेभ्यः सोऽंशो देय इति । स्वार्थं तु नापेक्ष्यते, यतोऽयमजः, अतः परं पुत्रादिरूपेण न भविष्यतीति । तानेवांशानाह–यत्तदिति । यैदेव

१ इतः पूर्वं 'तत्' इत्यधिकम् क.ग. २इतः प्राक् 'अभिमताः' इतिपाठः क्वचित् पुस्तकेषु दृश्यते ३ यावदस्य. क.ख.

यस्य तदेव तस्येत्यर्थः । ऐश्वर्यादिषु षट्सु समाध्यादयः षडन्तर्भाव्याः, तत्तत्त्वेन वा व्याख्येयाः; भिन्ना वा । एते प्रकृतोपयोगिभगशब्दवाच्याः । समाधिश्चित्तैकाग्र्यम्, योगस्तस्योपायः, ऋद्धिः फलं तस्य; इति त्रयमेका कोटिः । तपो ज्ञानम्, विद्या भक्तिः, वैराग्यं चेत्यपरा । विद्यैव यशः, ऋद्धिरेव श्रीः, योगो बलम्, समाधिरैश्वर्यमिति । सम्यगाधि शत्रूणां यस्मादिति योगश्च । ऋषयो हि भगवत एकैकमंशं संपादयन्तीति ॥ ५३ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां तृतीयस्कन्धे विंशाध्यायविवरणम् ।

---

## एकविंशाध्यायविवरणम् ।

* एकविंशे तु सफलो धर्ममार्गो निरूप्यते ।
भूतसंस्कारकर्तृत्वाद्भूतसर्गोऽयमुच्यते ॥ १ ॥
षड्विधं रूपमस्याऽपि तपोदर्शनसंस्तवाः ।
त्रिविधाःकारणे युक्ता वाक्यागमसमृद्धयः ॥
फलेऽपि त्रिविधाः प्रोक्ता ऋषिवाक्यं समृद्धये ॥ २ ॥

एवं सकलां प्रसवसृष्टिं पूर्वाध्याये श्रुत्वा, तद्विशेषं श्रोतुं मनोर्वंशं पृच्छति—स्वायम्भुवस्येति पञ्चभिः

### विदुर उवाच ।

**स्वायंभुवस्य च मनोर्वंशः परमसंमतः ।**
**कथ्यतां भगवन् ! यत्र मैथुनेनैधिरे प्रजाः ॥ १ ॥**

---

गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृतः प्रकाशः

* अथैकविंशाध्यायविवरणं चिकीर्षवः सङ्गतिं पूर्वमुक्त्वाऽथ निरूप्यास्य प्रकरणस्य प्रकारद्वयेन विभक्तत्वादेकस्मिन्नध्यायेऽर्थद्वयस्य ? मत्त्वा ताभ्यामध्यायादिभेदो यथा न भवेत्तदर्थमर्थयोरेव हेतुहेतुमद्भाव इति बोधयन्तः प्रस्तुताध्यायार्थमाहुः—एकविंशे त्वित्यादि । अयमिति । धर्ममार्गः । द्वाभ्यामेतदध्याय स्थ नभान् विभजन्ते—षडित्यादि । कारण इति । भूतसंस्कारकारणे धर्मे । फल इति । भूतसंस्कारके फले । ऋषिवाक्यमिति । मनु प्रति कर्दमवाक्यम् । एवं सर्वोऽध्यायार्थ उक्तः । तत्र विदुरप्रश्नस्य सङ्गति सुगमत्वात्स्पष्टा बोध्या ।

---

१ षट्सु [illegible] ख. [illegible] ग. २ [illegible] ग. ङ. ३ [illegible] ख ग ङ. च

अस्य विशेषत्वं मैथुनजनितत्वमेव । स्वयंभुवो वंशः श्रुतः, स्वायंभुवस्य च मनोर्वंशः श्रोतव्यः । तत्र हेतुः—परमसंमत इति । परममत्यर्थं संमतः । सर्वसंमतं च श्रोतव्यम्, यत इदानीन्तनानां तथैव जन्म । तदाह—मैथुनेनैधिरे प्रजा इति । भगवन्निति ज्ञानार्थं संबोधनं मैत्रेयस्य ॥ १ ॥

एवं सामान्यतः पृष्ट्वा पुत्रयोर्विशेषं पृच्छति—

**प्रियव्रतोत्तानपादौ सुतौ स्वायंभुवस्य वै ।**
**यथाधर्मं जुगुपतुः सप्तद्वीपवतीं महीम् ॥ २ ॥**

प्रियव्रतेति । यौ स्वायंभुवस्य सुतौ प्रियव्रतोत्तानपादावुक्तौ, तौ, निश्चयेन, धर्ममनतिक्रम्य, सप्तद्वीपवतीं महीं जुगुपतुः । जन्ममात्रं श्रुतम्, युक्त्या रक्षा च निर्द्धारिता । तयोर्वंशस्तु वक्तव्य इति भावः ॥ २ ॥

कन्यकानां वंशं पृच्छति—

**तस्य वै दुहिता ब्रह्मन् ! देवहूतीति विश्रुता ।**
**पत्नी प्रजापतेरुक्ता कर्दमस्य त्वयाऽनघ ! ॥ ३ ॥**

तस्येति । मध्यमाया द्वयेन, शिष्टयोरेकेन । मध्यमा सर्वत्र मूलभूतेति तस्याः[१] प्रशंसा । तन्मोक्षावधिरेव सर्गः । ब्रह्मन्निति संबोधनमविकृतत्वाय । देवानां हूतिर्यस्या इति सर्वदेवमयी, सर्वदेवाधिष्ठिता वा । संतर्पणार्थं[२] वा देवानामाह्वानम् । उपभोगार्थं वा, मोहिता रूपेण समाहूता इति । सर्वथा विशेषेण श्रुता प्रसिद्धा । तस्या विवाहश्च श्रुतः । कर्दमस्य प्रजापतेः, त्वया, पत्नीति निरुक्ता । अनघेति संबोधनात् स्त्रीकृतो भावो हृदये नोत्पत्स्यत इत्युक्तम् । पापयुक्तानामेव तादृशः कामो भवति, यो लौकिकेन क्षुभ्यति ॥ ३ ॥

अनूद्य प्रश्नमाह—

**तस्यां स वै महायोगी युक्तायां योगलक्षणैः ।**
**ससर्ज कतिधा वीर्यं तन्मे शुश्रूषवे वद ॥ ४ ॥**

तस्यामिति । तस्य महायोगित्वात्, बीजापायो योगप्रतिबन्धक इति, तादृशस्यापि बह्वपत्यजनकत्वमाश्चर्यमिति प्रश्नः । साऽपि योगलक्षणैर्युक्ता । द्वात्रिंशल्लक्षणयुक्तो योगस्याऽधिष्ठानं भवतीति कर्दमस्य तु सिद्धो योगः । तस्यास्तु लक्षणानि सन्ति, योगस्त्वग्रे सेत्स्यति । अत उभयोरपि सृष्टिविरुद्धत्वात् प्रश्नः । महायोगित्वाच्च सर्गेऽपि न काचित् क्षतिरिति । वै निश्चयेन । तस्यां कतिधा वीर्यं ससर्जेति सङ्ख्यायां प्रकारविशेषे च प्रश्नः । उत्तरे हेतुः—शुश्रूषव इति । श्रोतुमिच्छवे । वदेति प्रार्थना । ॥ ४ ॥

अवशिष्टयोरपि वंशप्रश्नमाह—

**रुचिर्यो भगवान् ब्रह्मन् ! दक्षो वा ब्रह्मणः सुतः ।**
**यथा ससर्ज भूतानि लब्ध्वा भार्यां च मानवीम् ॥ ५ ॥**

रुचिरिति । रुचिर्ज्ञानपूर्ण इति पूर्वकल्पेष्वीरितः । ब्रह्मन्निति सर्वथा सर्वार्थपरिज्ञाने दक्षस्तृती-

---

१ पृथिवीं ग. घ. च.  २ सर्वतर्पणार्थम्. घ ङ

याया: । भूतानीति कन्यासु नानाविधोत्पत्तिः सूचिता । मानवीमिति मनोः पुत्रीं भार्यात्वेन लब्ध्वा, चकारात् ब्रह्मण आज्ञाम् ॥ ५ ॥

× सर्गे कर्दमस्यैवोपयोगात् देवहूत्याः सकाशात् सृष्टिमाह चतुर्भिरध्यायैः । साधनं च विवाहश्च सृष्टिर्द्वेधा विभेदतः । विसर्गे सर्ववस्तूनां धर्मादावुपयोगिनाम् । निरूपणं हि सर्गे तु सर्वं सर्गार्थमेव हि ॥ १ ॥

## मैत्रेय उवाच ।

प्रजाः सृजेति भगवान्कर्दमो ब्रह्मणोदितः ।
सरस्वत्यां तपस्तेपे सहस्राणि समा दश ॥ ६ ॥

ब्रह्मा भगवद्रूपः, कर्दमोऽपि भगवद्रूपः, अतः स्वकर्तव्यसृष्टौ कर्दममेव प्रेरितवान्, स्वतुल्यत्वात् । सृष्ट्युपयोगिनी हि ब्रह्मदैवत्या सरस्वती; तस्याः तीरे दशवर्षसहस्राणि दिव्यानि तपस्तेपे । एतावता चतुर्युगानामावृत्तिर्जाता । स्वतन्त्रब्रह्मसृष्ट्यर्थमपि सहस्रवर्षमात्रं तपः, इदं तु ततोऽप्यधिकमिति तत्र हेतुं वक्ष्यति ॥ ६ ॥

न केवलं तपसा भगवान् परितुष्यति, किन्तु भक्त्येति भगवद्भजनमाह—

ततः समाधियुक्तेन क्रियायोगेन कर्दमः ।
संप्रपेदे हरिं भक्त्या प्रपन्नवरदाशुषम् ॥ ७ ॥

ततः समाधियुक्तेनेति । समाधौ भगवानाविर्भावितः । तत्र क्रियायोगः परिचर्या । अतः समाधिना युक्तेन क्रियायोगेनेत्युक्तम् । एवं परिचर्यया सम्यक् प्रपेदे । ततो भजनक्लेशनिवृत्तिर्भजनीयगुणात् । तदाह—हरिमिति । ततः प्रेमभक्तिः। तयापि संप्रपेदे । भगवान् वा तया कृत्वा प्रपन्नानां वरदाता जातः । दाशुषं दातारम् ॥ ७ ॥

ततो भगवत्साक्षात्कारो जात इत्याह—

तावत्प्रसन्नो भगवान्पुष्कराक्षः कृते युगे ।
दर्शयामास तं क्षत्तः शाब्दं ब्रह्म दधद्वपुः ॥ ८ ॥

---

प्रकाशः ।

× मैत्रेयवाक्यतात्पर्यकथने । साधनं चेत्यर्धेनाध्यायचतुष्टयस्यार्थ उक्तो भवति । तत्र द्वेधासृष्टिमध्ये कन्यासृष्टिस्तृतीयस्य पुत्रसृष्टिस्तुरीयस्येति बोध्यम् । उच्यमाने द्विविधेऽप्यध्यायार्थे येषां वाक्यार्थानां यत्रोपयोगस्तमाहुः—विसर्ग इत्यादि । तु शङ्कानिरासे । हि यतो हेतोः निरूपणं सर्ववस्तूनां सर्गे अतो हि निश्चयेन सर्वं सर्गार्थमेव । तत्र युक्तिः प्रकरणित्वादिति द्वितीयेन हिशब्देनोच्यते । अवान्तरे मैत्रेयवाक्यविचारे [१] सर्वं विसर्गार्थम्, विदुरप्रश्नेन तस्यैवावान्तरप्रकरणित्वावगमात् । उपयोगिनां निरूपणं धर्मादौ धर्माधर्ममिति विभागेन बोध्यमित्यर्थः । तस्य हेतोः स्वरूपमाहुः—न केवलमित्यादि ।

---

१ सकाशादेव ख. ग

**तावदिति** । तावता कालेन प्रसन्नः । प्रेम्णा वा प्रपन्नवरदातारं यावत् सेवते, मनःपूर्णा सेवा यावन्न जाता; तन्मध्य एव भगवान् प्रसन्नो जात इत्यर्थः । विलम्बे कारणं **कृतेयुग** इति । स हि सत्ययुगे तपः कर्तुमुपविष्टः । सत्ये तपसा शुद्धान्तःकरणो जातः, ततस्त्रेतायां योगसिद्धो जातः; तपस्त्वनुवर्तत एव सर्वत्र । ततो भगवदाविर्भावः । ततो द्वापरे परिचर्या, ततः प्रेम कलौ । तत्र चेदाविर्भावं प्राप्नुयात्, ततः कलावुत्पन्ना सृष्टिरसङ्गता स्यात् । अतो जातेऽपि स्नेहे प्रपन्नानां वरदातेति तदनाशार्थं कृतयुगे प्रादुर्भूतो जातः । तत्र तु न विलम्ब इति द्योतितम् । तावदिति । **पुष्कराक्ष** इति दृष्टैवाऽऽप्यायनजनकः । शब्दब्रह्मणा वेदेन निष्पादितं छन्दोमयम्, वेदपुरुषो भगवान्, तादृशरूपं गृहीत्वा आविर्भूतः, तं दर्शयामास । क्षत्तरिति संबोधनमन्तः पुरात् बहुप्रकारेण प्रभुराविर्भवतीति भगवतो रूपविशेषे सन्देहाभावायोक्तम् । यद्यपि तदतीन्द्रियमेव, तथापि भगवानेव दर्शयामास । न हि भगवतोऽशक्यं किञ्चित्, स्वरूपमेव बहिरनेकधा कृतवतः ॥ ८ ॥

एवं दृष्टं भगवद्रूपमनुवर्णयति त्रिभिः—

## स तं विरजमर्काभं सितपद्मोत्पलस्रजम् ।
## स्निग्धनीलालकव्रातवक्त्राब्जं विरजाम्बरम् ॥ ९ ॥

+**स तमिति** । स्वरूपाभरणोपकल्पैः प्रथमं स्वरूपमनुवर्णयति । स कर्दमः, तं प्रसिद्धम्, दृष्ट्वा जातहर्षः सन् मूर्ध्नाऽपतदिति संबन्धः । **सृष्ट्यर्थं पुरुषार्थार्थं चतुर्दशविधो हरिः ॥ १ ॥ सृष्टिश्च द्विविधा तस्मात्तो द्वाभ्यां तु पञ्चधा । दशापत्यानि तस्माद्धि एक एव पुमान् यतः ॥ २ ॥ सर्गे च दोषन्याप्तिः पुरुषार्थेषु च स्वयम् । शुक्लो हरिः प्रादुरासीदाद्या नव हिताः सताम् ॥ ३ ॥** प्रथमतो दोषाभावमाह—**विरजमिति** । रजोगुणो, रागः, कालुष्यं च नाऽस्तीत्यर्थः । अज्ञानान्धकारजडत्वव्यावृत्त्यर्थमाह—**अर्काभमिति** । अर्को हि देवतामण्डलं नारायणश्च । अर्कस्येवाभा यस्य । सितानि पद्मानि, उत्पलानि च तेषां स्रक् यस्य । अहोरात्रविकासयुक्तगणसमूहवान् भगवानुक्तः । स्निग्धा नीला ये अलकव्रातास्तैरावृतं वक्त्राब्जं यस्य । अनेन भक्तिः सर्वसुखसहिता तस्मिन् प्रकाशिता । सुखं चैहिकामुष्मिकमित्यल्के विशेषणद्वयम् । विरजं शुक्लमम्बरं यस्य, शुद्धा एव वेदभागास्तेन गृहीता इति । अनेन पूर्णा ज्ञानशक्तिरुक्ता । एवमनेन दोषाभावो गुणाश्च त्रिविधा उक्ताः ॥ ९ ॥

---

### प्रकाशः।

+ स तमित्यत्र । चतुर्दशभगवद्विशेषणतात्पर्यमाहुः—सृष्ट्यर्थमित्यादि । अर्धेन समुदायसङ्ख्यामुक्त्वा अग्रे विभज्याहुः—तस्मात्कर्दमात् सृष्टिः सगुणनिर्गुणभेदेन वा, स्त्रीपुंभेदेन वा, द्विधा । अतो हेतोः द्वाभ्यां श्लोकाभ्यां तु पुनः पञ्चधा एकैकस्मिन् पञ्च पञ्च विशेषणानि । पुंस एकत्वे बीजमाहुः—एक एवेत्यादि । सांख्यान्तरे यथा पुरुषबहुत्वम्, तथा नाऽत्रेति ज्ञापनाय तथेत्यर्थः । तृतीयपद्योक्तविशेषणसंख्यातात्पर्यमाहुः—सर्गे चेत्यादि । आद्या इति स्त्रियः। हिताः सतामित्यनेन समानसृष्टिकर्त्र्य इति बोध्यते । तेन संख्यया सृष्टिप्रकाराच्चापि सांख्यांतराद्वैलक्षण्यमिति हृदयम् । विशेषणद्वयमिति । अत्र स्निग्धशब्देन समुदायशक्त्या त्र(व)यो(?) रूपमैहिकं सुखमुच्यते। नीलशब्देन तु निकृष्टा इला भूर्यस्मादिति योगेन आमुष्मिकमुच्यत इति भावबोधनायेदं द्वयमित्यर्थः ।

---

१ तावत् क.

पुनर्द्वितीयेन राजसान् गुणान् दोषाभावं चाऽऽह—

**किरीटिनं कुण्डलिनं शङ्खचक्रगदाधरम्।**
**श्वेतोत्पलक्रीडनकं मनःस्पर्शस्मितेक्षणम्॥ १०॥**

*किरीटिनमिति। किरीटयुक्तं कुण्डलयुक्तं शङ्खचक्रादियुक्तं च। वेदान्ते परमं धेयं प्रमेयबलमीरितम्। साङ्ख्ययोगौ प्रमाणं च तत्त्वानां कार्यतो बलम्। त्रिविधान्यपि तत्त्वानि प्रोक्तानि त्रिभिरायुधैः[1] भूमावचतीर्णो लीलां कुर्वाणः तद्गतदोषयुक्तो भवेदिति तन्निराकरणार्थं चतुर्थमायुधं पद्ममपि परित्यज्य, श्वेतं यदुत्पलं तदेव क्रीडनकं यस्य, तथा जातः। क्रीडनकमिति वचनात् भ्रामणं लक्ष्यते। कमले च भ्रामिते जगदेव भ्रामितं स्यात्, उत्पले स्वज्ञानम्; अतो लीलाऽप्यज्ञानमाशिकैवेत्युक्तम्। मनः स्पृशति मनोहरं यत् स्मितम्, तत्सहितमीक्षणं यस्य। भगवतो मायादृष्टिश्च मनस्येवाऽल्पं किञ्चिद्विकारं जनयति, न तु कायिकादि। अनेनाऽस्य पुत्रो योगभक्तिज्ञानानि च नेष्यतीत्यपि सूचितम्॥ १०॥

पुरुषार्थेषु दोषान्निराकुर्वन्नाह—

**विन्यस्तचरणाम्भोजमंसदेशे गरुत्मतः।**
**दृष्ट्वा खेऽवस्थितं वक्षःश्रियं कौस्तुभकन्धरम्॥ ११॥**

विन्यस्तेति। धर्मे हि मृत्युः +श्रमात्मको मृत्युरूपश्च निमित्तभूतश्च कालो बाधको भवतीति तन्निराकरणार्थम्, गरुत्मति काले चरणकमलं भक्तिमार्गे च विन्यस्य स्थितः। अंसदेश इति मोक्षपर्यन्तं भक्तिरुक्ता, शिरश्चतुर्थांश इति। खे आकाशे स्थितम्, आकस्मिकोऽर्थस्तस्य निरूपितः। वक्षसि श्रीर्यस्य, कामो यथेच्छं निरूपितः। कौस्तुभो मणिः कन्धरायां यस्य। जीवाः सर्वे स्वोपरि यथासुखं नयनार्थं स्थापिता इति सर्वविधा मुक्तिरुक्ता॥ ११॥

**जातहर्षोऽपतन्मूर्ध्ना क्षितौ लब्धमनोरथः।**
**गीर्भिस्त्वभ्यगृणात्प्रीतिस्वभावात्मा कृताञ्जलिः॥ १२॥**

जातहर्ष इति। अत एव जातो हर्षो यस्य। मूर्ध्ना क्षितावपतत्, उपरि स्थितस्य तिष्ठन्नेव चरणं न स्पृष्टवान्। दर्शनाकाङ्क्षी च शिरो न नामयेदिति दोषश्च व्यावर्तितः। समागतो मदर्थमेवेति लब्धो भगवद्रूपो मनोरथो येन। एवं कायिकं मानसिकं च भजनमुक्त्वा वाचनिकं भजनमाह*गीर्भिस्त्वभ्यगृणादिति। आभितो गृणनं सर्वसिद्धान्तनिरूपणपूर्वकम्। भगवति प्रीतिः स्वभाव एव यस्य। अतो भक्त्या गृणनं न वर्जनीयम्, सर्वकर्मस्वेव भक्तेर्विनियोगात्। तादृश आत्मा यस्य। जीवान्तःकरणस्वभाव

प्रकाशः।

* किरीटिनमित्यत्र। उत्पले स्वज्ञानमिति। उत्पलस्य रात्रिविकासित्वात् तद्भ्रामणेन तमोज्ञानरूपं भ्रामितं दर्शितं स्यादित्यर्थः। नेष्यतीति। प्रणेष्यति।

+ श्रमात्मकइति 'तानि मृत्युः श्रमो भूत्वोपयेम' इति श्रुतेरित्यर्थः। यथेच्छमिति। कर्दमेच्छानुरूपं।

* गीर्भिरित्यत्र। जीवान्तःकरणस्वभाव इति। जीवान्त करणयोःस्वभावः।

१ निष्पादितानि क. २ व्यकार्यं क. ग ङ. ३ यथासुख न यथार्थम् क. यथासुख यथार्थम् ङ. ४ न कर्तव्यम् ग. कर्तव्यम् क ङ. वक्तव्यम् घ

एवं तादृश इति देहकार्ये दासकार्ये वा स्नेहोऽनवच्छिन्नो निरूपितः । प्रार्थनार्थम्—कृताञ्जलिरिति । प्रसृताञ्जलिरुक्तः प्रसादग्रहणार्थम् ॥ १२ ॥

+नवधा वर्णयामास सृष्ट्यर्थं गुणभावतः। आद्यास्तु रजसा सत्त्वे तमसाऽप्यत्र योजितम् (?)॥१॥
द्वाभ्यां सत्त्वं रजःसत्त्वात् त्रिभिरन्तिम ईर्यते । सत्त्वमिश्रं रजः पूर्वं तमोमिश्रं तथा परम् ॥ २ ॥
फलं तु भगवानेव सर्वोत्कृष्टमिति स्थितिः । तं परित्यज्य तस्माद्धि प्राप्यं प्रथममुच्यते ॥ ३ ॥
दोषज्ञाने तथा कामे विद्यमाने तु मध्यमः । विचार्य भगवान् दातेत्यस्य वै शरणं गतः ॥ ४ ॥

प्रथमं सत्त्वयुक्तरजोभावेन भगवानेव परमपुरुषार्थ इति निरूपयति—

## ऋषिरुवाच[२] ।

**जुष्टं बताद्याऽखिलसत्त्वराशेः सांसिध्यमक्ष्णोस्तव दर्शनान्नः ।**
**यद्दर्शनं जन्मभिरीड्य ! सद्भिराशासते योगिनो रूढयोगाः ॥ १३ ॥**

*जुष्टमिति । नोऽक्ष्णोः सांसिद्ध्यं सम्यक् सिद्धेर्भावः, तव दर्शनादेव जुष्टं सेवितम् । सिद्धिरुत्तमा सर्वफलात्, यतः सर्वाणि फलानि स्वाधीनान्येव भवन्ति । सा च सिद्धिरस्माकं जातेति सर्वप्रकारेण भविष्यतीति ज्ञायते । यतः प्रथममक्ष्णोः सिद्धिर्जाता, अस्माभिर्ज्ञाता; न हि असिद्धा दृष्टिरधोक्षजं द्रष्टुमर्हति । तेन ज्ञायते, अक्षिभ्यां सांसिद्ध्यमाधिदैविकी सिद्धिः सेवितेति । अत एव—बतेति हर्षे । अद्येत्यलभ्यलाभोक्तिः । सिद्धयः सर्वाः सत्त्वकार्याः, अखिलानि च सत्त्वानि त्वयि राशीभूतानि । तानि चेत् निकटे दृष्टानि, तदा का सिद्धिरवशिष्येतेत्यभिप्रायेणाऽऽह—अखिलसत्त्वराशेरिति । न इति सर्वानेव सिद्धानात्मत्वेन ज्ञात्वा वदति । एवं दर्शनान्यथानुपपत्त्या चक्षुषोः सिद्धिरुक्ता । इदानीं दर्शनमेव सर्वसिद्धीनां फलमित्याह—यद्दर्शनमिति । ईड्येति संबोधनात् नेदं स्तोत्रं क्रियते, किन्तु वस्तुस्वरूपमेव तथेति ज्ञापितम् । भगवतः स्तोत्रं नित्यसिद्धम्, सर्वैरेव क्रियत इति । अतः स्तोत्रस्याश्चर्यत्वाभावात्, न वाक्यानां स्तोत्रपरत्वम् । रूढयोगा अपि, बहुभिः जन्मभिः, कायव्यूहमपि कृत्वा, देहदेशकालकृतसंदेहव्यावृत्त्यर्थं सद्भिरपि जन्मभिर्यद्दर्शनमाशासते । तेषां सिद्धयः स्वतः सिद्धाः, दर्शनं तु दुर्लभमाकाङ्क्षितमेव॥ १३ ॥

एवं भगवद्दर्शनं सूचकत्वेन फलत्वेन च निरूप्य दर्शनानन्तरं दर्शनदातुः सकाशात् येऽन्यत्कामयन्ति तान् निन्दति—

---

प्रकाशः

+ कारिकासु । आद्या इति जुष्टमित्याद्याश्चत्वारः श्लोकाः, त्रिभिः षड्भ्योऽग्रिमैरजःसत्त्वात् अन्तिमे नवमे रजः सत्त्वमुत्तरावर्धीकृत्य । पूर्वं सप्तमे । सत्त्वमिश्रंरजः। परम्—अष्टमे तमोमिश्रं रजस्तथा तेन प्रकारेणेर्यत इत्यर्थः । आद्यानां चतुर्णामर्थमाहुः—फलमित्यादि द्वाभ्याम् । तत्राद्यार्द्धेन प्रथमस्य द्वितीयार्द्धेन द्वितीयस्य । दोषज्ञान इति । दोषं ज्ञात्वा तथेत्यारभ्य तृतीयार्द्धेन तृतीयस्यान्ते तुरीयस्येति ज्ञेयम् । विचार्येति । मध्यमत्वं स्वस्मिन् विचार्येत्यर्थः ।

* जुष्टमित्यत्र । यत इति । सिद्धेः सकाशादित्यर्थः । भविष्यतीति । सिद्धिर्भविष्यति । स्तोत्रमिति । असत्समारोपणरूपं स्तोत्रम् । सूचकत्वेनेति । सिद्धसूचकत्वेन ।

---

१ एतादृशः ग. च.　　२ कर्दम उवाच । पाठः

**ये मायया ते हतचेतसस्त्वत्पादारविन्दं भवसिन्धुपोतम् ।**
**उपासते कामलवाय तेषां रासीश ! कामान्निरयेऽपि ये स्युः ॥ १४ ॥**

+ये माययेति । ये ते पदारविन्दं कामलवायोपासते, ते मायया हृतचेतसः । बालो हि मायया मोहितो बहुसुवर्णं दत्वा भक्ष्यमुष्टिं गृह्णाति, तद्वदिति । तथा ग्रहणे हेतुः—हृतचेतस इति । पादारविन्दमिति सुसेव्यता । ननु ये भजन्ति, ते हि कार्यार्थमेव; अतो वरप्रार्थनोचितेत्याशङ्क्याऽऽह—भवसिन्धुपोतमिति । सैन्धवः पोतोऽस्ति तत्तीरवासिनां परोत्तरणहेतुः; तदर्थमेव तस्य निर्माणात्, न [illegible] ग्रामवत् भोगार्थे । अतो ये पारगमनेच्छवः तैरेवाराद्धव्यः, न तु ग्रामवत् स्थित्यर्थम् । तथार्थमारोहे कर्णधारः क्रुद्धयति । ये पुनस्तत्र कार्यार्थं स्थापिताः, ते भोगं प्राप्नुवन्तोऽपि निरोधेन क्लिष्टयातयामभोगानेव भुञ्जते । ते तु नरकेऽपि भवन्ति, निरोधादीना विद्यमानत्वात् । अतः पोतारूढो यथाकथञ्चित पार एव गच्छेत् । न तु ततो विषयभोगं वाञ्छेत्; तत्र निरोधस्य सहजस्य विद्यमानत्वात् । (क्षणमात्रं प्राप्नोति) कामलव एव तत्र भोगेन भवति । परमदयालुस्तु भगवान् तदपि प्रयच्छति यथा महता कष्टेन पोतारूढः, तत्र तत्र स्थितकर्णधारात् भक्ष्यमात्रं प्राप्नोति, महानगराद्यपेक्षया तु तदन्नादिकमपकृष्टमेव; तद्वदित्यर्थः ॥ १४॥

एवं गुणदोषान् ज्ञात्वाऽपि गत्यन्तराभावात्, उद्यतकामस्य प्रतीकाराभावाच्च आत्मार्थमपि भगवन्तमेव प्रार्थयति—

**तथा स चाऽहं परिवोढुकामः समानशीलां गृहमेधिधेनुम् ।**
**उपेयिवान्मूलमशेषमूलं दुराशयः कामदुघाङ्घ्रिपस्य ॥ १५ ॥**

*तथेति । स चाऽहमिति ज्ञात्वाऽपि प्रकटकामः, अत एव परिवोढुकामः । स्वयोगबलेन कामिनीर्निर्माय न भोगकामः, न वा तथोत्पादिता ब्रह्मणः कार्ये प्रयोजका भवेयु', हीनास्ते । तथा धृत्यर्थमाह—समानशीलामिति । समानं शीलं यस्याः । तदा पूर्णमपत्यं भवति । अनेन भगवता मदानन्देनैव सा निर्मिता भवतीति ज्ञापितम् । किञ्च, न केवलं कामार्थी, किन्तु धर्मादयोऽप्यपेक्ष्यन्ते । अतो ये गृहमेधिनो गृहस्थितबुद्धयो धर्मार्थकामपराः, तेषां धेनुर्धर्मादिदोग्ध्री । तादृशीं परिवोढुकामस्ते कामदुघाङ्घ्रिपस्य मूलमुपेयिवान् । कल्पवृक्षमूले गतः सर्वं प्राप्नोति, यावती शक्तिः कल्पवृक्षे भगवत्स्थापिता, तत्र सिद्धम् । भगवच्चरणारविन्दद्वयं तु ततो विशिष्टमित्याह—अशेषमूलमिति । न हि कल्पवृक्षः सर्वस्य मूलम्, न हि देवहूतिं दातुं समर्थो वा भवति । ननु चित्तशुद्धिं प्रार्थय, सपादय वा, किमनयेत्याशङ्क्याऽऽह—दुराशय इति । अन्तःकरणशुद्ध्यभावान्न स पक्षः सिद्ध्यति । यथा भवसिन्धुपोतः, तथा कल्पवृक्षोऽपि भगवान्; अतो भार्यार्थमपि भजनं युक्तमिति भावः ॥ १५ ॥

नन्वन्तःकरणशुद्धिरेव वरात्कथं न प्रार्थ्यते ? किं कामपूरणेनेत्याशङ्क्याऽऽह—

**प्रजापतेस्ते वचसाऽधीश ! तन्त्या लोकः किलाऽयं कामहतोऽनुबद्धः ।**

प्रकाशः ।

+ ये इत्यत्र । तत्रेति । पोते इत्यर्थः ।

* तथेत्यत्र । त इति । स्वार्थं योगनिर्मिताः पदार्था इत्यर्थः ।

१ सिन्धोः ग. घ. ङ. च. २ सदानन्देन क.

**अहं च लोकानुगतो वहामि वलिं च शुक्लानिमिषाय तुभ्यम् ॥ १६ ॥**

प्रजापतेरिति। न केवलं कामः, किन्तु पितुराज्ञा च। स च वैष्णवस्त्वत्पुत्रः; अतएव यः प्रजापतिः, तस्य वचसा। लोकापेक्षया वा स एव भवान्; यथा ग्रामवासिनां ग्रामाधिपतिरेव महाराजः। लोकानां ब्रह्मवाक्यमनुल्लङ्घनीयमित्याह—ते वचसा तन्त्या अयं सर्वोपि लोकः कामहतोऽनुबद्धः। 'ऋणत्रयमपाकृत्य मनो मोक्षे निवेशयेत्'। जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्वा जायते' इति च। एवंविधानि श्रुतिस्मृतिवाक्यानि सकामपराणि, अतः सकामश्चेदन्यथा कुर्यात् पतेदेव। अतो हे अधीश! अनुलङ्घ्यवचसामर्थ्ये, सर्व एव लोकः कामहतोऽनुबद्ध एव। एवं सामान्यतः कामहतस्य ऋणत्रयापाकरणं कर्तव्यमित्युक्त्वा, स्वस्य लोकत्वाभावेऽपि सकामत्वं लोकानुगतत्वं च वर्तत इत्याह—अहश्चेति। हे शुक्ल! ते च वलिं वहामि। इदमधिकम्, भक्तोऽहमपि यतः। अतस्त्रितयकार्यार्थं मह्यं स्त्री देयेति भावः। शुक्लेति संबोधनान्न संसारकृतः कश्चन क्लेशो भविष्यतीति सूचितम् ॥ १६ ॥

एवं लोकानुसारिणं सकामभक्तमात्मानं निरूप्य, मुख्यभक्तान् निरूपयितुं तेषां धर्ममाह—

**लोकांश्च लोकानुगतान् पशूंश्च हित्वाऽऽश्रितास्ते चरणातपत्रम्।**
**परस्परं त्वद्गुणवादसिन्धुपीयूषनिर्यापितदेहधर्माः ॥ १७ ॥**

लोकांश्चेति। मुख्या भगवद्भक्तास्त्रिधर्मा भवन्ति। प्रथमतो लोकान् त्यजन्ति, तदनु ते चरणातपत्रमाश्रिता भवन्ति, निरन्तरं च तादृशैः सह तथा भगवद्गुणगानं कुर्वन्ति। यथा देहादीनामस्मरणं भवति। यद्येतन्मध्ये एकमपि न्यूनं भवेत्, न स वैष्णवो मुख्यः। यथा लोकास्त्यक्तव्याः, एवमेव भगवद्भक्ता अपि लोकानुगताश्चेत् त्यक्तव्या एव। लोकापेक्षयाऽप्येते विशेषतस्त्यक्तव्या इत्यत्र हेतुमाह—पशूनिति। अन्धश्चेत् कूपे पतति, युक्तं तत्; चक्षुष्मान् चेत् पतति स महानन्ध इति ज्ञेयम्। त्यक्त्वा पश्चाच्चरणशरणता। आतपत्रग्रहणादिदानीमिव भगवान् यस्य प्रसन्नो भवति, तथा सति शरणागतश्चेत्, समुख्यो भवति। स्वत एव गुणकथने रसाविर्भावो न स्यात्, अभिमानश्च स्यादिति समानाश्चेत्परस्परं वदेयुः। तत्रापि त्वद्गुणानां वादो यत्र; तादृशवाक्समुद्र एव, मथनादिनोद्धृत यदमृतम्, तेन कृत्वा नितरां यापिताश्चेत् क्षुत्पिपासादयः। त एव भगवद्भक्ताः, ये कथामृते पीयमाने, देहधर्मरहिता भवन्ति। अमृतं च तदेव यद्देहधर्मनिवर्तकम्। येषां च निवर्तते, त एव त्यक्तलोका भवन्ति, अन्येषां तदपेक्षाया विद्यमानत्वात्। वादस्तदैवान्तस्तापं दूरीकुर्यात्; यदि चरणच्छायामाश्रितो भवेत्। यस्य च्छायान्तरेण धर्मनिवृत्तिः, अन्नादिना च क्षुन्निवृत्तिः, ते चेल्लोकानुगताः, पतिता एव; तदा उभयभ्रंशात्। अतो लक्षणत्रयमुक्तम् ॥ १७ ॥

तथाविधानां फलं वदन् कालादीनामबाधकत्वमाह—

**न तेऽजराक्षभ्रमिरायुरेषां त्रयोदशारं त्रिशतं षष्टिपर्व।**
**षण्नेम्यनन्तच्छदि यत्त्रिणाभि करालस्रोतो जगदाच्छिद्य धावत् ॥ १८ ॥**

* न त इति। ते त्रिणाभि कालचक्रमेषामायुराच्छिद्य धावन्न भवतीति संबन्धः। कालस्य चलिष्ठ-

प्रकाशः।

* न त इत्यत्र। त्रयोदशारत्वे त्रिशतं नवतिश्च पर्वाणि भवन्तीति विशेषणयोर्विरोधमाशङ्क्य, समाद-

१ युक्तमेतत् क ख २ तन क घ ङ.

त्वमनन्यप्रेर्यत्वं वक्तुं प्रवाहत्वेनोच्यते स्वरूपम्, चक्रे त्वन्यप्रेरणं भवति । चक्रस्येव वा गतिविशेषस्य प्रवाहत्वं विधीयते । कालचक्रं संवत्सरात्मकमविकृतेऽक्षेऽक्षररूपे प्रोतं भ्रमति, नाशकमिति । समलं त्रयोदशार-मुच्यते । त्रयोदशमासा एवाऽराः । सारमेतच्चक्रम्, न तु प्रधियुक्तम् । एकैकस्याऽरस्य त्रिंशत् पर्वाणि भवन्ति । तथा सति त्रिशतं षष्टि च पर्वाणि यस्य । इदमाधिदैविकं चक्रं तुल्यमेव, अन्यथा तस्यैव परिवर्तो न स्यात् । आधिभौतिके हि वृद्धिक्षयौ, अतस्तावत्पर्वत्वं नानुपपन्नम् । षड् ऋतव एव नेमयो यस्य । अरा-स्तु नाभिं नेमिं प्रविशन्ति, अयं च त्रिणाभिर्भवति । सर्पकुण्डलिकावन्नाभित्रयम्, परं चत्वार एवारा एक-स्यां नाभौ प्रविशन्ति । अत एवाऽस्य करालत्वम् । ते च वर्षातपहिमागमा नाभिस्थानीयाः । किञ्च, अनन्तच्छदि च भवति । प्ररोहात्मा चाऽयं संवत्सरः, यतोऽस्य पत्राणि सन्ति, न तु प्राकृतचक्रवद् शुष्ककाष्ठजनितम्, अतो नाऽस्य कदाऽपि क्षयः। करालं चाऽस्य स्रोतः, अत एव जगदाच्छिद्य धावद्भ-वति । लोकमध्ये स्थितौ अवर्जनीयतयापि तस्याऽऽसुराच्छिद्येत् । तटच्छायाश्रयणेऽपि कदाचित्पातयेत्, परिवृत्तौ तद्गतानां वैकल्यसम्भवात् । तदपेक्षया तन्निकटगमने पातयेदेव । अपेक्षा च कथया चेदैहधर्मनि-वृत्तिः, तदैव निवर्तते । एवं द्वाभ्यां भक्तिमार्गनिष्कर्षो निरूपितः ॥ १८ ॥

तामसभावेन जगत्कर्तृत्वेनोक्त्वा तं च लीलाविग्रहं मत्वा, तेन च वरं प्रार्थयते—एक इति त्रिभि.—

**एकः स्वयं सन् जगतः सिसृक्षया द्वितीययात्मन्यधियोगमायया ।**
**सृजस्यदः पासि पुनर्ग्रसिष्यसे यथोर्णनाभिर्भगवान्स्वशक्तिभिः ॥ १९ ॥**

त्वमेक एव स्वयम् । यदा जगतः सिसृक्षा जाता, तदा तादृशोऽपि सन्, आत्मनि स्वाधिष्ठाने, अधिका योगमाया निर्मिता । तदा सा द्वितीया करणत्वेन प्राप्ता, तदा सर्वमेव जगददोऽव्यक्तरूपमपि सृजसि, पासि, पुनश्च ग्रसिष्यसे । असहाये करणमात्रापेक्षायां दृष्टान्तः—यथोर्णनाभिरिति । तथा करणे सामर्थ्यम्—भगवानिति । ऊर्णांशाः स्वशक्तयः सत्त्वादयः ॥ १९ ॥

सर्वकर्तृत्वात् पालकत्वाच्च स्त्र्यादिदानेन सृष्टिकारणं नाऽऽश्चर्यम्, तथापि भक्तिमार्गे तथा करणं तस्या-ऽप्याश्चर्यमित्याह—

**नैतद्वताऽधीश ! पदं तवेप्सितं यन्मायया नस्तनुषे भूतसूक्ष्मम् ।**
**अनुग्रहायाऽस्त्वपि ! यर्हि मायया लसत्तुलस्या तनुवा विलक्षितः ॥ २० ॥**

नैतदिति । एतद्विवाहादिलक्षणं पदम्, तवाभीप्सितं न भवति । बतेति खेदे । यतस्त्वमधीशः, अन्यथापि सर्वां सृष्टिं कर्तुं शक्तः । भक्तेभ्यश्च संसारदायकं भूतसूक्ष्ममहङ्कारं, तन्मात्रा वा, यन्नस्तनुषे विस्तारयसि, एतन्न तवेप्सितम् । सहजजगन्निर्माणे भक्तार्थं त्वया विषया न सृष्टा इत्यर्थः । नन्वेवं सत्य-न्यार्थं निष्पादिता विषयाः कथं प्रार्थ्यन्ते ? तत्राऽऽह—अनुग्रहायाऽस्त्वपि । अन्यार्थं कृता अप्यनुग्र-हेणाऽस्मभ्यं देयाः, अत एव तद्दानमनुग्रहाय भवतु । अयीति संबोधने स्नेहेन । अव्ययं चैतत । नन्वनु-ग्रहेणाऽपि कथमन्यथाकर्तुं शक्यते ? तत्राऽऽह— यर्हि मायया कृत्वा लसत्तुलस्या तनुवा भवान् वि-

प्रकाशः।

मते—इदमित्यादि । अवश्येति । सर्पकुण्डलिकाकारत्वादेवेत्यर्थः ।

शेषेण लक्षितः । त्वया न भक्तार्थं स्वार्थं वा किञ्चित्सृष्टम्, तत्र परार्थसृष्टैरेव सत्त्वकार्यैः स्वस्य तनुं संपाद्य, तुलस्याद्याभरणानि च गृहीत्वा, विष्णुरयमिति चेदात्मानं प्रकाशयसि, तदा भक्तमपि यथाभिलषितं विषय्युक्तं संपादयेत्यर्थः । तामसभावत्वेऽ×प्येवंविधैव सृष्टिः ॥ २० ॥

एवं स्वाभिलषितं ज्ञापयित्वा तद्दानार्थं नमस्यति—

**तं त्वानुभूत्योपरतक्रियार्थं स्वमायया ऽऽवर्तितलोकतन्त्रम् ।**
**नमाम्यभीक्ष्णं नमनीयपादसरोजमल्पीयसि कामवर्षम् ॥ २१ ॥**

तं त्वेति । सर्वप्रकारेणोक्तं त्वां नमामीति संबन्धः । भगवान् हि स्वतोऽनुभूयमानस्वानन्देनैव पूर्णः स्वार्थं कामपि क्रियां न करोति, अतोऽनुभूत्यैव उपरतक्रियार्थो भवति । क्रियायाश्चार्थद्वयम्–दुःखाभावः स्वसुखं चेति । जगत्कारणव्यापृतिरपि न तस्य स्वतः, किन्तु माययेत्याह–स्वमाययेति । बहुधा आवर्तितं लोकतन्त्रं लोकरचना येन; स्वाधीनया माययैव बहुधा सृष्टिः क्रियत इति । अत एतादृशमभीक्ष्णं नमामि । इदं च नमनं नाऽपूर्वमित्याह–नमनीयमेव पादसरोजं सर्वेषां यस्येति । प्रकृतोपयोगाय विशिनष्टि–अल्पीयसि कामवर्षमिति । अल्पीयस्यल्पार्थे, पुरुषे वा, यथेष्टं वर्षतीति । मया तु गार्हस्थ्यमात्रं प्रार्थ्यते, अलौकिकं च दास्यसीति भावः ॥ २१ ॥

अद्भुतकर्मा भगवान् प्रार्थिते सति किं कृतवानित्याकाङ्क्षायामाह—

## मैत्रेय उवाच ।

**इत्यव्यलीकं प्रणुतोऽब्जनाभस्तमाबभाषे वचसाऽमृतेन ।**
**सुपर्णपक्षोपरि रोचमानः प्रेमस्मितोद्वीक्षणविभ्रमद्भ्रूः ॥ २२ ॥**

इत्यव्यलीकमिति । यथाहृदयं कथनादव्यलीकत्वम् । स्वरूपनिरूपणमेतत् । भगवांस्तु प्रकर्षेण नुतः, तपोभक्त्यादिकं त्वग्रे फलिष्यति । इदं तु स्तोत्रं फलमेवेति ज्ञापितम् । अब्जनाभ इति जगत्कर्तृत्वादेव करणमभीष्टमेव । विषयदाने कदाचिन्मृत्युर्भवेदित्याशङ्क्य अमृतेन वचसेत्युक्तम् । तथात्वसिद्ध्यर्थं सुपर्णपक्षोपरि रोचमान एव बभाषे । पक्षपदेन कालपक्षपातोऽपि लक्षितः, येन परित्यागादिसाधनानि च कृतवान् । भगवता सह संवादेऽस्य मायापगतिर्मा भवत्विति स्मितपूर्वं दर्शनम्, संसारभावापत्तिव्यावृत्त्यर्थं प्रेम च । उद्वीक्षणमुत्कर्षाधायकम्, तदर्थं विभ्रमयुक्ता भ्रूर्यस्य । मोक्षे देहपरित्याग उत्कर्षाधायको भवति । एवं सर्वमेव भाव्यर्थं सूचयन् बभाष इत्यर्थः ॥ २२ ॥

स्वसिद्धान्तं कामनायाः पूरणं द्विविधं तथा । तत्र च त्वत्पितुश्चैव मदाज्ञा न्यास एव च । एवं कृते त्वहं तुष्टः पुत्रस्ते भविता शुभः ॥ १ ॥ द्वाभ्यां भगवच्छास्त्रसिद्धान्तमाह—

## श्रीभगवानुवाच ।

**विदित्वा तव चैत्यं मे पुरैव समयोजि तत् ।**

---

प्रकाशः।

× नैतदित्यत्र । एवंविधैवेति । परार्थसृष्टसत्त्वकार्यनिर्मितेत्यर्थः ।

---

१ सुसम् स ग २ क्वचिदयमेव पाठः ३ स्वस्वरूप···ग. ४ स्वर्गे क

**यदर्थमात्मनियमैस्त्वयैवाऽहं समर्चितः ॥ २३ ॥**

विदित्वेति । भक्तस्य हृदये कामस्तदैव स्याद्यदा पुरा । भगवान् पूरक कुर्यात्सिद्ध एव हि साधनम् ॥ १ ॥ अतो हि सर्वमार्गाणां भगवन्मार्ग उत्तमः । सफलान्येव सर्वाणि साधनान्यत्र सर्वदा ॥ २ ॥ तव चैत्त्यं चित्तभाव विदित्वा, त्वद्याचनात्पूर्वमेव, तन्मया समयोजि । किं त्वया योजितमित्याशङ्क्य भयाभावार्थमाह—यदर्थमिति । यत्कामनार्थमात्मनियमैस्तपस्यादिभि सह भक्त्या त्वयैवाऽहं समर्चितः । यदि मया तन्न कृतं स्यात् । तदाऽन्तर्यामिप्रेरणया अहमेव त्वया कथमर्चित. स्याम्, अतो मदर्चनायाः सफलत्वाय पूर्वं मया कृतम्, सफलैवोत्पद्यतामिति ॥ २३ ॥

नन्वर्चना पश्चात्कुतो न फलतीत्याशङ्क्याऽऽह—

**न वै जातु मृषैव स्यात्प्रजाध्यक्ष ! मदर्हणम् ।**
**भवद्विधेष्वतितरां मयि संगृभितात्मसु ॥ २४ ॥**

*न वा इति । मदर्चनं कदाचिदपि मृषा फलरहितं न स्यात्, कालभेदेनाऽपि मद्भजनस्य न फलाभावसंबन्धः । भगवच्छास्त्रे अदृष्टादेरभावात्, भगवतो व्यापारत्वाभावात्, तदानीं फलानि न भवेयु', भजनस्य निवृत्तत्वात् । सामग्री पूर्वसिद्धा कामितेति न समकालमपि फलोत्पत्तिः । सर्वेष्वेव पक्षेषु फलस्यैकांशो बाध्येत, यदि पूर्वं न क्रियेत । अतो मद्भजनस्य स्वभाव एव तादृश इति पूर्वमेव फलजननम् । किञ्च, अभक्तेषु मदर्हणमन्यथापि भवेत्, भक्तिविरोधात् । भवद्विधेषु तु अन्यथाभावशङ्का नास्त्येवेत्याह-भवद्विधेष्विति । अतितरां सर्वथा, न केनाप्यंशेनाऽन्यथाभावः । तमेव प्रकारमाह—मयि संगृभितात्मस्विति । मयि सम्यक् गृभितो गृहीत आत्मा येषाम्, तेषु ॥ २४ ॥

एवं सिद्धान्तकथनेन सामान्यतस्तस्य कामनां पूरयित्वा विशेषत पूरयति—प्रजापतेरिति चतुर्भि.—

**प्रजापतेः सुतः सम्राट् मनुर्विख्यातमङ्गलः ।**
**ब्रह्मावर्तं योऽधिवसन् शास्ति सप्तार्णवां महीम् ॥ २५ ॥**

श्वशुराधिक्यकथनं तत्समागम एव च । कन्यादानं ततः कन्यारुचिस्त्वार्थे च वर्ण्यते ॥ १ ॥ प्रथमं मनोरुत्कर्षमाह—प्रजापतेः ब्रह्मण. सुतः, अनेनोत्तमो वंशो निरूपितः । सम्राडिति राजा, सम्पत्तिरुक्ता । मनुरिति धर्मः । विख्यातमङ्गल इति कीर्तिः । विख्यातं मङ्गलं सदाचारो यस्य । देशस्य धर्मोवाह—ब्रह्मावर्ते देशे अभितो वसन् सप्तार्णवामेव पृथिवीं शास्ति । 'सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तद्देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ।' इति । इदानीं कुरुक्षेत्रमिति प्रसिद्धम् । एवं मनुः सर्वत उत्कृष्ट उक्तः ॥ २५ ॥

तस्याऽऽगमनमाह स्वयम्—

---

प्रकाशः ।

* न वै जात्वित्यत्र । कालभेदेनाऽपीति । जीवकृतं याच्ञा । साधनतानिर्वाहकपूर्वकालरूपेणापत्यर्थः । तथा च भगवद्भजने फलसाधनताप्रतीतिव्यवहारो व्यापकाद्याहनन्यायेनोपकारिकाविनिभावः । समकालमिति याच्ञासमकालमित्यर्थ' ।

---

१ घट गु ह. २ त्वचि ग ३ त्वर्पामति मास्ति. ■ प ह.

स चेह विप्र ! राजर्षिर्महिष्या शतरूपया ।
आयास्यति दिदृक्षुस्त्वां परश्वो धर्मकोविदः ॥ २६ ॥

स चेहेति । न हि भक्ता स्वयं याचन्ते । विप्रेति संबोधनमागते स्वागतकरणार्थम् । विप्रा हि पश्चिमबुद्धयः, असंमानने अभिमानो दोषो भवेत् तदभावार्थं संबोधनेनोपदेशः । राजर्षिरिति योग्यता । भार्याया अपि संमत्यर्थं तया सहाऽऽगमनम् । तस्याः प्रतिबन्धकत्वाभावाय विचक्षणत्वनिरूपणार्थं शतरूपयेत्युक्तम् । विवाहस्याऽज्ञातत्वात् दिदृक्षुरेव त्वामायास्यति । अय चाऽर्थो नाऽतिदूर इत्याह—परश्व इति । धर्मकोविद इति । 'अभिगम्य स्वयं कन्यामलङ्कृत्य यथाविधि । सद्वराय प्रयच्छेद्यः स ककुद इति स्मृतः' अतः कन्यादानधर्मं जानातीति ॥ २६ ॥

आगत्य कन्यां दास्यतीत्याह—

आत्मजामसितापाङ्गीं वयःशीलगुणान्विताम् ।
मृगयन्तीं पतिं दास्यत्यनुरूपाय ते प्रभो ! ॥ २७ ॥

आत्मजामिति । पिता हि कन्यादाने मुख्योऽधिकारी । असितापाङ्गीमिति स्वभावतो नेत्रप्रान्तकार्ष्ण्यं सर्वसल्लक्षणसूचकम् । वयस्तारुण्यम्, शीलं पातिव्रत्यम्, गुणाः स्त्रीलक्षणानि । विरक्ताया विवाहानौचित्यात् । पतिं मृगयन्तीमिति । त्वमपि तादृश इत्यनुरूपाय ते दास्यति । प्रभो इति संबोधनं स्वसामर्थ्यं तत्र दत्तवानिति ज्ञापनार्थम् । अतः स्त्रीणां यावानपेक्ष्यते भोगपदार्थः स सर्वोऽपि मया दत्त इति बोधितः ॥ २७ ॥

एतदज्ञानेऽपि सा त्वां भजिष्यतीत्याह—

समाहितं ते हृदयं यत्रेमान्परिवत्सरान् ।
सा त्वां ब्रह्मन्नृपवधूः काममाशु भजिष्यति ॥ २८ ॥

समाहितमिति । यस्यां देवहूत्यां ते हृदयं सम्यगाहितम् । इमान् परिवत्सरानिति दशसहस्रसङ्ख्याकान् । अत्यन्तसंयोगे द्वितीया । सा देवहूतिस्त्वां भजिष्यति । ऋषिर्हि राजकन्याया न रोचते, तथापि मदिच्छया भजिष्यति । ब्रह्मन्निति निरूपितार्थसंवादार्थम् । नृपवधूर्नृपकन्या । वधूरिव सुरक्षिता, पितृगृहे चाञ्चल्यसम्भवात् तन्निवृत्त्यर्थमुक्तम् । कामं यथासुखम् न त्वतिक्रमेण रतिः प्रीतये भवतीत्युभयोरुक्ता ॥ २८ ॥

या त आत्मभृतं वीर्यं नवधा प्रसविष्यति ।
वीर्ये त्वदीये ऋषय आधास्यत्यञ्जसाऽऽत्मनः ॥ २९ ॥

या त इति । ततस्त्वया सर्वभावेन सा मोक्तव्या । भिन्नभिन्नभावेन स्थापितान्यपि बीजानि स्वसामर्थ्यादेकधा एकभावापन्नमात्मानि धृतं नवधा प्रसविष्यति । ता नवापि कन्या एव भविष्यति । ततस्त्वदीये वीर्ये कन्यासु, मरीच्यादय ऋषयः, आत्मनः पुत्रान् आधास्यन्ति । अतस्तेभ्यो देया इति भावः ॥ २९ ॥

त्वया च ततः संन्यासो ग्राह्य इत्याह—

त्वं च सम्यगनुष्ठाय निदेशं म उशत्तम ! ।

मयि तीर्थीकृताशेषक्रियार्थो मां प्रपत्स्यसे ॥ ३० ॥

त्वं चेति । न तु यावज्जीवं श्रुत्यनुरोधेन गार्हस्थ्येनैव स्थातव्यमिति भावः । ममाज्ञा पूर्वोक्तैव । त्वं चेति । चकारस्त्वर्थे । सापि प्रपत्स्यत इति ज्ञापितम् । निदेशमाज्ञाम्, सम्यगुक्तप्रकारेणाऽनुष्ठाय मां प्रपत्स्यस इति संबन्धः । उशत्तमेति संबोधनं मत्प्रवेशयोग्यतार्थम् । ननु कर्मणां विद्यमानत्वात् कथं भगवति प्रवेशः ? तत्राऽऽह—मयीति । तीर्थीकृतास्तीर्थे समर्पिता अशेषाक्रियार्था येन, तादृशो मां प्रपत्स्यस इत्यर्थः ॥ ३० ॥

ततः पूर्वमभिज्ञापकं तव ज्ञानं भविष्यतीत्याह—

कृत्वा दयां च जीवेषु दत्त्वा चाऽभयमात्मवान् ।
मय्यात्मानं सह जगद्‌द्रक्ष्यस्यात्मनि चाऽपि माम् ॥ ३१ ॥

× कृत्वेति । सर्वसाक्षात्कारो हि तस्याभिज्ञापकम्, ब्रह्मविद एव भगवत्प्राप्तिः । ज्ञानस्य च निदर्शन 'यस्मिन् विदिते सर्वमिदं विदितम्' इति । तस्याऽपि निदर्शनमाह—जीवेषु दयां कृत्वा अभयं च दत्त्वेति । स्वयं च ब्रह्मभावमापन्न, अन्ये तु तद्रहिता दीना दयापात्रं भवन्ति । आत्मत्वे स्फुरिते तु अभयदानं च आत्मविदो हि तत् कृत्यम् । तदाह—आत्मवानिति । आत्मवत्त्वं नाम मूलचिद्रूपस्य स्वस्मिन्नाविर्भावः। इन्द्रियजयस्तत्र नोपयुज्यत एव, पूर्वमेव सिद्धत्वात् । तदा सर्वाधिष्ठानत्वेन मां पश्यतीत्याह—मय्यात्मान सह जगदिति । भगवति स्वात्मान जगच्च द्रक्ष्यसि । आत्मनि, चकारात् जगति च मां द्रक्ष्यसि । एतावता आधाराधेयभूतो भगवान् ज्ञातः, स्वाधारश्चेति पूर्णब्रह्मज्ञानं तस्योक्तम् ॥ ३१ ॥

एव तस्मै आज्ञामुक्त्वा तदङ्गीकारे स्वस्य प्रसादमाह—

सहाऽहं स्वांशकलया त्वद्वीर्येण महामुने ! ।
तव क्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहिताम् ॥ ३२ ॥

सहेति । स्वांशकलया सह । अंशा आनन्दरूपा., भगवतस्त एव स्वांशभूताः । जीवास्त्वंशाः, कला ज्ञानक्रियाशक्तयः । तत्रानन्दांशो ज्ञानकलासहित. । त्वद्वीर्येण सह, तव क्षेत्रे देवहूत्याम्, तत्त्वसंहितां साङ्ख्यसिद्धान्तप्रतिपादिकां प्रकर्षेण नेष्ये कथयिष्यामि । वीर्यक्षेत्रसंबन्ध एव, न तु जीववदुत्पत्तिरस्तीति । पुराणे वेदवन्मूलसंहिताश्चतस्र, साङ्ख्ययोगपशुपतिमतवैष्णवसिद्धान्तप्रतिपादकमन्त्ररूपाः । सर्वाण्येव पुराणानि तस्याऽपेक्षितषडङ्गभूतकालादिप्रतिपादकानि ब्राह्मणस्थानीयानि । तत्र मूलसंहिताः कालेन भ्रष्टा इति, तत्राऽऽद्यां प्रकाशयिष्यामीत्यर्थः । स्वस्यांशस्य वीर्यस्य चाऽभेदप्रतिपादनाय प्रथमत एव सहेत्युक्तम् । महामुने इति संबोधनं तथा स्वाधिकारज्ञापनाय ॥ ३२ ॥

एवं कामनां पूरयित्वा, स्वसन्निधाने जीवस्य कामना न सिद्ध्यतीति, भगवान् वरं दत्त्वा प्रस्थित इत्याह द्वाभ्याम्—

मैत्रेय उवाच ।

एवं तमनुभाष्याऽथ भगवान्प्रत्यगक्षजः ।

---

प्रकाशः

× कृत्वेत्यत्र । आत्मवानित्यस्य जितान्तःकरण इत्यर्थस्य बाधकमाहुः—इन्द्रियेत्यादि ।

जगाम बिन्दुसरसः सरस्वत्या परिश्रितात् ॥ ३३ ॥

एवमिति । तं कर्दममनुभाष्य । करिष्यति सर्वं स्वयमेव, अनुभाषणमात्रं तु क्रियते । अथ भिन्नप्रक्रमेण । पूर्वं दयापरीतः समागत इदानीं भक्तमुद्धृत्य पूर्णमनोरथ इव गतः । अतो भिन्नमक्रमः । तस्मिन् स्थापितं ब्रह्मभावं गृहीत्वा गत इति ज्ञापयितुं भगवानित्युक्तम् । पुनराविर्भावः कदा भविष्यतीत्याशङ्क्य तामेवाऽवस्थां कथयन्निव भगवन्तं विशिनष्टि—प्रत्यगक्षज इति । प्रत्यग्भूतेष्वक्षेष्वाविर्भवतीति । यदैवाऽयमन्तर्मुखो भविष्यति, तदैव भगवदाविर्भाव इत्यर्थः। तद्धि तीर्थं बिन्दुसर इति भगवतैव निर्मितम्, सरस्वती च ब्रह्मदेवत्या, तया च परिश्रितम् । भगवद्भावः सृष्टिश्च द्वयं तत्र सिद्धं भवतीति स्थानादेव तस्य द्वयं सेत्स्यतीति सरस्वतीपरिवेष्टिताद्बिन्दुसरसो जगामेत्युक्तम् ॥ ३३ ॥

अन्यचित्ते तदानीं देशोऽप्यनुपयुक्तो भविष्यतीति, हृदये भगवत्स्थापनार्थं च निरीक्षत एव तस्य सतो ययावित्याह—

निरीक्षतस्तस्य ययावशेषसिद्धेश्वराभिष्टुतसिद्धमार्गः ।
आकर्णयन्पत्त्ररथेन्द्रपक्षैरुच्चारितस्तोममुदीर्णसाम ॥ ३४ ॥

* निरीक्षत इति । अशेषसिद्धेश्वरैरभितः स्तुतः, सिद्धः स्वत एव सिद्धो मार्गो यस्य, वैकुण्ठमार्गो वा । सिद्धैर्गम्यत इति भगवतो गमनागमने च सिद्धानां संमते । अतो भगवति गते न तस्य काचिदप्रतिष्ठा, पुनरागमनसम्भवात् । सिद्धैः सह भगवतो व्यवहार एव तादृशः । सर्वसम्मतिरत्रेत्यशेषपदम् । येषामपि सिद्धिर्जाता, स्वयं च सिद्धिदातारः, तेषामपि भगवन्मार्गोऽभीष्टदः, ततोऽप्यधिकफलापेक्षित्वात् । ननु सिद्धेश्वरा भगवन्तं निरन्तरं स्तुवन्तीति तेषां स्तोत्राण्यश्रुत्वा कथं गत इत्याशङ्क्याऽऽह—पत्त्ररथस्य गरुडस्य, पक्षैः पृष्ठरूपैर्बृहद्रथन्तरादिभिरुच्चारितः स्तोमः स्तोत्रियसमुदायो यस्मिन् । उदीर्णं यत् साम, ऋगधिरूढगीतम् । त्रिवृदादयः स्तोमाश्चत्वारः, बृहदादयोऽपि । तत्र ऋचां प्रधानभूताः । पक्षैः उदीर्णं यत् साम तदाकर्णयन्निति संबन्धः । उच्चारितस्तोममिति विशेषणम् । अतो वेदैः साक्षाद्भगवानेव स्तूयते, तदेव च शृणोति । अन्ये तु मार्गमेव स्तुवन्तीति भावः ॥ ३४ ॥

एवं भगवत्कृतमुक्त्वा तथैवेदं जातमित्याह—

प्रकाशः ।

* निरीक्षत इत्यत्र । पृष्ठरूपैरिति । ‘अभित्वाशूरनो नुम इति, कयानश्चित्रेति, तं वोदस्मृतीषहमिति, तिरोभिर्वो(?)वदद्वसुम्’ इति सूक्तचतुष्टयानि, क्रमेण रथन्तरवामदेव्यानौधसकालेयसामभिर्माध्यन्दिनसवने गीयमानानि पृष्ठशब्दवाच्यानि तद्रूपैरित्यर्थः । पृष्ठशब्दनिरुक्तिश्च स्पर्शनात् पृष्ठानीतिरूपा द्रष्टव्या । स्तोत्रियसमुदाय इति । पृष्ठेषु सप्तदशःस्तोमो भवति, तस्य विष्टुतिश्चैवमाम्नायते । ‘पञ्चभ्यो हिं करोति स एकया तिसृभिः स एकया सप्तभ्यो हिं करोति स एकया स तिसृभिः स तिसृभिः’ इति हिं करोति गायतीत्यर्थः । अत्र प्रथमावृत्तौ प्रथमायास्त्रिरभ्यासो द्वितीयावृत्तौ मध्यमायास्तृतीयावृत्तौ मध्यमोत्तमयोरेवं कृते गाने सप्तदशस्तोमः । ईदृशो गीयमानमन्त्रसमुदाय इत्यर्थः । त्रिवृदादय इति । त्रिवृत्पञ्चदशसप्तदशैकविंशाश्चत्वारः । तल्लक्षणं विस्तरभयान्न लिख्यते । बृहदादय इति । सर्वे सामविशेषाः । तत्रेति । सामस्वित्यर्थः ।

१ भविष्यतीति ख. ङ. २ संमधिरूढं क. ङ. ३ तदेव शृणोति क. ख.

अथ संप्रस्थिते शुक्ले कर्दमो भगवानृषिः ।
आस्ते स्म बिन्दुसरसि तं कालं प्रतिपालयन् ॥ ३५ ॥

अथेति । अथाऽऽनन्तर्यवाचकः। यस्मिन्नेव क्षणे शुक्लनारायणः प्रस्थितः, तदैव मनुः स्वगृहान्निर्गतः। कर्दमोऽपि ऋषित्वात्तमर्थं जानन्, भगवत्त्वाच्च अदीनः सन्, तं कालं परिपालयन्नेव स्थितः। कदा दिनद्वयं यास्यतीति । दीनो हि तत्र प्रयत्नं कुर्यात् । कामापेक्षयापि भगवद्वाक्यं महदिति विश्वासो भगवद्भावापन्नस्यैव ॥ ३५ ॥

मनुस्तु सभार्यः समागत इत्याह—

मनुः स्यन्दनमास्थाय शातकौम्भपरिच्छदम् ।
आरोप्य स्वां दुहितरं सभार्यो व्यचरन्महीम् ॥ ३६ ॥

मनुरिति । शातकौम्भपरिच्छदमिति सौवर्णपरिकरयुक्तं स्यन्दनं विवाहं सूचयति । आरोप्य स्वां दुहितरमिति विवाहे कृतनिश्चयः । अन्तर्यामिप्रेरणया तत्तथैव भविष्यतीति विनिश्चित्य, स्वकन्याया मा ऽन्यः प्रष्टव्य इति दम्पत्योः प्राधान्यात्सभार्यः, देयत्वेन तां गृहीत्वा, तामज्ञापयन्, तस्याः पश्चात् कौतुकदर्शनं न भविष्यतीति महीं व्यचरत् । उत्तमस्थानानि सर्वाणि प्रदर्शितवानित्यर्थः ॥ ३६ ॥

एवं दिनद्वयमतीतम् । तृतीये दिवसे कुरुक्षेत्रात् बिन्दुसरसि समागत इत्याह—

तस्मिन्सुधन्वन्नहनि भगवान्यत्समादिशत् ।
उपायादाश्रमपदं मुनेः शान्तव्रतस्य तत् ॥ ३७ ॥

तस्मिन्निति । हे सुधन्वन्निति स्वपौरुषं ख्यापयन् स्वस्य जितेन्द्रियत्वं बोधयतीति विदुरमतीत्यर्थं संबोधनम् । भगवदाज्ञा नाऽन्यथा भवतीति तस्मिन्नेव दिने समागतः, यद्भगवान् समादिशत्, न तु काकतालीयन्यायेन, तदा समागतः । एतद्व्यावृत्त्यर्थमेव भगवदाज्ञाकीर्तनम् । आश्रमो यस्मिन् पदे देशे, तमुपायात् तस्य निकटे समागतः । ननु तपसा तप्यमाने तस्मिन् तत्तेजसा कथं निकटे गत इति तत्राऽऽह—शान्तव्रतस्येति । परिसमाप्तं तपोलक्षणं व्रतं यस्य । तत् प्रसिद्धम् । न ज्ञानार्थं प्रश्नापेक्षा ॥ ३७ ॥

भगवन्निरूपितकालः स एवेति निरूप्य, देशोऽपि भगवत्कृत इत्याह—

यस्मिन्भगवतो नेत्रान्न्यपतन्नश्रुबिन्दवः ।
कृपया संपरीतस्य प्रपन्नेऽर्पितया भृशम् ॥ ३८ ॥

यस्मिन्निति । बिन्दुसरोनिरुक्तिस्तत एव, बिन्दवः सरसि यस्मिन्निति । तेषां बिन्दूनामुत्पत्तिमाह—यस्मिन् सरसि भगवतो नेत्रादश्रुबिन्दवो न्यपतन् । बिन्दुपाते निमित्तम्—कृपया संपरीतस्येति । कृपायां निमित्तम्—प्रपन्नेऽर्पितयेति । शरणागतश्चेत् क्लिष्टः, तदा तत्र कृपा भवति । कृपया यो व्याप्रियते स्वस्थानात् प्रच्याव्यते । तदा नेत्रात् बिन्दवो भवन्ति । भगवान् स्वकृपां शरणागतेष्वेवाऽर्पितवान्, अतो न दीनमात्रे भगवतो दया, यतः प्रपन्नाय दत्तवान्, तदाहाऽर्पितयेति । भृशमिति सर्वभावेन ॥३८॥

एवं देशकालयोर्भगवन्निरूपितत्वमुक्त्वा भगवत्कृपाकार्यं तस्मिन् देशे वर्णयति कन्यायाः सुखस्थित्यर्थम्। तद्वै विन्दुसर इति पङ्क्तिः—

**तद्वै विन्दुसरो नाम सरस्वत्या परिश्रितम्।**
**पुण्यं शिवामृतजलं महर्षिगणसेवितम् ॥ ३९ ॥**

भगवद्गुणकृतत्वाय विन्दुसर इति नाम प्रसिद्धम्। सरस्वत्या परिश्रितमिति। तत्र धर्मसिद्धिः। परिप्लुतमिति पाठे सरस्वतीमध्ये एव कालीयह्रद इव तत्कुण्डम्। प्रथमतो जलं वर्णयति—पुण्यमदृष्टजनकम्। शिवमारोग्यकरम्। अमृतं स्वादु। प्रमाणमाह—महर्षिगणसेवितमिति। महर्षयो ये सर्वपदार्थयाथात्म्यद्रष्टारः तेषां सङ्घेन सेवितम्, अतो महाफलमेवैतज्जलम् ॥ ३९ ॥

जलप्रान्तभागं ऋषिगणसेवितत्वेनोक्त्वा, तस्याऽपि वेष्टनरूपं वनमनुवर्णयति—

**पुण्यद्रुमलताजालैः कूजत्पुण्यमृगद्विजैः।**
**सर्वर्तुफलपुष्पाढ्यं वनराजिश्रियान्वितम् ॥ ४० ॥**

पुण्येति। द्रुमा वृक्षाः, लताश्च स्वभावतोऽपि पुण्याः आम्रादयः द्राक्षादयश्च, पुण्यजनकाश्च। पुण्यास्तत्फलभक्षकाः कूजन्तो मृगा हरिणादयः, द्विजा मयूरादयश्च यत्र। तत्र तादृशानि द्रुमलतानां जालानि; तैः कृत्वा सर्वर्तुषु तत्स्थानम् फलैः, पुष्पैश्चाढ्यम्। वनपङ्क्तिश्च तत्र शोभमाना परितः। तदाह—वनराजिश्रियान्वितमिति ॥ ४० ॥

एवं धर्मजनकत्वं वनस्य निरूप्य रसालत्वं निरूपयति—

**मत्तद्विजगणैर्जुष्टं मत्तभ्रमरविभ्रमम्।**
**मत्तबर्हिनटाटोपमाह्वयन्मत्तकोकिलम् ॥ ४१ ॥**

मत्तेति। द्विजगणाः पक्षिगणाः। सर्वे एव तत्रत्यरसेन मत्ताः। अत एव, तल्लोभेन सेवन्त एव, अतस्तैर्जुष्टम्। मत्तानां भ्रमराणां, विभ्रमो विलासः, मधुररणनम्, गतिविशेषो वा यत्र। मत्ता ये बर्हिणस्त एव नटा नर्तकास्तेषामाटोपः संभ्रमो यस्मिन्। निश्चिन्तता अहिंसकत्वादेषां निरूपिता। आह्वयन्तो मत्ताः कोकिला यस्मिन् ॥ ४० ॥

एवं रसालतां निरूप्य पुष्पप्रधानान् वृक्षान् गणयति—

**कदम्बचम्पकाशोककरञ्जवकुलासनैः।**
**कुन्दमन्दारकुटजैश्चूतपोतैरलंकृतम् ॥ ४२ ॥**

कदम्बेति। आ(?)सनोऽपि वृक्षः पुष्पप्रधानः। चूतपोताः सूक्ष्माम्राः, तैरप्यलङ्कृतम् ॥ ४२ ॥

**कारण्डवैः प्लवैर्हंसैः कुररैर्जलकुक्कुटैः।**
**सारसैश्चक्रवाकैश्च चकोरैर्वल्गु कूजितम् ॥ ४३ ॥**

१ सुखस्थात्यर्थम्. क. सुखपीलर्थं. ध. सुखस्फीत्यर्थं. ट. २ वनमुपवर्णयति. ग. ३ एतन्नास्ति. ख. ग. ४ शोभायमाना. ख. ग.

कारण्डवैरिति । कारण्डवादयः पक्षिविशेषाः, तैर्वल्गु यथा तथा उपकूजितम् ॥ ४३ ॥

तथैव हरिणैः क्रोडैः श्वाविद्गवयकुञ्जरैः ।
गोपुच्छैर्हरिभिर्मर्कैर्नकुलैर्नाभिभिर्वृतम् ॥ ४४ ॥

तथैवेति । हरिणादयो मृगविशेषास्तैर्वृतम् । क्रोडः सूकरः । श्वावित् शल्लकः । गोपुच्छादयः मर्कटविशेषाः, हरयः सिंहाः, वानरा वा । नाभिभिः कस्तूरीमृगैः ॥ ४४ ॥

तादृशं वनं निःशङ्कं प्रविश्य तत्र विद्यमानं मुनिं दृष्टवानित्याह—

प्रविश्य तत्तीर्थवरमादिराजः सहानुगः ।
ददर्श मुनिमासीनं तस्मिन्हुतहुताशनम् ॥ ४५ ॥

प्रविश्येति । बिन्दुसरसो निकटे तस्य पर्णशाला; अत एव तीर्थवरं प्रविश्येत्युक्तम् । नदीमुत्तीर्य तदाश्रमे गत इति प्रविश्येति पदात् ज्ञायते । तीर्थश्रैष्ठ्यपरिज्ञानार्थमादिराज इत्युक्तम् । आदिराजो मनुः । सहानुगः ससेवकः, राजत्वपरिज्ञानार्थम् । दूरादेव ददर्श । हुतो हुताशनो येन । अनेन कर्मसमाप्तिः सूचिता ॥ ४५ ॥

कन्यादानयोग्यत्वाय वर्णयति सार्द्धाभ्याम्—

विद्योतमानं वपुषा तपस्युग्रयुजा चिरम् ।
नातिक्षामं भगवतः स्निग्धापाङ्गावलोकनात् ।
तद्व्याहृतामृतकलापीयूषश्रवणेन च ॥ ४६ ॥

विद्योतमानमिति । उग्रयुजा तपसि वपुषा विद्योतमानम् । उग्रो युक् योगो यस्य । तपसि तस्य महान् योगः, तपसः परमधर्मत्वात् चिरकालकृतेनापि तपसा वपुर्विद्योतमानमेव । अनेन वर्णोत्तमता निरूपिता । कृशत्वं परिहरति—नातिक्षाममिति । भगवतो यत् स्निग्धापाङ्गावलोकनं तेनाऽत्यन्तं न कृशः । 'दुरन्तसर्गो यदपाङ्गमोक्षः' इत्यादिवाक्यात् भगवत्कटाक्षः सर्वपदार्थजनको भवति । स हि देहपुष्टिमपि जनयेत् । दुरन्तत्वव्यावृत्त्यर्थं स्निग्धता निरूपिता । देहे स्थूलत्वापादका अवयवा भगवत्स्नेहसहितदृष्ट्या जनिता इति नोत्तरत्राऽन्यथाभावः । ते चावयवाः कियन्त एव भवन्तीति नातिक्षामता । साक्षाद्दृष्टिजनितत्वाय सर्वावयवेषु दृष्टिसंबन्धार्थं बहुवचनम् । तथाप्यासन्यो न तृप्यतीति कारणान्तरमप्याह—तद्व्याहृतेति । भगवतो यत् व्याहृतं वाक्यं, स एवामृतकलः चन्द्रः, तस्याऽऽसमन्ताद्यत्पीयूषम्, तस्य श्रवणेन च । भगवद्वाक्यं निरन्तरामृतोत्पत्तिरूपमिति वाक्यश्रवणेनापि पुष्टिप्रतिपादनार्थममृतकलत्वेन निरूपितम् । अतो नाऽत्र द्रविडमण्डकः । तत्रापि प्रयोजकं रूपं वक्तुं अमृतकलप्रयोगः । तस्य च श्रवणमात्रमिति नातिक्षामता । अन्यथा पुष्टिरेवोक्ता स्यात् । चकारादलौकिककृपया ॥ ४६ ॥

एवं दोषाभावमुक्त्वा गुणान् वर्णयति—

१ 'तैरपकूजितम्' ग. ङ. २ मर्को मर्कट, तद्विशेषा गोपुच्छा क. ३ एतादृशं ख. ग. ङ. ४ सहानुग क. घ. ङ.

**प्रांशुं पद्मपलाशाक्षं जटिलं चीरवाससम् ।**
**उपसंसृत्य मलिनं यथार्हणमसंस्कृतम् ॥ ४७ ॥**

प्रांशुमिति । प्रकृष्टा अंशवः पर्वाणि यस्य । आजानुबाहुत्वं यज्ञियत्वं च निरूपितम् । पद्मपलाशवत् अक्षिणी यस्येति । सौन्दर्यं प्रकृतोपयोगि । जटिलं चीरवाससमिति तप ऋषित्वज्ञापकं सत्त्वाय । उपसंसृत्य निकटे गत्वा ददर्शेति पूर्वेणैव संबन्धः । अथवा । उप निकटे संसृत्य संसारं प्राप्य मलिनम् । कामेन हि प्राणिनो मलिना भवन्ति । ' धूमेनाव्रियते वह्निः ' इति वाक्यात् । तत्र दृष्टान्तमाह सहजदोषत्वाभावाय, यथार्हणमसंस्कृतमिति । महारत्नमनिर्णिक्तं यथा स्वभावत उज्ज्वलमपि बहि संस्काराभावे न सुवर्णे योजयितुं शक्यते । तथाऽत्र प्रकृते विद्योतमानमिति विशेषणविरोधात् ऋषीणां तथात्वस्य बाधकत्वाभावात् द्वितीयः पक्षः ॥ ४० ॥

एवं दूराद्दृष्टं तं वर्णयित्वा, तस्य लौकिकधर्मं वक्तुमाह—

**अथोटजंप्रत्यायान्तं नृदेवं प्रणतं पुरः ।**
**सपर्यया पर्यगृह्णात्प्रतिनन्द्याऽनुरूपया ॥ ४८ ॥**

अथोटजमिति । पर्णशालां प्रत्यायान्तं राजानं पुरः पादसमीपे प्रणतम्, क्षत्रियस्य तथैव धर्म इति राजपूजार्थं पूर्वमेव संपादितया सपर्य्यया पर्यगृह्णात् । प्रतिनन्द्याऽऽशीर्भिः कुशलप्रश्नैर्वा तुल्यताज्ञानार्थं च । अनुरूपया महाराजयोग्ययाऽर्घ्यादिरूपया इत्यर्थः । परिग्रहो आत्मीयतया गृहे नयनम् ॥ ४८ ॥

एवं बहिस्तस्य पूजां विधाय, आधिनिराकरणार्थं सर्वसन्देहनिवृत्त्यर्थं च वाचा पूजां कृतवानित्याह—

**गृहीतार्हणमासीनं संयतं प्रीणयन्मुनिः ।**
**स्मरन्भगवदादेशमित्याह श्लक्ष्णया गिरा ॥ ४९ ॥**

गृहीतार्हणमिति । ऋषिदत्तां पूजां स्वीकृत्य स्थितं ज्ञात्वा अग्रिममपि स्वीकरिष्यतीति निश्चित्य सम्यक् यतं (१) सावधानं विनीतं, प्रीणयन्निति, प्रथमं स्तोत्रं कुर्वन् । मुनिरिति भाव्यर्थज्ञाता । तथापि निश्चयरूपेण कथं तदुक्तं करिष्यामीति प्रतिजानीते । स चेदन्यदेव किञ्चिद्वदेदित्याशङ्कयाऽऽह—स्मरन् भगवदादेशमिति । ' आत्मजामसितापाङ्गीम् ' इति भगवद्वाक्यात् कन्यां दातुमेवाऽयमागतः । लज्जया च स्वयं न वक्ष्यति । अतः स्वयमेव श्लक्ष्णया मनोहरया वाचा अग्रिमवाक्यरूपमिदमाह । वाक्यान्येवाऽऽह सप्तभिः । यद्यपि त्वया किमर्थमागतमिति न प्रष्टव्य प्रसङ्गादप्यागमनसम्भवात् । प्रसङ्गश्च वक्तव्यः षड्भिः, तथापि विरोधाकारेण मत्समीपमागत इति लक्षित इति तथात्वे यद्भवानाज्ञापयिष्यति तत् करिष्यामीति समुदायार्थः ॥ ४९ ॥

प्रसङ्गमाह—

**कर्दम उवाच ।**

**नूनं चङ्क्रमणं देव ! सतां संरक्षणाय ते ।**
**वधाय चाऽसतां यत्त्वं हरेः शक्तिर्हि पालिनी ॥ ५० ॥**

---

१ ऋद्वपादिरूपया इत्यपि पाठ ।

नूनमिति । हे देव ! तव चङ्क्रमणं सतां संरक्षणाय, असतां वधाय च । देवेति संबोधनमुपपादयति—यत् यस्मात्त्वं हरेः पालिनी शक्तिः 'स्थानेऽथ धर्मे' इति वाक्यात् सतामसतां चाऽनुग्रहनिग्रहौ स्वतन्त्रौ धर्मत्वात् । नत्वेकार्थमन्यत् ॥ ५० ॥

ननु लोकपालकैरेव पालने सिद्धे किं मन्वादिभिरित्याशङ्क्य, परिपालिकां शक्तिं निरूपयन् तथाकर्तारं भगवन्तं नमस्यति—

**योऽर्केन्द्वग्नीन्द्रवायूनां यमधर्मप्रचेतसाम् ।**
**रूपाणि स्थान आधत्ते तस्मै शुक्लाय ते नमः ॥ ५१ ॥**

योऽर्केति । यः अर्कादीनां लोकपालानां रूपाणि, स्थाने तत्तत्कार्यावसरे, मनुशरीरे वा आधत्ते, तस्मै ते शुक्लाय नम इति । अयं शुक्लनारायण एव मनौ तिष्ठतीति; तस्मै नमः । सर्वाणि रूपाणि अन्यस्तत्र स्थापयितुं न शक्नोति । न वा भगवत्स्थितिव्यतिरेकेण तत्र सर्वदेवतासान्निध्यं भवति; अतो मनुमधिष्ठाय पालनार्थं भगवानेव स्थितः ॥ ५१ ॥

विपरीते बाधकमाह चतुर्भिः । साधनाभ्यां फलाभ्यां च स्वतश्च सेनया च परिपालनं द्वयेन, सेतुधर्मरक्षा अधर्मनिवृत्तिश्च फले । प्रथमतः स्वतो रक्षाभावं बाधकत्वेनाऽऽह—[1]

**न यदा रथमास्थाय जैत्रं मणिगणार्पितम् ।**
**विस्फूर्जच्चण्डकोदण्डो रथेन त्रासयन्नघान् ॥ ५२ ॥**

न यदेति । यदा त्वं जैत्रं रथमास्थाय न पर्यटसि तदा सेतवो नश्येरन्निति संबन्धः । रथस्य मुख्यासवत्वं । जैत्रमिति जयशीलम् । अनेन न काऽपि परामवशङ्का । मणिगणार्पितमिति महाराजयोग्यत्वात् दृष्ट्वैव भयमसतां ज्ञापितम् । विशेषेण स्फूर्जच्चण्डः कोदण्डो यस्य । अनेन धनुष्टङ्कारेण दूरादेव भयं जनयतीति ज्ञापितम् । पापानां पापिष्ठानां न मारणं शस्त्रेण किन्तु, रथेनैव त्रासं जनयन् ॥५२॥

दुष्टानां बहुत्वात् तदर्थं साधनान्तरमप्याह—

**स्वसैन्यचरणक्षुण्णं वेपयन्मण्डलं भुवः ।**
**विकर्षन्बृहतीं सेनां पर्यटस्यंशुमानिव ॥ ५३ ॥**

स्वसैन्येति । स्वसैन्यानां चतुर्विधानां चरणैः क्षुण्णं भुवो मण्डलं वेपयन् महतीं सेना दृष्ट्वैव महान्तो दोषा निवर्तन्त इति भूकम्पननिमित्तान्तरत्वज्ञानाभावाय बृहतीं सेनां विकर्षन् तत्र तत्र नयन् । पूर्वोक्तधर्मं धर्माधर्मनिवृत्तिसाधकत्वेन निरूपयन् दृष्टान्तमाह—अंशुमानिवेति । स हि सहस्रकिरणः तमो दूरीकरोति । अग्निहोत्रादिधर्मं च जनयति । न हि सूर्ये अनुदिते कश्चिद्धर्मादिः सेत्स्यति ॥ ५३ ॥

**तदैव सेतवः सर्वे वर्णाश्रमनिबन्धनाः ।**
**भगवद्रचिता राजन्भिद्येरन्वत दस्युभिः ॥ ५४ ॥**

तदैवेति । तदैव सर्वे सेतवो मर्यादा वर्णकृता आश्रमकृताश्च भगवद्रचिताः । औदासीन्याभावाय राजन्निति, तस्य स्वधर्म इति ज्ञापितम् । दस्युभिरेव भिद्येरन् । चौरभये वर्णाश्रमवतां भीतत्वान्न मर्यादा सिद्ध्यतीति ॥ ५४ ॥

१ दुष्टानपि. ग ङ. दुष्टता. २ भूकम्पनं. ग. भूकम्पने. ख. घ. ङ.

अधर्मश्च समेधेत लोलुपैर्व्यङ्कुशैर्नृभिः ।
शयाने त्वयि लोकोऽयं दस्युग्रस्तो विनङ्क्ष्यति ॥ ५५ ॥

*अधर्म इति । न केवलं धर्महानिरेव किन्तु, अधर्मश्च समेधेत वृद्धिं गच्छेत् । चकारात् पाखण्डधर्मा अपि । तत्र हेतुः–लोलुपैरिति । धर्मे निरन्तरं क्रियमाणे इन्द्रियाणि व्यापृतानि भवन्ति, तदा लौकिके भोगे नाऽऽसक्तानि भवेयुः । अन्यथा त्वासक्तानि योग्यैः कामैरपूर्णानि अयोग्ये लोलुपानि भवन्ति । तथापि राजभयं चेत्, न कार्यनिष्पत्तिः स्यात् । अन्यथा त्वतिप्रसङ्गः स्यादेवेत्याह–व्यङ्कुशैरिति । विगतोऽङ्कुशो नियामको येषाम् । नृभिरिति । त एव हि भगवदाज्ञोल्लङ्घका वेदेनोक्ता अशनप्रसङ्गे । राज्ञो द्वयव्यवस्था; विषयभोगः, परिपालनं च । आद्यैवं शयनम् । यदि चोभयोः समता, यदि वा कालविभेदेन व्यवस्था, यदि-वा भोगप्राधान्यम्, सर्वप्रकारेणापि त्वयि शयाने सति अयं लोको दस्युभिरेव ग्रस्तः, आच्छिन्नदारद्रविणः स्वरूपादपि विनङ्क्ष्यति । अतस्त्वया पर्यटनमवश्यं कर्तव्यम् । अतः प्रसङ्गादागमनम् । अत्रापि चोरादि-निराकरणार्थं च ॥ ५५ ॥

अथाऽपि पृच्छे त्वां वीर ! यदर्थं त्वमिहागतः ।
तद्वयं निर्व्यलीकेन प्रतिपद्यामहे हृदा ॥ ५६ ॥

अथाऽपीति । हे वीर ! स्वधर्मनिष्ठ ! यदर्थं त्वमिहागतः; तत्प्रयोजनं पृच्छामि । मां प्रार्थयितुमिति यदि; तदा तद्वाक्यं निर्व्यलीकेन हृदा प्रतिपद्यामहे स्वीकुर्महे । ननु त्वत्प्रार्थनां न करिष्यामीति सन्देहः । एवं वचनं हि भगवत्प्रसादादेव महाराजादप्युत्कर्षवचनात् ।

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां तृतीयस्कन्धे एकविंशाध्यायविवरणम् ।

---

प्रकाशः ।

* अधर्म इत्यत्र । अशनप्रसङ्ग इति । तैत्तिरीयब्राह्मणप्रथमाष्टके । 'तस्मात्रिरह्नः पशवः प्रेरित(?)' इत्या-दिना सर्वेषां अशनकालकथने तस्माद्विरह्नो मनुष्येभ्य उपह्रियत इत्युक्ते तत्प्रसङ्गे ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे एकविंशाध्यायविवरणं सम्पूर्णम् ।

---

१ अदेव. क. ख. ग. ङ.

# द्वाविंशाध्यायविवरणम् ।

+ द्वाविंशे कर्दमस्याऽर्थः सिद्धस्त्रीधनरूपवान् ।
अयमैवैन्द्रियगणः कृष्णार्थं सुविनिश्चितः ॥ १ ॥
अर्थस्य सत्त्वं चाख्यातुं मनोधर्मस्य वर्णनम् ।
भगवत्कृपयैवार्थ उत्तमो नान्यथेति च ॥ २ ॥
आकूतिः पुत्रिकात्वेन दत्ता येन निजेच्छया ।
स एवात्यन्तदैन्येन देवहूतिं प्रयच्छति ॥ ३ ॥
कृतकृत्यं च मनुते ततो धर्मं च सेवते ।
यन्नश्रवणभेदेन द्विरूपमपि सर्वदा ॥ ४ ॥

पूर्वाध्यायान्ते त्वद्वाक्यं कर्तव्यमिति ऋषिमुखात् श्रुत्वा सन्तुष्टो विज्ञापयितुमादौ तं स्तौतीत्याह—

## मैत्रेय उवाच ।

एवमाविष्कृताशेषगुणकर्मोदयो मुनिम् ।
सव्रीड इव तं सम्राडुपारतमुवाच ह ॥ १ ॥

एवमिति । आविष्कृताः प्रकटीकृताः सर्वे गुणाः कर्माणि, अभ्युदयश्च यस्य, गुणकर्मणां वाऽभ्युदयो यस्य । गुणोदयः सर्वदेवाधिष्ठानात् । धर्माधिपालनात् कर्माभ्युदयः । अन्यथा कथनं व्यावर्तयति—मुनिमिति । सव्रीड इव स्वकीर्तिश्रवणात्, प्रत्याख्यानशङ्कया वा कन्यार्थं प्रार्थनायामपि । सम्राडिति । महत सर्वमेव वचनं शोभाकरम् । उपारतं तूष्णींभूतम् । उप समीपे कन्यायामासमन्ताद्रतं वा । हेत्वाश्चर्ये । न हि महाराजः कंचिदेवं प्रार्थयति ॥ १ ॥

प्रथमं ब्राह्मणक्षत्रिययोर्विवाहो नोचित इत्याशङ्क्य, भगवत्कृत एव तयोः संबन्ध इत्यन्योऽन्योपकारेण तुल्यतामापादयति—ब्रह्माऽसृजदिति त्रिभिः—

## मनुरुवाच ।

ब्रह्माऽसृजत्स्वमुखतो युष्मानात्मपरीप्सया ।
छन्दोमयस्तपोविद्यायोगयुक्तानलम्पटान् ॥ २ ॥

---

गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृतः प्रकाशः

+ अथ द्वाविंशाध्यायं विवरिषवोऽवसर एवाऽत्र सङ्गतिरित्यर्थनिरूपणमुखेन तामाहुः—द्वाविंश इत्यादि । ऐन्द्रियगण इति । इन्द्रियग्राह्या मात्रा ऐन्द्रियास्तासां गणः । तथा च संवादद्वयेऽपि स्वस्वविचारेणाऽवसरः सङ्गतिरित्यर्थः । अवान्तरार्थसङ्गतिमाहुः—अर्थस्येत्यादि । सत्त्वमिति । साधुत्वम् । 'सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते' इति गीतावाक्यात् । शेषं स्फुटम् ।

प्रथमतो ब्रह्मा वेदमयः स्वमुखतो युष्मान् ब्राह्मणानसृजत् । आत्मपरीप्सया आत्मनः स्वस्य वेदस्य पर्याप्तुमिच्छया, रक्षार्थं वा । ब्राह्मणव्यतिरेकेण वेदानां यज्ञानां वा पर्याप्तिः पूर्तिर्न भवति । छन्दोमय इति सर्ववेदात्मकः । ते ब्राह्मणास्त्रिविधाः; तपोयुक्ताः, योगयुक्ताः, भगवदुपासनायुक्ता वा । त्रितययुक्ता मुख्याः । अलम्पटानिति विषयलाम्पट्यं ब्राह्मणानां दोषः, तपस्यादयो गुणाः ॥ २ ॥

एवं गुणदोषाभावयुक्तान् ब्राह्मणान्निरूप्य, क्षत्रियान्निरूपयति—

**तत्त्राणायाऽसृजच्चाऽस्मान् दोःसहस्रात्सहस्रपात् ।**
**हृदयं तस्य हि ब्रह्म क्षत्रमङ्गं प्रचक्षते ॥ ३ ॥**

तत्त्राणायेति । ब्राह्मणानां त्राणायाऽस्मान् क्षत्रियान् दोःसहस्रात् । वरेणाऽन्यस्यापि सहस्रबाहवो भवन्तीति तद्व्यावृत्त्यर्थमाह—सहस्रपादिति । वेदो हि ब्राह्मणेषु स्थितो भगवता रक्ष्यते । रक्षणे च बाहवः करणम् । तत्र जाताः क्षत्रियाः। शब्दप्राधान्येन ब्राह्मणानां सृष्टिः, अर्थप्राधान्येन क्षत्रियाणामिति योनिभेदोऽपि विवाहार्थः सूचितः । उभयोरन्योऽन्योपयोगमाह—हृदयं तस्य हि ब्रह्मेति । तस्य भगवतः, ब्रह्म ब्राह्मणाभिमानिनी देवता, हृदयमन्तःकरणम्, आत्मा मध्यमिति यावत् । क्षत्रं क्षत्रियाभिमानिनी देवता, अङ्गमवयवाः । प्रचक्षत इति प्रमाणम् । यथाऽङ्गव्यतिरेकेणात्माऽवसीदति । एवमात्मव्यतिरेकेणाप्यङ्गान्यवसीदन्ति ॥ ३ ॥

**अतो ह्यन्योन्यमात्मानं ब्रह्म क्षत्रं च रक्षतः ।**
**रक्षति स्माऽव्ययो देवः स यः सदसदात्मकः ॥ ४ ॥**

अत इति । अतोऽन्योन्यं ब्रह्म च क्षत्रं च रक्षतः, तथा सत्यात्मानमेव रक्षतः । हि युक्तोऽयमर्थः । यो हि आत्मार्थं अन्यान् पालयति; स हि आत्मानमेव पालयति । एवमन्योन्यपालनमुक्त्वा उभयोः साकाङ्क्षत्वेन पालकत्वमाशङ्क्य स्वतन्त्रेण भगवता पाल्यमानाः अन्योन्यं पालयन्तीति वक्तुमाह—रक्षति स्मेति । स हि देवः स्वतन्त्रः सर्वानेव पालयति । पालने हेतुः—सदसदात्मक इति । सर्वात्मकोऽपि निर्विकार इत्याह—अव्यय इति । स्मेति प्रमाणम् । एवं च भगवता कृत्वा यथाऽन्योन्यरक्षा तथा कामकन्यकाभ्यामप्युभयो रक्षा कर्तव्या । तव कामोऽस्माभिः पूरणीयः कन्यादानेनास्मत्कामोऽपि त्वया पूरणीयो विवाहेनेति भावः ॥ ४ ॥

स कामो विवाहात्मक एवेति वक्तुमन्यानि फलान्येव वचनादेव सिद्धानीति तानि गणयति—तव संदर्शनादेवेति त्रिभिः—

**तव संदर्शनादेव छिन्ना मे सर्वसंशयाः ।**
**यस्त्वयं भगवान् प्रीत्या धर्ममाह रिरक्षिषोः ॥ ५ ॥**

ब्राह्मणानां स्थाने राजादयो धर्मनिर्णयार्थमप्यागच्छन्ति; तदस्माकं प्रथमत एव जातम् । यतस्तव संदर्शनादेव सर्वे संशयाः संछिन्नाः । एवमेव तपः कार्यम्, भगवत्सेवा च । तथा सत्येवं प्रसन्ने भगवति सर्व एव पुरुषार्थः सेत्स्यति, नाऽन्यथेति । पूर्वं ये संदेहाः स्थिताः सर्वार्थेषु, ते सर्वे त्वद्दर्शनेनैव जातेन निश्चयेन छिन्ना इत्यर्थः । को धर्मो राज्ञामित्यपि संदेहो गत इत्याह—यस्त्वयमिति । यद्यस्मादृश-

नानन्तरं प्रीत्या रिरक्षिषोः पालकस्य, पालनेच्छोर्वा; भगवानेव धर्ममाह । अतः क्षत्रियाणां धर्मः प्रजापालनं परमो धर्म इति । अतो वाक्यादेव धर्मसंदेहो गतः ॥ ५ ॥

महापुरुषाणां दर्शनमेव स्वतन्त्रफलमिति चेत्; तदपि वचनव्यतिरेकेणैव जातमित्याह—

**दिष्ट्या मे भगवान् दृष्टो दुर्दर्शो योऽकृतात्मनाम् ।**
**दिष्ट्या पादरजः स्पृष्टं शीर्ष्णा मे भवतः शिवम् ॥ ६ ॥**

दिष्ट्येति । भगवान् भवान् अकृतात्मनां दुर्दर्शोऽपि मे मया दिष्ट्या दृष्टः । यैः संघातात्पृथगात्मा न कृतः, भगवदर्थं वाऽन्तःकरणं न कृतम्; तेऽकृतात्मानः । आत्मयोग्यदेहार्थं वा यैर्भूतानि न संस्कृतानि तादृशस्य तव दर्शने परलोकोपयोगि सर्वमेव कार्यं सिद्धमिति परलोकसंदेहोऽपि गतः । पापक्षयार्थं प्रायश्चित्तमिति किमपि न प्रष्टव्यमित्याह—दिष्ट्येति । ते पादरज एव शिवं कल्याणरूपं मे मया शीर्ष्णा स्पृष्टं मच्छिरसा वा । 'पुनन्तु मां ब्राह्मणपादपांसवः' इति सर्वप्रायश्चित्तापेक्षया इदमेव वरम् । किञ्च । न केवलं पापनिवर्त्तकं किन्तु कल्याणकरमपीति शिवमित्युक्तम् । शिरसा चेत्स्पृष्टमज्ञानामपि पापं गच्छत्येव, प्रधानत्वात् । दैवगत्या जातमिति दिष्ट्या ॥ ६ ॥

+ ब्राह्मणो हि क्षत्रियमनुशास्ति । यथाऽऽचार्योऽन्तेवासिनं 'सत्यं वद' इत्यादिभिः । तदप्यवचनादेव जातमित्याह—

**दिष्ट्या त्वयाऽनुशिष्टोऽहं कृतश्चानुग्रहो महान् ।**
**अपावृतैः कर्णरन्ध्रैर्जुष्टा दिष्ट्योशतीर्गिरः ॥ ७ ॥**

दिष्ट्येति । वचनव्यतिरेकेण प्रजापालनं कर्तव्यमिति धर्मोऽप्युपदिष्टः । 'तद्द्वयं निर्व्यलीकेन' इति वाक्यात् अनुग्रहश्च कृतः । महतां मुखात् भगवद्गुणाः श्रोतव्या इत्यप्यस्माकं जातमित्याह—अपावृतैरिति । योऽर्केन्द्रमीन्द्रेति । एते हि भगवतः सर्वपालका गुणाः; तत्प्रतिपादका एव कमनीया गिरः ताः पुनः शब्दान्तरावरणरहितैः कर्णरन्ध्रैः अकस्माद्भाग्येनैव जुष्टाः सेविताः ॥ ७ ॥

एवं सद्दर्शनेन यावद्भाव्यं तावत्सर्वं जातम् । अतः परमन्यत् विज्ञापयामीत्याह—

**स भवान् दुहितृस्नेहपरिक्लिष्टात्मनो मम ।**
**श्रोतुमर्हसि दीनस्य श्रावितं कृपया मुने ॥ ८ ॥**

स भवानिति । सामान्यत इयं प्रार्थना । स महान् भवान् । 'कन्यापितृत्वं दुःखाय' इति न्यायेन दुहितृस्नेहेन परितः क्लिष्ट आत्मा यस्य । न केवलं दुहितृमात्रं बाधकं किन्तु स्नेह इति तयोरुक्तम् । ममेति दीनतायामयोग्यता, अतः कृपा । मुन इति मद्कार्यपरिज्ञानाय संबोधनम् । श्रावितं विज्ञापितम्, नारदादिद्वारा भगवता वा पूर्वं श्रावितम्, श्रवणार्थमुक्तं वा ॥ ८ ॥

एवं श्रोतव्यमित्युक्त्वा तद्वाक्यमाह—

---

प्रकाशः

+ दिष्ट्येत्यत्र । अवचनादिति । प्रश्नं विनैवेत्यर्थः ।

---

१ भ० अं० ५. क. ग. घ. ङ. २ दुर्दर्शोऽ०। क. ङ.

प्रियव्रतोत्तानपदोः स्वसेयं दुहिता मम ।
अन्विच्छति पतिं युक्तं वयःशीलगुणादिभिः ॥ ९ ॥

प्रियव्रतेति । यस्यास्तु न भवेद्भ्राता न विज्ञायेत वै पिता । नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया ॥१॥ भ्रातुरभावे विवाहो न भवतीति प्रियव्रतोत्तानपदोः स्वसेत्युक्तम् । उभयोश्च कीर्तनं ' नैकः पुत्रः पुत्रो भवति ' इति वाक्यात् । पिता प्रसिद्ध इति वक्तुं दुहिता ममेत्युक्तम् । अकामायाः कामनमयुक्तमित्यन्विच्छति पतिमिति । दोषाभावाय युक्तमिति । कामार्थं योगो मास्त्विति वक्तुं वयःशीलगुणादिभिरित्युक्तम् । वयः कामार्थम्, शीलं धर्मार्थम्, गुणा अर्थार्थाः । आदिशब्देन ज्ञानादयो मोक्षार्थाः ॥ ९ ॥

एवं चतुर्विधपुरुषार्थसिद्ध्यर्थं स्त्रियाः सर्वं पुरुषाधीनमिति तादृशं पतिं वाञ्छति । तादृशः कश्चिदन्यः[1] तया मनसा स्वीकृतः स्यात्, तथापि निषिद्धेति तन्निवृत्तिं वदन् त्वदग्रहणे नाऽस्त्येवास्याः पतिरित्यभिप्रायेणाऽऽह—

यदा तु भवतः शीलश्रुतरूपवयोगुणान् ।
अशृणोन्नारदादेषा त्वय्यासीत्कृतनिश्चया ॥ १० ॥

यदा त्विति । सर्वान् वरान् स्वयोग्यान् श्रोतुं प्रवृत्ता यदा तु भवतः शीलादिकं श्रुतवती ततः प्रभृति त्वय्येव कृतनिश्चया आसीत् । शीलमाचारः, श्रुतं विद्याविजनितज्ञानम्, रूपं सौन्दर्यम्, वयः तारुण्यम्, गुणा औदार्यादयः । एतान् यदा अशृणोत् । नारदो हि देवकार्यकर्ता प्रसङ्गमुत्पाद्य वदति । त्वय्येव कृतो निश्चयः ममायमेव पतिरिति ॥ १० ॥

एवमपि सति पित्रधीना कन्येति । पित्रा देया इति मया दीयमानां गृहाणेत्याह—

तत्प्रतीच्छ द्विजाग्र्येमां श्रद्धयोपाहृतां मया ।
सर्वात्मनानुरूपां ते गृहमेधेषु कर्मसु ॥ ११ ॥

तत्प्रतीच्छेति । द्विजाग्र्येति ब्राह्मणानां पित्रादिदत्तायां[2] एव विवाहो मुख्यः, न तु गान्धर्वादिरिति सूचितम् । इमामिति कालान्तरविवाहं व्यावर्तयति । रूपप्रदर्शनेन प्रलोभयति च ' श्रद्धया दत्तमनभिप्रेतमपि गृह्णीयात् ' इति ग्रहणार्थमाह—श्रद्धयोपाहृतामिति । सर्वात्मनानुरूपामिति भगवता त्वदर्थमेव निर्मितेति ज्ञापितम्, नतु साधारणी । न केवलं कामार्थमनुरूपा । किन्तु, गृहमेधेषु कर्मसु । गृहेषु मेधा बुद्धिर्येः, यैश्च कर्मभिर्गार्हस्थ्यं सिध्यतीत्यर्थः ॥ ११ ॥

एवं कन्याविषयकं सर्वमुपपाद्य वरविषयकमुपपादयति—उद्यतस्येति त्रिभिः—

उद्यतस्य हि कामस्य प्रतिवादो न शस्यते ।
अपि निर्मुक्तसङ्गस्य कामरक्तस्य किं पुनः ॥ १२ ॥

* बहिर्गतो हि विषयः कामे सत्येव गृह्यते । उभयोर्योगसिद्धौ हि विश्लेषोऽशस्य एव च ॥१॥ उभयोः

---

प्रकाशः ।

* उद्यतस्येत्यत्र । कारिकायाम् । उभयोरिति । कामकाम्ययोः ।

---

1 तादृशश्चेदन्यः. ख-ग. ङ. 2 दत्त एव. क. ङ.

कामकाम्ययोरेकपदेन निरूपणमैक्यबोधाय । उद्यतस्य कार्योन्मुखस्य प्रतिवादो निराकरणं न शक्यते कर्तुम् । न शक्यत इत्यर्थात् । स एव वा शक्तिविषयो न भवति । उद्यतस्य स्वतः प्राप्तस्य कामस्य काम्याविषयस्य वा प्रतिवादो नास्ति । सङ्गत्यागेन कामः काम्यं वा निराकर्तुं शक्यत इत्याशङ्क्याह—अपि निर्मुक्तसङ्गस्येति । कामेन रक्तस्य व्याप्टतस्य प्रतिवादो दूरापास्त इति किं वक्तव्यमित्यर्थः ॥ १२ ॥

कामे उद्यतानङ्गीकारे बाधकमाह—

**य उद्यतमनादृत्य कीनाशमभियाचते ।**
**क्षीयते तद्यशः स्फीतं मानश्चाऽवज्ञया हतः ॥ १३ ॥**

* य उद्यतमिति । उद्यत स्वतः प्राप्तमनङ्गीकृत्य; अनुद्यतं योऽभियाचते तस्य स्फीतमपि यशः क्षीयते मानश्चाऽवज्ञया हतो भवति । अनुद्यतमिति वक्तव्ये कीनाशं कृपणमिति वचनम् ; महतोऽप्यनुद्यतत्व सूचनार्थम् । कृपणगत एव विषयः सर्वेषामप्राप्यो भवति । कृपणो हि विषयमप्यदत्त्वा कीर्तिं च ख्यापयति स्वोत्कर्षार्थम् । अतस्तद्यशः क्षीयते । स्फीतमपीति कृपणजनितार्कीर्तेः पुष्टत्वात् । एवं बहिरपवादमु क्त्वाऽऽन्तरमप्युपचारमाह—मानश्चेति । 'मानो हि महतां धनम्' इति । अङ्गीकृतग्लानौ माननाशोऽ सद्यः । हत इति पुनः प्ररोहाभावाय ॥ १३ ॥

एवं काम्यनिराकरणे बाधकमुक्त्वा तस्मिन् कामनां साधयति—

**अहं त्वाऽश्रृणवं विद्वन् ! विवाहार्थं समुद्यतम् ।**
**अतस्त्वमुपकुर्वाणः प्रत्तां प्रतिगृहाण मे ॥ १४ ॥**

अहमिति । त्वां विवाहार्थं समुद्यतमिति अहमेव साक्षादश्रृणवम् । विद्वन्निति संबोधनमनुचितनिराकरणाय । विवाहं कृत्वैव कामः पूरणीय इति । अतो विवाहेच्छुर्ब्रह्मचारी उपकुर्वाणो भवति । स एव पित्रादिभ्य उपकरोतीति सावधिब्रह्मचारी उपकुर्वाणः । प्रत्तां दत्तां प्रकर्षेण भार्यात्वेन गृहाण । मे मयेति १४

भगवद्गुणा एवाऽत्राङ्गीकारे हेतुरिति पङ्क्तिरङ्गीकारमाह—

## कर्दम उवाच ।

**बाढमुद्वोढुकामोऽहमप्रत्ता च तवाऽऽत्मजा ।**
**आवयोरनुरूपोऽसावाद्यो वैवाहिको विधिः ॥ १५ ॥**

– बाढमिति । इयं हि भगवद्दासी भगशब्दनिरूपिता । ऐश्वर्यादिप्रसिद्ध्यर्थमस्या वर्णनमु ध्यते ॥ १ ॥ अनङ्गीकरणे त्वस्याः स्वतः कामेन बाधनात् । तुल्यत्वं चाभिलपितमत आद्यो नि·

---

प्रकाशः ।

* य उद्यतमित्यत्र । महतोऽपीत्यादि । रूढवयसोऽपि कर्दमस्याऽनुद्यतत्वसूचनार्थम् । तथा चेदा· नीं मदनादेरेऽन्यो न तवानादर इत्यर्थः ।

– बाढमित्यत्र । कारिकासु । पितुरग्रे पुत्रीसौन्दर्यवर्णनं लोकविरुद्धम् । आक्षेपनिरूपणं च वै· ष्णवत्वविरुद्धमिति शङ्कायां तस्या दूषणत्वाभावाय—इयमित्यादि पङ्क्तिः भगेत्यादि । भगशब्दवाच्यैकदेश· श्रीरेव निरूपिता । अत इति शेषः । आद्य इति । ऐश्वर्यरूप एकदेशः । आक्षेपादिकथनस्य प्रयोजनान्त·

१ इदयं . ग २ अत्र्यर्थि . क.

रूपितः ॥ २ ॥ धर्मो वीर्यं द्वितीयेन विघ्यादरणवर्णनात् । यशो हि वर्ण्यते तस्या विश्वावसुनिरूपणात् ॥ ३ ॥ कान्त्याधिक्यस्य कथनाल्लक्ष्म्याश्चैव निराकृतेः । सोमसंबन्ध एवोक्तो गन्धर्वस्तु ततः स्फुटः॥४॥ लक्ष्मीवद्वर्णनं तस्याः श्रियमिच्छेद्धुताशनात् । इति वाक्याच्च तस्यापि संबन्धो विनिरूपितः ॥ ५ ॥ ज्ञानवैराग्ययोर्वाक्ये स्पष्ट एव निरूपिते । अतोऽस्या वर्णनं तत्र न निषिद्धमिति स्थितिः ॥ ६ ॥ वाढमिति वचनं विवाहे प्रसिद्धम् । 'वाढं वृणीध्वम्' इति वचनात् । अव्ययमेतत् । यथासुखमित्यर्थे, सत्यार्थे वा । अहं तु वोढुकाम एव । तव चाऽऽत्मजा कन्या न कस्मैचिद्दत्ता । दत्तायास्तु विवाहोऽत्र लौकिकः परिकीर्तितः । अप्रत्ताया विवाहो हि ब्राह्म एव निरूपितः॥१॥ उद्वोढुकाम इति वचनात् ममापि पूर्वं न विवाहः । अत आवयोरप्ययमाद्यो वैवाहिको विधिः विवाहसंबन्धी अपूर्वजनकः प्रकारः । 'दत्तामपि हरेत् कन्यां श्रेयांश्चेद्वर आव्रजेत् । नष्टे मृते प्रव्रजिते क्लीबे च पतिते सति । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते'॥१॥ इति वाक्यात् । आपदि विवाहः प्राजापत्यश्च सन्तत्यर्थं निरूपितः सोऽत्र निराक्रियते विधिर्भूयादिति ॥ १९ ॥

केवलमदृष्टजनकः शोभाकरो न भवतीति शोभाऽपि यथासुखं भवत्वित्याह—

**कामः स भूयान्नरदेव तेऽस्याः पुत्र्याः समाम्नायविधौ प्रतीतः ।**
**क एव ते तनयां नाद्रियेत स्वयैव कान्त्या क्षिपतीमिव श्रियम् ॥ १६ ॥**

काम इति । स एव विधिः कामो भूयात् कामितप्रकारेण भवत्वित्यर्थः। तत्र हेतुः—नरदेवेति । राज्ञां हि न ब्राह्मणानामिव विवाहः शोभारहितः परं स न सर्वात्मना लौकिकः कर्तव्यः, किन्तु समाम्नायविधौ प्रतीतः कर्तव्यः । समाम्नायो नामाभ्यासः । यथा पूर्वं सर्वैः कृतः सादृश्यविधौ प्रतीतः । समाम्नायो वेद इति केचित् । ननु तदा कन्याया महत्त्वप्रतीतेः मात्सर्यादग्रहणं स्यादित्याशङ्क्याऽऽह—क एवेति । कस्ते तनयां नाद्रियेत । एवेत्यनादरे । तत्र हेतुः—स्वया असाधारण्या कान्त्यैव श्रियमिव लक्ष्मीं क्षिपतीम् । अस्यापि भगवच्छक्तित्वात् तथा कथनं न दोषाय । लक्ष्मीं क्षिपतीमिवेति भक्तिरूपताऽप्यस्याः सूचिता॥१६॥

तस्याः कीर्तिमाह—

**यां हर्म्यपृष्ठे क्वणदङ्घ्रिशोभां विक्रीडतीं कन्दुकविह्वलाक्षीम् ।**
**विश्वावसुर्न्यपतत्स्वाद्विमानाद्विलोक्य संमोहविमूढचेताः ॥ १७ ॥**

यां हर्म्यपृष्ठ इति । विश्वावसुर्गन्धर्वो यां देवहूतिं हर्म्यपृष्ठे क्रीडन्तीं कन्दुकेन विह्वले अक्षिणी यस्याः । अप्सरसां सान्निध्येऽपि शोभया गृहीतचित्तः उपरि गच्छन् विमानात् तस्याः पुरतः पतितं इति नारदादिवाक्यैर्ज्ञायते। हर्म्यपृष्ठेन व्यवधानम्। क्वणदङ्घ्रिशोभामिति उद्दीपनादयो निरूपिताः। कन्दुकविह्वलाक्षीमिति चाञ्चल्यम्, मुग्धभावश्च निरूपितः। सम्यक् मोहेन विमूढं चेतो यस्य। गन्धर्वत्वान्न दोषः १७

तस्याः श्रीत्वं वर्णयति—

**तां प्रार्थयन्तीं ललनाललामामसेवितश्रीचरणैरदृष्टाम् ।**
**वत्सां मनोरुच्चपदः स्वसारं को नाऽभिमन्येत बुधोऽभियाताम् ॥ १८ ॥**

---

प्रकाशः ।

रमाहुः—लक्ष्म्या इत्यादि तथा च भगिनीत्वनिश्चयार्थं तथा कथनमित्यर्थः । शेषं स्फुटम् । वाक्ये इति । वाक्यद्वयम् । अत इति । एतैर्लक्षणैर्भगवद्दासीत्वात् । तत्रेति । अङ्गीकारावसरे ।

तां प्रार्थयन्तीमिति। प्रथमतः प्रार्थयन्तीं स्वयमेव चाऽभियातां बुधः सन् को वा नाभिमन्येत। प्रार्थयन्ती सर्वथा ग्राह्या, या काचित्। तत्रापि 'स्त्रीरत्नं दुष्कुलादपि' इति न्यायेनाऽपि सा ग्राह्येत्याह—ललनाललामामिति। ललना स्त्री, तासां मध्ये ललामा श्रेष्ठा। भगवत्प्रसादरूपत्वाच्च सर्वथा ग्राह्येत्याह—न सेवितौ श्रीयुक्तौ भगवच्चरणौ यैः, तैरदृष्टाम्। ते तां द्रष्टुमपि न शक्नुवन्ति, अत इयं भगवत्प्रसादरूपा। मनुर्धर्मरूपः। स चेत्फलं दोग्धि, तदेयं वत्सा प्रिया कन्येत्यर्थः। उच्चपदः स्वसारमिति। भ्रातृमती, प्रसिद्धकन्या च। को वा सर्वशास्त्रार्थवेत्ता न मन्येत। एतादृशी स्त्री ब्रह्मविद्याया अप्यधिकेति। आभिमुख्येन यातेत्येतादृश्याः परित्यागे दोषश्रवणात्॥ १८॥

परमेको दोषोऽस्ति, तं चेत् स्वीकुर्याचदा भजिष्य इत्याह—

**अतो भजिष्ये समयेन साध्वीं यावत्तेजो बिभृयादात्मनो मे।**
**अतो धर्मान्पारमहंस्यमुख्यान् शुक्लप्रोक्तान् बहु मन्येऽविहिंस्रान्॥ १९॥**

अतो भजिष्य इति। यस्मादेषा सर्वोत्कृष्टा, अतो भजिष्ये। परं समयेन, कालनियमेन। ननु प्रथमत एव किमित्येवं निर्बन्धः क्रियते यदेव वैराग्यम्, तदेव परं त्यक्तव्या। तत्राऽऽह—साध्वीमिति। एषा हि पतिव्रता। 'मृते म्रियेत या नारी सा स्त्री ज्ञेया पतिव्रता' इति मरणपर्यन्तं तस्या धर्मरक्षार्थं संग्राह्या स्यात्, अन्यथा शरणागताया धर्मो नश्येत्। अतः पूर्वमेव पणबन्धे परिग्रहसमये तथा तथाव्रतं न गृहीतं स्यात्। समयमाह—यावत्तेजो बिभृयादात्मनो म इति। मे तेजो बीजात्मकम्, ब्रह्मत्वात्। तावत्तैव तस्याः कृतार्थत्वायाऽऽह—आत्मन इति। अहमात्मा तस्या अपि आत्मतेजश्चेद्धृतं तदैव पातिव्रत्यं सिद्धम्, पतिः स्वस्मिन्नेव स्थित इति। तदनन्तरं पारमहंस्यधर्मानेव भजिष्य इत्याह—अत इति। पारमहंस्ये आश्रमे मुख्यान्। प्रमाणमाह— शुक्लप्रोक्तानिति। शुक्लनारायणेन प्रोक्तान् तानेव बहु मन्ये। तेषां धर्माणां प्रमेयतोऽप्युत्कर्षमाह अविहिंस्रानिति। गार्हस्थ्ये यज्ञादयो हिंस्राः॥ १९॥

ननु 'यावज्जीवमग्निहोत्रं जुहुयात्' इति श्रुतेः, । 'अत एव ब्रह्मचर्यादेव प्रव्रजेत्' इति स्मृतेश्च गार्हस्थ्यानन्तरं न प्रव्राज इति चेत्तत्राऽऽह—

**यतोऽभवद्विश्वमिदं विचित्रं संस्थास्यते यत्र च वाऽवतिष्ठते।**
**प्रजापतीनां पतिरेष मह्यं परं प्रमाणं भगवाननन्तः॥ २०॥**

यतोऽभवदिति। अस्मिन्नर्थे एष भगवानेव प्रमाणम्। सर्वथाऽऽदरणीयो यः स प्रमाणमिहोच्यते। तत्संबन्धात्कृतिस्तस्य प्रमाणं वाक्यमेव च॥ १॥ वेदानां प्रामाण्यं भगवद्वाक्यत्वात्। स ह्यनन्तः, अनन्तमूर्तिः, देशाद्यपरिच्छिन्नश्च। स हि तत्तदधिकारानुसारेण बहुधा शास्त्रार्थमाह। भक्तेभ्यश्च पृथक् पृथगाह। अतो यन्मां प्रत्याह विशेषाकारेण, तदेव प्रमाणम्; विशेषो बलवानिति। वेदात्स्वतन्त्रादपि भगवान् महानिति वक्तुं जगत्कर्तृत्वमाह—यतो भगवतः सकाशादिदं विश्वमभवदुत्पन्नम्। विचित्रमित्यलौकिककर्तृत्वं तस्य बोधितम्। यत इति कारणमाविष्कृतम्। चिन्तामण्यादेः सकाशादुत्पादितानां घटादीनां न समवायादि किञ्चिदपि कारणमन्यदृश्यते। तथा यावदपेक्षितकारणानि भगवानेव, नान्यदित्यव्ययनिर्देशः। यत्रैव संस्थास्यते लीनं भवति, यत्र च वाऽवतिष्ठते स्थितं भवति।

१ नानुमन्येत. प.

*एककारणत्वं गुणानां तदभिमानिनश्च सम्भवतीति त्रितयकीर्तनम्। नियामकत्वं चाऽऽह—प्रजापतीनां पतिरिति। तत्राप्येषः,इदानीमपि निकटे भासते। अनेनोल्लङ्घनमपि न शक्यमित्युक्तम्। अत एव वेदाद्यपेक्षयापि परं प्रमाणम्। भगवानित्यविकृतं ब्रह्मेति। अनन्त इति प्रामाण्ये हेतुः, अन्यस्यानादरणीयत्वात् ॥२०॥

एतावदुक्त्वा, चेदङ्गीकरिष्यन्ति, तदा विवाहं कारयिष्यामीति निश्चित्य तूष्णीं स्थित इत्याह—

## मैत्रेय उवाच ।

स उग्रधन्वन्नियदेवाऽऽबभाषे आसीच्च तूष्णीमरविन्दनाभम् ।
धियोपगुह्य स्मितशोभितेन मुखेन चेतो लुलुभे देवहूत्याः ॥ २१ ॥

स इति। उग्रधन्वन्निति संबोधनमक्षोभाय। स्त्रिया भावितायाः अपि क्षोभयितृत्वात्। इयदेव एतावदेवाऽऽबभाषे। एतत्साधकमपि वक्तव्यं पक्षान्तरे वाऽन्यद्वक्तव्यमिति न तस्य हृदयमित्याह—आसीच्च तूष्णीमिति। पाक्षिकदोषस्य विद्यमानत्वात् तत्परिहारार्थमरविन्दनाभं धियोपगुह्येत्युक्तम्। स हि कमलनाभः, जगदेव भिन्नतया कर्तुं शक्तः, किमेतावन्मात्रे अशक्यमिति। तावतैव भगवता कश्चन उपायः कृत इत्याह—धिया उपगूहनेव। स्मितेन शोभितं यन्मुखम्, तेन देवहूत्याश्चेतो लुलुभे ॥ २१ ॥

न हि मायामोहितः वस्तुनि लुब्धो वा भाविगुणदोषान् पश्यति, अतो मनोः संदिग्धमपि मनः, भार्याया हृदयं समीचीनो दुहितुः पतिरिति, दुहितुश्च चित्तं ज्ञात्वा, निःसन्दिग्धं जातमिति तस्मै कन्यां दत्तवानित्याह—

सोऽनुज्ञात्वा व्यवसितं महिष्या दुहितुःस्फुटम् ।
तस्मै गुणगणाढ्याय ददौ तुल्यां प्रहर्षितः ॥ २२ ॥

सोऽनुज्ञात्वेति। व्यवसायो निश्चयः, स्फुटमिति वचनादिभिः। अत एव तस्मै ददौ। स्वस्याऽनिवारणे हेतुः—गुणगणाढ्यायेति। बाधकं च साधकं ज्ञातवानित्याह—तुल्यामिति। इयमपि मुक्ता भविष्यतीत्यर्थः। भगवताऽन्यथा तुल्या नोत्पादिता स्यात्। अत एव प्रहर्षितः ॥ २२ ॥

सङ्कल्प्याऽयं दत्तवान्, उत्सवं तु शतरूपा कृतवतीत्याह—

शतरूपा महाराज्ञी पारिबर्हान्महाधनान् ।
दम्पत्योः पर्यदात्प्रीत्या भूषावासःपरिच्छदान् ॥ २३ ॥

शतरूपेति। सामर्थ्यम्—महाराज्ञीति। पारिबर्हान् विवाहसमये दानयोग्यान्। महाधनानमूल्यान्। न केवलं दुहितुः, किन्तु दम्पत्योः। न संकल्पेन, नापि दयया, किन्तु प्रीत्या। भूषा अलङ्काराः कुण्डलादयः। वासांसि नानाविधानि। परिच्छदा उपकरणानि ॥ २३ ॥

कन्यां दत्वा गृहं गन्तुर्मनोः कृत्यमाह—

प्रत्तां दुहितरं सम्राट् सदृक्षाय गतव्यथः ।
उपगुह्य च बाहुभ्यामौत्कण्ठ्योन्मथिताशयः ॥ २४ ॥

---

प्रकाशः ।

* यत इत्यत्र। एककारणत्वमिति। उत्पत्त्याद्यन्यतमं प्रति कारणत्वम्।

---

१ धियोपगृहमिति पाठः।

प्रत्तामिति। दत्तापि दुःखदा कन्या विसदृशाय; तदभावान्निश्चितो जात इत्याह—सदृशाय गतव्यथ इति। दत्त्वेति वक्तव्ये सिद्धत्वात्तदनुवादमकृत्वा, उपगूहने ईप्सितत्वात् प्रत्तामिति द्वितीयैवोक्ता। शीघ्रगमने हेतुः—सम्राडिति। चकाराद्वाक्यान्यपि तदानीन्तनानि योग्यानि सूचितानि। उपगृह्येति पाठे समीपे ग्रहणमात्रम्। उभयथापि शिरस एव ग्रहणम्। अतिस्नेहो द्विवचनेन ज्ञापितः। प्रेम्णा च विह्वलो जात इत्याह—औत्कण्ठ्येति। उन्मथितोऽत्यन्तं क्षुभित आशयो यस्य ॥ २४ ॥

गन्तुमप्यशक्तो जात इत्याह—

अशक्नुवंस्तद्विरहं मुञ्चन्बाष्पकलां मुहुः।
आसिञ्चन्नम्ब वत्सेति नेत्रोदैर्दुहितुः शिखाम् ॥ २५ ॥
आमन्त्र्य तं मुनिवरमनुज्ञातः सहानुगः।
प्रतस्थे रथमारुह्य सभार्यः स्वपुरं नृपः ॥ २६ ॥

अशक्नुवन्निति। सोढुमित्यर्थात्। स्वस्मिन् संबद्ध एव हि विरहः शक्योऽशक्यो वा भवति। अत एव बाष्पकलां मुञ्चन्। अन्तस्तापेन हि मुखतो बाष्पनिर्गमनम्। बाष्पगतः शोभायमानत्वात् कलात्वम्। मुहुरिति प्रतिस्मरणं विरहाधिक्यं द्योतयति। नेत्रे च जलं बहु निर्गतमित्याह—आसिञ्चन्निति। तस्या अपि रोदने अम्ब वत्सेति संबोधनम्। मारोदीरित्यादि वक्तुमशक्तो नेत्रजैर्जलैर्दुहितुः शिखामासिञ्चन्। मुनिवरं चाऽऽमन्त्र्य तेनैवाऽनुज्ञातः सहानुगः सभार्यश्च रथमारुह्य स्वपुरं प्रतस्थ इति श्लोकत्रयसंबन्धः। मुनिवरत्वादेव न विशेषतः समर्पणम्। स्वपुरं प्रति। नृप इति रक्षार्थं गमनमावश्यकं निरूपितम्॥२५॥२६॥

दुहितुः सहवासो नास्तीत्यपि शङ्कां निवारयति—

उभयोर्ऋषिकुल्यायाः सरस्वत्याः सुरोधसोः।
ऋषीणामुपशान्तानां पश्यन्नाश्रमसंपदः ॥ २७ ॥

उभयोरिति। ऋषिकुल्योग्यायाः सरस्वत्या उभयो रोधसोः स्थितानामुपशान्तानामृषीणां पथि आश्रमसंपदः पश्यन् इति पूर्वेणैव संबन्धः। उभयो रोधसोरिति परस्परदर्शनार्थम्। ऋषिकुल्यो-[1]ग्यत्वात् सरस्वत्याः प्रार्थनयाऽपि जामातुः स्वनिकटे गमनं निवारितम्। स्वप्रयर्थे च सोपपुज्यत इति सरस्वत्या इति। उत्तमरोधस्त्वं सुव्यवहार्यत्वात्। कलहाभावायोपशान्तानामिति। संपद इति समृद्धिर्निरूपिता ॥ २७ ॥

एवमितो गमनमुक्त्वा तस्य स्वनगरे प्रवेशे संभ्रममाह—

तमायान्तमभिप्रेत्य ब्रह्मावर्तात्प्रजापतिम्।
गीतसंस्तुतिवादित्रैः प्रत्युदीयुः प्रहर्षिताः ॥ २८ ॥

तमायान्तमिति। ब्रह्मावर्तादिति। सरस्वतीतीरं सर्वमेव ब्रह्मावर्तत्वेनोच्यते। ब्रह्मावर्तानिति पाठः सुगमः। प्रजापतिं मनुम्। योगोऽत्र। प्रजाः पतिमिति पाठः। प्रहर्षिताः प्रजा गीतादिभिः प्रत्युदीयुराभिमुख्येन गताः ॥ २८ ॥

1 योग्यत्वे. क. योग्ये. ख.

बिन्दुसरः परित्यज्य स्थलान्तरे मनुः कथं गतः? किमिति तत्रैव राजधानीं न कृतवानित्याशङ्क्य, मनुस्थितापि नगरी बिन्दुसरस्तुल्येति वक्तुं तामनुवर्णयति—बर्हिष्मतीति त्रिभिः—

**बर्हिष्मती नाम पुरी सर्वसंपत्समन्विता ।**
**न्यपतन् यत्र रोमाणि यज्ञस्याङ्गं विधुन्वतः ॥ २९ ॥**

यथेदं बिन्दुसरः, तथा सा बर्हिष्मती नाम । ननु तुल्यत्वेऽपि अत्रैव कथं नाऽवस्थानम्? तत्राऽऽह—पुरीति । पुर्यामेव हि राजानो वसन्ति, न तु स्थानमात्रे । किञ्च, एषा सर्वसंपत्समन्विता । प्राणिनो हि पुरुषार्थचतुष्टयम्, तदपि बहुविधम् । सर्वप्रकाराणां सर्वा संपदस्यामस्त्यतो राज्ञः सर्वोपकारित्वादत्र स्थितिर्युक्ता । बर्हिष्मतीत्वं साधयति, न्यपतन्निति । बर्हिर्षि वर्तन्ते यस्यामिति सा पुरी बर्हिष्मती । बर्हिश्च वैदिकं यज्ञावयवोत्पन्नम्, मन्त्रादिना कुशकाशादिषु तत्त्वमारोप्यते; यथा पितरो ब्राह्मणेषु । तद्धि देवानामासनम्, सर्वत्र, तत्रैव हि देवाः । यत्र पुनस्तत् स्वाभाविकम्, तत्राऽऽवाहनापेक्षाऽपि नाऽस्ति । तच्च बर्हिस्तस्यामेव पुर्यामुत्पन्नमिति निरूपयितुं कथामाह—यज्ञवराहस्य अङ्गं विधुन्वतो यत्र रोमाणि न्यपतन् । स हि यज्ञात्मा, रोमाणि च बर्हिः ॥ २९ ॥

**कुशाः काशास्त एवाऽऽसन् शश्वद्धरितवर्चसः ।**
**ऋषयो यैः पराभाव्य यज्ञघ्नान् यज्ञमीजिरे ॥ ३० ॥**

त एव कुशकाशा अभवन् । तेषां यज्ञियत्वपरिज्ञानार्थमलौकिकं रूपमाह—शश्वद्धरितवर्चस इति । सर्वेष्वेव कालेषु कुशा उत्पद्यन्ते, हरितवर्णाश्च भवन्ति, नत्वन्ये व्रीहियवादयः । अतस्त एवाऽऽसन् । रोमाणि कुशकाशा एवाऽभवन्नित्यर्थः । ननु यज्ञियाः पश्वादयो बहव एव पदार्थाः, ते च सर्वत्रैव यथायथमुत्पद्यन्त इति कथं बर्हिष एवाऽऽभिनयम्? कथं वा तेन बर्हिष्मत्या माहात्म्यमिति? तत्राऽऽह—ऋषयो यैरिति । यैः कुशकाशैः, यज्ञघ्नान् राक्षसान्, पराभाव्य यज्ञमीजिरे । कुशानां यज्ञप्रतिपक्षनाशकत्वं शाखान्तरेषु चिन्त्यम् ॥ ३० ॥

एवं बर्हिष्मतीत्वमुपपाद्य, विशेषतस्तत्र स्थितौ प्रयोजनमाह—

**कुशकाशमयं बर्हिरास्तीर्य भगवान् मनुः ।**
**अयजद्यज्ञपुरुषं लब्ध्वा स्थानं यतो भुवः ॥ ३१ ॥**

कुशकाशमयमिति । आश्ववालः काशः, स हि प्रस्तरो भवति पश्वादिष्व्यातिथ्यादिषु च । कुशकाशप्रकृतिकं बर्हिरास्तीर्य, स्वयं दीक्षितो भगवद्रूपो भूत्वा, मनुर्यज्ञपुरुषमयजत्। यतो भुवः स्थानं प्राप्तवान्। अधिकारित्वाविशेषेऽपि इन्द्रादयः स्वर्गाधिकारिणः, मनुस्तु भूमेः । सा च देवयजनरूपा । देवयजनं प्राप्याऽवश्यं यज्ञाः कर्तव्या इति लब्ध्वाऽयजदिति । लाभस्य यज्ञमात्रोपयोगित्वाय क्त्वा प्रत्ययः । यतो वा यज्ञात् । यज्ञवराहेणैव सा दत्ता, अतो यज्ञार्थमेव मया प्राप्तेत्ययजत् ॥ ३१ ॥

एवं बर्हिष्मत्यां स्थितौ प्रयोजनमुक्त्वा तां प्रविष्ट इत्याह—

**बर्हिष्मतीं नाम विभुर्यां निर्विश्य समावसत् ।**

१ प्राप्तेत्ययजत्. ख. २ समाविशत्. छ.

**तस्यां प्रविष्टो भवनं तापत्रयविनाशनम् ॥ ३२ ॥**
**सभार्यः सप्रजः कामान् बुभुजेऽन्याविरोधतः ।**
**संगीयमानसत्कीर्तिः सस्त्रीभिः सुरगायकैः**
**प्रत्यूषेष्वनुबद्धेन हृदा शृण्वन् हरेः कथाम् ॥ ॥ ३३ ॥**

बर्हिष्मतीमिति । तादृशस्थाने स्थितिसामर्थ्याय विभुरिति। अत एवोत्तमाधारे शत्रूणा बाधाभावादेक-त्रैव सर्वदा स्थित इत्याह—यां निर्विश्य समावसदिति । बर्हिष्मती प्रसिद्धा भुव स्थान च्छेति पूर्वेणैव सबन्ध । यामित्यादि भिन्नम् । सम्यगावसत् । किञ्च, न केवल पुर्यव सर्वोत्तमा, किन्तु तस्या भवनमपि सर्वोत्तममित्याह । तस्यां प्रविष्ट इति तस्या विद्यमान भवन प्रविष्ट । तापत्रयविनाशनमित्यु त्कर्ष , स्थानस्य भक्तिजनकत्वात् ॥ ३२ ॥

तापत्रयाभावे हि बाह्याभ्यन्तरबाधाभावाद्यथाशास्त्र पुरुषार्था साधयितु शक्या । तदाह—सभार्यः सप्रजः कामान् विषयान् धर्माद्यविरोधेन बुभुज इति। बाधकत्वादेव भार्यापुत्रास्त्यज्यन्ते पुरुषार्थविरोधे। तथात्वे नियत ज्ञापकमाह—सगीयमान इति। सुरगायकैर्गन्धर्वादिभि स्त्रीसहितै संगीयमाना सत्कीर्ति र्यस्य । देवास्त्वसत्य न गायन्ति, नाऽपि धर्मादिविरुद्धा कीर्ति गायन्ति शृण्वन्ति वा । अस्या कीर्ते पु रुषार्थचतुष्टयरूपत्व प्रतिपादयति । सम्यक्त्वं मोक्षपर्यवसानात, औदार्याज्ज्ञानम्, सादिति धर्म , कीर्ति काम । अत कामजनकत्वात्स्त्रीभि सह गानम् । सुरा हि धर्मफला , गायका कामार्थप्रधाना , विशि ष्टा मोक्षोपयोगिनश्चेति । पूर्वोक्तस्य सर्वस्य साधकमाह—प्रत्यूषेष्विति प्रातःकालेषु । अनुबद्धेन हृदा हरेः कथां शृण्वन् बुभुज इति पूर्वेणैव संबन्ध ॥ ३३ ॥

प्रेम्णा भगवत्कथाया. श्रवणस्य सर्वपुरुषार्थसाधकत्वेन मध्ये निदर्शनमाह—

**निष्णातं योगमायासु मुनिं स्वायंभुवं मनुम् ।**
**यद्भ्रंशयितुं भोगा न शेकुर्भगवत्परम् ॥ ३४ ॥**
**अयातयामास्तस्यासन् यामाः स्वान्तरयापनाः ।**
**शृण्वतो ध्यायतो विष्णोः कुर्वतो ब्रुवतः कथाः ॥ ३५ ॥**

निष्णातमिति । योगमायासु निष्णात स्वायम्भुवं मनु भोगा यदा भ्रंशयितु न शेकुः, तदा अयातयामास्तस्य यामा आसन्नित्युत्तरेण सबन्ध । योगमाया नानाविधविषयभोगप्रकारा अणि मादयः, तत्र निष्णात सर्वभोगभोक्तारम्, मननशीलत्वाद्विद्यमानमोक्षम् । तेन मोक्षभयादपि न भोगनि वृत्ति । परलोकभय तु नास्त्येव, स्वयभूपुत्रत्वात् । अत एव न ऋणनिवृत्त्यपेक्षा, नाऽपि परलोकभयम्। एव सति नि शङ्को भोगो भवति । तथा च सति तदभिनिवेशात् भ्रशः सभवति । पर ते भ्रशयितु न शक्ता । तत्र हेतु —भगवत्परमिति । कथाश्रवणादिना भगवत्परत्वम् । भगवत्परत्वे च विषयासक्त्य भावः । अनासक्तौ न भ्रश । मनन ब्रह्मसुतत्वादिक वा योगमायानिष्णातत्वे हेतु । विषयासक्त्यैव कालो व्यर्थो भवति, नाऽन्यथा । प्रकृते तदभावात्तस्य यामाः कालविशेषा , अयातयामा अगतसारा एवाऽभ

१ निर्विश्य ख च २ समाविशत ३ सम्यगावशत् क घ ङ

वन् । सपूर्ण एव कालस्तादृशो जात इत्याह—स्वान्तरयापना इति । स्वमन्वन्तरस्य यापना । यापयन्ति समापयन्ति ये कालखण्डा, ते सर्वे एव अयातयामा इति । एकसप्ततियुगानि हि मन्वन्तरम् । भोगाना अशाननकत्वमात्रेण नाऽयातयामत्वम्, किन्तु हेत्वन्तरमस्तीत्याह—शृण्वत इति । विष्णोः कथा शृण्वतः । कथा एव ध्यायतः । योगबलेन भगवद्गुणान् ज्ञात्वा तन्निबन्धनेन कथाः कुर्वत । गोष्ठ्यां वा राजसभाया वा तत्कथामेव कुर्वत, श्रोतृणामर्थे ब्रुवतश्च । जागरणानन्तर देहशुद्धेः पूर्वं कथाना श्रवणम् । ततो ध्यानमावश्यकसभापर्यन्तम् । तत्र च सद्भिः सह तत्कथाकरणम् । ततोऽनुशिक्षार्थमाप्रस्वापं भगवत्कथाकथनमित्येव प्रत्यहम् ॥ ३४ ॥ ३५ ॥

तत किं जातमित्यत आह—

स एव स्वान्तरं निन्ये युगानामेकसप्ततिम् ।
वासुदेवप्रसङ्गेन परिभूतगतित्रयः ॥ ३६ ॥

*स एवेति । मनुरेव तत्र प्रथममन्वन्तरे राजा जात । स्वाधिकारकालेऽन्यस्तथाधर्मं न पालयिष्यतीति स एव स्वान्तरमेवंप्रकारेण निन्ये, नीतवान् । प्रियव्रतस्य राज्यकथा कल्पान्तरीया । उत्तानपादस्तु मन्वन्तरान्तरे । प्रियव्रतपुत्राणामेव मन्वन्तराधिपतित्वात्कल्पान्तरे वा । मनोर्महुकल्पजीवित्वमनेन ज्ञापितम् । कालो न बाधक इति च । भगवद्दत्ताधिकारे ह्यधिकारकालो नाऽऽयुर्गणनाया प्रविशति । अतोऽधिकाराभावसमय एव स्वल्पायुष्ट्वम् । पितृदेवमनुष्येषु वा नाऽस्य प्रवेश । मन्वन्तरस्य परिमाणमाह—युगानामिति । सहस्रकल्पेषु चतुर्दशधा विभागे नवशत चतुर्नवतिश्च युगाना भवति । षट् युगानि च समस्तसङ्ख्यया नायान्तीति न गणितानि । अस्य सृष्ट्यन्तरत्वाद्भगवद्गुणानामुपभोगार्थे षड्गुणानि वा । तत किं जातमित्याकाङ्क्षायामाह—वासुदेवप्रसङ्गेनेति । वासुदेव एव मानसो वाचिकः कायिकश्च य सङ्गो ध्यानकीर्तनपरिचर्यादिरूपः, तेनैव, परिभूत तिरस्कृत गतित्रयं येन । ऊर्ध्वाधोमध्यगतयो गुणत्रयसाध्या, ते त्रयोऽपि गताः । अतो भगवत्येव गतिश्चाऽवशिष्यते । न हि मोक्षदातुरेवसङ्गे धर्मार्थकामरूपा गतिर्भवति ३६

ननु निरन्तर कथ भगवत्कथादि सिद्ध्येत् ? क्लेशादिना बाधकत्वादित्याशङ्क्याऽऽह—

शारीरा मानसा दिव्या वैयासे ! ये च मानुषाः ।

---

प्रकाशः ।

* स एवेत्यत्र । सहस्रयुगपर्यन्तामिति(?)। चतुर्युगाना च सहस्रमिति वाक्यैकवाक्यतायाऽत्र युगपद चतुर्युगीपर वक्तव्यम् । तथैव मन्वन्तरकालगणनाया चतुर्युगी पदं विशिष्यत इति तन्निर्गमप्रकारमाहु - अस्येत्यादि । मन्वन्तरभोग्यकालसङ्ख्याया सर्वत्र साधारण्येनाऽन्यत्र दोषानिवृत्तिरित्यरुच्या पक्षान्तरमाहु—गुणानि वेति । गुणभूतानि तानि युगानि । तथाच यथासभव तन्यानेन सख्यायामनिकप्रवेश इत्यर्थ ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे द्वाविंशाध्यायविवरणं सम्पूर्णम् ।

---

१ च क ग २ मनोर्वा क न - ग ३ भगवद्दत्ताधिकारकाले हि क. मन्वन्तराधिकारे हि ग.ख.८ ४ ५ ग

**भौतिकाश्च कथं क्लेशा बाधन्ते हरिसंश्रयम् ॥ ३७ ॥**

**शारीरा इति** । शारीरा व्याधिरूपाः, मानसा आधिरूपाः, दिव्या अशनिवृष्ट्यादिजनिताः । विश्वासार्थे चैयासे इति । संबोधनम् । व्यासो हि तस्य चरित्रं बहुधा आह । मानुषा आज्ञातिक्रमादयः । यद्यपि शारीरमानसमध्ये सर्वस्याऽप्यनुप्रवेशः, तथापि परदृष्ट्या धनाद्यभावे, आज्ञाकरणे, प्रजानां भूताद्युपद्रवे च राजा क्लिष्ट इति लोका मन्यन्ते । राजत्वाच्च तन्निराकरणार्थं यत्नकरणाच्च । अतः क्लेशाः दुःखानि अहङ्काराज्ञानादीनि च कथं बाधन्ते ? तत्र हेतुः—हरिसंश्रयमिति । उक्तोऽपि हेतुर्बहुधोच्यते ३७

प्रासङ्गिकत्वाभावाय तस्य भगवदाश्रयत्वं निःसन्दिग्धं फलतः साधयति—

**यः पृष्टो मुनिभिः प्राह धर्मान्नानाविधान् शुभान् ।**
**नृणां वर्णाश्रमाणां च सर्वभूतहितः सदा ॥ ३८ ॥**

**यः पृष्ट इति** । भगवद्भक्ता एव हि गुह्यं धर्मं विदुः । अतो मुनिभिरयं भक्त इति ज्ञात्वा **धर्मान् पृष्टः** । अतो मुनिभ्यो धर्मानाह । एकविधधर्मकथने स्वभावगुणभिन्नानां सर्वेषां संग्रहो न भवतीति ततो नानाविधानाह । सर्वे एव च कल्याणकराः । विशेषधर्मानप्युक्तवानिति विशेषान् गणयति—**नृणां** मनुष्याणाम्, वर्णानामाश्रमाणां च । एतत्कथनं न लाभपूजाख्यात्यर्थम्, किन्तु **सर्वभूतहितः** सन्नाह । राज्ञा हि सर्वभूतहितं कर्त्तव्यमित्येवाऽभिसन्धाय तथाऽऽह । सर्वदा वाऽयं तथा ॥ ३८ ॥

एवं मनुचरित्रमुक्त्वोपसंहरति—

**एतत्त आदिराजस्य मनोश्चरितमद्भुतम् ।**
**वर्णितं वर्णनीयस्य तदपत्योदयं शृणु ॥ ३९ ॥**

**एतत्त इति** । आदिराजस्येति राज्ञामग्रे महत्त्वम् । मनोरिति ब्राह्मणानाम् । अद्भुतमिति विषयभोग., भक्तिः. वैराग्यं च त्रितयमेकस्मिन् स्थितमिति । तेन मनोरेव चारित्रं पृष्टवानिति । वर्णितमिति तस्यैवोपसंहारः । न केवलं प्रश्नानुरोधेन वर्णितम्, किन्तु **वर्णनीयस्येति** । तस्य हि चरित्रं वर्णनीयमेव, भगवच्चरित्राश्रयत्वात् । अग्रे प्रश्नान्तरव्यावृत्त्यर्थमाह—**तदपत्योदयं शृण्विति** । तस्याऽपत्यानि पञ्च । तत्र प्रकृता देवहूतिः, तस्या उदयः । कन्यादीनामुत्पत्तिविवाहौ, तस्याश्च मुक्तिः, सर्वमुदयत्वेनोच्यते । तत्राऽऽदरार्थं शृण्विति विधिः ॥ ३९ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां तृतीयस्कन्धे द्वाविंशाध्यायविवरणम् ।

---

# अथ त्रयोविंशाध्यायविवरणम् ।

* कर्दमस्य हि कामोऽत्र स्वीकृतत्वात्तदिच्छया ।
त्रयोविंशतिमेऽध्याये वैराग्यात्रधिरुच्यते ॥ १ ॥
भगवद्भोगसृष्टौ हि पूर्वं मात्रा निरूपिताः ।
तद्ग्राहकाणीन्द्रियाणि निरूप्यन्तेऽधुना स्फुटम् ॥ २ ॥
भगवत्कृतभोगो हि नाल्पसत्त्वेन भुज्यते ।
अतस्तस्या योग्यतायै पतिसेवा निरूप्यते ॥ ३ ॥
ततः प्रसादो विज्ञप्तिर्भोग्यसाधननिर्मितिः ।
अन्तःस्थितहरेर्दृप्त्या तथात्वज्ञापनं तथा ॥ ४ ॥
भोगो नानाविधश्चैव सर्वभावेन चैव हि ।
भार्येच्छया कन्यकानां जननं चाऽपि वर्ण्यते ।
वैराग्यमुभयोश्चैव कामस्तेनैव पूर्यते ॥ ५ ॥

तत्र प्रथमं तस्याः पतिसेवामाह—

## मैत्रेय उवाच ।

**पितृभ्यां प्रस्थिते साध्वी पतिमिङ्गितकोविदा ।**
**नित्यं पर्यचरत् प्रीत्या भवानीव भवं प्रभुम् ॥ १ ॥**

पितृभ्यामिति । मातापितृभ्यां प्रस्थाने कृते सति, दीनाऽपि सती, खेदमकृत्वा पतिं पर्यचरत् । पतिसंबन्धपर्यन्तमेव पित्रोः संबन्धः, यतः साध्वी । पतिव्रतायाः स एव धर्मः । सेवा सैव, या भर्तू रोचते । रुचिश्च महान् न वदतीति, तदिङ्गितैर्ज्ञातव्येति । तज्ज्ञानं च पातिव्रत्यादेव जातमित्याह—इङ्गितकोविदेति । इङ्गिते कोविदा पण्डिता । दीर्घकालादरनैरन्तर्यसेवा फलदा भवतीति तदाह—नित्यं प्रीत्येति । नित्यमिति दीर्घनैरन्तर्ये । प्रीतिरादरः स्नेहश्च सेव्यवश्यत्वहेतुः । निष्कामकामनायामावश्यकत्वे च दृष्टान्तः—भवानीव भवमिति । विवाहात्पूर्वं प्रभुत्वेनैव पार्वत्या सेवितः । केवलं मनसा पतिरिति जानाति,

गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृतः प्रकाशः ।

* अथ त्रयोविंशाध्यायं विवरिषवः पूर्ववदवसर एव सङ्गतिरिति बोधनायार्थमेव सर्वं सङ्गृह्याहुः—कर्दमस्येति द्वाभ्याम् । निरूपिता इति । भगवद्वाक्यार्पिवाक्यमन्वादिधर्मैः संस्कृता देवहूतिनिष्ठा भगवद्दर्शनतपःप्रभृतिभिः संस्कृताः कर्दमीयाश्च निरूपिताः । इन्द्रियाणीति । तयोरेवेन्द्रियाणि । अवान्तरवार्थीनाहुः—भगवत्कृतेत्यादि । तथात्वज्ञापनमिति भगवत्कृतत्वज्ञापनम् ।

१ त्रयोविंशे तु चाध्याये ख. ग. छ. थ. २ तज्ज्ञापकानीन्द्रियाणि ख. ग. च ३ तत्त्वानाम्. क. प.

पूर्वसंस्काराच्च। तद्वदियमपि संबन्धरहिता काम्यालङ्कारादिकामनारहिता चावश्यकर्तव्यत्वेनैव सेवां कृतवती त्यर्थः ॥ १ ॥

सेवाया गुणान् दोषाभावांश्चाह द्वयेन। गुणानाह—

**विश्रम्भेणाऽऽत्मशौचेन गौरवेण दमेन च।**
**शुश्रूषया सौहृदेन वाचा मधुरया च भोः! ॥ २ ॥**

विश्रम्भेणेति। विश्रम्भेण विश्वासेन, अनेन मम सर्वपुरुषार्थं सेत्स्यतीति। आत्मनो देहस्याऽन्तःकरणस्य शौचेन शुद्ध्या। सन्तः शुद्ध्यैव प्रसीदन्ति। विश्वासः सर्वत्राऽङ्गम्। पुत्रमित्रादिष्विव न सेवा, किन्तु देववदित्याह गौरवेणेति। गौरवमादरविशेषो महत्त्वपूर्वकः, यथा गुरौ क्रियते। दम इन्द्रियनिग्रहः। इन्द्रियचाञ्चल्ये सेवा न फलतीति लोकवेदसिद्धम्। शुश्रूषा चरणसंवाहनाद्यन्तरङ्गसेवा। सौहृदं सुहृदो भावः। सर्वैरेव मित्रधर्मैरित्यर्थः। गुह्यगूहनगुणप्रकटीकरणादिभिः। मधुरा च वाणी पूर्वोक्तसर्वगुणेषु प्राणभूता। 'सद्यस्त्वप्रियवादिनीम्' इति तद्विरोधिनस्त्यागहेतुत्वात्। चकारादन्येऽपि शमादयः। भो इति केवलं संबोधनं सावधानार्थं ॥ २ ॥

दोषाभावानाह—

**विसृज्य कामं दम्भं च द्वेषं लोभमघं मदम्।**
**अप्रमत्तोद्यता नित्यं तेजीयांसमतोषयत् ॥ ३ ॥**

निसृज्येति। कामादयः षट् दोषाः, पापापराधौ चाऽधिकौ। तत्र कामः आद्यः, कामपूरणार्थमेव कामिनीव भजते। मानमिति पाठे अहङ्कारो राजपुत्र्यहमिति कामस्थानीयः। दम्भो लोभात्मकः, धनकीर्त्यादिलोभाभावे दम्भं न कुर्यात्। अत्र तु तदीयं सर्वं तस्या एवेति साक्षाल्लोभो न सम्भवतीति राजपुत्र्यास्तदग्रे पश्चाच्च नैकरूपता सेवायां सम्भवतीति दम्भो निर्दिष्टः। चकारादपराधो निवारितः। द्वेषो मत्सरात्मकः, क्रोधश्च सगृहीतः। लोभः स्पष्टः। अघमपराधः। मदो गर्वः। एवमष्टाऽपि निवारिताः। अप्रमत्ता चासावुद्यता च। नित्योद्यमः प्रमादाभावश्चाऽन्तरङ्गौ। एवं कृते यज्जातं तदाह—तेजीयासमतोषयदिति। अतितेजस्विनं दुर्धर्षमप्यतोषयदित्यर्थः ॥ ३ ॥

तुष्टस्य प्रसादं वक्तुं तस्याऽधीनत्वमतिप्रसादाय तद्दृष्टं निरूपयति—स वा इति द्वाभ्याम्—

**स वै देवर्षिवर्यस्तां मानवीं समनुव्रताम्।**
**दैवाद्गरीयसःपत्युराशासानां महाशिषः ॥ ४ ॥**

महत्त्वं हि दैन्यसामानाधिकरण्ये दयाहेतुर्भवतीति प्रथमं महत्त्वमाह—मानवीमित्यादि विशेषणत्रयेण। तथाज्ञाने हेतुः—देवर्षिवर्य इति। देवा हि हृदयस्थं जानन्ति, ऋषयोऽलौकिकम्, ततोऽप्युत्तमः बाह्यमाभ्यन्तरमलौकिकं जानाति। तत्र—मानवीमिति बाह्योत्कर्षः। सम्यगनुव्रतामिति यथा स्वस्याऽनुभावादि, अन्तःकरणबाह्यधर्मा वा। दैवमदृष्टं कालो वा, ततोऽपि गरीयान् पतिः। दैवमप्यन्यथाकर्तुं शक्त इत्यर्थः। ततो महाशिष आशासानाम्, दुर्लभामपि कामनां पूरयिष्यतीति। आभ्यन्तरमेतत् ॥४॥

---

१ प्व च ग ङ. च २ मित्रा ग ३ कामिना ग कामिनीम् घ ङ

दैन्ये हेतुद्वयमाह—

कालेन भूयसा क्षामां कर्शितां व्रतचर्यया ।
प्रेमगद्गदया वाचा पीडितः कृपयाऽब्रवीत् ॥ ५ ॥

कालेनेति । महता कालेन विषयरहितेन क्षामां दुर्बलाम् । व्रतचर्यया च कर्शिताम् । यथा पतिर्महातपसि तिष्ठति, तथा पतिव्रतेयं स्थितेति क्लिष्टा परमखेदं प्राप्तवती । एतादृशीं दृष्ट्वा कृपया पीडितः, तद्गतप्रेम्णा, गद्गदया वाचा, अग्रे वक्ष्यमाणं प्रसादरूपं वाक्यमब्रवीदित्यर्थः ॥ ५ ॥

तान्येव वाक्यान्याह त्रिभिः—तुष्टोऽहमद्येत्यादिभिः—

## कर्दम उवाच ।

तुष्टोऽहमद्य तव मानवि ! मानदायाः शुश्रूषया परमया परया च भक्त्या ।
यो देहिनामयमतीव सुहृत् स्वदेहो नाऽवेक्षितः समुचितः क्षपितुं मदर्थे ॥६॥

×संतोषः सर्वदानं च दुर्लभत्वं च तस्य वै। अयं भगवता देयं नाऽन्येनेति निरूप्यते।१। प्रथमं तोषमाह—तुष्टोऽहमिति । सुहृत्प्रियः । मदर्थे क्षपितुं नाऽवेक्षितः, न गणितः । समुचितः श्लाघ्योऽपि । मत्सेवाऽऽशया उपेक्षित इत्यर्थः । हे मानवि, महतः पुत्रि, अद्य तवाऽहं तुष्टः । न केवलं पितृमातृमाहात्म्यात्तवापि स्वतो माहात्म्यादित्याह—मानदायाः । यो हि निरन्तरं मानं सन्माननां प्रयच्छति, स हि पात्रे दानात्स्वयमपि मानं प्राप्नोति । एवमाधारगतं गुणद्वयं तोषे हेतुः । करणद्वयमाह—शुश्रूषया परमया परया च भक्त्येति । परमा लोकोत्तरा शुश्रूषा अन्तरङ्गसेवा । इदं बाह्यं करणम् । परा माहात्म्यज्ञानपूर्विका उत्कृष्टा भक्तिः प्रीतिः, अन्तरङ्गं करणम् । किञ्च, न केवलं करणद्वयेनैव कार्यं सिध्यति, आजन्मभजनाभावात् । किन्त्वाजन्मैतद्द्वयं यत्र व्यापृतम्, तस्यापि तदर्थं क्षपणमपेक्षत इति । तदाह—यो देहिनामिति। तत्र पूर्वोक्तं करणद्वयं सर्वथा व्यापृतमिति वक्तुमयं देहो देहिनां देहाभिमानिनामतीव सुहृन्मित्रमात्मभूतमित्ररूपम्, सोऽपि मदर्थं क्षपितुं क्षपयितुम् । कर्तृद्वयस्याऽप्येकत्वादन्तर्भावितणिच्प्रयोगः । स्वार्थमनुपयुक्तस्य लोकोपकारार्थं क्षपणं दृष्टमिति तद्व्यावृत्त्यर्थमाह—समुचित इति । सम्यगुचितः, स्वस्य सर्वपुरुषार्थसाधकः । अतो गुणत्रयस्य पूर्णप्रसादहेतोर्जातत्वात् अहं तुष्टः ॥ ६ ॥

तुष्टस्य कृत्यमाह—

ये मे स्वधर्मनिरतस्य तपःसमाधिविद्यात्मयोगविजिता भगवत्प्रसादाः ।
तानेव ते मदनुसेवनयाऽवरुद्धान् दृष्टिं प्रपश्य वितराम्यभयानशोकान् ॥ ७ ॥

---

प्रकाशः।

× तुष्ट इत्यत्र । अन्येति । एतादृशव्यतिरिक्ता सम्पत् । यत्र व्यापृतं तस्यापि तदर्थं क्षपणमिति । यस्मिन्नधिकरणे व्यापारत्वेन स्थितं तस्याऽप्यधिकरणरूपस्य देहस्यान्तःकरणस्य च तदर्थं व्यापारात्मकर्मेनाप्त्योरर्थे क्षपणमित्यर्थः ।

---

१ नाऽन्यैरसरेवम् क मान्यैरपेवम् ढ प

+ये म इति। मे मम ये भगवत प्रसादा भगवता मह्य दत्ता, तानेव ते तुभ्य वितरामि। प्रसन्नो हि सर्वस्वम्,यद्वोत्कृष्टम्, तत्प्रयच्छति। मम तु सर्वस्वमुत्कृष्ट च सर्व एव भगवत्प्रसादा, तेऽपि प्रसिद्धा, नत्वप्रयोजका। तत्र हेतु –स्वधर्मनिरतस्येति। स्वधर्मो भगवद्धर्म, तत्र निरतः प्रतिष्ठित। ते चेद्यथा प्राप्ता स्यु, तदाऽन्यस्मै दीयमाना न कार्यक्षमा भवेयु। अतस्तद्व्यावृत्त्यर्थमाह–तपःसमाधिविद्यात्मयोग-निर्जिता इति। तपो धर्मरूपम्, धर्मेण ये केचन प्रसादा सिध्यन्ति ते तेन विजिता। समाधिर्योगो-त्कर्ष, तेन सिद्धा अणिमादयोऽर्था, तद्रूपा अपि भगवत्प्रसादा तेन जिता। विद्या भक्ति, उपासना वा यानप्रसस्साध्या, तत्साध्या अपि भगवत्प्रसादा ज्ञानादिरूपा, तेऽपि विजिताः। आत्मयोगो यनियमो मोक्षसाध्यः, तेनाऽपि विजितास्तथा। तानेव वितरामि। एवकारो नाऽन्ययोगव्यवच्छेदकः, किन्त्वर्थविशेषे अदेयत्वेन ते सिद्धा इति तेषामुत्कर्षवाचकः। ननु भगवत्प्रसादाः स्वतन्त्राः, दीयमाना अपि कथ मयि समायास्यन्तीत्याशङ्क्याह–मदनुसेवनयाऽवरुद्धानिति। मम या अनुसेवा, सा मामेव गृहीतवती। कः सन्देहः परिकरगुणेषु। अवरुद्धाश्च स्वाधीना भवन्ति। अलौकिके विश्वासार्थमाह–दृष्टिं प्रपश्येति। दृष्टिं वितरामि तद्दर्शनार्थम्, अतः प्रपश्येत्यर्थ। प्रथमतस्तेषा दानम्, पश्चात् दृष्टेर्दानम्, आत्मगामित्वा त्फलस्य। प्रसादानामपि विषयत्वादौत्पत्तिकदोपसहिता एव भविष्यन्तीत्याशङ्क्य दोषद्वयं परिहरति–अभयान् इहामुत्र भयरहितान्। अशोकांश्च। स्वापगमेन शोक च न जनयन्तीत्यर्थः ॥ ७ ॥

राजकन्यात्वात् राज्यविषयकानेव तान् बहु मन्यते, नत्वलौकिकानित्याशङ्क्यपूर्व भोग्यत्वेनैव ज्ञातान् विषयान् निन्दति—

**अन्ये पुनर्भगवतो भ्रुव उद्विजृम्भविभ्रंशितार्थरचनाः किमुरुक्रमस्य।**
**सिद्धाऽसि भुङ्क्ष्व विभवान्निजधर्मदोहान् दिव्यान्नरैर्दुरधिगान्नृपविक्रियाभिः**

अन्ये पुनरिति। अन्ये राज्यादय, स्वर्गादयो वा किम् न किञ्चिदित्यर्थ। तत्र हेतुमाह–उरुक्रमस्य भगवत, भ्रुव उद्विजृम्भविभ्रंशितार्थरचनाः। भगवत इति सामर्थ्यम्। उरुक्रमेत्यद्भुतकर्मत्वम्, अन्यथा स्वदत्तं स्वयमेव कथ हन्यात्? कथ वाऽपकारि भवेत्? आत्मा वा भूत्वा कथमेवं कुर्यादिति। अनेन सर्वे दोषा परिहृता, चिकीर्षितापरिज्ञाने हेतुश्चोक्त। अतएव तस्य भ्रुव कालस्य, या उद्विजृम्भा आलस्येनापि ग्रहणम्, तेनैव विभ्रंशिता अर्थरचना येषा राज्यादीनाम्। स्वरूपतोऽपि नश्यन्ति, यदर्थं क्रियन्ते तदपि न संपादयन्ति। अर्थार्थं रचना निर्माणम्। नन्वहमपि तादृश्येवेति यथा योग्य फलं भवत्विति चेत्तत्राऽऽह–सिद्धाऽसीति। नत्वप्रसिद्धा, पूर्ववत्। अत पूर्वसिद्धविषयभोगे पौनिर्त्यं भवति। न केवल पूर्वनिषेध क्रियते, किन्तु विभवान् भुङ्क्ष्व। विगतो भवो जन्म येभ्य। विषयत्वेऽपि मोक्षसाधकान्। नाऽप्येते धर्मफलरूपा, अन्यथा क्षेत्रो धर्मे क्षयेत। प्रत्युत निजधर्मपाति

प्रकाशः।

+ ये म इत्यत्र। मोक्षसाध्य इति। 'वन्य इन्द्रियविक्षेपो मोक्ष एषां च संयमः' इति भगवद्वाक्यादिन्द्रियसंयमात्मकमोक्षसाध्य। यस्मिन्नर्थविशेष एवकारोऽभिप्रेतस्त स्फुटीकुर्वन्ति–अदेयत्वेनेत्यादि। तथा च, नित्य सम्बन्धेन तत्पदप्राप्तावपि या तदुक्ति, सा तेषा तथाप्रसिद्धिबोधनार्था। तथा सति तत्सन्निधिवशादेवकारोऽपि सदुत्कर्षमेव ब्रूत इति तदर्थः।

१ पातिव्रत्यम् क प ड   २ इतो क ग ड

भ्रत्यादिकं दुहन्तीति–निजधर्माणां दोहो येभ्य इति । न केवलं फलत एवोत्कृष्टाः, स्वरूपतोऽपीत्याह–**नरैर्दुरधिगानिति** । वयं नृणा इति विक्रिया सान्निपातकार्यम्, तैः करणैः, मनुष्या उपभोक्तारः, तान् विषयान् ग्रहीतुं न शक्नुवन्तीत्यर्थः ॥ ८ ॥

एवं वरे दत्ते सहसा तद्धृदये सर्वं न समागतमिति पूर्वविचारितमिव किञ्चित्प्रार्थयितुमारभत इत्याह–

## मैत्रेय उवाच ।

**एवं ब्रुवाणमबलाऽखिलयोगमायाविद्याविचक्षणमवेक्ष्य गताधिरासीत् ।**
**संप्रश्रयप्रणयविह्वलया गिरेषद्व्रीडावलोकविकसद्धसिताननाऽऽह ॥ ९ ॥**

एवं ब्रुवाणमिति । आदौ तस्याः खेदनिवृत्तिमाह–एवं ब्रुवाणमवेक्ष्य गताधिरासीत् । केवलमाहारम्यार्थं न वचनम्, स्त्रीष्वनृतं न दोषायेति । तन्निवृत्त्यर्थमाह–**अखिलयोगमायाविद्याविचक्षणमिति** । अखिला या **योगमाया** नानाविधसर्वविषयरूपा, तस्या वशीकरणमन्त्रादिरूपा **विद्या**, तत्र **विचक्षणो**ऽतिनिपुणः । अतस्तादृशं ज्ञात्वा । तादृशं च वक्तारम्, विचक्ष्य विचारेण सत्यं वदतीति ज्ञात्वा, **गताधिरासीत्** । प्रार्थयितुमाह–**संप्रश्रयेति** । प्रश्रयो विनयः, प्रणयः स्नेहः । प्राश्रितेति पाठे सम्यक् प्रकर्षेण योऽयमाश्रितः, तस्य यः प्रणयः, तेन विह्वला गीः । विनयोऽपि वर्णोद्गमप्रतिबन्धकः, स्नेहोऽपि । वाच्यार्थस्मरणेन ईषत् यत् स्मितम्, कुलवधूत्वात्; तेन व्रीडापूर्वको योऽयमवलोको भावितार्थसूचकः, तेन **विकसद्धसितानना** सती वक्ष्यमाणमाह ॥ ९ ॥

अभिप्रेतंससाधनमाह द्वाभ्याम्—

## देवहूतिरुवाच ।

**राद्धं बत ! द्विजवृषैतदमोघयोगमायाधिपे त्वयि विभो ! तदवैमि भर्तः ! ।**
**यस्तेऽभ्यधायि समयः सकृदङ्गसङ्गो भूयाद्गरीयसि गुणप्रसवः सतीनाम् ॥ १० ॥**

**राद्धमिति** । यद्यपि भर्त्रा भगवत्प्रसादा इत्युक्तम्, तथापीयं भगवत्त्वेनैव तं सेवितवतीति तदुक्तानां धर्माणां तस्मिन् स्वाभाविकत्वमनूद्य, तस्मिन् स्वज्ञानं प्रमाणीकरोति हे द्विजवृष ! एतत् त्वदुक्तम्, त्वयि **राद्धं** सिद्धमेव । **बतेति** हर्षे । द्विजानां मध्ये ये श्रेष्ठा ब्रह्मविदः, तेषामेतत्सर्वं सिद्धमिति ज्ञापनार्थं संबोधनम्, कामपूरणार्थं वा, पराव्यो हि कामः । अमोघा या योगमाया, तस्या अधिपे त्वयि सर्वं सिद्धमेव । काचिद्योगमाया प्रदर्शनार्थेऽपि भवतीति तद्व्यावृत्त्यर्थममोघोक्ता । तादृशस्यैव तथावचनं सत्यं भवतीति तथाऽनुवादः । **तदवैमीति** प्रमाणम् । **विभो** इति संबोधनं च तत्साधकम् । **भर्तरिति** संबोधनं स्वस्य तथाज्ञाने सामर्थ्यजननाय, भर्तुरेव धर्मेण भार्यायाः सामर्थ्यं भवतीति । विवाहे पणस्य कृतत्वाद्यदतिरिक्तयाचने स्वधर्मः क्षीयत इति पूर्वोक्तमेव स्मारयति–**यस्तेऽभ्यधायीति** । **सकृदङ्गसङ्ग** इति । यस्त्वया पूर्वमुक्तः ' यावत्तेजो बिभृयात् ' इति, स एकान्तः सङ्गः । अमोघवीर्यश्च भवान्, अतोऽर्थात् सकृदेवाङ्गसङ्गोऽभ्यधायि । स च समयः । समयबन्ध उभयोरनुल्लङ्घनार्थः । **स भूयादिति** प्रार्थना । ततः किं स्यादित्याशङ्क्याऽऽह– स एव सकृदङ्गसङ्गः **सतीनां गुणप्रसवः** । पतिव्रतास्तु न कामुक्यः पतिव्रतमेव च व्रतं तासाम् । अतस्तावदेवाऽपेक्षितम् । तद्गताश्च गुणा आनन्दादयस्तदैव भर्त्रेऽभिव्यक्ता भवन्ति । अग्रे च पुत्रद्वारा प्रकर्षेण सूयन्ते, तदैव च तासां जन्मप्राफल्यमिति ॥ १० ॥

साधनमाह—

**तत्रेतिकृत्यमुपशिक्ष यथोपदेशं येनैष मे कर्शितोऽतिरिरंसयात्मा ।**
**सिद्ध्येत ते कृतमनोभवधर्षिताया दीनस्तदीश ! भवनं सदृशं विचक्ष्व ॥ ११ ॥**

तत्रेतिकृत्यमिति । तत्र इतिकृत्यमुपशिक्ष । स चेद्रसात्मक एव भवति सङ्ग, सपुरुषार्थो भवति । सैकाङ्गैकैव ससामग्रीको भवेत् । रसश्च विभावानुभावव्यभिचारिभिरुत्पद्यते, ते सर्वे विस्तरेणोक्ताः कामशास्त्रे । तन्निकट एव ज्ञानदार्ढ्यार्थं द्रष्टव्यमिति भाव । अत एव यथोपदेशमित्युक्तम् । 'इन्दुर्मन्दिरमिन्दिरा मृगमदः' इत्यादि । उद्गतो रागो नान्यथा निवर्तत इत्याह—येनेति । एष मे आत्मा रिरंसयाऽतिकर्शित क्लिष्ट । एष आत्मेति । देहोऽन्त करण च । न कामशास्त्रव्यतिरेकेणाऽयं रसयोग्यो भविष्यति । एतादृशोऽप्यात्मा रिरंसया क्लिष्टो येनैव सिद्ध्येत्, स एवोपाय कर्तव्य इत्यर्थ । किञ्च, ते त्वया कृतो यो मनोभव, तेन धर्षिताया । मनोभवेन निर्भर्त्सिताऽहम्, तत्पराभवोऽपि दूरीकर्तव्य । अय च देह स्वाधीनः । विज्ञापनान्तरमाह—हे ईश ! सदृशं भवनं विचक्ष्वेति ॥ ११ ॥

तदा कर्दमो विचारितवान् । नेय सम्बन्धमात्रमपेक्षते, किन्तु वैभवसहितम् । अतस्तथैव कर्तव्यमित्यभिप्रेत्य भगवद्वचयोगसामर्थ्येन तथैव कृतवानित्याह—

**मैत्रेय उवाच ।**

**प्रियायाः प्रियमन्विच्छन् कर्दमो योगमास्थितः ।**
**विमानं कामगं क्षत्तस्तर्ह्येवाऽऽविरचीकरत् ॥ १२ ॥**

प्रियाया इति । प्रेमविषया भार्या प्रिया, तस्या प्रीतिं वाञ्छन् कर्दमो भगवद्दत्त योगमास्थितः । योगबलेन कामगं विमानमाविरचीकरत् आविष्कारं कृतवान् । योगे सर्वं स्थितमेवेच्छया प्रादुर्भवति । गृहात्मकमपि तत् कामगम् । क्षत्तरिति सबोधनमन्त पुरवैभवसाक्षित्वाय ॥ १२ ॥

तद्विमानमनुवर्णयति भावनवकेन नवविधक्रीडार्थं नवभि श्लोकै —

**सर्वकामदुघं दिव्यं सर्वरत्नसमन्वितम् ।**
**सर्वर्द्ध्युपचयोदर्कं मणिस्तम्भैरुपस्कृतम् ॥ १३ ॥**

सर्वकामदुघमिति । सर्वानेव कामान् दोग्धीति दिव्यमलौकिकम् । सर्वरत्नसमन्वितं स्पष्टम् । सर्वा ऋद्धय सम्पत्तय, तासामुपचय आधिक्यम्, तदेव उदर्को यस्य । तस्मिन् गृहे ऋद्धीनामुपभोगेन उपचय एव भवति, नाऽपचय । उत्तरफलं लोके सर्वत्राऽपचय । मणिमये स्तम्भैरुपस्कृतम् । यथा शोभातिशयो भवति तथा रचितम् ॥ १३ ॥

**दिव्योपकरणोपेतं सर्वकालसुखावहम् ।**
**पट्टिकाभिः पताकाभिर्विचित्राभिरलङ्कृतम् ॥ १४ ॥**

दिव्यानि यान्युपकरणानि वस्त्रपीठादीनि, तैरुपेतम्, शीतादिसर्वकालेषु सुखकरम् । वहि शोभाति

---

१ सर्द्ध्यार्णव ख ग सरुद्धार्णव ख घ ङ

शयमाह—पट्टिकाभिरिति । पट्टिका लम्बायमानपट्टवस्त्रनिर्मिताः । पताका जयपत्राङ्किता. । सर्वा एव विचित्राः । ताभिरलंकृतम् ॥ १४ ॥

**स्रग्भिर्विचित्रमाल्याभिर्मञ्जुसिञ्जत्षडङ्घ्रिभिः ।**
**दुकूलक्षौमकौशेयैर्नानावस्त्रैर्विराजितम् ॥ १५ ॥**

स्रग्भिरिति । स्रग्भिर्मालाभिः । विचित्राणि माल्यानि पुष्पाणि यत्र । सर्वदाऽम्लानत्वाय, आमोदमकरन्दसहितत्वाय च मञ्जु सिञ्जन्तः षट्पदप्रयो भ्रमरा यत्र । दुकूलक्षौमकौशेयाः पट्टाम्बरविशेषा, कीटजाः, तृणजा, वल्कलजाश्च । नानाविधानि च वस्त्राणि, तैर्यथायोग्यं विराजितम् ॥ १५ ॥

**उपर्युपरि विन्यस्तनिलयेषु पृथक् पृथक् ।**
**क्षिप्तैः कशिपुभिः कान्तं पर्यङ्कव्यजनासनैः ॥ १६ ॥**

उपर्युपरि च गृहा उत्तरोत्तरं विरचितास्तत्र शतशः सन्ति । सर्वेष्वेव गृहेषु पृथक् पृथक् क्षिप्तैः कशिपुभिरुत्तमशय्याभिः कान्तं रमणीयम्, न तु गृहान्तरास्थिताः शय्याः पुनरन्यत्र नेतव्याः । पर्यङ्काः खट्वाविशेषा., व्यजनविशेषा, आसनविशेषाश्च; तैः सर्वैरेव कान्तं रमणीयम् ॥ १६ ॥

कामशास्त्रानुसारेण सर्वबन्धबोधकानि चित्राणि तत्र वर्णयति—

**तत्र तत्र विनिक्षिप्तनानाशिल्पोपशोभितम् ।**
**महामरकतस्थल्या जुष्टं विद्रुमवेदिभिः ॥ १७ ॥**

तत्र तत्रेति । विशेषेण निक्षिप्तानि यानि नानाशिल्पानि, तैरुपशोभितम् । तत्र तत्र गृहेषु महामरकतमणिभिः कृता स्थली भवति, तया च जुष्टम् । विद्रुमाः प्रवालाः, तैश्च वेदयो निर्मिता भवन्ति । वेदिरत्रोपवेशनभूमि. ॥ १७ ॥

**द्वाःसु विद्रुमदेहल्या भातं वज्रकपाटवत् ।**
**शिखरेष्विन्द्रनीलेषु हेमकुम्भैरधिश्रितम् ॥ १८ ॥**

द्वाःसु । द्वारेषु, विद्रुमाणामेव देहली भवति, तयाऽपि भातं प्रकाशमानम् । वज्रमयकपाटयुक्तं च । शिखरेषु गृहाणां शिरोभागेष्विन्द्रनीलमणिविरचितेषु स्थापितैः सुवर्णकुम्भैरधिश्रितम् । हेमकुम्भास्तमाश्रित्यैव तिष्ठन्ति, तेषामपि तत एव शोभा ॥ १८ ॥

**चक्षुष्मत्पद्मरागाग्र्यैर्वज्रभित्तिषु निर्मितैः ।**
**जुष्टं विचित्रवैतानैः सहारैर्हेमतोरणैः ॥ १९ ॥**

× चक्षुष्मन्तस्तेजस्वन्त, पश्यन्तीव प्रतीयमाना पद्मरागश्रेष्ठा, वज्रमयीषु भित्तिषु निर्मिता, तैरपि जुष्टम् । विचित्राणि वैतानानि चन्द्रातपा, मुक्ताहारसहिताः, पत्राकारसुवर्णैस्तोरणरूपैः सहिता. । तैरपि जुष्टम् ॥ १९ ॥

---

प्रकाशः।

× चक्षुष्मादित्यत्र । चन्द्रातपा इति । लोकभाषायां ' चँदोवा ' इति प्रसिद्धाः ।

हंसपारावतव्रातैस्तत्र तत्र निकूजितम्।
कृत्रिमान् मन्यमानैः स्वानधिरुह्याधिरुह्य च ॥ २० ॥

हंसादयः पक्षिविशेषाः, तेषां समूहैस्तत्र तत्र कूजितम्। चित्रपटेष्वपि ते हंसादयो विरचिताः। एते सत्याः। कृत्रिमान् चित्रगतान् स्वानकृत्रिमानेव मन्यमानैः कूजितमिति पूर्वेणैव संबन्धः। अधिरुह्याऽधिरुह्येति काष्ठपाषाणनिर्मिता अपि हंसादयः सकृदधिरुह्यापि मुञ्चन्तीति। आधिरुह्याऽधिरुह्येति बहुवारमप्यधिरुह्य मुञ्चन्तीति शिल्पनैपुण्यम् ॥ २० ॥

विहारस्थानविश्रामसंवेशप्राङ्गणाजिरैः।
यथोपजोषं रचितैर्विस्मापनमिवात्मनः ॥ २१ ॥

विहारस्थान क्रीडास्थानम्। विश्रामस्थानं बाहुयुद्धादिकं कृत्वा श्रमापनोदनार्थमुपवेशस्थानम्। संवेशनं सुखोपवेशनस्थानम्। प्राङ्गणं कोष्ठाद्बहिरङ्गणम्। अजिरमङ्गणम्, तैर्यथोपजोषं रचितैः यथायोग्यं निर्मितैः। आत्मनो योगाधीशस्य कर्दमस्याऽपि विस्मापनमिव। यद्यपि योगमायावैभवं जानाति, तथापि तादृक् कदापि न दृष्टमिति विस्मापनमिवेत्युक्तम् ॥ २१ ॥

अभिलषितगृहे दृष्टेऽपि स्वस्य शरीरं न तथा योग्यमिति तस्या अनुशयं मत्वा तस्याऽपि तथात्वाय तामुपदिशतीत्याह—

ईदृग्गृहं तत्पश्यन्तीं नातिप्रीतेन चेतसा।
सर्वभूताशयाभिज्ञः प्रावोचत् कर्दमः स्वयम् ॥ २२ ॥

ईदृग्गृहमिति। पूर्वोक्तरूपं गृहं नाऽतिप्रीतेन चेतसा पश्यन्तीं स्वयोगबलेन सर्वभूतहृदयाभिज्ञः तूष्णीमेव स्थितां तां स्वयमेव कर्दमोऽवोचत् ॥ २२ ॥

तद्वचनमाह—

निमज्ज्याऽस्मिन्ह्रदे भीरु! विमानमिदमारुह।
इदं शुक्लकृतं तीर्थमाशिषां यापकं नृणाम् ॥ २३ ॥

निमज्ज्येति। हे भीरु उत्तमे, भयं च न कर्तव्यम्, ज्ञात्वैव भीरुत्वं यतः स्नानार्थं प्रेष्यत इति। अस्मिन् ह्रदे निमज्ज्य इदं विमानमारुह। किं शीतोदके असंस्कृताया मज्जनेनेत्याशङ्क्याऽऽह—इदं शुक्लकृतं तीर्थमिति। शुक्लनारायणेन निर्मितं तीर्थं सर्वेषामाशिषां कामनानां प्रापकम्। अस्मिन् प्रविष्टे यथा तव मनोरथः, तादृशं तव शरीरं भविष्यतीति भावः। नित्यं स्नाने च महतां तथाऽभ्यनुज्ञा नाऽस्तीति न पूर्वं सिद्धि ॥ २३ ॥

तथैव कृतवतीत्याह—सा तद्भर्तुरिति द्वाभ्याम्—

सा तद्भर्तुः समादाय वचः कुवलयेक्षणा।
सरजं बिभ्रती वासो वेणीभूतांश्च मूर्धजान् ॥ २४ ॥
अङ्गं च मलपङ्केन संछन्नं शबलस्तनम्।

**आविवेश सरस्वत्याः सरः शिवजलाशयम् ॥ २५ ॥**

सा देवहूतिः, भर्तुर्वाक्यं समादाय, सरजं वासो वेणीभूतांश्च मूर्द्धजान् मलपङ्केन छन्नमङ्गं विभ्रती सरस्वत्याः सर आविवेश । वाक्यग्रहणे हेतुः—भर्तुरिति । सर्वो हि भारस्तस्यैव । सम्यगादानं देहसिद्धाविदमेव साधनमिति ज्ञानपूर्वकं ग्रहणम् । कुवलयेक्षणा उत्पलदलायताक्षी । अनेन क्रोधेर्ष्याखेदादयो भावा निवारिताः । वाक्यविश्वासादेव नेत्रप्रसादः, न तु सामग्री तादृशीति वक्तुं विपरीतां सामग्रीं वर्णयति–रजःसहितं मलिनं वस्त्रम् । वाह्यं साधनमावश्यकमसमीचीनमिति सूचितम् । वेणीभूता मूर्द्धजा बहिरङ्गभूताः, अङ्गं च । प्रत्यहं जायमानं मलं जलसंबद्धं पङ्कप्रायं जातम्, अतस्तदुद्धारः कठिन इत्यर्थः । शबलौ विवर्णौ स्तनौ यस्येत्यङ्गविशेषणम् । उपभोग्यावयवानां सुतरामयोग्यत्वं सूचितम् । सरस्वती सृष्टिहेतुः, अतोऽनया नूतनं संभविष्यतीति तत्र प्रवेशः । शिवं कल्याणकरम्, स्नानेऽपि नाऽपकारं जनयतीति उपकारस्तु वाक्यात् भविष्यत्येव, अपकारस्तु न भविष्यत्येवेत्यर्थः ॥ २४ ॥ २५ ॥

ततः किमासीत्तदाह—

**साऽन्तःसरसि वेश्मस्थाः शतानि दश कन्यकाः ।**
**सर्वाः किशोरवयसो ददर्शोत्पलगन्धयः ॥ २६ ॥**

*साऽन्तःसरसीति । स्वस्याऽऽनन्दांशो देवहूतिः, तस्यास्तत्त्वमितस्तिरोहितं योगं निमित्तीकृत्य सहस्रस्त्रीरूपेण जातम् । अतो न ताभिः काचित्क्षतिः । सरोमध्ये गृहमेकमद्भुतम्; इदं तु भगवत्कृतमेव, ऋषिणा निर्मितमित्यवचनात् । स्वनिर्मितस्त्रीणामुपभोगे दोषो देवहूतिविवाहश्च व्यर्थः स्यात् । तद्गतोऽप्यानन्दः पुनरस्यामेव संक्रमिष्यति । बहिरुपचारास्तु सेत्स्यन्ति । ताः पुनर्भगवदीया इति देवहूतिदेहस्थितिपर्यन्तं स्थित्वा पुनर्भगवद्योगमायायामेव प्रवेक्ष्यन्ति । तस्मिन् गेहे विद्यमाना दशशतानि कन्यका ददर्श । सर्वासामेकवयस्त्वं भगवत्कृतमेवेति ज्ञापयितुमाह–सर्वाः किशोरवयस इति । सहस्रसङ्ख्या कामशास्त्रानुसारेण तत्रत्योत्कर्षप्रतिपादनार्था । लोहितोत्पले स्त्रीस्वभावे रागासक्तिः सूचिता । गन्धनिरूपणमन्यत्र सङ्क्रमणार्थम् ॥ २६ ॥

ततो यज्जातं तदाह—

**तां दृष्ट्वा सहसोत्थाय प्रोचुः प्राञ्जलयः स्त्रियः ।**
**वयं कर्मकरीस्तुभ्यं शाधि नः करवाम किम् ॥ २७ ॥**

तां दृष्ट्वेति । देवहूतिं दृष्ट्वा ताः स्त्रियः परिचर्यार्थं विश्वासार्थं च प्राञ्जलयो भूत्वा प्रोचुः । तासां वचनमाह–वयमिति । कर्मकरीस्तुभ्यम्, त्वत्सेवार्थं वयं कर्मकर्यो दास्यः, अत एव शाधि आज्ञापय–ते किं करवामेति । अभीप्सितार्थो वक्तव्यः, शरीरसंस्कारस्त्वस्माकं स्वधर्म एवेति स चेन्न वक्तव्य इति भावः ॥ २७ ॥

---

प्रकाशः

* सान्तःसरसीत्यत्र । तत्त्वमिति । देवाकारणहेतुत्वम् ।

अतस्तथैव सेवां कृतवत्य इत्याह—**स्नानेनेति** द्वाभ्याम् ।

**स्नानेन तां महार्हेण स्नापयित्वा मनस्विनीम् ।**
**दुकूले निर्मले नूत्ने ददुरस्यै च मानदाः ॥ २८ ॥**
**भूषणानि परार्ध्यानि वरीयांसि द्युमन्ति च ।**
**अन्नं सर्वगुणोपेतं पानं चैवामृतासवम् ॥ २९ ॥**

*आदौ अमूल्येन स्नानेन स्नापयित्वा । मलापकर्षणं स्नानमादौ । सुखकरमङ्गमर्दादिस्नान द्वितीयम् । कर्पूराद्यमूल्यद्रव्यै स्नान तृतीयम् । **स्नानशब्दः** क्रियावाची तद्रूव्येप्वपि वर्तते, अग्निहोत्रशब्दवत् । अत, स्नानेन स्नापयित्वेत्युक्तम् । **मनस्विनीं** मानवतीम् । मनोः पुत्री वा, **मानवीमिति** पाठे । चकारादुद्वर्तनादि सर्वे संस्कारा अन्त परिधानार्थमुपरिवस्त्रार्थं च **दुकूले । निर्मले इति** । नूतनयोरौत्पत्तिकमलसम्भवात् । पक्षान्तरव्यावृत्त्यर्थमाह—**नूत्ने** इति । **अस्यै च ददुरिति** । तस्या समानार्थं पुरतो बहून्येव दुकूलानि स्थापितानि, सर्वाभ्य सखीभ्यो दत्त्वा परिधेहीति । तथा सति तस्या समानन भवति । यत एता **मानदाः । भूषणानि** नानाविधानि च दत्तवत्य । **परार्ध्यानि** अमूल्यानि । गुणतोऽप्यमूल्यानि भवन्तीति **वरीयांसीत्युक्तम्** । अतिसुन्दराणि कान्तियुक्तानि च । **अन्न** भोजनार्थम् । सर्वे गुणा व्यञ्जनादयः । पान च पानकादि, अमृतरूपमासवरूप च । मादकानि हि द्रव्याणि कामशास्त्रे रसोत्पत्त्यर्थमुक्तान्यनिषिद्धानि जातीफलादीनि, न तु मदिरादीनि निषिद्धानि । अन्यथा भर्त्रा सह स्मरसङ्ग्रामी न स्यात् ॥२८॥२९॥

दर्पणं दर्शनार्थं दत्तवत्य. । प्रमाणार्थं तद्दृष्टमेव तस्या रूप वर्णयति—**अथेति** चतुर्भिः, कामपूर्तेनारूपायास्तस्याश्चतुरङ्गत्वात्—

**अथाऽऽदर्शे स्वमात्मानं स्रग्विणं विरजाम्बरम् ।**
**विरजं कृतस्वस्त्ययनं कन्याभिर्बहुमानितम् ॥ ३० ॥**
**स्नातं कृतशिरःस्नानं सर्वाभरणभूषितम् ।**
**निष्कग्रीवं वलयिनं कूजत्काञ्चननूपुरम् ॥ ३१ ॥**
**श्रोण्योरध्यस्तया काञ्च्या काञ्चन्या बहुरत्नया[१] ।**
**हारेण च महार्हेण रुचकेन च भूषितम् ॥ ३२ ॥**
**सुदता सुभ्रुवा श्लक्ष्णस्निग्धापाङ्गेन चक्षुषा ।**
**पद्मकोशस्पृधा नीलैरलकैश्चोपशोभितम् ॥ ३३ ॥**

---

प्रकाशः ।

* स्नानेनेत्यत्र । अग्निहोत्रशब्दवदिति । यथा ' यावज्जीवमग्निहोत्रं जुहोति ' इत्यादौ क्रियावाचकोऽप्यग्निहोत्रशब्दो ' यस्याऽग्निहोत्रमधिश्रितममेध्यमापद्येत ' इति बह्वृचब्राह्मणे तद्रूव्यवाचकस्तद्वदित्यर्थ ।

---

१ मध्य ग ङ, २ उपरिशर्मम् (?) स ग ङ

सर्वालङ्करणानन्तरमथ भिन्नप्रक्रमेण । स्वरुच्यनुसारेण विरचनार्थमथेत्याह। आत्मानं देहम्, स्वं स्वकीयम् । ससिप्पयालभावो जात इति तद्व्यावृत्त्यर्थं स्वपदप्रयोगः । स्रग्विणं मालायुक्तम् । विरजानि अम्बराणि यस्याः । देहोऽपि विरजः । कृतं स्वस्त्ययनं शुश्रूषणं यस्य । प्रतिबिम्बेऽपि कन्यानां सान्निध्यात्कन्याभिर्बहुमानितम् ॥ स्नातम् । पुनः कृतं शिरःस्नानं येन । अनेन स्त्रीणां सर्वदा न शिरःस्नानम्, स्नानद्वयं च सूचितं भिन्नप्रकारेण । सर्वाभरणानि नित्यान्यावश्यकानि । निष्कं पदकं ग्रीवायां यस्य । वलयिनमिति स्वाभाविकाभरणाद्यतिरिक्तो वलयः । कूजती शब्दायमाने काञ्चननिर्मिते नूपुरे यस्य श्रोण्योरध्यस्ता या काञ्ची सुवर्णमयी बहुरत्नयुक्ता, हारश्च मुक्तानाममूल्यः । रुचकः कुङ्कुमबिन्दुः चकारात्सर्वाण्येवानुक्तानि । तैः सर्वैरेव भूषितम् ॥ पद्मकोशस्पृधा मुखेन उपशोभितम् । लसन्मुखमिति पाठेऽपि वक्रेण पद्मकोशस्पृधा लसत् संपूर्णमेव मुखम् । सुदतेति वक्रविशेषणम्। शोभना दन्ता यस्मिन्निति । शोभना याभ्रूः । श्लक्ष्णः स्निग्धोऽपाङ्गो यस्मिन्, तादृशचक्षुषा नीलैरलकैश्च मुखस्य पार्श्ववर्तिभिः सर्वैरेव लसत् मुखं यस्य ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

एवमात्मानं दृष्ट्वा तस्य भोग्यतां मत्वा भोक्तारं सस्मारेत्याह—

**यदा सस्मार ऋषभमृषीणां दयितं पतिम् ।**
**तत्र चाऽऽस्ते सह स्त्रीभिर्यत्राऽऽस्ते स प्रजापतिः ॥ ३४ ॥**

यदा सस्मारेति । आत्मनः पतिम्, दयितं परमप्रेमास्पदम्, ऋषीणामृषभम् । स्वधर्मेण लौकिकधर्मेण वैदिकधर्मेण च भजनीयः कर्दमो भवतीति विशेषणत्रयम् । सिद्धस्थानत्वात् मनःसिद्धिर्जातेत्याह—तत्र चाऽऽस्त इति । पूर्वं यत्र प्रजापतिरास्ते तत्रैव स्त्रीभिः सह स्वयमप्यास्ते ॥ ३४ ॥

एवं स्वानुभूतं वैभवं दृष्ट्वा भर्तुर्माहात्म्ये परमाश्चर्यं प्राप्तवतीत्याह—

**भर्तुः पुरस्तादात्मानं स्त्रीसहस्रवृतं तदा ।**
**निशाम्य तद्योगगतिं संशयं प्रत्यपद्यत ॥ ३५ ॥**

भर्तुरिति । भर्तुरग्रे स्वात्मानं स्त्रीसहस्रयुतं यदा अपश्यत्, तदा तस्य योगगतिं दृष्ट्वा साधनापरिज्ञानात् परमं संशयमापद्यत, निर्धारणे प्रमाणाभावात् । संशयकार्यमाश्चर्यं वाऽऽपद्यत ॥३५ ॥

स्वमाहात्म्ये ज्ञाते पश्चात्तया सह सङ्गं कृतवानित्याह—

**स तां कृतमलस्नानां विभ्राजन्तीमपूर्ववत् ।**
**आत्मनो बिभ्रतीं रूपं संवीतरुचिरस्तनीम् ॥ ३६ ॥**

स तामिति । कृतं मलस्नानं ययेति बाह्यशुद्धिरुक्ता । तामित्यान्तरी । अपूर्ववत् नूतनवद्विभ्राजन्तीमिति नूतनरसोत्पादनार्थमुक्तम् । एतावताऽप्यलंकारेण विवाहकालरूपमेव प्राप्तवती, न त्वलौकिकं किंचिज्जातमिति वदन् तस्याः स्वभावसौन्दर्यं वर्णयति—आत्मनो बिभ्रतीं रूपमिति । सम्यक् वीतौ कञ्चुकादिना वेष्टितौ रुचिरौ स्तनौ यस्याः ॥ ३६ ॥

स्वदत्तं वैभवमधिकमाह—

**विद्याधरीसहस्रेण सेव्यमानां सुवासम् ।**

**जातभावो विमानं तदारोहयदमित्रहन् ! ॥ ३७ ॥**

विद्याधरीसहस्रेणेति । ता भगवदीया विद्याधर्यः, 'सिद्धा विद्याधराश्चैव योग एव प्रतिष्ठिता' इति । सुवाससमिति कामभावे उद्दीपनार्थम् । तथा वर्णनायाः फलमाह—जातभाव इति । जातो भावः कन्दर्पो यस्य । तद्विमानं तामारोहयत् । अमित्रहन्निति श्रोतुः कामाभावार्थम् । अन्यकामलीलाश्रवणेन जायमानः कामः दुष्टो भवतीत्यमित्रत्वम् ॥ ३७ ॥

तस्य कामलीलामाह—तस्मिन्निति चतुर्भिः—

**तस्मिन्नलुप्तमहिमा प्रिययाऽनुरक्तो विद्याधरीभिरुपचीर्णवपुर्विमाने ।**
**बभ्राज उत्कचकुमुद्गणवानपीच्यस्ताराभिरावृत इवोडुपतिर्नभःस्थः ॥३८॥**

रागो हि महत्त्वनाशको भवतीति दृष्टादृष्टविभेदेन तदभावार्थमाह—अलुप्तमहिमेति । स्वयमपि विद्याधरीभिरुपचीर्णवपुः । रञ्जकद्रव्येणैव प्रियया अनुरक्तः, प्रियागतरागेण प्रियात्वाद्रक्त इत्यर्थः । उत्कचकुमुद्गणवान् विकसितकुमुद्गणयुक्तश्चन्द्रः । उद्गताः कचा यासाम्, कौ मुदं(?)याभ्यः; केशवत्यः सुखदायिन्यो याः स्त्रियः तद्गणावृतः । अपीच्यः स्त्रीणां प्रियः । सौन्दर्ये गुणसूचकम् । रसालम्बनत्वं स्त्रीरुच्या । तासामपि रसविकाशकत्वं तच्छास्त्राभिज्ञत्वं बोधयति । स्त्रीभिश्च सेवितवपुः, तत्कार्योपयोगिकोमलत्वापादिका हि ताः । तासु रागाभावार्थं तया रञ्जनमुक्तम् । तस्मिन् प्रसिद्धे विमाने च बभ्राजे । राजकन्या हि वैभवमपेक्षते, अतः प्रथमतः शोभातिशयो वर्णितः । सर्वलोकप्रसिद्धाश्च ते जाता इति दृष्टान्तेन स्पष्टयति—ताराभिरावृत इवोडुपतिर्नभस्थ इति । आकाशवद्विमानस्य विशालता च सूचिता । प्रदेशान्तरे यथा तारा अन्या एवावरका भवन्ति, तथाऽत्रापीति । यथा शय्यादिपदार्थास्तत्र तत्र, तथा स्त्रियोऽपीति ज्ञापितम् ॥ ३८ ॥

विहारमाह—

**तेनाऽष्टलोकपविहारकुलाचलेन्द्रद्रोणीष्वनङ्गसखमारुतसौभगासु ।**
**सिद्धैर्नुतो द्युधुनिपातशिवस्वनासु रेमे चिरं धनदवल्ललनावरूथी ॥ ३९ ॥**

तेनेति । अष्ट ये लोकपालाः, तेषां विहारस्थानभूताः कुलाचलेन्द्रस्य मेरोः द्रोण्यः तासु रेम इति संबन्धः । *यथा धर्मे देशादयोऽङ्गभूताः, एवं कामेऽपि । अक्षयो हि स रसस्तत्रतत्राऽभिव्यज्यते, यथाऽऽकरे*ष्वर्थः । तस्य देशस्य रसोत्पादने अनुभावसान्निध्यमाह—अनङ्गसखमारुतो दाक्षिणात्त्यो वातः, कामजनकोऽन्यो वा । रमणे वा तस्याऽत्यन्तापेक्षा । अतस्तेन सौभगासु । सिद्धानां स्तोत्राणि च प्रोत्साहकानि, अन्यथा वैराग्यादिभी रस उपहन्येत । द्युधुनी गङ्गा, तस्याः पाताः सीतादयः प्रवाहाः । पतितानां वातैः शिवः स्वनो यासु । अशुद्धे हि भौतिकानि पापानि सङ्क्रान्तानि भवन्ति, तदभावार्थमुक्तम् । धनदवदिति द्रव्यक्षत्यभावः । ललना स्त्री तत्समूहयुक्तः । परितः स्त्रीणां दर्शनम् ॥ ३९ ॥

न केवलं तानि स्थानानि दृष्टानि, किन्तु तत्र रमणमपि कृतवानित्याह—

**वैश्रम्भके सुरसने नन्दने पुष्पभद्रके ।**
**मानसे चैत्ररथ्ये च स रेमे रामया रतः ॥ ४० ॥**

वैश्रम्भके सुरसन इति । वैश्रम्भकादीनि दिक्पालकानां भोगोपवनानि षट्स्थानानि गणितानि भगवद्दत्तानीति ज्ञापयितुम् । सा हि रामात्वं प्राप्ता । बन्धादिकरणात् स्वयमपि तया रतः ॥ ४० ॥

१ भगवत्कृतानि क. ग. ङ.

एवमलौकिकोत्कर्षमुक्त्वा तत्रत्यसजातीयेभ्य उत्कर्षमाह—

भ्राजिष्णुना विमानेन कामगेन महीयसा ।
वैमानिकानत्यशेत चरँल्लोकान् यथाऽनिलः॥ ४१ ॥

भ्राजिष्णुनेति । वैमानिकानयमत्यशेत, सर्वप्रकारेण तानतिक्रम्य स्थितः । तेषां विमानानि न स्वप्रकाशभूतानि, तेषां च मर्यादा विमानस्य, न हि ते भूमौ समायान्ति, नापि सिद्धपदादग्रे गच्छन्ति, इदं तु कामगम्, अपरिमितं चैतत् । अलश्चतुर्भिर्गुणैरत्यशेत । क्रिययाऽप्यतिक्रममाह—चरँल्लोकानिति । लोकाल्लोकान्तरं गच्छन्, अनिल इव, तानत्यशेतेत्यर्थः ॥ ४१ ॥

एवं भोगमुपपाद्य यत एतावत्त्वं तदाह—

किं दुरापादनं तेषां पुंसामुद्दामचेतसाम् ।
यैराश्रितस्तीर्थपदश्चरणो व्यसनात्ययः ॥ ४२ ॥

किं दुरापादनमिति । प्रतिनियतभोगा यस्य कस्यापि न भवन्ति, तथा सति मर्यादाभङ्गः स्यात् । सर्वं च भवति तेन सह । तत्राऽपि मर्यादा । अतोऽस्य कथमेतज्जातमित्याशङ्क्य तदुपपादयति—यैराश्रितस्तीर्थपदश्चरणः । 'चरणं पवित्रं विततं पुराणम्' इति श्रुत्या चरणस्य व्यापकत्वं, सनातनत्वम्, अपहतपाप्मत्वं च । आश्रितानामपि तथात्वसंपादकत्वं च । अतः सर्वगतो भोगः चरणाश्रये न विरुध्यते। तारतम्यं च पापात्, तदप्यहतपाप्मत्वान्न भवति । पुराणत्वाच्च न तत्र कालस्य प्रतिबन्धकत्वम् । अतः स्वभावत एव सर्वे भोगाश्चरणाश्रये भवन्ति । किञ्च, कामिता अपि भवन्ति । तीर्थानि कामितदानार्थे केवलानि, तान्यपि चरणे सन्तीत्याह—तीर्थानि पादे यस्येति । सर्वाणि च फलानि विचित्रव्यसने संसारे भोक्तुमशक्यानि, व्यसनानां बाधकत्वात् । तान्यपि चरणो दूरीकरोतीत्याह—व्यसनात्यय इति । व्यसनानामत्ययो यस्मात्; 'अतिपाप्मानमरातिं तरेम' इति वाक्याच्चरणस्य व्यसननाशकत्वं सिद्धम् । तस्याश्रयणं च न सर्वेषां भवति, किन्तु केषांचिदेवेति । तदर्थं देहान्तःकरणयोर्गुणद्वयमाह—पुंसामिति स्वातन्त्र्यम्, तेषामिति प्रसिद्धिः, तदुभयधर्मवत्त्वेन । केचनैव लोकादिभ्यः स्वतन्त्रा भवन्ति । अन्तःकरणधर्ममाह—उद्गतं दाम चित्ते येषाम् । बन्धकं हि दाम, अपरिमितश्चरणः; न हि बद्धे परिच्छिन्ने स्थापयितुं शक्यते । अतोऽन्तःकरणस्य देहस्याऽपि प्रतिबन्धकत्वाभावादुभयोपभोग्यः । तेषां न कोऽपि दुरापः । दुःखेनापादनं यस्येति परिच्छिन्नस्यैव भवन्ति ॥ ४२ ॥

एवं सोपपत्तिकं भोगमुक्त्वोपसंहरति—

प्रेक्षयित्वा भुवो गोलं पत्न्यै यावान् स्वसंस्थया ।
बह्वाश्चर्यं महायोगी स्वाश्रमाय न्यवर्तत ॥ ४३ ॥

प्रेक्षयित्वेति । तस्याः कामपूरणे पत्नीत्वमेव साधकम् । योगबलेन नैकत्र प्रदर्शनम्, किन्तु स्वसंस्था[1] यावान् । यो यत्र यावान् वर्तते, तां तत्रैव नीत्वा प्रदर्शितवान् । बहून्याश्चर्याणि यत्र, अन्यथा न पश्येत् । तथा दर्शने सामर्थ्यम्—महायोगीति । स्वाश्रमः सिद्धक्षेत्रम् ॥ ४३ ॥

---

१ एतानि क. प

अन्तरिक्षे अपश्यजनेने रुद्रदेवत्यो भवतीति ऋषीणामुत्पत्तिसिद्ध्यर्थं भूमावागत्य प्रजामुत्पादितवानित्याह—

**विभज्य नवधाऽऽत्मानं मानवीं सुरतोत्सुकाम् ।**
**रामां निरमयन् रेमे वर्षपूगान् मुहूर्तवत् ॥ ४४ ॥**

विभज्येति । नवधा आत्मानं विभज्य, भिन्नभावेन नवरूपाणि कृत्वा, तस्यास्तथा सहने सामर्थ्यम्, मानवीमिति । बहुधा करणे हेतुः—सुरतोत्सुकामिति । भिन्नभावे वैलक्षण्ये ज्ञानेऽपि तस्याः शङ्काभावायाऽऽह—रामामिति । रामायां हि लज्जा, भयं च नोत्पद्यते, तथाभावादेव तस्या रामात्वम् । अतस्तां नितरां रमयन्, स्वयं च वर्षपूगान्मुहूर्तवद्रेमे । कालस्य गणनायां हि वर्षा भवन्ति, आनन्दानुभवाभावे न गणना । अतः सुरतान्तकालः सुखानुभवहेतुर्मुहूर्तमात्रमिति तथैव सर्वं कालं मेने ॥ ४४ ॥

तस्या अपि कालज्ञानाभावमाह—

**तस्मिन्विमान उत्कृष्टां शय्यां रतिकरीं श्रिता ।**
**न चाऽबुध्यत तं कालं पत्याऽपीच्येन संगता ॥ ४५ ॥**

÷तस्मिन्निति । आश्रयधर्मादेव प्रकाशमानात्सूर्यादिगत्या कालाज्ञानम् । शय्या च निद्रादिजननात् मोहिका । तत्रापि सा रतिकरी, अन्तःस्थितमानन्दं प्रकटयति । अतो भोगकालो यावान् जातः, तं च नाऽबुध्यत । आत्मानं पूर्वावस्थां च । पतिश्च परमसुन्दरः, तत्कालगुणेष्वनुकूलः ॥ ४५ ॥

उभयोः कालाज्ञानेऽपि स्वयं भोगकालमाह—

**एवं योगानुभावेन दंपत्यो रममाणयोः ।**
**शतं व्यतीयुः शरदः कामलालसयोर्मनाक् ॥ ४६ ॥**

एवमिति । योगानुभावेन दम्पत्यो रममाणयोः सतोः शतं शरदो व्यतीयुः । शतं वर्षा जाताः । भोगे शरत्काल उत्तम इति शरत्प्रयोगः । तथापि कामे न तृप्तिः, अनलत्वात्तस्य । अतस्तावानपि कालो मनागेव जातः । अतिसूक्ष्मकालो मनाक् ॥ ४६ ॥

एवं रमणान्ते तस्यां बीजाधानं कृतवानित्याह—

**तस्यामाधत्त रेतस्तां भावयन्नात्मनाऽऽत्मवित् ।**
**नोधा विधाय रूपं स्वं सर्वसंकल्पविद्विभुः ॥ ४७ ॥**

तस्यामिति । तामेव भावयन्निति स्त्र्यपत्यर्थसिद्ध्यर्थमुक्तम् । न हि भावनामात्रेण तथा भवतीत्याशङ्क्याऽऽह—आत्मविदिति । स ह्यात्मानं जानाति, अतः सर्वज्ञत्वात्तथाकरणं च । एतच्च स्वत एव, नत्वन्योपदेशात् । तदाह—आत्मनेति । स्वरूपं च नवधा विधाय । अन्यथा एकैव कन्या, एकरूपा वा स्युः । अतः नोधा विधाय । नवधेत्यत्र परोक्षकथनार्थं कृतसंप्रसारणस्य प्रयोगः । स्वमेव रूपं कृतमिति

प्रकाशः।

÷ तस्मिन्नित्यत्र । विमानशब्दार्थमात्रोपयोगिनमाहुः—आश्रयेत्यादि । प्रकाशमानो य आश्रयस्य विमानस्य विगतमानलक्षणो धर्मस्तं प्राप्येत्यर्थः । पञ्चम्यत्र ल्यब्लोपे । चकारसमुच्चितमर्थमाहुः—आत्मानमित्यादि ।

न दूषणम् । सर्वेषां मरीच्यादीनां संकल्पो भार्याप्राप्त्यर्थः, तं जानातीति । तथा करणे हेतुः । विभुरिति सामर्थ्यम् ॥ ४७ ॥

एवं पितृत उत्पत्तिमुक्त्वा मातृत आह—

अतः सा सुषुवे सद्यो देवहूतिः स्त्रियः प्रजाः ।
सर्वास्ताश्चारुसर्वाङ्ग्यो लोहितोत्पलगन्धयः ॥ ४८ ॥

अत इति । सद्य एव सुषुवे, न तु दशमासानन्तरम् । देहनिष्पत्तिस्तु आधानकर्तुर्विभुत्वात् । तत्त्वमतः शब्देनोक्तम् । प्रकर्षेण जाता अपि स्त्रिय एव सुषुवे । यतः सा देवहूतिर्देवप्रकृतिकैव । ता वर्णयति—सर्वास्ता इति । चारुसर्वाङ्ग्य इति अङ्गवैकल्याभावः सौन्दर्यातिशयश्चोक्तः । जातिस्त्रियश्च जाता इत्याह—लोहितोत्पलगन्धय इति । रागार्थं भोगसमय एव गन्धप्राकट्यार्थं च लोहितोत्पलपदम् ॥ ४८ ॥

एवं कृत्वा कर्दमश्चलितुमारम्भं कृतवान् । तदा तस्याः तज्ज्ञानं जातमित्याह—

पतिं सा प्रव्रजिष्यन्तं तदाऽऽलक्ष्योशती सती ।
स्मयमाना विक्लवेन हृदयेन विदूयता ॥ ४९ ॥
लिखन्त्यधोमुखी भूमिं पदा नखमणिश्रिया ।
उवाच ललितां वाचं निरुध्याऽश्रुकलां शनैः ॥ ५० ॥

पतिमिति । लिखन्तीति । प्रव्राजिष्यन्तं संन्यासप्रकारेण गमने कृतनिश्चयम् । तद्गमनमालक्ष्य इङ्गितैर्ज्ञात्वा, कमनीया सती, प्रतिबन्धमकृत्वा विज्ञापनामेव कृतवतीत्याह । उवाच ललितां वाचमिति द्वितीयश्लोके संबन्धः । विक्लवश्चित्तखेदः, स्वस्यैव तथा दोषो जात इति । स्मयमाना काष्ठहास्यं कुर्वाणा । हृदयेन च विशेषेण दूयता दुःखं प्राप्यता उपलक्षिता । स्वचिन्तां स्थापयितुमधोमुखी भूत्वा भूमिं लिखन्ती । देहकान्तिसहितैव तथा वदतीति ज्ञापयितुम्—नखमणिश्रिया पदेति । लेखने करणमुक्तम् । नखा एव मणयः, तेषां च तथैव श्रियो यत्र । ललितां मनोहराम् । रोदने न हि कार्यं सेत्स्यतीत्यश्रुकलां निरुद्ध्य । शनैरिति पूर्वभावापगमः सूचितः ॥ ४९ ॥ ५० ॥

सप्तभिस्तस्या वाक्यान्याह—सर्वं तदित्यादिभिः—

## देवहूतिरुवाच ।

सर्वं तद्भगवान् मह्यमुपोवाह प्रतिश्रुतम् ।
अथापि मे प्रपन्नाया अभयं दातुमर्हसि ॥ ५१ ॥

परलोकार्थविज्ञप्तिर्विवाहः कन्यकासु च । भोगाभावस्य कथनं सत्सङ्गश्च प्रसङ्गतः ॥१॥ फलाभावश्च कं तस्य सर्वं व्यर्थं ततोऽन्यथा । स्वदोषाभावकथनं कृपासिद्ध्यै निरूपितम् ॥२॥ यथा पूर्वमुक्तं प्रार्थितम्, एवमिदानीमभयं प्रार्थयते । सतां हि सकृदेव प्रार्थनोचिता, तथापि स्वदैन्यात् पुनः प्रार्थनमिति ज्ञापयितुं पूर्वप्रार्थिते शेषो नास्तीत्याह—सर्वमिति । यत्प्रतिश्रुतं तत्सर्वमेव भगवान् मह्यमुपोवाह समीपे उद्वासमानीय दत्तम् । तथा च न दातव्यमवशिष्यते । अथापि शरणागताया अभयं दातुमर्हसि

यथा शरणागतस्य वाक्यं प्रार्थितं क्रियते, तथा शरणागतिसिद्ध्यर्थमभयमपि देयम्, अन्यथा प्रपन्न पालितो न भवेदिति। अनेन मम परलोकार्थमुपायः कर्तव्य इति विज्ञापितम् ॥ ५१ ॥

दुहितॄणां च विवाह कर्तव्य इत्याह—

**ब्रह्मन् दुहितृभिस्तुभ्यं विमृग्याः पतयः समाः।**
**कश्चित् स्यान्मे विशोकाय त्वयि प्रव्रजिते वनम् ॥ ५२ ॥**

ब्रह्मन्निति। दुहितृभिः पतयो विमृग्याः स्वसमाः। तुभ्यं तव। दैन्यमुक्तमिति केचित्। कन्यानां पतिसंबन्धस्त्वन्मनोरथसिद्ध्ये। तथापि संशयो भावी तस्मात्त्वं ताः प्रयच्छ हि।१।प्रार्थनान्तरमाह—त्वयि वनं प्रव्रजिते मे विशोकाय कश्चित् स्यादिति। कन्यास्तु गमिष्यन्ति, पुत्रो देय इत्यर्थः ॥ ५२॥

नन्वेतन्मिषेण पुनर्भोगं याचस इत्याशङ्क्याऽऽह—

**एतावताऽलं कालेन व्यतिक्रान्तेन मे प्रभो!।**
**इन्द्रियार्थप्रसङ्गेन परित्यक्तपरात्मनः ॥ ५३ ॥**

एतावताऽलमिति। एतावतैव व्यर्थं व्यतिक्रान्तेन कालेनालम्। अतः परमवशिष्टे काले पुरुषार्थः साधनीय इत्यभिप्रायः। गतकालस्य दोषमाह—इन्द्रियार्थप्रसङ्गेनेति। इन्द्रियार्थेषु प्रकृष्टः सङ्गो यस्मात्, तादृशेन कालेन कृत्वा परित्यक्तः परो भगवान् आत्मा येन। तादृशस्य स्वार्थनाशकस्य एतावतैवाऽलम् ॥ ५३ ॥

तर्हि किं कर्तव्यमित्याकाङ्क्षायामाह—

**इन्द्रियार्थेषु सज्जन्त्या प्रसङ्गस्त्वयि मे कृतः।**
**अजानन्त्या परं भावं तथाप्यस्त्वभयाय मे ॥ ५४ ॥**

इन्द्रियार्थेष्विति। साधनं तु सत्सङ्गः, तन्मम प्रसङ्गादेव जातम्। यथा कस्यचिद्रोगार्थं भक्षिता शर्करा औषधं भवति, तथा इन्द्रियार्थेषु विषयभोगेषु सज्जन्त्या मया त्वयि प्रकृष्टः सङ्गः कृतः, तथापि सत्सङ्गो भवत्येव। यद्यपि सत्त्वेन ज्ञान न यथं सत्प्रकारकश्च सङ्गो न भवति। तथापि वस्तुतः सत्सङ्गो भवतीति फलिष्यतीत्याह—अजानन्त्येति। ते परमो भावोऽतिसामर्थ्यं यद्यपि न ज्ञातम्। सेवादिषु स[2]त्प्रकारेणाऽपि सङ्गोऽस्ति, पतिव्रतात्वात्। न सेवाया भोगोपयोगः, भोगश्चाऽनिषिद्धः परं माहात्म्यज्ञानमेवावशिष्यते। अज्ञानेऽपि तत्सफलमस्त्विति प्रार्थना—तथापि मे अभयायास्त्विति ॥ ५४ ॥

ननु क्रियातः फलम्, न तु द्रव्यतः। सताऽपि द्रव्येण असत्कार्यकरणे असदेव फलम्, असताऽपि सत्कार्यकरणे सदेवेति। तस्मात् कृतो न सत्सङ्ग इति चेत्तत्राऽऽह—

**सङ्गो यः संसृतेर्हेतुरसत्सु विहितो धिया।**
**स एव साधुषु कृतो निःसङ्गत्वाय कल्पते ॥ ५५ ॥**

---

१ शरणागत क. ख. ड. २ सत्प्रकारकः ग. ३ माहात्म्याज्ञानम् क. ख. ड. ४ कृतो न सत्सङ्ग. ख. ग. ङ. च.

*सङ्ग इति । भवेदेतदेवम्, यदि कार्यं सदसतोर्भिन्नं भवेत् । द्रव्यसामर्थ्यादेव कार्यस्य सत्त्वम्, अन्यथा त्वसत्त्वमेव; यतः सर्व एव सङ्गो धिया विहितः संसृतेर्हेतुर्भवति । अर्थात्तदसत्सु भवति, अतः सङ्गो न समीचीनः स्वतः। स एव साधुषु चेत् क्रियते, तदा निःसङ्गत्वाय कल्पते । साधवो हि स्वसंबन्धात् क्रियात्वमेव निवारयन्ति, फले का चिन्ता? अतः सतां बलिष्ठत्वान्न क्रिया फलवती । अतो मम सत्सङ्गोऽस्त्विति सिद्धम् ॥ ५५ ॥

तर्ह्येतादृशोऽपि किमपेक्ष्यत इत्याशङ्क्याऽऽह—

**नेह यत्कर्म धर्माय न विरागाय कल्पते ।**
**न तीर्थपदसेवायै जीवन्नपि मृतो हि सः ॥ ५६ ॥**

नेह यत्कर्मेति । त्रिविधकर्मण एव सफलत्वम्, येन कर्मणा धर्मो भवति, वैराग्यं, भक्तिर्वा । यस्तु न तादृशकर्मकर्ता स जीवन्नपि मृत एव। जीवतो मृताद्वैलक्षण्यं कर्मकरणम्। तच्च कर्म स्वार्थं, स्वाम्यर्थम्, इष्टार्थं वा चेद्भवेत्तदा सफलम्, रोगेनार्थे चेद्विपरीतं फलम्, तैर्मरणस्याऽऽवश्यकत्वात्। अतो मृत एवेत्युक्तम्॥५६॥

तादृशं च मया कृतमित्याह—

**साऽहं भगवतो नूनं वञ्चिता मायया दृढम् ।**
**यत्त्वां विमुक्तिदं प्राप्य न मुमुक्षेय बन्धनात् ॥ ५७ ॥**

साऽहमिति । तथा करणे त्वन्मायामोहितत्वमेव हेतुः । तदाह—सा एतादृश्यप्यहं विवेकवती, मत्तोऽप्यधिकस्य तव भगवतो मायया नूनं वञ्चिता। कार्यवशादवसीयते, अन्यथा त्वां विमुक्तिदं प्राप्य संसारबन्धनादपि कथं न मुमुक्षेय, न मुक्ता जाताऽस्मि। सत्त्वात् मोक्षदातृत्वम् । बन्धनं कामादिः, विमुक्तिः कालान्मुक्तिः । तस्मान्न केवलं स्वदोषादहमेव जाता, किन्तु त्वया मोहितेति त्वयैवोद्धारः कर्तव्य इति भावः॥५७

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां तृतीयस्कन्धे त्रयोविंशाध्यायविवरणम् ।

---

प्रकाशः ।

* सङ्ग इत्यत्र । कार्यमिति । क्रियारूपं कार्यम् । सतां बलिष्ठत्वात् क्रिया फलवतीति । अयमर्थः । जैमिनिमते नये ' हिरण्यमात्रेयाय ददाति ' ' सोमेन यजेत ' इत्यादौ क्रियापदस्याऽपूर्वप्रतिपादकत्वात् क्रियैव मुख्या फलहेतुः । लोकेऽपि न्यायागतद्रव्येण भूताद्याचरणे राजदण्डादिदर्शनात् अन्यायागतद्रव्येण गवादिपालनेऽन्नादिदाने च सत्कारादिदर्शनाच्च क्रियैव फलहेतुर्यद्यपि दृश्यते, तथापि प्रस्तुतवाक्योक्तसङ्गतिक्रियायां द्रव्यादेव फलप्रतिपादनेन लोकेऽपि तथा दर्शनेन च व्यभिचारान्न क्रियात्वेन फलवत्त्वेन नियमः। किन्तु द्रव्यक्रिययोर्मध्ये यद्बलिष्ठं तत्फलवदिति बलिष्ठत्वेन फलवत्त्वेन नियमः । एवं च नरकालादिदर्शनासुरः, शिवेन च कृतो यज्ञादिध्वंसोऽपि युज्यते । ' तपो न तत्क ' ? इत्यादि भारतवाक्यमपि सङ्गच्छत इति । शेषमतिरोहितार्थम् ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे त्रयोविंशाध्यायविवरणं सम्पूर्णम् ।

---

१ सत्क्रिया ग. ङ.　　२ चौरार्यम् ग. च.

# अथ चतुर्विंशाध्यायविवरणम् ।

* चतुर्विंशे तथाऽध्याये मोक्षो बुद्धिश्च वर्ण्यते ।
कपिलो हि हरिर्बुद्धिरुपदेशो भजिस्तथा ।
ऋणत्रयपरित्यागो मोक्षार्थं तस्य वर्ण्यते ॥ १ ॥

पूर्वाऽध्याये देवहूतेर्वैराग्यं प्रार्थना चोक्ता, अन्ते चाऽऽशाभावः सूचितः। तत्र प्रथममाशाभावं निराकरोतीत्याह—

## मैत्रेय उवाच ।

**निर्वेदवादिनीमेवं मनोर्दुहितरं मुनिः ।**
**दयालुः शालिनीमाह शुक्लाभिव्याहृतं स्मरन् ॥ १ ॥**

निर्वेदवादिनीमिति । निर्वेदो वैराग्यम् । विषयभोगेन निर्विण्णा सा । स्वस्य तावत्पर्यन्तमेव पति स्वामिति संकेतात् मनोरेषां दुहितेत्युक्तम् । मुनिरिति भाव्यर्थज्ञानम् । सान्त्वने हेतु—दयालुरिति । शालिनीं विनीतां मनोहरां वा । यद्यपि देवगुह्य न वक्तव्यम्, तथाप्येषा विरक्ता, सत्कुलप्रसूता, विनीता चेति गुह्यकथनम् । किञ्च, शुक्लाभिव्याहृतं स्मरन् । शुक्लनारायणेन 'अथाहं स्वांशकलया' इति पुत्रो भविष्यामीत्युक्तम्, तदपि स्मरन् । सतामपि मोक्षसाधकत्वं भगवत्संबन्धजननात् ॥ १ ॥

मोक्षदस्तु भगवानेव । स चेत्पुत्रो भविष्यति, तदा सर्वमेव कार्यं सेत्स्यतीति तां तथा बोधयन्नाश्वासयति—

## ऋषिरुवाच ।

**मा खिदो राजपुत्रीत्थमात्मानं प्रत्यनिन्दिते ।**
**भगवांस्तेऽक्षरो गर्भमदूरात्संप्रपत्स्यते ॥ २ ॥**

मा खिद इति । इत्थं स्वजन्मवैफल्यादिवचनैः, हे राजपुत्रि त्वं मा खिदः । आत्मानं स्वात्मानं मां वा लक्ष्यीकृत्य; कृतस्य कर्मणो नाशकत्वाभावात्, अन्यथा अन्ते वैराग्यं न स्यात् । तदाह—हे अनिन्दित इति । अनिन्दितत्वस्य निदर्शनमाह—भगवांस्ते गर्भमदूरात्संप्रपत्स्यत इति । अक्षर इति ज्ञानरूपः, अन्तर्याम्यधिकरूपश्च । अदूरादिति अद्भुमनात्पूर्वमेव । गर्भमिति पुत्रो भविष्यति । यदि स्वच्छन्दक्रीडया काऽप्युपहतिर्भवेत्, तदा भगवान् पुत्रत्वेन नाऽऽविर्भवेत्। आविर्भावावश्यकत्वञ्च भगवद्भावयाक्लिष्टितमिति भावः ॥ २ ॥

---

गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृतः प्रकाशः ।

*अथ चतुर्विंशाध्यायं विवरिषवः पूर्ववदेव सङ्गतिं बोधयितुमर्थं सङ्गृह्णाऽऽहुः सार्द्धेन-चतुर्विंशेत्यादि। स्पष्टम्।

१ कर्दम उवाच ।

तर्हि साधनं न कर्तव्यमित्याशङ्कयाऽऽह—

**धृतव्रताऽसि भद्रं ते दमेन नियमेन च।**
**तपोद्रविणदानैश्च श्रद्धया चेश्वरं भज ॥ ३ ॥**

* धृतव्रतेति । साधनानि सिद्धे भगवति प्रवर्तन्ते । यदा भगवान् स्वयमेवागमिष्यामीति मन्यते, तदा साधनानि कृतानि भगवन्तं बोधयन्ति, प्राप्नुवन्ति, वशीकुर्वन्ति, उत्पादयन्ति । यथा लोके स्वभावतो भोक्तारमतिथिनिमन्त्रणादिना वशीकृत्य भोजयन्ति, न त्वभोक्तारमुपायशतैरपि । यतो भगवान् स्वयं समागन्ता, अतः साधनानि कर्तव्यानि । तत्र कानिचिद्देहशुद्ध्यर्थमादौ कर्तव्यानि तानि तव न कर्तव्यानीत्याह- धृतव्रताऽसीति । पातिव्रत्यमतं धृतमेव त्वया वर्तते । अतः परं त्वयि गते गमिष्यतीति चेत्तत्राऽऽह—भद्रं त इति । ते भद्रमस्तु । अस्मद्वाक्यादेव व्रताकरणेऽपि व्रतिन इव तव फलं भविष्यतीत्याशीः । सिद्धे व्रते भगवत्प्रसादार्थं पञ्च साधनानि कर्तव्यानीत्याह । दम इन्द्रियनिग्रहः कर्तव्यः । नियमो भगवदीयैरेव धर्मैर्व्यवहर्तव्यमिति । नियमाः स्नानादयो वा देहस्य; तदा चकारेण प्रथमो ग्राह्यः । तपः प्रसिद्धं कृच्छ्रादिरूपम् । द्रविणानि द्रव्याणि सुवर्णादीनि भगवदर्थं कर्तव्यानीत्येकं साधनम् । द्रविणदानं चाऽन्यत् . दानमेव वा । अन्यथा अवान्तरबहुत्वे बहुवचनं व्यर्थं स्यात्, ' प्रयतात्मनः ' इति वाक्यात् । दमो नियतः । व्रतानां हरितोषजनकत्वादाविर्भावे तेऽपि प्रयोजकाः । ' यज्ञो दानं तपश्चैव ' इति । भगवदुक्तशास्त्रार्थकरणे भगवान् परितुष्यतीति तपःप्रभृतीनां ग्रहणम् । द्रविणपदेन च यज्ञा भगवन्मखरूपा उक्ताः । श्रद्धाऽत्र सर्वाङ्गम् । ननु सिद्धे किमित्येतावन्ति साधनानि? तत्राऽऽह—ईश्वरमिति । स न येन केनापि नियम्यः, अतोऽसिद्धवदेव साधनानि कर्तव्यानीत्यर्थः ॥ ३ ॥

ततः किं भविष्यतीत्याशङ्कयाऽऽह—

**स त्वयाऽऽराधितः शुक्लो वितन्वन् मामकं यशः ।**
**छेत्ता ते हृदयग्रन्थिमौदर्यो ब्रह्मभावनः ॥ ४ ॥**

स त्वयेति । मया आराधितोऽपि त्वया चेदेवमाराधितः । स हि शुक्लः, निर्दोषपूर्णगुणविग्रहो मामकं यशो वितन्वन्, लोके कर्दमस्य पुत्रो जात इति कीर्तिं वितन्वन्, ते हृदयग्रन्थिं भेत्स्यति । अदोषार्थे, आवश्यकार्थे, विश्वासार्थे चाऽऽह—औदर्य इति । उदरे भव औदर्यः । ननु तस्य मत्पुत्रस्य कथं मदज्ञानदूरीकरणसामर्थ्यम् ? तत्राऽऽह—ब्रह्मभावन इति । ब्रह्म भावयत्यनुभावयति स्वस्मिन् अन्यस्मिंश्चेति । अतस्त्वय्यपि ब्रह्माऽऽविर्भाव्य हृदयग्रन्थिं छेत्ता । एवमाश्वासनमुक्तवान् ॥ ४ ॥

---

प्रकाशः ।

* धृतव्रतेत्यत्र । सिद्ध इति । प्रसन्नेऽपि साधनावश्यकत्वं व्युत्पादयन्ति—यदेत्यादि शतैरपीत्यन्तेन । द्रविणपदस्य दानेऽन्वये पूर्वोक्तोऽर्थो भज्यत इति पक्षान्तरमाहुः—दानमेवेति । पञ्चममित्यर्थः । ननु द्रविणपदस्य दानेनाऽन्वये को दोषो येनैवं व्याख्यायत इत्याकाङ्क्षायामाहुः—अन्यथेत्यादि । द्रविणपदस्य दानविशेषणत्वे मूलस्थबहुत्वस्यावान्तरविशेषपरता वक्तव्या तदापि तयोर्द्रविणदानयोरेव मुख्यतया ताभ्यामेव तल्लाभे बाधकाभावाद् द्विवचनापत्त्याहुः, वचनं व्यर्थं स्यादित्यर्थः । श्रीमागवतस्य गीताविस्तरत्वाद्गीतानुसारेण दमादीनां पञ्चानामावश्यकत्वं साधयन्ति—प्रयतेत्यादिना । त इति । नियमा इत्यर्थः ।

भर्तृवाक्यात्तथैव कृतवतीत्याह—

## मैत्रेय उवाच ।

**देवहूत्यपि संदेशं गौरवेण प्रजापतेः ।**
**सम्यक् श्रद्धाय पुरुषं कूटस्थमभजद्गुरुम् ॥ ५ ॥**

देवहूत्यपीति । मध्ये कर्दमोऽपि ध्यानारूढ इति ज्ञातव्यम् । देवहूत्यपि प्रजापतेः संदेशमत्यादरेण सम्यक् श्रद्धाय, तद्वाक्ये विश्वासं कृत्वा, तमेव पुरुषं शुक्लनारायणरूपं कूटस्थमन्तर्यामिणमविकृतं वा, ज्ञानमार्गेऽपि भगवत्त्वेन सेव्यम्, गुरुमभजत् । उक्तेनैव प्रकारेणेति ज्ञातव्यम् ॥ ५ ॥

तदा भगवानाविर्भूत इत्याह—

**तस्यां बहुतिथे काले भगवान् मधुसूदनः ।**
**कार्दमं वीर्यमापन्नो जज्ञेऽग्निरिव दारुणि ॥ ६ ॥**

तस्यामिति । बहुकालं तया भजने क्रियमाणे तस्यां भगवान् जज्ञे आविर्भूतः । तस्यां वा बहुकालं स्थित्वा भगवान् बहिराविर्भूत इत्याद्य एवार्थः । कोऽयमाविर्भूत इत्याशङ्क्याव्यावृत्त्यर्थं भगवान्मधुसूदन इत्युक्तम् । यो हि योगनिद्रानिमीलिताक्षः स मधुसूदनः, स एवाऽयमिति । पुत्रप्रकारेण चाविर्भविष्यतीत्याह—कार्दमं वीर्यमापन्न इति । ते न हि गुरुणा भाव्यम्, अतो मर्यादारक्षार्थं प्रथमं कर्दमवीर्ये आविर्भूतः पश्चादाविर्भविष्यति । नचैवं सति प्राकृतत्वं शङ्कनीयमित्याह—अग्निरिव दारुणीति । काष्ठं गोमयपिण्डं वा प्राप्य आविर्भवन्, उच्चावचत्वं, वृद्धिक्षयौ च प्राप्नुवन्नाऽग्निः प्राकृतो भवति, जायते वा किन्त्वाविर्भाव एव । तत्रैव स्थितस्तत्रैवाऽऽविर्भवतीति ज्ञापयितुं दारुणीत्युक्तम् ॥ ६ ॥

भगवदवतारो जात इति ज्ञापनार्थं तदभिज्ञानान्याह—अवादयन्नित्यादिभिः । भगवतः समागमनैकम्, देवानां वाद्यादिवादनानि च बहूनि; तान्याह—द्वयेन—

**अवादयंस्तदा व्योम्नि वादित्राणि घनाघनाः ।**
**गायन्ति तं स्म गन्धर्वा नृत्यन्त्यप्सरसो मुदा ॥ ७ ॥**

व्योम्नि घनाघना निबिडमेघाः, वादित्राणि मेघरूपाण्येव, अवादयन् । गन्धर्वाश्च गायन्ति स्म । अप्सरसश्च नृत्यन्ति स्म । उत्सवे यथाऽन्यत्राऽन्यप्रेरिता न तथेत्याह—मुदेति ॥ ७ ॥

पुष्पवृष्टिश्च जातेत्याह—

**पेतुः सुमनसो दिव्याः खेचरैरपवर्जिताः ।**
**प्रसेदुश्च दिशः सर्वा अम्भांसि च मनांसि च ॥ ८ ॥**

पेतुरिति । अन्यकृतव्यावृत्त्यर्थम्—दिव्या इति । खेचरैर्देवैः, द्रष्टुकामैरागतैरपवर्जितास्त्यक्ताः[1] । वृष्टिकरणे प्रेम्णा विकला अपि ते इति सूचितम् । दिशः प्रसेदुः, अम्भांसि च, प्राणिनां मनांसि च । त्रितयप्रसादोऽलौकिक आधिदैविकरूपः, वादित्रादीन्याधिभौतिकानि ॥ ८ ॥

---

१ त्यक्तव्य अपि:. क. ग. घ. ङ.

ब्रह्मणः समागमनमाधिदैविकम् । तदाह—तत्कर्दमाश्रमपदमिति त्रिभिः—

**तत्कर्दमाश्रमपदं सरस्वत्या परिश्रितम् ।**
**स्वयम्भूः साकमृषिभिर्मरीच्यादिभिरभ्ययात् ॥ ९ ॥**

तद् बिन्दुसरोरूपं कर्दमस्याश्रमपदम् । सरस्वत्या परिश्रितमिति ब्रह्मणो निःशङ्कागमने हेतुः । तस्याऽलौकिकं ज्ञानमस्तीति ज्ञापयितुम्—स्वयम्भूरित्युक्तम् । ऋषिभिः सनकादिभिर्मरीच्यादिभिश्च सह अभ्ययात् ॥ ९ ॥

न केवलं कर्दमदर्शनार्थम्, किन्तु भगवानाविर्भूत इति ज्ञात्वेत्याह—

**भगवन्तं परं ब्रह्म सत्त्वेनांऽशेन शत्रुहन् ।**
**तत्त्वसंख्यानविज्ञप्त्यै जातं विद्वानजः स्वराट् ॥ १० ॥**

भगवन्तमिति । भगवान् स्वयं परब्रह्मभूत एव । सत्त्वेन स्यांशेन सत्त्वं गृहीत्वा, ज्ञानकलया, तत्त्वानां सङ्ख्यानं साङ्ख्यशास्त्रम्, तस्य विज्ञप्त्यै ज्ञापनार्थमज एव स्वयं जात इति विद्वान् । यतोऽयं स्वराट्, स्वस्मिन्नेव राजते ॥ १० ॥

आगत्य प्रथमं कर्दमं सभाजितवानित्याह—

**सभाजयन् विशुद्धेन चेतसा तच्चिकीर्षितम् ।**
**प्रहृष्यमाणैरसुभिः कर्दमं चेदमभ्यधात् ॥ ११ ॥**

सभाजयन्निति । यावत्तेन कृतम्, तत्सर्वं विशुद्धेन चेतसा सभाजयन्, साध्वेव कृतमित्यङ्गीकुर्वन्, चिकीर्षितं प्रव्रज्यादिकं च सभाजयन् । प्रहृष्यमाणैरसुभिरिन्द्रियैः, प्राणैरेव वोत्फुल्लैः, वक्ष्यमाणं कर्दमं प्रत्यभ्यधात् ॥ ११ ॥

तेन हि पूर्वं ऋणत्रयापाकरणं कृतम् । तत्र पितृऋणे ब्रह्मा पिता, तदभीष्टं कर्तव्यम्; तत् कृतमित्याह—

## ब्रह्मोवाच ।

**त्वया मेऽपचितिस्तात ! कल्पिता निर्व्यलीकतः ।**
**यन्मे संजगृहे वाक्यं भवान् मानद ! मानयन् ॥ १२ ॥**

त्वयेति । तात मम बहवः पुत्राः, त्वयैव मे परमापचितिः प्रत्युपकारलक्षणपूजा कृता । तत्रापि—निर्व्यलीकतः । भगवति प्रसन्ने, शास्त्रार्थे च ज्ञाते, उत्कटे च कामेऽसति, यो मद्वाक्यानुरोधेन विपरीत इवाऽपकर्षमपि सोढ्वा, महता कष्टेन आज्ञां कृतवान् । तदेवाऽऽह—यन्मे संजगृहे वाक्यम् । एतदेव सम्यग्ग्रहणम्, अन्तःकरणपूर्वकं ग्रहणान्मानयन् । मानदेति संबोधनं वैपरीत्येऽपि ब्रह्मणा महानुपकारः कृत इति हृदये संमाननम् । वाक्यकरणम्, स्वस्मिन् रागाभावे सति करणम्, तस्मिन् दोषाननारोप्य करणम्, तदुपकारित्वेनाऽकरणम्, सोपकारत्वेन करणं चेति । एवं पश्चाऽङ्गीकरणं सर्वोत्कृष्टम् ॥ १२ ॥

एतावदेव करणमित्याह—

एतावत्येव शुश्रूषा कार्या पितरि पुत्रकैः ।
बाढमित्यनुमन्येत गौरवेण गुरोर्वचः ॥ १३ ॥

* एतावतीति । पितरि पुत्रकैरेतावत्येव शुश्रूषा कर्तव्या । कायिकसेवायाः साऽनुरोधाल्लौकिकी । अतः पितृत्वेन गुरुत्वेन च यत् करणम्, तदलौकिकमेव कर्तव्यम् । तद्वाक्यमेव । मनस्तु तत्रैवैतस्येति निश्चीयते, पूर्वरूपत्वात् । पुत्रकैरिति बहुवचनं सर्वैः संभूय वा कर्तव्यं प्रत्येकाशक्ताविति ज्ञापितम् । गुरोर्वचो बाढमित्यनुमन्येत । गौरवेणेति स्वकृतार्थता । बाढमिति मत्सराभावः । अनुमननं तथैव करणम् । गुरोरिति तस्मिन् दोषाभावः, पश्चादेव वचनात् स्वस्मिन् रागाभावश्च । प्रजाः सम्यक् सृष्टा इति तात्पर्यम् ॥ १३ ॥

तस्य विनियोगमाह—

इमा दुहितरः सभ्य ! तव वत्स सुमध्यमाः ।
सर्गमेतं प्रभावैः स्वैर्बृंहयिष्यन्त्यनेकधा ॥ १४ ॥

इमा दुहितर इति । सभ्येति तस्य स्वतो रागाभावो द्योतितः । वत्सेत्यादरे । सुमध्यमा इति सौन्दर्येण गुणा उक्ताः । अत एव स्वैरेव प्रभावैः, स्वस्मिन् भर्तृग्रहणधर्मैः, एतं सर्गमनेकधा बृंहयिष्यन्ति । अतः कन्याभिरेव जगत्पूर्यत इति नातः परं किञ्चित्कर्तव्यम् ॥ १४ ॥

अतस्तदर्थमृषिभ्यः प्रयच्छेत्याह—

अतस्त्वमृषिमुख्येभ्यो यथाशीलं यथारुचि ।
आत्मजाः परिदेह्यद्य विस्तृणीहि यशो भुवि ॥ १५ ॥

अतस्त्वमिति । ऋषिमुख्येभ्यो मरीच्यादिभ्यः । यथाशीलं यथारुचीति भगवत्कृतसंबन्धं स्वाभाविकं च संबन्धमनतिक्रम्य । अद्येति विशिष्टः कालः । यद्यपि भगवत्कृतत्वात्सहजत्वाच्च संबन्धस्य न त्वत्कृतिरपेक्ष्यते, तथापि स्वयं दानेन भुवि यशो विस्तारय ॥ १५ ॥

एवमग्रिमाज्ञां दत्त्वा कपिलं भगवानयमिति ज्ञापयति—

वेदाहमाद्यं पुरुषमवतीर्णं स्वमायया ।
भूतानां शेवधिं देहं बिभ्राणं कपिलं मुनिम् ॥ १६ ॥

वेदाऽहमिति । अहं वेदेति प्रमाणम् । आद्यः पुरुषो भगवान्, स्वमायया स्वेच्छापूरिकया, लोकानामन्यथात्वं ज्ञापयन्त्या, तादृश्या प्राणिनां निधिरूपं देहं बिभर्ति । कपिल इति लोके प्रसिद्धः । अनेन पुत्रगताः सर्वे गुणा उक्ताः । मुनिमिति तस्मिंस्तव न किञ्चित्कर्तव्यमिति सूचितम् ॥ १६ ॥

---

प्रकाशः

* एतावत्येवेत्यत्र । किं तदलौकिकमित्याकाङ्क्षायामाहुः—तद्वाक्यमेवेति । उक्तमेव कर्तव्यमित्यर्थः । ननु वाक्येऽपि कश्चिदनुरोधः सम्भाव्यत इति मन एव कर्तव्यमिति वाच्यमिति चेत्तत्राहुः—मनस्त्वित्यादि । तथा च, तदत्र वाक्यकरणेनैव सिद्धमित्यर्थः ।

स्वस्वरूपमुक्त्वा कार्यमाह—

**ज्ञानविज्ञानयोगेन कर्मणामुद्धरन् जटाः ।**
**हिरण्यकेशः पद्माक्षः पद्ममुद्रापदाम्बुजः ॥ १७ ॥**

ज्ञानेति । स हि ज्ञानम्, विज्ञानम्, योगं च प्रकटयिष्यति । ज्ञानं साङ्ख्यम्, विज्ञानं ससाधनमनुभवः, योगोऽष्टाङ्गः । यानि कर्माण्याधिभौतिकानि तानि साङ्ख्येनोन्मूलितानि भवन्ति; यान्याध्यात्मिकानि तान्यनुभवेन; यान्याधिदैविकानि तानि योगेनेति त्रिभिः कृत्वा कर्मणां परस्परमिश्रणेन या जटाः, ता उद्धरन् ऊर्ध्वमुत्पाटयन् । भविष्यतीत्यर्थात् । त्रितयप्रवर्तकत्वाय लक्षणान्याह–हिरण्यकेश इति । सुवर्णवर्णाः केशाः साङ्ख्यसिद्धिहेतवः । पद्मसदृशे ईक्षणे यस्य । अनुभवलक्षणमेतत् । पद्ममुद्रा पदाम्बुजे यस्य । एतद्योगलक्षणम् ॥ १७ ॥

एवं कर्दममुक्त्वा देवहूतिमाश्वासयति —

**एष मानवि ! ते गर्भं प्रविष्टः कैटभार्दनः ।**
**अविद्यासंशयग्रन्थिं छित्त्वा गां विचरिष्यति ॥ १८ ॥**

एष मानवीति । मनोः पुत्रीति संबोधनात् सर्वत्र भगवदाविर्भावो न दोषाय । कैटभार्दन इति मूलपुरुष उक्तः । क्रियापरो मधुसूदनः, ज्ञानपरः कैटभार्दन इति उभयोः प्रतिबन्धकयोर्नाशात् । अत एवाऽविद्याकृतं संशयग्रन्थिम्, सर्वशास्त्रार्थश्रवणेऽपि हृदये संशयापादकं मोहग्रन्थिम्, छित्त्वा स्वयमपि लोके तत्त्वचारं कुर्वन्, गां विचरिष्यति ॥ १८ ॥

किञ्च । अयं च महान् भविष्यति परमार्थतः, लौकिकालौकिकप्रसिद्धिभ्यां च महान् भविष्यति । तत्र परमार्थोत्कर्षमाह—

**अयं सिद्धगणाधीशः साङ्ख्याचार्यैरभिष्टुतः ।**
**लोके कपिल इत्याख्यां गन्ता ते कीर्तिवर्द्धनः ॥ १९ ॥**

अयं सिद्धगणाधीश इति । सिद्धा योगादिना; तेषां नियामको यः, परमार्थत एव सिद्धो भवति । साङ्ख्याचार्या ये साङ्ख्यस्य प्रवर्तकाः, तैरभिष्टुत इत्यलौकिकोत्कर्षः । लोके च कपिल इत्याख्यां गमिष्यति । एवंविधोऽपि ते कीर्तिवर्द्धनो भविष्यति, देवहूत्याः पुत्रः कपिल इति ॥ १९ ॥

एवमाश्वासनं कृत्वा अग्रिमकार्यसिद्ध्यर्थं ततो गत इत्याह—

## मैत्रेय उवाच ।

**तावाश्वास्य जगत्स्रष्टा कुमारैः सहनारदः ।**
**हंसो हंसेन यानेन त्रिधाम परमं ययौ ॥ २० ॥**

तावाश्वास्येति । नन्वल्पे कार्ये कथं स्वयमागतो गतश्चेति ? तत्राऽऽह–जगत्स्रष्टेति । यस्मिन् कार्ये क्रियमाणे जगत्स्रष्टेरभिवृद्धिर्भवति, तदेव कर्तव्यमतो गमनम्, कार्यान्तरार्थं चाऽऽगमनमिति । कुमारैः सनकादिभिः सह, सहनारदश्च । एतेषां विवाहे उपयोगाभावात् । हंस इति क्षीरनीरविवेककर्ता । यतोऽयं

ज्ञात्वा, स्तुत्वा, पश्चात्प्रार्थनीयमिति नियमादादौ ज्ञानमिति वक्तुं तस्य पुत्रे प्रतिपत्तिमाह—

स चाऽवतीर्णं त्रियुगमाज्ञाय विबुधर्षभम् ।
विविक्त उपसङ्गम्य प्रणम्य समभाषत ॥ २६ ॥

स चाऽवतीर्णमिति । त्रियुगो धर्मो यज्ञात्मको भगवान् । यथा सृष्टौ क्रियात्मा वराह, तथा ज्ञानात्मक कपिल इति, अन्यथा सृष्टिरनन्ता स्यात्, भगवल्लीलात्वात् । विबुधर्षभ देवोत्तमं विष्णुम् । सैव हि परमा देवतेति वैदिके मार्गे देवतैव सर्वोत्तमा । ब्रह्माऽपि देवतैव, तथा आत्मा । अतो विबुधश्रेष्ठत्व मुक्तम् । प्रतिवासिषु ऋषिषु परिज्ञानाभावार्थं भार्यायाश्च दुःखाभावार्थम्, विविक्ते एकान्ते, उपसङ्गम्य निकटे गत्वा, पादौ स्पृष्ट्वा, प्रणम्य, भगवानिति निश्चित्य, सम्यक् स्तोत्ररूप वाक्यमभाषत ॥ २६ ॥

अहो ! पापच्यमानानां निरये स्वैरमङ्गलैः ।
कालेन भूयसा नूनं प्रसीदन्तीह देवताः ॥ २७ ॥

अहो इति । स्वगृहे भगवदवतारो न स्वधर्मसाध्य, तादृशधर्माभावात् । किन्तु सर्वदेवाना प्रसादसाध्य, यतस्ते भगवदवयवा । प्रसादेऽपि नोऽस्माक धर्मोऽस्ति, किन्तु बहुकालदु खानुभावे दीनत्वे सति दयया प्रसाद । शास्त्रे तु देवताना न दयया प्रसाद, किन्तु कर्मणैवेति विपरीतदर्शनादहो इत्याश्चर्यम् । स्वैरमङ्गलै पापैरनन्यभोग्यै, अत्यन्त पच्यमानाना महता कालेन देवता प्रसीदन्ति नूनम्, सात्त्विकस्वभावत्वात् । अस्य च निस्तारोपायाज्ञानात् प्रसाद आवश्यक ॥ २७ ॥

ननु किमेतद्दुर्लभम् ? यत प्रसादफलत्वेन वर्ण्यते । तत्राऽऽह—

बहुजन्मविपक्वेन सम्यग्योगसमाधिना ।
द्रष्टुं यतन्ते यतयः शून्यागारेषु यत्पदम् ॥ २८ ॥

बहुजन्मेति । बहुभिरेव जन्मभि सावितो योग पक्वश्चेद्भवति, तदा चित्त निर्मलं भवति । तदा भगवति दिदृक्षा जायते, न तु दर्शनम् । एव दुर्लभदर्शनश्चेद्गृहे अवतरति, तदा किं भाग्य वर्णनीयम् । योगेन य समाधि, न तु चिन्तनादिना । शून्यागारेष्विति प्रव्रज्या, तद्धर्मनिरतत्वम्, निर्भय चोक्तम् । यत्पद हृदये स्फुरितम् ॥ २८ ॥

तर्हि नाऽय स भविष्यतीत्याशङ्क्याऽऽह—

स एव भगवानद्य हेलनं नगणय्य नः ।
गृहेषु जातो ग्राम्याणां यः स्वानां पक्षपोषणः ॥ २९ ॥

स एवेति । स एवाऽय भगवान् । ब्रह्मवाक्यात्, स्वानुभवात्, भगवद्वाक्याच्चाऽवसीयते । ननु पुरुषोत्तम कथमपमानना सोढ्वा ग्राम्येष्ववतरिष्यति ? न हि बाधितमर्थं वेदोऽपि बोधयति । स हि सर्वतो मानपात्रम्, अत आह—अद्य नो हेलनमवगणय्य । इत पूर्वमेव मर्यादा स्थिता, अद्यैवैव जातम् । अत एव ग्राम्याणा गृहेषु जात । कस्यचित्पुत्र, कस्यचिद्भ्राता, श्यालको, मातुल इति बहुधा सम्बन्धोत्पत्तेर्गृहेष्विति बहुवचनम् । अद्य तथा करणे हेतु—यः स्वानां पक्षपोषण इति । पूर्वं भगवान् सर्वत्र सम, इदानीं भक्तिमार्गमुत्पाद्य विषमो जात इति स्वानां भक्ताना पक्षस्य पोषणं यस्मात् ॥ २९ ॥

---

१ न गणय्य पा

मरीच्यादीन् स्थापयित्वा, अन्याश्च गृहीत्वा गते । हंस एव यानम्, तेन, प्रसङ्गादन्यत्र गमनाभावः । त्रिधाम त्रयाणां लोकानां धाम तेजोरूपम्, गुणानां वा साम्यस्थानम् । ब्रह्मणो बहूनि स्थानानि सन्तीति तद्व्यावृत्त्यर्थम्—परमामिति सत्यलोकं ययौ ॥ २० ॥

**गते शतधृतौ क्षत्तः कर्दमस्तेन चोदितः ।**
**यथोदितं स्वदुहितॄः प्रादाद्विश्वसृजां ततः ॥ २१ ॥**

गत इति । तत शतधृतौ ब्रह्मणि गते, ब्रह्मणा प्रेरित , यथा ब्रह्मणा उदितम्, तथा सादृश्यरुची विचार्य विश्वसृजां मध्ये एकैकस्मै एकैकां प्रादात् । ब्रह्मणो गाम्भीर्यकथनाय शतधृतिप्रयोग शतं धृतयो यस्येति ॥ २१ ॥

विवाहानाह—मरीचय इति सार्द्धाभ्याम्—

**मरीचये कलां प्रादादनसूयामथाऽत्रये ।**
**श्रद्धामङ्गिरसेऽयच्छत्पुलस्त्याय हविर्भुवम् ॥ २२ ॥**
**पुलहाय गतिं युक्तां क्रतवे च क्रियां सतीम् ।**
**ख्यातिं च भृगवेऽयच्छद्वसिष्ठायाऽप्यरुन्धतीम् ॥ २३ ॥**
**अथर्वणेऽददाच्छान्तिं यया यज्ञो वितन्यते ।**
**विप्रर्षभान् कृतोद्वाहान् सदारान् समलालयत् ॥ २४ ॥**

हविर्भूरिति कन्या । गतिरिति नाम । युक्तां यथायोग्याम्, अन्यथा पुलहपुलस्त्यौ राक्षसप्रकृतिकौ । प्रियेति नाम । क्रतोर्दक्षिणाया एव तुल्यत्वेऽपि सत्यक्रियाया अपि तुल्यत्वमिति, सतीं क्रियामित्युक्तम् । अथर्वा वेदाभिमानी देव , अथर्वाङ्गिरसां ब्रह्मप्रतिपादकत्वात्, तद्भार्या शान्तिः । सोऽपि ब्रह्मपुत्र एवेति ज्ञातव्यम् । नन्वस्य निवृत्तिपरत्वात् किं भार्यया कर्तव्यमित्याशङ्क्याऽऽह—यया यज्ञो वितन्यत इति । यथा ब्रह्मप्रतिपादकत्वम्, तथा यज्ञोपयोगित्वमपि । तथा सति यया शान्त्या यज्ञविस्तार क्रियते सेयमित्यर्थ । तेभ्य कन्या दत्वा भूषणादिभिरलालयदित्याह—विप्रर्षभानिति । ते ब्राह्मणा स्वस्वमतानुसारेण विवाह कृतवन्त । अत स्वतन्त्रविवाहे सामर्थ्यम्—विप्रर्षभानिति । स्वकन्या अपि तेषु स्त्रीभावमेव प्राप्ता इति सदारान् सम्यकान् सम्यगलालयत् ॥ २२ ॥ २३ ॥ २४ ॥

**ततस्त ऋषयः क्षत्तः ! कृतदारा निमन्त्र्य तम् ।**
**प्रातिष्ठन्नन्दिमापन्नाः स्वं स्वमाश्रममण्डलम् ॥ २५ ॥**

तत इति । ततस्ते सर्वे एव मन्त्रद्रष्टार , अलौकिकं ज्ञात्वा, तासु सृष्टिं चिकीर्षव कृतदारास्तासु कन्यासु कृत दारत्वं यैरिति । धर्मधर्मिणोरभेदात् कृतदारा इत्युक्तम् । तं श्वशुरम्, निमन्त्र्य गच्छामो वयमित्युक्त्वा, नन्दिं परमां मुदमापन्ना , तत एव प्रत्येकं विभक्ता , स्वं स्वमाश्रममण्डलं प्रति प्रातिष्ठन् ॥ २५ ॥

एवंमैदिक [illegible] समाप्य तस्य मुक्तिमाह यावदध्यायपरिसमाप्ति—स चावतीर्णमित्यादिना । आज्ञा भगवतो लब्ध्वा नर्मदाधानुसारतः । यदा मतिं परित्यज्य विचरेत्स हि मुच्यते ॥ १ ॥ भगवन्

१ [illegible] २ [illegible]

ज्ञात्वा, स्तुत्वा, पश्चात्प्रार्थनीयमिति नियमादादौ ज्ञानमिति वक्तुं तस्य पुत्रे प्रतिपत्तिमाह—

**स चाऽवतीर्णं त्रियुगमाज्ञाय विबुधर्षभम्।**
**विविक्त उपसङ्गम्य प्रणम्य समभाषत ॥ २६ ॥**

**स चाऽवतीर्णमिति।** त्रियुगो धर्मो यज्ञात्मको भगवान्। यथा सर्वो क्रियात्मा वराह, तथा ज्ञानात्मक कपिल इति, अन्यथा मूर्तिरनन्ता स्यात्, भगवल्लीलात्वात्। विबुधर्षभ देवोत्तमं विष्णुम्। सैव हि परमा देवतेति वैदिके मार्गे देवतैव सर्वोत्तमा। ब्रह्माऽपि देवतैव, तथा आत्मा। अतो विबुधश्रेष्ठत्वमुक्तम्। प्रतिवासिषु ऋषिषु परिज्ञानाभावार्थं भार्यायाश्च दुःखाभावार्थम्, विविक्ते एकान्ते, उपसङ्गम्य निकटे गत्वा, पादौ स्पृष्ट्वा, प्रणम्य, भगवानिति निश्चित्य, सम्यक् स्तोत्ररूपं वाक्यमभाषत ॥ २६ ॥

**अहो! पापच्यमानानां निरये स्वैरमङ्गलैः।**
**कालेन भूयसा नूनं प्रसीदन्तीह देवताः ॥ २७ ॥**

**अहो इति।** स्वगृहे भगवदवतारो न स्वधर्मसाध्य, तादृशधर्माभावात्। किन्तु सर्वदेवाना प्रसादसाध्य, यतस्ते भगवदवयवा। प्रसादेऽपि नोऽस्माकं धर्मोऽस्ति, किन्तु बहुकालदुःखानुभावे दीनत्वे सति दयया प्रसाद। शास्त्रे तु देवताना न दयया प्रसाद, किन्तु कर्मणैवेति विपरीतदर्शनादहो इत्याश्चर्यम्। **स्वैरमङ्गलै** पापैरनन्यभोग्यै, अत्यन्त पच्यमानाना महता **कालेन** देवता प्रसीदन्ति नूनम्, सात्त्विकस्वभावत्वात्। अस्य च निस्तारोपायाज्ञानात् प्रसाद आवश्यक ॥ २७ ॥

ननु किमेतद्दुर्लभम् ? यत प्रसादफलत्वेन वर्ण्यते। तत्राऽऽह—

**बहुजन्मविपक्वेन सम्यग्योगसमाधिना।**
**द्रष्टुं यतन्ते यतयः शून्यागारेषु यत्पदम् ॥ २८ ॥**

**बहुजन्मेति।** बहुभिरेव जन्मभि साधितो योग पक्वश्चेद्भवति, तदा चित्त निर्मलं भवति। तदा भगवति दिदृक्षा जायते, न तु दर्शनम्। एव दुर्लभदर्शनश्चेद्गृहे अवतरति, तदा किं भाग्य वर्णनीयम्। योगेन य समाधि, नत् चिन्तनादिना। शून्यागारेष्विति प्रव्रज्या, तद्धर्मनिरतत्वम्, निर्भयं चोक्तम्। यत्पद हृदये स्फुरितम् ॥ २८ ॥

तर्हि नाऽय स भविष्यतीत्याशङ्क्याऽऽह—

**स एव भगवानद्य हेलनं वगणय्य नः।**
**गृहेषु जातो ग्राम्याणां यः स्वानां पक्षपोषणः ॥ २९ ॥**

**स एवेति।** स एवाऽय भगवान्। ब्रह्मवाक्यात्, स्वानुभवात्, भगवद्वाक्याच्चाऽवसीयते। ननु पुरुषोत्तम कथमपमानना सोढ्वा ग्राम्येष्ववतरिष्यति ? न हि बाधितमर्थं वेदोऽपि बोधयति। स हि सर्वतो मानपात्रम्, अत आह—अद्य नो हेलनमवगणय्य। इत पूर्वमेव मर्यादा स्थिता, अद्यैवैव जातम्। अत एव ग्राम्याणा गृहेषु जात। कस्यचित्पुत्र, कस्यचिद्भ्राता, श्यालको, मातुल इति बहुधा सम्बन्धोत्पत्तेर्गृहेष्विति बहुवचनम्। अद्य तथा करणे हेतु—**यः स्वानां पक्षपोषण** इति। पूर्वं भगवान् सर्वत्र सम, इदानीं भक्तिमार्गमुत्पाद्य विषमो जात इति स्वाना भक्ताना पक्षस्य पोषणं यस्मात् ॥ २९ ॥

---

१ न गणय्य ग

किञ्च, यथा वेदाः प्रमाणं तथैव भगवद्वाक्यमिति ' अथाहं स्वांशकलया ' इति वाक्यादवतीर्णं इत्याह—

स्वीयं वाक्यमृतं कर्तुमवतीर्णोऽसि मे गृहे ।
चिकीर्षुर्भगवान् ज्ञानं भक्तानां मानवर्धनः ॥ ३० ॥

स्वीयं वाक्यमिति । अवतीर्णस्तु लोके ज्ञानप्रचारणार्थम्, भक्तानां मानं च वर्द्धयितुं काष्ठवृक्षादिकं परित्यज्य मे गृहेऽवतीर्णोऽसि, न तु स्वभाग्येन वा, कारणान्तरेण चेति ॥ ३० ॥

ननु तथापि हीनभावः कथं भगवत उपपद्यते ? तत्रोपपत्तिमाह—

तान्येव तेऽभिरूपाणि रूपाणि भगवंस्तव ।
यानि यानि च रोचन्ते स्वजनानामरूपिणः ॥ ३१ ॥

तान्येवेति । पुरुषोत्तमस्य हीनभावो नोचितः । न चाऽस्य हीनभावः, उभयविधानि भगवतो रूपाण्युचितानि । यानि सर्ववेदप्रसिद्धान्यानन्दमयानि, यानि च भक्तानां रोचन्ते । एतावताऽपि भगवानरूप एव। तान्येवाऽऽनन्दमयानि रूपाणि हे भगवंस्तेऽभिरूपाणि, योग्यानि, यानि च भक्तानां रोचन्ते । नराकृतीनि तानि च भगवतोऽभिरूपाणि । यथा पूर्वं यानि रूपाणि कृतवांस्तानि भगवतो वेद आह । यानि पश्चात् भक्तानुरोधेन कृतवांस्तान्यप्यनुरूपाण्येव, सामग्र्यास्तुल्यत्वात् । अवचनं त्विदानीन्तनत्वात् । एतावत्त्वं निषेधश्च नाऽस्त्येव । अन्यथाभानं तु बुद्धिदोषादन्येषाम्, भक्तानां तु तदानन्दरूपमेव, अन्यथा रुचिर्न स्यात् ॥ ३१ ॥

एवं भगवदवतारं समर्थयित्वा तं नमस्यति—

तं सूरिभिस्तत्त्वबुभुत्सयाऽद्धा सदाभिवादार्हणपादपीठम् ।
ऐश्वर्यवैराग्ययशोऽवबोधवीर्यश्रियां पूर्तमहं प्रपद्ये ॥ ३२ ॥

तमिति । तमहं प्रपद्ये फलद्वयसाधकम् । तत्र मोक्षसाधकत्वमाह—सूरिभिस्तत्त्वबुभुत्सया तत्त्वज्ञानेच्छया तत्त्वज्ञानार्थं सदा अभिवादनयोग्यं पादपीठं यस्य । ज्ञानेन मोक्ष, तद्गुरुणा, सोऽपि सेवितो ज्ञानं प्रयच्छति । अतोऽभिवादार्हणमभिवादयोग्यं भवत्येव चरणपीठम् । ऐहिकं च तस्मादेव सिध्यतीत्याह—ऐश्वर्येति । ऐश्वर्यादयः षड्गुणाः, तेषां पूर्तम्; तैः पूर्णमित्यर्थः । विद्यमानमेव हि कश्चित्प्रयच्छति, नत्वत्यन्तं दाताऽप्यविद्यमानम् । अतो भगवानैहिकार्थमपि सेव्यः ॥ ३२ ॥

भगवतः फलरूपत्वं फलसाधकत्वं चोपपाद्य सर्वरूपत्वमुपपादयति प्रसत्वाय—

परं प्रधानं पुरुषं महान्तं कालं कविं त्रिवृतं लोकपालम् ।
आत्मानुभूत्याऽनुगतप्रपञ्चं स्वच्छन्दशक्तिं कपिलं प्रपद्ये ॥ ३३ ॥

परमिति । सर्वरूपं कपिलं प्रपद्ये । तानि रूपाणि गणयति—परमक्षरम्; प्रधानं प्रकृतिः; पुरुषस्तदधिष्ठाता; महान् मुख्यः पुरुषः; कालो गुणक्षोभकः; कविर्महत्तोऽभिमानी, मूलभक्ता, सूत्रात्मको वा,

१ अहमेव ग. ङ.

त्रिवृदहङ्कारः; लोकपालाः सर्व एव देवाः । एवं कारणरूपत्वमुक्त्वा कार्यरूपत्वमाह—आत्मानुभूत्येति । अनुगतः स्वस्मिन् लीनः, स्थितः, उत्पन्नो वा प्रपञ्चो यस्य । +ज्ञानशक्त्याऽप्युत्पत्तिपक्ष उत्पत्तिः, अन्यथा तु प्रलयः । ततश्च प्रपञ्चरूपो निष्प्रपञ्चरूपश्च कपिल उक्तो भवति । तथात्वे सामर्थ्यम्—स्वच्छन्दशक्तिमिति । स्वेच्छावशवर्तिनी तस्य शक्तिः ॥ ३३ ॥

एवं स्तुत्वा नमस्कृत्य विज्ञापनामाह—

**आ स्माऽऽभिपृच्छेऽद्य पतिं प्रजानां त्वयाऽवतीर्णार्ण उताऽऽप्तकामः ।**
**परिव्रजत्पदवीमास्थितोऽहं चरिष्ये त्वां हृदि युञ्जन्विशोकः ॥ ३४ ॥**

※ आ स्माऽऽभिपृच्छ इति । प्रजानां पतिं त्वामभिपृच्छे स्म । आ प्रश्नः, गन्तुर्गमने संमतिसूचकः । स्मेति प्रसिद्धे, । पुत्राज्ञया भगवदाज्ञया च गन्तव्यमिति । अभिशब्दः सर्वप्रकारवाची, गमने सर्वे प्रकाराश्च वक्तव्या इति । प्रजापतित्वमनुशासनवत्, स्वस्य तथोऽधिकारात् । वेदाधिकारे हि, ' त्वं यज्ञः ' इत्यादि । तदप्याह वचनेनैव—त्वयाऽवतीर्णार्ण इति । त्वया कृत्वा अवतीर्णान्युत्तरितानि स्वयमेव गतानि ऋणानि यस्य । किञ्च, उताऽऽप्तकामोऽपि त्वयैवाहं जातः । पुत्रो भगवानात्मेति पुत्रकामनाऽप्यात्मकामनैव जाता । अतः स्वाधिकारं त्वयि समर्प्य, ऋणत्रयापाकरणं कृत्वा, पूर्णकामो भूत्वा ब्रह्मविदहम्, परिव्रजत्पदवीं संन्यासपदवीम्, इदानीमास्थितः । परमहंसो भूत्वा देहपातपर्यन्तं ब्रह्मविदो जीवतः कृत्यं त्वां पुराणपुरुषोत्तमं हृदये युञ्जन् हृदये ध्यायन् चरिष्ये । देहस्य प्रतिपत्तिरेषा, यतः शोकादुत्तीर्णः । गतशोकत्वाच्च नाऽन्यत् कर्तव्यम् । एतेन ज्ञाने जातेऽपि शोकश्चेत् सर्वथा न निवृत्तः, तदा सम्यक् ज्ञानं न जातमित्यध्यवसेयमित्युक्तम् ॥ ३४ ॥

एवमाज्ञायां प्रार्थ्यमानायां भगवान् स्वावतारप्रयोजनमयं विशेषाकारेण न जानातीति तं वदन् आज्ञां प्रयच्छति मयेति पङ्क्तिः—

## श्रीभगवानुवाच ।

**मया प्रोक्तं हि लोकस्य प्रमाणं सत्य ! लौकिके ।**
**अथाऽजनि मया तुभ्यं यदवोचमृतं मुने ॥ ३५ ॥**

मयि परमो विश्वासः कर्तव्य इति वक्तुं स्ववाक्यस्य सत्यत्वमुपपादयत्यग्रे फलावश्यकत्वविश्वासाय । हे सत्य सत्यरूप । लौकिके मया प्रोक्तमेव लोकस्य प्रमाणम्, यतोऽहमेव जगत्कर्ता, पोषकश्च, मद्वाक्य-

प्रकाशः ।

+ परं प्रधानमित्यत्र । ज्ञानशक्त्याप्युत्पत्तिपक्षे उत्पत्तिरिति । अयं च पक्षः श्रौतः ' यस्य ज्ञानमयं तपः ', इति, ' स तपोऽतप्यत ' । ' स तपस्तप्त्वा इद ँ सर्वमसृजत ' इति वाक्याभ्यामवसीयते । तथा चास्मिन् पक्षेऽनुगतपदेनोत्पत्तिर्ग्राह्या, अन्यथा तु साङ्ख्यपक्षे तु प्रलयो ग्राह्य इत्यर्थः ।

※ आ स्मेत्यत्र । प्रजापतित्वमित्यादि । यथा ब्रह्मानुशासनेन स्वस्य प्रजापतित्वम्, तथा ब्रह्मप्रार्थनेन भगवतोऽपीति सम्भावनया तथा कथनं स्वस्य प्रजापत्यधिकारहेतुकमित्यर्थः ।

१ वेदाधिकारात् इत्यधिकम् क ग. २ कपिल उवाच घ

मेव च वेदश्च । सत्ये अलौकिके लौकिके चेति वा । सत्यरूपे लौकिके वा । अनेन आसुरान् प्रति न प्रमाणमित्युक्तम् । अतः स्ववाक्यप्रामाण्यसिद्ध्यर्थमथ भिन्नप्रक्रमेण लौकिकजडजीवव्यतिरिक्तस्य ममाऽपि जन्म कृतम् । तदाह—मयाऽजनीति । पूर्वप्रतिज्ञामाह—तुभ्यं यदवोचमिति । 'अथाहं स्वांशकलया' इति । तुभ्यं त्वदर्थे । तदुक्तमेव । मुन इति सबोधनमुभयपरिज्ञानार्थम् ॥ ३५ ॥

प्रयोजनमपि पूर्वोक्तमेवेति तदाह द्वाभ्याम्—

**एतन्मे जन्म लोकेऽस्मिन्मुमुक्षूणां दुराशयात् ।**
**प्रसंख्यानाय तत्त्वानां संमतायाऽऽत्मदर्शने ॥ ३६ ॥**

*एतन्म इति । मे एतज्जन्म दुराशयान्मुमुक्षूणामर्थे । आशयः संघातात्मा, स चेद्दुष्टः, तदात्मानं नाशयति । अत एवंभावादुक्तमिप्यतः प्राणिन उद्धारार्थं तत्त्वानां संख्यानं कर्तव्यम् । साक्षादपि हि दृश्यमाना अत्यन्तासङ्कीर्णाः स्थाण्वादयो वक्रकोटरादिभिः पुरुषादिभ्यो विविच्यन्ते, न त्वन्यथा; किं पुनरतीन्द्रिया मिथो मिश्रीभूताः कालाकाशादयः । अत एव तेषां तत्त्वानां प्रसंख्यानं कर्तव्यमुद्देशलक्षणाभ्याम् । तस्याऽपि प्रयोजनमात्मदर्शने । निमित्ते सप्तमी । आत्मज्ञानार्थं तत्त्वानामपि संख्यानं कर्तव्यम्, अन्यथा सङ्घाते पतित आत्मा न तेभ्यो विवेकमर्हति । न च अद्वयात्मज्ञानप्रतिपादकश्रुतिविरोध, विद्यमाने हि भेदव्यवहारे साङ्ख्यप्रवृत्तिः । न हि स्वभावतो यादृशं जगदनिर्द्धारितमात्मज्ञान उपयुज्यते, उद्देश्यपरिज्ञानद्वारा आत्मज्ञानार्थमिति तत्त्वविदः । इतरभिन्नतया आत्मज्ञानार्थमित्यन्ये । तेषां तु स्त्रीशूद्रद्विजबन्धूनां परलोकेप्सूनां श्रुतिश्रवणाभावात् वेदविरोधो नाऽऽशङ्कनीयः । तेषां संघातजनितदोषरूपाहङ्काराभाव एव फलम् । अतस्तादृशधर्मोपचितकालान्तरोत्पन्नब्राह्मणदेहे पुनः श्रुत्यनुसारेणाऽऽत्मविचारो भविष्यतीति न किञ्चिदनुपपन्नम् । अत एव प्रसंख्यानमात्मदर्शने सम्मतम् । नह्यात्मविदः साङ्ख्ये विप्रतिपद्यन्ते ॥ ३६ ॥

नन्विदं प्रसंख्यानमाधुनिकं चेत्कृतमनेन । अथ परम्परागतं कृतमवतारेणेत्याशङ्क्याऽऽह—

**एष आत्मपथोऽव्यक्तो नष्टः कालेन भूयसा ।**
**तं प्रवर्तयितुं देहमिमं विद्धि मया भृतम् ॥ ३७ ॥**

एष इति । अयमनादिसिद्ध एव आत्ममार्गो । भूयसा कालेन क्षीयमाणो नष्टः । पश्चादव्यक्तो लोके

---

प्रकाशः ।

* एतन्म इत्यत्र । साङ्ख्यस्य भेदप्रतिपादकत्वात् श्रुतिविरोधमाशङ्क्य परिहरति—न चेत्यादि । विद्यमाने हीति हिर्हेतौ, नहीति हिर्निश्चये । अनुपयोगे हेतुः उद्देश्येत्यादि । 'ऐतदात्म्यमिदं सर्वम्' । इति श्रुताविदमितिपरिदृश्यमानरूपेण सर्वमिति जगत्त्वेन च नोद्देश्यता, प्रत्यक्षविरोधात्, किन्तु, तत्सत्यमित्युक्त्वा सत्यत्वेन रूपेणोद्देश्यता सद्रूपता च साङ्ख्येन प्रपञ्चस्य प्रतिपाद्यत इति तद्द्वारा तथात्वम्, तथा चोद्देश्यसमर्पणद्वारोपयोगान्न श्रुतिविरोध इत्यर्थः । साङ्ख्यान्तरमतमुक्त्वा तस्याप्यविरोधं व्युत्पादयन्नितरत्त्वेत्यादि । तेषां त्वित्यादि । तथा चाधिकारिभेदादविरोध इत्यर्थः । संमतमिति । श्वेताश्वतरादिश्रुतिसंमतम् ।

काऽप्यप्रकटः । पुराणानां कुशरतया निरूपकत्वान्न व्यक्तिः । सर्वथाऽव्यक्तौ तज्ज्ञातॄणां स्मृतिसंस्कारनाशान्नाशः । तं पुनः प्रवर्तयितुं सर्वेषामुद्धारार्थमिमं देहं मया भृतं विद्धि ॥ ३७ ॥

ततः सर्व एवाऽनेन मार्गेण मुच्यन्त इति देवहूतिप्रभृतीनामपि मुक्तिर्भविष्यतीतीतरचिन्तां परित्यज्य भवान् मुक्तो भवत्वित्याह—

**गच्छ कामं मयाऽऽदिष्टो मयि संन्यस्तकर्मणा ।**
**जित्वा सुदुर्जयं मृत्युममृतत्वाय मां भज ॥ ३८ ॥**

गच्छेति । मयाऽऽदिष्ट आज्ञप्तो गच्छ । इतो गत्वा सर्वदा परिभ्रमणं कर्तव्यम् । ततः कर्तव्यमाह—मयि संन्यस्तकर्मणा सुदुर्जयं मृत्युं जित्वा अमृतत्वाय परमानन्दप्राप्तये मां भज । कर्माणि बहुविधानि । मृत्युजये साधनत्वेन निरूपितानि बहून्यपि कर्माणि । सर्वकर्माणि भगवति समर्पणीयानीत्येके । भगवद्भजनविरोधीनि तदर्थं त्यक्तव्यानीत्यपरे । तत्र प्रथमेन मयि समर्पितेन कर्मणा सुदुर्जयमपि मृत्युं जयति तदा बाधकस्य मृत्योरभावात् परमानन्दप्राप्त्यर्थं पश्चान्मद्भजनं कर्तव्यम् । परिभ्रमणं सर्वकर्मसमर्पणमादौ कर्तव्यम् । तस्मिन् कृते देहपरिणामः पलितता क्षुत्पिपासे चेन्न भविष्यन्ति तदा पश्चाद्भजनं कर्तव्यम्, स्वस्थकार्यत्वाद्भजनस्य । पलिताद्यभावश्च मृत्युजयबोधकः ॥ ३८ ॥

भयं तु द्वैतकार्यम्, शोकश्च सङ्घातकार्यम्, तदुभयं ततो निवर्तिष्यत इत्याह—

**मामात्मानं स्वयंज्योतिः सर्वभूतगुहाशयम् ।**
**आत्मन्येवाऽऽत्मना वीक्ष्य विशोकोऽभयमृच्छति ॥ ३९ ॥**

÷मामात्मानमिति । साङ्ख्ये आत्मैव चिद्रूपो भगवच्छब्दवाच्यः । तमात्मनैव सङ्घातातिरिक्त आत्मा भजति । आत्मनैव भजनं मुख्यम्; यथा शरीरेण लोके, द्रव्यादिना च गौणम्; तथाऽऽत्मना मुख्यम्, देहेन्द्रियादिभिर्गौणमिति तस्योपास्यत्वाय गुणानाह—स्वयंज्योतिः सर्वभूतगुहाशयमिति । तत्स्वप्रकाशं सर्वभूतान्तःकरणे, विद्यमानं च, अतः प्राप्त्यर्थम्, परिज्ञानार्थं वा तत्र यत्नो न कर्तव्यः । सङ्घाताद्विवेके भाव्यमाने स्फुरितः स्वात्मा व्यापकं च तमात्मानं स्फुटं करोति । यथा बहिःस्थितो वह्निः काष्ठे संबद्धः, काष्ठान्तर्गतवह्निमपि मथनादिव्यतिरेकेणैव शीघ्रं प्रकाशयति, ऐक्यं च प्राप्नोति; तथाऽत्राऽप्यनुसन्धेयम् । तदा सर्वमात्मैवेति भयं शोकश्च निवर्तते । उद्देश्ये त्वपरिज्ञाते तस्येदन्त्वं सुतरामेवाज्ञातं भवति । संसर्गे वह्नावेव काष्ठस्थितोऽपि वह्निस्तिष्ठति, काष्ठस्योपभुक्तत्वात्, तेनैव च प्रकाशितस्तदाह—आत्मन्येवाऽऽत्मनेति । एवं दृष्ट एव पुनः सङ्घातपातशङ्काभावात् विशोको भवति । अभयोपपत्तिरुक्ता स्वयमेव सर्वो भवतीति ॥ ३९ ॥

एवं तमनुशास्य मात्रे कर्तव्यमाह—

**मात्रे चाऽऽध्यात्मिकीं विद्यां शमनीं सर्वकर्मणाम् ।**
**वितरिष्ये यया चाऽसौ भयं चातितरिष्यति ॥ ४० ॥**

---

प्रकाशः ।

÷ मामित्यत्र । उद्देश्ये इति । मामित्यनेन पदेनोक्ते उद्देश्ये इत्यर्थः । संसर्गे इति । भावर्ह्नि— र्गे इत्यर्थः ।

मात्रे चेति । एषा त्वाधिदैविकी विद्योक्ता, मात्रे पुन आध्यात्मिकीं विद्याम् । तत्र विवेकेन स्वात्म दर्शनमेव । अत एव सर्वकर्मणा शमनीम् । सा तस्याः साधनेन यद्यपि न भविष्यति, तथापि अहमेव वितरिष्ये, वितरणगुणेनैव दास्यामि । यया विद्यया, मत्कृपया चाऽञ्जसा सामस्त्येन भयमतितरिष्यति । चकाराच्छोकम् । अतितरणं पुनः सङ्घातप्रत्ययस्याभाव ॥ ४० ॥

×एव स्वगृहीतदेहद्वयस्य साऽऽत्मन· प्रतिपत्तिं श्रुत्वा स्वरूपप्राप्तिपर्यन्तं कृतवानित्याह—एवमिति सप्तभि ।
आदौ ततो निर्गमन व्रतानि च बहिस्तथा । आन्तर मनसा ध्यान दोषाभावस्तथान्तरः ।१।
ततो गुणाश्च तत्रैव ततो ज्ञानोदयस्तथा । ततः फलस्य सम्प्राप्तिः प्राप्ते ज्ञाने त्वियं क्रिया ।२।
आदौ ततो निर्गमनमाह—

## मैत्रेय उवाच ।

**एवं समुदितस्तेन कपिलेन प्रजापतिः ।**
**दक्षिणीकृत्य तं प्रीतो वनमेव जगाम ह ॥ ४१ ॥**

एवमिति । तेन कपिलेन पूर्वोक्तप्रकारेणोदित । तथा स्वय चेन्न कुर्यादन्योऽपि न करिष्यतीति स्वय प्रजापति पुत्रं प्रदक्षिणीकृत्य,तद्वाक्यात्प्रीतो वनमेव जगाम। हेत्याश्चर्यम्। भगवन्त विहाय वनं गत इति वाक्याच्च गत।

गतस्य व्रतान्याह—

**व्रतं स आस्थितो मौनमात्मैकशरणो मुनिः ।**
**निःसङ्गो व्यचरत् क्षोणीमनग्निरनिकेतनः ॥ ४२ ॥**

व्रतमिति । मौन वाग्व्यापारपरित्याग , तद्व्रतत्वेन गृहीतमादेहपर्यन्तम् । अनेन नामप्रपञ्च परित्यक्तो भवति । रूपप्रपञ्चपरित्यागमप्याह—आत्मैकशरण इति । आत्मैवैक शरण यस्य 'अयमात्मा ब्रह्म' इति । मुनिरिति वासनामयप्रपञ्चनिवृत्ति ।एवं स्वकर्तृकप्रपञ्चपरित्यागमुक्त्वा, अन्यकृतस्याऽपि सम्बन्धाभावमाह—निःसङ्ग इति । निर्गत सङ्गो यस्मात् । परिभ्रमः स्वधर्म । अनग्नि पाकादिरहित । अनिकेतनो गृहादिरहितश्च । अग्निगृहसम्बन्धराहित्य यथा भवति तथा व्यचरत् । नाग्निस्पृष्टं भक्षयति, न वापि गृह प्रविशतीत्यर्थ ॥ ४२ ॥

आन्तरमाह—

**मनो ब्रह्मणि युञ्जानो यत्तत्सदसतः परम् ।**
**गुणावभासे विगुण एकभक्त्याऽनुभाविते ॥ ४३ ॥**

वैदिकोऽप्युपनिषत्प्रकारेणाऽऽवृत्तचक्षुर्भूत्वा मनो ब्रह्मणि नियम्य, अहङ्कारादिरहितः सन् भक्तिं प्राप्य, ज्ञान च, भागवती गतिं प्राप्त इति पञ्चमेन सम्बन्ध । तद्ब्रह्मप्रपञ्चातीतमुभयरूप परिज्ञाय, माहात्म्यार्थमेक परिज्ञाय, अपरस्मिन्मनो निवेश्य । तच्च ब्रह्म कार्यकारणातीतमपि गुणानामवभासो यत्रेति । कारण

---

प्रकाशः ।

× एवमित्यत्र । प्राप्ते ज्ञाने त्विय क्रियेति । अय सप्ताना समुदायार्थो ज्ञेय ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे चतुर्विंशाध्यायविवरण सम्पूर्णम् ।

गुणप्रवर्तकं, सदाचंशैश्च गुणानुत्पादकमिति । तत्र मनसः स्थापने उपायमाह—एकभक्त्याऽनुभावित इति । अनन्यया भक्त्या प्रेम्णैव तत्र मनः स्थिरं भवति । भक्त्या च तत्रानुभावो जनित इति न निःसङ्गत्वादयो ब्रह्मधर्मा बाधकाः ॥ ४३ ॥

मनश्चेत्संसक्तं ब्रह्मणि, देहादावहङ्कारः स्वत एव निवृत्तो भवतीत्याह—

निरहङ्कृतिर्निर्ममश्च निर्द्वन्द्वः समदृक् स्वदृक् ।
प्रत्यक् प्रशान्तधीर्धीरः प्रशान्तोर्मिरिवोदधिः ॥ ४४ ॥

निरहङ्कृतिरिति । अहङ्कारस्य वृत्तिद्वयमहंममेति । तदुभयमपि नास्तीत्याह—निरहङ्कृतिर्निर्ममश्चेति । चकारादाकृत्यादिष्वपि तदध्यासाऽभावः । तदनन्तरमूर्म्यभावोऽपि जात इत्याह—निर्द्वन्द्व इति । यदेकस्मिन्नागतेऽपरमागच्छति, तत् द्वन्द्वम्; यथा लौकिकसुखानन्तरं दुःखमावश्यकमिति, यथा क्षुत्पिपासे, जरामृत्यू, शोकमोहावित्यादीनि द्वन्द्वानि । तदा विषयेषु वैषम्यग्रहणे प्रयोजनाभावात् सर्वत्र समदृक् समं ब्रह्म पश्यति । आत्मानमात्मनि वा पश्यतीति स्वदृक् । तदा तस्य बहिर्मुखतयाऽऽत्मस्फूर्तिर्न जातेत्याह—प्रत्यगिति । स स्वयमन्तर्मुखतयैव स्फुरतीत्यर्थः । बुद्ध्या हि विक्षिप्तया बहिर्मुखो भवति, तदपि नास्तीत्याह—प्रशान्तधीरिति । बहिस्तादृशस्य ज्ञापकं दृष्टान्तेनाऽऽह—प्रशान्तोर्मिरिवोदधिरिति । प्रशान्ता ऊर्मयो यस्य । यथा निस्तरङ्गः समुद्रश्चाञ्चल्यरहितः ॥ ४४ ॥

एवं सर्वदोषरहितस्य भक्तिर्जातेत्याह—

वासुदेवे भगवति सर्वज्ञे प्रत्यगात्मनि ।
परेण भक्तिभावेन लब्धात्मा मुक्तबन्धनः ॥ ४५ ॥

वासुदेव इति । अन्तःकरणे शुद्धसत्त्वात्मके आविर्भूते भगवति षड्गुणसंपन्ने ज्ञानशक्तियुक्ते ज्ञानसहितो[1] भगवान् परमहंसैर्ज्ञेय इति सर्वज्ञ इत्युक्तम् । स च स्वस्य स्वरूपमेवेत्याह—प्रत्यगात्मनीति । प्रत्यक्त्वमात्रे भगवानेव तथा स्फूर्तियुक्तोऽपि भवेत्, अत आत्मनीति । परेण माहात्म्यज्ञानपूर्वकस्नेहेन । भक्तिभावेन मानसभजनक्रियया सह परमादरेण तस्मिन् लब्धात्मा जातः, तत्रात्मभावं प्राप्तः । बहिर्निवर्तकानि बन्धनानि ततो निवृत्तानीत्याह—मुक्तबन्धन इति ॥ ४५ ॥

तदा तस्य जातस्य ज्ञानस्य स्वरूपमाह—

आत्मानं सर्वभूतेषु भगवन्तमवस्थितम् ।
अपश्यत्सर्वभूतानि भगवत्यपि चाऽऽत्मनि ॥ ४६ ॥

आत्मानमिति । भगवानेव स्वात्मा, स सर्वेषु भूतेषु समवस्थितः । एवं सर्वत्र स्वात्मानं भगवद्रूपं दृष्टवान् । सर्वाणि च भूतानि भगवद्रूप आत्मनि वाऽपश्यत् । जगत आधाराधेयभूतं स्वात्मरूपं भगवन्तं साक्षात्कृतवानित्यर्थः ॥ ४६ ॥

एवं जाते पूर्णज्ञाने फलमाह—

इच्छाद्वेषविहीनेन सर्वत्र समचेतसा ।

---

1 च. क. ख.

**भगवद्भक्तियुक्तेन प्राप्ता भागवती गतिः ॥ ४७ ॥**

इच्छाद्वेषेति । चित्तं तदैव ब्रह्मरसस्पृष्टं लौकिकान्निवर्तते, यदा इच्छा, द्वेषश्च विषयेभ्योऽपगच्छति, सर्वत्र च चित्तं वैषम्यं न गृह्णाति । चित्तदोषादेव विषये वैषम्यं स्फुरति, अन्यथैकस्मिन्नेव विषये क्रमाद्रागद्वेषौ न भवेताम् । ब्रह्मरसस्पृष्टं सर्वत्र ब्रह्मस्थितमिति सममेव गृह्णाति । अनेन ब्रह्मभावस्तस्योक्तः। ततो मुख्यां भक्तिमाह–भगवद्भक्तियुक्तेनेति । 'यावान् यथास्मि यादृशः' इति ज्ञानसहिता प्रेमलक्षणा भक्तिरुत्पन्ना । भगवच्छब्दाच्च विषयपरिज्ञानलक्षणं ज्ञानमायाति । ततो भगवत्संबन्धिनीं गतिं प्राप्तवान्, यया गत्या भगवान् गच्छति । भगवति वा गतिः, भगवद्भावं सायुज्यं वा प्राप्तवानित्यर्थः ॥ ४७ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां तृतीयस्कन्धे चतुर्विंशाऽध्यायविवरणम् ।

---

## पञ्चविंशाध्यायविवरणम् ।

* उक्तश्चतुर्भिरध्यायैः समसङ्गो हरेर्भवः ।
ज्ञानरूपं चरित्रं तु नवभिः स्वस्य वर्ण्यते ॥ १ ॥
प्रकाराः सगुणाः सर्वे नवाऽध्यायास्ततोऽत्र हि ।
नवभावं गता साऽपि तदन्ते स्वभवो भवेत् ॥ २ ॥
भगवद्रूपनिष्पत्तौ भक्तिर्भूतानि सर्वथा ।
मात्रास्तत्त्वानि सर्वाणि भुङ्क्ते सर्वं यतो हरिः ॥ ३ ॥
आत्मा तस्येन्द्रियं प्रोक्तं येन सर्वं न पश्यति ।
योग एव हरेर्बुद्धिस्तस्मात्सर्वं प्रकाशते ॥ ४ ॥

---

गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृतः प्रकाशः ।

* अथ पञ्चविंशाध्यायं विवरिषवः 'करोति कर्माणि कृतावतारः' इति विदुरप्रश्नानुसारिणं कश्चिद्विशेषमाहुः–उक्त इत्यादि । तेन यावन्त उक्ताः पदार्थास्ते सर्वे 'श्रुतस्य पुंसाम्' इत्यादिप्रश्नानुरोधेनोक्ता इति प्रासङ्गिकत्वे पर्यवस्यन्ति, तथैव वक्ष्यमाणा अपीत्यर्थः । एतेनैव पूर्वोत्तरप्रकरणयोर्हेतुहेतुमद्भावोऽपि समर्थितो ज्ञेयः, एतन्मुक्तेः पुंप्रयुक्तत्वादिति । एवं संवादस्य प्रकरणयोश्च सङ्गतिं प्रदर्श्य स्कन्धार्थविचारेणाऽऽख्याता चतुर्णामध्यायानां तात्पर्यमाहुः–भगवद्रूपेत्यादि द्वाभ्याम् । सर्वथेति । सर्वप्रकारोपयुक्तत्वात् । एवं च भगवद्धर्मसहितानां भूतादीनामेताभ्यां लक्षणमेव कृतं ज्ञेयम् । एवं प्रकरणद्वयस्या-

---

१ अपि. ग च.

*पञ्चविंशे तथाऽध्याये भक्तियोगो निरूप्यते ।
वैतृष्ण्यं तस्य चाऽङ्गं हि इतरज्ञानमेव च ॥ ५ ॥
परमं साधनं भक्तिर्यथा भवति मुक्तये ।
यथाशास्त्रस्य कथनं सन्तो भक्तेश्च साधकाः ॥ ६ ॥
वंश एव मनोः पृष्टस्तेन ज्ञानं न वर्णयेत् ।
अतः शौनकसंप्रश्नश्चरित्रत्वं च बुध्यते ॥ ७ ॥

पूर्वोऽध्याये कपिलोत्पत्तिर्निरूपिता, तस्य चरित्रं ज्ञानरूपं न निरूपितमिति शौनकस्तत्पृच्छति-कपिल इति त्रिभिः—

## शौनक उवाच ।

**कपिलस्तत्त्वसंख्याता भगवान् स्वाऽऽत्ममायया ।
जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम् ॥ १ ॥**

+ कपिल इति । चरित्रकथनप्रश्नस्तत्राऽतृप्तिस्तथात्मनः । सामान्यतोऽप्यतृप्तिश्च प्रकृतौ साधिका मता ॥ १ ॥ प्रथमं चरित्रं पृच्छति । तत्त्वसङ्ख्याता तत्त्वसङ्ख्यानकर्ता । तत्त्वानां संदिग्धत्वान्नान्यो वक्तुमिहाऽर्हतीति भगवान् । ज्ञानस्य स्वगुणत्वात्स्वावतारव्यतिरेकेण न प्रकटं भवतीति, स्वात्ममायया सर्वभवनसामर्थ्येन, कपिलरूपेण जात आविर्भूतः साक्षात् । स्वयमजोऽपि सन्, स्वसजातीयत्वेनाऽपरिज्ञाने लोको न मन्यत इति नृणामात्मप्रज्ञप्तय आत्मनः सम्यक् ज्ञानाय, स्वयं मनुष्यरूपेण जात इत्यर्थः । अनेन तेन जीवानामात्मज्ञानार्थं किञ्चित् कृतवानिति निश्चितम्, तद्वक्तव्यमित्यर्थः ॥१॥

उक्तमुपपत्त्या साधयति[1]—

**न ह्यस्य वर्ष्मणः पुंसां वरिम्णः सर्वयोगिनाम् ।
विश्रुतौ श्रुतदेवस्य भूरि तृप्यन्ति मेऽसवः ॥ २ ॥**

न ह्यस्येति । पुंसां वर्ष्मणः श्रेष्ठस्य, सर्वयोगिनां वरिम्णो वरणीयस्य, विश्रुतौ कीर्तौ निरन्तरं श्रूयमाणायामपि । श्रुतावेव देवः प्रकाशते, श्रुतेन दीव्यतीति वा; कीर्तिप्रियस्य, कीर्तिगम्यस्य वा । मे असवः प्राणा भूरि न तृप्यन्ति । अतः सामान्यतो वर्णितमपि विशेषाकारेण वर्णनीयमिति भावः ॥ २ ॥

प्रकाशः।

* प्यर्थं निरूप्य प्रस्तुताध्यायार्थं सप्रपञ्चमाहुः । पञ्चविंशेत्यादि । तस्येति । भक्तियोगस्य । अङ्गमिति । फलोपकार्यङ्गम् । इतरज्ञानमिति । विविक्तात्मज्ञानम् । तथाचाङ्गद्वयवती भक्तिर्भवदर्थभूताधिदैविकसंस्काररूपाऽत्र निरूप्यत इत्यर्थः । विभागान्तरं एतस्य धर्माध्यायत्वमिति तद्बोधनायाऽऽहुः—परममित्यादि । यथाशास्त्रस्य कथनमिति । शास्त्रमनतिक्रान्तस्य प्रकारस्य कथनम् । तथाहिदं तस्य प्रकारस्य धर्मत्वज्ञापकमित्यर्थः । सतां निरूपणं तु गुरूपयोगादुभयसाधारणमित्याहुः—सन्त इत्यादि । चाद्धर्मस्यापि । शेषं स्फुटम् ।

+ कापिल इत्यत्र । न मन्यत इति अजत्वं, स्वराट्त्वं च न मन्यते । अनेन तेनेति । अनयोरत्मा तेनाऽऽभिर्मावेण ।

[1] स्वयमेव स घ च

सामान्यतः सर्वमेव भगवच्चरित्रं पृच्छति—

यद्यद्विधत्ते भगवान् स्वच्छन्दात्माऽऽत्ममायया ।
तानि मे श्रद्दधानस्य कीर्तन्यान्यनुकीर्तय ॥ ३ ॥

यदिति । स्वानां भक्तानां छन्द इच्छा, तदनुसारी आत्मा यस्य । चरित्रकरणेऽपि स्वात्ममायाकरणम् । यद्यदिति ज्ञानक्रियादिविशेषो नाऽपेक्षितः । तानि सर्वाण्येव सर्वथा कीर्तनीयानीति कथने तवाऽऽवश्यकानि । श्रद्दधानस्येति श्रवणे ममाऽऽवश्यकानि । मच्छ्रद्धाऽपि तव कथने हेतुः ॥ ३ ॥

यथा शौनकः पृच्छति तथैव विदुरः पृष्टवानिति वदन् मैत्रेयद्वारैवैतच्चरित्रं कथयति—

## सूत उवाच ।

द्वैपायनसखस्त्वेवं मैत्रेयो भगवांस्तथा ।
प्राहेदं विदुरं प्रीत आन्वीक्षिक्यां प्रचोदितः ॥ ४ ॥

द्वैपायनसख इति । आन्वीक्षिक्यां विदुरेण प्रचोदितो मैत्रेयो विदुरं प्रत्याहेति संबन्धः । विदुरप्रश्ने अवश्यकथनार्थं मैत्रेये धर्मत्रयमाह—पितृमित्रत्वात्, जगन्मित्रत्वात्, भगवत्त्वाच्च । विदुरो हि द्वैपायनपुत्रः, प्राणी, भक्तश्चेति । आन्वीक्षिकी आत्मविद्या, मननरूपा विधेत्येके ॥ ४ ॥

मैत्रेयो देवहूतिकपिलयोः संवादं वक्तुं कर्दमगमनानन्तरं कपिलस्तत्रैव स्थित इत्याह—

## मैत्रेय उवाच ।

पितरि प्रस्थितेऽरण्यं मातुः प्रियचिकीर्षया ।
तस्मिन्बिन्दुसरेऽवात्सीद्भगवान् कपिलः किल ॥ ५ ॥

पितरीति । महतां गृहे स्थितिः पित्रोरर्थ इति ज्ञापयितुम्, पितरि अरण्यं प्रस्थिते सति मातुः प्रियचिकीर्षया तस्मिन्नेव बिन्दुसरेऽवात्सीत् । बिन्दुः सरसि यस्मिन्निति डच् समासान्तः । वासमेव कृतवान्, जिज्ञासानन्तरमेव वक्तव्यमिति । क्षुधितायैव अन्नदानम् । माहात्म्यज्ञानार्थम्—भगवानिति । कपिल इति तदर्थमेवाऽवतारः सूचितः । किलेति भगवतः सापेक्षतया क्वचिदपि स्थितिरयुक्तेति । किलेति प्रसिद्ध्या स्वदोषो निवारितः ॥ ५ ॥

तमासीनमकर्माणं तत्त्वग्रामाग्रदर्शनम् ।
स्वसुतं देवहूत्याह धातुः संस्मरती वचः ॥ ६ ॥

तदा देवहूतिर्भर्तरि निर्गते उत्कटशोकापगमानन्तरं[1] तं पुत्रमासीनमाहेति संबन्धः । प्रसिद्धिर्ज्ञानोपदेशसमर्थने । आसीनमित्यव्यग्रत्वाय । अकर्माणमिति तपोयोगादिरूपे कस्मिन्नपि कर्मण्यप्रवृत्तम्, अन्यथा तादृशे प्रश्नो न युक्तः । प्रश्ने योग्यं रूपमाह—तत्त्वग्रामस्याऽग्रं पर्यवसानं तस्य दर्शनं यस्य । स्वसुतमिति विश्वासो निर्भयत्वम्, दोषाभावश्चोक्तः । भर्त्रा यद्यप्युक्तम्, तथाप्याश्वासनार्थमपि तद्भवतीति प्रश्नोक्तमेव प्रमाणीकरोति—धातुः संस्मरती वच इति । स हि विधाता सर्वेषां पितृस्थानीय इति न तत्र कश्चिद्धेतुः सम्भवति 'एष मानवि ते गर्भम्' इति वचः ॥ ६ ॥

[1] समागमनानन्तरम् । क.

तस्याः प्रार्थनां वक्तुं स्वस्य प्रश्नकर्तृत्वं तस्य चोत्तरदानार्थमेवावतीर्णत्वं समर्थयन्ती भगवन्तं स्तौति त्रिभिः। तत्र प्रथमं स्वस्य वैराग्यमाह—

देवहूतिरुवाच।

निर्विण्णा नितरां भूमन्नसदिन्द्रियतर्पणात्।
येन संभाव्यमानेन प्रविष्टाऽन्धं तमः प्रभो॥ ७॥

निर्विण्णेति। भूमन्निति सर्वसामर्थ्यं सूचितम्। असदिन्द्रियतर्पणादहं निर्विण्णा। इन्द्रियाणि स्वार्थे नोपयुज्यन्ते। सर्वात्मको भगवानिति यदि भगवद्बुद्ध्याऽपि पोष्यन्ते, तदाऽप्येते स्वगुणं कुर्वन्त्येव, असत्त्वात्। सत्स्वेव भगवद्भजनमिति हि सिद्धान्तः। अत एवाऽसत्त्वपरिचितभगवच्चरणसेवां न कुर्यात्, अनभिव्यक्ते भगवत्याश्रयधर्माणां बलिष्ठत्वात्। अत आह—असदिन्द्रियतर्पणात् निर्विण्णा। निर्वेदकारणमिन्द्रियकृतमपराधमाह—येनेति। येनेन्द्रियतर्पणेन निरन्तरं संभाव्यमानेन। सम्भावनाऽऽदरपूर्वकं तत्पूरणम्। असतां कार्यं पोषकनाशनमित्यन्धं तमो महामोहं प्रविष्टा। प्रभो इति क्रोशनम्, यथाऽन्यैः पीडितः प्रभोः स्थाने आक्रोशनं करोति॥ ७॥

त्वं त्वेतदर्थमेवाऽवतीर्ण इत्याह—

तस्य त्वं तमसोऽन्धस्य दुष्पारस्याद्य पारगम्।
सच्चक्षुर्जन्मनामन्ते लब्धं मे त्वदनुग्रहात्॥ ८॥

तस्येति। इन्द्रियादिभिः कृतस्याऽन्धस्य तमसः, देशतः कालतश्चापरिच्छिन्नस्य, अलौकिकसामर्थ्येन यच्चक्षुस्तस्य पारं गच्छतीति तदेव भवान्। बहूनां जन्मनामन्ते मे मया लब्धम्। तत्रापि करणं त्वदनुग्रह एव॥ ८॥

किञ्च, साक्षाद्भगवान् भवानित्याह—

य आद्यो भगवान्पुंसामीश्वरो वै भवान्किल।
लोकस्य तमसोऽन्धस्य चक्षुः सूर्य इवोदितः॥ ९॥

य आद्य इति। आद्यः पुरुषः। सर्वेषां ब्रह्मादीनां पुंसां त्वमेवाद्यः, कारणम्। कारणमेव च ब्रह्म। कालादिव्यावृत्त्यर्थमाह—भगवानिति। केवलजनकत्वे ब्रह्मत्वं न सेत्स्यतीति नियामकत्वमप्याह—पुंसामीश्वरो वै भवानिति किलेति प्रमाणम्। किञ्च, पालनार्थं भवानवतीर्णश्च। यतस्तमसोऽन्धस्य लोकस्य चक्षूरूपः सूर्यरूपश्च भवानुदितः। तमसः सकाशादन्धस्य चक्षुः प्रकाशकः, सूर्यो भवानिति वा। ममापि भवान् चक्षुः, लोकानां चक्षुरित्यपौनरुक्त्यम्। आत्मानं प्रति चक्षुष्ट्वम्, सर्वान् प्रति सूर्यत्वमिति वा।

एवं भगवन्तं स्तुत्वा विज्ञापनामाह—

अथ मे देव! संमोहमपाक्रष्टुं त्वमर्हसि।
योऽवग्रहोऽहंममेतीत्येतस्मिन्योजितस्त्वया॥ १०॥

अथेति। हे देव! मोहनाशक, मे मोहमपाक्रष्टुं त्वमर्हसि। तवैव चाऽत्र सामर्थ्यम्। यतस्त्वयैव 'अहंममेत्यस्मिन् शरीरे,' अवग्रह आग्रहो योजितः। अतस्त्वयैव दूरीकर्तव्यः॥ १०॥

ननु सर्वैरप्येव मया युज्यते, न तु दूरीक्रियत इति चेत्तत्राऽऽह—

तं त्वा गताऽहं शरणं शरण्यं स्वभृत्यसंसारतरोः कुठारम् ।
जिज्ञासयाऽहं प्रकृतेः पूरुषस्य नमामि सद्धर्मभृतां वरिष्ठम् ॥ ११ ॥

तं त्वा गताऽहमिति । शरणागतस्य तु दूरीक्रियते । तं मोहदूरीकरणसमर्थं त्वां दैवात्प्राप्तम् । अतोऽहं शरणं गता । शरणार्हश्च भवान् । यथा विद्यासु या विद्या यस्य तत्रैव सा भवेत् । शरणागतधर्मोऽपि शरण्ये सोऽपि कश्चन । स्वस्वामी हरिरेवैकः शरण्य इति तद्वचः ॥१॥ किञ्च, स्वभावतोऽपि भगवान् स्वभृत्यानां संसारं दूरीकरोति. शरणागताश्च भृत्यतुल्याः । अतः शरणागतौ संसारदूरीकरणं स्वयमेव करिष्यतीत्याह—स्वभृत्यसंसारतरोः, कल्पादारभ्य मोक्षपर्यन्तमनुवर्तमानस्य, अनादिसान्तस्य वा, कर्मकालनियतान्तरहितस्य कुठारं छेदकम् । तस्मिन् संसारे भगवांश्चेत् प्रविशेत् तदा स नश्येत्; यथा कुठारे प्रविष्टे । स हि भक्तानामेव संसारं प्रविशति नाऽन्यस्य पतिपुत्रादिरूपेण । अतः स्वभृत्येत्युक्तम् । ते हि भरणीयाः कालः, कर्म वा तान् न बिभर्ति, अतः संसारप्रवेशोऽद्भुतकर्मत्वाच्च छेदकः संपद्यते । तरोरित्येकवचनं सर्वेषां भक्तानां भगवदीयत्वेन भावाद्वैतादिधर्मवत्त्वात् एक एव संसार इति सूचितम् । यद्यपि स्वप्रयत्नव्यतिरेकेणैव स्वयमेव करिष्यत्यन्तःप्रविष्टः, प्रवेशनप्रयत्नश्च नाऽपम्, तथाप्यौत्कण्ठ्यात् सर्वतत्त्वपरिज्ञानार्थं यत्न' क्रियत इत्याह—नमामीति । प्रकृतेः पुरुषस्य च ज्ञानेच्छया गुरुत्वेन त्वां नमामि । मातुरपि नमस्कार उपाधिभेदात् न दोषाय । यथा देहस्तत उत्पन्नः, पुष्टो वा, तथा ज्ञानं, गतिर्वा यस्मादुत्पद्यते, स सेवकः, पुत्रोऽन्यो वा नमस्करणीय एव भिन्नोपाधित्वादिति । प्रकृतिपुरुषविवेको हि सर्वथा कर्तव्यः, पुरुष एव सेव्यो न प्रकृतिरिति ज्ञानार्थम् । गुरोर्लक्षणमाह—सद्धर्मभृतां वरिष्ठमिति । सद्धर्मा भक्तधर्माः शमादयः, तान् ये बिभ्रति, न तु केवलं कदाचित् कुर्वन्ति; येषु शमादयो नियता इत्यर्थः । तेषां श्रेष्ठः । त एव गुरवो भवितुमर्हन्ति, किं पुनस्तेषां गुरु' ॥ ११ ॥

एवं युक्तिपूर्वकं मातृवचनं श्रुत्वा पृष्टमात्रस्वरूपे कथिते ज्ञातुं न शक्यत इति सर्वमेव शास्त्रार्थमाहेत्याह—

## मैत्रेय उवाच ।

इति स्वमातुर्निरवद्यमीप्सितं निशम्य पुंसामपवर्गवर्द्धनम् ।
धियाऽभिनन्द्याऽऽत्मवतां सतां गतिर्बभाष ईषत्स्मितशोभिताननः ॥ १२ ॥

इतीति । स्वमातृत्वाद्गुरुत्वेन तद्वच आदरणीयम् । निरवद्यं च तस्येप्सितम्, संसारातीतविषयत्वात् । यदर्थमवतीर्णः, तद्द्वयमपि एकरूपमेव जातमिति संतोषादपि कथनं बोधयति—पुंसामपवर्गवर्द्धनमिति । यद्येकः साधनेन मुच्यते, तदाऽन्योऽपि तं दृष्ट्वा साधने प्रवर्तेत इत्यपवर्गं वर्द्धयतीति । मुखेनाऽभिनन्दने कृते स्त्रीत्वात्कदाचिदभिमानमवलम्बेत । अतो धियाऽभिनन्द्य प्रश्नधर्मविचारेण कथने निरूप्य स्वधर्मविचारेणाऽपि निरूपणमावश्यकमित्याह—आत्मवतां सतां गतिरिति । आत्मवन्तः सत्कृष्णाः, तस्यैव बहिर्ज्ञापकं जितेन्द्रियत्वम् । सन्तस्तद्धर्मवन्तः । भगवद्धर्मधर्मिवतां पूर्णसाधनानां यो गतिः प्राप्यः । तेन फलरूपोऽयम्, तत्साधने सिद्धे प्राप्य इति स्वरूपदानौपयिकं साधनमवश्यं वक्ष्यतीत्युक्तम् । ईषत्स्मितेन शोभितमाननं यस्येति संतोषो ज्ञापितः । प्रसन्नोक्तमेव हि फलायेति मन्दहासस्याऽपि मन्दत्वमल्पमोहकत्वम्, यतः पुत्रत्वं स्थापयति ॥ १२ ॥

साङ्ख्ये परित्यागो नित्य इति तदनुक्त्वा अङ्गत्वेन च तद्वक्ष्यामीति विचार्य योगानुसारेणैव शास्त्रार्थमाह—योग इत्यादि पञ्चदशभिः । योगं प्रशंसारूपेण प्रमाणेनाऽपि वर्ण्यते । चित्तालम्बनरूपो हि योगस्तत्र प्रतिष्ठित ॥ १ ॥ अन्तरात्मा स्वयं चित्तमिन्द्रियाणि तथा तनुः । वेदे साङ्ख्ये च योगे च शैवे वैष्णव एव च ॥ २ ॥ मूलरूपाणि शास्त्राणां नियमार्थं निरूपणात् । आत्मशेषो ह्यहङ्कारः स साङ्ख्ये विनिरूप्यते ॥ ३ ॥ एकीकृत्य मनश्चित्त योगो ह्यत्र प्रवर्तते । ज्ञानक्रियारूपभेदाच्छास्त्रार्थे ज्ञानमुख्यता ॥ ४ ॥ अतश्चित्त पुरस्कृत्य योगमाह हरिः स्वयम् । चित्तस्य रूपभेदश्च यच्च रूपमिहोचितम् ॥ ५ ॥ तादृशस्य फल चाऽपि साधनानि बहूनि च । तत्राऽप्येकस्य निर्धारस्तस्य साधनमेव च ॥ ६ ॥ तस्याऽपि विषय मोक्षश्चतुर्भि षोडशात्मकः । तस्य साधनतारूप तथात्व मोक्षसाधने । बलिष्ठात्तु फल सिध्येत्तस्मादिति विनिर्णयः ॥७॥ आदौ योगप्रशसामाह—द्वाभ्याम् । तत्र प्रथमं स्वरूपेणोत्कर्षमाह—

## श्रीभगवानुवाच ।

+ योग आध्यात्मिकः पुंसां मतो निःश्रेयसाय मे ।
अत्यन्तोपरतिर्यत्र दुःखस्य च सुखस्य च ॥ १३ ॥

---

### प्रकाशः

+ योग इत्यत्र । पञ्चदशाना तात्पर्य सार्धसप्तभिराहु —योग प्रशसेत्यादि । रूपेणेति । लक्षणेन । वर्ण्यत इति । द्वाभ्या वर्ण्यते । ननु साङ्ख्यप्रवर्तनार्थमवतीर्णो भगवान् योगं किमित्युपदिशतीत्याकाङ्क्षाया सप्तपञ्चचतुर्भिस्तात्पर्यमाहु —चित्तेत्यादि । इदमर्थं चतुर्थस्योत्तरार्धेन युज्यते । तथा चाऽयमर्थः। हि यतो हेतो , तत्र देवहूत्याम् , चित्तालम्बनरूपो योगः प्रतिष्ठितः 'अथ मे देवसमोहम्' इत्यादि पद्यद्वयोक्त्या प्रतिष्ठा प्राप्तोऽधिकारवशत स्थिरोऽस्ति, अतश्चित्त पुरस्कृत्य, तदधिकार विचार्य, हरि स्वय योगमाहेति । नन्वस्त्वेवम्, तथापि योगाना बहूना विद्यमानत्वात् आध्यात्मिकयोगोपदेशे किं बीजमित्याकाङ्क्षाया न्यायतारप्रयोजनमेव बीजमित्याशयेनोद्देश्याद्य वक्तु प्रथमत उपदेश्यान् विनियाना सर्वमोक्षशास्त्रसम्मत गणमाहु —अन्तरात्मेत्यादि । अन्तरात्मा अहकार , स्वय जीव , मूलरूपाणि बोध्यानि रूपाणि, बोध्यत्वे हेतु —शास्त्राणामित्यादि । यत पञ्चानामपि शास्त्राणा स्वस्वरीत्या एतन्नियमनार्थ निरूपणादेतज्ज्ञानस्याऽऽवश्यकत्वेनैतानि बोध्यानीत्यर्थ । प्रकृते मुख्यतया नियम्यमाहुः—आत्मशेष इत्यादि । हि यतो हेतोरात्मशेषत्वाधकत्वेनात्मार्थोऽहङ्कारो यः, स साङ्ख्ये विशेषेण नियम्यतया निरूपितः, साङ्ख्ययोगौ च फलतोऽभिन्नौ, अतो मनश्चित्त चैकीकृत्याऽत्रोपदेशे, हि निश्चयेन, योगः प्रकर्षेण वर्तते । तत्रापि हेतु । ज्ञानक्रियारूपभेदात् । ज्ञानरूप क्रियारूप च भेदं प्राप्य स्थिते शास्त्रार्थे ज्ञानस्य यतो मुख्यतेति । तथा च ज्ञाने सत्यहङ्कारनिग्रहस्तच्च चित्तनिग्रहाधीनम्, ■ च योगात्, अत अध्यात्मयोगोपदेश इति फलितार्थ । एव योगोपदेशतात्पर्य निरूप्य पद्यानि विभजन्तो द्वयोरर्थस्य पूर्वमुक्तत्वात् त्रयोदशानामधुनाऽऽहु —चित्तस्येत्यादिभि । एकस्येति । भक्तिरूपसाधनस्य । तस्य साधनमिति । भक्तेः सङ्गरूप साधनम् । तस्येति। सङ्गस्य । साधनतारूपमिति । साधनताप्रकारः । तथात्वमिति । यत्नात्मना उपयोगित्वम् । एव कारिकाभिरर्थं सङ्गृह्य व्याकुर्वते—आदावित्यादि ।

---

१ यागप्रशसाप्रकरण म. म ङ

**योग इति।** योगो हि बहुविधः। भगवत्साक्षात्कारे य उपयुज्यते स आधिदैविकः, आत्मसाक्षात्कारे आध्यात्मिकः। आधिभौतिकस्त्रिविधः, अणिमादिसाधकः, शरीरसाधकः, प्राणसाधकश्च। आद्यस्तु * शास्त्रान्तराङ्गम्, द्वितीयोऽत्र मुख्यः। तमाह—**आध्यात्मिक इति।** अतः पुंसां निःश्रेयसाय मतः। ये स्वरूपं प्रकृतितो भिन्नं ज्ञातवन्तः, ते लब्धविषया आध्यात्मिकयोगेऽधिकारिणः, स योगस्तेषां फलं साधयति। अतस्तेषां निःश्रेयसाय मतः संमतः। आध्यात्मिकयोगस्य तथात्वे हेतुमाह—**अत्यन्तोपरतिरिति।** यत्र योगे दुःखस्य सुखस्य चात्यन्तमुपरतिर्निवृत्तसजातीयस्य पुनरनुत्पादः। चकारादुभयत्र साधनानाम्। आत्मातिरिक्तसर्वनिवृत्तिर्यत्रेत्यर्थः॥ १३॥

योगान्तरेभ्यो व्यावृत्त्य तमेव तेऽभिधास्यामीत्याह—

**तमिमं ते प्रवक्ष्यामि यमवोचं पुराऽनघे!।**
**ऋषीणां श्रोतुकामानां योगमुर्वङ्गनैपुणम्॥ १४॥**

**तमिममिति।** अस्याऽनादित्वमाह—**यमवोचमिति।** अनघे इति निष्पापानामेवाऽयं फलतीति ज्ञापयितुम्। ऋषीणामेवाऽत्र विश्वासो भवतीति ऋषिग्रहणम्। **श्रोतुकामानामिति।** तेषामप्यपेक्षितम्। उरुभिरङ्गैर्नैपुणता यत्र, तदेव स्थिरो भवति॥ १४॥

ननु भगवदिच्छया ज्ञानाद्वा संसारः, तत्र योगेन किमित्याशङ्क्य '**चित्ताधीनः संसारः**' इति शास्त्रार्थं निरूपयति। '**योगश्चित्तवृत्तिनिरोधः**' इति हि योगलक्षणम्। यदि संसारश्चित्तमूलक एव स्यात्, तदा योग उपपद्येत, नाऽन्यथेति चित्तं बन्धमोक्षहेतुत्वेन निरूपयति—

**चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम्।**
**गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये॥ १५॥**

× **चेत इति।** खल्विति सर्वलोकप्रसिद्धमनुभवं प्रमाणयति। अस्यैकस्यैव बन्धाय मुक्तये च स्वस्यैव चेतो मतम्। तत्र रूपभेदमाह—**गुणेषु सक्तं बन्धायेति।** गुणेषु विषयेष्वासक्तं रतं वा बन्धाय, पुंसि भगवत्यासक्तं, रतं वा मुक्तये भवति। स्वभावत एकरूपमपि करणं स्वधर्मविषयभेदात् बन्धमोक्षौ साधयति। **चित्तस्वभाव आसक्तिर्यस्त्यक्तुं नैव शक्यते। स्नेहो रतिरिति प्रोक्तः संस्काराच्छ्रवणाच्च सः॥ १॥ १५॥**

लोके विषयोऽनुभवसिद्ध इति तमसाधयित्वाऽऽत्मनि शुद्धेरत्यर्थमनुभवं साधयति—**अहंममेति** त्रिभिः। यादृशं मन आत्मानं गृह्णाति। तादृशत्वसिद्ध्यर्थं साधनान्याह—

**अहंममाभिमानोत्थैः कामलोभादिभिर्मलैः।**

---

प्रकाशः।

*शास्त्रान्तराङ्गमिति। भक्तिज्ञानशास्त्राङ्गम्। **लब्धविषया इति।** लब्धो योगस्य विषयो यैस्ते तथेत्यर्थः।

× **चेत इत्यत्र। स्वधर्मविषयभेदादिति।** स्वस्य चित्तस्य धर्मौ रत्यासक्ती, तयोर्विषयभेदादित्यर्थः। ननु लोके आसक्तिरत्योरैक्याद्यदत्र पृथगुल्लेखस्य किं प्रयोजनमित्याकाङ्क्षायां तदर्थं तयोः स्वरूपभेदमाहुः—चित्तेत्यादि कारिकायाम्।

---

१ स्वात्म. ग. २ निष्पापानाम् ङ. ३ रूपभेदम्. घ. ङ.

वीतं यदा मनः शुद्धमदुःखमसुखं समम् ॥ १६ ॥

अहमिति । निर्मलमेव मन आत्मानं गृह्णाति । मलानि च मनसः कामलोभादीनि, तानि च देहादावहंममाऽभिमानात् । तैर्यदा वीतं भवतीति साधनानामावृत्तिः सूचिता । तानि च साधनान्यमे वक्ष्यति 'लिङ्गं व्यपोहेत्कुशलोऽहमाख्यम्' इति फलम् । 'हंसे गुरौ' इत्यादिसाधनानि, 'असङ्कल्पाज्जयेत्कामम्' इत्याद्युपायाश्च वक्ष्यन्ते । तैरुपायैर्यदा मलानि नश्यन्ति, तदा तैर्वीतं मनः शुद्धं भवति । शुद्धस्याऽभिज्ञानम्—अदुःखमसुखमिति । तस्मिन् मनसि वैषयिके सुखदुःखे न स्फुरतः । तदेव कथं भवतीत्याशङ्क्याऽऽह—सममिति । यदा विषयगतं वैषम्यं न गृह्णाति सर्वत्र ब्रह्मभावनया, तदा समं मनो भवति । तत एव सुखदुःखे न गृह्णाति ॥ १६ ॥

तादृशेन मनसा आत्मानं पश्यतीत्याह—

तदा पुरुष आत्मानं केवलं प्रकृतेः परम् ।
निरन्तरं स्वयंज्योतिरणिमानमखण्डितम् ॥ १७ ॥

* तदा पुरुष इति । विविक्तात्मसाक्षात्कारस्तदैव भवति, अन्यदा सङ्घाते प्रविष्ट आत्मा प्रतीयते । केवलं सङ्घाताद्विनिर्मुक्तम् । स्वभावोऽत्र प्रकृतिशब्देनोच्यते । प्राकृतेषु प्रसक्त आत्मा प्रकृतिस्वभावो भवति तस्य यदा नियन्ता भवेत् स्वभावजयो भवेदित्यर्थः, अन्यथा पूर्वमेव केवलत्वं निरूपितं पुनरुक्तं स्यात् । नियामकत्वे च प्रकृतिपरत्वं स्यात् । भगवता सह निरन्तरं जीवब्रह्मविभागशून्यम्, नाऽपि सायुज्येन, किन्तु ब्रह्मभावेनेत्याह—स्वयंज्योतिरिति । स्वयमेव स्वप्रकाशो जातोऽस्ति । अणिमानमतिसूक्ष्मम् । प्रतीतावहङ्कारादीनां सहस्फुरणाभावात् सूक्ष्ममुच्यते; यथा विरलत्वेनाऽऽकाशम्, नत्वणुपरिमाणमपि । सर्वत्र देवतिर्यङ्मनुष्यादीनामात्मभूतं केनाप्यंशेन न खण्डितं सर्वात्मकमात्मानं पश्यति ॥ १७ ॥

एतादृशात्मस्वरूपसाक्षात्कारे मनसो न शुद्धत्वमात्रं प्रयोजकम्, किन्तु कारणत्रयमपीत्याह—

ज्ञानवैराग्ययुक्तेन भक्तियुक्तेन चाऽऽत्मना ।
परिपश्यत्युदासीनं प्रकृतिं च हतौजसम् ॥ १८ ॥

ज्ञानवैराग्येति । ज्ञानवैराग्ये भक्तेरङ्गभूते, ते न फलोपकार्यङ्गे; न तु भक्तिजनके । भक्तिरपि योगरूपा साधनत्वेन निरन्तरं क्रियमाणा । चकाराद्भक्तिसाधनैरन्यैरपि युक्तेन । आत्मना मनसा, आत्मैक्यं प्राप्तेन, विषयाभिलाषया ततो न निर्गतेन, आत्मानं परिपश्यति । जाते ज्ञाने प्रकृतिप्रेरणसामर्थ्यं भवति, तदा

प्रकाशः ।

* तदा पुरुष इत्यत्र । स्वभाव इत्यादि । प्रकृतेः परमित्यत्र आत्मनो यः स्वभावः स प्रकृतिशब्देनोच्यत इत्यर्थः । स को वेत्याकाङ्क्षायां तमाहुः—प्राकृतेष्वित्यादि । तथा च प्रकृतेः परमित्यस्य जितपूर्वस्वभावमित्यर्थो बोध्य इति भावः । ननु प्रकृतेः परमित्यस्य प्रकृतेर्भिन्नमित्यर्थोक्तौ को दोषः ? येनैवं व्याख्यायत इत्यत आहुः—अन्यथेत्यादि । तर्हि प्रकृतिनियामकमित्येवाऽर्थोऽस्त्विति चेत्तत्राऽऽहुः—नियामकत्व इत्यादि । प्रकृतिपरत्वमिति नियमनार्थं तदपेक्षत्वम् । तथा सत्युदासीनमदविरोधः स्यात्, अतः पूर्वोक्त एवाऽर्थो निश्चेय इत्यर्थः ।

१ अनुवृत्ति., क. २ स्तोऽस्ति ग्रहस इत्यधिक क. ग. ३ संगत, ग. ड. ४ इति सूक्ष्मनतोऽणी, क. ग. ड.

महाभोग उपपद्यते । अत प्रकृतिपूर्वकत्वं सम्भवति । तन्निषेधार्थमाह—उदासीनमिति । प्रकृतेस्तु न किञ्चिद्बलमित्याह—हतोजस प्रकृतिं च पश्यति । वासनामात्रेण प्रकृतिस्तिष्ठतीत्यर्थ ॥ १८ ॥

एवमात्मज्ञान सपरिकरमुपपाद्य तत्र रतिरासक्तिर्वा चित्तस्य चेद्भवति, तदा तन्मनो मुक्तये भवतीत्युक्तम् । इद परम्परया साक्षाच्च बहुसाधनसाध्यमिति एकमेव साधन सर्वसाधनरूपं, सर्वफलसाधक च सौकर्यार्थ निरूपयति—

**न युज्यमानया भक्त्या भगवत्यखिलात्मनि ।**
**सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ॥ १९ ॥**

**न युज्यमानयेति** । भगवति युज्यमानया भक्त्या सदृश पन्था नाऽस्ति । सिद्धान्तान्तरत्वात् भगवन्मार्गेण सह विरोध । पूर्वे योगाभ्यासपराणा ब्रह्मभावार्थं साधनप्रेप्सूना भक्तिरेव साधनम् । अखिलात्मनीति चिद्रूपे नारायणे सर्वात्मकत्वे ज्ञाते पश्चाद्भक्ति कर्तव्येति केचित् । सर्वत्र भगवतो भक्ति कर्तव्येत्यपरे । स्पर्द्धासूयादिव्यावृत्त्यर्थं तथा ज्ञात्वा कर्तव्यम् । भगवानत्र ब्रह्मैव, सत्त्वमूर्तिर्वा । ब्रह्मसिद्धि ब्रह्मप्राप्ति ॥ १९ ॥

तस्या भक्ते कारणमाह—

**प्रसङ्गमजरं पाशमात्मनः कवयो विदुः ।**
**स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥ २० ॥**

* **प्रसङ्गमिति** । नहीय भक्तिस्त्यागे भवति, किन्तु चित्तवत् सङ्गो यदा विषयभेदेन भिद्यते, तदा भक्तिं जनयति । तस्य चित्ततुल्यतामाह—प्रसङ्गमिति । अजरं जरारहितम् । पाश बन्धकम्, न तु देहादे, किन्तु आत्मनो विदु । प्रकृष्ट सङ्गो यस्मिन् कस्मिंश्चित् । कवयो विदुरिति प्रमाणम् । स एव प्रसङ्ग साधुषु चेत् कृत, तदा मोक्षद्वारमपावृत भवति । यथा भगवति स्नेहो मुक्तये, तथा सत्सङ्गो मोक्षद्वारम् । यथा ज्ञानादिषु सहज सङ्गादि कपाटरूप, तदुद्धाटने ज्ञानादिभिर्मोक्षो भवति, नैव सत्सङ्गे सहज कश्चन ससर्गदोषोऽस्ति । तदाह—अपावृतमिति ॥ २० ॥

सता लक्षणान्याह—

**तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ।**
**अजातशत्रवः शान्ताः साधवः साधुभूषणाः ॥ २१ ॥**

× **तितिक्षव इति** । सन्तः षोडशधर्मा वै धर्मास्ते त्रिविधा मताः । भौतिकादिविभेदेन एकस्तु

---

**प्रकाशः**

* प्रसङ्गमित्यत्र । तस्य चित्ततुल्यतामिति । तस्य सङ्गस्य प्रतियोगिभेदेन बन्धमोक्षसाधकतारूपां तुल्यताम् ।

× तितिक्षव इत्यत्र । गुणाना भौतिकादिभेदे त्रयो वा नव वा भवन्ति, न तु षोडशेत्याशङ्काया विभजन्ते—एक इत्यादि । एक सर्वसङ्गविवर्जितत्वरूपस्तु सहज स्मृत । धर्मोक्तौ पश्चात् स्मृत्योक्त ।

सहजः स्मृतः ॥ १ ॥ उपयोगी तथा चैको भौतिकास्त्रय एव हि । आध्यात्मिकास्तु चत्वारः सप्त चैवाधिदैविकाः ॥ २ ॥ पञ्चधा चेद्गुणा न स्युः सर्वेषां सिद्धयो न हि । भौतिकानामभावे तु लौकिकास्ते न संशयः ॥ ३ ॥ अलौकिका हि ते सेव्या निर्दुष्टास्तदनन्तरः । सप्तभिस्ते महात्मानस्तदभावे न तैः फलम् ॥ ४ ॥ आदौ भौतिकांस्त्रीन् गुणानाह—सर्वेषां प्राणिनामपराधं सहन्त इति तितिक्षवः । तेषु कृतापराधेष्वपि करुणावन्तो भवन्ति, तद्दुःखदूरीकरणाय यत्नं कुर्वन्ति । किञ्च, तेषामन्येषां च सुहृदो मित्राणि, सर्वदा हितमाचरन्ति भावयन्ति च । लोके मित्रैर्देवतागावश्च सुहृदो भवन्ति, न हि ते सर्वेषां दुःखाभावार्थं यतन्ते । लौकिकाश्च दयालवो हेत्वर्थं वा कारुणिका भवन्ति, निवृत्ते तु दुःखे न तेषां हितं भावयन्ति । मातापितरौ [1] बालेषु तितिक्षवो भवन्ति, न तु ते कारुणिकाः, न वा सर्वसुहृदः । तस्मात् त्रितयधर्मयुक्ता अलौकिका एव । तादृशेषु दोषाभावमाह—अजातशत्रव इति । गुणात्रयो विपरीतरूपाः सन्तो दोषाः, ते कामक्रोधलोभात्मका भवन्ति । तत्र क्रोधो बहुविधः प्रकटाप्रकटधर्मादिविभेदेन । स्वक्रोधः स्वरूपेण, साधनरूपेण वा परक्रोधे निमित्तत्वमापद्यते, तदा स शत्रुर्भवति । तस्याऽपि च धर्मः स्वस्य क्रोधहेतुर्भवेत्, तदाऽन्योन्यं शत्रवो भवन्ति । ते च पश्चात् रागादिजनकधर्मैर्बाधिताश्चेत् निवर्तन्ते । येषां तु शत्रवो नोत्पन्ना एव, जन्मान्तरीयाणामपगतदोषाणां नोत्पत्तिः, अस्मिंस्तु जन्मन्यनिष्पत्तिः । अनेन पूर्वमनेकजन्मस्वपि निवृत्तक्रोधास्त इत्युक्तम् । राजसो दोषः कामादिः, सोऽपि नास्तीत्याह—शान्ता इति । लयविक्षेपरहिता चेतसोऽवस्था शान्तिः, तया सहाऽऽनंदं स्वभावतः प्राप्ताः शान्ताः । एतदपि बहुजन्मसाधनैरेव भवति । एवमन्तःकरणजीवयोर्दोषाभावो निरूपितः । दैहिकं दोषाभावमाह—साधव इति । साधवः सदाचाराः । स एव सन् आचारः, य आत्मानं परं च न खेदयति । आत्मा त्वन्तःकरणजीवात्मकः । शारीरस्तु वेदमयः, परोऽपि तथा । सर्वथा वा येषामाचारेण न कोऽपि कस्याप्यपकारः, स सदाचारो भवति । तेनाऽपि धर्मेण देहस्वभावत ऐक्यं प्राप्ताः साधवः । तादृश एव धर्मो येषामलङ्करणे हेतुर्भवति । लोके तेनैव प्रतिष्ठा भवति । अनेन सर्वोऽपि परिकरः तेषां साधुरूपो भवति ॥ २१ ॥

प्रकाशः।

तथा सहज एकोऽन्यः सङ्गदोषहरत्वरूपः । उपयोगी प्रकृतेः सङ्गदोषनिरसन उपयुक्तः । सोऽपि पश्चात् स्मृत इत्यर्थः । तर्हि भौतिकादीनां त्रिविधानां किमर्थं कथनमित्यतस्तेषां प्रयोजनं सार्धेनाऽऽहुः—न इति । वक्ष्यमाणधर्मैः साधुत्वेन भासमानाः । तदनन्तरैराध्यात्मिकैः । तथा चाऽजातशत्रुत्वादयश्चत्वारो धर्माः सत्त्वप्रयोजकाः । तदभावे नेत्यत्र पदच्छेदः, नेति भिन्नं पदम् । अतः सर्वेऽप्यवश्यवक्तव्यत्वादुक्ता इत्यर्थः । सर्वदेहिनामिति पदं प्रतियोगिबोधकत्वेन त्रिष्वपि तितिक्ष्वादिपदेष्वन्वेतीत्याशयेन तेषामलौकिकत्वाय व्युत्पादयन्ति—लोक इत्यादि । गुणा इति । अजातशत्रुत्वादयः । ते चेति । क्रोधाश्च । एवं लौकिकीं व्यवस्थामुक्त्वा,अजातशत्रुपदं व्याकुर्वते—येषामित्यादि । ननु शत्रूणां कथमजननमित्यतो व्युत्पादयन्ति—जन्मेत्यादि, क्रोधस्य निरयद्वारत्वेन तद्वतां बहुकालं निरये वासात् पूर्वजन्मीयानां नोत्पत्तिरतस्त-त्रेत्यर्थः । अन्तःकरणजीवयोरित्यत्र जीवलिङ्गमतोऽहङ्कारो जीवपदेन बोध्यः । अत्रेदानीं क्रियाकर्मभूतयोरात्मपरयोः स्वरूपं विवृण्वन्ति—आत्मेत्यादि । ननु शारीरः केवल एकात्मपदेनोच्यत इति कथमेवं व्याख्यायत इत्याकाङ्क्षायामाहुः—शारीरस्तु वेदमय इति । तथा च वैदिकप्रक्रियायां तथैव, पौराणिकप्रक्रियायां तु 'एवं पञ्चविधं लिङ्गं त्रिवृत् षोडश विस्तृतम् । एष चेतनया युक्तो जीव इत्यभिधीयते' इति चतुर्थस्कन्धवाक्यात्तथैवेत्यत एवं व्याख्यायत इत्यर्थः । इदमेव परपदेऽप्यतिदिशन्ति—परोऽपि तथेति ।

१ मित्र. क. ग. घ. ङ. च. २ निमित्तान्तरम् घ. निमित्तम् ख. प ङ. ३ अपगतदोषाणाम् ङ.

महाभोग उपपद्यते । अतः प्रकृतिपूर्वकत्वं सम्भवति । तन्निषेधार्थमाह–उदासीनमिति । प्रकृतेस्तु न किञ्चिद्बलमित्याह–हतौजसं प्रकृतिं च पश्यति । वासनामात्रेण प्रकृतिस्तिष्ठतीत्यर्थः ॥ १८ ॥

एवमात्मज्ञानं सपरिकरमुपपाद्य तत्र रतिरासक्तिर्वा चित्तस्य चेद्भवति, तदा तन्मनो मुक्तये भवतीत्युक्तम् । इदं परम्परया साक्षाच्च बहुसाधनसाध्यमिति एकमेव साधनं सर्वसाधनरूपं, सर्वफलसाधकं च सौकर्यार्थं निरूपयति—

**न युज्यमानया भक्त्या भगवत्यखिलात्मनि ।**
**सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ॥ १९ ॥**

न युज्यमानयेति । भगवति युज्यमानया भक्त्या सदृशः पन्था नाऽस्ति । सिद्धान्तान्तरत्वात् भगवन्मार्गेण सह विरोधः । पूर्वं योगाभ्यासपराणां ब्रह्मभावार्थं साधनप्रेप्सूनां भक्तिरेव साधनम् । अखिलात्मनीति चिद्रूपे नारायणे सर्वात्मकत्वे ज्ञाते पश्चाद्भक्तिः कर्तव्येति केचित् । सर्वत्र भगवतो भक्तिः कर्तव्येत्यपरे । स्पर्द्धासूयादिव्यावृत्त्यर्थं तथा ज्ञात्वा कर्तव्यम् । भगवानत्र ब्रह्मैव, सत्त्वमूर्तिर्वा । ब्रह्मसिद्धिर्ब्रह्मप्राप्तिः ॥ १९ ॥

तस्या भक्तेः कारणमाह—

**प्रसङ्गमजरं पाशमात्मनः कवयो विदुः ।**
**स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥ २० ॥**

* प्रसङ्गमिति । नहीयं भक्तिस्त्यागे भवति, किन्तु चित्तवत् सङ्गो यदा विषयभेदेन भिद्यते, तदा भक्तिं जनयति । तस्य चित्ततुल्यतामाह–प्रसङ्गमिति । अजरं जरारहितम् । पाशं बन्धकम्, न तु देहादेः, किन्तु आत्मनो विदुः । प्रकृष्टः सङ्गो यस्मिन् कस्मिंश्चित् । कवयो विदुरिति प्रमाणम् । स एव प्रसङ्गः साधुषु चेत् कृतः, तदा मोक्षद्वारमपावृतं भवति । यथा भगवति स्नेहो मुक्तये, तथा सत्सङ्गो मोक्षद्वारम् । यथा ज्ञानादिषु सहजः सङ्गादि कपाटरूपः, तदुद्घाटने ज्ञानादिभिर्मोक्षो भवति; नैवं सत्सङ्गे सहजः कश्चन संसर्गदोषोऽस्ति । तदाह–अपावृतमिति ॥ २० ॥

सतां लक्षणान्याह—

**तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ।**
**अजातशत्रवः शान्ताः साधवः साधुभूषणाः ॥ २१ ॥**

× तितिक्षव इति । सन्तः षोडशधर्मा वै धर्मास्ते त्रिविधा मताः । भौतिकादिविभेदेन एकस्तु

प्रकाशः

* प्रसङ्गमित्यत्र । तस्य चित्ततुल्यतामिति । तस्य सङ्गस्य प्रतियोगिभेदेन बन्धमोक्षसाधकतारूपां तुल्यताम् ।

× तितिक्षव इत्यत्र । गुणानां भौतिकादिभेदे त्रयो वा नव वा भवन्ति, न तु षोडशेत्याशङ्कायां विभजन्ते–एक इत्यादि । एकः सर्वसङ्गविवर्जितत्वरूपस्तु सहजः स्मृतः । धर्मोक्तौ पश्चात् स्मृत्योक्तः ।

१ दुष्ट एव. प. इ.

सहजः स्मृतः ॥ १ ॥ उपयोगी तथा चैको भौतिकास्त्रय एव हि । आध्यात्मिकास्तु चत्वारः सप्त चैवाधिदैविकाः ॥ २ ॥ पञ्चधा चेद्गुणा न स्युः सर्वेषां सिद्धयो न हि । भौतिकानामभावे तु लौकिकास्ते न संशयः ॥ ३ ॥ अलौकिका हि ते सेव्या निर्दुष्टास्तदनन्तरैः । सप्तभिस्ते महात्मानस्तदभावे न तैः फलम् ॥ ४ ॥ आदौ भौतिकांस्त्रीन् गुणानाह–सर्वेषां प्राणिनामपराधं सहन्त इति तितिक्षवः । तेषु कृतापराधेष्वपि करुणावन्तो भवन्ति, तद्दुःखदूरीकरणाय यत्नं कुर्वन्ति । किञ्च, तेषामन्येषां च सुहृदो मित्राणि, सर्वदा हितमाचरन्ति भावयन्ति च । लोके मित्रैर्देवतागावश्च सुहृदो भवन्ति, न हि ते सर्वेषां दुःखाभावार्थं यतन्ते । लौकिकाश्च दयालवो हेत्वर्थं वा कारुणिका भवन्ति, निवृत्ते तु दुःखे न तेषां हितं भावयन्ति । मातापितरौ[1] बालेषु तितिक्षवो भवन्ति, न तु ते कारुणिकाः, न वा सर्वसुहृदः । तस्मात् त्रितयधर्मयुक्ता अलौकिका एव । तादृशेषु दोषाभावमाह–अजातशत्रव इति । गुणास्त्रयो विपरीतरूपाः सन्तो दोषाः, ते कामक्रोधलोभात्मका भवन्ति । तत्र क्रोधो बहुविधः प्रकटाप्रकटधर्मादिविभेदेन । स्वक्रोधः स्वरूपेण, साधनरूपेण वा परक्रोधे निमित्तत्वमापद्यते,[2] तदा स शत्रुर्भवति । तस्याऽपि च धर्मः स्वस्य क्रोधहेतुर्भवेत्, तदाऽन्योन्यं शत्रवो भवन्ति । ते च पश्चात् रागादिजनकधर्मैर्बाधिताश्चेत् निवर्तन्ते । येषां तु शत्रवो नोत्पन्ना एव, जन्मान्तरीयाणामपगतदोषाणां[3] नोत्पत्तिः, अस्मिंस्तु जन्मन्यनिष्पत्तिः । अनेन पूर्वमनेकजन्मस्वपि निवृत्तक्रोधास्त इत्युक्तम् । राजसो दोषः कामादिः, सोऽपि नास्तीत्याह–शान्ता इति । लयविक्षेपरहिता चेतसोऽवस्था शान्तिः, तया सहाऽभेदं स्वभावतः प्राप्ताः शान्ताः । एतदपि बहुजन्मसाधनैरेव भवति । एवमन्तःकरणजीवयोर्दोषाभावो निरूपितः । दैहिकं दोषाभावमाह–साधव इति । साधवः सदाचाराः । स एव सन् आचारः, य आत्मानं परं च न खेदयति । आत्मा त्वन्तःकरणजीवात्मकः । शारीरस्तु वेदमयः, परोऽपि तथा । सर्वथा वा येषामाचारेण न कोऽपि कस्याप्यपकारः, स सदाचारो भवति । तेनाऽपि धर्मेण देहस्वभावत ऐक्यं प्राप्ताः साधवः । तादृश एव धर्मो येषामलङ्करणे हेतुर्भवति । लोके तेनैव प्रतिष्ठा भवति । अनेन सर्वोऽपि परिकरः तेषां साधुरूपो भवति ॥ २१ ॥

प्रकाशः।

तथा सहज एकोऽन्यः सङ्गदोषहरस्वरूपः । उपयोगी प्रकृतेः सङ्गदोषनिरसन उपयुक्तः । सोऽपि पश्चात् स्मृत इत्यर्थः । तर्हि भौतिकादीनां त्रिविधानां किमर्थं कथनमित्यतस्तेषां प्रयोजनं सार्धेनाऽऽहुः–न इति । वक्ष्यमाणधर्मैः साधुत्वेन भासमानाः । तदनन्तरैराध्यात्मिकैः । तथा चाऽजातशत्रुत्वादयश्चत्वारो धर्माः सत्त्वप्रयोजकाः । तदभावे नेत्यत्र पदच्छेदः, नेति भिन्नं पदम् । अतः सर्वेऽप्यवश्यवक्तव्यत्वादुक्ता इत्यर्थः । सर्वदेहिनामिति पदं प्रतियोगिबोधकत्वेन त्रिष्वपि तितिक्ष्वादिपदेष्वन्वेतीत्याशयेन तेषामलौकिकत्वाय व्युत्पादयन्ति–लोक इत्यादि । गुणा इति । अजातशत्रुत्वादयः । ते चेति । क्रोधाश्च । एवं लौकिकीं व्यवस्थामुक्त्वा, अजातशत्रुपदं व्याकुर्वते–येषामित्यादि । ननु शत्रूणां कथमजननमित्यतो व्युत्पादयन्ति–जन्मेत्यादि, क्रोधस्य निरयद्वारत्वेन तद्वतां बहुकालं निरये वासात् पूर्वजन्मीयानां नोत्पत्तिरतस्तत्रेत्यर्थः । अन्तःकरणजीवयोरित्यत्र जीवलिङ्गभूतोऽहङ्कारो जीवपदेन बोध्यः । अखेदनक्रियाकर्मभूतयोरात्मपरयोः स्वरूपं विवृण्वन्ति–आत्मेत्यादि । ननु शारीरः केवल एकात्मपदेनोच्यत इति कथमेवं व्याख्यायत इत्याकाङ्क्षायामाहुः–शारीरस्तु वेदमय इति । तथा च वैदिकप्रक्रियायां तथैव, पौराणिकप्रक्रियायां तु 'एवं पञ्चविधं लिङ्गं त्रिवृत् षोडश विस्तृतम् । एष चेतनया युक्तो जीव इत्यभिधीयते' इति चतुर्थस्कन्धवाक्यात्तथैवेत्यत एवं व्याख्यायत इत्यर्थः । इदमेव परपदेऽप्यतिदिशन्ति–परोऽपि तथेति ।

१ मित्रः क. ग. घ. ङ. च.  २ निमित्तान्तरम् क. निमित्तम् ख. घ ङ.  ३ अगतदोषाणाम् क.

एवं सर्वदोषपरिहारमुक्त्वा तेषां सर्वपुरुषार्थसाधकत्वसिद्ध्यर्थं स्वस्मिन्नाधिदैविकान् गुणानाह—

**मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम् ।**
**मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥ २२ ॥**

* मयीति । भक्तिरग्रे वक्तव्या, सर्वेन्द्रियाणां मनसा सह अहमहमिकतया भगवत्कार्यपरत्वमिति । इन्द्रियाणि च निर्दुष्टानि, सगुणानि चेति । न विद्यते अन्यस्मिन् यो भावः । भावो नामाऽन्तःकरणधर्मोऽभिप्रायापरनामा सर्वत्र हेतुः । स भक्तिजनकोऽपि भवति, भावान्तरेणाऽपि भक्तिं जनयति । तत्फलविषयकमेव भवति । भावान्तरसहितो वा । स हि देवतान्तरविषयः, पदार्थान्तरविषयः, मार्गान्तरविषयो वा । तत्सहभावोऽत्र निषिध्यते, फलभावश्च । अत एव मार्गान्तरेण न चाल्यत इति दृढा । यस्यां भक्तौ प्रमाणादि चतुर्द्धाऽपि बाधा नास्ति । सा दृढा । तदर्थमेव पूर्वसिद्धपदार्थानां त्यागः कर्तव्यः, ते च वेदलोकात्मकाः । तदाह—मत्कृते भगवत्कार्यार्थमेव त्यक्तानि विहितानि कर्माणि यैः । निरन्तरभगवत्स्मरणे, सेवायां च सर्वाण्येव कर्माणि बाधकानि, ज्ञानपूर्वकं सेवमानानामनन्यभावप्रतिबन्धकानि च । मत्कृत इति नाऽऽलस्यादिना तत्परित्यागः । लौकिकाः स्त्रीपुत्रादयः स्वजनाः, बान्धवास्त्वन्ये सजातीयाः । त उभये त्यक्तव्याः । तेषामपि सत्त्वे तु न स्वजनबन्धुत्वम् । परित्यागलक्षणमेकमपि साधनं लौकिकवैदिकभेदेन द्विधा परिगणितम् । लौकिकानां परित्यागाऽसामर्थ्यबोधनार्थं वा ॥ २२ ॥

एवं रूपासक्तौ त्रयो गुणा उक्ताः, नाम्नि त्रयमाह—

**मदाश्रयाः कथामृष्टाः शृण्वन्ति कथयन्ति च ।**
**तपन्ति विविधास्तापा नैतान्मद्गतचेतसः ॥ २३ ॥**

+ मदाश्रया इति । भगवद्गतचित्तेन ये श्रुता भगवद्गुणाः । ये वा संकीर्तिता नित्यं यावत्ते रसतां ययुः । तावत्त्यक्तैस्तदीयैश्च बाधा भवति सर्वथा ॥ १ ॥ विविधा अपि ते तापाः सोढव्यास्तापसत्त्वतः । बलात्कृत्वा तपस्यन्ते ततः प्राप्ताः स्वतो वराः ॥ २ ॥ भजनापेक्षया ते वै भगवत्प्रीतिहेतवः । दुःखेषु भगवांश्चाऽपि नित्यं साक्षात्क्रियेत वै । देहादिविषयांस्त्यक्त्वा चित्तं तद्-

प्रकाशः ।

* मयीत्यत्र । भक्तिभावयोः कार्यकारणभावेन भेदबोधनादुभयोः स्वरूपं यदत्र विवक्षितं तदाहुः—भक्तिरित्यादि । भावो नामेत्यादि च । भावस्यानन्यत्वं विवृण्वन्ति—भावान्तरेणेत्यादि । तदिति । भावान्तरम् । तथा च, फलेपेक्षाशून्यो भावोऽनन्य इत्यर्थः । अन्यशब्दस्य सजातीयग्राहकत्वादनन्यपदेन सजातीयसंवलननिषेध एव युक्तो न फलनिषेध इत्यरुच्या पक्षान्तराण्याहु.—भावान्तरेत्यादि । फलभावश्चेति । भक्तेरुच्यत इति शेषः । सत्त्वे तु न स्वजनबन्धुत्वमिति । पूर्वोक्तरीतिकभक्तत्या साधुत्वे तु न तथात्वं किन्त्वत्यक्तव्यत्वमित्यर्थः ।

+ मदाश्रया इत्यत्र । कारिकासु । ननु भगवत्कथाश्रवणादिकर्तॄणां पूर्वोक्तधर्मवैशिष्ट्यात्तापासम्भवेन तत्कृततापाभावोक्तिरनुपपन्नेत्याशङ्क्य तत्रोपपत्तिमन्यच्च किंचनाऽऽहु.—भगवदित्यादि । तावदिति रसत्वभवनात् पूर्वम् । सोढव्या इति । तथा च सोढव्यत्वान्न तपन्तीत्यर्थः । अन्यदाहुः—तापसत्त्वतो बलात्कृत्या तपस्यन्त इति । कृत्वेति । त्यागं कृत्वा । ततोऽप्यन्यदाहुः—तत इत्यादि । स्वत इति । विप्रयोगस्वभावात् । तेषु गुणमाहु.—दुःखेष्वित्यादि ।

तमेव यत्,॥,३ ॥ याः कथा भगवन्तमेवाऽऽश्रित्य वर्तन्ते, न तु प्रसङ्गाद्भगवद्विषयाः । मृष्टा उज्ज्वला निर्दोषपूर्णरूपाः । भाववर्णनेन वा भक्तैरुज्ज्वलीकृताः ॥ २३ ॥

एवं तेषां लक्षणान्युक्त्वा तादृशेषु साधुत्वं विधत्ते—

**त एते साधवः साध्वि ! सर्वसङ्गविवर्जिताः ।**
**सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते ॥ २४ ॥**

* त इति । ननु केऽपि स्वभावतः साधवः, तेऽपि भगवन्निकटे वर्तन्त इति एत इत्युक्तम् । त एव प्रसिद्धा एते । विश्वासार्थं साध्वीति संबोधनम् । ननु तादृशाश्चेत् सन्ति बहवः? कथं जगदमुक्तं तिष्ठतीत्याशङ्क्याऽऽह—सर्वसङ्गविवर्जिता इति । लौकिकास्तु स्वतो न तान् जानन्ति, ते तु सर्वापेक्षारहिता इति न केनापि प्रकारेण कस्यचित्संशयोऽपेक्षितः । अतस्तेषां योगाऽभावादेव न मुच्यन्ते, किं तेषां निरूपणेनेत्याशङ्क्याऽऽह—सङ्गस्तेष्विति । तेषु सङ्गस्ते प्रार्थ्यः । सङ्गस्त्यक्तव्यो भवति, स त्वया न शक्य इति सङ्गजनितदोषनिवर्तकम्, सङ्गत्यागजनितगुणजनकं च किंचिदपेक्ष्यते, अन्यथासङ्गत्यागस्य कारणता न स्यात् । शास्त्रान्तरेऽपि सङ्गत्यागानुकल्पत्वेन सत्सङ्गो निरूपितः पूर्वोक्तोभयसाधकाः (?) तेऽपि तथाऽशक्यसङ्गा इति तेषां सङ्गप्रार्थनैव कर्तव्या । प्रार्थनाऽपि तावत् करिष्यतीति तद्धर्माणां तथात्वं वक्तुं सङ्गदोषदूरीकरणं तेषां सहजो धर्म इत्याह—सङ्गदोषहरा इति । सङ्गस्य हि कामजनकत्वम्, सङ्गेन हि कामादिदोषा जन्यन्ते, तांश्च दोषान् सन्तो दूरीकुर्वन्ति । तदाह—हीति । तथा सामर्थ्यं तेषामाह—त इति । ते हि भगवदीयाः प्रसिद्धाः ॥ २४ ॥

एवं भक्तिसाधकत्वेन सन्तो निरूपिताः । कथं तेषां साधकत्वमित्याशङ्क्य तं प्रकारमाह—

**सतां प्रसङ्गान्मम वीर्यसंविदो भवन्ति हृत्कर्णरसायनाः कथाः ।**
**तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धा रतिर्भक्तिरनुक्रमिष्यति ॥ २५ ॥**
**भक्त्या पुमाञ्जातविराग ऐन्द्रियाद्दृष्टश्रुतान्मद्रचनाऽनुचिन्तया ।**
**चित्तस्य यत्तो ग्रहणे योगयुक्तो यतिष्यते ऋजुभिर्योगमार्गैः ॥ २६ ॥**

+ सतां प्रसङ्गादिति । सतां संबन्धी यः प्रकृष्टः सङ्गः, तस्माद्धेतोर्मम वीर्यज्ञापिकाः कथा भवन्ति । तासां प्रीतिपूर्वकसेवया क्रमेण श्रद्धा, रतिः, भक्तिश्च भवति । भक्त्या च वैराग्यम् । ततोऽपि निरन्तरं स्मृतिः । ततो योगप्रवृत्तिः । एवं परित्यागज्ञानवैराग्ययोगभक्तिभिर्विधाङ्गभूताभिर्भगवत्स्वरूपप्राप्तिरिति ससाधनं फलम् । साधनसाधिकाऽपि भक्तिर्निरूप्यत इति न विरोधः । सतामिति बहुवचनं सत्त्वे

प्रकाशः ।

* त एत इत्यत्र । शास्त्रान्तर इति । ब्रह्मवैवर्ते मदालसोपाख्याने "सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते । स एव सत्सु कर्तव्यः सङ्गः सङ्गस्य भेषजम्" इति ।

+ सतामित्यत्र । आभासे । आहेति । त्रिभिः पद्यैराह । अग्रिमश्लोकस्यार्थं वदन्ति—भक्त्या च वैराग्यमित्यादि । तृतीयस्याऽऽहु,—एवमित्यादि । ननु पूर्वं सत्प्रसङ्गकथाश्रवणादिना जाताया भक्तेर्भगवदवरोधरूपं फलं प्रत्येव करणत्वं युक्तम् । न तु प्रथमोक्तं वैराग्यं प्रत्यपीत्याशङ्क्य समादधते साधनेत्यादि । तथा च भक्तेरसहायशूरत्वज्ञापनाय तथोक्तिरिति तस्या जघन्यकोटिप्रवेशाभावान्न भक्तिशास्त्रविरोध इत्यर्थः ।

प्रमाणम् । सता सद्भिरेव सङ्गो भवति । द्वितीय सन् तदैव युज्यते, यदि प्रथम सन् भवति । तेषा प्रकृष्ट सङ्ग सजातीय एव भवति । एकमतनिविष्टानामेकस्वभावाना वा । प्रसङ्गपदेन चैतत्सूचयति—तेषामन्योन्यं प्रकृष्ट सङ्ग , अन्यस्य प्रासङ्गिक इति । संसारिणामपि तेषा प्रसङ्गात् कथान्तरेषु वक्तव्यत्वेनोपस्थितादपि भगवत्कथा भवन्तीति च ज्ञापितम् । यद्यपि भगवत्कथा सर्वत्र भवन्ति, तथापि न ता भगवत्पराक्रमप्रतिपादिका , तेषा मुखाद्भगवत सामर्थ्य लौकिक निर्गत भवति । सतामेव तु प्रसङ्गाद्भगवत्पराक्रमप्रतिपादिका भवन्ति । तैरेव वीर्याणि ज्ञायन्ते । स्वाभाविककथाना निरन्तरं श्रवणात्तत्संस्काराभिनिविष्ट हृदय, श्रोत्र च जीत न भगवत्कथा गृह्णाति । न हि हिमालयस्थिता प्राणिन आतप ग्रहीतु शक्नुवन्ति । ते च पुनर्देशान्तर गता , यथाऽऽतपप्रेप्सवो भवन्ति, तद्देशस्वभावापन्ना तद्देशस्थद्रव्यै , तथा भगवत्कथा अपि हृत्कर्णयो पूर्वस्वभावोपमर्दनेन रसोत्पादिका भवन्तीत्यर्थ । प्रथमत श्रुता हृदये रसमुत्पादयन्ति, पुन पुन श्रुता कर्णयो । यथा कामाभिनिविष्टस्य चक्षु कामिन्या रसाविष्ट सत् बलान्निवर्त्यमानमपि न निवर्तते, किन्तु दिदृक्षैव निरन्तर भवति । तथा कथा एव बलादपि भावयति । शुश्रूषाऽपि निरन्तरमुत्पद्यत इत्यर्थः । अतस्तासा प्रीत्या श्रवण भवति । आवृत्त्या प्रीतिरुत्पद्यते । तदा लोकान्निवृत्तं मनोऽपहृतपाप सन्मार्गे निविशते । तदा आशु सर्वलोकनिवृत्तिरूपे आत्मनि, मोक्षाख्ये भगवति वा, तन्मार्गे वा, प्रथममास्तिक्यबुद्धिर्भवति । ततो रति स्नेहो भवति, सर्वथैतत्प्रासव्यमिति । ततो वक्ष्यमाणा भक्तिर्भवतीत्यर्थ । + विषयास्त्यक्ता अपि वासनया हृदि स्थिता रागापगम एव गच्छन्ति । स च भगवति स्नेहेन सजातया सेवया, फलरूप प्राप्तया, इतररसविस्मारिकया निवर्तते । तदा जातविरागो भवति । ऐन्द्रियादिति विरागे हेतु । न ते विषया आत्मपर्यवसिता । ऐन्द्रियत्वे प्रमाणमपि वदन् विषयाणा भेदमाह—दृष्टश्रुतादिति । दृष्टा राज्यादय , श्रुताः, स्वर्गादय । तस्या भक्तेरनुवृत्त्यर्थ साधनमाह—मद्रचनानुचिन्तयेति । भगवत्कर्तृका या रचना इति । रचनाशब्देनाऽलौकिकं निर्माणमुच्यते । तेनाऽलौकिकभगवच्चरित्रश्रवणेन भक्तिस्तिष्ठति । तदा चित्तस्य ग्रहणे यत्नो भवति । चित्त हि चञ्चलस्वभावं न स्वतोऽवतिष्ठते, प्रयोजक चोपेक्षाया न गृहीत भवति । अतो यत्तैः सावधान सन्, चित्तस्य ग्रहणार्थं योगयुक्तो भवति, योगस्य चित्तवृत्तिनिरोधरूपत्वात् । योगेन चित्तनिरोध कर्तव्य इति निश्चितार्थो भवतीत्यर्थ । तदा ऋजुभिरेव योगमार्गैः । हठक्लेशादिरहितैर्भगवद्ध्यानरूपै , अचिन्तनदशाया प्राणायामादिरूपैर्वा । अतो भक्ता सिद्धायामितरत्सुलभमिति भक्तिरेव पञ्चमी विद्या मोक्षेऽन्तरतमा ॥ २५ ॥ २६ ॥

एव समाधन शास्त्रार्थमुक्त्वा साधनपरम्परा निरूपयन् फलकीर्तनेनोपसंहरति—

**असेवयाऽयं प्रकृतेर्गुणानां ज्ञानेन वैराग्यविजृम्भितेन ।**
**योगेन मय्यर्पितया च भक्त्या मां प्रत्यगात्मानमिहाऽवरुन्धे ॥ २७ ॥**

असेवयेति । अयं पूर्वोक्तोऽधिकारी । मां प्रत्यगात्मानमिहैव देहे जन्मनि, ब्रह्माण्डभेदनादिकमकृत्वा, अवरुन्धे, यथा मुक्तिं प्राप्नोतीत्यर्थ । तस्य प्रथमं प्रकृतेर्गुणानामसेवा, प्राकृतविषयाणा बन्ध-

मत्वात्[?]

+ भक्त्या पुमानिति श्लोकं व्याचक्षते—विषयास्त्यक्ता अपीत्यादि ।

१ ...

कानामसकृदनुभवाभाव । ततो विषयाभिनिवेशाभावे अन्तर्मुखं चित्तमात्मानं गृह्णाति । तदा ज्ञान भवति, आत्मकामश्च । तदा विषयगतो रागो निवर्तते, तेन च पुनर्ज्ञानमुल्लसितं भवति । त्रयमेतदेकम् । योग स्वतन्त्रश्चाञ्चल्यनिवृत्तिहेतु । मय्यर्पिता च भक्ति विषयवशीकर्त्री । विषयेभ्य आत्मान विमुच्य, भक्त्या च भगवन्त वशीकृत्य, लक्ष्यमिव स्थापयित्वा, तत्र सर्वमेव प्रकार ज्ञात्वा, जीव च सङ्घाताल्लक्ष्यप्रापणयोग्य च ज्ञात्वा, योगारूढ विधाय, लक्ष्ये योजन युक्तमेव । अत विषयभेदात् पञ्चानामुपयोग । मामिति प्राप्यरूपोऽहमेव । तच तु सिद्ध इति शास्त्रार्थज्ञापनमात्रं क्रियत इति बोधितम् । बहि प्रवेशशङ्का वारयितुमाह—प्रत्यगात्मानमिति । प्रत्यगन्तर्मुखतया परिस्फुरन् । नाऽपि स्वात्मना भिन्नम् ॥ २७ ॥

पूर्वमत्र भक्तिर्भजनमात्रमुक्तम्, न विशेषत इति विशेषतो भक्तिं पृच्छति—

## देवहूतिरुवाच ।

काचित्त्वय्युचिता भक्तिः कीदृशी मम गोचरा ।
यया पदं ते निर्वाणमञ्जसैवाऽश्नवा अहम् ॥ २८ ॥

काचिदिति । श्रद्धा, आराध्यत्वेन ज्ञानम्, सेवा, माहात्म्यज्ञानपूर्वक स्नेहश्च । तेषु त्वयि युक्त को भक्तिशब्दार्थ इति प्रश्न । यद्यपि क्रमाच्चत्वारोऽपि युक्ता, तथापि य साक्षात्त्वा विषयीकरोति सा वक्तव्येति सप्तम्या सूचितम् । भक्तियोगोऽपि बहुविध इति जीवाधिकारमपुरस्कृत्य त्वद्योग्या केति प्रश्न । उचितेत्यविहिता भक्तिर्व्यावर्तिता । कीदृशी सगुणा, अगुणा वा ? तत्रापि मम योग्या कीदृशीत्याह—मम गोचरेति । गोचरशब्दो विशेष्यनिघ्नोऽपि भवति । त्वयैव सर्वे मार्गा प्रवर्तिताः । भवाश्च सर्वरूप, अत सर्व एव भक्तिमार्गा यद्यपि त्वयि युज्यन्ते, तथापि यया भक्त्या निर्वाणरूपं ते पदमञ्जसाऽनायासेनैव अहमश्नवै । अश्नवानीति वा पाठ । दैवगत्या सर्वेऽपि मार्गा कदाचित्सुगमा भवन्ति । तद्व्यावृत्त्यर्थमाह—एवेति । निर्वाणाख्य पद व्यापिवैकुण्ठम्, तत्र या भक्ति सर्वाधिकारशून्यमपि पुरुष नयति । गतश्च तल्लोके आनन्दाऽनुभवसमर्थो भवति, तत्रत्यैस्तादृशी वक्तव्येत्यर्थः ॥ २८ ॥

योग च पृच्छति—

यो योगो भगवद्बाणो निर्वाणात्मंस्त्वयोदितः ।
कीदृशः कति चाङ्गानि यतस्तत्त्वावबोधनम् ॥ २९ ॥

यो योग इति । भगवल्लक्षणलक्ष्ये आत्मनो योजनार्थ यो बाणरूपो योग सोऽपि वक्तव्य । भगवान् सर्वत्र नयेदित्यत्र भक्तिर्हेतु । स्वतो गमने सामर्थ्यहेतुर्योग । त्वयोदित इति 'योगेन मामनरुन्ध' इत्यत्र । तस्य स्वरूपमङ्गानि च वक्तव्यानि, शास्त्रे नानाविधाना निरूपणात् । स्वतन्त्रतया योगस्य कारणत्वाभावात्, भक्तेश्च पृष्टत्वात्, किं योगेनेत्याशङ्क्याऽऽह—यतस्तत्त्वावबोधनमिति । ज्ञानसाधनं योग । अनेन चत्वारोऽर्था पृष्टा—भक्ति, योग, स्वरूपतस्तदङ्गानि, फलसाधकत्वेन तदङ्ग साङ्ख्यम्; ज्ञान च । योगो योगाङ्गानि चैकम्, अन्यानि त्रीणि ॥ २९ ॥

एतत्सर्वं वक्तव्यमिति निरूप्योपसंहरत्यानश्यकत्वाय—

तदेतन्मे विजानीहि यथाऽहं मन्दधीर्हरेः ।

१ पुरस्कृत्य ग  २ त्वद्योग्या वा ख ग  ३ त्रयस्य दश स तन्त्र ग

सुखं बुद्ध्येय दुर्बोधं योषा भवदनुग्रहात् ॥ ३० ॥

तदेतन्म इति। शास्त्रप्रसिद्धमनुभवारूढपर्यन्तं वक्तव्यम्। विजानीहि ज्ञापय। ज्ञापने प्रयत्नाधिक्यार्थं स्वस्य निकृष्टाधिकारमाह—मन्दधीरहम्। हरेः सुखं स्वरूपं सर्वैरेव दुर्बोधम्, भवदनुग्रहाद्बुद्ध्येयं, हरेः संबन्धि वा पूर्वोक्तम्, सुखं यथा भवति तथा बुद्ध्येयं नापि वचनमात्रेण बुद्ध्यते, किन्त्वनुग्रहादेवेति तथोक्तम् ॥ ३० ॥

यद्यपि मात्रा गूढतया निर्दिष्टं चतुष्टयम्, तथापि ज्ञात्वा तन्निरूपयतीत्याह—

## मैत्रेय उवाच।

विदित्वाऽर्थं कपिलो मातुरित्थं जातस्नेहो यत्र तन्वाऽभिजातः।[1]
तत्त्वाम्नायं यत्प्रवदन्ति साङ्ख्यं प्रावोचद्वै भक्तिवितानयोगम् ॥ ३१ ॥

* विदित्वेति। योगो भक्तिः क्रियारूपा ज्ञानं साङ्ख्यं च वेदनम्। तेषां यत्रोपयोगः स्यात्तदग्रे वक्ष्यते स्फुटम् ॥ १ ॥ चतुर्णां यत्प्रयोजनं सोऽर्थः। विवेचनं तु सङ्ख्यातात् साङ्ख्यकार्यं प्रचक्षते। विविक्तस्य तु विज्ञानं ज्ञानकार्यं निरूपितम्। भक्त्या प्रसन्ने तु हरौ तं योगेनैव योजयेत् ॥ २ ॥ एतज्ज्ञाने सामर्थ्यम्—कपिल इति। मातुरिति कथनावश्यकत्वम्। जातस्नेह इति गुप्तकथने हेतुः। यत्र मातरि, तन्वा कपिलदेहेनाऽभिजातः। अधिकस्नेहे हेतुः। यद्वक्ष्यति तत्परिगणयति। तत्त्वाम्नायं तत्त्वानामाम्नाय आवृत्तिर्यत्र। उद्देशलक्षणभेदेन, कारणत्वेन, कार्ये चानुप्रवेशेन, बहुधा आम्नातम्, तस्य लोके साङ्ख्यमिति प्रसिद्धिः। वदन्तीति प्रमाणम्। भक्तिवितानो योगश्च। प्रावोचदिति ज्ञानं प्रार्थः ॥ ३१ ॥

तत्र भक्तिं लक्षयति—देवानामिति द्वयेन—

## श्रीभगवानुवाच।

देवानां गुणलिङ्गानामानुश्रविककर्मणाम्।
सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥ ३२ ॥
अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी।
जरयत्याशु या कोशं निगीर्णमनलो यथा ॥ ३३ ॥

तस्य च परिकरः सर्वोऽप्यग्रे वक्ष्यत एकादशभिः। एकमनसः पुरुषस्य सर्वेन्द्रियाणां सत्त्वमूर्तौ भगवति या स्वाभाविकी वृत्तिः, सा भक्तिरिति। इन्द्रियाणि हि द्विविधानि स्वभावतः 'द्वया ह प्राजापत्याः'

प्रकाशः।

* विदित्वेत्यत्र। क्रियारूपेति। सेवारूपा। तदिति। साध्यं रूपं भक्तेः स्वरूपम्। मूलस्थमर्थपदं व्याकुर्वन्ति—चतुर्णामित्यादि। तत्प्रयोजनं किमित्याकाङ्क्षायां विवृण्वन्ति सार्द्धेन—विवेचनमित्यादि। तमिति। आत्मानं च। तथा च, चतुर्णामेतानि चत्वारि प्रयोजनानीत्यर्थः। उद्देशलक्षणभेदेनेति। परीक्षाया मूलेऽनुक्तत्वादुभयोरेव ग्रहणम्। भक्तिवितानो योगश्चेति। तेन भक्तिवितानसहितो योगो भक्तिवितान इति मूलार्थो बोधितः। ज्ञानं प्रार्थ इति। तेन ज्ञानं यथा स्यात्तथा अवोचदिति मूलार्थः। तेन चतुरोऽप्यर्थानवोचदित्यर्थो भवति।

१ बुद्ध्येयम्. ३ बुद्ध्येयमिति. २ तुरिति ग.

इत्यत्र निरूपितानि । एकानि देवरूपाणि, एकान्यसुररूपाणि । यान्यलौकिकं वेदोक्तमेव कर्म ज्ञानं वा जनयन्ति, तानि देवरूपाणि; यानि लौकिकं कर्मादि जनयन्ति, तान्यासुराणि। तेषामन्योन्यं स्पर्द्धा । तत्र बलिष्ठान्यासुराणि तैर्देवरूपाणि न स्वकार्ये प्रवर्तितुं शक्नुवन्ति। तानि चेदासन्योपासनादिना +आसङ्गा(?)दिदोषान्निवृत्तानि स्वस्य देवभावं प्राप्नुवन्ति, तदा कार्यतोऽपि देवरूपाणि भवन्ति । तत्र ऋषीणां बहुजन्माभ्यासादिन्द्रादिदेवानां च देवरूपाण्येवेन्द्रियाणि भवन्ति; ये वा दैव्यां संपदि जाताः, तेषामपि देवरूपाणि भवन्ति, आसुराण्यपि भवन्ति । एकस्मिन्नेवं गोलक उभयमपि तिष्ठति । यानि निषिद्धाद्विचिकित्सन्ते, यथाऽमेध्यं दृष्ट्वा तथा कामिन्यामपि दृष्टायाम् । यानि पुनर्निषिद्धे लौकिके च रज्यन्ते, तानि यत्नाद्विहिते प्रवर्तमानान्यपि न परितुष्टानि भवन्तीत्यासुराणि । तत्र भक्तिर्दैवैरेव भवति, नासुरैरिति देवपदेन करणानि निर्मितानि । तेषां परिज्ञानार्थं लक्षणमाह—**गुणलिङ्गानामिति** । गुणा रूपादयः, तैर्लिङ्ग्यन्ते, गुणा लिङ्गानि येषामिति । देवरूपाणामिन्द्रियाणामेतल्लक्षणम्, तानि लयविक्षेपशून्यानि । ततो विक्षेपाभावात् न कार्येषु प्रवृत्त्या स्पष्टमुपलभ्यन्ते, नापि लयाभावात् मूढानि पदार्थमपि न गृह्णन्तीत्यपि । किन्तु रूपमात्रं चक्षुर्गृह्णाति पश्यतीति कृत्वा चक्षुरस्तीति ज्ञायते.। एवमन्यानि तादृशानि कथं भवन्तीत्याकाङ्क्षायामाह—**आनुश्रविककर्मणामिति** । गुरोरुच्चारणानन्तरं श्रूयत इत्यनुश्रवो वेदः, तेन प्रोक्तानि कर्माणि आनुश्रविकाणि; तान्येव कर्माणि येषाम् । लोके दर्शनादिमात्रम्, कार्याणि तु वैदिकान्येव तेषाम् । दैवात् येषामेतादृशानीन्द्रियाणि भवन्ति, तेषां भक्तिर्भवतीत्युक्तम् । किञ्च, तान्यपि कर्मयोगज्ञानादिबहुरूपे वैदिके कर्मणि प्रवर्तमानानि पूर्ववासनयाऽभ्यासात् भवन्ति । तेषामपि यदि फलावस्था भवति, तदा सत्त्व एव शुद्धसत्त्वरूपे भगवत्स्वरूपे प्रवर्तमानानि स्वभावतो भवन्ति । सत्त्व इति साङ्ख्यमतानुसारेणोक्तम् । वस्तुतस्तु गुणातीते भगवति स्वाभाविकी वृत्तिरिति भगवच्छास्त्रम् । '**मन्निष्ठं निर्गुणं स्मृतम्**' '**हरिर्हि निर्गुणः साक्षात्**' इत्यादिवाक्यैः सर्वा भगवतः सामग्री निर्गुणा । एवकारो राजसतामसव्युदासार्थः । **एकमनस इति** । एकमेव मनो यस्य । मनोऽपि द्विविधम्, दैवासुरविभेदेन । तत्रासुरं सङ्कल्पविकल्पात्मकं नानाभावापन्नं गुणैश्च क्षोभमेति । दैवं तु एकस्वभावापन्नं मननात्मकमेव । इन्द्रियाणि तूभयविधान्येव भवन्तु नाम । कार्यमेवासुराणां बाध्यते । मनसा तु द्वितीयेन न भाव्यमेव, तथा सतीन्द्रियाणां पूर्वोक्ता वृत्तिर्न स्यात् । अत एकमेकस्वभावापन्नं मनो यस्य, तस्यैव भक्तिः । अन्येषां तु यथाकथञ्चित्क्रियमाणा भगवति खण्डशो वृत्तिरक्षयत्वात् बहुभिर्जन्मभिः पुष्टिं गता, अन्तिमजन्मनि भक्तिरूपां वृत्तिं जनयिष्यतीति, न काऽप्यनुपपत्तिः । वृत्तिस्तन्निष्ठता, नतु ग्रहणमात्रम् । साऽपि वृत्तिरौत्पत्तिकी; यथा प्रह्लादस्य, अन्येषां वा भक्तानाम् । एतावद्दूरे नाऽस्मिन् जन्मनि साधनसाध्यता, किन्तु पूर्वजन्मवशादेवैवंभूतो भवति । अग्रे विशेषं वक्तुं शब्दमाह । जन्मान्तरेण व्यवधानात्पूर्वजन्मसद्वृत्तिर्यच्छब्देन परामृश्यते । फलरूपे जन्मनि सा अनिमित्ता भवति, स्वतन्त्रा, भगवन्निमित्ता वा । भगवतः सकाशात् फलानि निमित्तानि । याऽनिमित्ता सा भक्तिर्भवतीत्युत्तरेण संबन्धः। किञ्च, सा चेद्भागवती

**प्रकाशः**

+ देवानामित्यत्र । आसङ्गा(?)दिदोषादिति । लौकिकात्यन्तादिदोषात् । विचिकित्सन्ते इति । ग्लानिं प्राप्नुवन्ति । तानि देवरूपाणीति शेषः ।

अग्रिमं श्लोकं व्याकुर्वन्ति—फलरूपे जन्मनीत्यादि ।

१ देवस्वभावम्. ग घ. ङ. २ अपि. ख. ङ. ३ निर्गुणैव ग. ४ एतदेव क. घ. ङ.

भवति, साक्षाद्भगवन्तं विषयीकरोति, भगवद्भावं वा पशुणरूपतामापद्यते । पूर्वं सत्त्वरूपे देवे विष्णौ वृत्ति, सैव जन्मान्तरे भागवती भवतीति वा । पञ्चाग्निविद्यायां ज्ञानोपयिकदेहसिद्धिर्निरूपिता, तस्मिन् देहे ज्ञाने जाते मुक्तिर्भवतीति तस्य च ब्रह्मविदो जीवतो, म्रियमाणस्य, गच्छत, सङ्गतस्य च व्यापारा निरूपिता । सद्योमुक्तावपि सायुज्यं निरूपितम् । तद्वस्तुतो भक्तानामेव भवतीति सिद्धान्त, प्रकारान्तरेण प्राप्याऽभिव्यक्त्यभावात् । तथापि मुक्तेः सायुज्यादपि इयं भक्तिर्गरिष्ठेत्याह—सिद्धेर्गरीयसीति । सिद्धि पूर्वोक्ता । गरीयस्त्वं निरूपयति—जरयतीति । या कोशं लिङ्गशरीरं जीर्णं करोति । बीजात्मकमित्यर्थ । यद्यपि सिद्धावपि कोशजीर्णता वर्तते, तथापि आशु जरयति । अनायासार्थं दृष्टान्त—निगीर्णमनलो यथेति । न हि भुक्तकवलस्य परिपाकार्थमौदर्यादग्नेरन्यत्साधनं विधीयते, औषधादिकमप्यग्निमेव बोधयति । एतया मे पदं प्राप्यत इति भाव ॥ ३२ ॥ ३३ ॥

× तादृशभक्तानां ज्ञानिनामिवाऽग्रिमकृत्यमाह प्रकारद्वयेन । तत्र प्रथममाह—नैकात्मतामित्यादिभि । जीवतां साधनावस्था फलरूपा तथा परा । सायुज्यं च तृतीयं स्यादतो नोत्क्रान्तिमार्गणे ॥ १ ॥ तत्र प्रथमं भक्तानां साधनावस्थामाह—

**नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः ।**
**येऽन्योन्यतो भागवताः प्रसज्ज्य सभाजयन्ते मम पौरुषाणि ॥ ३४ ॥**

नैकात्मतामिति । इयं हि फलरूपा भक्तिर्ज्ञातव्या । ते भक्ता यावज्जीवन्ति च तावत्फलरूपां भक्तिं कुर्वन्तीत्यर्थ । फलरूपता तदैव भवति, यदा भजनाद्रसोऽभिव्यक्तो भवति बहुधा । तस्या अभिव्यक्तेर्निदर्शनम्, भगवत एकात्मतां सायुज्यरूपं फलं न स्पृहयन्ति । प्रार्थना दूरे । ते भक्तेषु विरला प्रसङ्गात् निरूप्यन्ते । केचिदिति दुर्लभा । तेषां कायवाङ्मनोवृत्ति स्वभावत एव भगवति भवतीत्याह—मत्पादेत्यादिना । मम पादसेवायामेव अभिरतिर्मनोवृत्तिर्येषाम् । सर्वतो गत्वा भगवत्कार्यं कर्तव्यमिति पद्भ्यां सेवेत्यर्थ । अन्यत्तु सुखं गमनानन्तरसाध्यम् । इयं मनोवृत्तिर्निरूपिता । कायिकीमाह—मदीहा इति । मत्सम्बन्धिन्येव ईहा चेष्टा येषाम् । तेषां वाचनिकीमाह—अन्योन्यत इति । सर्वे भागवता एकरूपा भगवदीया प्रसज्ज्यासक्तिं कृत्वा, मम भगवत, पौरुषाणि सभाजयन्ते । अन्योन्यमुक्तान्यपि पौरुषाणि संमानयन्ति प्रकट सुहृद्या । स्वकार्यनिर्धारविचारहेतौ प्रमाणमेतद्गणयन्ति नाऽन्यत् ॥ ३४ ॥

तेषां फलावस्थामाह—

**पश्यन्ति ते मे रुचिराण्यम्ब सन्तः प्रसन्नवक्त्रारुणलोचनानि ।**
**रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ति ॥ ३५ ॥**

प्रकाशः ।

× नैकात्मतामित्यत्र । प्रकारद्वयेनेति । ऐहिकपारलौकिकभोगप्रकारभेदेन । स्पृहाभावबोधकश्लोकत्रयतात्पर्यं कारिकया वदन्तस्तादृशां सद्योमुक्तौ प्रकारभेदे हेतुत्वं स्पृहाभावस्याऽऽहु—जीवतामित्यादि । अत इत्यादि । यस्मादेतादृशं तेषामवस्थात्रयमतस्तादिन्द्रियाणां देहादुत्क्रान्तिदेवतात्वप्रापणं च नोक्तमित्यर्थ ।

१ अपि स

१ पश्यन्तीति । ते मे रूपाणि पश्यन्ति, निरन्तर भगवत्साक्षात्कारो भवति । यथा मित्रे सह क्रीडन्ति प्रथमत पश्यन्ति । भगवतो रूपाणि वर्णयति—रुचिर णि अरुणेक्षणानि कमलाभरणानि येषाम् । अनेन वृन्दावनादौ भगवत्साक्षात्कारो भवतीत्युक्तम् । प्रसन्नानि वक्त्राणि अरुणानि लोचनानि येषामिति रामामिव नृसिंहमिव पश्यतीत्यर्थ । तेषामिष्टोत्पादनार्थं राजसभावमिष्टाना स्थित्यर्थं च सात्त्विकभाव प्रकटयन्तीति वा । रूपाणीति परमोपासकानामेक रूप कदाचित् साक्षात्कृत भवति, तेषा तु बहूनि । तानि च दिव्यानि, लौकिकबुद्ध्या न गृहीतानि । अलौकिकभाव ग प्रकटयन्ति तान् प्रत्येव प्रकटानीति । तथा सति नातिप्रसक्ति । तेषामन्यदीयव्यावृत्त्यर्थं निदर्शनान्तरमाह वरप्रदानीति । न ह्यन्येन वर दातु शक्यते । प्रसङ्गाद्रूपादेनेषा वैलक्षण्यमाह—साकं वाचमिति । जानन्त एवैते पुनर्भिन्नन लोके भगवता सह स्पृहणीया वाच वदन्ति, यथा मित्रे सह इष्टालापा क्रियन्ते ॥ ३५ ॥

ततस्तेषा सायुज्यमाह—

तैर्दर्शनीयावयवैरुदारविलाससहासेक्षितवामसूक्तैः ।
हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुङ्क्ते ॥ ३६ ॥

तैरिति । तेः पूर्वोक्तरूपैरनुभवसमय एवानन्दजनकै । दर्शनीया अवयवा येषाम् । उदारो विलास, हासपूर्वकमीक्षितम्, वामं मनोहर सूक्त वाक्य च येषाम् । तैर्हृतान्त करणाना वशीकृतेन्द्रियाणा च सा पूर्वोक्ता भक्ति तामनिच्छताऽप्यण्वीं गतिं सायुज्य प्रापयति । भक्तस्य चतुर्विधपुरुषार्थसिद्ध्यर्थं चतूरूपत्व च साध्यते । तत्र दर्शनीया अवयवा कामपूरका उदारो विलासोऽर्थजनक, हासपूर्वकमीक्षित धर्मजनकम्, वामसूक्तानि मोक्षजनकानि । कामो हि विषयसौन्दर्येण अन्त शक्त्या च सिद्ध्यति, अतो दर्शनीयेति विशेषण बहिरलौकिकसौन्दर्यार्थम् । विलासो ह्यर्थस्य नानाप्रकारत्वाय । उदारत्व तस्य सर्वोपकारकत्वाय । भगवतो हि लीला सर्वेषा सर्वपुरुषार्थदायिनीति भगवत्त्वम् । हासो देहाद्यध्यासजनक, अन्यथा निरन्तर धर्मो न सिद्ध्येत् । हासपूर्वक च ज्ञान धर्मजनकमेव । सूक्त हितकारि, अविद्यानाशकम्। वाम परमानन्ददायकमिति । सूक्ष्मा हि गतिरेकरूपानन्दस्वरूपा, रूपाणि चाऽनन्तानन्दरूपाणि, अतएवाऽनिच्छा अत प्राऽन्त करणेन्द्रियाणा च तैराकर्षणम्, सर्वेन्द्रियसुखरूपत्वात् । स भगवान् स्वगृह गच्छन् तानपि नयति । ते तु इन्द्रियाणि मनश्च नयन्ति । भक्तिस्तु फलावश्यम्भाविनी कालादीनामगम्यमतिसूक्ष्ममेव भगवदात्मक फल प्रयच्छति ॥ ३६ ॥

एव सायुज्यरूप फलमुक्त्वा सालोक्यादिरूप फलमाह—

अथो विभूतिं मम मायाविनस्तामैश्वर्यमष्टाङ्गमनुप्रवृत्ताम् ।

प्रकाश ।

१ पश्यन्तीत्यत्र । नन्ववतीर्णस्य भगवत सर्वेषा दर्शनविषयत्वेन अतिप्रसङ्गात् कथ दिव्यत्वमित्याकाङ्क्षायामाहु —तानीत्यादि । यानि दिव्यानि तान्येव भक्तार्थं भूमौ प्रकटानि, इति हेतोर्दर्शनस्य भक्तार्थत्वे सति तदर्थसर्वगोचरीभावाद्दिव्यत्वस्य व्यभिचाररूपा अतिप्रसक्तिर्नेत्यर्थ । अन्यदीयव्यावृत्त्यर्थमिति । परार्थत्वलौकिकत्वव्यावृत्त्यर्थम् । रूपादिति ल्यब्लोपे पञ्चमी । वैलक्षण्यमिति । अन्येभ्यो दर्शनकर्तृभ्य आधिक्यम् ।

१ भगवत्त्वाय ख ग

श्रियं भागवतीं वा स्पृहयन्ति भद्रां परस्य मे तेऽश्नुवते नु लोके ॥ ३७ ॥

* अथो इति । सा चेद्भक्तिर्मध्यमा भवेत्, ततोऽय भिन्नप्रक्रम । अथो मम मायाविनो विभूतिं पुत्र धनादिरूपां स्वर्गादिरूपां च । न तत्र भोग्यमस्तीति मायाविन इत्युक्तम् । सर्वस्याऽपि विषयस्य भगवदीयाना भगवदधीनत्वाय पष्ठी । तामित्यलौकिकीं, सर्वलोकप्रसिद्धा वा । ऐश्वर्यमणिमादि । अष्टाङ्गानि यस्येति सर्वैश्वर्यप्राप्ति । भगवद्भजनमनु, भगवन्तमनु वा, प्रविष्टा श्रिय सर्वामेव संपत्तिं मोक्षपर्यन्ताम् । भागवतीं च भगवत्कृतसम्पत्तिं च । वेत्यनादरे । सर्वमेव वा अ स्पृहयन्ति भद्रां मोक्षसम्पत्तिमपि । न यमा भक्ति पल्लवत्य प्रयन्छतीति यद्यन्यत्र तेषा भोगो न रोचते, तदा वैकुण्ठ एव तेभ्यो भोग प्रयच्छतीत्याह—परस्य मे तेऽश्नुवते नु लोके इति । परस्य कालादक्षराच्च । लोके व्यापिवैकुण्ठे । सर्वमैश्वर्यादिकमश्नुवत इत्यर्थ ॥ ३७ ॥

ननु लोकाना कालभयस्य विद्यमानत्वात् ' क्षीणे पुण्ये मर्त्यलोकं विशन्ति ' इति स्वस्थानत्यागात्, किं वैकुण्ठलोके विषयाऽनुभावेनेत्याशङ्क्याऽऽह—

न कर्हिचिन्मत्पराः शान्तरूपे नङ्क्ष्यन्ति नो मेऽनिमिषो लेढि हेतिः ।
येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम् ॥ ३८ ॥

न कर्हिचिदिति । हे शान्तरूपे मात । शान्त रूप यस्येति सर्वदोषविवर्जिते वैकुण्ठे वा । अहमेव परो येषा ते न नङ्क्ष्यन्ति । क्षीणपुण्या नश्यन्ति पतन्ति वा । न वा हेति कालचक्र तान् लेढि, कालोऽपि तान् न भक्षयति । तत्र हेतु —येषामहमिति । कालस्य यत्र विषयस्तत्र प्रवर्तते । तस्याऽष्टौ विषया — विषया, देहः, पुत्रा, मित्राणि, गुरव, सबन्धिन, इष्टदेवता, कामश्चेति । तस्मिन् लोके न एते सन्ति, किन्त्वेतेषां कार्यमहमेव करोमि । अत एव तेषामहमेवाऽष्टविध । न हि कालो मा विषयीकरोति । तेषा मदन्यः कोऽपि नास्ति देहादि । प्रियो हि विषयो भवति । वैकुण्ठस्तु मद्रूप इति तत्राहमेव विषय । सारूप्यस्य च प्राप्तत्वात् देहोऽप्यहमेव । देहेन विषयेषु भुज्यमानेषु प्रकृति सूयत इति सुता भवन्ति । तत्र विषयभोगेनाऽप्यहमेव भवामि, पुत्रस्नेहस्तत्रत्यैर्मय्येव क्रियते । तत्र बाह्योऽपि सखा अहमेव, तत्रत्याना पुरुषाणा मद्रूपत्वात् । एते चत्वार ऐहिका । पारलौकिकाश्चत्वार । तत्र गुरुरुपदेष्टा वैकुण्ठे त्वहमेव । गुरोरुपदेशानन्तर ये तत्र हितार्थं यतन्ते, ते बान्धवा सुहृद, सुहृत्कार्यं तु तत्रत्यैरेव क्रियत इति । दैव देवता, पूज्य, फलदाने स प्रयोजक । फलं चेष्टम् । अतस्तेषा नाशाभाव उचित एव ॥ ३८ ॥

ततोऽपि प्रथमा भक्ति सफला निरूपयति—

इमं लोकं तथैवाऽमुमात्मानमुभयायिनम् ।
आत्मानमनु ये चेह ये रायः पशवो गृहाः ॥ ३९ ॥
विसृज्य सर्वानन्यांश्च मामेवं विश्वतोमुखम् ।
भजन्त्यनन्यया भक्त्या तान्मृत्योरतिपारये ॥ ४० ॥

प्रकाशः ।

* अथेत्यत्र । अ स्पृहयन्तीति । 'अमानोना प्रतिषेधे' इति प्रतिषेधार्थकम् । 'अपदमसमस्तमेव योध्यम् ।

१ [illegible] २ [illegible]

+ इम लोकमिति । ये पूर्वोक्ताधिकाररहितास्तादृशशरीरादिरहिताश्च, केवल पुण्यपरिपाकवशादेवं-भूता, वक्ष्यमाणप्रकारेणोपासते, तेषां भक्त्यभावात् अह तान् मृत्योरतिपारय इति द्वयो संबन्धः। साङ्ख्यसिद्धान्तत्वात् परित्यागोऽत्र मुख्यः। मुख्ये सिद्धान्ते त्विह लोकादिषु अपेक्षाभाव एव हेतुः। त्याज्यान् गणयति। इह लोकस्त्याज्यश्चतुर्धा प्रमाणप्रमेयसाधनफलभेदेन। ऐहिकाना प्रमाणानि न प्रमाणानि; यदेषा प्रमेयम्, विषया ज्ञेया ग्राह्या वा, ते न ग्राह्याः; यदेषां फलसाधनम्, यद्वा फलम्, तदुभयमपि न तेषाम्। यस्त्वेवं करोति, स इमं लोकं त्यजति। तथैवाऽमुं चतुर्धा लोकं त्यजति। उभय-लोककामी लौकिको वैदिकश्चोभयस्वभावापन्न आत्मा देहादिचतुर्विधः। सर्वत्र त्याग औदासीन्यम्। आ-त्मानं देहादिकमनु ये पुत्रादयः, चकाराद्गृहपरिच्छदादयश्च। इहेति सर्वमेव ममतास्पदाः प्रत्यक्षत एव उपलभ्यन्त इति सूचितम्। रायो धनानि पशवो गवादय। एतान् विसृज्य। अन्यांश्च अनुक्तान् प्रतिष्ठादीन् धर्मान्। सर्वानिति। सर्वत्र विशेषणम्। चकारादभिमानादि। ननु सर्वत्यागे सर्वैः क्रिय-माणानामुपकाराणामपेक्षितत्वात् कथं निस्तारो भविष्यतीत्याह—मामेवं विश्वतोमुखमिति। अहं हि सर्वात्मा, मदर्थे यावत् त्यजन्ति तेषामर्थे तावद्रूपो भवामीति। एवं रूपं मा ये भजन्ति। विश्वतोमुख-मिति। नूतनया भगवतो न किंचित्कर्तव्यमस्तीति सूचितम्। तत्र भजने साधनं भक्तिरेव। तत्राऽ-न्यताऽपेक्ष्यते। परलोकार्थम्, भगवत्कृपार्थम्, अन्यार्थम्, भक्तिव्यतिरेकेण, भगवद्वचनिरेकेण वा, येषा-मन्यन्नास्ति। मृत्योरतिपारण पुनस्तस्याऽऽत्मनो मृत्युमप्तदेहसम्बन्धाभाव। न मुक्तिर्नापि मृत्युरिति सन-कादय इव तिष्ठन्ति। एवं भेदत्रयं निरूपितम्, सायुज्यम्, वैकुण्ठः, जीवन्मुक्तिश्चेति ॥ ३९ ॥ ४० ॥

मार्गान्तरेणाऽप्येतत् भविष्यतीत्याशङ्क्य निराकरोति—

नाऽन्यत्र मद्भगवतः प्रधानपुरुषेश्वरात्।
आत्मनः सर्वभूतानां भयं तीव्रं निवर्तते ॥ ४१ ॥

नाऽन्यत्रेति। 'भक्त्यैव तुष्टिमभ्येति विष्णुर्नाऽन्येन केनचित्। स एव मुक्तिदाता च भक्ति-स्तत्रैव कारणम् ॥ १ ॥ मत् मत्तोऽन्यस्मात्, तीव्रं संसारात्मकं भयं न निवर्तते। संसारनिवृत्ति-र्ज्ञानादिना, ते च भगशब्दवाच्या भगवत्येव भवन्ति। तदाह—भगवत इति। किं च, संसारो जायते प्रकृतिपुरुषाभ्याम्, तयोर्यो नियामक, तस्मादेव निवर्तत इति युक्तम्। किंच—आत्मनः सर्वभूताना-मिति। आत्मैव तादृशमुपकारं करोति, नत्वन्योऽन्यस्मा उपकरोति स्वार्थव्यतिरेकेण। अतो ज्ञानादिरूप-त्वात् निवर्तकरूपत्वम्, प्रकृत्यादिनिवारकत्वात् पुन ससाराजननम्, आत्मत्वाद्धयस्य हितकारित्वं च भग-वत एवेति अन्यस्माद्भयं न निवर्तत इति युक्तम्। तीव्रमिति शीघ्रमागन्तृ, निकटस्थितादेव नियामका-न्निवर्तत इति। निकटस्थितत्वमात्मत्वात्सिद्धम् ॥ ४१ ॥

प्रकाशः।

+ इममित्यत्र। देहादिचतुर्विध इति। देहेन्द्रियप्राणान्तःकरणाध्यासभेदभिन्नः।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे पञ्चविंशाध्यायविवरणं सम्पूर्णम्।

१ भगवद्वचनात्. क.

नियामकत्वं साधयति—

मद्भयाद्वाति वातोऽयं सूर्यस्तपति मद्भयात् ।
वर्षतीन्द्रो दहत्यग्निर्मृत्युश्चरति मद्भयात् ॥ ४२ ॥

मद्भयादिति । 'भीषास्माद्वातः पवते भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ॥ १ ॥' इति श्रुत्यर्थमाह । मद्भयादेवाऽयं वातो वाति, अन्यथा तस्य गमने प्रयोजनाभावात् सर्वत्र सर्वदा न वायात् । सूर्योऽपि मद्भयादेव तपति । श्रुतावुदेतीत्युक्तम्, तत्रोदयशब्देन तपनमेवोच्यते । अन्यथा ज्योतिश्चक्रगत्याऽप्युदयो भवतीति व्यर्थं भयं स्यात् । अग्नीन्द्रयोः क्रिया नोक्तेति स्वयमाह—वर्षतीन्द्र इति । अन्यथा स्वगृहस्थं जलमिन्द्रः कथं व्ययीकुर्यात् । दहत्यग्निरिति । सर्वानेवाऽशुचिपदार्थान् असम्मतानपि कथं दहेत् । मृत्युरपि दयालुः मद्भयादेव चरति, मारयितुं यतते । वाय्वाद्युपासनया मृत्युर्दूरीकर्तव्य इति मतमपास्तम् । अन्येन निवार्यमाणोऽपि मृत्युर्न निवर्तत इत्यपि सूचितम् ॥ ४२ ॥

एवमितरनिषेधेन स्वसिद्धान्तं निरूप्य तत्र पूर्वाचारं प्रमाणयति—

ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः ।
क्षेमाय पादमूलं मे प्रविशन्त्यकुतोभयम् ॥ ४३ ॥

ज्ञानेति । ज्ञानवैराग्ये भक्तेः सहकारिणी । योगोऽधिकारिविशेषणम् । भक्तिरेव करणम् । क्षेमाय मोक्षाय, स्वरूपसरक्षार्थं वा, मे पादमूलं पादपीठमक्षरं प्रविशन्ति । न विद्यते कुतश्चिद्भयं यस्मात् । प्रवेशहेतुः ॥ ४३ ॥

एवं सर्वं शास्त्रार्थं निरूप्य स्पष्टपरिज्ञानार्थं कर्तव्यमनुवदन्नुपसंहरति—

एतावानेव लोकेऽस्मिन् पुंसां निःश्रेयसोदयः ।
तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थिरम् ॥ ४४ ॥

एतावानेवेति । पुंसां परलोकार्थं यततामस्मिन् लोके एतावानेव निःश्रेयसोदयः । निःश्रेयसस्योदयो यस्मात् । मोक्षहेतुरेतावानेव । पूर्वं मनोमूलकः संसार उक्तः, मोक्षेऽपि तदेव निमित्तमुक्तमिति तच्चेद्भगवति स्थिरीभवति, तदा कृतार्थतेति, तत्स्थिरीकरणार्थं भक्तिरेवेत्याह—तीव्रेणेति । शीघ्रफलसाधकेन भक्तियोगेन सर्वप्रतिबन्धकरहितेन मनश्चेन्मय्यर्पितं सत् स्थिरं भवेत् । एतावानेव निःश्रेयसोदयः । केनाऽपि प्रकारेण भगवति स्थिरं मनः परमपुरुषार्थसाधकमिति योगसिद्धान्तः । तत्र भक्तिरेव स्थिरीकरणहेतुरिति स्वसिद्धान्तानुसारेणाऽपि भक्तिर्निरूपिता । भागवताऽनुसारेणाऽपि । तस्माद्भक्तिः सर्ववादिसम्मतेति सैव कर्तव्येति सिद्धम् ॥ ४४ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां
तृतीयस्कन्धे पञ्चविंशाध्यायविवरणम् ।

# षड्विंशाध्यायविवरणम् ।

* आत्मानात्मविवेकाय षड्विंशे साङ्ख्यमुच्यते ।
तत्त्वानां लक्षणान्यत्र निरुक्तिश्चैयमत्र च ॥ १ ॥
जीवब्रह्मविभागार्थं प्रक्रियाद्वितयं स्मृतम् ।
संसारे मूलभावे च पुरुषः प्रकृतिर्मता ॥ २ ॥

पूर्वाध्याये उत्तमभक्त्या हृदयप्रविलापनमुक्त्वा, अन्यासां च फलं निरूप्य, ता सत्सङ्गादेव भवन्तीति देवहूतेस्तदसम्भवात् शास्त्रार्थपरिज्ञानार्थमेव तन्निरूपितामिति मत्वा साङ्ख्यं तदर्थमेव कथयितुमाह—

## श्रीभगवानुवाच ।

**अथ ते संप्रवक्ष्यामि तत्त्वानां लक्षणं पृथक् ।**
**यद्विदित्वा विमुच्येत पुरुषः प्राकृतैर्गुणैः ॥ १ ॥**

— अथेति । अथेत्यपराधीनत्वाय भिन्न प्रक्रम । साङ्ख्यं ते तुभ्यमेवाऽभिधास्यामि । साङ्ख्यस्वरूपमाह—तत्त्वानां लक्षणं पृथगिति । यथाऽन्योन्यसंश्लेषो न भवति तथा तत्त्वानि लक्षणीयानि । लक्षणैरेवेतरभेदपरिज्ञानमित्यवोचाम । अतस्तत्त्वानां लक्षणं पृथक् पृथक् प्रवक्ष्यामि । नन्वन्त स्थितसंसारस्य यहि स्थितैस्तत्त्वादिपदार्थैर्ज्ञातैरपि किं स्यात्तत्राऽऽह—यद्विदित्वेति । पृथक् पृथक् लक्षणं विदित्वा स्वयं पुरुषः, प्राकृतैर्गुणैराध्यात्मिकतत्त्वैर्विमुच्यते । सङ्घाते विद्यमानस्तल्लक्षणैस्तं तं पृथक्कृत्य केवलो भवितुं शक्नोति ॥ १ ॥

एतदात्मानात्मविवेचनं यदर्थं तच्च ज्ञानं तुभ्यं कथयिष्यामीत्याह—

**ज्ञानं निःश्रेयसार्थाय पुरुषस्याऽऽत्मदर्शनम् ।**

---

गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृतः प्रकाशः ।

* अथ षड्विंशाध्याय विवरिषव सगते पूर्वमुक्तत्वात्तामनुक्त्वा भगवद्विचारितमर्थान्य द्वितीयपुरुषार्थं स्फुटीकर्तुमेव सर्वोऽपि विचार इति ज्ञापनाय प्रयोजनमेव मुख्यतया आहुः—आत्मेत्यादि । तथा चात्मानात्मविवेको भगवद्विचारितोऽर्थः । सोऽत्र मैत्रेयोक्तावध्यायार्थ । तदर्थमत्र तत्त्वानां लक्षणानि निरुक्तिरुद्देशश्च क्रियत इति शेष । च पुनरत्र जीवब्रह्मविभागार्थं प्रक्रियाद्वितयं बन्धमोक्षरूपं पूर्वाचार्यैः स्मृत्योक्तम् । यदिदं द्वयं न स्यात् तदा विभागो न ज्ञायेत । तदाहुः—संसार इत्यादि । मूलभावे पूर्वरूपापत्तौ पुरुषो मत इत्यन्वयः । तथा च पूर्वाध्याये भक्तेरुक्तत्वादत्र तदङ्गत्वेन भक्तचनधिकारे च, फलार्थं तदनुकल्पत्वेनात्र साङ्ख्यमुच्यत इति तद्विचारेऽज्ञानाद्विभावो वा एककार्यं वा सगतिरित्यर्थ । शास्त्रार्थविचारे तु भगवद्रोग्यतत्त्वानामत्र निरूपणान्मा(?)त्राध्यायत्वमिति न कोऽपि कुत्रापि सशय इति सर्वं सुस्थम् ।

— अथेत्यत्र । आध्यात्मिकतत्त्वैरिति । शरीरस्थैर्वासनात्मकैश्च ।

---

१ वा प. ३

यदाहुर्वर्णये तत्ते हृदयग्रन्थिभेदनम् ॥ २ ॥

+ ज्ञानमिति । यज्ज्ञानं निःश्रेयसार्थाय पुरुषस्य मोक्ष साधयति, तत्ते वर्णयिष्यामीति सम्बन्ध । नन्वात्मज्ञानात् ससार इति आत्मज्ञानमेव वक्तव्य किमन्येन ज्ञानेनेत्याशङ्क्याऽऽह—आत्मदर्शन यदाहुरिति। आत्मनो दर्शन यस्मात्, आत्मसाक्षात्कारहेतु, साक्षात्कार एव वा। तत्स्वरूपत कारणतश्च ते तुभ्यं वर्णये। एतदपि भक्तिवत् हृदयग्रविलापकमित्याह—हृदयग्रन्थिभेदनमिति । हृदये चिदचितोर्ग्रथनं यस्मात् स हृदयग्रन्थि, मोह, कोशो वा। तस्य भदन यस्मादिति। साङ्ख्येन सहित ज्ञान स्वतन्त्रं साधनमित्युक्तम्॥२॥

तत्र प्रथम पुरुषस्य लक्षणमाह—

अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः ।
प्रत्यग्धामा स्वयंज्योतिर्विश्वं येन समन्वितम् ॥ ३ ॥

× यस्मिन् ज्ञाते इतरभिन्नतया ज्ञानमिति तल्लक्षण यत्रव न भविष्यति, तदेव दूरीकर्तुं शक्यत इति मुख्यतयाऽऽत्मलक्षणम् । पुरुषो लक्ष्य, आत्मेति लक्षणम् । योऽयमहप्रत्ययवेद्य, देहेन्द्रियान्तःकरणानि लोका ममतास्पदा, यागादिसाध्या परलोकाश्च। मो(म्वो)पकारि सर्वमेवाततिं व्याप्नोतीति आत्मा, अस्मत्प्रत्ययवेद्य. स एव पुरुष इति । तस्य देहाद्युत्पत्त्या जीवभावापन्नस्योत्पत्तिर्भविष्यतीति तद्व्यावृत्त्यर्थमाह—अनादिरिति । जननसमागमाविर्भावभेदेन भिन्ना काप्युत्पत्तिर्यस्य नास्ति सोऽनादि । तस्योत्पत्त्यभावे हेतुमाह—निर्गुण इति। निर्गता गुणा यस्मात् । मवोत्पादका गुणा, ते चेत्तत एवोत्पन्ना, कस्तस्योत्पत्ति सा नयिष्यति। सुतरामेव निवृत्तिपक्षे गुणसम्बन्धरहित इत्यर्थ । स्वस्य गुणहेतुत्वे, स्वतो वा गुणसंबन्धाभावे, प्रकृतेरेव वा गुणा आत्मन्यादिमत्त्वं साधयिष्यतीत्याशङ्क्याऽऽह—प्रकृतेः पर इति । न हि प्रकृतिनियन्ता प्राकृतैर्गुणै संबध्यते, प्रकृतेरन्य प्रकृतिसम्बन्धरहितो वा। तत्र प्रमाणमाह—प्रत्यग्धामेति । प्रत्यक् अन्तर्मुखतया धाम स्फूर्तिर्यस्य । अहंवित्तिवेद्य इत्यर्थ । नन्वहङ्कारोऽपि तादृशो भवतीति चेत्तत्राऽऽह—स्वयञ्ज्योतिरिति । स्वयमेव ज्योति प्रकाशरूपम् । अनेन प्रमाणान्तर तत्र नास्ति, नापेक्ष्यत इत्यप्युक्तम् । अहङ्कारस्तु स्वप्रकाशो न भवति, तदुत्तराध्याये वक्ष्यते । आत्मनोऽसाधारण धर्मान्तरमाह—विश्व येन समन्वितमिति । येनाऽऽत्मना सर्वमेव विश्व समन्वितम् । तत्त्वानामन्योन्यव्यभिचारित्वात्, स्वभावकालकर्मणा नानात्वात्, एकेन सर्वगत सम्यक् सम्बन्ध आत्मनैव भवति, नाऽन्यस्येति । सम्यगन्वयश्च तत्कृतगुणलेपसम्बन्धाभावेन समन्वितमित्येव ससर्ग । अत्र पुरुषस्य आत्मेत्येव लक्षणम्, आत्मन सङ्घातव्यावृत्त्यर्थमन्यानि लक्षणानि । अनादिपदेन देहो व्यावर्तित, निर्गुण पदेन प्राकृता सर्वे, प्रकृतेर्नियामकत्वेन प्रकृतिर्व्यावर्तिता, प्रत्यग्धामत्वेन कालो व्यावर्तित । एव

---

प्रकाशः ।

+ ज्ञानमित्यत्र । कोश इति । लिङ्गशरीरम् ।

× अनादिरित्यत्र । आत्मनस्य पुरुषलक्षणत्व व्युत्पादयन्ति—देहेत्यादि । अत्रात्मा 'अहमात्मा गुडाकेश' इति वाक्योक्तो विभूतिरूपो ज्ञेय । आविर्भावभेदेनेत्यत्राऽऽविर्भावपदेन वहि प्राकट्य ज्ञेयम्। नानात्वादिति । अनेकविधत्वात । समन्वितमित्येव संसर्ग इति। एवंप्रकारक ससर्ग समन्वितशब्दार्थ । मूले परीक्षाया अनुक्तत्वादत्र परीक्ष्यन्ते । अनादिपदेनेत्यादि । प्राकृता इति । महदादय । अस्मदादिदे-

चत्वारि पदान्येकं लक्षणं लौकिकम् । स्वयंज्योतिरित्यलौकिकं लक्षणम् । ज्ञाने साक्षादुपयोगिलक्षणं विश्वं येन समन्वितमिति । एवमात्मनस्त्रीणि लक्षणानि । प्रत्यग्धामत्वं देहात्मविवेकात्पूर्वं देहेऽपि भवतीति प्रत्यग्धामेति न देहव्युदासः । तथा प्रकृतेः परे कालादयश्च न व्यावर्तिता भवन्ति, शास्त्रसहकृतबुद्धेरपि स्वभावनियामकत्वदर्शनात् ॥ ३ ॥

+ तस्याऽऽत्मरूपस्य पुरुषस्य वस्तुतो निर्लेपत्वात् प्रकृतिनियामकत्वाच्च जीवत्वं सहजं न भवतीति वक्तुं जीवोपाधिमाह—

**स एष प्रकृतिं सूक्ष्मां दैवीं गुणमयीं विभुः ।**
**यदृच्छयैवोपगतामभ्यपद्यत लीलया ॥ ४ ॥**

**स एष इति** । स एव लक्षितः कारणत्वेनोक्तः पुरुषः, एष आत्मा अहंप्रत्ययवेद्य. । तस्य कथमेवं विपर्यय इत्याशङ्क्य प्रकृतिरात्मव्यतिरिक्ता साङ्ख्यैकदेशिनो मते पुरुषवन्नित्या, भगवदीयसाङ्ख्ये तु भगवतः शक्तिः; साङ्ख्यशास्त्रं तु न भगवन्तं विषयीकरोति, तत्प्रवर्तकत्वात्तन्नियामकत्वाच्च, अक्षरादर्शनेव तच्छास्त्रप्रवृत्तेः, पञ्चधा भगवाननादिरिति । पुरुषोत्तमोऽक्षरं कालः प्रकृतिपुरुषाविति । इदं मतमाश्रित्य यत्र साङ्ख्यसिद्धान्तप्रवृत्तिः, न तु प्राकृतम् । तत्र पुरुषस्यैव प्रकृतिनियमनावस्थां परित्यज्य प्रकृत्यधीनावस्थया जीवत्वं तदुच्यते—प्रकृतिमिति । सूक्ष्मा दुर्ज्ञेया कोमलाङ्गी । एष इत्यनेन कामो-

---

प्रकाशः ।

द्यपेक्षयाऽनादित्वस्य तेषु सत्त्वात्तद्व्यावृत्त्यर्थं निर्गुणपदमित्यर्थः । निर्गुणपदे गुणजनकत्वरूपार्थादरे प्रकृतावतिव्याप्तिरिति तद्व्युदासायाऽऽहुः—प्रकृतेरित्यादि । ननु प्रथमलक्षणे पदचतुष्टयस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः—प्रत्यगित्यादि । तथा च, केवलमनादित्वं काले, गुणजनकत्वं च प्रकृतावुभयमपि प्रकृताविति ताभ्यां तद्व्युदासादेताभ्यां चैतद्व्युदासात्समुदितमुपात्तमित्यर्थः । अत्रैतद्बोध्यम् । प्रकृतेः परः प्रत्यग्धामेति पदद्वयकथने विशेषणदलेन कालबुद्धिप्रकृत्यादीनां विशेषणदलेन देहस्य च व्युदासादनादिनिर्गुणपदे यद्यपि नात्यावश्यके, तथाप्यनादित्वस्याविकारित्वे निर्गुणत्वस्य चाऽनञ्जन उपयोगस्याऽभिमाध्यायारम्भ उपपादयिष्यमाणत्वादत्र तत्स्वरूपकथनमात्रपरे । किं चात्र प्रत्यग्धामत्वस्य देहेऽतिव्याप्तिबोधनेन ममात्मत्वादि पराक्प्रत्ययोऽपि विवेकाभावकृत एवेति न तेनात्मनः प्रत्यग्धामत्वक्षतिरित्यपि ज्ञापितमिति च ।

+ **स एष** इत्यत्र । जीवोपाधिमिति जीवत्वप्रयोजकं धर्मम् । कारणत्वेनेति । गुणजनकत्वेन । इत्याशङ्क्येति । अस्यामाशङ्कायाम् । अन्वयस्तु इदं मतमाश्रित्येत्यनेन बोध्यः । साङ्ख्यैकदेशिन इति । अनीश्वरादिसाङ्ख्यवादिनः । तत्प्रवर्तकत्वादिति भगवतः सांख्यमतप्रवर्तकत्वात् । तथा च, यदि विषयीकुर्यात् तदा प्रवक्तादात्म्य व्यतिरिच्येत । तथा सति तस्याऽस्य च फलभेदो न स्यादतो भगवत एतत्प्रवर्तकत्वात्तथेत्यर्थः । किंचात्र प्रकृत्यधीनत्वं संसारार्थं पुरुषस्याऽत्र वाच्यम्, तदपि भगवतः प्रकृतिनियामकत्वादनुपपन्नम् । तदाहुः—तन्नियामकत्वादिति । साङ्ख्यान्तराद्विशेषं बोधयितुमत्रत्यां शास्त्रमर्यादामाहुः—पञ्चधेति । कालादित्रयस्याऽनादित्वमत्र स्पष्टम् । पुरुषोत्तमाक्षरयोस्तु गीतायां सिद्धमप्यनुमंस्यते, प्रकृतेः शक्तित्वं चानुमंस्यते-दैवीत्यनेन । अत इदं मतमन्यतो भिन्नम्, तदाहुः—नतु प्राकृतमिति । तत्रेति । प्रस्तुतसाङ्ख्ये ।

---

१ नियता क. ख. ङ.

ऽप्यस्य प्रथमं भगवदिच्छया संजात इति ज्ञातव्यम्, अन्यथा तस्यामासक्तिर्न स्यात् । 'काममय एवाऽयं पुरुषः' इति श्रुतेश्च । अतः कामवशाचां भगवच्छक्तिरूपां प्रकृतिम्, देवस्य संबन्धिनीम्, मोहिकां बन्धनहेतुभूतगुणमयीमादौ । विभुः समर्थः तां भोक्तुम् । यदृच्छयेति । सापि भगवत्प्रेरणया स्वयमेव भोग्यत्वेन समागता भोक्तुम् । प्रभोः सा लीलोचितेति तामभ्यपद्यत । उपभोक्तुं तया सहैक्यं प्राप्तवानित्यर्थः ॥ ४ ॥

तयोपभुज्यमानस्याऽवस्थामाह—

**गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः ।**
**विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया ॥ ५ ॥**

गुणैरिति । सा हि गुणैः कृत्वा नित्यनूतना विचित्रा भवति वशीकर्तुम् । सरूपाः प्रजाः सृजतीमिति । पुरुषान्तरङ्गभूतानंशान् स्वसदृशान् करोतीति अंशद्वारा पुरुषे स्वरूपापादनम् । अत एव सर्वेष्वेवांशेषु तद्भावापन्नेषु सत्सु स्वयमपि तद्भावापन्नो जात इत्याह—विलोक्य मुमुहे इति । नन्वस्य भगवद्रूपत्वेन नित्यसिद्धज्ञानशक्तिमत्त्वात् कथं तस्या दर्शने मोहः ? तत्राऽऽह—ज्ञानगूहयेति । ज्ञानं हि गूहते आच्छादयति । सद्य इति विचारास्फुरणम् । स इति विभुरपि, इहाऽस्यां प्रविष्टः । मोहः स्वरूपविस्मृतिः ॥ ५ ॥

मोहानन्तरं पूर्णो जीवभावो जात इत्याह—

**एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् ।**
**कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥ ६ ॥**

एवमिति । परा स्वतो भिन्ना या प्रकृतिः, तस्या अभिध्यानेन, तामेवात्मत्वेन मन्यत इति । आत्मत्वेन ज्ञानमभिध्यानम् । सा हि सर्वं करोति, क्रियाशक्तिस्तदीयेति । पुरुषस्य तु ज्ञानशक्तिरेव, सा मोहेन कुण्ठीभूता । प्रकृतेः कर्तृत्वमात्मनि मन्यते, यतोऽयं पुमान् । लोकेऽपि पुरुषः स्त्रीकृतमात्मकृतमेव मन्यते । सा हि गुणैः कृत्वा कर्माणि करोति । तत्फलमुखं कर्तृत्वमात्मनि मन्यत इत्यर्थः ॥ ६ ॥

आत्मनि कर्तृत्वाभिमान एव संसारमूलमित्याह—

**तदस्य संसृतिर्बन्धः पारतन्त्र्यं च तत्कृतम् ।**
**भवत्यकर्तुरीशस्य साक्षिणो निर्वृतात्मनः ॥ ७ ॥**

तदस्येति । तत् कर्तृत्वमेवाऽस्य जीवस्य संसृतिः संसरणम् । ततः कर्मभिर्बन्धः, प्रकृतिपारतन्त्र्यं च । तदपि कर्तृत्वाभिमानकृतमेव, न तु केवलं प्रकृतिकृतम् । तत्सर्वं तस्य स्वाभाविकं न भवतीति वस्तुमात्मनो विशेषणानि चत्वारि । स हि चिदानन्दरूपः, भगवदंशरूपत्वात् ऐश्वर्यादियुक्तश्च । दोषाभावार्थमकर्तुरिति । ईशस्येति भगवत्संबन्धात् । साक्षिण इति चिद्रूपत्वात् । निर्वृतात्मन इत्यानन्दरूपत्वात् । अकर्तुः संसारः, ईशस्य बन्धः, साक्षिणः पारतन्त्र्यम्, निर्वृतात्मनश्चितयम् । चकारादुक्तं दुःखित्वं वा ॥ ७ ॥

१ सचिदानन्दः क. ख.

+ ननु ज्ञानेच्छाप्रयत्नानामेकाश्रयत्वात्, उपादानगोचरापरोक्षज्ञानवत एव कर्तृत्वात्, कथमन्यगत कर्तृत्वमित्याशङ्कयाऽऽह—

**कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ।**
**भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम् ॥ ८ ॥**

कार्येति । यद्यपि कर्तृत्वभोक्तृत्वयो सामानाधिकरण्य प्रतीयते, तदुभयोर्मिलितत्वात् कस्य किमिति निश्चेतु न शक्यते, भगवति तु सर्वमूलभूते कर्तृत्व भोक्तृत्व सहजमेव, तथापि कर्तृत्व प्रकृतिगत भोक्तृत्व पुरुषगतमेव । तत्र वृद्धा प्रमाणम् । कर्तृत्वस्य प्रकृतिधर्मत्वे हेतुः—कार्यकारणकर्तृत्व इति । कार्यमधिभूत देह, कारणानीन्द्रियाण्याध्यात्मिकानि, कर्ता अन्त करणमाधिदैविकम् । चिद्रूपस्य पुरुषस्य त्रिविधजडभावापत्तौ प्रकृतिरेव कारणम् । न हि निष्कारणमन्योऽन्यद्भवति । भगवदिच्छा कारणत्वेन कल्प्येत यदि त्रिविधा धर्माः प्राकृता न स्यु । प्राकृतत्वे स्वरूपापत्तौ स्वयमेव हेतुरस्तु किं विशेषकल्पनया ? भोगस्तु सुखदु खसाक्षात्कारात्मक । तत्र 'सत्त्वात्सजायते ज्ञानम्' इति ज्ञानमपि प्रकृतिगत कल्प्येत यदि पुरुषो ज्ञानरूपो न स्यात् । अत पुरुषसबन्धादेव प्राकृतमपि ज्ञानमित्याह—भोक्तृत्व इति । सुखदु खाना भोक्तृत्वे पुरुषमेव कारण विदुः, ज्ञानरूपत्वात् । 'सत्त्वात्सजायते' इति तु सत्त्वोपाधौ पुरुषस्य ज्ञानमुदेतीत्युच्यते, न तु ज्ञान प्रकृते स्वरूप धर्मो वा । न तु प्रथमत कर्तृत्वम्, तत् प्रकृत्यध्यासेन । प्रकृतिविशिष्टश्चेत् पुनः प्रकृतावध्यस्यते, तदा भोक्तृत्वम् । तथा सति न ज्ञायते किं गत भोक्तृत्वमिति । 'स्वकृत भुङ्क्ते' इति वाक्याच्च प्रकृतिगतमेव युक्तमित्याशङ्क्याऽऽह—प्रकृतेः परमिति । न हि भोग्यापत्तौ भोक्तृत्व भवति । अतो भोगदशाया प्रकृतिनियन्तैव भवति । न हि स्वात्मनो भोगो भवति, अन्य प्रत्येव रसत्वात् । एव कर्त्री व्यामोहिका प्रकृति, भोक्ता भोगदशाया प्रकृतिनियामक, कर्तृत्वे प्रकृतिमुग्धो देहादिभावापत्तौ च पुरुष इत्युभयोर्लक्षणमुक्त भवति ॥ ८ ॥

तत्र देवहूतिराशङ्कते—

**देवहूतिरुवाच ।**

**प्रकृतेः पुरुषस्याऽपि लक्षणं पुरुषोत्तम ! ।**

---

प्रकाशः ।

+ कार्यकारणेत्यत्र । अन्यगतमिति । प्रकृतिगतम् । तथापीति । 'तयोरेकतरो ह्यर्थ' इति विभागात् । ननु प्रकृताविरोधे कथमेवमुपगन्तुं शक्यत इत्याकाङ्क्षाया निदुरिति मूलस्यार्थमाहु तत्र वृद्धाः प्रमाणमिति । तथा च, सृष्टयुत्तर प्रकृतिपुरुषयोरविवेकेन कर्तृत्वभोक्तृत्वयो साङ्कर्यम्, ततः पूर्वं तु विवेक—एवंस्थितिवादङ्गीक्रियत इत्यर्थ । नन्वेतिह्यस्य प्रत्यक्षविरोधादुपेक्ष्यत्वमेव कुतो नोच्यत इत्यत आहु —कर्तृत्वस्येत्यादि । स्वयमेवेति । प्रकृतिरेव । तथा च लोके अशरीरस्य कर्तृत्वादर्शने कर्तृत्वस्य सघातनिष्ठत्वनिश्चयादैतिह्यस्योपेक्ष्यत्व नोच्यत इत्यर्थ । तर्हि युक्तितोऽयेन भोक्तृत्वमपि तस्यामेव कल्प्यमिति चेत्तत्राहु —भोग इत्यादि । ननु तर्हि समानप्रकरणीयगीतावाक्यविरोध इत्यत आहुः—सत्त्वादित्यादि । अन्यथा भगवानेव 'पुरुषः सुखदुःखाना भोक्तृत्वे हेतुरुच्यते' इति न वदेत् । यत् पुन श्रुतौ 'धीर्भीरित्येतत्सर्वं मन एव' इत्यनेन मनोधर्मत्वमुच्यते, तत्तु सिद्धान्तभेदात् । न च परमार्थतो विरोध, साख्यविषयस्यार्वाचीनत्वात् । अतो न दोष । भोग्यापत्ताविति । भोग्यरूपत्वापत्तौ । देहादिभावापत्तौ चेति । प्रकृतिमुग्ध इति शेष ।

## ब्रूहि कारणयोरस्य सदसच्च यदात्मकम् ॥ ९ ॥

* प्रकृतेरिति। देहभावे निष्पन्ने पश्चात्कर्तृत्वम्, देह एव तु कथं निष्पद्येत? नानात्वाच्च जीवानां स्वतः करणे जगदानन्त्यम्, हितायकरणम्, असंबद्धकरणं चापद्येत। अत एतदुक्तं कर्तृत्वं भोक्तृत्वं न प्रकृतिपुरुषाश्रयोरेव, न तु मूलभूतप्रकृतिपुरुषयोः। अतस्तयोर्लक्षणप्रश्नः। उभयोरपि भगवद्रूपत्वात् न संबन्धो विचारणीयः। पुरुषोत्तमेति तस्मादपि भगवन्तं परमाह परिज्ञानार्थम्। अस्य जगतः कारणभूतयोः। उपादानभूतावपि तावेवेत्याह—सदसच्च यदात्मकमिति। कार्यं, कारणं, मोक्षहेतुर्बन्धहेतुर्वा, अलीकं, सद्वा, सर्वमेव—यदात्मकं मूलभूतप्रकृतिपुरुषात्मकम्। अतस्तयोर्ज्ञाने सर्वं ज्ञातं भवतीत्याशयः। पुरुषस्त्वेक एव।'पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि'इति,'तदन्यकल्पनापार्था'इत्यतो जीवेश्वरावस्थाभेदे नैव भिन्नौ, न तु स्वतः इति। यदेव पुरुषलक्षणं तदेव लक्षणं प्रकृतेरपि। सैव यदि भवेत्, अवस्थाभेदो न स्यात्। सा हि व्यामोहिकैव। भेदे तु यदा तामभिमन्यते, तदा जीवावस्थां प्राप्नोति। यदा तु मूलभूतां प्रकृतिम्, तदा स्वरूपस्थित एव जगत्कारणं भवति, प्रवेशभेदेन वा। ते उभे पुरुषसङ्गते। यथा आकाशे कचित् ग्रहादि, कचिन्नेति। अतस्तस्यापि मोहकप्रकृतिव्युदासे कारणतुल्यतैव भवति। परं मूलभूतप्रकृतिसम्बन्धाभावान्न कर्तृत्वम्। उभयोः सम्बन्धो यथैवोपपद्यते, तादृश एव पुरुष इति मन्तव्यम्। उभयोर्दृष्टत्वात् जीवानां

---

प्रकाश।

* प्रकृतेरित्यत्र। तत्रेत्यादि। 'कार्यकारणकर्तृत्वे' इति श्लोकोक्ते कर्तृत्व आशङ्क्यते इत्यर्थः। यद्यप्यत्राक्षेपबोधकं पदं मूले स्फुटं नास्ति, तथापि कारणयोरस्येति द्विवचनेन पुरुषे कारणत्वारोपात् सा बोध्यत इति ज्ञेयम्। तदेव विवृण्वन्ति—देहभाव इत्यादिना। कथं निष्पद्येतेति। देहापत्ते पूर्वं पुरुषस्याऽकर्तृत्वात् प्रकृतेस्तु जडत्वादुभयोस्तदजनकत्वे कर्तृत्वाभिमानापादकः पुरुषदेहो हेत्वभावान्निष्पत्तुं नार्हतीति भावः प्रश्नबीजम्। यदि च तादृशो जीवेन प्रकृतिमनपेक्ष्यैव क्रियत इति विभाव्यते, तदा तु दूषणत्रयमित्याहु—नानात्वादित्यादिना। तथा च, जीवैः स्वार्थं करणे जगदानन्त्यम्, मूलपुरुषेण तदर्थं करणे अग्रिमं दोषद्वयम्। असम्बद्धकरणमिति सर्वदा प्रकृतिसम्बन्धं विनैव करणम्। अत इत्यादि। एवं दोषत्रयापातात्। एवं पराभिध्यानेनोक्तं मूलपुरुषे कथमपि न युज्यते, अतो न तस्य जीवापत्तिः शक्यवचना। अतो जगत्कारणयोरेतद्विधं लक्षणं वाच्यमिति प्रश्न इत्यर्थः। ननु लक्षणवत्तयोः संबंधोऽपि कुतो न पृष्ट इत्यत आहु—उभयोरित्यादि। अतो न पृष्ट इत्यर्थः। एवं प्रश्नग्रन्थतात्पर्यमुक्त्वा साङ्ख्यान्तराद्विवेकमुत्तरग्रन्थस्य प्रणालीमाहु—पुरुष इत्यादि। साङ्ख्यान्तरे पुरुषा बहवः, 'पुरुषबहुत्वं व्यवस्थातः' इति प्रवचनसूत्रात्। अन्यत्र च, पुरुषेभ्य ईश्वरोऽन्यः, तेषां मोक्षसाधकस्य ज्ञानस्य स्वतोऽघटमानत्वेन ज्ञानदातृत्वदयमपेक्षणात्। तदुभयमप्यत्र नविवक्षितमित्याशयेनैकादशोक्तमेकं मतमत्राहु—पुरुषेत्यादि। लक्षणमिति जीवेश्वरयोः स्वरूपलक्षणम्। तर्हि कथमवस्थाभेद इत्यत आहु—प्रकृतेरित्यादि। सैवेति। पूर्वोक्तैव। भेदे [२] इति। अतिरेके तु। उभे इति। मूलप्रकृतिव्यामोहकप्रकृती। तस्यापीति। जीवभावापन्नस्य प्रदेशस्यापि। कारणतुल्यतेति। मूलपुरुषतुल्यता। उभयोर्दृष्टत्वादिति अवस्थाद्वयस्यापि दृष्टत्वात्। ननु जीवानां मूलपुरुषाद्भेद एव कुतो नाद्रियते? तत्राहु—जीवानामित्यादि।

---

१ निष्पद्येत क. ख. २ भेदे तदुत्तरम्. ग. ख.

पृथक्त्वे श्रुतिस्मृतिविरोध आपद्येत । प्रपञ्चस्य मिथ्यात्वे शास्त्रविरोध , अनिर्मोक्ष , एकमुक्तौ च सर्वमुक्ति , अविश्वासश्च स्यात् । अत उभय यत एवोपपद्यते तथा मूलपुरुष प्रकृतिः द्वय गृह्णातीति मन्तव्यम् ॥ ९ ॥

मूलभूता प्रकृतिं लक्षयति—

## श्रीभगवानुवाच[1] ।

**यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ।**
**प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ॥ १० ॥**

। यत्तदिति । यत्पूर्वमुक्तम्, तदेवैतादृशगुणविशिष्ट मूलप्रकृतिर्भवति । यत्त्रिगुणम्, सा प्रकृति , सत्त्व रजस्तमोगुणाः यस्य मूलभूता । यथा सच्चिदानन्द ब्रह्म, क्रियाज्ञानानन्दा धर्मा अपि भवन्ति । तथा सच्चिदानन्दरूपं प्रधानम्, उद्गतास्तत्रशतो गुणा अपि भवन्ति । अव्यक्तम् , न केनापि प्रकारेणाऽभिव्यक्तम, कार्यमेव तस्याऽभिव्यक्तम्, न स्वयमिति । नित्यं सदैकरूपम् । सदसदात्मकं कार्यकारणरूपम् । प्रधान मुख्यम् । प्रकृतिमिति लक्ष्यम् । प्राहुरिति प्रमाणम् । लक्षणदविशेषम् । विशेषा सर्वे गुणकृता तस्या एवाऽतो विशेषवत् । प्रधानमिति लक्षणमेकमेव । प्रधानमिति मुख्य भगवता जगत्कारणत्वेन निर्मितम्, तद्रूप वा । तस्य जगत्कर्तृत्वनिर्वाहार्थं भगवत इव षड्गुणानाह—त्रिगुणादिपट्पदै । त्रिविधा हि सृष्टिरन्यथा न भवेत्, यथा भगवत ऐश्वर्यम् , अन्यथा समानेऽपि कर्मण्युच्चनीचगतयो न स्यु । मूलधर्मा एते सच्चिदानन्दाभासा भगवत उत्पन्नाया प्रतिष्ठिता । एव सत्येव मुख्य भवति । यद्यप्येकैकमेव लक्षणम्, तथापि भगवत्त्वाय षडुच्यन्ते । अव्यक्तमिति द्वितीयम् । तस्य हि एव सामर्थ्यं न केनाप्यभिव्यक्तं भवति, अन्यथा कालादिनाऽभिव्यक्तावनित्यताया पुन सृष्टिर्न स्यात् । सदैकरूपमिति कीर्तिस्तस्य । यज्जीवप्रकृतिव्युदासार्थमिति केचिदाहुस्तदुत्तराध्यायेन विरुध्यते, नित्यत्वादुभयोरिति । सदसदात्मकमिति श्री , तस्यैषा शोभा यत्सर्वात्मकमिति । अविशेषमिति ज्ञानहेतु , अन्यथा ससारिणो मुक्ता न स्यु , तस्य सर्वकारणत्वात् । विशेषवदिति सर्वे विशेषास्तदीया , न तस्य किञ्चिदाश्चर्यकरमिति वैराग्यहेतु ॥ १० ॥

प्रधान लक्षयित्वा प्राधानिकं निर्दिशति—

**पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ।**

---

प्रकाशः।

श्रुतिस्मृतिविरोध इति । 'स वा एष महानज आत्मा,' 'यस्यात्मा शरीरम्' इति श्रुतीनाम्, 'अहमात्मा गुडाकेश सर्वभूताशयस्थित' इत्यादिस्मृतीना विरोध । तर्हि मोक्षार्थं सौकर्यान्मायावाद एव कुतो नाद्रियेत इत्यत आहु —प्रपञ्चस्येत्यादि । शास्त्रविरोध इति । सत्कार्यवादप्रतिपादनमत्र क्रियते, तद्विरोध । शेषं स्फुटम् । एवमत्र पुरुषस्त्वेक एवेत्यारभ्यामन्तव्यमित्यन्तेन शास्त्रप्रणाली निरूपिता ।

। यत्तदित्यत्र । पूर्वमुक्तमिति । 'स एष प्रकृतिं सूक्ष्माम्' इत्यादिपद्यद्वयेनोक्तम् । यथेत्यादि । तथा चैश्वर्यस्थानापन्नमत्र त्रिगुणत्वमित्यर्थ । सच्चिदानन्दाभासा इति । प्रजायेयेतीच्छया तेभ्यो जघन्यभावापन्ना इत्यर्थः । श्रीधरमतमाहु:—यदित्यादि । तत्राऽस्वरसमाहु —तदित्यादि । उभयोरिति । जीवप्रकृतिमूलप्रकृत्यो ।

---

1 कपिल उवाच ।

**एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥ ११ ॥**

पञ्चभिरिति । प्राधानिकं गणं चतुर्विंशतिकं प्राहुः । चतुर्विंशतिभेदभिन्नम् । चतुर्विंशतीनां समुदायः प्राधानिको गणः । विदुरिति प्रमाणम् । चतुर्विंशतिसङ्ख्यासिद्धिर्ये, तान्याह गणशः—पञ्चभिः पञ्चभिर्ब्रह्मेति परिज्ञानार्थम् । एतच्चतुर्विंशतिभेदभिन्नं जगत् ब्रह्मैव । चतुर्भिर्दशभिरिति । चतुर्णां प्रवर्तकत्वात् प्रथमं निर्देशः । साङ्ख्यशास्त्रत्वात् सङ्ख्ययैव पूर्तिः ॥ ११ ॥

तानि नामतो निर्दिशति—

**महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभः ।**
**तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे ॥ १२ ॥**

— महाभूतानीति । प्रथमं पञ्चसङ्ख्यापूरकाणि महाभूतानि । एवकारेण दिगादीनामाकाशादिष्वन्तर्भावः सूचितः । तानि गणयति—भूरित्यादि । अग्निस्तेजः, अग्निरेव वा । सौरादीनि तेजांसि अत्रैवान्तर्भवन्तीत्येके । भगवत्तेज इत्यपरे । मरुद्वायुः । नभ आकाशम् । तन्मात्राणि शब्दादीनि । तावन्ति पञ्चैव । स्वराः सर्वे शब्दमध्ये । गन्धादीनि गन्धरसरूपस्पर्शशब्दाः । मे मतानीत्यस्मत्सिद्धान्ते गन्धादीनां तन्मात्रत्वम्, अन्येषां मते गन्धादयो गुणाः भूतेभ्य उत्पद्यन्ते, भूतसमवेता इति ॥ १२ ॥

दशसङ्ख्यां पूरयति—

**इन्द्रियाणि दश श्रोत्रं त्वग्दृग्रसननासिकाः ।**
**वाक्करौ चरणौ मेढ्रं पायुर्दशम उच्यते ॥ १३ ॥**

इन्द्रियाणीति । ज्ञानेन्द्रियाणि प्रथमं गणयति । श्रोत्रं शब्दग्राहकम् । त्वक् त्वगिन्द्रियम् । दृक् दृष्टिः, चक्षुरिति यावत् । रसनेन्द्रियम्, घ्राणेन्द्रियञ्चेति । वागादीनि कर्मेन्द्रियाणि । मेढ्रं गुह्यम् ॥ १३ ॥

चतुष्टयं गणयति—

**मनो बुद्धिरहङ्कारश्चित्तमित्यन्तरात्मकम् ।**
**चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया ॥ १४ ॥**

मनो बुद्धिरिति । ननु पर्याया एते इत्याशङ्क्याऽऽह—अन्तरात्मकमिति । एकमेवान्तरात्मकमन्तःकरणं मनोबुद्ध्यादिभेदेन चतुर्धा लक्ष्यते । एकस्यानेकधा लक्षणे हेतुः—लक्षणरूपया वृत्त्या भेदो लक्ष्यत इति । वृत्तिभेदादेव, वृत्तिश्च लक्षणरूपा । व्यावर्तकं हि लक्षणम्, सामान्यवृत्तेर्भेदकत्वाभावात् ॥ १४ ॥

ननु चतुर्विंशतिभेदभिन्नो गणितः, अपरश्च गणनीय इत्याशङ्क्याऽऽह—

**एतावानेव सङ्ख्यातो ब्रह्मणः सगुणस्य ह ।**

---

प्रकाशः

— महाभूतानीत्यत्र । आकाशादिष्विति । दिगादिशब्दो 'दिगाद्याकाशादिभ्य' इति प्रवचनाद्युपपन्नार्थः । सौरादीनीत्यादिनोक्त [illegible] । स्वरा इति । उदात्तादयो निषादादयश्च ।

१ [illegible]

**सन्निवेशो मया प्रोक्तो यः कालः पञ्चविंशकः ॥ १५ ॥**

**एतावानेवेति** । सगुणस्य ब्रह्मण एतावत्येव सङ्ख्या । शास्त्रे " एतावानेव वा सङ्ख्यात । **सगुणस्य ब्रह्मणः सन्निवेश** । सम्यक् निवेशो नाम असम्भावितान्यमवेशे स्वधर्मवत्तया निरूपणम् । नन्वस्ति कालोऽधिकस्तत्राऽऽह—**यः कालः प्रोक्तः, स पञ्चविंशकः** । प्राकृत एवेत्यर्थ । प्रकृते प्रथमो भाव काल , अन्यानि चतुर्विंशतिरिति ॥ १५ ॥

एवमेकदेशिमतेन कालं निरूप्य पुनरेकदेशमतेन निरूपयति—

**प्रभावं पौरुषं प्राहुः कालमेके यतो भयम् ।**
**अहङ्कारविमूढस्य कर्तुः प्रकृतिमीयुषः ॥ १६ ॥**

**प्रभावमिति** । केचित्पौरुष प्रभाव काल प्राहु । पुरुषस्य धर्मः कश्चित्, सामर्थ्यविशेषो वा । तथात्वे हेतु —**यतो भयमिति** । यस्मात् कालाल्लोके भय भवति । कस्य भयमित्याशङ्क्याऽऽह—**अहमिति** । अहङ्कारेण यो **विमूढो** वञ्चित , आत्मानमेवाहङ्कार मन्यते । अहङ्कारविमूढत्वे हेतु —**कर्तुरिति** । य कर्मादिकर्ता, सोऽहङ्कारविमूढो भवति । कर्मकर्तृत्वेऽपि हेतु —**प्रकृतिमीयुष** इति । यस्तु प्रकृत्या सह ऐक्य प्राप्य कर्माणि करोति, पश्चादहङ्कारेण मूढो भवति, तस्य कालाद्भय भवतीत्यर्थ ॥ १६ ॥

स्वमते काल लक्षयति—

**प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि ! ।**
**चेष्टा यतः स भगवान् काल इत्युपलक्षितः ॥ १७ ॥**

**प्रकृतेरिति** । गुणाना साम्यावस्था प्रकृति । प्रकृते सवन्धिनो ये गुणा सत्त्वादय , तेषा साम्य गुणक्षोभात्पूर्वावस्था । स च क्षोभात्पूर्व निर्विशेष । **मानवीति** सबोधन महत उत्पन्ना अलौकिक जानातीति । एतादृशस्य यतश्चेष्टा, स काल । कालादेव गुणाना क्षोभ । स कालो भगवानेव, रूपपञ्चकमध्ये गण नात् । ननु भगवत काल इति संज्ञा कुत इत्याकाङ्क्षायामाह—इत्युपलक्षित इति । कलयत्याकलयतीति । सर्वो हि प्राणी येन रूपेण भृत्वा सर्वमाकलयति, मृत्युभीत एव हि सर्वमाकलयति । अत काल इति भग वानेवोपलक्षित उपलक्षणविधया बोधित । न हि काल इति साक्षाद्भगवन्नाम, किन्तु प्राणिना बोधन हेतुत्वेन निरूपित इति ॥ १७ ॥

एवं काल भगवद्रूपत्वेनोक्त्वा तस्योपलक्षणता निरूपयति—

**अन्तः पुरुषरूपेण कालरूपेण यो बहिः ।**
**समन्वेत्येष सत्त्वानां भगवानात्ममायया ॥ १८ ॥**

— **अन्त पुरुषरूपेणेति** । एक एव भगवान् सर्वप्राणिनामन्त पुरुषरूपेण वर्तते, बहि कालरूपेण, अन्यथा भगवतो व्याप्तिर्न स्यात् । बहिर्मुखान् कालरूपेण भक्षयति, अन्तर्मुखान् पुरुषेणाप्याययतीति ।

प्रकाशः

— अंतरित्यत्र । बहि काल इत्यादि । इदमेव प्रमेयम् ' वीर्याणि तस्याऽखिलदेहभाजाम् ' इत्यनेन दशमस्कन्धे राज्ञाऽनूदित ज्ञेयम् । किंच प्रकृते ' भूमि कारणयोरस्य ' इत्यनेन जगत्कारणतया　५१

अत एव सत्त्वानां सर्वेषां भगवान् स्वमायया सर्वभवनसामर्थ्येनोभयविधो भूत्वा, समन्वेति सम्यगन्वयं प्राप्नोति । बहिः काले लयं प्राप्नोति, अन्तः पुरुष इति । कालो भयजनकः, अभयरूपश्च पुरुष इति विशेषः ॥१८॥

एवमुद्देशेन तत्त्वानि निरूप्य उत्पत्तिपूर्वकं लक्षणान्याह—

**दैवात् क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान् ।**
**आधत्त वीर्यं साऽसूत महत्तत्त्वं हिरण्मयम् ॥ १९ ॥**

दैवादिति । प्रथमतश्चित्तस्योत्पत्तिमुक्त्वा तस्याऽऽधिदैविकादिभेदान् निरूपयतो लक्षणान्युच्यन्ते । आदावुत्पत्तिः, तत आध्यात्मिकस्य लक्षणम्, तत आधिदैविकस्य, तत आधिभौतिकस्येति । एवमेकं पदार्थश्चतुर्भिरुच्यते । तत्र प्रथमं महत्तत्त्वस्योत्पत्तिमाह—दैवात् कालात्, क्षुभिता धर्मा यस्याः सा पुरुषस्य योनिः क्षेत्रम्, तस्यां परः पुमान् प्रथमपुरुषो वीर्यमाधत्त, यथा स्वभार्यायां पुरुषः । तस्येन्द्रियाणि भगवत इवाऽऽनन्दमयानि, रेतस्तु सच्चिदंशः । चिदंश एवेत्येके, सदंशस्तु प्रकृतेः सकाशात् सबध्यते । ततः सा प्रकृतिः महत्तत्त्वमसूत । तस्य शरीरं हिरण्मयम्, यथा सूर्यान्तर्गतस्य नारायणस्य । आनन्दांशैरैक्ये हिरण्यरूपता भवति ॥ १९ ॥

आध्यात्मिकं लक्षयति—

**विश्वमात्मगतं व्यञ्जन् कूटस्थो जगदङ्कुरः ।**
**स्वतेजसाऽपिबत्तीव्रमात्मप्रस्वापनं तमः ॥ २० ॥**

विश्वमिति । स हि महान् सर्वजगत्प्रसवहेतुः, विश्वाधारत्वं तस्य लक्षणम् । ब्रह्माण्डस्याऽप्यंशतो भवतीति कूटस्थ इत्युक्तम् । प्रकृतिव्युदासार्थम् जगदङ्कुर इति । यथा वृक्षस्य प्रथमावस्था अङ्कुरः, तथा जगतः । स हि विश्वमात्मगतं व्यनक्ति । तत् किं कुर्वन्नित्याकाङ्क्षायामाह—स्वतेजसा आत्मप्रस्वापनं तमः पिबन्निति । येन तमसा पूर्वं महत्तत्त्वं प्रस्वापितं लयं प्रापितमासीत्, तन्मूलभूतं तमः महत्तत्त्वेन पीयते, अन्यथा जगत् केनापि प्रकारेण नाऽभिव्यक्तं स्यात् । अस्य महत्तत्त्वस्य माहात्म्यत्रयमुक्तम्—जगत्प्रकाशकत्वेन, जगज्जनकत्वेन, अतिसमर्थतमोनाशकत्वेन च । त्रीण्यप्येतानि लक्षणानि कारणगुणत्रयसूचकानि सात्त्विकराजसतामसानि क्रमेणैव ॥२०॥

आधिदैविकं लक्षयति—

**यत्तत्सत्त्वगुणं स्वच्छं शान्तं भगवतः पदम् ।**
**यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम् ॥ २१ ॥**

---

प्रकाशः ।

पूर्व', तस्य कारणतानोपकरूपमुक्तमिदमेव पद्यम् । 'विश्वं येन समन्वितम्' इति ज्ञानोपयोगिलक्षणस्य पूर्वमुक्तत्वेऽपि पुनर्लक्षणकथनेन तदनवबोधमवगत्यात्र समन्वयोपपादनादिति ।

---

१ निरूपयन्, ख ग घ ङ   २ आनन्दांशानां ख   ३ हिरण्मयरूपता ख

– यत्तदिति । तस्याऽऽधिदैविकं रूपम्–वासुदेव इति । वासुदेवाविर्भावस्थानत्वात् । वसुदेवे आविर्भवतीति वासुदेव । विशुद्धं सत्त्व वसुदेव ,तदेवाऽस्याऽऽधिदैविकं रूपम् , यत्सर्वोपास्यत्वेन प्रसिद्धम् । तदेवैतत् । सत्त्व गुणो यस्य । सत्त्वस्यापि सत्त्वम् , तस्य रूपत्रयमाह सच्चिदानन्दत्वाय । तत्र सद्रूपतामाह–स्वच्छमतिनिर्मलम् , शान्त चिद्रूपम् , ज्ञानमेव हि शान्तरूपम् , भगवतः पुरुषोत्तमस्य पदमानन्दरूपम् । एवं सच्चिदानन्दरूप सत्त्वस्य सत्त्वम् । तच्चित्तम् , सर्वेषु प्राणिषु चेतनारूपेण स्थितम् । तस्योपासनार्थं नामान्तरमाह–यदाहुर्वासुदेवाख्यमिति । वासुदेव इत्याख्या यस्य । वासुदेवशरीररूपत्वात् , वासुदेवाधारत्वाद्वा । यस्मादिति विग्रह । आहुरिति प्रमाणम् । ननु चित्तस्य तादृशस्योत्पत्तिर्नोक्तेत्याशङ्कयाऽऽह– तन्महदात्मकमिति । महत्तत्त्वरूपमेव चित्तम् , तेन महदुत्पत्त्यैव तस्योत्पत्तिरुक्तेत्यर्थ ॥२१॥

आधिभौतिक लक्षयति

स्वच्छत्वमविकारित्वं शान्तत्वमिति चेतसः ।
वृत्तिभिर्लक्षणं प्रोक्तं यथाऽपां प्रकृतिः परा ॥ २२ ॥

* स्वच्छत्वमिति । स्वच्छत्वं निर्मलत्वम् , अविकारित्व सर्वविकाराराहित्यम् , शान्तत्वं ज्ञानरूपत्वम् । बुद्धिमनोऽहङ्कारव्युदासार्थं त्रीणि विशेषणानि । बुद्धिर्ज्ञानरूपाऽपि विषयाकारेति न स्वच्छा, चित्त तु निर्विषयं केवलात्मावबोधरूपमिति स्वच्छम् । मनस्तु विकारात्मकं स्पष्टमेव । शान्तत्व नाऽहङ्कारस्य, सात्त्विकाहङ्कारस्य तथात्वेऽपि पदार्थस्यैकत्वात् , शान्तघोरविमूढात् केवलशान्तत्व व्यावर्तत एव । अत एव चेतसो वृत्तिभिर्लक्षण प्रोक्तम् , नैता वृत्तयोऽहङ्कारादेर्भवन्ति । ननु चित्तमपि बुद्ध्यादिभिर्विषयग्रहणे कलुषित जायते,अन्यथा तन्निरोधे यत्नो न कर्तव्य स्यात् । अत आह–यथाऽपामिति । यद्यपि फेनतरङ्गादयोऽप्यपा भवन्ति, तथापि न तासा सहजस्वभावोऽयम् , किन्तु वाय्वादिकृतम् , स्वभावतो निर्मलमेव । अत एव परा प्रकृतिरपा स्वच्छैव । लक्षण त्वकृत्रिमम् , औपाधिकास्तु कृत्रिमा । न हि कदाचिदपि पृथिवी निर्मला भवति, वायुर्वा विकाररहितो भवति,तेजो वा शान्त भवति । अतस्तत्सम्बन्धे अपा तत्तद्भावापत्ति ॥२२॥

\+ अहङ्कारस्योत्पत्तिपूर्वकं पूर्ववल्लक्षणान्याह–महत्तत्त्वादिति चतुर्भि —

महत्तत्त्वाद्विकुर्वाणाद्भगवद्वीर्यसंभवात् ।
क्रियाशक्तिरहंकारस्त्रिविधः समपद्यत ॥ २३ ॥

विकुर्वाणात् कार्योन्मुखात् । कालेन हि गुणक्षोभे विकृत सत् कार्यमुत्पादयति । न केवल विकारमात्रेण, किन्त्वन्तर्भगवच्छक्तिरपि सार्वजनिकाऽपेक्ष्यते । तदाह–भगवद्वीर्यसम्भवादिति । भगवद्वीर्यस्य सम्भवो यस्मिन् । नहि जले मथ्यमाने तत्राऽविद्यमान घृतमुत्पद्यते, किन्तु दुग्धे दधि वा । अनेनैव वैनाशिकप्रक्रिया

प्रकाश ।

– यत्तदित्यत्र । यस्मादिति विग्रह इति । वासुदेव इत्याख्या यस्मादिति विग्रह इत्यर्थ ।

* स्वच्छत्वमित्यत्र । स्वाभाविकस्वच्छत्वाविकारित्वशान्तत्ववृत्तिकत्व चित्तत्वमिति चित्तस्य लक्षण सिध्यति ।

\+ महत्तत्त्वादित्यत्र । पूर्वं महत्तत्त्वस्योत्पत्तिकथन एव भगवद्वीर्यसम्भवत्वस्य ज्ञातत्वेऽपि पुनस्तदनुवादस्य यत्प्रयोजनं तदाह –न केवलमित्यादि । तथा च भगवद्वीर्यस्य तत्र विद्यमानत्वादेव सर्वं सच्चिदानन्दात्मक कार्यं तत उत्पद्यत इत्यर्थ । भगवद्वीर्यसम्भवत्वकथनस्य प्रयोजनान्तरमाह –अनेनेत्यादि ।

१ इति ष घ　　२ रज क ध ८

निराकृता, अन्यथा सर्वस्मादेव सर्वं जायेत । स्वभावस्य नियामकत्वे तु स्वभावस्याऽपि तथात्वे प्रमाणं वक्तव्यम् । अचेतना हि सर्वे नियन्तु शक्या , ईश्वर एव केवलमनियम्यः। शास्त्रत स्वभावस्यान्यथाभावोऽपि नोपपद्येत । पटादौ तन्त्वादिसामग्री, चिन्तामण्यादयश्च कारणत्वेन कल्प्यमाना व्यभिचारिणः स्यु , अतो भगवच्छक्तिरेकैव सर्वभवनरूपा, प्रतिनियता समुदाये, प्रत्येकं वा, यत्रैवावतिष्ठते भगवन्नियमात् , तत एवोत्पद्यत इति युक्त भगवानेव तथाऽऽविर्भवतीति न वैनाशिकगन्धोऽपि। श्रुतिरपि संवादिन्यत्र,

---

## प्रकाशः

कथं निराकृतेत्याकाङ्क्षायां बाधकतर्कोक्तिमुखेन तत्प्रकारमाहु:—अन्यथेत्यादि । अयमर्थः । वैनाशिकप्रक्रिया ह्याकस्मिकप्रक्रियैकदेश । आकस्मिकत्वं तु चतुर्धा विकल्प्योदयनाचार्यैर्दूषितम् । '**हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च । स्वभाववर्णना नैवमवधेर्नियतत्वतः**' इति । अनुपाख्यविधिर्नाम अलीकादेव सर्वं जायत इति विधिः । वैनाशिका बाह्यास्तेषामिय प्रक्रिया, विनाशरूपादभावादसत एव सर्वं जायत इति । दूषणन्तु अभावस्याऽलीकस्य च सर्वत्र सुलभत्वात् सर्वस्मात् सर्वोत्पत्ति । दृश्यते हि तन्तुभ्यः पटस्य, मृदो घटस्य, निम्बबीजान्निम्बस्येति नियतावधिकत्वम् । अतो भगवद्वीर्यसम्भवत्वकथनेन नियतावधिकत्वबोधनात् सा निराकृतेत्यर्थः । नन्वेव वादान्तर निराकृत भवति, न तु स्वभाववादः । अय कान्तसन्निधौ लोहस्य परिभ्रमणे मणिस्वभावस्येव नियामकत्वदर्शनात् । अवधिनियमाभावे तु सर्वमाकर्षयेत् । एवमेकत्र स्वभावस्य विधिनियामकत्वे दृष्टेऽन्यत्रापि तत्तत्स्वभाव एवाऽवधिनियामकोऽस्तु । तथा सति न सर्वस्मात् सर्वोत्पत्तिरिति किमर्थं भगवद्वीर्यस्य तत्र स्थितिकथनमित्याकाङ्क्षायामाहुः—स्वभावस्येत्यादि । यद्यपि प्रदर्शितोदाहरणे प्रत्यक्ष मानम्, तथापि न तेन स्वभावस्यावधिनियामकत्वं सर्वत्र निश्चेतुं शक्यम् । सर्वदा कुसुमरहितत्वेन निश्चितस्वभावेष्वश्वत्थेक्षुकाण्डादिषु देशराजादिभङ्गे कर्बुकदारिद्र्यादौ च ( भावि ) भाविन्यौत्पत्तिककुसुमदर्शनेन व्यभिचारात् । यदि च तत्र जीवादृष्टं वा, कालो वा, अन्यद्वा सहकारित्वेनेष्यते, तदा तु हेतुवादापाताद्भ्रम एव स्वभाववाद इति तस्यावधिनियामकत्वे प्रमाणमन्यद्वक्तव्यम् । तत्र हेतुः—अचेतना हीत्यादि । अचेतनत्वेन नियम्यत्वेन व्याप्तिः स्वभावस्याऽपि नियम्यत्वेन नियामकस्याऽऽवश्यकत्वादिति । किं बहुना, अचेतनमधिष्ठाय चेतना अपि नियम्यता यान्तीति किं वक्तव्यन्तेषु । तदाहु:—ईश्वर एवेत्यादि । तथा चोक्तप्रत्यक्षानुमानाभ्यां न स्वभाववादनिर्वाह इत्यर्थः । नन्वियं व्याप्तिर्न सार्वत्रिकी, हीरके पृथिवीत्वलोहलेख्यत्वयोरिव क्वचिद्व्यभिचारस्य संभाव्यमानत्वादित्यतो दूषणान्तरमाहु —शास्त्रत इत्यादि । वन्ध्यावकेशिप्रभृतिषु पुत्रफलराहित्यं पूर्वं स्वभावतो दृश्यते, ततः पुत्रेष्टिनग्नशान्त्यादिरूपे कर्मणि कृते पुत्रफलानि च दृश्यन्ते । यदि सा व्याप्तिर्न स्याद्यदा शास्त्रत स्वाऽन्यथाभावो युक्तिबाधितः स्यादित्यर्थ । सार्वजनीनत्वाय दूषणान्तरमाहु —पटादावित्यादि । स्पष्टम् । ननु मास्तु स्वभाववाद , तथापि तत्र तत्र तत्तत्प्रागभावस्य सत्त्वात् स एव स्वभावस्याऽवधेश्च नियामको भविष्यतीत्यर्धवैनाशिकमतमेवाऽऽदरणीयमिति चेत्, कारणावस्थातिरिक्तस्य प्रागभावस्य वस्तुमशक्यत्वात् । वस्तुभविष्यत्ताज्ञानेनानुभूयमानस्य तस्य कारणावस्थातोऽतिरेके मानाभावात् । इदं यथा तथा निरूपे न्दुसादिविति नात्र विस्तर. । कारणत्वं च वस्तुनो भगवत एवेति सर्वत्र तच्छक्त्यैव कार्यसिद्धि. । तदेतन्निगमयन्ति—अत इत्यादि । एवमङ्गीकारस्य गुणमाहु —श्रुतिरपीत्यादि । सा हि

अन्यत्र श्रुतिविरोधश्च, तस्माद्युक्तमुक्तम् भगवद्वीर्यसम्भवादिति।ज्ञानप्रधानान्महत्तत्त्वात् क्रियाशक्तिरहङ्कार उत्पन्न । स च त्रिविध । उत्तरत्रैव तथैव समपद्यत । क्रिया हि भेदिका कारणभूतं गुणत्रय कार्ये भिन्नतयैव उत्पादितवती ॥२३॥

आध्यात्मिकस्वरूपमिव तान् भेदान् गणयति—

**वैकारिकस्तैजसश्च तामसश्च यतो भवः ।**
**मनसश्चेन्द्रियाणां च भूतानां महतामपि ॥ २४ ॥**

* वैकारिक इति । वैकारिकः सात्त्विक । तैजसो राजसस्तामसश्च । आध्यात्मिके गुणा एव सधर्मा लक्षणानि । यतस्त्रिविधान्मनस इन्द्रियाणा भूताना च सम्भव । महतामिति तन्मात्राणाम् । महतामपि कार्यजननमपि लक्षणम् । मन प्रभृतिकार्यजनकसत्त्वादिगुणवत्व वा लक्षणमव्यभिचारात् ॥ २४ ॥

आधिदैविक लक्षयति—

**सहस्रशिरसं साक्षाद्यमनन्तं प्रचक्षते ।**
**सङ्कर्षणाख्यं पुरुषं भूतेन्द्रियमनोमयम् ॥ २५ ॥**

* सहस्रशिरसमिति । यथा पूर्वं वासुदेव , तथाऽत्र सङ्कर्षणः । स्वभावतोऽयं तामसः प्रलयकर्ता च। अहङ्कारेणोत्पादितं नाशकमेव । तस्याऽनेककार्योत्पत्तिज्ञापनार्थं देवतायामनन्तानि शिरासि निरूप्यन्ते-सहस्रशिरसमिति । सुखभेदा वा,' सहस्रसमितः स्वर्गो लोकः ' इति श्रुते । अत एवाऽहङ्कारेण कालनिरूपितकर्माणि सफलान्यनन्तानि । अनन्तशब्द काले, सङ्कर्षणे, शेषे च प्रवर्तते। प्रचक्षत इति प्रमाणम् । सात्त्वता यं सङ्कर्षणाख्य प्रचक्षत इति सम्बन्ध । सा काचिदन्या देवता भविष्यतीत्याशङ्कयाऽऽह-पुरुषमिति । पुरुष एव सङ्कर्षण , न मूलभूतः काल । तस्य त्रिविधाहङ्काराधिष्ठातृत्वाय रूपत्रयमाह—भूतेन्द्रियमनोमयमिति । तत्र विद्यमानानि भूतेन्द्रियमनासि कार्ये आविर्भवन्ति । मयट्प्रत्यय प्रत्येकमभिसम्बध्यते । प्राचुर्ये चाऽयम् ॥ २५ ॥

---

प्रकाशः।

श्वेताश्वतरोपनिषदि पठ्यते । ' ब्रह्मवादिनो वदंति, ' किं कारण ब्रह्म, कुत स्म जाता जीवाम, केन क्व च सम्प्रतिष्ठाः । अधिष्ठिता केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम्, इत्यृचा प्रश्नमुक्त्वा व्यवस्थानिर्णय च प्रतिज्ञायाऽग्रे पठ्यते । ' कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् । संयोग एषा नत्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः ' इति । अस्या ऋचि कालस्वभावादृष्टाकस्मिकपरमाणुप्रकृतिपुरुषवादान् चिन्त्यमित्यनेन दूष्यतयोक्त्वा सर्वसंयोगेन कार्योत्पत्तिवादमप्यग्रेऽर्धेन पठ्यते ' ते ध्यानयोगे तु ता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् ' इति । तथा चैतद्विरोधाद्वादान्तराणि नाद्रियन्त इत्यर्थ ।फलितमाहु –तस्मादित्यादि । तथैवेति । त्रिप्रकारक एव । तत्र हेतुमाहुः–क्रियेत्यादि । क्रियेति । उत्पादिका क्रिया ।

* वैकारिक इत्यत्र । सधर्मा इत्यादि । उत्पादकत्वधर्मसहिता । यत इत्यादि । तथा च, कार्यानुगतमेव लक्षणमित्यर्थ ।

* सहस्रेत्यत्र । उत्पादितमिति कालाभिरुद्धरूपम् । तथा तज्जनकत्वमपि तल्लक्षणमप्यत्र सङ्कर्षणपदेन सूच्यत इत्यर्थ । सुखभेदा वेति । तेन तादृशस्वर्गजनकत्वमपि तल्लक्षणमिति सूचितम् ।

---

१ याय क ङ कायम् घ

आधिभौतिकं लक्षयति—

कर्तृत्वं कारणत्वं च कार्यत्वं चेति लक्षणम् ।
शान्तघोरविमूढत्वमिति वा स्यादहङ्कृतेः ॥ २६ ॥

कर्तृत्वमिति । कर्तृत्वं प्राणिषु विद्यमानाहङ्कारस्य सात्त्विकस्य लक्षणम्, कारणत्वं राजसस्य, कार्यत्वं तामसस्य । एतद्धर्मपुरःसरं लक्षणम् । धर्मिपुरःसरमाह—शान्तघोरविमूढत्वमिति । शान्तत्वं सात्त्विकस्य स्वरूपलक्षणम्, अत एवाऽहङ्कारेण शान्तिरप्रयोजिका । घोरत्वं राजसस्य, विमूढत्वं तामसस्य । निरहङ्कारस्य नैते भावा उत्पद्यन्ते । अत एव भगवत्परिचितयविलक्षणो भवति । चेति विकल्पार्थः । अहङ्कृतेरहङ्कारस्य । भौतिकस्य दुर्बलत्वात् स्त्रीत्वम् ॥ २६ ॥

मनस उत्पत्तिमाह—

वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत ।
यत्सङ्कल्पविकल्पाभ्यां वर्तते कामसम्भवः ॥ २७ ॥

× वैकारिकादिति । अर्द्धेनोत्पत्तिराध्यात्मिकलक्षणं चार्द्धेन । चरणत्रयेणाऽऽधिदैविकलक्षणम्, चरणं चाऽन्यत् । वैकारिकात् सात्त्विकात्, विकुर्वाणात् कालकृतगुणक्षोभयुक्तात् । भगवद्वीर्यसम्भवादिति सर्वत्राऽनुसन्धेयम् । सात्त्विकस्य विकारो न भविष्यतीत्याशङ्क्य पुनरुक्तम्—विकुर्वाणादिति । मनसो दुष्टत्वमसमयत्वं वाऽऽशङ्क्य तन्निराकरणार्थं तत्त्वपदप्रयोगः—मनस्तत्त्वमजायतेति । तस्याऽपि आध्यात्मिकस्य कार्यस्वरूपलक्षणे आह—यत्सङ्कल्पविकल्पाभ्यामिति । सङ्कल्पविकल्परूपत्वं स्वरूपलक्षणम्, कामजनकत्वं कार्यलक्षणमिति ॥ २७ ॥

आधिदैविकं लक्षयति—

यद्विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम् ।
शारदेन्दीवरश्यामं संराध्यं योगिभिः शनैः ॥ २८ ॥

यद्विदुरिति । अनिरुद्धः पालकस्तस्य देवः । यतो न केनापि निरुद्धः स एव पालको भवति । यद्यस्मात् हृषीकाणामिन्द्रियाणामधीश्वरमनिरुद्धाख्यं विदुरिति संबन्धः । इन्द्रियनियामकत्वं तस्य लक्षणम् । पालकत्वं प्रभुत्वं च प्रतीकारकरणार्थमाधिदैविकलक्षणम् । तत्र प्रतीकारार्थं भगवदुपासनैव कर्तव्येति—शारदेन्दीवरश्याममित्युक्तम् । इन्दीवरं रात्रिविकासि, शरच्च सर्वदोषविवर्जिता, श्यामश्च गुणः शृङ्गारात्मको भवति । तेन रूपेण सर्वकालेषु सर्वदोषाभावेन भगवत्सेवायां मनोदोषा निवर्तन्त इत्युक्तम् । भौतिकं लक्षयति—योगिभिः शनैः संराध्यं वशीकरणयोग्यं मनः । देवता तु न यत्नैराराध्या, दर्पाऽऽराधनैरन्तर्याणां सर्वत्र भजनहेतुत्वेन निरूपणात् ॥ २८ ॥

बुद्धेरुत्पत्तिमाह—

तैजसात्तु विकुर्वाणाद्बुद्धितत्त्वमभूत् सति ।

---

प्रकाशः

× वैकारिकादित्यत्र । अन्यदिति । भौतिकलक्षणम् ।

## द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहः ॥ २९ ॥

+ तैजसादिति । तु शब्दः सात्त्विकोत्पत्तिपक्षं व्यावर्तयति । विकुर्वाणाद्राजसात् बुद्धितत्त्वमभूत् । सतीति संबोधनं तैजसत्वेऽपि सद्बुद्धिरेवोत्पद्यत इति निरूपणार्थम् । सति विषये वा, सर्वविषयिकैव बुद्धिरुत्पद्यत इति । अत एवाऽस्या आधिदैविकं रूपं न निरूप्यते । आध्यात्मिकं लक्षयति—**द्रव्यस्फुरणविज्ञानमिति** । यथेन्द्रियप्रेरकत्वं मनसः, तथेन्द्रियानुग्राहकत्वं बुद्धेः । बुद्ध्यैवानुगृहीतानीन्द्रियाणि पश्यन्ति कुर्वन्ति च । अत एव बुद्धितारतम्येन इन्द्रियज्ञानक्रिययोस्तारतम्यम् । एतत् कार्यानुसारि लक्षणम् । **द्रव्यस्फुरणविज्ञानमिति** स्वरूपलक्षणम् । द्रव्यस्य घटादेः स्फुरणे सति शब्देन, संस्कारेण, आलोकेन वा यद्विशिष्टज्ञानम् । यस्मात् केवलं चक्षुषा ज्ञाने तारतम्यं न स्यात् । स्वतःस्फुरणं योगजधर्मादिभिरपि भवति, अतो द्रव्यस्फुरण एव विज्ञानं बुद्धेर्लक्षणम् ॥ २९ ॥

आधिभौतिकं विभागनिरूपणेनैव लक्षयति—

## संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च ।
## स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक् ॥ ३० ॥

---

प्रकाशः ।

+ तैजसादित्यत्र । अत एव । सत्संसर्गादेव । तथा च, सत्संसर्ग एव तस्या आधिदैविकं स्वरूपलक्षणमित्यर्थः । पश्यन्तीति । इदं तु ज्ञानसामान्यार्थकम् । अत एवेति । बुद्ध्यधीनत्वादेव । द्रव्यस्येत्यादि । अत्र द्रव्यपदं गुणानामप्युपलक्षकम्, मूतसूक्ष्मत्वेन तेषामपि द्रव्यत्वात्, कार्योत्पत्त्यनन्तरं तन्तूनामवयववत्तेषां गुणत्वस्याप्यविरुद्धत्वाच्च । स्फुरणं च सन्मात्रावगाहि निर्विकल्पकम् । तथा च निर्विकल्पकोत्तरभावित्वे सति शब्दादिजन्यं द्रव्यादिविषयकं विशिष्टज्ञानं बुद्धिरिति स्वरूपं फलति । अत्र पूर्वं शब्दस्योल्लेखात् प्राथमिकमपि यद्विशिष्टज्ञानं तदपि शब्दोपहितस्यैव विषयस्य प्रकाशकमिति ज्ञाप्यते । संस्कारस्य तूद्बुद्धस्य सहकारित्वमालोकस्य त्वावरण(?)जनकत्वेन सहकारित्वमिति च ज्ञाप्यते । न च विशिष्टज्ञानत्वेन विशेषणज्ञानत्वे(न)कार्यकारणभावात् तावतैव तन्निर्वाहे शब्दोपहितभानाङ्गीकारस्य गुरुत्वं शक्यम्, शब्दोपधानमन्तरेणोक्तकार्यकारणस्य तदनिर्वाहकत्वात्, विशेषणनिर्विकल्पकोत्तरमपि जायमाने(नम ?)विशिष्टज्ञाने शब्दविशिष्टस्यैव विषयस्य स्फूर्तेरनुभवसाक्षिकत्वात्, तदस्फूर्तौ निर्विकल्पकादविशेषात् । किञ्च, विशिष्टज्ञानविशेषणयोर्यः कार्यकारणभावः सः 'अयं घट इति विशिष्टज्ञानं विशेषणज्ञानपूर्वकम्, विशिष्टज्ञानत्वात्, दण्डी पुरुष इति ज्ञानवत्' इति प्रयोगेणानुमेयः । तत्र साध्यतावच्छेदककोटौ प्रविष्टस्य विशेषणस्य यदि घटत्वादिना प्रतिनियतरूपेण प्रवेशस्तदा हेतोर्व्याप्यत्वासिद्धिः । यदि च हेतुतावच्छेदकसाध्यतावच्छेदकयोरुभयोरपि तथा प्रवेशस्तदा हेतोरसाधारणत्वम् । यदि च सामान्यरूपेणैव प्रवेशस्तदा निर्वचनमन्तरेण ज्ञानविषयत्वस्यैवाशक्यवचनत्वमिति सर्वथा निर्वाहाभावः । निर्वचने तु शब्दस्यैवाऽऽश्रय इति सविकल्पज्ञानत्वावच्छिन्नं प्रति शब्दस्य सहकारित्वमेव श्लाघीय इति दिक् । अत्र संस्कारोक्तिर्मतान्तरत्वेन वा, ज्ञानसूक्ष्मावस्थारूपं संस्कारमादाय वा, ज्ञेया । निर्विकल्पके योगिप्रत्यक्षेऽत्रातिव्याप्तिवारणाय पदानां कृत्यमाहुः—यस्मादित्यादि ।

१ अवयववत्वान्

* संशय इति । द्रव्यस्फुरणतारतम्यात् बुद्धिर्नानाविधा । संस्कारतेजसोस्तुल्यप्रकाशकत्वे विशेषास्फूर्तौ समः संशयः, अल्पविशेषस्फूर्तौ उत्कटकोटिकः । विपर्यासः, संस्कारप्राबल्यात्तेजस्तदनुगुणमेव धर्मं प्रकाशयति । अर्थेऽ्येकस्फुरणनियामकत्वाय । विपर्यासो भिन्नार्थप्रतिपादकः । क्रियाज्ञानयोश्च भिन्नविषयत्वम् । अनेनाऽन्यख्यातिरेव सिद्धान्त इत्युक्तम् । अन्यथात्वे यथार्थत्वं स्यात् । रजतमहं जानामीत्येवानु-

---

## प्रकाशः।

* संशय इत्यत्र । एकस्या एव बुद्धेः कथं नानावृत्तिकत्वमित्यपेक्षायामाहुः—द्रव्येत्यादि । तारतम्यहेतून् स्फुटीकुर्वन्त एव संशयं लक्षयन्ति—संस्कारतेजसोरित्यादि । उपलक्षणमेतत् । तेन विरुद्धयोः संस्कारयोस्तेजसोः शब्दयोरित्यादि बोध्यम् । अतो मानसोऽपि संशयः संगच्छते । सम इति अनेकविषयपक्षपाती । समूहालम्बनवारणाविशेषास्फूर्ताविति भ्रमवारणाय सम इति । अयं च द्विविधः । साधारणधर्मजन्मा, विप्रतिपत्तिजन्मा चेति । तत्राद्यः स्थाणुर्वा पुरुषो वा, स्थाणुर्न वेत्यादिरूपः । द्वितीयस्तु जगत् सदसद्वेत्यादिरूपः । नैयायिकास्तु ' असाधारणधर्मदर्शनजन्मा तृतीयः, गंधवती भूर्नित्या अनित्या वेत्याकारकः ' इत्याहुः । तन्न । असाधारणधर्मस्य संशयाजनकत्वात् । पृथिव्यानित्यतायाः प्रत्यक्षादिसिद्धतया पृथिवीत्यादिहेतुकानुमानेन परमाणुष्वप्यनित्यतायाः शक्यसाधनत्वात् । अतः पुराणादिषु भूतानामनित्यतास्मरणात्, कणादादिदर्शनेषु परमाणुनित्यतास्मरणाच्च शास्त्रीयविप्रतिपत्त्यैवाऽयं संशयः । परमाणुरूपा भूर्नित्या न वेति द्वितीय एवास्यापि प्रवेशादिति प्रकृतमनुसरामः । उत्कटकोटिकेऽल्पविशेषस्फूर्तावपि विषयान्तरपक्षपातस्य सत्त्वेन समत्वस्यानपायान्नाऽव्याप्तिरिति बोध्यम् । अर्थेत्यादि । संशयातिरिक्ते वृत्तिचतुष्टयेऽप्येकस्यैव स्फुरणम् , न तु कोटिद्वयस्येति नियमाय भिन्नः प्रक्रम इत्यर्थः । विपर्यासं लक्षयन्ति—विपर्यास इत्यादि । भिन्नपदस्य सापेक्षवृत्तिकत्वाद्भेदप्रतियोगिनं स्फुटीकुर्वन्ति—क्रियेत्यादि । तथा चेन्द्रियसम्प्रयोगजनकक्रियाविषयाद्भिन्नो योऽर्थः, तदेकविषयकमतिपत्तिरूपो यो वृत्तिविशेषः, स विपर्यास इत्यर्थः । न च स्वापेऽतिव्याप्तिः शङ्क्या, तत्र क्रियाया अप्यभिमानमात्रत्वेन सम्प्रयोगस्याभावादित्यादि । अत्र ख्यातिं निर्धारयन्ति—अनेनेत्यादि । विपर्यासस्य बुद्धिवृत्तिविशेषत्वकथनेन तथेत्यर्थः । ननु चाकचक्याद्युद्बुद्धसंस्कारसहकृतेन दोषोपहतेन्द्रियेण सम्प्रयुक्ता शुक्तिरेव रजतात्मना गृह्यत इति सम्प्रयुक्तस्याऽन्यथाभानादन्यथाख्यातिरेव नैयायिकोक्ता कुतो नाङ्गीक्रियत इत्याकाङ्क्षायामाहुः—अन्यथात्व इत्यादि । अत्रेदं विचार्यम् । कस्याऽन्यथात्वम्, विशिष्टस्य वा, विशेषणस्य वा, विशेष्यस्य वा । तथा किञ्चान्यथात्वम् ? परिणामो वा, तादात्म्यं वा, ज्ञानस्वरूपस्यैवान्यथात्वं वेति । तत्राऽऽद्ये दुग्धस्य दधिरूपेण(?)व संयुक्तस्य शुक्त्यादे रजताकारेण परिणामरूपे लोहादीनां स्पर्शमणिस्पर्शेन सुवर्णात्मकत्वाचादात्म्यरूपेऽन्यथात्वे दधिवत्, सुवर्णवद्वा यथार्थत्वं स्यात् । अर्थानतिक्रमाच्छुक्ती रजतमेव स्यात् । तज्ज्ञानस्वरूपस्य वा यथार्थत्वं स्यात् । तथा सति भ्रम एवोच्छिद्येतेत्यर्थ । एवं विशेषणस्याऽन्यथात्वपक्षेऽपि परिणामरूपत्वे शुक्तित्वस्य द्रव्यत्वापत्तिर्जातित्वहानिश्चेत्यधिकं दूषणद्वयम् । तादात्म्यपक्षे तादात्म्यकारणानिर्वाच्यता चाऽधिका । एवं विशेष्यस्याऽन्यथात्वपक्षेऽपि दग्धपटन्यायेन यथार्थत्वापत्तिरेव दूषणम् । एवं षट्स्वपि पक्षेष्विदं दूषणमनुस्यूतं ज्ञेयम् । अथान्यत्र सतोऽन्त्रालब्धसत्ताकत्वेऽपि प्रकारीभावोऽन्यथात्वमित्युच्यते । तथा सति तेन शुक्तित्वादितिरस्कारासम्भवः,[1] व्यधिकरणत्वादतिप्र-

---

[1] अर्थेत्यनेन ङ. अथानेर घ.

मवः, न तु रजतत्वेन जानामीति । बुद्धेस्तत्स्वरूपत्वान्नाऽऽत्मख्यातिः । संस्कारशब्दयोः पदार्थ-

प्रकाशः।

सङ्गाच । अथ स्मृत्युपनयोत्तरं लब्धसत्ताकत्वे सतीति विशेषणान्न दोष इति चेत्, तर्हि पुरुषभेदेन तत्र युगपद् भ्रमप्रमानुपपत्तिः, अन्यतरेणान्यतरतिरस्कारात् । अतिरस्कारे तूभयोरुभयशबलज्ञानापत्तिः, दण्डकुण्डलवानितिवत् । अथेदं रजतमित्यत्र रजताभिन्नः पुरोवर्तीति प्रतीत्या रजतभेदाभाव एव प्रकारीभूय भासते । स च व्यापक इति न कोऽपि दोष इति यदि विभाव्यते, तदापि रजतभेदाभावस्याऽभावप्रतियोगिकाभावतयाऽभावप्रतियोग्यात्मकत्वेन, प्रतियोगिमात्रनिष्ठत्वेन वाऽन्यत्र प्रकारीभवितुमनर्हत्वात् तादृशाभावस्य व्यापकत्वे मानाभावादिति । प्रतियोगिनो रजतभेदस्य व्यापकत्वे तदभावस्यैवाऽसम्भवात् । अव्यापकत्वेऽपि प्रतियोगिमात्रव्यावृत्तत्वेन तदितरत्वसत्त्वात् प्रतियोग्यभावयोः सहानवस्थानविरोधस्य दुर्वारत्वात् । महिलतया सहस्थितिकल्पनपक्षेऽपि तत्र तस्य सत्तालाभकल्पनं तेन च रजतभेदाभिभवकल्पनम् । कालान्तरे च (भेदा(दे)नाभेदाभिभवादिकल्पनं) भेदा(दे)नाभेदादिकल्पनमिति कल्पनाचतुष्टयगौरवस्य दुष्परिहारत्वात् प्रमाणविरहाच्च नेदमतिरम्यम् । ननु मास्तु विषयस्याऽन्यथात्वम्, तथापि रजताकारग्रस्तं ज्ञानं शुक्तिमालम्बत इत्याकारके ज्ञानस्याऽन्यथात्वपक्षे किं बाधकमितिचेत् । तत्राहुः—रजतमित्यादि । तथा सति शुक्त्या स्वाकारसमर्पणे एवमनुव्यवसायो न स्यात् । असमर्पणे तु शुक्त्यालम्बन एव प्रमाणविरहो विरुद्धानुव्यवसायादित्यर्थः । अथ रजतज्ञानं स्वप्रयुक्तव्यवहारविषयां शुक्तिं करोतीति इदमेवाऽऽलम्बकत्वमिति चेत्, न । यत्र रजतज्ञानोत्तरं सद्य एव बाधः, विषयान्तरज्ञानं वा, तदा शुक्तेस्तत्प्रयुक्तव्यवहाराविषयत्वाज्ज्ञानस्य तदनालम्बकत्वे रजताकारग्रस्तस्याऽपि तस्य प्रमात्वापत्तेः । न चेष्टापत्तिः । संघातात्मज्ञानस्याऽपि प्रमात्वापत्तेः । आत्मनः संघातात्मज्ञानप्रयुक्तव्यवहाराविषयत्वात् संघातात्मज्ञानस्य तदनालम्बकत्वेन संघातात्माकारग्रस्ततानपायात् । न चेदानींतस्याऽप्यस्तु प्रामाण्यमिति वाच्यम् । तथा सति समर्थप्रवृत्तेः पूर्वं सर्वत्रैवाप्रामाण्याग्रहेणोक्ततुल्यत्वाद्भ्रमोच्छेदापत्तेः । यदपि सौरालोकतदभावाभ्यां कमलविकासमुकुलीभावाविव दोषतदभावाभ्यां रजतशुक्तिभावौ समर्थितौ, तदपि मतं प्रतिनियतसमकालिकविरुद्धप्रतीत्योर्दर्शनादेव ग्रन्थान्तरे परास्तमित्यन्यथाख्यातिवाद एवाऽसाधुरिति दिक् । ननु ख्यायमानस्य बुद्धिवृत्तिरूपत्वाङ्गीकारे आत्मख्यातिवादापत्तिरित्यत आहुः—बुद्धेरित्यादि । विज्ञानवादी हि बाह्यार्थममन्वानो बुद्धिरूपमात्मानं च मन्वानो जायमानबुद्धिरूपमप्यात्मानमेव मन्यते । तत्र बुद्धेरात्मरूपत्वे घटोऽहमित्यादिप्रत्ययापात इत्यादिरूपमन्यत्र बहुधा दूषणम्, तदत्र न प्रपञ्च्यते, किन्तु तत्स्वरूपत्वेनोच्यते । तथा सति तत्र ख्यायमानस्य रजतस्य बुद्धिरूपत्वेऽप्यात्मरूपत्वाभावान्नाऽऽत्मख्यातिवादापत्तिरित्यर्थः । ननु रजतस्य बुद्धिरूपत्वाङ्गीकारे तस्याः बुद्धेः पूर्वमुत्पत्तिः स्थितिश्चावश्यं वाच्या । तत्र पूर्वोत्पन्नायां रजतप्रमारूपायां बुद्धौ विषयीभूतस्य देशकालादिविशिष्टस्य रजतस्य भानादधुनाऽपि देशकालादिविशिष्टमेव तद्भासेत, न तु केवलम् । तस्याविषयत्वे नियामकाभावादित्याशङ्कायां वादिप्रतिवादिनोरत्र समानः समाधिरिति बोधयन्तः समादधते—संस्कारेत्यादि । अयमर्थः । स्मृत्युपनीतं रजतत्वं तत्र भासत इति वदता त्वयाऽपि स्मृतेः पूर्वं देशकालादिविशिष्टस्यैव रजतस्याऽनुभवोऽभ्युपेयः, तथा सति तव मतेऽपि तावच्चाद्विशिष्टस्यैव स्मृत्यायापत्तौ तत्परिहाराय भवताऽपि तादृश्यादु(?) द्बुद्धः संस्कारो यत्पदार्थविषयक उत्पन्नस्तत्पदार्थविषयकामेव स्मृतिं जनयति, न तु देशकालादिवैशिष्ट्यमपेक्षत इत्येव वाच्यम् । तथा सति 'यत्रोभयोः समो दोषः परिहारोऽपि वा समः । नैकः पर्यनुयोज्यः ।

१ स्मृतोपनयोत्तरम् । २ केचित ।

मात्रापेक्षितत्वान्न देशकालादिवैशिष्ट्यं नियामकम् । रजतमनुभवामीत्यनुव्यवसायात् न प्रमुष्टतत्ता-रूपा स्मृतिः । एकज्ञानतुल्यत्वाच्च न ज्ञानद्वयम् । संस्कारप्राबल्यात्राऽनिर्वचनीयरजतापेक्षा ।

प्रकाशः ।

तादृगर्थविचारणे 'इत्यभियुक्तोक्तेः परिहारसाम्यान्न वयं पर्यनुयोज्या इत्यर्थः । अत्र शब्दग्रहणं श्रुतपदार्थ-प्रत्यभिज्ञावच्छ्रुतपदार्थविषयकभ्रमस्याऽपि सङ्ग्रहार्थं ज्ञातव्यम् । ननु मास्तु नैयायिकप्रतिपन्ना अन्यथा-ख्यातिः; तथापि रजतादिज्ञानस्य प्रकृते संस्कारेणैव संभवात् तं विना भ्रमाभावाच्च तज्ज्ञानं स्मृतिरूपमेव मन्तव्यम् । स्मृत्यनुभवभेदेन ज्ञानस्य द्वैराश्यात् । न च तत्ताया अपि स्फुरणापत्तिः । स्मृतित्वेऽपि कर्तृगतदोषेण तत्प्रमोषात् । दोषाऽभावे तु रजतसादृश्यस्यैव स्फूर्तिः, शुक्तिस्फूर्तिरेव वा स्यात् । दोषाश्च क्वचिद्रागादयः, क्वचित् प्रबलालोकादिना विवेकासामर्थ्यम्, क्वचिदन्यचित्ततेत्येवमादयः, ननु (तु) गतास्तथा तथा दर्शनादुन्नेयाः । अतो भाट्टप्रतिपन्नप्रमुष्टतत्ताकस्मृतिरूपेणाख्यातिवादेन निर्वाहेऽन्यख्यात्यङ्गीकरणं नोचितमित्यत आहुः—रजतमित्यादि । तथा चानुव्यवसायविरोधात् तन्मतमप्यसङ्गतमित्यर्थः । ननु मास्तु भाट्टमतम्, तथापि ग्रहणस्मरणात्मकं ज्ञानद्वयं तत्र प्राभाकरप्रतिपन्नमङ्गीकार्यम्, स्मृतिप्रमाण-भेदेन ज्ञानस्य द्वैराश्यात् । न चानुव्यवसायद्वयापत्तिः, स्मरणाभिमानस्य प्रमुषितत्वेन तदभावात् । अतः, अगृहीतासंसर्गकज्ञानद्वयाङ्गीकारे न कोऽपि दोष इति चेत्, तत्राहुः—एकेत्यादि । तथा च यद्यगृहीता-संसर्गकं ज्ञानद्वयं तत्र स्यात्, एकज्ञानतुल्यता न स्यात् । यदि सा न स्यात् तदा व्यवसायानुव्यवसाययोर्नो-पलभ्येतेति तर्केण तन्मूलभूतव्यवसायानुव्यवसायाभ्यां चैकज्ञानतुल्यतानिश्चयान्न ज्ञानपक्षोऽपि युक्त इत्यर्थः । किञ्च, ज्ञानद्वैराश्याग्रहेणाऽत्र ज्ञानद्वयाङ्गीकारे सर्वत्र विशिष्टज्ञानस्यैवोच्छेदापत्तिः । घटोऽयमित्यादिप्रमाया-मपि गृहीतसंसर्गकज्ञानद्वयाङ्गीकारे बाधकाभावात्, द्वैराश्ये मूलस्य चिन्त्यत्वाच्च । ननु मास्त्वख्यातिः । अनिर्वचनीयख्यातिरेवाङ्गीकार्या । अन्यथा रजतभानाभावापत्तिः । न च रजतारम्भकावयवानां शुक्त्यभा-वेनाऽऽरम्भानुपपत्त्या अनिर्वाच्यमपि रजतं कथं स्वीकर्तुं शक्यमिति वाच्यम् । विषयचैतन्यनिष्ठाविद्ययैव त-दारम्भोपपत्तेः । तथाहि प्रथमं तावद्दोषसहितेनेन्द्रियेण पुरोवर्तिद्रव्यसंयोगादिदमाकारा चाकचक्याकारा चान्तःकरणवृत्तिरुत्पाद्यते । तस्यां च वृत्ताविदम(व)च्छिन्नं चैतन्यं प्रतिबिम्बते । तच्चैतन्यं च सुषिरद्वार-निर्गतकुल्याप्रवाहम(?)वत्केदारस्थवृत्तचतुष्कोणाद्याकारकभूभागभरितमहासारसलिलवज्जाता या चक्षुर्द्वार-निर्गतावयवसंयुक्तघटाद्याकारकतैजसान्तःकरणवृत्तिस्तस्यामुक्तरीत्या निर्गमनेन प्रमातृवृत्तिविषयचैतन्याभिन्नं भवति । तच्च साविद्यमिति विषयचैतन्यनिष्ठा या अविद्या सा कारणदोषेण सादृश्योद्बोधितसंस्का-रेण च सहकृता रजताकारेण तद्ग्राहकवृत्त्याकारेण चेति द्वेधा विवर्तते, परिणमति वा । एवमारब्धं तथाविधकं रजतमविद्याधिष्ठाने विषयावच्छिन्नचैतन्ये वर्तते, सर्वस्याऽपि कार्यस्य स्वोपादानाविद्याधिष्ठा-नाश्रितत्वानियमात् । एवं विषयचैतन्येऽध्यस्तमपि रजतं चैतन्यैक्यात् साक्षिण्यध्यस्तमिति तदेकमाश्रमि-त्येवं मिथ्याज्ञानोपपत्तौ कृतमन्यख्यात्येत्याशङ्कायामाहुः—संस्कारेत्यादि । तथा च संस्कारेण स्मृतिवत् संस्कारप्राबल्येन भ्रमस्याप्युपपत्तावर्थाध्यासस्याप्रयोजकत्वाद्गुरुत्वाच्चाऽनिर्वचनीयरजताङ्गीकारो व्यर्थ एवे-त्यर्थः । न च संस्कारस्य बहिःपदार्थोपस्थापकत्वमप्रयोजकमिति शङ्क्यम् । स्वप्ने त्वयाऽपि तन्मात्रे-णैव(?)प्रमपदार्थोपस्थित्यङ्गीकारात् । न च तत्स्मरणमेवेति वाच्यम्, तथानुव्यवसायाभावात्, श्रुतिविरोधा-च्च । न च दोषं विनैकेनैव संस्कारेण कथं स्मृतिभ्रमयोरुपपत्तिरिति शङ्क्यम् । उष्णस्पर्शाप्राबल्यप्राबल्याभ्यां शीतनिवृत्तिवद्दाहयोरिव संस्काराप्राबल्यप्राबल्याभ्यां स्मृतिभ्रमयोरपि सुखेनोपपत्तेः । अत एव नैयायिकाना-

अत एव नासत्ख्यातिः । तस्मादन्यख्यातिरेव सर्वजनीना । निश्चयो यथार्थोऽनुभवः । अर्थो हि ज्ञानस्याऽङ्गमङ्गम्, अत एव स्मृतिर्न निश्चयात्मिका, अर्थाभावात् । अनुमितिरपि संबन्धिव्यवधानेनाऽर्थजनितैव ।

---

**प्रकाशः**

मेकेनै(व?)स्नेहेन प्रकर्षापकर्षवैशिष्ट्यात् वह्निनाशोद्दीपनयोरङ्गीकारोऽपि युज्यते । न चैवं दोषानभ्युपगमे पीतभ्रमजनकसंस्कारोद्बोधकस्य शङ्खेऽभावात्पीतः शङ्ख इति भानानुपपत्तिरिति वाच्यम्, बहिःकरणे कामलवदन्तःकरणे संस्कारप्राबल्यस्यैव तत्त्वात् । एतादृशभ्रमेषु बहिःकरणदोषाङ्गीकारस्तु घटपटादिप्रमोत्पत्त्या प्रत्यक्षविरुद्धत्वाद्गुरुत्वाच्च जघन्य एव । निर्गमेन चैतन्यतया भेदाङ्गीकारोऽपि व्यापकजीववादमणुजीववादं च विरुद्धाद्धीति नेतरविद्वद्दाभाजनं भवतीति दिक् । प्राबल्यपदेन चाऽनुभवसामग्र्या अत्र न प्रतिबन्धकत्वमित्यपि ज्ञापितम् । संस्कारसापेक्षत्वादेवासत्ख्यातिरप्यपास्तेत्याशयेनाहुः–अत एवेत्यादि । फलितं वदन्तो लोकप्रतीतिमपि तत्र प्रमाणयन्ति–तस्मादित्यादि । सर्वजनीनेतिहेतुगर्भं विशेषणम् । तथा च, तस्मात् ख्यात्यन्तराणामनुपपन्नत्वादन्यख्यातेश्च सर्वजनीनत्वादियमेव मन्तव्येत्यर्थः । सर्वजनीनत्वं च 'किमिति शुक्तिमग्रहीः' इति प्रश्ने मया शुक्तिर्न ज्ञाताऽन्यदेव तामित्यापामरपण्डितमुत्तरणाद्विशेषोल्लेखेऽप्यन्यत्वानपायाच्चावसेयम् ।

निश्चयं लक्षयन्ति–यथार्थोऽनुभव इति । याथार्थ्यमर्थानतिलङ्घित्वम् । तेन संशयविपर्यासस्मृतिस्वापानां निरासः । अनुभवपदं च ज्ञानार्थकम्, तेन घटादेराप्तवाक्यस्य च निरासः । ननु स्मृतेरपि यथार्थज्ञानरूपत्वादतिव्याप्तिस्तदवस्थैवेत्यत आहुः–अर्थो हीत्यादि । जन्यज्ञानस्यार्थसापेक्षत्वादर्थो ज्ञानस्याङ्गमङ्गम् । अत एव, अङ्गहीनत्वादेव । तथा च, यथा सर्वाकारेण विद्यमानोऽपि देहः क्रियां कुर्वन्नपि शिरोभावात् कबन्ध एव, तथा स्मृतिर्ज्ञानरूपाऽपि प्रवृत्त्यादिकार्यं जनयन्त्यप्यर्थाभावान्न निश्चयरूपेति यथार्थपदादेवाऽ(ति)व्याप्तिपरिहार इत्यर्थः । यद्यपि स्मृतिभिन्नज्ञानत्वस्याऽनुभवत्वस्वीकारेऽपि स्मृतिवारणं सम्भवति, तथापि स्मृतिनिश्चयजन्यक्रियाफलयोस्तारतम्यबोधनायैवं वारणं कृतमिति हृदयं ज्ञेयम् । ननु वह्न्यादिरूपस्याऽर्थस्य पुरोवर्तित्वाभावादङ्गविकलत्वमाऽनुमिताविदं लक्षणं न व्याप्नोतीत्यत आहुः–अनुमितिरित्यादि । सम्बन्धिधर्मो धूमादिरूपः, स एव व्यवधानं द्वारम्, तेन कृत्वार्थजनितैव । यतो धूमादिः स्वमूलावच्छिन्न एव वह्न्यादिरूपमर्थं गमयति, न तु विच्छिन्नः । मूलं च तस्य धूमवत् काष्ठादि, तत्र, बहिःसन्निहितोऽपि धूमकाष्ठादिव्यवहितत्वान्न प्रत्यक्षजनकः, किन्तु, धूमादिव्यवहितोऽपि तद्द्वारा स एवानुमितिं जनयतीति निश्चयरूपानुमिति(ते)रप्यर्थजनितत्वान्नाव्याप्तिरित्यर्थः । यत्र चेल्लोकालिङ्गवह्न्यनुमितिस्तत्र लोक एवाविच्छिन्नो द्वारम्, यथोद्वाहुचलदङ्गुलिः पुरुषानुमितौ । यत्र चातीतो धूमः पुरुषेण(न दृष्ट)दृष्टस्तत्र तु न तेन तस्यानुमितिः । यत्र च पूर्वं दृष्टस्ततो धूमो नष्टः, तदनन्तरं च वह्न्याकाङ्क्षातानुमित्सा, तत्रापि ध्वंसाधिकरणदर्शनाभावे नानुमितिः । वह्न्यर्थप्रवृत्तिस्तु संदेहादेवादानसंदेहे धनार्थियाचकप्रवृत्तिवत् । संदेहश्च व्याप्तिस्मरणादपि । धूमध्वंसाधिकरणदर्शने तु वह्निसाक्षात्कारो वा पूर्ववत्संदेहो वा विलक्षणोच्छूनभस्मादिना वाऽनुमितिः, न तु धूमध्वंसेन, तस्य ज्ञातुमशक्यत्वात् । शक्यत्वेऽपि ध्वंसे व्यञ्जकस्यैवानुमापकत्वमुचितम्, आवश्यकत्वाल्लाघवाच्च; न तु धूमध्वंसस्य, उक्तवैपरीत्यात् । अनागतधूमेऽपि प्रागभावव्यञ्जकस्यैवाऽनुमापकत्वम्, उक्तयुक्तेः । तत्तद्व्यञ्जकयोश्च वह्न्यसम्बन्धित्वात् तत्रापि नार्थजनितत्वहानिः । ध्वंसाधिक-

---

१ व्यवधानार्थं क. ख. व्यवधानार्थम् ट.

साद‍ृश्यं रूपादिवत् पदार्थो धर्मरूपः, निरूपकभेदसहिष्णुस्तद्धर्मः, तद्धर्मसजातीयो वा । स लक्षणत्वेन ज्ञातो द्रव्यस्फुरणेन स्फुरितः संस्कारेण शब्दाभिव्यक्तौ वाक्यप्रामाण्यादध्यवसीयते गवयोऽयमिति । चक्षुः सहकारि वाक्यम्, वाक्यसहकृतं साद‍ृश्यं वा । अनुग्राहकाणां न प्रमाणान्तरत्वम्, शब्दोऽपि निश्चय एव, धर्मसाद‍ृश्याति-

---

प्रकाशः।

रणं चाऽत्र न योग्यावयवाः, धूमात्मकत्वात् । नाप्ययोग्याः, अनुपयोगात्, किन्तु दरदग्धेन्धनादिरेवेति, स एव व्यञ्जक इति दिक् । यत्र च धूलिपटले धूमभ्रमस्तेन या वह्न्यनुमितिः, सा [illegible] भ्रमत्वात् लक्ष्यबहिर्भूतैवेति न तत्राव्याप्तिदोषाय। कादाचित्का वह्निप्राप्तिस्तु न तस्य प्रमात्वनिर्वाहायाऽलम्, काकतालीयत्वात् । एवं च पक्षधर्मतया परामृष्य(श्य)माणलिङ्गस्यैव व्याप्तिज्ञानाहितसंस्कारोद्बोधकत्वादिन्द्रियानुग्राहकत्वम्, न तु लिङ्गपरामर्ष(र्श)स्येत्याद्यपि ज्ञेयम् । ननु केवलेन्द्रियाजन्याया उपमितेः कथं निश्चयत्वमित्यतः प्रसङ्गादुपमितिं सपरिकरां विचारयन्तः साद‍ृश्यस्याऽनुग्राहकत्वात् प्रथमतस्तल्लक्षयन्ति—साद‍ृश्यमित्यादि ।अत्र निरूपकभेदसहिष्णू रूपादिवन्निरूप्यधर्मरूपः पदार्थः साद‍ृश्यमित्यादिपदार्थान्तरत्वाभ्युपगमे लक्षणम् । तदनभ्युपगमे [illegible] निरूपकधर्मसजातीयो निरूप्यधर्मः साद‍ृश्यमिति द्वितीयं लक्षणम् ।साजात्यकथनेनैव निरूप्यभेदसिद्धौ न विशेषणान्तराकाङ्क्षा । एकेनापि सद‍ृशबुद्धिसिद्धेर्भूयः पदमप्यनतिप्रयोजनम् । न च श्यामत्वमात्रसाधर्म्येण मातङ्गमशकयोरपि साद‍ृश्य(त्व?)प्रतीत्यापत्तिरिति वाच्यम् ।श्यामत्वशरीरित्वजङ्गमत्वादीनां मातङ्गगतधर्माणां मशके विद्यमानत्वेन भूयः पदादानेऽपि तुल्यत्वात् । न च ते तद्गतधर्मा नेति न दोष इति समञ्जसम् । तत्समवेतानामन्यत्रासंभवेन तद्गतपदस्य साजात्यपरताया एवौचित्यात् । भूयस्त्वस्यापर्यवसाने त्वनवस्थापत्तिरनिवार्यैव । न चोक्तदूषणानुद्धारः शङ्क्यः, विरोधिधर्मग्रहप्राबल्येनैवोद्धारसम्भवात् । अत एव सद‍ृशयोर्यमलयोर्गुल्मयोर्वा पूर्वं साद‍ृश्यप्रत्य(?)द‍ृष्टे त्वतूवरत्वकुसुमवर्णादौ वैसाद‍ृश्यनिश्चय इति युज्यते । अतो नैयायिकलक्षणं नातिरम्यम् । 'सर्वं गङ्गासमं तोयं सर्वे व्याससमा द्विजाः' इत्यादौ तोयत्वादिनैकेनाऽपि धर्मेण साम्याभिलापाच्च, घनश्यामस्वर्णगौर्यादिप्रयोगदर्शनाच्चोक्तमेव लक्षणं युक्तमिति दिक् । साद‍ृश्यं लक्षयित्वोपमित्युत्पत्तिप्रकारमाहुः—स इत्यादि । स उक्तविधो धर्मो लक्षणत्वेन ज्ञातः, द‍ृष्टगवयपुरुषस्य गोसद‍ृशो गवय इति वाक्यादवगतः, द्रव्यस्य गवयस्य स्फुरणेन चाक्षुषेण स्फुरितश्चक्षुषाऽवगतः संस्कारेण शब्दाभिव्यक्तौ उक्तविधवाक्यस्मृतिगोचरतयाभिव्यक्तौ वाक्यप्रामाण्यात्, द‍ृष्टसंवादनिश्चितात् प्रामाण्यादध्यवसीयते; गवयोऽयमिति संज्ञासंज्ञिपरिच्छेदः[1] क्रियत इत्यर्थः। अयमिति जात्यभिप्रायेणोक्तम् । ननूपमितौ साद‍ृश्यवाक्यचक्षुषां कारणत्वेन प्रतीयमानत्वात् कस्य प्रमाणत्वमित्यपेक्षायामाहुः—चक्षुरित्यादि । तथा चेन्द्रियस्यैव प्रमाणत्वमित्यर्थः । नन्वतिदेशवाक्यार्थज्ञानस्यैव प्रमाणत्वं कुतो न स्वीक्रियत इत्याकाङ्क्षायां प्रतिबन्दीमिवाहुः—अनुग्राहकाणामित्यादि । अनुपलब्धाविवाऽत्रापि सहकारित्वेनैव निर्वाहे तेषां प्रमाणान्तरत्वकल्पनाया अन्याय्यत्वादित्यर्थः । एवं साद‍ृश्यद्वारेणोपमितेरप्यर्थजनितत्वान्नार्थातिलङ्घित्वमिति हृदयम् । ननु भव(त्वेवं)त्वभैपम्, तथापि शाब्दस्य कथं निश्चयरूपत्वं साधनीयम्, संबन्धिनस्तत्र कस्याप्यभावेन व्यवहितस्याऽप्यर्थसम्बन्धस्य तत्राऽशक्यवचनत्वात्, साक्षादर्थस्य च तत्राभावादित्याकाङ्क्षायां तस्य तथात्वं साधयन्ति—शब्दोऽपीत्यादि । तत्र हेतुः—धर्मेत्यादि । शब्दस्येति शेषः । तथा च, धर्मो धूमादिः सम्बन्धी, साद‍ृश्यं पूर्वोक्तलक्षणको धर्मविशेषः, तदुभयातिरिक्तो यः संस्कारः,

---

१ ज्ञायते क. ख ङ.

रिकसंस्कारजनकत्वात् । शब्देन च द्रव्यस्फुरणात् चक्षुषोऽपेक्षाभावात् प्रमाणान्तरम् । त्रीण्येव प्रमाणानि—

प्रकाशः।

शब्दस्य तज्जनकत्वात् । अयमर्थः । शब्दार्थयोर्नित्यसम्बन्धस्य पूर्वतन्त्रसिद्धत्वादर्थस्य सहजसम्बन्धी यः, तद्वाचकः शब्दस्तेन शक्तिग्रहोत्तरं श्रवणे तदर्थविषयकः कश्चित्संस्कारः पदवाक्यार्थबोधानुकूलो जन्यते । तथा च, यथानुमितिर्व्याप्यधर्मद्वारा परम्परयार्थजनितत्वादर्थानतिलङ्घित्वेन निश्चयरूपा। यथा चोपमितिर्वाक्यावगतसादृश्यद्वारार्थजनितत्वादर्थानतिलङ्घित्वेन निश्चयरूपा तथा शब्दोऽपि श्रोतृगृहीतेन शब्देन पदार्थोपस्थापनसहजसम्बन्धिनः शब्दस्यापि संस्कारादुपस्थितेस्तद्वाक्यार्थजनितत्वादर्थानतिलङ्घित्वेन निश्चयरूप इति । न च चक्षुरादिना घटाद्युपस्थितिर्यत्र शाब्दप्रयोजिका, तत्र शब्देन तद्विषयकसंस्काराजनने तादृशशाब्दस्यानिश्चयत्वमिति वाच्यम् । 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ' इत्यानुभाविकोक्तेस्तत्रानुपस्थितौ शब्दस्याऽस्फुरणेनादोषात । अत एव वैयाकरणाः शब्दस्य प्रातिपदिकार्थतामङ्गीकुर्वन्ति, अन्यथा विष्णुमुच्चारयेत्यादावर्थस्योच्चारणगोचरत्वायोग्यतया शाब्दबोधासङ्गतेः। न च तत्र लक्षणया निर्वाहः, निरूढलक्षणया विप्रतिपन्नत्वेन शक्त्यनतिरेकात् .'जबगडदशम्' उच्चारयेत्यादौ शक्याग्रहेण शक्यसम्बन्धरूपाया लक्षणाया अशक्यग्रहत्वाच्च, अज्ञातया वृत्तेरनुपयोगाच्च । गङ्गामुच्चारयेत्यादिरूपे भाषाशब्दानुकरणे तेषां साधुतासम्प्रतिपत्तेस्तेषां तत्र शक्त्यभावेन परनये लक्षणाया असम्भवाच्चेति वदन्ति । तदपि युज्यते। प्रकृतमनुसरामः। ननु शब्दस्य तादृशसंस्कारजनकत्वेऽपि द्रव्यस्फुरणविज्ञानमिति बुद्धेः स्वरूपलक्षणाद्वचद्र-(व्य)स्यासान्निध्याद् द्रव्यस्फुरणभावे जातस्य शाब्दस्य बुद्धिवृत्तावप्रवेशात् कथं निश्चयरूपत्वम्, क्लृप्तप्रमाणजन्यत्वाभावाच्च कथं प्रमात्वमित्याकाङ्क्षायामाहुः—शब्देन चेत्यादि । तथा च शब्देनैव द्रव्यस्फुरणविज्ञानयोरुभयोरप्युत्पादनान्न स्वरूपलक्षणविरोधः, शब्दरूपप्रमाणजन्यत्वाच्च नाप्रमात्वमपीत्यर्थः । ननु शास्त्रकृता प्रमाणगणनाया अकृतत्वात् कथं शब्दस्य प्रमाणान्तरत्वमित्याकाङ्क्षायामाहुः—त्रीणीत्यादि । प्रवचनसूत्रे 'प्रत्यक्षानुमानागमाः प्रमाणानि' इति कथनादत्रापि शब्दस्य प्रमाणत्वेनाऽङ्गीकारे न किञ्चिद्बाधकत्वम् । न चैवं सत्यनुमानस्याप्यतिरेकः शङ्क्यः । ज्ञानलक्षणायाः प्रत्यासत्तेः स्वीकारे चक्षुषा धूमदर्शने एकसम्बन्धिनोऽपरसम्बन्धिस्मारकत्वात् स्मृत्युपनीतस्य वह्नेश्चक्षुषा मनसा वा, सुरभिचन्दनमित्यत्र सौरभ्यस्येव भानसंभवात् । तस्यैव भानस्यानुमितित्वस्वीकारे लाघवेनाऽनुमानस्य प्रमाणान्तरताया अप्रयोजकत्वादिति । ननु तथापि प्रमाणानां त्रित्वमनुपपन्नम्, मनसोऽपीन्द्रियत्वादिति चेत्, न; अत्र शास्त्रे तस्येन्द्रियत्वेनानभिप्रेतत्वात् । तस्य सात्त्विकाहंकारजन्यत्वेन इन्द्रियाणां च राजसाहंकारजन्यत्वेन कारणभेदात् । श्रुतावपि 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः' इति पृथङ्निर्देशादिन्द्रियत्वेन अनिर्देशाच्च, तत्राप्येवमेवाभिप्रायादिति । गीतायामपि 'इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः' इति श्रुतिवदेव निर्देशात्। न च मनःषष्ठानीन्द्रियाणीत्यस्य विरोधः, षष्ठस्य संख्यापूरणमात्राभिप्रायत्वात् । यजमानपंचमा इडां भक्षयन्तीतिवत् । एवम् 'इन्द्रियाणि दशैकं च' इत्यपि मनसो मुख्यत्वाभिप्रायम्, अन्यथा एकादशेन्द्रियाणीत्येव वदेत्. इन्द्रियाणां मनश्चाऽस्मीत्यत्र मनोग्रहणमिन्द्रियप्रेरकत्वाभिप्रायमेव । तस्येन्द्रियत्वसामान्यग्रहण तत्र मद्रूपनाभिप्रायम्। 'वादः प्रवदतामहम्' 'नीतिरस्मि जिगीषताम्' 'भूतानामस्मि चेतना।' (चेतना) इत्यादौ तत्तत्सामान्यस्य तत्र तत्र वक्तुमशक्यत्वादिति । तस्मात् संख्या सूपपन्नेति दिक् । ननु प्रमाणत्व

इन्द्रियाणि, शब्दः, मनश्चेति; चक्षुः, श्रोत्रं मनो वा। स्पर्शादीनामन्यशेषत्वम्। मनस्तु योगजधर्मसहितमेकं प्रमाणम्, अन्यत्र त्वप्रमाणम्। अत एव स्मृतिरप्रमाणम्। सङ्घातात्मज्ञानं चाऽप्रमाणम्, विपर्ययरूपत्वात्। स्मृतिः स्वतन्त्रा, बुद्धिः संस्कारजनिका, स्वापः स्वप्नरूपः, भिन्नसृष्टिविषयत्वात् न पूर्वेष्वन्तर्भावः। सुषुप्तिस्तु न बुद्धिः, मौढ्यत्वे(?)न परं बुद्ध्यवस्था। आत्मनः स्फुरणन्तु स्वतः, स्वप्नभेद एव वा, निद्रानिमित्तत्वात्। एवं पञ्चधा बुद्धेर्वृत्तितो लक्षणं पृथक् ज्ञेयमित्यर्थः। अनेनोभयमेकं ज्ञानमिति पक्षा निवारिताः। अत इदमंशेऽपीदं रजतमिति ज्ञानमप्रमाणम्, न हि ज्ञाने अंशोऽस्ति। सोऽयं देवदत्त इत्यनुभव एव, अभ्यास-

प्रकाशः।

स्वेन्द्रियेष्वेव करणत्वव्यवहारात् बुद्धिमनःप्रभृतिष्वन्तःकरणत्वव्यवहारात् ज्ञानकरणत्वमपि तेष्वेवोचितम्। न शब्दे; इत्यरुच्या पक्षान्तरमाहु—चक्षुः श्रोत्रं मनो वेति। तथा च शब्दोऽप्यनुग्राहक एवेति नैवमपि विरोध इत्यर्थः। प्रथमपक्षस्तु—तत्र तत्र प्राहुरिति शास्त्रकारेण निर्दिष्टत्वात् तदनुसारीति न कोपि शङ्कालेशः। नन्वस्मिन् पक्ष इन्द्रियान्तरस्य का गतिरित्यपेक्षयामाहुः—स्पर्शादीनामित्यादि। त्वग्घ्राणरसनानामल्पदेशे संयोगेनाऽल्पग्राहकत्वाद्बहुग्राहकचक्षुःश्रोत्रमनःशेषत्वमिति तेषां तेष्वन्तर्भाव इत्यर्थः। अत एवोनत्रिंशे वक्ष्यते। 'तत्रापि स्पर्शवेदिभ्यः प्रवरा रसवेदिनः। तेभ्यो गन्धविदः श्रेष्ठास्तेभ्यः शब्दविदो वराः। रूपभेदाविदस्तस्मात्' इति पूर्वपूर्वेषुणामुत्तरोत्तरेभ्यो जघन्यत्वमिति। प्रकृतमनुसरामः। ननु संस्कारद्वारकस्य शब्दस्य निश्चयत्वे संस्कारद्वारा मनोजन्यया स्मृत्या किमपराद्धमित्यत आहुः—मन इत्यादि। तथा च शास्त्रकृता तस्य सङ्कल्पविकल्पात्मस्वरूपकथनादग्रे च योगिसंराध्यत्वकथनादशुद्धशुद्धभेदेन द्वैविध्यं तस्य बोध्यते। श्रुतावपि तथा। अतोऽशुद्धमनोजन्यत्वात् स्मृति(र)प्रमाणमित्यर्थः। एवं निश्चयं परीक्ष्य क्रमप्राप्तां स्मृतिं लक्षयन्ति—स्मृतिरित्यादि। संस्कारजनिकेति संस्काराज्जनिर्यस्याः सा तथा। तथाच, अप्रबलसंस्कारद्वारा मनोमात्रजन्यं ज्ञानं स्मृतिरित्यर्थः। अप्रबल इत्यनेन भ्रमनिरासः। मात्रपदेनानुमितिशाब्दादिनिरासः। स्वापं लक्षयन्ति—स्वाप इत्यादि। संस्कारजन्यत्वेन स्मृतौ भिन्नार्थप्रतिपादकत्वेन विपर्यासे समत्वेन संशये च स्वप्नविशेषस्याऽन्तर्भावमाशङ्क्य तन्निवृत्त्यर्थमाहुः—भिन्नेत्यादि। ननु सुषुप्तिरपि प्रवृत्तिरिति कथं पञ्चैवेत्यत आहुः—सुषुप्तिरित्यादि। स्वत इति आत्ममहिम्ना। अतो न तया बुद्ध्याधिक्यमित्यर्थः। नन्ववस्थात्वेऽपि 'गुणतो वृद्धिवृत्तयः' इत्यादौ सुषुप्तावपि वृत्तित्वव्यवहारादाधिक्यं नापैतीत्यत आहुः—स्वप्नेत्यादि। एवं च निद्राजन्यत्वे सति भिन्नसृष्टिविषयकज्ञानत्वं स्वापत्वम्। तथात्वे सति ज्ञानत्वं सुषुप्तित्वमिति तयोर्लक्षणम्। तथा च विशिष्टज्ञानत्वाभावान्न तस्यां विशिष्याग्रह इत्याशयेनोपसंहरन्ति—एवमित्यादि। पञ्चधानिर्देशप्रयोजनमाहुः—अनेनेत्यादि। उभयमिति। स्मृतिप्रमाणभेदेन स्मृत्यनुभवभेदेन वा। एकमिति कासारसलि(ल्या)लाप्यायेन। फलितमाहुः—अत इत्यादि। अत इति। वृत्तिगणनया भ्रमस्यापि वृत्त्यन्तरत्वेन निश्चयात्। तथा च संस्कारप्राबल्येन बहिर्जायमानेऽपि विपर्यासेऽनुभवसामग्रीदौर्बल्यादिदमंशोऽपि विपर्यस्त एव भासते, न तु पुरोवर्तीति तथेत्यर्थः। अंशतस्तत्र प्रमात्वाङ्गीकारे बाधकमाहुः—न हीत्यादि। ननु संस्कारसंप्रयो(गो)गजन्यायाः प्रत्यभिज्ञायाः स्मृतौ निश्चये चानन्तर्भावात् भिन्नार्थप्रतिपादकत्वाभावेन विपर्यासेऽप्यनिवेशाद्भिन्नसृष्ट्यविषयत्वेन स्वापे समत्वाभावेन संशये चानिवेशाद्वृत्त्यन्तरत्वे कथं पञ्चैवेत्यत आहुः—सोऽयमित्यादि। तत्र हेतुः—अभ्यासेत्यादि। अभ्यास आवृत्तिः; तज्जन्यं यज्ज्ञानं दृढप्रतीतिरूपम्, तदभ्यासज्ञानम्। तत्र यथा

१ जानामीति क. ख.

ज्ञावे पूर्वज्ञानसंस्कारवत् पूर्वस्मृतिरपि चक्षुषः सहकारिणी । भ्रमप्रमासमूहावलम्बनम्—एकदेशविकृतमनन्यवद्भवतीति न्यायेन भ्रमाधिक्ये विपर्यय एव, प्रमाधिक्ये निश्चय, समानरूपत्वे तु सम्भावनावान् संशयः । सम्भावनादीनां संशयान्तःपातित्वमप्रमाणमेव । तत्सिद्धार्थवाक्ये तु प्रत्यक्षसहकारित्वात् प्रत्यक्षहेतुत्वमेव । साध्यार्थे तु लौकिके वाक्यार्थे । बुद्धिकल्पित इति प्रमाणाभावेनाऽप्रामाण्येऽपि प्रमेयबला-

प्रकाशः ।

पूर्वानुभवजन्यः संस्कारः सहकारी, तथा प्रत्यभिज्ञायां स्मृतिरपि विशेषणतावच्छेदकप्रकारकनिश्चयत्वेनावश्यापेक्षणीयत्वात् सम्प्रयोगसहकारिणी यथानुग्राहकान्तरप्रवेशेऽपि य(था)र्थानुभवत्वानपायादभ्यासज्ञानं निश्चयरूपं तथा प्रत्यभिज्ञाऽपीत्यर्थः । यद्यप्यत्रानुमित्यादिरपि दृष्टान्तीकर्तुं शक्यते, तथाभ्यासज्ञाने दृष्टान्तेन प्रत्यभिज्ञायाः संस्कारजन्यत्वपक्षेऽपि स्मृतिलक्षणं नातिव्याप्नोतीति सूच्यते । प्रत्यभिज्ञाया अभ्यासज्ञानस्य चानुग्राहकत्वेन संस्कारजन्यत्वात् स्मृतेस्तु संस्कारत्वेन संस्कारजन्यत्वादिति । एवं सति संस्कारत्वेन संस्कारजन्यं ज्ञानं स्मृतिरिति तल्लक्षणं पर्यवसन्नं ज्ञेयम् । वृत्त्याधिक्यपरिहारप्रसङ्गाद्भ्रमप्रमासमूहालम्बनस्यापि निवेशमाहुः—भ्रमेत्यादि । भ्रमाधिक्योदाहरणं तु दशरूपकेषु नव रागा एको राजतस्तज्ज्ञानं न दश राजता इत्याकारकं ज्ञेयम् । एवं प्रमाधिक्ये विपरीतं च ज्ञेयम् । तथा च, यत्र शाखावच्छेदेन वृक्षे कपिसंयोगो मूलावच्छेदेन च कपिसंयोगप्रत्ययः,तत्रापि पूर्वोक्तन्यायात् प्रमारूपतैव । एवं च दारुदन्तादिनिर्मितमूर्तौ चित्रादौ च या तुरङ्गादिप्रतीतिः, सापि प्रमाधिक्यान्निश्चयरूपैव, तत्वाभ्योऽधिका तथैव नटेऽपि या सामाजिकानां रामादिप्रतीतिः साऽनुकार्यराहित्येऽपि यथाशास्त्रवेषक्रियानुकृतिनिमित्तकत्वात्, सामाजिकरसोद्बोधकत्वाच्च प्रमाधिकेति प्रमारूपैव । एतेनैव देवताप्रतीतिरपि व्याख्याता ज्ञेया । तत्र(यत्र)त्विमेरंगरजते इति साम्यं तत्र पूर्वोक्तन्यायस्य तूष्णीकत्वात् भ्रमप्रमान्यतररूपता न वक्तुं शक्येति तत्राधिक्यं दुष्परिहरमित्यत आहुः—समानेत्यादि । सम्भावना चोत्कटकोटिकः संशय इति प्रसिद्धमेव, अतोऽभावकोट्यस्फूर्तावपि न संशयत्वहानिरित्यर्थः । सम्भावनादीनामित्यत्र आदिपदं तर्कज्ञानसङ्ग्रहार्थम् । न चानिष्टप्रसञ्जनरूपस्य तर्कस्य कथं सम्भावनान्तःपातित्वमिति शङ्क्यम् । सम्भावनार्थकलिङ्घटितै तर्कवाक्यप्रयोगेण सम्भावनात्वानिश्चयात्, स्योत्प्रेक्षिता युक्तिस्तर्क इति लक्षणस्य वक्ष्यमाणत्वाच्च । मादिति । सम्भावनादिकमित्यर्थः । एवं बुद्धिवृत्तीर्विचार्य ऐन्द्रियके ज्ञाने प्रत्यक्षत्वस्य स्फुटत्वात् शाब्दे संदिग्धत्वात् प्रथमतो यादृशशब्दस्य यादृशप्रमाजनकत्वम्, तद्विचारयन्तः सिद्धार्थस्थले आहुः—सिद्धार्थेत्यादि । सत्यपि घटे यत्र पूर्वं घटो न दृष्टः, ततः केनाप्ययं घट इत्युक्ते उपलभ्यते, तत्र वाक्यस्य प्रामाण्यादिपरीक्षकवाक्यवच्चक्षुरादिसहकारित्वादुभाभ्यामेको घटसाक्षात्कार एव जन्यते, न तु शाब्दमिति तथेत्यर्थः । वाक्यलक्षणम्, वाक्यस्याकाङ्क्षादिविरहेऽपि बोधकत्वम्, लौकिकवैदिकयोः प्रकारभेदादिकं च सर्वेनिर्णये नामप्रपञ्चनिरूपणे प्रभुभिः प्रपञ्चितमस्ततोऽवधेयम् । साध्यार्थवाक्ये विशेषणमाहुः—साध्यार्थ इत्यादि । लौकिके घटमानयेत्यादिवाक्ये वाक्यार्थः प्रयोज्यकर्तृकघटानयनादिक्रियारूपः प्रयोज(ज्य)बुद्धिकल्पित इति वाक्यश्रवणसमये तस्याऽर्थस्याभावात् प्रमाणरूपज्ञानानुदयः, किन्तु ज्ञानमात्रस्योदय इति प्रमाणाभावेन ज्ञानजनकवाक्यस्याऽप्रामाण्येऽपि प्रमेयबलात् प्रयोज्यकर्तृकानयनक्रियादिरूपरूपस्य प्रमेयस्य बलात् प्रमाणमेव वाक्याज्जातं शाब्दं समर्थप्रवृत्तिजनकत्वात् प्रमाणरूपमेवेत्यर्थः । एतेनैतादृशे स्थले परतः प्रामाण्यमिति स्फुटीकृतं ज्ञेयम् । ननु लोकेऽपि संसर्गरूपस्य वाक्यार्थस्यापूर्वत्वात् प्रमाणबलादेव प्रामाण्यं कुतो न .

१ सम्भावना च क. संभावनायत्. ख. संभावना च. ह

स्वमाणमेव । लोके वाक्यार्थो नाऽपूर्वः वक्तृज्ञानविषयविषयित्वात्, तद्बोधनसमर्थपदसमूहस्यैव प्रयोगात् । पदेभ्यः पदसमूहो भिन्नः, स एव वाक्यार्थे करणम्; अन्यथा पदे वृत्तिद्वयमापद्येत । पदार्थकरणपक्षे तु वाक्यार्थः शाब्दो न स्यात् । सम्भावितं सर्वमेवाऽप्रमाणमित्यग्रे वक्ष्यते ॥ ३० ॥

एवमन्तःकरणचतुष्टयोत्पत्तिमुक्त्वा इन्द्रियोत्पत्तिमाह—

**तैजसानीन्द्रियाण्येव क्रियाज्ञानविभागशः ।**
**प्राणस्य हि क्रियाशक्तिर्बुद्धेर्विज्ञानशक्तिता ॥ ३१ ॥**

+ तैजसानीति । ज्ञानकरणानि क्रियाकरणानि चोभयविधान्यपि राजसान्येव, न तु ज्ञानकरणानि सात्त्विकानि, क्रियाकरणानि तामसानि वा । ज्ञानक्रियान्यतरकरणमिन्द्रियमिति करणमतीन्द्रियमिन्द्रियमिति वा । तत्त्वानि दशाऽपि भिन्नानीति नैकं लक्षणं निर्दिष्टम् । उभयेषां राजसत्वे हेतुमाह—प्राणस्य हीति । क्रियायां प्राणो मूलम्, ज्ञाने बुद्धिः । उभयं राजसमित्यर्थादुक्तं भवति । प्राणो नामाऽऽसन्यः महत्तत्त्वभेदः, भगवद्रूपो वा । राजसाहङ्कारे तु तस्याऽवतार इति न तत्त्वतः, नाऽप्युत्पत्तिर्निरूपिता । मतान्तरसिद्धानां वैदिकानां वा प्राणानामत्र ग्रहणम्, इन्द्रियाणामाध्यात्मिकरूपो वा प्राणः । बुद्धी राजसीति तदनुगृहीतानि सर्वाणि राजसानि । प्राणस्तु क्रियाप्रधान इति राजसत्वम् । प्राणोऽपि सर्वेन्द्रियानुग्राहकः क्रियाजनिका शक्तिः । विज्ञानरूपा शक्तिर्वा यस्याः, तस्या बुद्धेर्भावो वक्ष्यत्यग्रे । इन्द्रियाणां लक्षणानि भिन्नानि ॥ ३१ ॥

---

प्रकाशः ।

इत्याकाङ्क्षायामाहुः—लोक इत्यादि । वैदिकवाक्यार्थे तु यथा अपूर्वत्वम्, 'तद्ब्रह्मसूत्राणुभाष्ये' शब्द इति चेन्नातः प्रभवात्' इति सूत्रे प्रपञ्चितमिति ततोऽवधेयम् । न च लौकिकवाक्येऽनधिगतार्थगन्तृत्वाभावेन प्रमाणलक्षणव्याप्तिः शङ्कनीया । तस्य लक्ष्यकोटावभावेन फलतः प्रामाण्यस्य साधने दोषाभावाच्चेति । शब्दस्य बोधकत्वे शास्त्रान्तरादत्राऽन्यमपि विशेषमाहुः—पदेभ्य इत्यादि । पदेभ्योऽवयवेभ्यः पदसमूहोऽवयवी भिन्नः, पटवत्; कार्यरूपं शब्दान्तरं न तु समूहवत् पदाभिन्न इत्यर्थः । इदमपि सर्वनिर्णयादवधेयम् । नन्वेवं नवीनं कुतः स्वीक्रियत इत्यत आहुः—अन्यथेत्यादि । अन्यथा भेदानङ्गीकारे करणत्वानङ्गीकारे च वृत्तिद्वयम्, पदार्थज्ञानजनिका, वाक्यार्थज्ञानजनिका चेत्यननुभावकवृत्तिद्वयम्, अतो न स्वीक्रियत इत्यर्थः । तर्हि पदार्थकरणपक्ष आद्रियतामित्यत आहुः—पदार्थेत्यादि । शाब्दो न स्यात् । तथा सति शब्दस्य प्रमाणकरणतैव भज्येतेत्यर्थः । ननु सिद्धार्थवाक्यस्य प्रत्यक्षहेतुत्वमुक्तं यदुक्तं तत्त सार्वत्रिकम्, कार्यां गौरस्तीत्यादिवाक्येन प्रत्यक्षाजननात् । एवं सति तज्जन्यस्य शाब्दस्य कुत्र निवेश इत्यत आहुः—सम्भावितमित्यादि । सम्भावितमिति प्रमेयम् । तथा चोक्तविधवाक्यस्य सम्भावितविषयकत्वात् तज्जन्यं ज्ञानं सम्भावनारूपमिति संशये तस्य निवेश इत्यर्थः । अप्रमाणपदं तु प्रमाणशब्दस्य नानार्थत्वाभिप्रायेणोक्तम् । प्रमाणशब्दोऽबाधितज्ञाने वर्तते, बाधयोग्यव्यतिरिक्ते वा । तत्सम्बन्धी यः प्रमाता प्रमाकरणं प्रमाविषयो वा, तत्सर्वं प्रमाणमुच्यते । केचित्तु प्रमाणशब्दं नानार्थमाहुरिति द्वितीयस्कन्धसुबोधिन्यामुक्तत्वादिति ।

+ तैजसानीत्यत्र । भिन्नानीति । पदार्थविभाजकोपाधिरूपाणीत्यर्थः । तत्त्वत इति । तत्त्वतो राजसो न, । राजसेऽवताराद्राजस इत्यर्थः । अतिप्रसङ्गसम्भावनया पक्षान्तरमाहुः—मतान्तरेत्यादि । अत्रापि प्रमाणविरहमाशङ्क्य पक्षान्तरमाहुः—इन्द्रियाणामित्यादि ।

---

१ 'इन्द्रियम्' इति नाऽस्ति. ब छ.

भूतानां सृष्टिमाह—

**तामसाच्च विकुर्वाणाद्भगवद्वीर्यचोदितात् ।**
**शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगम् ॥ ३२ ॥**

+ तामसादिति । तामसाहङ्कारात् पूर्ववद्विकुर्वाणात्तामसत्वादेव भगवद्वीर्येण प्रेर्यते, नतु भगवद्वीर्यसत्तामात्रम् । प्रथमतः शब्दमात्रमभूत्, तस्मात्पश्चान्नभः । शब्दे प्रमाणमाह—श्रोत्रमिति श्रोत्रस्य गम्यम् । श्रोत्रसमाधिगम्यः शब्दः । शब्दधर्मा अपि शब्द एवेति लक्षणं नाऽतिप्रसक्तम् । श्रोत्रं गच्छतीति वा । शब्दाधाराणां न स्वतन्त्रतया गतिरिति तद्व्यावृत्तिः ॥ ३२ ॥

शब्दस्य लक्षणान्याह—

**अर्थाश्रयत्वं शब्दस्य द्रष्टृलिङ्गत्वमेव च ।**
**तन्मात्रत्वं च नभसो लक्षणं कवयो विदुः ॥ ३३ ॥**

* अर्थाश्रयत्वमिति । अर्थो हि शब्दमाश्रित्य तिष्ठति । अर्थस्य घटपटादेः स्वरूपमर्थत्वं... आधिदैविकं रूपम्, स्वच्छब्दादिष्ठ शब्दैकसमधिगम्यं शब्देन नित्यसम्बद्धम् । आधिभौतिकन्तु प्रत्यक्षरूपम्; तस्य न शब्दाश्रयत्वम्, किन्तु पृथिव्याद्याश्रितमेव । आध्यात्मिकन्तु ज्ञानेच्छाप्रयत्नाश्रितम् । त्रितयभेदेन सर्वत्र लक्ष्यते । शब्दस्याऽर्थाश्रयत्वं लक्षणम्, नत्वाकाशस्य । लक्षणान्तरमाह—द्रष्टृलिङ्गत्वमेव चेति । द्रष्टा ह्यर्थानामाध्यात्मिकं स्वर्थं सन्निधित्वेन ज्ञापयति । यथा भित्तिव्यवहितो गजं दृष्ट्वा गजोऽयमिति वदति, तदान्तःस्थितवाक्यप्रयोक्ता गजदर्शनवानिति लक्ष्यते । स्वराद्वा देवदत्तोऽयमिति धर्मतो लक्षणम् । चकाराद्द्वयज्ञापकत्वं च । भौतिकमपि घटादिकं बोधयतीत्यर्थः । लक्षणान्तरमाह—तन्मात्रत्वं च नभस इति । नभसस्तन्मात्रत्वं सूक्ष्मरूपत्वं शब्दस्य लक्षणम् । सूक्ष्मावस्था शब्दः, स्थूलावस्था नभ इति । केचिदन्यथा मन्यन्ते इति स्वोक्ते प्रमाणमाह—कवयो विदुरिति ॥ ३३ ॥

आकाशं लक्षयति—

**भूतानां छिद्रदातृत्वं बहिरन्तरमेव च ।**

---

प्रकाशः ।

+ तामसादित्यत्र । श्रोत्रमिति शब्दमात्रं श्रोत्रगम्यम् । तदेवाहुः—श्रोत्रेत्यादि । धर्मधर्मिणोस्तादात्म्यमङ्गीकृत्याहुः—शब्दधर्मा इत्यादि ।

* अर्थेत्यत्र । नित्यसम्बद्धमिति । जैमिनिये औत्पत्तिकसूत्रे; वैयासिके चात एव नित्यत्वसूत्रे तथा साधितत्वादित्यर्थः । ज्ञानेत्यादि पदस्यार्थस्याध्यात्मिकदशायामर्थस्य ज्ञानादिष्वेव भानात् तेषां तदीयतानिर्वाहकत्वात्, तेषु तदभावे भौतिकनिष्पत्तिरेव न स्यादिति तदर्थः । त्रितयमिति । आधिदैविकादिरूपम् । द्रष्टृलिङ्गत्वमिति । द्रष्टृलिङ्गताज्ञापकत्वम् । तदुपपादयन्ति—द्रष्टेत्यादि । अर्थानां भौतिकानाम् । सन्निधित्वेन । स्वज्ञानेच्छाद्याश्रि(त)त्वेन । तत्रोदाहरणम्—यथेत्यादि । नामस्वरूपेऽभिन्नत्व इति तस्य पक्षान्तरमाहुः—स्वराद्वेति । अस्मिन् पक्षे दर्शनसामान्यार्थकः, तत्र ज्ञानं स्वनिष्ठमिति पूर्वस्मान्नदोषः । अत्र मूलस्थलक्षणचतुष्टये श्रोत्रगम्यत्वं सामान्यलक्षणम्, द्वितीयन्तु वर्णादीनाम्, तृतीयन्तु पर्यायेण द्वयोः, तुरीयन्तु ध्वनेः । एषु प्रथमं तृतीयञ्च व्यवहारोपयोगि ।

---

१ श्रोत्रगमिति ग     १ स्वराद्वा ख. ग

**घ्राणेन्द्रियात्मधिष्ण्यत्वं नभसो वृत्तिलक्षणम् ॥ ३४ ॥**

* भूतानामिति । भूताना प्राणिनाम्, छिद्रदातृत्वम्, बहिरन्त स्वरूपत्वम्, प्राणेन्द्रियान्त करणाधारत्वं चेति नभसो लक्षणत्रयम् । छिद्रमवकाश, बहिरन्तर्व्यवहार आकाशविषय एव । पृथिव्यादेरावरणरूपस्य न बहिर-तर्व्यवहारविषयत्वम्, परिच्छेदकत्व परम् । प्रदेशोऽपि न व्यवहारहेतुस्तुल्यत्वात् । विवरे च व्यवहार, अत आकाशस्यैव । चकारात्पृथिव्यादिसर्वाधारत्व च लक्षणम् । लक्षणान्तरमाह—घ्राणेन्द्रियात्मधिष्ण्यत्वमिति । प्राणानामिन्द्रियाणामन्त.करणस्य च धिष्ण्यमाधारभूतं स्थानम् । धिष्ण्यशब्देन वैदिकत्व तस्य स्थानस्य द्योतितम् । नभसो वृत्तिलक्षणमिति । नभो हि त्रिधा वर्तते, स्वस्याधिभौतिक रूप स्वयं गच्छतीत्याधिदैविकत्वम्, बहिरन्तर्व्यवहाराश्रयमित्याध्यात्मिकत्वम्, देहान्तस्थितपदार्थाश्रयत्वेनाधिभौतिकत्वम् ॥ ३४ ॥

स्पर्शवाय्वोरुत्पत्त्यादिकमाह—

**नभसः शब्दतन्मात्रात्कालगत्या विकुर्वतः ।**
**स्पर्शोऽभवत्ततो वायुस्त्वक् स्पर्शस्य च सङ्ग्रहः ॥ ३५ ॥**

+ नभस इति । शब्दतन्मात्रादिक न विशेषणम्, किन्तु स्थूलात् सूक्ष्मादपि नभस स्थूल सूक्ष्म कार्यं च भवतीति ज्ञापनार्थम् । कालगत्या विकुर्वत इति कालप्रेरणया जातगुणक्षोभादित्युभयोर्विशेषणम् । प्रथम स्पर्शतन्मात्रा अभवत् । ततो वायु । त्वगिन्द्रियम् । स्पर्शस्य सम्यक् ग्रहो यस्मात् । त्वगेव सङ्ग्रह । चकाराद्वायोरपि, न तु श्रोत्रवच्छब्दमात्रग्राहकम् ॥ ३५ ॥

स्पर्शभेदा एव प्रत्यक्षसिद्धा स्पर्शलक्षणानीति तान् गणयति—

**मृदुत्वं कठिनत्वं च शैत्यमुष्णत्वमेव च ।**
**एतत्स्पर्शस्य स्पर्शत्वं तन्मात्रत्वं नभस्वतः ॥ ३६ ॥**

। मृदुत्वमिति । स्पर्शश्चतुर्विध —मृदुत्व कार्पासादौ, कठिनत्वं पाषाणादौ, शैत्यं शीतलता, उष्णत्वं चेति । एतच्चतुर्विधकारणरूपमेव कार्य एकैकमभिव्यक्तम् । उष्णत्व तेजसि, शैत्य जले, पक्वपृथिव्या कठिनत्वम्, अपक्वे मृदुत्वमिति । एतत्स्पर्शस्य स्पर्शत्वमिति । स्पर्शो नाम स्पृश्यत इति व्युत्पत्त्या, स्पर्शनेन्द्रियग्राह्यत्वे वा वायावपि स्यात् । व्याकरणादौ कादयोऽपि स्पर्शा सयोगोऽपि स्पर्श इति लोक, एतदेकमप्यस्माक विवक्षित न भवति, किन्तु यदेवाऽस्माभिरुक्त मृदुत्वादिक तदेव स्पर्शस्य स्पर्शत्वम् ।

---

प्रकाश[1]।

* भूतानामित्यत्र । परिच्छेदकत्वमिति भागद्वयविभाजकत्वम् । प्रदेशोऽपीत्यव्याप्तिमाशङ्क्य परिहरन्ति—प्रदेश इत्यादि । आन्तरो देशो बाह्यो देश इत्याद्यभिलापात् तादृशव्यवहारहेतु प्रदेशोऽप्यन्तर्बहिर्व्यवहारविषयो नेत्यर्थ । तत्र हेतु —तुल्यत्वादिति । भित्त्यादिवत् प्रदेशस्यापि भागद्वयविभाजकत्वस्य तुल्यत्वादित्यर्थ । अत्र मध्यमं लक्षण व्यवहारोपयोगि ।

+ नभस इत्यत्र । स्पर्शसद्भावे प्रमाणमाहु —त्वगित्यादि । वायोरिति । वायुसम्बन्धिन स्पर्शस्य । अनेन वायु स्पार्शनप्रत्यक्ष शास्त्रकारस्याभिमत इति ज्ञापितम् ।

। मृदुत्वमित्यत्र । तदेवेति मृदुत्वादिधर्मकस्वरूप सामान्यलक्षणमेवेत्यर्थ । एव च तत्त्वात्मा चतु

---

१ ट्रपोरा॰ ग म । २ तत्र क ग ब

लक्षणान्तरमाह—तन्मात्रत्वं नभस्वत इति । नभस्वतो वायोस्तन्मात्रत्वं सूक्ष्मरूपत्वम् ॥ ३६ ॥

वायोर्लक्षणमाह—

चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः ।
सर्वेन्द्रियाणामात्मत्वं वायोः कर्माभिलक्षणम् ॥ ३७ ॥

+ चालनमिति । वायोः कर्मलक्षणम् । तत् कर्म पञ्चविधमिति पञ्चलक्षणानि । चालनं शाखादेः, व्यूहनं पतिततृणादेर्वात्ययैव मेलनम्, प्राप्तिर्गन्धस्य, घ्राणप्रापणम्, द्रव्यशब्दयोर्नेतृत्वं देशान्तरस्थितवस्त्वादेर्देशान्तरे नयनम् । शब्दश्च भेरीदण्डसंयोगे जातः कर्णशष्कुलीपर्यन्तं स्वभावतो गच्छति, तत्प्रतिकूलवायौ न गच्छति, निकटेऽपि न श्रूयते । अनुकूले तु दूरादपि श्रूयत इति शब्दस्याऽपि देशान्तरमापणम् । सर्वेषामिन्द्रियाणामात्मा चाऽयम्, एतदभावे किमपीन्द्रियं न कार्यक्षमं भवतीति । एतत्पञ्चविधं वायोः कर्मतोऽभितो लक्षणम् ॥ ३७ ॥

तेजस उत्पत्तिमाह—

वायोश्च स्पर्शतन्मात्राद्रूपं दैवेरितादभूत् ।
समुत्थितं ततस्तेजश्चक्षू रूपोपलम्भनम् ॥ ३८ ॥

वायोरिति । पूर्ववत् स्पर्शतन्मात्रादिति । रूपतन्मात्रम्, दैवेन कालेन । ईरितादित्युभयोर्विशेषणम् । प्रथमतो रूपं समुत्थितम्, ततस्तेजः । चक्षुस्तु रूपोपलम्भनम्, रूपमुपलभ्यतेऽनेनेति रूपे प्रमाणमुक्तम् ॥ ३८ ॥

रूपस्य लक्षणान्याह—

द्रव्याकृतित्वं गुणता व्यक्तिसंस्थात्वमेव च ।
तेजस्त्वं तेजसः साध्वि ! रूपमात्रस्य वृत्तयः ॥ ३९ ॥

* द्रव्याकृतित्वमिति । द्रव्यस्य घटादेर्या आकृतिः सैव रूपस्य । पृथुबुध्नोदराकारं रूपमपि आतानवितानात्मकं च । द्रव्यस्यैवाऽऽकृतिरिति द्रव्यस्य तु नोपमेयत्वम्, अतो रूपस्यैव लक्षणम् । गुणता

---

प्रकाशः।

त्रिधः, स्पर्शकार्यरूपो गुणात्मा तु गुरुत्वसंयोगादिभेदभिन्नोऽनेकविध एवेति फलति । द्वितीयस्कन्धे 'वस्तुतो लघुकाठिन्यम्' इत्यत्र तथा प्रतिपादनात् । तेन चित्रस्पर्शस्याऽप्यतिरिक्तत्वे बाधकाभाव इति बोध्यम् ।

+ चालनमित्यत्र । कर्मलक्षणमिति । कर्मैव लक्षणमित्यर्थः। स्वभावतो गच्छतीति । इदं च यथा तथा प्रस्थानरत्नाकरे मया निपुणतरमुपपादितमिति तत एवाऽवधारणीयम् । एवं च अरूपित्वे सति चालनादिपञ्चकर्मकत्वं सामान्यलक्षणम्, चालनाद्न्यतमकर्मकत्वं च विशेषलक्षणं ज्ञेयम् । द्वयमपीदं व्यवहारोपयोगि चेति ।

* द्रव्याकृतीत्यत्र । द्रव्याकृतितुल्याकृतिकत्वस्य द्रव्यान्तरेऽपि वर्तनादिदं रूपलक्षणमतिव्यापकमित्याशङ्क्य तत्परिहारायाहुः—द्रव्यस्येत्यादि । नोपमेयत्वम्, किन्तूपमानत्वम्; अतः समासेन द्रव्यभिन्नत्वे

सर्वदोपसर्जनतया प्रतीतिः। नैवं शब्दादिषु, स्वतन्त्रतयाऽपि प्रतीयमानत्वात्। व्यक्तेः संस्थैव संस्था यस्य। यदि व्यक्तिर्वैका भवेत्, रूपमपि यत्र भवेदिति। उपविष्टे रूपवति रूपमुपविशति, रूपमुपविष्टं भवति। आतानवितानात्मकसङ्कोचीकरणयोर्भेदात्। तेजसश्च तेजस्त्वम्, रूपतन्मात्रत्वं सूक्ष्मत्वमित्यर्थः। माध्वीति संबोधनं रूपस्याऽमोहार्थम्। रूपमात्रस्य रूपतन्मात्रस्य, सर्वगतरूपस्य वा चतस्रो वृत्तयः।

तेजसो लक्षणान्याह—

**द्योतनं पाचनं पानमदनं हिममर्दनम्।**
**तेजसो वृत्तयस्त्वेताः शोषणं क्षुत्तृडेव च॥ ४०॥**

* द्योतनमिति। द्योतनं प्रकाशनम्, सूर्यादेरिव। पाचनमोदर्यवह्नेः पाकचरणं वा वह्नेः। पानं जलादेः, तेजोव्यतिरेकेण नान्यः पिबति। अदनं भक्षणम्, अन्नादिभिरेव। हिममर्दनं हिमदूरीकरणम्, शोषणं चेति तेजसः पञ्च वृत्तयः पञ्च कार्याणि। तत्र त्रयं प्रत्यक्षसिद्धम्, द्योतनम्, पाचनम्, हिममर्दनमिति। शोषणं चाऽनुमीयते, वाय्वपेक्षया आतपे वस्त्रादिषु जलाकर्षणस्य शैघ्र्यात्। पानमदनं च न तेजःकार्यम्, चेतनकर्तृकत्वात्, क्षुत्पिपासाभ्यामेव तज्जननोत्याशङ्कयाऽऽह—क्षुत्तृडेव चेति। क्षुत्तृड्रूपं तेज एव। अतः पानमदनं च तस्यैव कार्यमिति युक्तमित्यर्थः॥ ४०॥

जलस्योत्पत्तिमाह—

**रूपमात्राद्विकुर्वाणात्तेजसो दैवचोदितात्।**
**रसमात्रमभूत्तस्मादम्भो जिह्वा रसग्रहः॥ ४१॥**

रूपमात्रादिति। रूपमात्रात्तेजसः। विकुर्वाणात्, दैवचोदितादित्युभयोर्विशेषणे। प्रथमतो रसमात्रमभूत्, तस्मादम्भः। जिह्वा रसं गृह्णातीति तथा। रसे जिह्वैव प्रमाणम्॥ ४१॥

रसस्य भेदकथनेनैव लक्षणमाह—

**कषायो मधुरस्तिक्तः कट्वम्ल इति नैकधा।**
**भौतिकानां विकारेण रस एको विभिद्यते॥ ४२॥**

---

प्रकाशः।

सतीति विशेषणसूचनाद्रूपस्यैवासाधारणं धर्मरूपमिदमित्यर्थः। इमानि चत्वार्यपि रूपसामान्यलक्षणानि। व्यवहारोपयोगिता तु न तुरीयस्येति ज्ञेयम्। अत्र रूपभेदानामगणनात् सार्वजनीनप्रतीतिसिद्धत्वाच्च ते षडेव ज्ञेयाः। चित्रत्वं चाऽतिरिक्तं ज्ञेयम्। गन्धलक्षणे तदुपपादयिष्यते।

* द्योतनमित्यत्र। अत्र एकैकस्य कार्यस्याव्यापकत्वेन तेजोविशेषलक्षणतया द्योतनादिषड्वृत्तिकत्वं तेजःसामान्यलक्षणं ज्ञेयम्। विशेषमुखेन सामान्यसूचनाच्छास्त्रे न कोऽपि दोषः। यत्तु शास्त्रान्तरे उष्णस्पर्शवत्त्वं भास्वररूपत्वं च तेजःसामान्यलक्षणत्वेनोच्यते तत्त्वव्यापकत्वात् प्रतिबन्ध्यप्रतिबन्धकभावकल्पनाप्रसक्तत्वाच्च विशेषलक्षणत्वेनैवादरणीयमिति दिक्।

---

१ भवेदिव क छ. २ रूपवान क

+ कषाय इति । कषायः खदिरादिः, मधुरो गुडादिः, तिक्तो निम्बादिः, कटुर्मरीचादिः, अम्लस्तिन्तिण्यादिः । इतोऽप्यनेकप्रकारोऽस्तीत्याह—इति नैकधेति । एवमनेकप्रकारो भवतीत्यर्थः । ननु यदि रसः स्वभावत एवंविधः स्यात्, जलेऽप्युपलभ्येत, मधुरः पाकादिना तिक्तश्च न भवेत् । तत्राऽऽह—**भौतिकानां विकारेणेति** । एक एव रसो भौतिकानां पृथिव्यवयवानां संश्लेषादनेकधा भिद्यते । वस्तुतस्तु अव्यक्तमधुर एक एव रसः ॥ ४२ ॥

अम्भसो लक्षणान्याह—

**क्लेदनं पिण्डनं तृप्तिः प्राणनाप्यायनोदनम् ।**
**तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः ॥ ४३ ॥**

* **क्लेदनमिति** । क्लेदनमार्द्रीकरणं वस्त्रादेः, पिण्डनं चूर्णीभूतानां पिण्डतासम्पादनम्, यथा सक्तूनाम्; **तृप्तिः** क्षुदादिनिवृत्त्या पुरुषस्य सन्तर्पणम्, भुक्त्वाऽपि जले अपीते न तृप्तो भवतीति । **प्राणनाप्यायनम्** । **प्राणनं** जीवनम्, **आप्यायनं** प्राणसन्तर्पणम् । **उदनं** प्रेरणम्, जलेन हि पदार्थाः प्रवाहेण नीयन्ते, 'कूलादिश्च पात्यत इति । **तापापनोदः** सन्तापदूरीकरणम् । **भूयस्त्वमेकस्मिन्** देशे सजातीयप्रचुरस्यैवावस्थानम् । यद्वा, यत्राऽऽपः प्रविशन्ति तद्भूयो भवतीति । अम्भस इमा अष्टौ वृत्तयः ॥ ४३ ॥

पृथिव्या उत्पत्तिमाह—

**रसमात्राद्विकुर्वाणादम्भसो दैवचोदितात् ।**
**गन्धमात्रमभूत्तस्मात् पृथ्वी घ्राणस्तु गन्धगः ॥ ४४ ॥**

**रसमात्रादिति** । स्थूलसूक्ष्मादम्भसः क्षुभितगुणात् कालप्रेरितात् प्रथमतो गन्धमात्रमभूत् । तस्मात् पृथिवी । घ्राणमिन्द्रियं गन्धग्राहकमिति प्रमाणम् ॥ ४४ ॥

गन्धस्य भेदानाह—

**करम्भपूतिसौरभ्यशान्तोग्राम्लादिभिः पृथक् ।**

---

प्रकाशः ।

+ **कषाय** इत्यत्र । इतोऽपीत्यादि । एतेन चित्ररसोऽप्यतिरिक्तोऽङ्गीकार्य इत्यपि ज्ञापितम् । एकपदस्य विवरणम्—वस्तुत इत्यादि । भूयसीष्वप्यप्सु स्वल्पस्याऽपि लवणादेर्निक्षेपे रसः परिवर्तत इत्यव्यक्तत्वमुक्तं ज्ञेयम् । एवं च कषायाद्यन्यतमत्वं जलतन्मात्रत्वं चेति द्वयं रसस्य सामान्यलक्षणं ज्ञेयम् ।

* क्लेदनमित्यत्र । अष्टौ वृत्तय इति । एतेन क्लेदनाद्यष्टवृत्तिकत्वं जलस्य सामान्यलक्षणमत्र । घृततैलादौ यत्क्लेदकत्वं सङ्ग्राहकत्वं च दृश्यते, सोऽपि जलधर्म एव । वह्निसंसर्गादिना परममिव्यज्यते कार्यस्य पाञ्चभौतिकत्वात्, तेन नाऽतिव्याप्तिशङ्कालेशः । तेषु यो जलव्यवहाराभावः, स तु भूतान्तरकृतप्रतिबन्धनिबन्धनः, करकास्विव । करकास्वपि काठिन्यगाढत्वयोः प्रतीतिर्न भ्रान्ता, तत्र नैमित्तिकयोस्तयोः सत्वात् । दृत्येव जलेन संरुद्धे वायौ ततोऽतिशैत्येन जलस्य पिण्डने करकोत्पत्तेः । तेषां द्वैभौतिकत्वात् । अत एव हिमालयोपत्यकागतगङ्गाप्रवाहोपरि पुरुषाः पद्भ्यां यायमाना दृश्यन्ते, अन्यथा मज्जेयुरेव । शीतकाले च मिहिकायामम्भसि स्थापिते प्रातर्जलपात्रेऽधोमुखे कृतेऽपि न तस्य जलस्य पातः । क्षुरिकया विदार्य फलजलस्य भक्षणमपि मध्यदेशीयजनानुभवगोचर इति दिक् ।

द्रव्यावयववैषम्याद्गन्ध एको विभिद्यते ॥ ४५ ॥

+ करम्भेति। करम्भो मिश्रो गन्ध, व्यञ्जनादिषु प्रसिद्ध। पूतिर्दुर्गन्ध। सौरभ्यं चन्दनादिगन्ध। पूतिसौरभ्ययोरेव शान्तोग्रौ भेदौ। शतपत्रादिगन्ध शान्त, उग्रश्चम्पकादेर्लशुनादेश्च। अम्ल पर्युषित-सूपादे। आदिशब्देन धूपादीनामनेकविधो गन्ध उक्त। गन्धानां न जातिसाङ्कर्यम्, किन्तु ते भेदाः पृथगेव; चित्ररस इव चित्रगन्धाभावात्। सजातीयरसस्य गन्धस्य वा कारणगतस्याऽनभिव्यक्तस्य कार्ये रसगन्धजननात्। अत एव हरीतक्यादेरपि रसो भिन्न, धूपादेश्च गन्ध। अवान्तरानन्त्यं न दोषाय, अन्यथा पदार्थविभाजकोपाधीनां पञ्चविंशतिभेदा न स्युः। एतदाह—पृथगिति। तत्त्वे हेतुमाह—द्रव्यावयवेति। द्रव्यस्याऽऽधारभूतस्य ये अवयवा, ते विजातीयरसगन्धवन्त इति गन्धो विभिद्यते। अथवा, यथा योजिता अवयवा गन्धमुत्पादयन्ति। स्वभावत सुरभिम्. ते चेत् विषमा योजिता भवन्ति, तदा त गन्धं नोत्पादयन्तीति। गन्धनाश, सम्यगनभिव्यक्तिर्वा गन्धाभास करम्भादिशब्दैरुच्यते। वैषम्यस्य नैकविधत्वात्, जलादीनां बहूनां तत्सम्पादकत्वात्, गन्धानन्त्यमेव। तदाह—एकोऽपि गन्धो विभिद्यत इति॥४५॥

पृथिवीं लक्षयति—

भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम् ।
सर्वसत्त्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम् ॥ ४६ ॥

* भावनमिति। पृथिव्याः पञ्च वृत्तय। स्वभावत आधारभूता भवति, आधेयभूता च देहवृक्षादिरूपा। तेषां कारणभूता च, प्रतिमारूपा च, मनसोपासनार्थं कल्प्या च। एवं पञ्चविधा भवति। तत्र भावनं मानसम्। ब्रह्मण स्थानं प्रतिमा। धारणरूपा स्थूला। सतां घटादिपदार्थानां विशेषणं नानाविधकारणरूपता। सर्वेषां सत्त्वानां जीवानां ये गुणा स्थूलसूक्ष्मनीलपीतादिभेदा यस्मात्। अथवा, ब्रह्मणो भावनं प्रतिमा, स्थानं जलादीनाम्. धारणमाधारत्वमनियतं सर्वेषां भवति, स्थानं नियतमिति विशेष। सतामाकाशादी

प्रकाश।

+ करम्भेत्यत्र। मिश्रशान्तोग्रगन्धस्वीकारे जातिसाङ्कर्यात् सुरभित्वादिषु जातित्वहानि। यत्र सौरभ्यम्, तत्र पूतित्वाभावः। कुसुमादौ यत्र पूतित्वम्, तत्र सौरभ्याभाव, लशुनादौ उभयो समावेशो व्यञ्जनादावितिशङ्कानिरासाय मिश्रगन्धमतिरिक्तमङ्गीकरोतीत्याशयेनाहु—गन्धानामित्यादि। ते इति। मिश्राख्या। तत्र हेतु—चित्रेत्यादि। चित्र सङ्कर। अतिरिक्ताङ्गीकारे उपपत्तिमाहु—सजातीयेत्यादि। तथा च मधुराम्लसुरभिपूतिद्रव्येष्वनभिव्यक्तेष्वनभिव्यक्तौ मिश्ररसगन्धौ, तदुभयद्रव्यारब्धे द्रव्ये तदुभयद्रव्ये रस गन्ध च जनयत इत्यर्थ। एकपदानुरोधेन पक्षान्तरमाहु—अथवेत्यादि। तथा चैक एवानभिव्यक्तसुरभिगन्ध, शेषास्तु तदाभासा इत्यर्थ। अत्रेद सिध्यति। अण्डसृष्टे पूर्वभावात् तत्त्वत्वं गन्धादीनाम्, तदेव मूले एकपदेनोक्तम्। तदुत्तर त्वेते भेदा भौतिकगुणरूपा कार्या एव, न तु तत्त्वरूपा इति च 'द्रव्यावयववैषम्यात्' इत्यनेनोक्तम्। व्यावहारिक प्रत्यक्षमपि न दुष्टमिति। एव च भूमितन्मात्रत्व करम्भाद्यन्यतमत्व च गन्धसामान्यलक्षण ज्ञेयम्।

* भावनमित्यत्र। भावनपदस्य ब्रह्मण इत्यनेनान्वयमङ्गीकृत्य श्रीधरोक्त पक्षमाहु.—अथवेत्यादि। अस्मिन् पक्षे स्थानधारणयोरैकार्थ्येन पौनरुक्त्यमाशङ्क्य भेदकमाहु—अनियतमित्यादि। श्रीधरोक्ते व्याख्याने

१ करञ्जादिषु ङ २ गन्धादीनाम् क ख ङ ३ गन्धोऽपि क ख ङ ४ सुरभि ङ ५ भवन्ति ख

नामवच्छेदकत्वम्, सर्वेषां सत्त्वानां प्राणिनां तत्तद्गुणानां च पुंस्त्वादीनामुद्भेदः परिणामविशेषैः प्रकटीकरणम्। वस्तुतस्तु पूर्वमुत्पन्नायाः पृथिव्या एतानि लक्षणानि जलादिभ्यो व्यावृत्तानि वक्तव्यानि । प्रतिमा चित्रादे(दि)श्चाकृतिमात्रे भवतीति ब्रह्मण इति वैयर्थ्यं स्यात्, नाऽपि स्थानं पृथक्तया स्थितिः, तत्त सूर्यादेरपि संभवतीति न पृथिव्या विशेषलक्षणम्। तस्माद्भावनं सर्वपदार्थरूपापादकत्वम्, सर्वमेव भावयतीति । ब्रह्मणः, शब्दब्रह्मणः परब्रह्मणश्च, हृदयकण्ठादिस्थानरूपत्वम् । धारणं सर्वस्यापि जगतः । सतां सर्वेषामेव सत्त्वानां विशेषणं व्यावर्तकम्, अवयवभूतं वा । काष्ठादावग्निं प्रकटीकृत्य इतरव्यावृत्तिं जनयति, इतरथा तेजसः स्वरूपमेव क्वापि नाभिव्यक्तमिति कुतो व्यावृत्तिर्भवेत् । एवं जलमपि स्वान्तर्गतं रसरूपं नद्यादौ प्रकटीकृत्य प्रदर्शयति । एवं व्यजनादिना वायुम्, गर्तादिना आकाशम्, शरीरादावहङ्कारादिसर्वाण्येवेन्द्रियाण्यात्मानं च । किञ्च, सर्वसत्त्वानां जीवानां यावन्तो गुणाः, आब्रह्म तृणस्तम्बपर्यन्तं भेदाः, तेषामुद्भेदः पृथिव्यामेव ॥ ४६ ॥

श्रोत्रादीनां शब्दादिग्राहकत्वं प्रमाणत्वेनोक्तम्, तदेव तेषां लक्षणमित्याह—सार्द्धद्वाभ्याम्—

**नभोगुणविशेषोऽर्थो यस्य तच्छ्रोत्रमुच्यते ।**
**वायोर्गुणविशेषोऽर्थो यस्य तत्स्पर्शनं विदुः ॥ ४७ ॥**
**तेजोगुणविशेषोऽर्थो यस्य तच्चक्षुरुच्यते ।**
**अम्भोगुणविशेषोऽर्थो यस्य तद्रसनं विदुः**
**भूमेर्गुणविशेषोऽर्थो यस्य तद्घ्राणमुच्यते ॥ ४८ ॥**

+ नभोगुण इति । तन्मात्रारूपोऽपि शब्द आकाशस्य गुणभूतो भवति । यथा कार्ये कारणप्रतीतिः, पटे तन्तुप्रतीतिवत्; तथा आकाशस्य शब्दो गुणः । एवमग्रेऽपि नभोगुणः शब्दोऽसाधारणः, न तु

प्रकाशः।

अस्वारस्यं दर्शयन्ति—वस्तुत इत्यादि । आकृतिमात्र इति । यस्य कस्याचिदाकृतिमात्रे । स्थानलक्षणमप्यसङ्गतमित्याहुः—नाऽपीत्यादि । सिद्धान्तमाहुः—तस्मादित्यादि । एवं सति भावनादिपञ्चवृत्तिकत्वं पृथिवीसामान्यलक्षणम्, एकैकवृत्तिकत्वं च विशेषलक्षणमित्येवं षड् लक्षणानि ज्ञेयानि । गन्धवत्त्वनीलरूपत्वादिकं विशेषणलक्षणमेव, सामान्यलक्षणत्वे तु पाषाणशुक्लपटादावव्याप्त्यापत्तिः, अनुद्भूता(त)गन्धादिकल्पनापत्तिश्चेत्यादिकमूह्यम् । यद्यपि धारणवृत्तिकत्वं प्राणादिधिष्ण्यरूपे आकाशे मेघादिधारके वायौ तेजसि जले चाऽतिव्याप्नोतीति विशेषलक्षणत्वं तस्य न घटते, तथापि सांसिद्धिकशीतोष्णत्वानधिकरणसांसिद्धिकवेगव्यधिकरणस्पर्शाधिकरणत्वमत्र विवक्षितमिति न कश्चिद्दोष इति सर्वं समञ्जसम् । इदं च भौतिकेष्वपि व्यापकमिति व्यवहारोपयोगीति ध्येयम् । अत्र जलादिचतुष्केऽतिव्याप्तिवारणाय—शीतेत्यादि । सजलघटादावतिव्याप्तिवारणाय सांसिद्धिकेति । न चाऽसम्भवः । भूमौ नैमित्तिकस्यैव वेगस्याऽनुभवसाक्षिकत्वात् । सांसिद्धिकत्वे गन्धादिवत् सर्वदाऽनुभवप्रसङ्गात् । यद्यपि पाकजाऽनुष्णा(ष्णाशी)तस्पर्शवत्त्वं व्यवहार उपयुज्यते, तथापि पाकजत्वस्य शास्त्रमात्रगम्यत्वेन दुरधिगमत्वात् इदमेव सम्यगिति दिक् ।

+ नभोगुण इत्यत्र । अत्र नभोगुणविशेषपदेन शब्दोल्लेखादन्योन्याश्रयोऽपि परिहृतो बोध्यः । यद्यप्यत्र गुणमात्रग्राहकत्वं लक्षणत्वेनोक्तम्, तथापि त्वग्दृशोर्द्रव्यग्राहकत्वमप्यस्ति । अन्येषां तु न, यदि स्या-

१ हृदयकरणादि ग. हृदयान्तःकरणादि. ढ. २ भावयति क. ढ. ३ सत्त्वानामिन्द्रियाणां ह. क.

संयोगादिरूपः, स एवाऽर्थो विषयो यस्य तत् श्रोत्रम् । उच्यत इति प्रमाणम्, अनेनाऽन्ये व्याख्याताः। वायोर्गुणविशेषः स्पर्शः, तेजोगुणविशेषो रूपम्, अम्भोगुणविशेषो रसः, एवं भूमेर्गुणविशेषो गन्धः ॥ ४७ ॥ ४८ ॥

कारणानुप्रवेशात् उत्तरोत्तरं धर्माधिक्यमाह—

**परस्य दृश्यते धर्मो ह्यपरस्मिन्समन्वयात् ।**
**अतो विशेषो भावानां भूमावेवोपलक्ष्यते ॥ ४९ ॥**

*परस्येति । परस्य कारणस्य धर्मः, अपरस्मिन्कार्ये, कारणसमन्वयात् धर्मो दृश्यते । अतः स्वधर्मः कारणधर्मश्च कार्ये भवति । सर्वेऽपि विशेषाः, पञ्चाऽपि गुणाः, अन्तिमकार्ये पृथिव्यामेवेत्याह—अतो विशेष इति । साङ्ख्यशास्त्रत्वात् नाऽस्य विशेषतः सर्वबोधकत्वम् । वीणादिशब्दो वाद्गिनित्यक इति कारणसंबन्धेन तथात्वम् । चित्राणि च रूपाणि वरमासानि । सर्वेऽपि विशेषा भूमावेव उपलक्ष्यन्ते[1] दृश्यन्ते ।४९।

एतेषामुत्पत्तिस्वरूपलक्षणान्युक्त्वा, कार्यतोऽपि तानि वक्तुम्, तेभ्यो ब्रह्माण्डोत्पत्तिमाह—

**एतान्यसंहत्य यदा महदादीनि सप्त वै ।**
**कालकर्मगुणोपेतो जगदादिरुपाविशत् ॥ ५० ॥**

× एतानीति । यद्यचेतनेभ्य एव तत्त्वेभ्यः कार्यमुत्पद्येत, तदाऽस्मिन्सङ्घाते नाऽऽत्मा मृग्यः स्यात्, सर्वस्यैव जडत्वात्[2] । अतः सङ्घातश्चेतनसहितानामिति वक्तुं केवलानामकारणत्वमाह—एतानि यदा, असंहत्य अमिलित्वा, मुख्यानि सप्त महदादीनि स्थितानीत्यर्थात् । तदा भगवान् कालप्राप्यदृष्टसत्त्वादिगुणैर्मिलितः सर्वजगत्कारणकारणभूत एतान्युपाविशत् । अत्रैकं वाक्यमार्थिकं स्यैपाऽऽक्षिप्यते । अथवा, भगवा-

प्रकाशः

त्वचा परिमाणादिरपि द्रव्यगतो गृह्येतेति । अत्र तदनुक्तिस्तु शब्देऽप्यतिव्यापकत्वादवान्तरपदार्थानिरूपकत्वात् साधर्म्याप्रतिज्ञानाच्चेति ज्ञेयमिति दिक् ।

* परस्येत्यत्र । स्पर्शरूपरसानां चतुस्त्रिद्विभूतेषु विद्यमानत्वेन सामान्यगुणत्वात् त्वक्चक्षूरसनानां लक्षणेषु गुणविशेषपदमसङ्गतमित्याशङ्कानिरासायाहुः—कारणेत्यादि । तथा च, तेषु सामान्यत्वप्रतीतेः कारणसमन्वयप्रयुक्तत्वेन तेषां गुणने तदीयत्वाभावान्न गुणविशेषत्वहानिरिति न तदसङ्गतिरित्यर्थः । 'परस्य' इत्यर्द्धेनैव चारितार्थ्यात् 'अतो विशेषः,' इत्यर्द्धपदं व्यर्थमित्याशङ्कायामाहुः—साङ्ख्येत्यादि । तथा च वेदोक्तानां लोकसिद्धानां च धर्मान्तराणां यो भूमावुपलम्भः, सोऽपि तत्तत्कारणसमन्वयहेतुक एव, नत्वसतः सत्तारूप इति प्रमेयमुपलक्षणविधया निरूपयितुमिदमर्द्धम्, अतो न व्यर्थमित्यर्थः । तथात्वं वर्णपदादिरूपत्वम् । तेन शब्दोऽपि चित्रोऽतिरिक्त इति ज्ञापितम् ।

× एतानीत्यत्र । सप्तेत्यादि । महदहंभूतानीति सप्त । अर्थादिति । घटेन जलमानयेत्युक्ते करणतानिर्वाहकत्वे सच्छिद्रेतरत्वं यथा करणतारूपार्थबलाद्भला(?)द्भासते, तथा स्थितिरप्यमेलननिर्वाहकतया त्वदर्थरूपार्थबलाद्भासत इत्यर्थः । कल्पनां[3] विनापि श्लोकद्वयस्यैकवाक्यत्वे सुखे(न)प्रकृतार्थबोध इत्याशयेनाहुः—अथवेत्यादि । यदेत्यस्य व्याख्यानं पश्चादनेन क्रियते ।

1 उपलभ्यन्ते. ख. ध. 2 जडत्वात्. क ध. ङ. 3 कल्पनया. ग. अर्थबलान् ध.

नैव असंहत्य, एतान्यमेलयित्वा, पश्चादुपाविशदिति । अग्रे उत्पद्यमानं जगत् यथा चतुर्णामधीनं भवत्या-त्मकालकर्मस्वभावानाम्, तदर्थं कालादिभिः सह प्रवेशः ॥ ५० ॥

ततो ब्रह्माण्डमुत्पन्नमित्याह—

ततस्तेनाऽनुविद्धेभ्यो युक्तेभ्योऽण्डमचेतनम् ।
उत्थितं पुरुषो यस्मादुदतिष्ठदसौ विराट् ॥ ५१ ॥

तत इति । ततो भगवत्प्रवेशानन्तरम्, तेन भगवता अनुविद्धेभ्यो योजनार्थं गुणान् गृहीत्वा सूच्येव विद्धेभ्य, प्रथमतोऽचेतनमेवाऽण्डमुत्थितम् । यस्मादण्डादसौ पुरुषः पूर्वं तत्त्वेषु प्रविष्टः, स एव विरा-ड्रूपो भूत्वा, उदतिष्ठत् ॥ ५१ ॥

ब्रह्माण्डे चेतनाचेतनोत्पत्तिमुक्त्वा तस्य नामरूपे आह—

एतदण्डं विशेषाख्यं क्रमाद्वृद्धैर्दशोत्तरैः ।
तोयादिभिः परिवृतं प्रधानेनाऽऽवृतं बहिः ॥
यत्र लोकवितानोऽयं रूपं भगवतो हरेः ॥ ५२ ॥

एतदण्डमिति । विशेष इत्यस्य नाम । स्वयं सर्वतः पञ्चाशत्कोटियोजनविस्तृतं स्वतः । तत उत्तरो-त्तरं पूर्वस्माद्दशगुणं वृद्धैस्तोयादिभिः सर्वतः परिवृतम्, अन्ततः प्रधानेन चाऽऽवृतम् । एवमस्य महत्त्वम् । अत्र स्थितसर्वजगतो भगवत्त्वेनाऽपि महत्त्वमाह—यत्र लोकवितानोऽयमिति । अयं सर्वोऽपि लोकविस्तारो भगवतो रूपम् । तस्मादेतद्भगवदाधारभूतम् ॥ ५२ ॥

* स बहुकालं पुरुषत्वसम्पादनार्थं तस्यां पुरि शयनं कृतवान् 'पुरि शेते' इति पुरुषपदनिर्वचनात् । या-वदयं शयनं कृतवान्, तावत्पूर्वमनुवेदरूपेण प्रविष्टा भगवदंशा भोगं न प्राप्तवन्तः । यदा तु पुनस्तत उत्थाय तस्मात् पृथग्भूतः सन् तत्र निविष्टः, तदा सर्वांशानां भोगार्थं तत्र स्थानानि जातानीत्याह—

हिरण्मयादण्डकोशादुत्थाय सलिलेशयात् ।
तमाविश्य महादेवो बहुधा निर्बिभेद खम् ॥ ५३ ॥

हिरण्मयादिति । प्रकाशबहुलत्वात् सुवर्णमयात् सलिले विद्यमानान्नारायणशब्दवाच्यात् विराड्देहा-दुत्थाय, पुनस्तमाविश्य सर्वत्र विद्यमानमाकाशं बहुधा निर्बिभेद, बहूनि छिद्राणि कृतवान् । भगवदु-त्थानेऽपि कोशस्य नाशाभावार्थं हिरण्मयत्वमुक्तम् । रक्षसां बाधाभावार्थं सलिलेशयत्वमुक्तम् । महादेवो हि अल्पनिरूप्यो भवतीत्यस्यैः सहितः समर्थस्तत्र शरीरे छिद्राणि कृतवान् । पुनरपि प्रविष्टोऽयं भेदमात्रं कृतवानिति पुरुषत्वमेव स्थितम् । नोऽनेन विराजः कार्यकरणसामर्थ्यं भवति । यथा प्रतिमादौ भगवान्

प्रकाशः।

* हिरण्मयादित्यस्याभासे । पूर्वमनुवेदरूपेण प्रविष्टा इति । पूर्वं प्रवेशमनुलक्षीकृत्य वेदरूपेण शब्दार्थयोर्नित्यसम्बन्धात् तत्तत्प्रतिपाद्यनित्यपरिच्छिन्नभगवदवयवरूपेण प्रविष्टा इत्यर्थः । अल्प-निरूप्यो भवतीति । महत्त्वस्य सापेक्षवृत्तिकत्वात् तथा भवति । अनेनेति । क्रियादिरहितेन केवलावे-

१ अनुवेध. क. अनुस्वेद. ध.   २ पुन. क घ ङ.   ३ नोचेत् क   अनेनैव घ. ङ.

तिष्ठति, तथैवाऽयं स्थित इति ज्ञातव्यम्, अन्यथा तत्त्वेभ्य आत्मविवेको न स्यात् ॥ ५३ ॥

छिद्राणां विनियोगमाह–निर्भिद्यतेत्याद्यष्टभिः—

**निर्भिद्यताऽस्य प्रथमं मुखं वाणी ततोऽभवत्।**
**वाण्या वह्निरथो नासे प्राणोतो घ्राण एतयोः ॥ ५४ ॥**

* प्रथमत आस्यं निर्भिन्नं विवरात्मकम्। तस्य मुखमिति नाम । अस्येति पाठः। प्रथममस्य मुखं निर्भिन्नम्, ततो वाणी वागिन्द्रियं तत्राऽभवत् प्रविष्टम्, वाण्या सह वह्निरपि तत्राऽभवत् । अथो छिद्रान्तरे भिन्नप्रक्रमेण नासापुटे निरभिद्येताम् । तयोर्घ्राणमिन्द्रियं निविष्टम् । तत्र देवतया विद्धमित्याह–प्राणोत इति । प्राणेन उतः स्यूतः सम्बद्धः । उभयोरेक एव निविष्टः । अयं प्राणः नेन्द्रियदेवतारूपः, किन्तु सर्वनियामक आसन्यात्मकः ॥ ५४ ॥

तस्य तत्र कथनप्रयोजनमाह—

**प्राणाद्वायुरभिद्येतामाक्षिणी चक्षुरेतयोः ।**
**तस्मात्सूर्योऽन्वभिद्येतां कर्णौ श्रोत्रं ततो दिशः ॥ ५५ ॥**
**निर्बिभेद विराजस्त्वग्लोमश्मश्र्वादयस्ततः ।**
**तत ओषधयश्चासन् शिश्नं निर्बिभिदे ततः ॥ ५६ ॥**
**रेतस्तस्मादाप आसन्निरभिद्यत वै गुदम् ।**
**गुदादपानोऽपानाच्च मृत्युर्लोकभयङ्करः ॥ ५७ ॥**
**हस्तौ च निरभिद्येतां बलं ताभ्यां ततः स्वराट् ।**
**पादौ च निरभिद्येतां गतिस्ताभ्यां ततो हरिः ॥ ५८ ॥**
**नाड्योऽस्य निरभिद्यन्त ताभ्यो लोहितमाभृतम् ।**
**नद्यस्ततः समभवन्नुदरं निरभिद्यत ॥ ५९ ॥**
**क्षुत्पिपासे ततः स्यातां समुद्रस्त्वेतयोरभूत् ।**
**अथाऽस्य हृदयं भिन्नं हृदयान्मन उत्थितम् ॥ ६० ॥**
**मनसश्चन्द्रमा जातो बुद्धिर्बुद्धेर्गिरां पतिः ।**
**अहङ्कारस्ततो रुद्रश्चित्तं चैत्यस्ततोऽभवत् ॥ ६१ ॥**

प्राणादिति । तस्मात् प्राणात् वायुरिन्द्रियदेवतारूपो निरभिद्यत । भगवत्कृतसृष्टावश्विनीकुमाराविन्द्रियदेवता, भगवदर्थसृष्टौ तु वायुरिति विशेषः । ततोऽक्षिणी गोलके । उभयोरपि चक्षुरित्येकमिन्द्रियम्, तस्मात्सूर्य आविर्भूतः । कर्णावन्वभिद्येताम्, ततः श्रोत्रम्, ततो दिशः । विराजस्त्वक् निर्भिन्ना ।

प्रकाशः ।

ऽन ( सक्रियत्वेन (?) प्रयोजनमाहुः–अन्यथेत्यादि । अन्यथेति निष्क्रियतयास्थितौ ।

* निर्भिद्यतेत्यत्र । उभयोरिति । नासयोः ।

१ निरभिद्यत.. ख. २ निर्भिद्यत. क.

निर्बिभेदेत्याविरभूदित्यर्थः । तत्र लोम इन्द्रियम्, श्मश्रुकेशाश्च लोमविशेषाः, तत्र देवता ओषधयः। यस्यां सृष्टौ त्वक्चर्मणोरैक्यम् । स्पर्शस्त्वागिन्द्रियेण । वायुर्देवता केन गृह्यत इति पूर्वमुक्तम्। शिश्नं गोलकम् । रेत इन्द्रियम्, आपो देवताः 'आप एव पुरुषाकारा भवन्ति' इति। पूर्वं को देवः? सर्वत्र वैलक्षण्ये सृष्टिभेदो नियामकः । गुदं पायुस्थानम्, अपान इन्द्रियम्। तत्र मृत्युर्देवः। स च लोकभयङ्कर इति वैराग्यार्थमुक्तम् । मृत्युरुपर्येव तिष्ठति, मध्ये मृत्युरिति च । हस्तौ गोलकस्थानीयौ, बलमिन्द्रियम्। ताभ्यां सहैव निर्गतामिति तृतीया। ततो बलात् स्वराद् इन्द्रः। एवं पादावपि । गतिरिन्द्रियम्। ततो गतिरूपात् हरिर्विष्णुर्देवः। नाड्यो गोलकम् । आसमन्तात् भृतं लोहितमिन्द्रियम् । आभृतं जातमिति वा। नद्यो देवताः। उदरं गोलकम् । क्षुत्पिपासे इन्द्रियम् । समुद्रो देवता । हृदयं चतुर्णां गोलकम् । तत्रैकं मन इन्द्रियम्। मनसः सकाशाज्जातश्चन्द्रमास्तस्य देवः। बुद्धिरपीन्द्रियम्। गिरां पतिर्देवः। अहङ्कारः इन्द्रियम्, रुद्रो देवता । चित्तमिन्द्रियम्, चैत्यो जीवो देवता इति । एते सर्वे तत्तत्स्थानेऽभिव्यक्ता भगवदंशाः, चैत्यो मुख्यो भगवदंशः ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६०॥ ६१ ॥

सर्वेभ्यः तं विवेक्तुं पुनः सर्वेषां निर्गमनप्रवेशावाह—

**एते ह्यभ्युत्थिता देवा नैवाऽस्योत्थापनेऽशकन् ।**
**पुनराविविशुः खानि तमुत्थापयितुं क्रमात् ॥ ६२ ॥**

एते इति । एते देवाः स्वयमभ्युत्थिता अस्य देहस्योत्थापने न शक्ताः । य एवेनं देहमुत्थापयति, स जीव आत्मेति ज्ञातव्यम् । सामर्थ्ये विद्यमानेऽपि नोत्थापयन्तीति न मन्तव्यम्, किन्तु सामर्थ्यमेव नास्तीति । तदर्थमुपाख्यानमाह—पुनराविविशुरित्यादिना । तदेव शरीरम्, स्वस्वस्थाने पूर्वं भगवता सह निविष्टा अपि, पुनराविविशुः । खानि छिद्राणि । प्रयोजनम्—तमुत्थापयितुमिति । क्रमादिति स्वस्वबलपरीक्षार्थम् ॥ ६२ ॥

**वह्निर्वाचा मुखं भेजे नोदतिष्ठत्ततो विराट् ।**
**घ्राणेन नासिके वायुर्नोदतिष्ठत्ततो विराट् ॥ ६३ ॥**
**अक्षिणी चक्षुषाऽऽदित्यो नोदतिष्ठत्ततो विराट् ।**
**श्रोत्रेण कर्णौ च दिशो नोदतिष्ठत्ततो विराट् ॥ ६४ ॥**
**त्वचं रोमभिरोषध्यो नोदतिष्ठत्ततो विराट् ।**
**रेतसा शिश्नमापस्तु नोदतिष्ठत्ततो विराट् ॥ ६५ ॥**
**गुदं मृत्युरपानेन नोदतिष्ठत्ततो विराट् ।**
**हस्ताविन्द्रो बलेनैव नोदतिष्ठत्ततो विराट् ॥ ६६ ॥**
**विष्णुर्गत्यैव चरणौ नोदतिष्ठत्ततो विराट् ।**
**नाडीर्नद्यो लोहितेन नोदतिष्ठत्ततो विराट् ॥ ६७ ॥**
**क्षुत्तृड्भ्यामुदरं सिन्धुर्नोदतिष्ठत्ततो विराट् ।**

हृदयं मनसा चन्द्रो नोदतिष्ठत्ततो विराट् ॥ ६८ ॥
बुद्ध्या ब्रह्माऽपि हृदयं नोदतिष्ठत्ततो विराट् ।
रुद्रोऽभिमत्या हृदयं नोदतिष्ठत्ततो विराट् ॥ ६९ ॥

* वह्निर्देवो वाचेन्द्रियेण सह प्रथमतो मुखं भेजे । ततो निर्गत्य तत्र प्रविष्टः । तस्मिन् प्रविष्टे विराट् सलिलात् नोदतिष्ठत् । सर्वत्रेन्द्रियेण सह देवता गोलके निविष्टा । विराट् ततो नोत्थितः । विष्णुर्नत्यैवेति । इन्द्रियेण सह प्रविष्टो विष्णुस्तावन्मात्रप्रयोजको नाऽधिकं करोति । एवं सर्वत्र ज्ञातव्यम् । मन्त्राधिष्ठातृरूपेष्वपि मर्यादैषा । पुरुषोत्तमस्तु सर्वं करोति चेत् स सेवितुं शक्यते, प्राप्यते वा । रुद्रपर्यन्तं देवाः सर्वे निविष्टाः प्रत्येकम् । ततो विराट् नोदतिष्ठत्॥६३॥६४॥६५॥६६॥६७॥६८॥६९॥

चित्तेन हृदयं चैत्यः क्षेत्रज्ञः प्राविशद्यदा
विराट् तदैव पुरुषः सलिलादुदतिष्ठत ॥ ७० ॥

यदा पुनश्चित्तेनेन्द्रियेण सह । हृदयम्, चैत्यो जीवः, क्षेत्रज्ञो देहाभिमानी, यदैव प्राविशत्; तदैव पुरुषो भगवत्सहितो देहः, सलिलादुदतिष्ठत ॥ ७० ॥

अन्तरङ्ग एव सेवको महाराजमुत्थापयितुं शक्नोति. नाऽन्य इति दृष्टान्तेन स्पष्टयति—यथेति द्वाभ्याम्—

यथा प्रसुप्तं पुरुषं प्राणेन्द्रियमनोधियः ।
प्रभवन्ति विना येन नोत्थापयितुमोजसा ॥ ७१ ॥
तमस्मिन्प्रत्यगात्मानं धिया योगप्रवृत्तया ।
भक्त्या विरक्त्या ज्ञानेन विविच्याऽऽत्मनि चिन्तयेत् ॥ ७२ ॥

यथा स्वसामग्र्या सुप्तं पुरुषं बहिः स्थिताः प्राणेन्द्रियमनोधियः, येनाऽन्तःस्थितेन जीवेन विनोत्थापयितुं न प्रभवन्ति, तमेव प्रत्यगात्मानं शरीराभिमानिनं जीवम्, अस्मिन् रुद्धाते, इतरव्यावृत्त्या चिन्तयेत् । तत्र चिन्तने बुद्धिः करणम् । साऽपि न प्राकृती, किन्तु योगेन विपक्वा, योगेन प्रवृत्ता वा । योगसिद्धेरित्यर्थः । तस्य सहायभूतं भक्त्यादित्रयम् । तैः सहितया बुद्ध्या इतरान् दूरीकृत्य तमेव चिन्तयेत् । बुद्धेरभ्यासं तत्र कुर्यात् । तथा सत्युत्तरत्र तस्य ब्रह्मभावो भावयितुं सुकर इति भावः ॥ ७२ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां
तृतीयस्कन्धे षड्विंशाध्यायविवरणम् ।

---

प्रकाशः

* विष्णुरित्यत्र । एवेति । तत्कृत्यमात्रसहायकत्वरूपेत्यर्थ ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे षड्विंशाध्यायविवरणं सम्पूर्णम् ।

---

१ रूपम् न ब

# सप्तविंशाऽध्यायविवरणम् ।

* सांख्येनेतरभिन्नस्य ज्ञाने जाते तथाऽऽत्मन ।
ब्रह्मरूपेण तज्ज्ञानं सप्तविंशे निरूप्यते ॥ १ ॥
साधनानि स्वरूपं च चिन्तनार्थमिहोच्यते ।
युक्तयोऽप्यत्र कथ्यन्ते विपर्ययनिवृत्तये ॥ २ ॥

पूर्वाध्याये सङ्घातेऽपि विद्यमान आत्मा भिन्नतया निरूपित । तस्य मोक्षो निरूप्यते । स चेद्बहुकालं प्रकृतौ स्थितः, मञ्जिष्ठादिभिरिव रञ्जकद्रव्यै वस्त्रमिव रक्त स्यात्, तदा तस्य मोक्षो न सम्भावित इति सूचयंस्तस्य स्थितिमाह—

## श्रीभगवानुवाच ।

**प्रकृतिस्थोऽपि पुरुषो नाऽज्यते प्राकृतैर्गुणैः ।**
**अविकारादकर्तृत्वान्निर्गुणत्वाज्जलार्कवत् ॥ १ ॥**

\+ प्रकृतिस्थोऽपीति । सर्वदाऽय जीवः प्रकृत्यायेव प्राकृतसङ्घाते वर्तते, तथापि प्रकृते सत्त्वरजस्तमोगुणैर्नोऽज्यते, अक्तो न भवति, यथा पुरुषस्तैलादिनाऽज्यते । अञ्जनाभावे हेतुचतुष्टयमाह—अविकारादित्यादिचतुर्भि पदै । प्रकृतेर्गुणा स्वस्मिन् प्रविष्ट वैस्तुतोऽक्त कुर्वन्ति । स्वय वा तत्र प्रविष्टा । तत्र प्रवेशे विकृतमेव प्रविशन्तीति विकाराभावान्न प्रवेशः । भावस्य हि विकारा भवन्ति । यो हि भवनमनु-

---

### प्रकाशः।

* अथ सप्तविंशाऽध्याये विवरणं चिकीर्षवः सङ्गते पूर्वमेव निर्धारितत्वादर्थमेवाहु —साङ्ख्येनेत्यादि । तथात्मन इति । सङ्घातविवक्तस्यात्मन इत्यर्थ । एतेन ब्रह्मरूपतया ज्ञातस्यैवात्मन इन्द्रियरूपत्वमिति ज्ञापितम् । तादृशेनैव तेन सर्वदर्शनादिति । एव च कपिलोक्तौ पूर्वोत्तराध्याययो शेषशेषिभावोऽपि स्फुटो ज्ञापित सङ्गतित्वेनेति ज्ञेयम् । अवान्तरवाक्याना सङ्गतिमाहुः—साधनानीत्यादि । चिन्तनार्थमिति ब्रह्मभावचिन्तनार्थम् । तथा च साधननिरूपकाणा स्वरूपनिरूपकाणा च हेतुतासङ्गति, युक्तिनिरूपकाणा तूपोद्घात इत्यर्थ । एतेनाऽस्य कामाध्यायत्वमपि स्फुटीकृतम्, ब्रह्मभावस्यैव भगवद्विचारितकानरूपत्वादिति ।

\+ आद्यपद्ये । तत्र प्रवेश इति । परस्मिन् गुणप्रवेशे विचार्यमाणे इत्यर्थ । विकाराभाव एव कथमित्याकाङ्क्षायामाहु —भावस्येत्यादि । भावस्येति । भवनक्रियाश्रयस्य । व्युत्पत्तिस्तु, भवतीति भव, स एव, स्वार्थेऽणा भाव इति । इद चानादिरात्मेति पूर्वोक्तलक्षणेऽनादिपददानस्य प्रयोजन (सुसूक्ष्म्)सूक्तम् । भवनानुभवितृत्वेनानादित्व समर्थितम् । एवं सति अनुमानचतुष्टयेनाऽयमर्थः सिध्यतीति तानि प्रयुञ्जते । तथाहि । पुरुषोऽनञ्ज्य, अन्यकर्तृकप्रवेशायोग्यत्वात्, अन्यकर्तृकप्रवेशायोग्यः, अविकारित्वात्, अविकारी, अनादित्वात्, यदेव तदेवम्, कालवत्, यन्नैव तन्नैवम्, तत्त्वादिवत् । अनादि, भवनानुभवितृत्वात्, यन्नैवं तन्नैवम्, देहादिवत्, इति । ननु लौकिकप्रकारेण अञ्ज्यो भवि

---

१ सांख्येतरभिन्नस्य क २ स्थित क ३ यन्नैवन् ग ४ च भा क

भवति, स तु न केनाऽपि प्रकारेण भवतीति विकाराभावः। किञ्च, कर्ता हि क्रियाधर्मैरदृष्टप्रकारेण रज्यते। अकर्तृत्वात् नाऽदृष्टप्रकारेणाऽपि। विकाररहितोऽपि सजातीयग्राहक इति, यदि सगुणः स्यात्, तदा परगुणैरपि स्वसजातीयैर्विद्वानिव रक्तो भवेत्। एतद्रसाभिनिवेशाद्रञ्जनं फलतो रञ्जनमुच्यते। साधनतो व्यापारतः फलतश्च रञ्जनाभाव उक्तः। स्वस्मिन् प्रवेशे सति रञ्जनं भविष्यतीत्याशङ्क्य प्रवेशं दृष्टान्तेनाऽन्यथा निरूपयति—जलार्कवदिति। स हि प्रकृतौ प्रतिबिम्बन्यायेन प्रविशति, न तु कुण्डे बदरमिव; अन्यथा प्रकृतौ तत्प्रतीतिर्न स्यात्; सर्वत्र च प्रतीतिर्न स्यात्, प्रकृत्यपेक्षया व्यापकत्वाच्च। अतः स्वच्छा प्रकृतिः पुरुषच्छायां गृह्णातीति पुरुषो न तद्धर्मैः सूर्यवत् रज्यते ॥ १ ॥

तर्हि कथं संसार इत्याशङ्क्याऽऽह—

**स एष यर्हि प्रकृतेर्गुणेष्वभिविषज्जते।**
**अहङ्क्रियाविमूढात्मा कर्ताऽस्मीत्यभिमन्यते ॥ २ ॥**

*स एष इति। स एव प्राकृतैर्गुणैरसंबद्धोऽपि, एष संसारी भवति। कथमित्याकाङ्क्षायामाह—यर्हीति। प्रकृतेर्गुणेषु यर्हि स्वयमभिरज्यते। यद्यपि गुणाः किञ्चित् कर्तुं न शक्ताः, तथापि स्वयं चेतनस्तान् गुणान् वशीकर्तुम्, स्वधर्मेण रञ्जयितुम्, शक्नोति। यथा सूर्यो जलं स्वगुणैस्तप्तं करोति, जलन्तु सूर्यं शीतलं कर्तुं न शक्नोति। तदा किरणैः शुष्यज्जलं सूर्ये प्रविशति, तदा तत्र गतं बहुधा प्रसूयते। एतदेव गुणेष्वभिविषक्तिर्नाम। तदा वशीकृतेषु, अहङ्कारेण विमूढः सन्, कर्ताऽस्मीत्यात्मानमभिमन्यते। प्रकृतेर्गुणाः स्वात्मन्यागताः सर्वमेव कार्यं कुर्वन्ति; तत्र कर्ता अहङ्कारो गुणव्यासः। स चाऽहङ्कारो मोहात्मको भवति, यतो जीवो मूढः सन् अहमित्यात्मानं मन्यते। अहङ्क्रिया अहङ्कारः। मोहे क्रिया उपयोगात् स्त्रीलिङ्गनिर्देशः। अहङ्क्रियया विमूढः, आत्मा अन्तःकरणम् स्वरूपं वा, यस्य। अहं करोतीत्यहङ्कारः, तेन कर्तृत्वमहङ्कारस्यैव। तेन तदैक्यादात्मानमपि कर्ताऽस्मीति मन्यते ॥ २ ॥

---

प्रकाशः।

ष्यतीति शङ्कानिवृत्त्यर्थमाहुः—किञ्चेत्यादि। अत्रापि अदृष्टप्रकारेण नाञ्ज्यः, अकर्तृत्वात्, कालवत्; यन्नैवं तन्नैवम्, नैयायिकादिप्रतिपन्नात्मवत्, 'इत्यनुमानं ज्ञेयम्। निर्गुणपदसिद्धमर्थमाहुः—विकाररहितोऽपीत्यादि। अत्रापि 'अञ्ज्यः गुणग्राहकत्वात्' इत्यनेन सत्प्रतिपक्षितेषु पूर्वानुमाने(षु) पुनः पूर्वस्थापनाय, गुणग्राहकत्वेऽपि परगुणैरनञ्ज्यः, सजातीयगुणरहितत्वात्, गीतानभिनिविष्टपण्डितवत्; यन्नैवं तन्नैवम्, गीताभिनिविष्टपण्डितवत्। साधनत इत्यादि। साधनं गुणः; व्यापारोऽदृष्टम्; फलं रसाऽभिनिवेश इति। स्वस्मिन् प्रवेश इति। प्रकृतौ प्रवेशे। उक्तप्रकारके प्रवेशे गमकमाहुः—अन्यथेति। अत्राऽपि 'अञ्ज्यः, प्रकृतौ प्रविष्टत्वात्' इत्यनेन सत्प्रतिपक्षिते पुनः स्थापनाय 'अनञ्ज्यः, प्रतिबिम्बन्यायेन प्रविष्टत्वात्, जलार्कवत्; यन्नैवं तन्नैवम्, कुण्डबदर(व)त्' इत्यनुमातव्यमिति ज्ञापितम्।

* स एष इत्यत्र। एतदेवेति। स्वप्रतिबिम्बोपरक्तगुणकृतसूर्यकिरणशुष्यज्जलन्यायकप्रवेशोत्तरभाविबहुप्रकारकगुणप्रसवनमेवेत्यर्थः। विमूढ इति। उपधानेन विस्मृतस्वरूपः। स्वगुणप्रवेशकं रञ्जनमुपरागः, स्वगुणप्रवेशकं रञ्जनमुपधानम्(?) इति तयोर्भेदः। स इति। उपधानात्मा। तत्र हेतुः—यत इत्यादि।

---

१ ततः प. क.

ततः किमत आह—

**तेन संसारपदवीमवशोऽभ्येत्यनिर्वृतः ।**
**प्रासङ्गिकैः कर्मदोषैः सदसन्मिश्रयोनिषु ॥ ३ ॥**

* तेन संसारपदवीमिति । कर्तृत्वाभिमानात् कर्ता भोक्ता भवतीति संसारभोगार्थं संसारपदवीमेति । अवशः कर्माधीनः । अत एवाऽऽभिमुख्येनैति । नन्वेवं सति नित्यः संसारः स्यादत आह—**अनिर्वृत इति ।** कर्मफले निर्वृतिरहितः । निर्वृतस्तु संसाराद्विमुच्यत इत्युक्तं भवति । ननु संसारमार्गे गमनमात्रेण किं स्यादित्यत आह—**प्रासङ्गिकैरिति** । प्रसङ्गेन हि कर्मणो दोषा जायन्ते । स्वभावतः कर्माणि न दुष्टानि, किन्तु प्रसङ्गादेव, । यथान्नभोजनं न निषिद्धम्, किन्तु दुष्टान्नभोजनमेव । कर्ममार्गस्तु सदसन्मिश्रयोनिरूपः। सदादियोनिर्देवतिर्यङ्मनुष्ययोनिः ॥ ३ ॥

नन्वयं संसारः किं सत्यो मिथ्या वा ? आद्ये अनिर्मोक्षः, द्वितीये साधनवैयर्थ्यमित्याशङ्कयाऽऽह—

**अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते**
**ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ ४ ॥**

× अर्थे इति । यद्यप्यत्र संसारे संसरणरूपोऽर्थो नाऽस्ति । देवतिर्यङ्मनुष्ययोनिषु देह एवोत्पद्यते, देहे च आत्मनो न कोऽपि संबन्धः । असङ्गत्वादात्मनः संयोगो नाऽस्ति, सुतरां समवायः । स्वरूपसंबन्धोऽपि नास्ति, उभयोरेकत्र निरूपणाभावात्; महाराजसेवकयोरिव । किन्त्वाध्यासिकः। स तु मोहादित्यलीकः । अत संसारोऽलीकभूत एव, तथापि न निवर्तते । यो हि मिथ्याभूतः सन् बाधते, स कथं निवर्तते, अन्यथा बाधनमेव न स्यात् । नन्वेतादृशस्य बाधने किं बीजम् ? तत्राऽऽह— ध्यायतो विषयानस्येति । अस्य संसारस्य ये विषयाः, तान् भोग्यत्वेन ध्यायतः । विषयभोगवासनायां सत्यामविद्यमानोऽपि संसारो बाधत इत्यर्थः । असतोऽपि बाधकत्वे दृष्टान्तः—**यथा स्वप्ने अनर्थागमः** । स्वप्नस्तु मायिक इति सिद्धान्तः । यद्यपि तत्र ताडनं मिथ्याभूतम्, तथापि जागरणात्पूर्वं न निवर्तत एव । अतः संसारनिवृत्त्यर्थं यत्नः कर्तव्य इति सिद्धम् ॥ ४ ॥

तत्र स्वप्नदृष्टान्तेनैव बोधस्तस्य निवर्तक इत्यवसीयते । स बोधः कथं भवतीत्याकाङ्क्षायामन्तर्मुखे चित्ते

---

प्रकाशः।

अत्रैवं क्रमो ज्ञेयः । पूर्वं भगवदिच्छया प्रकृतिपुरुषसंयोगः, ततः प्राकृतेषु चैतन्यात्मा पुरुषोपरागः, ततश्चैतन्यात्मन्यहङ्कारोपधानमहङ्कारः, तेन मोहशब्दवाच्या स्वरूपविस्मृतिः, तया कर्ताहमस्मीत्याकारिका संसारशब्दवाच्या अहंमतिरिति ।

* तेनेत्यत्र । निर्वृत इति । अलम्बुद्ध्या दोषबुद्ध्या वा सुखदुःखोदासीनतया सन्तुष्टः । अत्र संसारपदवी तु प्रतिजन्मन्यनुवर्त्तमानकर्तृत्वाभिमानपरम्परा, तस्या उत्पादने तज्जनकस्य मोहस्य अनिर्वृतिः सहकारिणी, कर्मदोषास्तु द्वारभूता इति बोध्यम् ।

× अर्थ इत्यत्र । उभयोरित्यादि, एतेन स्वरूपसम्बन्धस्य लक्षणमिव कृतं ज्ञेयम्, उभयोरेकत्र निरूपणप्रयोजकं तयोः स्वरूपं स्वरूपसम्बन्ध इति सिद्धेः । आध्यासिक इति । अहंमत्यात्मकः ।

---

१ मदकयोरिव. ख ग. मराठ्योरिव. ङ.

भवतीति वेदाभिनिश्चितम्, 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' इति श्रुतेः। संसारनिवृत्तं चित्तमात्मगामि भवतीति निश्चितम्। तदसन्मार्गे प्रवृत्तं न निवर्तेत एव। नापि निवर्तयितुं शक्यते, असतां बहुत्वात्, बलिष्ठत्वाच्च। तथापि प्रकर्षेणासक्तम्। तथाप्येतादृशमपि निवर्तनीयमित्यादौ तस्य वशीकरणे हेतुमाह—

अत एव शनैश्चित्तं प्रसक्तमसतां पथि।
भक्तियोगेन तीव्रेण विरक्त्या च नयेद्वशम्॥ ५॥

+अत एवेति। यतोऽनिवृत्तमनर्थहेतुः, अत एव बहुकालमासक्तत्वाच्छीघ्रमनिवृत्तावपि शनैर्निवर्तनीयम्, यथा असन्तः परिपन्थिनो न भवन्ति, यथा वा चित्तमासक्तिं त्यजति। तत्र द्वयं हेतुः—भक्तियोगो विरक्तिश्चेति। भगवति स्नेहः, विषयेषु रागाभावश्च। पूर्वस्माद्वैपरीत्यम्। उभाभ्यां चित्तं वशे भवेत्॥ ५॥

उभयोः साधनान्याह—

यमादिभिर्योगपथैरभ्यसेत् श्रद्धयान्वितः।
मयि भावेन सत्येन मत्कथाश्रवणेन च॥ ६॥
सर्वभूतसमत्वेन निर्वैरेणाप्रसङ्गतः।
ब्रह्मचर्येण मौनेन स्वधर्मेण महीयसा॥ ७॥
यदृच्छयोपस्थितेन संतुष्टो मितभुङ् मुनिः।
विविक्तशरणः शान्तो मैत्रः करुण आत्मवान्॥ ८॥
सानुबन्धे च देहेऽस्मिन्नकुर्वन्नसदाग्रहम्।
ज्ञानेन दृष्टतत्त्वेन प्रकृतेः पुरुषस्य च॥ ९॥

*यमादिभिरिति। पूर्वं भक्तिसाधनान्युक्तानि सत्सङ्गादीनि; तानि दुर्लभानीति ज्ञानमेव भक्तिसाधनमिति निरूप्यते। यमादिसाधनैरात्मानं चेज्जानाति, तदा भगवति स्नेहः। पश्चाद्भगवति चित्तस्थैर्यम्। तदा विषयध्यानाभावात् संसारो निवर्तते। तत्र प्रथमं यमा अहिंसादय, ततो नियमाः स्नानादयः, तत आसनादियोगमार्गाः। तैः कृत्वा चित्तमभ्यसेत् चित्तं तत्परं कुर्यात्, संयमनाभ्यासे वा। मार्गे साधनेषु च श्रद्धयान्वितः। मयि भगवति, भावेन श्रद्धादिना। सत्येन सत्यभावेन, कायवाङ्मनस्तु सत्यप्रतिष्ठया। निरन्तरं भगवत्कथाश्रवणेन। चकारात् कीर्तनेन। सर्वभूतेषु समदृष्ट्या, सर्वप्राणिषु वैराभावेन, सर्ववस्तुषु सर्वप्राणिषु च प्रसङ्गाभावेन, अष्टाङ्गब्रह्मचर्येण, मौनेन वृथाऽऽलापपरिवर्जनरूपेण। महीयसा निष्ठाप्राप्तेन, स्वधर्मेण वर्णाश्रमधर्मेण। यदृच्छया उपस्थितेन अन्नादिना संतुष्टो भवेत्। एतानि सर्वाणि

प्रकाशः।

+ अत एवेत्यस्याभासे। आवृत्तचक्षुरिति। सम्मुखीकृतदर्पणवदावृत्तं चित्तं यस्य स इत्यर्थः।

* यमादिभिरित्यत्र। अष्टाङ्गब्रह्मचर्येणेति। तानि च 'एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः' इति वाक्योक्तविरुद्धानि ज्ञातव्यानि।

१ तादृशकरणे. ग. स वशीकरणे. ख. सदृशीकरणे. ङ. २ च. क. ग.

साधनानि पूर्वेण पूर्वेण सिद्धान्युत्तरोत्तराणि द्वादश भवन्ति । अन्यैः सहितेन यदृच्छयोपस्थितान्नादिना वा सन्तोषः साध्यः । पूर्वोक्तानि स्वरूपोपकार्यङ्गानि । कस्यचिन्मते सन्तोष एव मुक्त्यङ्गमिति फलोपकार्यङ्गानि वा । अतः सन्तोषस्य कारणता नोक्ता । पृथक्स्थित्यभावार्थं वा कर्तृविशेषणत्वेनोक्तम् । तत्रापि मितभोजनम्, मननं च, एकान्ते स्थितिः, परमशान्तिः, सर्वत्र मैत्री, करुणा, स्वाधीनान्तःकरणत्वम्, पुत्रादिसहिते देहे मिथ्याभिनिवेशाकरणं चेत्यन्तरङ्गाण्यष्टावङ्गानि । यमादयो द्वादश, एकः सन्तोषः, मितभोजनादीन्यष्टौ; एवं त्रिविधैः साधनैरत्यन्तरङ्गसाधनैस्त्रिभिश्च आत्मदृग्भवति । तानि त्रीण्याह—ज्ञानेनेति । साङ्ख्यमेकम्, तुरीयावस्थाभेदज्ञानाभावश्च । प्रकृतेः पुरुषस्य च दृष्टं तत्त्वं येन तादृशेन ज्ञानेन साङ्ख्यजनितेन ॥ ७ ॥ ८ ॥ ९ ॥

**निवृत्तबुद्ध्यवस्थानो दूरीभूतान्यदर्शनः ।**
**उपलभ्याऽऽत्मनाऽऽत्मानं चक्षुषेवाऽर्कमात्मदृक् ॥ १० ॥**

* निवृत्तेति । निवृत्तानि बुद्ध्यवस्थानानि यस्य । दूरीभूतान्यन्यानि दर्शनानि यस्य । एवं क्रमेण जाते आत्मनैवाऽऽत्मानमुपलभ्य आत्मदृग्भवति । एकस्यैव करणकर्मत्वे कथमित्याशङ्क्य दृष्टान्तमाह—चक्षुषेवाऽर्कमिति । चक्षुरपि तैजसमर्कोऽपि । परमिदमध्यात्मभूतमाधिदैविकश्च सूर्यः । तत्र यथा वस्त्वन्तरग्रहणे विषयप्रकाशकत्वेन सूर्यमपेक्षते, एवं न सूर्यग्रहणे सूर्यापेक्षा । नाऽपि चक्षुर्गतान्धकारनिवृत्त्यर्थं तदपेक्षा, किन्तु तेनैव प्रकाशितं चक्षुस्तदंशभूतमात्मानं गृह्णाति । एवं जीवेन भगवदंशभूतेन सर्वात्मस्वरूपं भगवल्लक्षणमात्मानं यः पश्यति, स आत्मदृग्भवतीत्यर्थः ॥ १० ॥

\+ नन्वेवमात्मदर्शने किं स्यात् ? तत्राऽऽह—

**मुक्तलिङ्गं सदाभासमसति प्रतिपद्यते ।**
**सतो बन्धुमसच्चक्षुः सर्वाऽनुस्यूतमद्वयम् ॥ ११ ॥**

ᐧ। मुक्तलिङ्गमिति । एवं मानसभावनाज्ञानेनाऽसत्यस्मिन्नेव सङ्घाते मुक्तलिङ्गं सदाभासं प्रतिपद्यते । मुक्तं लिङ्गं यस्य । अन्तरावरणलिङ्गात्मकं तस्य निवर्तते । तदा सतो मूलभूतजीवस्य आभासरूपं शरीरमात्मानं प्रतिपद्यते, अयमहमिति साक्षात्प्रतिपद्यते । एतावत्कालमाभासस्याऽपि न साक्षात्कारः, बहिरावरणानामनिवृत्तत्वात् । नन्वाभासे प्राप्ते कः पुरुषार्थः ? तत्राऽऽह—सतो बन्धुमिति । अयमाभासः सतो

---

प्रकाशः ।

*निवृत्तबुद्ध्यवस्थ इत्यत्र । आत्मानमिति । स्वमूलभूतं सूर्यम् । इत्यर्थ इति । एकस्यैव करणकर्मत्वे दृशेव दृशमिति दृष्टान्तेनाऽपि सिध्यतः । एवं सत्यपि चक्षुषेवार्कमिति यदुक्तं तेनायमेवार्थः शास्त्रकाराशयगोचर इत्यर्थः

\+ अभिमामासे । एवमित्यादि । एवं सर्वात्मत्वेन रूपेण किं स्यात् ? 'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन् कस्य वा हेतोः शरीरमनुसंज्वरेत्' इति श्रुत्या अयमहमिति ज्ञानस्यावश्यकत्वात्तदभावे किं फलं स्यादित्यर्थः ।

ᐧ। विवृतौ । मूलभूतजीवस्येति । सर्वात्मनः सृष्टीच्छावशगस्य प्रथमपुरुषस्य हरेरित्यर्थः । अनिवृत्तत्वादिति । यद्यपि सुषुप्तौ साक्षात्कारोऽस्ति, तथापि 'अयमहमित्याकारको न । ' तथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तोऽपि न विदुः' इति श्रुतेरनुभवाच्चेति सुष्ठूक्तमिदम् । आभासे प्राप्त

---

१ दूरीभूतमन्यदर्शनं यस्य घ. ङ. २ सन्ज्वरेत्.

मूलभूतात्मनो बन्धुर्भवति, पुत्रो भ्रातेव वा भवति । तत्प्रतिबिम्बत्वात् सम्यङ्मूलज्ञापको भवतीति भाव । नन्वस्य सतो बन्धुत्व किं प्रमाणम् ? तत्राऽऽह–**असच्चक्षुरिति** । असतो देहादेश्चक्षु । यथा आभासरूपमपि चक्षुर्विषयप्रकाशक भवति, तेन ज्ञायते सूर्याभासोऽयमिति । नन्वसत्प्रकाशकत्वमात्रेण सौरादितुल्यत्वात् न सदाभासत्व सिद्ध्यतीत्याशङ्क्याऽऽह–**सर्वाऽनुस्यूतमिति**। सर्वत्रैव सद्भातेऽनुस्यूत सम्बद्धो वर्तते । व्यापकाभासव्यतिरेकेण सर्वत्राऽनुस्यूतता न भवति। आभासभेदे तदुपपद्यत इति चेत्तत्राऽऽह–**अद्वयमिति** । सर्वत्र सद्भात एक एव प्रतिबिम्ब , अन्यथा य एवाऽह पश्यामि स एवाऽह शृणोमीत्यनुसन्धान न स्यात् । ॥ ११ ॥

एवमस्य शारीरस्य सदाभासता निरूपिता तेनाऽऽत्मज्ञाननिरूपणार्थं दृष्टान्तोपपत्ती निरूपयति द्वाभ्याम्—

**यथा जलस्थ आभासः स्थलस्थेनाऽवदृश्यते ।**
**स्वाभासेन तथा सूर्यो जलस्थेन दिवि स्थितः ॥ १२ ॥**

+**यथेति** । गृहमध्ये स्थित पुरुषो बहिर्जलादौ सूर्यप्रतिबिम्बे सम्मुखगृहान्तर्भित्तौ तत्प्रतिफलन भवति, धर्म इव तत्र भवति, तेन स जानाति साक्षादत्र सूर्यसम्बन्धो न सम्भवति, किन्तु बहिर्दर्पणादौ प्रतिबिम्बितस्येद प्रतिफलनमिति । एव चक्षुरादौ प्रतिफलन पूर्वोक्तसाधनैरेव, नाऽन्यथेति मन्तव्यम् । न

प्रकाशः

इति । मूलाभासोऽयमहमिति ज्ञाते इत्यर्थ । **तत्प्रतिबिम्बत्वादिति** । दर्पणादिसङ्क्रान्तसूर्यांशुवत् शुद्धचित्तसङ्क्रान्ताशरूपत्वादित्यर्थ । **आभासरूपमिति** । दर्पणादिसङ्क्रान्त सूर्यस्य भास्वर रूपम्। **अयमिति** प्रकाशक । **आहेति** । विशेषणान्तरमाहेत्यर्थ । **आभासभेदे** इत्यादि। यथाऽऽदर्शे एक सूर्याभास , भग्ने तस्मिन्नेव दशधा प्रतीयमान सर्वानुस्यूतत्वेन निश्चीयते, एवमाभासभेदेऽपि सर्वानुस्यूतत्वमुपपद्यत इत्यथ । **एवमिति** । अनुमानविधयेत्यर्थ । बोधसौकर्यार्थं तत्प्रदर्श्यते । तथाहि '**एकधा दशधा चैव दृश्यते जलचन्द्रवत्**' इति, '**यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्**' इति श्रुत्या स्मृत्या चाऽऽत्मन एकस्याभासन नानात्वे निश्चिते तत स आत्मा भासः सन्वेति सन्देहे तत 'आत्माभासो मिथ्या, आभासत्वात्,शुक्त्याभासवत' इत्यनेन मिथ्यात्वसाधने 'सत्य ,आ(भा)सत्वात् , सौराभासवत् , इत्यनेन हेतो साधारणत्वात् सन्देहानपाये ' सत्य , प्रकाशकत्वात्, यदेव तदेवम्, यन्नैव तन्नैवम् ' इत्यनेन सत्तानिश्चय तत 'प्राकृत प्रकाशकाभासत्वात , सौराभासवत्' इत्यनेन प्राकृतत्वरूपे असत्त्वे प्राप्ते अप्राकृतत्वनिश्चायनाय पुनरनुमाने क्रियमाणे ' अप्राकृताभास , सर्वत्रानुस्यूतत्वात्, यन्नैव तन्नैवम्, सौराभासवत् ' इति ' प्राकृताभास , सर्वत्रानुस्यूतत्वात , यदेव तदेवम्, भग्नादर्शप्रतीयमानसौराभासवत् ' इति च प्रयोगाभ्या हेतो साधारणत्वे प्राप्ते अयमाभासोऽप्राकृत , सर्वानुस्यूतत्वे सत्येकत्वात , यन्नैव तन्नैवम् , सौराभासवत्' इत्यनुमानेन प्रस्तुतसिद्धि । आभासत्वेन पक्षोल्लेखो मूलरूपव्युदासार्थं । एव चाऽत्र '**सतो बन्धु** ' इति विशेषण ' **यथा ह्ययम्** ' इत्यादिश्रुत्यर्थस्मारकम् । ' **असच्चक्षु** ' इति ' **सर्वानुस्यूतमद्वयम्** ' इति चैतद्द्वय हेतुगर्भमिति पूर्वोक्तस्य न्यायार्थतैवेति विभावनीयम् ।

+ **यथेत्यत्र** । ननु दृष्टान्तेन आत्मज्ञान तु साधनमन्तरेणाऽप्यनुमानादिना सुकरमिति साधनोपदेशो व्यर्थ इत्याशङ्कायामाह –**एवमित्यादि** । **नाऽन्यथा** । आधारशुद्धिं विना न ।

१ ॥ तदुत्तरम् ।

हि बहि पीठादो धर्मरूपेण सम्बद्धोऽपि सूर्यो दर्पणादिस्थित इव प्रतिफलति । तथा सति सर्व एव सङ्घातोऽन्त साक्षात्क्रियेत । अत साधनेष्वेव जातेषु यद्भविष्यति, तद्दृष्टान्तेन प्रथमसम्भावनानिवृत्त्यर्थं प्रदर्श्यते । स्थलस्थेनाऽन्तर्भित्त्यादिप्रतिफलितेन बहि स्थितो जलस्थ आभासोऽवदृश्यते ज्ञायते । तेनाऽपि जलस्थितेन स्वाभासेन दिवि स्थित सूर्योऽवदृश्यते ॥ १२ ॥

**एवं त्रिवृदहङ्कारो भूतेन्द्रियमनोमयैः ।**
**स्वाभासैर्लक्षितोऽनेन सदाभासेन सत्यदृक् ॥ १३ ॥**

एवमिति । एवं त्रिवृदहङ्कारस्थित आत्मा सदाभास , भूतेन्द्रियमन सु प्रतिफलितैराभासाभासैर्लक्ष्यते । तेन त्रिवृदहङ्कारस्थितेन सत आभासरूपेण सत्यदृगात्मा जीवभूतो लक्ष्यते ॥ १३ ॥

एव दृष्टान्तेनाऽऽत्मसम्भावना दूरीकृत्य दृष्टान्तस्याऽप्रामाण्यमाशङ्क्याऽनुभवेनोक्तमर्थं द्रढयति—

**भूतसूक्ष्मेन्द्रियमनोबुद्ध्यादिष्विह निद्रया ।**
**लीनेष्वसति यस्तत्र विनिद्रो निरहङ्क्रियः ॥ १४ ॥**

× भूतसूक्ष्मेति । जाग्रद्दशाया सङ्घातेन सह स्फुरणात् 'कोऽयमात्मा' इति यद्यपि विशेषतो न ज्ञायते, तथापि सुषुप्तौ केवल आत्मा सङ्घातव्यतिरिक्तो भासत इति तन्निरूपयति–भूतानि स्थूलानि, सूक्ष्माणि च तन्मात्रारूपाणि, इन्द्रियाणि मनो बुद्धिश्च । आदिशब्देनाऽहङ्कार । स्वप्नरहितनिद्रया एतेषामाभासा दूरीक्रियन्ते, तदैते न प्रकाशन्ते । आभासलय एवैषा लय । तदा आभासप्रकाशरहिते असति मूढे देहे, यस्तत्र प्रकाशते, स आत्मा ज्ञातव्य इति मन्तव्यम् । ननु तत्र न कोऽपि भासत इति चेत्तत्राऽऽह– तत्र विनिद्र इति । तस्य तु निद्राख्यातिर्नास्ति । तुल्वहप्रत्ययवेद्य आत्मा, स चेद्विनिद्र स्यात्, 'अहम्' इति जानीयात् ? तत्राऽऽह–निरहङ्क्रिय इति । अहमिति प्रत्ययोऽहङ्कारसम्बन्धे भवति, तस्य च लीनत्वात् निद्राया नाऽहमिति मन्यते ॥ १४ ॥

* ननु तर्हि आत्मा न भासत इति चेत्तत्राऽऽह—

**मन्यमानस्तदाऽऽत्मानमनष्टो नष्टवन्मृषा ।**
**नष्टेऽहङ्करणे द्रष्टा नष्टवित्त इवाऽऽतुरः ॥ १५ ॥**

मन्यमान इति । तदा आत्मानमनष्टमपि नष्ट मन्यमानो भवति । यस्तु मन्यते, स आत्मा । नष्टत्वेन यन्मन्यते, अतो न प्रकटप्रकाश , अन्यथा नष्ट को वा मन्येत । स्वप्ने शिरश्छिन्नम्, को वा शिरश्छेद पश्येत् । अत कश्चिदस्ति द्रष्टा, य आत्मानमनष्टमपि नष्ट मन्यते नाऽहमस्मीति । अनष्टस्य नष्टप्रतीत्युप्रकार ॥

× भूतेत्यत्र । 'लीनेषु' इति मूलेनोक्तस्य भूतादिलयस्य स्वरूपमाह–आभासेत्यादि । तथा च लीनपद गौण्या लीनतुल्यत्वबोधकमित्यर्थ ।

* मन्यमान इत्यस्याभासे । तत्राऽऽहेति । निद्रायामेव प्रतीत्यन्तर प्रमाणत्वेनाहेत्यर्थ । विरतौ । नाहमस्मीति । अत्रेद बोध्यम् । निद्राया परम्पराधज्ञानात देहाध्यास ।पश्यामि, सङ्कल्पयामि, जानामि, श्वसिमीत्याद्यनुव्यवसायाभावदशायामिन्द्रियाद्यध्यासोऽपि न शक्यवचन । अत. परमहङ्काराध्यासोऽवशिष्यते । नाऽह

१ तदैव घ प ८ २ अवान्तरम् प ३ देवेनि क एवनि ॥ ४ शिरश्छि ख ग ग

पपचित्दृष्टान्तावाह—नष्टेऽहङ्करण इति। स त्वहङ्कारसवलित, अहङ्कारे नष्टे, तद्भेदप्रतीतिदार्ढ्यादात्मानमेव नष्टं मन्यते, अहङ्काराध्यस्तस्यैव दृश्यत्वात्। केवलस्तु द्रष्टा। अत आत्मानं दृश्यरूपमहङ्कारमहितं नष्टं मन्यत एवेति युक्तम्। अन्यनाशे अन्यनाशप्रतीतिमाह—नष्टवित्त इति। धनात्मा स्य पुरुषो लौकिक, धने नष्टे तद्व्यतिरेकेण स्वनिर्वाहाभावादात्मानमेव नष्टं मन्यते। आतुरो रोगी। स वा यथा देहे नष्टे आत्मानमेव नष्टं मन्यते। आतुरो वा भवति वित्ते नष्टे ॥ १५ ॥

एवमात्मानं निरूप्योपसंहरति—

**एवं प्रत्यवमृश्याऽसावात्मानं प्रतिपद्यते।**
**साहङ्कारस्य द्रव्यस्य योऽवस्थानमनुग्रहः ॥ १६ ॥**

*एवमिति। पूर्वोक्तप्रकारेणाऽऽत्मानं प्रत्यवमृश्य, अभावेवाऽऽत्मा आत्मानं प्रतिपद्यते। नन्वहङ्कारनाशोऽपि न प्रतीयते, स्मरणे साहङ्कारस्य स्मरणात्, 'सुखमहमस्वाप्सम्' इति। नाऽहङ्कारनाश इति चेत्तत्राऽऽह—साहङ्कारस्येति। अहङ्कारसहितस्याऽऽत्मनो द्रव्यस्य, अवस्थानं पश्चात्स्मरणमनुग्रहो भवति। पश्चादहङ्कार सम्बद्ध। यथा सोऽयं देवदत्त कुण्डलीति पूर्वं कुण्डलाप्रतीतावपि प्रतीयते। योऽनुग्रहस्तदवस्थानमिति सम्बन्ध। अनुग्रहस्य प्रसिद्धि प्रकृतोपयोगिनी ॥ १६ ॥

एवमात्मज्ञानं मोक्षार्थमुपदिष्टम्। तत्प्रकृते नोपयुज्यते। प्रकृतिसम्बन्धो हि संसारे हेतु। सा ह्येव प्रकृतिर्नित्या, पुरुषोऽपि नित्य सम्बन्धश्च। तत्र ज्ञानं किं करिष्यति? न हि ज्ञानेन प्रकृति सम्बन्धो वा नाशयितुं शक्यते। अतो ज्ञानं कर्मवदभ्युदयहेतुरेव, न मोक्षहेतुरित्याशङ्कते—पुरुषमिति चतुर्भि—

## देवहूतिरुवाच।

**पुरुषं प्रकृतिर्ब्रह्मन् न विमुञ्चति कर्हिचित्।**

---

प्रकाशः।

मस्मीति प्रतीतौ सोऽपि चेद्विषयत्वेन प्रतीतस्तदा केवलो द्रष्टैवाऽवशिष्ट इति ॥ एवाऽऽ मेति। चित्तं तु नाध्यास जनयति, स्वच्छाविकारिशान्तवृत्तिकत्वात्। तस्मादियं प्रतीति स्वाप्स्यपि परिशेषादात्माऽनुमापिकेति दिक्।

* एवमित्यत्र। अवस्थानमिति। पश्चात् सम्बन्ध इत्यर्थ। अनुग्रहस्येत्यादि। अयमर्थ। पूर्वं हि सुषुप्तावात्मभानाभाव आशङ्कितः, तन्निरासाय 'सुखमहमस्वाप्सम्, न किञ्चिदवेदिषम्' इति स्मरणं स्वसमानाकारानुभवजन्यम्, स्मरणत्वात्, यदेवं तदेवम्, यन्नैवं तन्नैवम्, इत्यनुमानेन सुषुप्तौ भानाभावादिविषयकभानसाधने तद्दृष्टत्वेनाऽऽत्मसिद्धौ साहङ्कारस्य स्मरणात् तादृशस्यैव सुषुप्तौ सिद्धि, न तु केवलस्येति केवलनिश्चयार्थं पश्चादहङ्कारानुग्रह इति ज्ञानमावश्यकम्। तच्च, प्रस्तुतस्मरणं विशेषानुग्रहजन्यम्, सविशेषप्रत्ययत्वात्, यदेवं तदेवम्, सोऽयं देवदत्त कुण्डलीति प्रत्ययवत्, यन्नैवं तन्नैवम्, सोऽयं देवदत्त इति प्रत्ययवत्' इत्यनुमानेन सिध्यति, सविशेषप्रत्ययत्वन्तु तदानीमहङ्कारानुभवादेव सिद्धमिति न किञ्चिदनुपपन्नम्। एवं सति सोऽयं देवदत्त कुण्डलीत्यनुभवे यथा प्रत्यभिज्ञायाश्चक्षु सहकारित्वम्, एवं सुखमहमस्वाप्सम्, न किञ्चिदवेदिषमिति स्मरणेऽप्यनुभवस्य मन सहकारित्वं ज्ञेयमिति हृदयम्। एवं च निर्बाध केवलत्वनिश्चय। इत एव च प्रकृतोपयोगित्वमिति दिक्।

---

१ नष्टहङ्गा क ख ङ २ प्रकृते क ग ङ

## अन्योन्यापाश्रयत्वाच्च नित्यत्वादनयोः प्रभो ! ॥ १७ ॥

प्रकृतिपुरुषयोर्नित्यः सम्बन्धः नाऽपि कश्चित्प्रकृतिपुरुषविशेषोऽनित्यो भवति; नापि प्रकृतिसम्बन्धः काश्चिदबाधकः। अथ ज्ञानेन प्रकृतेर्बाधकत्वमपोद्यत इति मतम् । तदपि त्रिक्षणावस्थायित्वात् ज्ञानस्य, तस्मिन् निवृत्ते पुनः प्रकृतिर्बाधिष्यत इति मोक्षमार्गोऽसङ्गतः । स्वेच्छया पुरुषप्रकृत्योः सम्बन्धः। तत्र प्रथमं सम्बन्धे पुरुषो हेतुः, कामो निमित्तम्; तत्र पुरुषः काममय एवेति स्वयं प्रकृतिं न मुञ्चति । प्रकृतिरेव कदाचित्पुरुषं परित्यज्य गच्छेच्चेत्, तदा मुक्तिर्भवेदित्याशङ्क्याऽऽह—पुरुषं प्रकृतिः कदाचिदपि न विमुञ्चतीति । प्रभ्विति सम्बोधनं प्रकृतिपुरुषयोः स्वरूपपरिज्ञानार्थम्, उभयोरुभयापेक्षत्वात् । किञ्च, अन्येनाऽप्युभयोर्विश्लेषः कर्तुं न शक्यते,अन्योन्यापाश्रयत्वात्। यद्युभौ स्वभावतो भिन्नौ मिलितौ स्याताम्,तदा विश्लेषः कर्तुं शक्येताऽपि । तौ तु परस्परं मिलितौ सन्तौ सम्बद्धौ; यथा पट्टकार्पासाभ्यामेकस्तन्तुरुत्पाद्यते, तेन निर्मिते पटे तन्तुद्वयविश्लेषेऽपि न पट्टकार्पासयोर्विश्लेषः । तथा प्रकृतौ प्रविष्टः पुरुषः प्रकृतिरूपो जातः प्रकृतिरित्युच्यते । पुरुषेऽपि प्रकृतिः प्रविष्टा पुरुषरूपा जाता पुरुष इत्युच्यते । एतादृशयोश्च सम्बन्धः । स कथं त्याजयितुं शक्यत इत्यर्थः । नाऽप्येकस्य नाशे विश्लेषः सम्भवति, उभयोर्नित्यत्वात् । प्रभो ! इति सम्बोधनमघटमानघटनासमर्थो भवानिति बोधयितुम् ॥ १७ ॥

नापि कश्चित्पुरुषं काचित्प्रकृतिस्त्यक्ष्यतीति शङ्कनीयमित्याह—

## यथा गन्धस्य भूमेश्च न भावो व्यतिरेकतः ।
## अपां रसस्य च यथा तथा बुद्धेः परस्य च ॥ १८ ॥

यथा गन्धस्येति । भूमेर्गन्धः स्वाभाविको गुणः, स कदाचिदपि भूमिं न त्यजति, आश्रयपरित्यागे स्वरूपनाशप्रसङ्गात् । तदाह—व्यतिरेकतो न भाव इति । न हि भूमिव्यतिरेके गन्धः कस्यचिद्गुणः, योऽन्यत्र तिष्ठेत् । गन्धस्य चन्दनादौ कदाचिदुत्तत्वेन व्यतिरेकश्चेच्छङ्क्येत, तदा दृष्टान्तान्तरमुच्यते—अपां रसस्य चेति । न कदाचिदपि जले रसोऽनभिव्यक्तोऽपि भवति, अपाकजत्वेन नियतसम्बद्धत्वात् । तथैव बुद्धेः परस्याऽपि । प्रकृतिसम्बन्धो दूरे, प्राकृती या बुद्धिस्तस्या अपि सम्बन्धः सहज इत्यर्थः॥ १८ ॥

न च सम्बन्धे सत्यपि मोक्षो भविष्यतीति मन्तव्यमित्याह—

## अकर्तुः कर्मबन्धोऽयं पुरुषस्य यदाश्रयः ।
## गुणेषु सत्सु प्रकृतेः कैवल्यं तेष्वतः कथम् ॥१९॥

अकर्तुरिति । अयमात्मा स्वभावतोऽकर्ता, प्रकृतिसम्बन्धादेव कर्तृत्वम् । कर्तुः कर्माण्यनन्तानि । तेषां च फलभोगेन विनाशे पुनस्तद्धेतुना कर्मान्तराणीति न कदाचिदपि मोक्षः । तदाह—अकर्तुरात्मनोऽयं संसारलक्षणः कर्मबन्धः प्रकृत्याश्रयः। तस्याश्च प्रकृतेर्गुणेषु सत्सु कथं कैवल्यम् । न च बन्धका गुणा अन्ये, मोचकाश्चान्य इति मोचकसम्बन्धे मुक्तिः स्यादिति चेत्तत्राऽऽह—तेष्विति । य एव बन्धकास्तेष्वेव सत्सु कथं मुक्तिरित्यर्थः ॥ १९ ॥

न च तत्त्वज्ञानेन प्रकृतिबाधकत्वं दूरीक्रियत इति मन्तव्यमित्याह—

## क्वचित्तत्त्वावमर्शेन निवृत्तं भयमुल्बणम् ।

१ त्यजति. क ख. ड. २ दूरीस्तम्. क. ड

**अनिवृत्तनिमित्तत्वात्पुनः प्रत्यवतिष्ठते ॥ २० ॥**

क्वचिदिति । क्वचित् पुरुषविशेषे, अवस्थाविशेषे वा, उत्पन्नं ज्ञानं ससारभयं निवर्तयति । तदपि न सङ्गच्छते । भयहेतोः प्रकृतिसम्बन्धस्य अनिवृत्तत्वात् पुनर्भयं प्रत्यवतिष्ठत एव । उल्वणमसद्यम् ॥२०॥

ज्ञानस्य क्षणिकत्वेऽपि सम्बन्धस्य नित्यत्वेऽपि, प्रकृतेरपि नित्यत्वे, तथा कानिचित्साधनानि सन्ति । यै कृत्वा प्रकृतिस्तिरोभाव प्राप्नोति सम्बन्धश्च पुनर्नोद्भूतो भवति । तानि साधनान्याह--अनिमित्तेति द्वाभ्याम्---

**श्रीभगवानुवाच ।**

**अनिमित्तनिमित्तेन स्वधर्मेणाऽमलात्मना ।**
**तीव्रया मयि भक्त्या च श्रुतसम्भृतया चिरम् ॥ २१ ॥**

**अनिमित्तेन** निष्कामेन, **निमित्तेन** कर्मणा । सर्वत्र कर्मैव निमित्तमिति निमित्तपदप्रयोग । **स्वधर्म** वर्णाश्रमधर्म , निर्मलान्त करण च साधनम् । उभाभ्या वा निर्मलान्त करणत्वम् । एतानि ज्ञानोत्तर पुन. कर्तव्यानि । अन्त करणस्य च नैर्मल्य तारतम्येन । भगवतो भक्तिश्च तीव्रा निरन्तर सर्वभावेन प्रवृत्ता स्नेहपूर्विका सेवा । स्नेहपूर्वकश्रवणादिकं वा । चकाराद्गुरुभक्त्या । साऽपि भक्तिर्निरन्तरसाधनेन पुष्टा कर्तव्येत्याह--श्रुतसम्भृतयेति । चिरकाल भगवद्गुणश्रवणेन सम्यक् भृता पूर्णा, हृदये आपूरिता वा ।२१।

**ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा ।**
**तपोयुक्तेन योगेन तीव्रेणाऽऽत्मसमाधिना ॥ २२ ॥**

**ज्ञानेनेति** । सर्वतत्त्वसाक्षात्कारेण साङ्ख्यानुभवेन यज्जनित ज्ञानम् , तत्पुनरावर्तनीय साधनानुवृत्त्या । **बलीयसा वैराग्येण,** विषये कदाचिदपि रागजननात्यन्ताभावयुक्तेन । **तपसा** संयुक्तेन **योगेन** चाऽष्टाङ्गेन । आत्माविर्भावसमर्थेन **समाधिना** । एव दश साधनान्युत्तरोत्तर सञ्जातानि, मिलितानि वा पुरुषस्य सम्बन्धिनी प्रकृतिमन्वह दहन्तीति ॥ २२ ॥

तथा सति यत्स्यात्तदाह---

**प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम् ।**
**तिरोभवित्री शनकैरग्नेर्योनिरिवाऽरणिः ॥ २३ ॥**

**प्रकृतिरिति** । अन्वह दह्यमाना, अहर्निश वा दह्यमाना, शनैस्तिरोभवित्री । नन्वेतानि साधनानि प्राकृतान्येव, कथ तैः प्रकृतिर्नश्यति ? प्रत्युत पुष्टैव भवेदित्याशङ्क्य तथात्वे दृष्टान्तमाह--अग्नेर्योनिरिति । यद्यप्यरणे सकाशादेवाऽग्निरुत्पद्यते, तथापि स ता नाशयत्येव, न तु वर्द्धयति । तथैतानि साधनानि । न तु काष्ठादिनिर्मित पीठादिक यथा काष्ठपोषकम्, तथाऽग्निर्भवति । तस्माल्लौकिकान्येव कर्मादीनि प्रकृतिपोषकाणि, नत्वेतानीति भाव ॥ २३ ॥

तस्या पुनरुद्गमशङ्का वारयति---

**भुक्तभोगा परित्यक्ता दृष्टदोषा च नित्यशः ।**
**नेश्वरस्याऽशुभं धत्ते स्वे महिम्नि स्थितस्य च ॥ २४ ॥**

भुक्तभोगेति। अभुक्ता चेत् वासनया हृदयं प्रविश्य कदाचिन्न निवर्तेताऽपि, भुक्तभोगा तु निवृत्तैव भवेत्। तत्राऽप्यलम्बुध्या परित्यक्ता। तत्रापि दृष्टदोषा। यथा अमेध्यत्वेन परित्यक्तमन्नादिकं न रागं जनयति। कदाचिद्दोषे स्फुरितेऽपि रागश्चेदन्तःस्थो न निवर्तेत; कदाचित्तस्या दोषो न स्फुरत्यपि। तद्व्यावृत्त्यर्थमाह—नित्यश इति। सर्वदा दृष्टदोषा। तथात्वे तस्यां रागाभावो हेतुः। किञ्च, यथा गृहस्थस्य भार्या गृहस्थं बाधते, न तथेश्वरं शतशोऽपि भार्या बाधितुं शक्नुवन्ति; तथेयं प्रकृतिरपि दासभूतमेव जीवं बाधते, नत्वीश्वरभूतम्। ऐश्वर्यं च भगवत्कृपया तद्धर्मप्राप्त्या भवति। तदाह—नेश्वरस्याऽशुभं धत्त इति। किञ्च, स्वे महिम्नि स्थितस्य च अशुभं न धत्ते। यस्तु स्वानन्द एव रमते, तं प्रकृतिर्न बाधते, प्रकृत्यपेक्षाभावात्। यथा सर्वतो विरक्तं भार्या बाधितुं न शक्नोति, नाऽप्यात्मारामिति चशब्दार्थः॥२४॥

किञ्च— **यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थकृत्।**
**स एव प्रतिबुद्धस्य न वै मोहाय कल्पते॥ २५॥**

इयं प्रकृतिर्निद्रावत्पुरुषस्य बाधिका। तथा सति यथा निद्रा स्वप्नं जनयित्वा पुरुषं बाधते, तथेयमपि संसारं जनयित्वा बाधते। सोऽपि स्वप्नो भगवन्मायाजनितसर्वप्रपञ्चात्मकः, भगवदिच्छया विद्यमानोऽपि अप्रतिबुद्धस्यैव बह्वनर्थकृद्भवति, न तु प्रतिबुद्धस्य कस्याचिदपि कदाचिदपि कस्मिन्नपि देशे। निश्चयेन मोहाय न कल्पते, किन्तु स्मृतिमात्रं जनयति॥ २५॥

एवमेव विदिततत्त्वस्याऽपि पुरुषस्य प्रकृतिः संसारजननेन नाऽपकारं कर्तुं शक्नोतीत्याह—

**एवं विदिततत्त्वस्य प्रकृतिर्मयि मानसम्।**
**युञ्जतो नाऽपकुरुत आत्मारामस्य कर्हिचित्॥ २६॥**

एवमिति। विदिततत्त्वस्येति। स्वभावतो मोहकत्वाभावे हेतुः। मयि भगवति मानसं युञ्जत इति। बलादृष्टादिद्वाराऽप्यपकाराभावे हेतुः। कामादिजननद्वाराऽपि नाऽपकर्तृत्वमित्याह—आत्मारामस्येति। आत्मन्येव रमणं यस्य। अत एव प्रकारत्रयेणाऽपि बाधाभावात्कर्हिचिदित्युक्तम्॥ २६॥

एवं प्रकृतेर्बाधकत्वाभावमुक्त्वा, विदिततत्त्वस्य प्रकृतिबाधाभावानन्तरं साधनपूर्वकं भगवत्प्राप्तिलक्षणं मोक्षमाह—चतुर्भिर्यदैवमित्यादिभिः।साधनं च फलञ्चैव फलत्वं चाऽपि तस्य च। प्रतिबन्धनिवृत्त्यैव तत्प्राप्तिर्बाधनाशतः॥ १॥ एतच्चतुष्टयं प्राऽऽह चतुर्भिर्नोऽन्यथा फलम्। तादृशस्याऽपि हि भवेदिति ज्ञानोत्तराक्रिया॥ २॥ प्रथमं साधनान्याह—

**यदैवमध्यात्मरतः कालेन बहुजन्मना।**
**सर्वत्र जातवैराग्य आब्रह्मभुवनान्मुनिः॥ २७॥**

*यदैवमिति। पूर्वं यावन्ति साधनानि निरूपितानि ज्ञानार्थं प्रकृतिजयार्थं च; तान्युभयविधान्यपि बहुजन्मसु आवृत्तानि सन्ति। अध्यात्मे आत्मज्ञाने रतिरुत्पद्यते। ज्ञानं तु बहुधा जायते, प्रमाणवस्तुपरतन्त्रत्वात् ज्ञानस्य। रतिस्तु कदाचिदेव जायते, तस्याः कालनियमाभावात्—यदैवमित्युक्तम्। एवमाकाङ्क्षायुक्तो बहुजन्मना कालेन अध्यात्मरतो भवेत्, तदैव सर्वत्र जातवैराग्यो भवेत्। ततोऽपि वा बहुजन्मना सर्वत्र वैराग्यम्। क्रममुक्तावपि वैराग्यमित्याह—आब्रह्मभुवनादिति। तत्रापि निरन्तरं मननं साधनम्, बहिःपदार्थनिवृत्तेरावश्यकत्वात्॥२७॥

प्रकाशः।

* यदैवमित्यत्र। अध्यात्मेत्यादि। इतः पूर्वमथेत्यध्याहार्यम्।

१ प्राप्तौ. ग. २ प्रकृतिबाधानन्तरम्. ग. घ.

मद्भक्तः प्रतिबुद्धार्थो मत्प्रसादेन भूयसा ।
निःश्रेयसं स्वसंस्थानं कैवल्याख्यं मदाश्रयम् ॥ २८ ॥
प्राप्नोतीहाऽञ्जसा धीरः स्वदृशा छिन्नसंशयः ।
यद्गत्वा न निवर्तेत योगी लिङ्गाद्विनिर्गमे ॥ २९ ॥

मद्भक्त इति । एवं बहुजन्मनि जाते मद्भक्तो भवति। पश्चात्प्रतिबुद्धार्थो भवति। तावत् कः पुरुषार्थ इत्येव न जानाति, यावत् भगवति भक्तिर्न भवति । तदा भगवानेव परमपुरुषार्थ इति ज्ञाने महान् भगवत्प्रसादो भवति । तदा वैकुण्ठं प्राप्नोति । तदेव हि नितरां श्रेयोरूपम्, स्वस्य भगवतो जीवस्याऽपि सम्यक् स्थानभूतम् । तत्रैव हि पुरुषः केवलो भवति, सर्वस्यात्मत्वात्, प्रतीतत्वाच्च । तदेव हि मम स्थानम्। यस्तु मम स्थानं प्राप्नोति सोऽहमेव भवति। अञ्जसाऽनायासेन। इहैव शरीरे, न तु ब्रह्माण्डभेदाद्यपेक्षा । ननु वैकुण्ठस्य भगवतो वा परमपुरुषार्थत्वं शास्त्रान्तरैर्युक्त्या च विरुद्धं भातीति बहुविधोऽपि सन्देहः स्वयं यदा तत्र पश्यति, तदा निवर्तत इति स्वदृष्ट्या छिन्नसंशयो भवति । तस्य शास्त्रार्थत्वाय श्रुतिसूत्राभ्यां निरूपितशास्त्रपर्यवसानमाह—यद्गत्वा न निवर्तेतेति । न च पुनरावर्तते, 'अनावृत्तिः शब्दात्, इति । तत्रैव परिसमाप्तिस्त्रय्याः शास्त्रस्य च । यन्मत्स्थानं गत्वा मदीयो न निवर्तत एव । योगी च लिङ्गाद्विनिर्गमे सति, लिङ्गभङ्गे वा न निवर्तते ॥ २८ ॥ २९ ॥

अन्तिमजन्मनि योगिनो विघ्नाः संभवन्ति, 'श्रेयांसि बहुविघ्नानि' इति स्मृतेः। तैर्विघ्नैश्चेन्नाऽभिभूयते, तदा कालमतिक्रम्य तत्र गच्छतीत्याह—

यदा न योगोपचितासु चेतो मायासु सिद्धस्य विषज्जतेऽङ्ग ! ।
अनन्यहेतुष्वथ मे गतिः स्यादात्यन्तिकी यत्र न मृत्युहासः ॥३०॥

*यदेति। योगेन उपचितासु निकटे समानीतासु, मायास्वणिमादिषु, सिद्धस्य चेतो यदा न विषज्जते। अनन्यहेतुष्विति । न विद्यते स्वव्यतिरिक्तो हेतुर्यत्र । अनेनाऽऽयासाभाव उक्तः। तदैव मे गतिः स्याद्वैकुण्ठाख्या । फलान्तरेण सम्बद्धभुक्तब्राह्मण इव मुख्ये फले न युज्यते । आगतास्वपि सिद्धिषु चित्तं चेन्न युज्यते, अथ तदनन्तरमेव, भगवत्प्राप्तिर्भवति । यद्यपि भगवतो बहुविधा गतिर्भवति सगुणाऽपि, तथापीयमात्यन्तिकी । यत्र च फले मृत्योर्गर्वो न भवति । मृत्युर्हि सर्वप्रकारेण फलसाधनप्रमेयप्रमाणैर्भ्रामयित्वा स्ववशे नयति । तस्य यदि सर्वोऽपि प्रयासो व्यर्थो भवति, तदा गर्वो गच्छति । तत्र यदा मृत्योर्हासो गर्वो नाऽस्तीति । अत एवाऽत्र भ्रमो न कर्तव्यः । यस्मिन्नेव शास्त्रे मते वा, साधनेषु वा, कदाचिदपि प्राणी म्रियते, तदेवाऽसच्छास्त्रं साधनं च एतदेव निदर्शनमिति भावः ॥ ३० ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां
तृतीयस्कन्धे सप्तविंशाध्यायविवरणम् ।

---

प्रकाशः

* यदा नेत्यत्र । सम्बद्धभुक्तब्राह्मण इति । पूर्वं सम्बद्धः, पश्चाद्भुक्तो ब्राह्मणो यस्मिन् सः । तथाऽत्र यथा सम्बन्धिनि ब्राह्मणे भोजिते मुख्यं भोजनफलं न भवति, किन्तु फलान्तरेण संयुज्यते तथेत्यर्थः।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे सप्तविंशाध्यायविवरणं सम्पूर्णम् ।

---

१ योग ग. च. २ तदा तत्र ग. ग. घ ङ. च.

# अष्टाविंशाध्यायविवरणम् ।

* चित्तश्चेद्भगवत्स्पृष्टं भक्तिज्ञानविरक्तिभिः ।
तदा शुद्धं स्वसम्बन्धिपुरुषं गमयेत्फलम् ॥ १ ॥
योगेनाऽपि भवेच्छुद्धमिति योगो निरूप्यते ।
अष्टाविंशे ध्यानयुक्तः सर्वसाधनसंयुतः ॥ २ ॥
यत्रैव भगवद्देशस्तत्प्रमाणादिकं भवेत् ।
स्वतः शुद्धो हरेर्नाऽन्यःस्वाध्याय इव सर्वथा ॥ ३ ॥

भक्तिसाङ्ख्यज्ञानानि निरूप्य योगं फलपर्यन्तं निरूपयति—

## श्रीभगवानुवाच ।

**योगस्य लक्षणं वक्ष्ये सबीजस्य नृपात्मजे ।**
**मनो येनैव विधिना प्रसन्नं याति सत्पथम् ॥ १ ॥**

×योगस्येति । योगा बहुविधाः। सध्यानोऽपि द्विविधः—सबीजो निर्बीजश्चेति । सबीजोऽप्यनेकविधः-

### गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृतः प्रकाशः ।

* अथाऽष्टाविंशाध्यायविवरणं चिकीर्षवः शुकवाक्ये मैत्रेयवाक्ये चाऽवसरस्य पूर्वमुक्तत्वात् कापिलेयस्यैव सङ्गतिं वदन्तो द्वाभ्यामध्यायार्थमाहु:—चित्तमित्यादि । तत्प्रकारश्रुतौ ' मनो हि द्विविधं प्रोक्तं शुद्धं चाऽशुद्धमेव च । अशुद्धं कामसंङ्कल्पं शुद्धं कामविवर्जितम् ' इति शुद्धस्य मनसो निष्कामत्वं लक्षणमुक्तम् । चित्तं निश्चयात्मकम् । तथा च, भक्त्यादिभिस्त्रिभिर्यदि भगवान् प्रसीदति, तदा तत्स्पृशतीति भगवत्स्पृष्टं कामरहितं सत् शुद्धं भवति । तत् शुद्धं चित्तं कर्तृ स्वसम्बन्धिपुरुषं फलं गमयेत् । एतदर्थं पूर्वाध्यायत्रये भक्त्यादीनि साधनान्युक्तानि । यथा तैश्चित्तं शुद्धं भवति, तथा योगेनाऽपि शुद्धं भवेदिति हेतोः साङ्गो योगोऽष्टाविंशे निरूप्यते । ननु त्रयाणां कार्यं कथमेकेनेत्यत आहु:—ध्यानयुक्त इति । ध्यानेन भगवत्सम्बन्धः सोऽपि तथा शुद्धं करोतीत्यर्थः । तेनैककार्यत्वं चतुर्णामध्यायानां सङ्गतिरित्यर्थः । ननु भवत्वेवम्, तथापि शास्त्रे मैत्रेयोक्तौ च योऽवसरः, स कथमित्याकाङ्क्षायामाहुः—यत्रैवेत्यादि । देश आवेशः । यत्रैव वस्तुनि भगवदावेशः, तदेव प्रमाणरूपम्, प्रमेयरूपम्, प्रकृतसाधनरूपम्, प्रकृष्टफलरूपं च भवेत् । तत्र हेतुः—स्वत इत्यादि । ' अयमात्मा अपहतपाप्मा ' इति छन्दोगश्रुतेः परमात्मनो हरेरन्यः स्वतः शुद्धो न, इति हेतोः स्वाध्यायो वेदः सर्वथा सर्वैः प्रमाणादिप्रकारैस्तत्सम्बन्धात् शुद्धस्तथा । यथा वेदो भगवत्सम्बन्धात् शुद्धः, तथा योगोऽपि भगवदाविष्टत्वाद्भगवद्योगस्पृष्टो प्रमाणतया सर्वप्रकाशकत्वेन शुद्धिरूप इति शास्त्रीयाऽवसरसिद्धिः । स एव योगोऽत्र इन्द्रियसंयमात्मकत्वात् स्वरूपव्यवस्थापकत्वाच्च मोक्षरूप इति मैत्रेयोक्तावप्यवसर इत्यर्थः ।

×योगस्येत्यत्र । बहुविधा इति । सिद्ध्युपसिद्ध्यादिसाधकत्वेन फलतः, बीजादिभेदेन साधनतश्चानेकविधा ।

१ निनयेत्. प. प.

नानाविधार्थध्यानविषयः। तत्र भगवद्ध्यान एव चित्तं सन्मार्गे विशति, स्वदेवतायामेव प्रसादात्। तदाह—सबीजस्य योगस्य लक्षणं वक्ष्य इति। निर्बीजो योगो गीतायामुक्तः, 'यतो यतो निःसरति' इत्यादिना। सबीजस्तु ध्येयसहितः। सुगमश्चाऽयम्, यतस्त्वं नृपात्मजा। येनैव विधिना मनः क्षिप्रमेव प्रसन्नं सत् सत्पथं याति। प्रसादस्तस्य स्वदेवताभिनिवेशात्। तदैव सन्मार्गे गच्छति। सत आत्मनो भगवतो वा मार्गः, वेदोक्तो वा॥ १॥

+ तत्र पञ्चविंशतीसाधनान्याह। यमनियमरूपाणि कृशराणि कृत्वा। सर्वतत्त्वानामतिक्रमार्थे साधन्ति साधनानि। एकेन च साधनेन एकस्य तत्त्वस्याऽतिक्रमो न भवतीति साधनान्तराण्यप्यतिदिश्यन्ते—

**स्वधर्माचरणं शक्त्या विधर्माच्च निवर्तनम्।**
**दैवाल्लब्धेन सन्तोष आत्मविच्चरणार्चनम्॥ २॥**

स्वधर्माचरणमिति। स्वधर्माणां देहधर्माणां वर्णाश्रमाधिकारसिद्धानामाचरणं यथाशक्त्या कर्तव्यम्, न तु शक्तावपि सङ्कोचः। शास्त्रमपि 'यच्छक्नुयात् तत्कुर्यात्' इति। विधर्माच्च निवर्तनं द्वितीयं साधनम्। धर्मबाधो विधर्मः, यस्मिन् क्रियमाणे स्वस्य धर्मस्य बाधो भवति। स यथाधिकारमवसेयः। यावद्देहोऽयम्, तावद्वर्णाश्रमधर्मा एव स्वधर्माः। भगवद्धर्मादयोऽपि विधर्माः, परधर्मा वा। यदा पुनरात्मानं जीवं मन्यते, सङ्घातव्यतिरिक्तम्, तदा दास्यं स्वधर्मः, अन्ये वर्णाश्रमादयोऽपि परधर्माः। यदा पुनर्भगवद्भावं प्राप्ताः, तदाऽलौकिकधर्मा एव ऋषभादिष्विव गोचर्यादयः स्वधर्माः, अन्ये परधर्मा इति। चकारात् परधर्मादयश्चत्वारोऽपि सङ्गृहीताः। अयं च प्राप्तज्ञान इति स्वशक्त्या भगवत्प्रेरणया, स्वज्ञानेन वा, ज्ञानबाधाभावे शरीरशक्त्या वा, उभयात्मकस्वधर्मानुष्ठानम्, नत्वेकतरविरोधि। तृतीयं साधनम्—दैवाल्लब्धेन सन्तोषः। दैवादिति वचनात् आवश्यकप्राप्तिः सूचिता। अलब्धे वा महाहिरिवाऽप्रयत्नोऽपि सन्तुष्येदिति ज्ञातव्यम्। अन्यैश्चेत्यतिदेशात्। आत्मविदां चरणार्चनं चरणपूजा, दास्यमिति यावत्। आत्मवित्त्वं च तेषां ज्ञातव्यमक्रोधादिना॥ २॥

**ग्राम्यधर्मनिवृत्तिश्च मोक्षधर्मरतिस्तथा।**
**मितमेध्याशनं शश्वद्विविक्तक्षेमसेवनम्॥ ३॥**

ग्राम्येति। ग्राम्यधर्मा लौकिकाः, इन्द्रियग्रामवन्तो वा ग्राम्याः। चकारात् स्वधर्मा अपि ग्राम्यधर्माश्चेत् त्यक्तव्या इति। मोक्षधर्मा अहिंसादयः, तेषु रतिः। तथेत्येतदपि ग्राम्यधर्मनिवृत्तिवत्साधनम्।

प्रकाशः।

+ स्वधर्मेत्यत्र। अप्यतिदिश्यन्त इति। एकतत्त्वातिक्रमेऽप्यतिदिश्यन्ते। स इति। विधर्मः। अधिकारविभागं स्फुटीकुर्वन्ति—यावदित्यादि। देहोऽयमिति। विपर्ययाभ्यासदार्ढ्येनात्मतया भातः। चत्वार इति। परधर्माभासधर्मोपधर्मच्छलधर्मा- सप्तमस्कन्धोक्ताः। शक्त्येत्यस्य तात्पर्यमाहुः—अयं चेत्यादि। उभयात्मकस्वधर्मानुष्ठानमिति। वर्णाश्रमधर्मात्मको ज्ञानात्मकश्च यः स्वधर्मस्तदनुष्ठानम्। कुर्यादिति शेषः। तथा चैवं ज्ञापनाय शक्त्येति पदमुक्तमित्यर्थः। अन्यैश्चेत्यतिदेशादिति। 'एतैरन्यैश्च पथिभिः' इत्यनेन वक्ष्यमाणादतिदेशात्।

१ पदार्थ २ स्वदेवताया ख. ग ३ स्वाज्ञानेन वा ग. ४ अनिर्देशात् क. ध. ङ. ५ अक्रोधादिना क. घ.

परधर्मत्वेनाऽधर्मशङ्कायां तथोक्तम् । मितं परिमितं मेध्यं पवित्रञ्च, अशनं भोजनं कर्तव्यम् । शश्वदिति सर्वदा । मितमेध्यस्या(?)दनमिति पाठे चर्व्यमेव फलादिकं भक्षणीयमित्युक्तं भवति । विविक्तस्यैकान्तस्य, क्षेमस्य भयरहितस्य, सेवनम् । तादृशे देशे तद्देशं शुद्धं कुर्वन् सेवमान एव तिष्ठेदित्यर्थः॥३॥

अहिंसा सत्यमस्तेयं यावदर्थपरिग्रहः ।
ब्रह्मचर्यं तपः शौचं स्वाध्यायः पुरुषार्चनम् ॥ ४ ॥

* अहिंसेति । अहिंसा सर्वप्राणिषु कायवाङ्मनोभिर्द्रोहाकरणम् । अयाचितेऽप्यल्पद्रोह इति केचित्; अतो न परिज्ञाते स्थातव्यमिति । सत्यं यथार्थभाषणम् । अस्तेयं परस्वग्रहणाभावः । यावानर्थो योगं साधयति, तावत एव परिग्रहः । ब्रह्मचर्यमष्टाङ्गम् । तपः कृच्छ्रादि । शौचमन्तर्बहिःशुद्धिहेतूनां करणम् । स्वाध्यायो वेदाध्ययनम् । पुरुषार्चनं भगवत्पूजा ॥ ४ ॥

मौनं सदासनजयः स्थैर्यं प्राणजयः शनैः ।
प्रत्याहारश्चेन्द्रियाणां विषयान्मनसा हृदि ॥ ५ ॥

मौनं जनैः सह सम्भाषणाभावः, वृथालापपरिवर्जनं च । सदाऽऽसनस्याऽभितो जयः कर्तव्यः; यथा कदाचिदपि चित्तं परवशं न भवति । स्थैर्यमेकनिष्ठा, चाञ्चल्याभावः । शनैः प्राणजयः प्राणायामादिना । इन्द्रियाणां च विषयेभ्यो व्यावर्तनम्, बलात् प्रत्याहारः । जयश्च चकारात् । विषयान्मोहकात् । मनसा सहेन्द्रियाणाम् । मनो वा करणं प्रत्याहारे । आहृतानां हृदये स्थापनम् । एतदेकम्॥५॥

धिष्ण्यानामेकदेशेन मनसा प्राणधारणम् ।
वैकुण्ठलीलाभिध्यानं समाधानं तथाऽऽत्मनः ॥ ६ ॥

धिष्ण्यानां स्थानानां मूलाधारादीनाम्, एकदेशेन सर्वधिष्ण्येभ्यः प्राणानाकृष्य क्वचित् हृदयादिस्थाने, एकदेशेन मनसा प्राणानां धारणम् । इन्द्रियजयादिष्वपि मनसो योजनम्, प्राणायामादिष्वपि । एकदेशे वा; सप्तम्यर्थे तृतीया । वैकुण्ठस्य भगवतो लीलानामभिध्यानम् । सर्वावस्थासु वैयग्र्याभावोऽन्तःकरणस्य समाधानम् । एतानि स्वसिद्धान्ते प्रोक्तानि साधनानि, अन्यानि च मतान्तरसिद्धानि ॥६॥

एतैरन्यैश्च पथिभिर्मनो दुष्टमसत्पथे ।
बुद्ध्या युञ्जीत शनकैर्जितप्राणो ह्यतन्द्रितः ॥ ७ ॥

एतैरिति । सर्वैरेव पथिभिर्मार्गैः, असत्पथे लौकिके मार्गे, दुष्टं मनो बुद्ध्या युञ्जीत । असन्मार्गं त्याजयित्वा आत्मनि विवेकवत्या बुद्ध्या योजयेत् । नाऽत्र बलं विधेयम्, अन्यथा मनः कलुषितं स्यात् । अत आह—शनकैरिति । जिताश्च प्राणा इन्द्रियाणि च सदा सृप्यन्ते ॥ ७ ॥

---

प्रकाशः।

* अहिंसेत्यत्र । अयाचितेऽप्यल्पद्रोह इति । अयाचितत्वेन प्रसिद्धावन्यं विहाय लोकैरस्मै दाने क्रियमाणे तेषां वृत्तिभङ्गप्रयोजकतयाऽल्पद्रोह इत्यर्थः । तथासत्यहिंसापदं यावदर्थावबोधकं तदाहुः—अत इत्यादि ।

---

१ हृदयादिस्थाने २ इति क. ख. ग. ३ जुष्टम् ग. च ४ नभागा.

एवं खण्डशः कृतैः साधनैर्बहुजन्मसिद्धैर्यदा मन इन्द्रियाणि प्राणा देहश्च सिद्धानि भवन्ति, तदा फलपर्यवसायिनि योगे योजयेत्। तदाह—

**शुचौ देशे प्रतिष्ठाप्य विजितासन आसनम्।**
**तस्मिन्स्वस्तिकमासीन ऋजुकायः समभ्यसेत्॥ ८॥**

शुचौ देश इति। बहुधा आवर्तिताः पूर्वोक्ता एव यमनियमा जाताः। आसनमुच्यते—शुचौ देश इति। गङ्गातीरादिदेशे केशकीटास्थ्यादिवर्जिते, आसनं चैलाजिनकुशरूपं प्रतिष्ठाप्य, अभ्यासेन विजितासनो भवेत। सर्वाण्येवाऽऽसनानि तत्र शिक्षेत्। यदा भवेद्विजितासनः, तदा तस्मिन्नासने स्वस्तिकासनमासीनः, ऋजुकायो भूत्वा, सम्यक् योगमभ्यसेत्। यावन्ति जीवजातानि, तावन्त्येवाऽऽसनानि। तत्र स्वस्तिकं पद्मासनं च श्रेष्ठम्। तत्र स्वस्तिकासने स्थित्वा प्राणस्यार्जवेन गत्यर्थमृजुकायो भूत्वा प्राणायाममभ्यसेत्॥ ८॥

**प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः।**
**प्रतिकूलेन वा चित्तं यथा स्थिरमचञ्चलम्॥ ९॥**

* तस्मिन्नेवाभ्यासे प्राणस्य मार्गं शोधयेत्। भौतिक्यो नाड्यो मलादिना आपूरितास्तिष्ठन्ति, ताः पूरककुम्भकरेचकैः शोधयेत्। तत्र वायुं पूरयित्वा, संस्तम्भ्य, कुम्भकेन नाडीः शोषयित्वा, पक्वा विधाय, ततो मलं वायुं च रेचयेत्। एवं पुनः पुनः पूरणादिना प्राणस्य मार्गं शोधयेत्। प्राणायामभेदैर्वा कुम्भकादिभिः शोधयेत्। प्रतिकूलेन वा शोधयेद्रेचकपूरककुम्भकैः। किं बहुना, यथैव चित्तं चाञ्चल्यं परित्यज्य स्थिरं भवेत्, तथा प्राणस्य मार्गं शोधयेत्। प्राणायामादिभिरेव शोधनम्, न प्रकारान्तरेण कर्तव्यम्। अविहितत्वान्न तैश्चित्तं शुद्धं भवति॥ ९॥

**मनोऽचिरात्स्याद्विरजं जितश्वासस्य योगिनः।**
**वाय्वग्निभ्यां यथा लोहं ध्मातं त्यजति वै मलम्॥ १०॥**

एवं कृते योगिनो मनो जितश्वासस्य विरजं भवेदचिरात्[1]। ननु प्राणायामेन कथं मनसः शुद्धिः? तत्र दृष्टान्तेनाऽऽह[2]—वाय्वग्निभ्यामिति। यथा लोहं सुवर्णादिकं वाय्वग्निभ्यां ध्मातं मलं त्यजति, तथा प्राणायामैः, तज्जनितधर्मेण च दृष्टादृष्टोपायैर्मनो मलं त्यजति॥ १०॥

सर्वदोषाणां निवृत्तिप्रकारानाह—

**प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषान्।**
**प्रत्याहारेण संसर्गान् ध्यानेनाऽनीश्वरान् गुणान्॥ ११॥**

प्राणायामैरिति। दोषाः पापानि प्राणायामैर्दूरीकर्तव्यानि, वातादिजनितदोषान्वा। धारणाभिर्भगवन्मूर्तिचिन्तनैः, किल्बिषान् वासनासहितमहापातकादीन् दहेत्। प्रत्याहारेण इन्द्रियाणां

प्रकाशः

* प्राणस्येत्यत्र। प्रकारान्तरेणेति। मूत्रपानादिना।

१ भवत्यचिरात् ख. ग. घ. २ दृष्टान्तमाह ग. घ.

संसर्गजनितान् दोषान् दहेत्। ध्यानेन पुनरनीश्वरान् संसारित्वापादकान् अज्ञानादीन् दहेत्। तत्र ये संसारदशायां गुणा ब्राह्मणशरीरापादकान्यपि कर्माणि भगवद्ध्यानं दहति ॥ ११ ॥

यदा मनः स्वं विरजं योगेन सुसमाहितम्।
काष्ठां भगवतो ध्यायेत् स्वनासाग्रावलोकनः ॥ १२ ॥

एवं कृते यदैव स्वं मनो विरजं भवति, योगेन च सुष्ठु समाहितं भवति, तदा भगवतः काष्ठां वैकुण्ठम्, हृदयं वा, हृदये वैकुण्ठं वा, स्वनासाग्रे निरीक्षणं यस्य तादृशो भूत्वा ध्यायेत्। अन्यथा दृष्टिश्चञ्चला मनसो व्यासङ्गमुत्पादयेत्, मीलिता निद्राम् ॥ १२ ॥

तत्र भगवन्तं ध्यायेदिति वक्ष्यति। को भगवानित्याकाङ्क्षायां पुरुषोत्तमस्यैतद्रूपमिति, मनसा तद्रूपं परिकल्प्य, निरन्तरं चिन्तनीयमिति तद्रूपं कल्पनार्थमनुवर्णयति—प्रसन्नवदनाम्भोजमिति—पङ्क्तिः, षड्गुणत्वाद्भगवतः—

प्रसन्नवदनाम्भोजं पद्मगर्भारुणेक्षणम्।
नीलोत्पलदलश्यामं शङ्खचक्रगदाधरम् ॥ १३ ॥
लसत्पङ्कजकिञ्जल्कपीतकौशेयवाससम्।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ॥ १४ ॥

+ प्रसन्नं वदनाम्भोजं यस्य। प्रसादो वरदानार्थः। अम्भोजत्वं दृष्टैव सन्तोषजननार्थम्, मध्वर्थं च। पद्मस्य गर्भे स्थितपत्रवदरुणवर्णे ईक्षणे यस्य। तत्राऽपि प्रसादो दोषदूरीकरणं योगसिद्धिश्च सूचिता। नीलोत्पलानां दलवत् श्यामम्। सौन्दर्यशुद्धी, उष्णत्वाद्यभावः, शृङ्गाररसरूपता च सूचिता। शङ्खचक्रगदाधरमित्यत्तेजोवायूनां शुद्धिदोषाभावार्थं शङ्खचक्रगदानां धारणम्, लसन्ति पङ्कजकिञ्जल्कानीव, प्रान्ते मुक्ताफलगुम्फितमन्ते आरक्तं परिधानयोग्यार्थं केसराकारेण कृतं यत्पीताम्बरम्; तदपि कौशेयं पट्टप्रकृतिकं सर्वदैवत्यं वासो यस्य। भगवान् त्रिभुवनसारभूतः, तस्य छन्दोमयं गूढरसाच्छादकम्, मुक्तान् रजोगुणम्, सत्त्वभेदांश्च गृहीत्वा स्थितपीताम्बरयुक्तम्। श्रीवत्सं वक्षसि यस्य। यो ब्रह्मानन्दः स हृदये प्रकाशते। भ्राजत्कौस्तुभेनामुक्ता कन्धरा यस्य। मुक्तान् भक्तान् जीवान् अतिप्रियत्वेन कण्ठस्थान् करोति ॥ १३ ॥ १४ ॥

मत्तद्विरेफकलया परीतं वनमालया।
परार्ध्यहारवलयकिरीटाङ्गदनूपुरम् ॥ १५ ॥
काञ्चीगुणोल्लसच्छ्रोणिं हृदयाम्भोजविष्टरम्।
दर्शनीयतमं शान्तं मनोनयनवर्द्धनम् ॥ १६ ॥

मत्ता ये द्विरेफा भ्रमराः, तेषां कला पङ्क्तिर्यत्र, तादृश्या वनमालया परीतं व्याप्तम्। पद्दर्शनीयारं

प्रकाशः।

+ प्रसन्नेत्यत्र। सूचितेति। पद्मपर्यायपदेनैव सूचिता। अग्रे पाठसन्देहादर्थो न भाति(?)।

१ स्परसता क. ख. ग. घ. च　　२ अतिप्रयत्नेन क.

गतैः निरन्तरं स्तुतया कीर्त्या व्याप्तम् । परार्ध्यान्यमूल्यानि हारवलयकिरीटाङ्गदनूपुराणि यस्य । परार्ध्यानि भगवतः संबन्धीनि पञ्च भवन्ति—भगवद्भक्ताः, भगवदर्थक्लेशः, भगवदीयं ज्ञानम्, भक्तिः, गतिश्चेति। काञ्चीगुणेन उल्लसन्ती श्रोणिर्यस्य । पृथिव्यां स्त्रीधनाभ्यां सत्वरजस्तमोगुणः संसारः सुप्रसिद्धो भवति । स्वस्य हृदयाम्भोजमेव विष्टरं स्थानं यस्य । अनेन सर्वप्राणिषु विद्यमानो भगवान् ध्येयः, नत्वधिष्ठानादिषु परिच्छिन्नः । दर्शनीयतममतिसुन्दरं सर्वप्रापञ्चिकरसाविस्मारकम् । शान्तं कामादिसर्वदोषनाशकं ज्ञानमयम् । मनोनयनयोर्वर्द्धनं यस्मात् । सकृचेत् भावयति मनः पश्यति वा, पुनर्भावनामेवोत्पादयति, दिदृक्षां च । अनेन विषयबलादपि प्रत्याहारः साधितः । योगज्ञानयोश्च शुद्धिः ॥ १५ ॥ १६ ॥

अपीच्यदर्शनं शश्वत्सर्वलोकनमस्कृतम् ।
सन्तं वयसि कैशोरे भृत्यानुग्रहकातरम् ॥ १७ ॥
कीर्तन्यतीर्थयशसं पुण्यश्लोकयशस्करम् ।
ध्यायेद्देवं समग्राङ्गं यावन्न च्यवते मनः ॥ १८ ॥

अपीच्यं सुन्दरं दर्शनं यस्य । स्त्रीणामपि स्वासक्त्या मोक्षदायी । दर्शनेनैव परमानन्दजनकं च । भगवदनुभव आनन्दाविनाभूत इति च सूचितम् । शश्वदिति । वयोवृद्धत्वादिना कदाचिदप्यन्यथा दर्शनं निवारितम् । सर्वलोकनमस्कृतं सर्वप्रमाणसिद्धम् । सर्वरूपं च । कैशोरे वयसि सन्तमिति । दशमवर्षमारभ्य षोडशवर्षपर्यन्तं किशोरावस्था । रसमाद्भुर्भावस्तावद्दूरे । अग्रे लावण्यस्य ह्रासः । अनेन देवोत्तमत्वमुक्तम् । भृत्येष्वनुग्रहार्थं कातरं व्यग्रम् । फलदानावश्यकत्वं सूचितम् । कीर्तनीयं तीर्थरूपं यशो यस्य । भगवानतिकृपालुः; यतः स्वस्य कीर्तिं कीर्तनीयां तीर्थरूपां च कृतवान् । लोके सन्ति तीर्थानि पापानिवर्तकानि, न तु तेषां सम्बन्ध आवश्यकः । उक्तिविशेषवाक्यानि कीर्तनीयानि भवन्ति । सर्वोऽपि रसाविष्टः कीर्तयति । सर्वपापनाशकं सर्वफलदातृ चेन्नित्यसम्बद्धं भवेत्, सर्वोऽपि कृतार्थः स्यात्; तादृशी च कीर्तिः । किञ्च, स्वकीयानामपि तादृशीं कीर्तिं सम्पादयतीत्याह—पुण्यश्लोकयशस्करमिति । पुण्याः श्लोकाः कीर्तिर्येषां भक्तानाम्, तेषामपि स्वसमानतां सम्पादयतीति यशस्करः । एवं विंशतिधर्मात्मा ध्येयो हरिरिहोदितः। एकविंशो हि पुरुषः; विंशत्यङ्गुलयः, आत्मैकविंश इति । एते ध्येया धर्मा विंशतिः, स्वयं भगवानेकविंशः । एवमेतादृशं भगवन्तं निरूप्य तत्र कर्तव्यमाह—ध्यायेद्देवमिति । एवं समग्राङ्गं सर्वावयवपूर्णं ध्यायेत् । यावन्मनः एकमप्यवयवं न त्यजति, सम्पूर्णमेव रूपं स्फुरति, तावदेव ध्यायेदित्याह—यावन्न च्यवते मन इति । यावत् सम्पूर्णादङ्गात् न च्यवते, नाऽपगच्छति । मनस्तु चञ्चलं नैकत्र स्थिरमिति तथोक्तम्, अन्यथा मुख्ययोगे सर्वदैव स्थिरं भवेत् ।१७।१८।

अवस्थासु विकल्पमाह—

स्थितं व्रजन्तमासीनं शयानं वा गुहाशयम् ।
प्रेक्षणीयेहितं ध्यायेच्छुद्धभावेन चेतसा ॥ १९ ॥

स्थितमिति । स्थितमुत्थितं वा ध्यायेत्; व्रजन्तं वा; आसीनमुपविष्टम्; शयानं वा । चतुर्विधोऽपि गुहाशय एव, स्वहृदय एव । सर्वतो विलोकनार्थमुत्थितः, कार्यकरणार्थं चलति, पूजां गृह्णन्नुपविशति,

१ सत् क. प छ.

कृतकार्यश्च शेते । किञ्च, प्रेक्षणीयेहितो भगवान् ध्येयः । प्रेक्षणीयमीहितं यस्य । चेष्टाऽपि भगवानिव प्रेक्षणीया । तेन भगवतः क्रीडा; बालैर्गोभिर्गोपालैर्गोपिकाभिरन्यैश्च नानाविधाः क्रीडाः, अपि ध्येया इत्युक्तम् । तत्र क्रीडासु तत्पद्रागेण स्वकामादिनाऽपि ध्यान सम्भवतीति तन्निवृत्त्यर्थमाह–शुद्धभावेन चेतसेति । शुद्धो भावो यस्य चेतसः, सर्वकामनादिदोषरहितेन । एषा हि धारणा निरूपिता ॥ १९ ॥

एकैकावयवस्य रसं ज्ञातुं ध्यानं निरूपयति—

**तस्मिँल्लब्धपदं चित्तं सर्वावयवसंस्थितम् ।**
**विलक्ष्यैकत्र संयुज्यादङ्गे भगवतो मुनिः ॥ २० ॥**

× तस्मिँल्लब्धपदमिति । तस्मिन् सम्पूर्णे, लब्धपदम्, तत्र स्थिरीभूतं चित्तं सर्वावयवेषु सुप्रतिष्ठितं विलक्ष्य ज्ञात्वा, व्यतिरेकतया वा लक्षयित्वा, भगवतः किञ्चिन्न्यूनं ज्ञात्वा एकस्मिन्नेवाऽङ्गे संयुज्यात् । यतोऽयं मुनिः, युक्त्यैव पदार्थान् स्थिरीकृत्य ध्यायति। अतोऽत्राऽप्येकैकस्यावयवस्य माहात्म्यं ज्ञात्वाज्ञात्वा सर्वज्ञानं करिष्यतीति भावः । तदेकमेकमङ्गं निरूपयति त्रयोदशभिः, मतान्तरत्वात् संवत्सरात्मकः स इति।

अतिक्रमस्य वक्तव्यत्वात्तत्र प्रथमं चरणारविन्दं तद्गुणाविष्कारेण वर्णयति–द्वाभ्याम्, स्वतः कार्यतश्च माहात्म्यप्रतिपादनेन । तत्र प्रथमं स्वतो माहात्म्यमाह—

**सञ्चिन्तयेद्भगवतश्चरणारविन्दं वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यम् ।**
**उत्तुङ्गरक्तविलसन्नखचक्रवालज्योत्स्नाभिराहतमहद्धृदयान्धकारम् ॥ २१ ॥**

* सञ्चिन्तयेदिति । भगवतश्चरणारविन्दं सम्यक् चिन्तयेत् । सम्यक्त्वं दीर्घकालादरनैरन्तर्यम्, माहात्म्यज्ञानपूर्वकत्वं च । चरणौ भक्तिप्रतिपादकः, अरविन्दं सर्वतापनाशकम् । वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यम् । चिह्नचतुष्टयेनाढ्यं सम्पन्नम् । भक्तानां पापपर्वतपक्षच्छेदनार्थं वज्रः; भक्तानां मनोगजवशीकरणार्थमङ्कुशम्; अत्र स्थितानां सर्वभयनाशनज्ञापनार्थं ध्वजः; सुखसेवार्थं चाम्बुजम् । एतानि लाञ्छनानि चिह्नानि चतुर्विधपुरुषार्थज्ञापकानि । एतादृशान्यनन्तानि चिह्नानि सन्तीति आढ्यता ज्ञापयति । अनेन भजनीया गुणा उक्ताः फलदातारः । दोषनिवर्तकानाह–उत्तुङ्गेति । उत्तुङ्गानि रक्तानि यानि विलसन्ति नखानि, तेषां चक्रवालं मण्डलम्; तस्य ज्योत्स्नाभिराहतो महतां हृदयान्धकारो येन । बहिःस्थितेन प्रकाशेन नाऽन्तःस्थितोऽन्धकारोऽपगच्छति । महतां चाहङ्काराधिक्यम्; तत्रत्यश्चान्धकारः अवश्यं दूरीकर्तव्यः । स च नैकेन चन्द्रमसा भवति, सौरश्च प्रकाशस्तापजनकः; तेन दशनखात्मकाश्चन्द्रा दशावस्थासु सर्वदोषनिवारकाः । उत्तुङ्गा ऊर्ध्वतुङ्गाः, अतितुङ्गेऽप्यहङ्कारे विद्यमानमज्ञानं नाशयन्ति । रक्ता रतदर्थमेवोद्यन्तः, उद्यन्तश्चारक्ता भवन्ति । विलासयुक्तत्वात् नियतमप्यावरणं दूरीकुर्वन्ति; यथा कामिन्या-

प्रकाशः।

× तस्मिन्नित्यत्र । त्रयोदशसङ्ख्यातात्पर्यमाहुः–मतान्तरत्वादित्यादि । भक्तौ तु भगवानेव फलभूत इति समग्र एव ध्येयः, इह तु चित्तशोधनोपायभूतः कालात्मक इति तथात्वज्ञापनाय तथेत्यर्थः ।

* सञ्चिन्तयेदित्यत्र । नखानां चन्द्रत्वं ज्योत्स्नापदप्रयोगसूचितं बोध्यम् ।

१ महत्प्पवाम ग. च.  २ भेदनार्थं क. ख. ङ. च.

चरण कामुक ॥ एव विलास । चन्द्रा भवन्ति, पर नरा , न विद्यते राम। ह्य येषाम्। एक एव चन्द्र आकाशे भासते, एते ॥ नाऽऽकाशसम्बन्धिन । एतेषा चत्रमायुधवालमगृतपोषकम्, न तु केवलमन्धकारमेव नाशयति । बममृतमल यत्रेति वा फलद्वरहितम् । ज्योत्स्नाभिरिति बहुवचन नानाविधान्धकारनिवृत्त्यर्थम्, अनेन स्वत आनन्दरूपता, अज्ञाननिवृत्त्या च आनन्ददायकत्व निरूपितम् ॥ २१ ॥

एव स्वरूपोत्कर्षमुक्त्वा कार्यत उत्कर्षमाह—

**यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत् ।**
**ध्यातुर्मनःशमलशैलनिसृष्टवज्रं ध्यायेच्चिरं भगवतश्चरणारविन्दम् ॥२२॥**

*यच्छौचेति । भगवतश्चरणे पदार्थद्वयं परममाहात्म्यसूचकमस्ति—गङ्गा, भक्तिरसश्चेति । तत्र गङ्गा. या माहात्म्य मायश्चितानभिकृतानपि सर्वपूज्यान् करोति । तदाह—ययोश्चरणयो शौचे प्रक्षालने सति नि सृतम् , यज्जलम् , तत् सरित्प्रवरा जाता । सरिता मध्ये गङ्गा श्रेष्ठा, तस्या यदुदकमेकदेश ; तेनापि मूर्ध्नि निहितेन अधिकारवत्त्वासेन, शिवः परमकल्याणरूपोऽपि, शिवोऽभूत् । यस्तु साधनेन सिद्धमेव स्वस्वरूप प्राप्नोति, स आधिदैविक प्राप्नोतीत्यध्यवसीयते । अपहतपाप्मन एवैतत्सामर्थ्यमाधिदैविकत्वमापणम्। यथा " स वाचमेव प्रथमामत्यमुच्यत, स वागग्निरभवत् " इति । एव शिवोऽपि स्वा देवता प्राप्तवान् , अन्यथा भगवत इव तस्य स्वतन्त्रता न स्यात् प्रमाणादिचतुष्टयेनाऽपि । अतो गङ्गा स्वस्याऽऽधिदैविक रूप प्रापयतीति, चरणसम्बन्धिनामपि यत्रैतन्माहात्म्यम् , तत्र साक्षाच्चरणस्य ध्यातस्य तथात्वसम्पादकत्व किं वक्तव्यमिति भाव । एतच्च गङ्गाया माहात्म्य न गङ्गाजलस्थम्, नाऽपि तदभिमानिन्या देवताया , शिवापेक्षया अन्येषामचेतनाधिष्ठातृदेवताना हीनत्वात्, किन्तु भगवच्चरणस्थमलस्यैतन्माहात्म्यम् । तानि रजासि पूर्वं निरूपितानि भक्ताना पुण्यसस्कृतभौतिकानीति । तानि चरणस्य मलरूपाण्येव भवन्ति, अन्यथा सेवकरूपदेहोत्पत्तिर्न स्यात् । अत एतज्जल शौचे, पादप्रक्षालने सति, तद्रज सहितं नि सृतम् । महत्त्वात् रज सम्बन्धात् देवताशरीर तज्जातमित्याह—सरित्प्रवरेति । नि सृता सरित्प्रवरा जाता । सर्वभक्तोद्धारार्थे उपायभूता । सा चेद्रजोविशिष्टा धृता स्यात्, तदा भक्ताना देहोत्पत्तिर्नस्यादित्युदकमेव निरूपितम् । तस्मिन्नुदके रज सामर्थ्याभावे शिवत्वसम्पादकत्व न स्यादित्याशङ्कय तीर्थत्वमाह—सत्साधारणमेव सर्वजगतामाधिदैविकत्वसम्पादनरूप तीर्थं जातम् । नन्वनेन जलेन आधिदैविकत्वमेव कुतः सम्पादितम् ? ' यावदस्थि मनुष्याणाम् ' इत्यादिवाक्यै फलसाधकत्व च श्रूयते । तत्राऽऽह—मूर्ध्न्यधिकृतेनेति । उत्तमाङ्ग शिर , स्वमस्तके तज्जलमधिकारि कृतवान् । अत उत्तमाङ्गे

**प्रकाशः**

* यच्छौचेत्यत्र । ययोश्चरणयोरिति द्विवचनेन वामेतृत चरणक्षालनं सूच्यते । तेन तच्छ्रवाटसम्बन्धिनार्मदजलेऽपि पावनत्वं सिध्यति, तेन दर्शनादेव नार्मदमित्यादीना संगति । अपहतपाप्मन एवाऽऽधिदैविकप्रापकत्वे गमकमाह—यथेत्यादि । स्वस्याऽऽधिदैविकं रूपमिति शिवस्य परमशिवरूपम् । तेन मोक्षधर्मे छन्दोगानां प्रपदनमन्त्रे च ब्रह्मपुत्रत्वेन नमकमन्त्रेषु मन्युत्वादिना सिद्धस्य यद्ब्रह्माभिन्नत्वमर्थशिर - प्रभृतिश्रुतम् तत्परमशिवत्व गङ्गासम्बन्धादेवेत्यर्थ । पूर्वमिति । प्रथमस्कन्धे ' या वै लसच्छ्रीतुलसीविमिश्र' इत्यत्र । धृता स्यादिति । शिवेन धृता स्यात् । न मुक्तावपि ।

१ एतम क ङ   २ रमया ग

स्वस्य सर्वाधिकारं दत्त्वा स्थापितवतः साधारणं फलं प्रयच्छति; सर्वस्वनिवेदने आधिदैविकत्वप्रापणमेव युक्तम्। शिवत्वादेव न पापादिसम्बन्धः। अमङ्गलरूपस्यैव भजनीयत्वात् नाऽपि तद्रूपानिवृत्तिः। अत आधिदैविक एवाऽयं जातः। माहात्म्यान्तरमाह—ध्यातुर्मन इति। यो ध्यायति तस्य मनसि ये शमलशैलाः पापपर्वताः, तेषामर्थे निसृष्टो वज्रो येन। भगवतश्चरणे ये वज्रादयो निर्मिताः, तत्र स चरणो ध्याने परमासक्तियुक्तः, तान् प्राणिनः पापेनाऽतिगुरुतरान् मत्वा, बहुजन्मार्जितपापपर्वतान् दूरीकरोति। अनेन भक्त्यधिष्ठात्री देवतेयमिति निरूपिता। पक्षपातोऽपि निरूपितः। एवमङ्कुशादिकार्यमपि करिष्यतीति सूचितम्। मनःपदेन ध्यानस्य तत्र सम्बन्धात् सम्बन्धिन एव पापं नाशयतीति तथोक्तम्; न तु देहपापं नाशयतीति। देहस्याऽग्रे गमनापेक्षाभावाच्च। पापानामतिदार्ढ्यमचयात् पर्वतत्वम्। एवं भगवतश्चरणमाहात्म्यं ज्ञात्वा चरणं ध्यायेत्। चिरध्याने मनसोऽप्याधिदैविकत्वमापद्येत। उपसंहारेऽपि भगवतश्चरणारविन्दकीर्तनं मध्ये पदार्थान्तरध्यानव्यावृत्त्यर्थम्। प्रत्येकध्यानानि गुरुध्यानं वा निवारितम्॥ २२॥

चरणध्यानानन्तरं जानुद्वयं ध्यायेदित्याह—

**जानुद्वयं जलजलोचनया जनन्या लक्ष्म्याऽखिलस्य सुरवन्दितया विधातुः।**
**ऊर्वोर्निधाय करपल्लवरोचिषा यत् संलालितं हृदि विभोरभवस्य कुर्यात्॥२३॥**

जानुद्वयमिति। जानुद्वयस्य माहात्म्यं सर्वजगत्फलरूपाया ब्रह्मानन्दरूपायाश्च सेवकत्वेन। यथा वा सुवर्णे मरकतमणियोजितः स्वरूपतोऽपि सुन्दरो भवति। जानुद्वयस्योर्वोर्निरूपणात् शयानो भगवान् लक्ष्यते, शय्यागता च लक्ष्मीः। अनेन तस्यामनुग्रहोऽपि सूचितः। अतस्तज्जनितश्रमस्तयैव दूरीकर्तव्यः। **जलजलोचनयेति** कमलनयनया तद्रससौन्दर्यनिरूपणायोक्तम्। दोषाभावाय तथात्वप्रयोजनाय चाऽऽह—**अखिलस्य जनन्येति**। अन्यथा जगत्सृष्टिर्न स्यात्। 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्। सम्भवः सर्वभूतानां ततो भवति भारत' इति भगवद्वाक्यात्। लक्ष्म्येति सा ज्ञानशक्तिरित्यपि सूचितम्, लक्षधातुनिष्पन्नत्वात्। अनेन मातापित्रोर्ध्यानं निरूपितम्। तस्या ध्यानं योगिनो न कर्तव्यमिति शङ्कायामाह—**सुरवन्दितयेति**। सर्वैर्देवैर्वन्दिता सा परमा देवता; अतो ध्येया देवता; ध्यानाभावे इष्टसिद्धिर्न स्यादिति। ऊर्वोरुभयोर्निधानं लक्ष्म्याः कृतकृत्यताभावनार्थम्, स्नेहाधिक्यैक्यभावनार्थं च। निधायेति भगवच्छयनं लक्ष्यते; भगवदपेक्षाभावो वा। करपल्लवा अङ्गुलयः, तेषां रोचिर्दीप्तिः; लीलया शनैः स्थापनम्, अन्यथा भगवज्जान्वपेक्षया ऊरुकरपल्लवयोः कठिनत्वात् पीडा स्यात्। यथा शीतलस्पर्शेन तापो गच्छति, तथा हस्तानन्दस्याऽन्तः प्रवेशेनैव श्रमो गच्छतीत्यर्थः। **यत्** प्रसिद्धं जानुद्वयम्, एतद्धृदये भाव्यमिति; न तु बहिः स्थितं मनसा स्मर्तव्यम्। नन्वल्पे हृदये कथमेषा भावना भविष्यतीत्याशङ्क्याऽऽह—**विभोरिति**। स हि समर्थो ध्यातो हृदयं पुष्कलं कर्तुं समर्थः। ननु संसार एव निरूपणात् किमेतादृशेन ध्यानेनेत्याशङ्क्याऽऽह—**अभवस्येति**। न विद्यते भवः संसारो यस्मात्। यो हि भगवद्धर्मः सजातीयः, स तस्याऽऽधिदैविक इति तन्नाशसमर्थो भवति। यथा तस्याऽरणेरेव तत्रोत्पन्नोऽग्निर्दाहको भवति, न ह्यन्यो विजातीयं दहति। अत एव पुराविदां वचनम् 'स्तेयं हरेर्हरति यन्नवनीतचौर्यम्' इति॥ २३॥

ततं ऊरू ध्यायेदित्याह—

---

१ अन्तरा क २ तथा ङ.

**ऊरू सुपर्णभुजयोरधिशोभमानावोजोनिधी अतसिकाकुसुमावभासौ।**
**व्यालम्बिपीतवरवाससि वर्तमानकाञ्चीकलापपरिरम्भि नितम्बबिम्बम्॥ २४ ॥**

*ऊरू इति। गच्छन् भगवान् गरुडाधिरूढो ध्येयः। गरुडपृष्ठे उपविष्टः, स्कन्धयोर्लम्बितपादः, गरुडहस्तयोः स्थापितचरणो यो भगवान्, तस्य ऊरू ध्येयौ। सुपर्णभुजयोरध्युपरि अधिकं शोभमानौ। यथा दिव्येन्द्रनीलमणेरधिकः प्रकाशो भवति, तथा ओजोनिधी। अतसिकापुष्पवदवभासो ययोः। नितम्बबिम्बमपि ध्येयमित्याह—व्यालम्बीति। विशेषेण आलम्बि यत्पीतम्, वरमुत्कृष्टं वासः; तस्मिन् वर्तमाना या काञ्ची, तस्याः कलापः समूहः; बहुसूत्रनिर्मितत्वात्, चित्ररूपाणि वा; मयूरकलापसदृशपदकयुक्ता वा काञ्ची। तस्याः परिरम्भयुक्तं नितम्बबिम्बं यस्य। गरुडो हि कालात्मा, ऊरू च दैत्योत्पत्तिस्थानभूतौ। तेषामाधिदैविकमूरुद्वयम्, तत्कालाधीनगतिमत्। कालस्य स्कन्धद्वयम्—कर्मस्वभावौ। कालस्याऽप्ययं गरुड आधिदैविकः; अत एव सुपर्णत्वम्। अधिकशोभमानत्वं कालकर्मस्वभावोपमर्दनेन। तद्भावनायां स्वस्याऽपि तथात्वं भविष्यति; यथा संसारनिवृत्तिः पूर्वं फलति, तथाऽत्र स्वभावाविजयः। सुपर्ण एव स्थितमिति नितम्बबिम्बं मुख्यतया कालातिक्रमहेतुः। अनेन विश्वातिक्रमोऽपि विश्वरूपभगवद्भावतयेत्युक्तम्। वेदैश्च कालातिक्रमरूपमाच्छादितम्। वेदव्यवहितमेव यज्ञादिकं कालसंबद्धं भवतीति कर्मणां कालोपाधिकत्वम्। अहोरात्रातिक्रमोऽग्निहोत्रेण; मासातिक्रमो दर्शपूर्णमासाभ्याम्; एवमृत्वतिक्रमश्चातुर्मास्यैः; अयनातिक्रमः पशुना; वर्षस्याऽतिक्रमः सोमेनेति। जगज्जन्महेतुस्थानं च; तद्ध्यानेनैव जगति जन्मातिक्रमश्च। ओजोनिधित्वं तेजसोऽतिक्रमाय। अतसिका पृथिवीजलात्मिका, तत्र यो नीलो भावः पुष्पस्य, तत्पृथिव्याः; यः शुक्लः स जलस्य; अतस्तत्पुष्पावभासत्वं तदुभयातिक्रमाय। भगवांस्तु सर्वैरेवोपमीयत इति न प्राकृतोपमादोषः। विशेषेण पीताम्बरस्य लम्बता आच्छादनाधिक्यख्यापनाय। वेदो हि बहुपरिकरो भवतीति। पीतो ह्यर्थो धर्मसहितः; स श्रुतिरूपो भवतीति अभिवदाभ्यां कर्म साध्यते। आवरकसौन्दर्येणैव व्यामोहार्थं वरत्वम्। वासश्चाऽऽच्छादकम्; तत्रैव माया व्यामोहयति। काञ्ची माया; कलापो जगद्वैचित्र्यम्; तत्परिरम्भो जगद्वैचित्र्यजननार्थम्। बिम्बत्वमाधिदैविकत्वख्यापनार्थम्॥ २४ ॥

ततो नाभिं ध्यायेदित्याह—

**नाभिह्रदं भुवनकोशगुहोदरस्थं यत्राऽऽत्मयोनिधिषणाखिललोकपद्मम्।**
**व्यूढं हरिन्मणिवृषस्तनयोरमुष्य ध्यायेद्द्वयं विशदहारमयूखगौरम्॥ २५॥**

× नाभिह्रदमिति। शयान एव भगवान् ध्येय इति लक्ष्यते, तादृश एव रूपे भगवतो नाभिकमलात्

---

प्रकाशः।

* ऊरू इत्यत्र। तेषामिति कालाद्युपमर्दकत्वम्। तदाहुः—यथेत्यादि। वेदैश्चेत्यादिना पीताम्बरतात्पर्ययुक्तं ज्ञेयम्। कालातिक्रमरूपमिति। कालस्याऽतिक्रमो येन तादृशं रूपम्। तत्प्रकारमाहुः—वेदेत्याद्यतिक्रमायेत्यन्तेन। स्थानं चेति। ध्येयमिति शेषः।

× नाभिह्रदमित्यत्र। विशदत्वस्य उभयविधाभावरूपत्वव्याख्यानेन स्वपरिपेष्यधर्मोपदेशनं वैशद्यं फलति।

---

१आलम्बम् ग ग. २ भावनया ग. ३ इति ङ. ४ नाभिहृदम् ग.

ब्रह्मोत्पद्यत इति। ह्रदत्वेनाऽतिगम्भीरत्वम्, सर्वजीवानामाधारत्वं च; तस्मिन्नेव ध्याते भौतिको जीवभावो गच्छतीति। भुवनात्मको यः कमलकोशः तस्य गुहा गुप्तस्थानं तादृशं भगवदुदरम्। उदरे हि जगत्तिष्ठति। कोशस्थितश्च न जलादिभिरुपहन्यते; तथा भगवदुदरे स्थिताः प्राणिनो न संहारैरुपहन्यन्ते। एतावता तुन्दिलो भगवानिति ज्ञापितम्, तादृशस्यैवोदरमध्ये नाभिर्भवति। नाभेर्माहात्म्यमाह—यत्रेति। आत्मयोनेर्ब्रह्मणः तस्य या धिषणा बुद्धिः, आध्यात्मिकं रूपम्; तदेव अखिललोकात्मकं पद्मम्। नाभौ ब्रह्मा, बुद्धिः, पद्मं चेत्याधिदैविकादयस्त्रयोऽपि नाभौ निरूपिताः। भगवतः स्तनयोर्द्वयं च ध्यायेत्। हरिद्वर्णमणिवृषौ यौ स्तनौ। हरिन्मणिः कामपूरकश्चिन्तामणिः; तत्र श्रेष्ठो भगवद्धर्मलक्षणः। स उभयविधोऽपि द्वयत्वेनोक्तः। तस्य व्यूढता भगवदवयवेभ्यः स्वतन्त्रतया प्रकाशमानत्वम्। विशदो यो हारो मुक्तानाम्; विशदानां निर्मलानां वा यो हारः। तस्य मयूखैर्गौरम्। भगवद्धर्माः शुकादिभिः परिसेव्यमानाः सर्वेषां रागहेतवो भवन्ति। विशदत्वं नानायोगचर्याद्यभावः, अलौकिककरणाभावो वा ॥ २५ ॥

वक्षो भावयेदित्याह—

**वक्षोऽधिवासमृषभस्य महाविभूतेः पुंसां मनोनयननिर्वृतिमादधानम्।**
**कण्ठं च कौस्तुभमणेरधिभूषणार्थं कुर्यान्मनस्यखिललोकनमस्कृतस्य ॥ २६ ॥**

*वक्षोऽधिवासमिति। ऋषभस्य वक्षो महाविभूतेर्निवासम्, पुंसां मनोनयनयोर्निर्वृतिमादधानम्। वक्षो हि स्वरूपतः कार्यतश्च सर्वोत्तमम्; तत्र स्वरूपमृषभस्य श्रेष्ठस्येति। श्रेष्ठता हि हृदयधर्माद्भवति; यादृशमन्तर्हृदयं तादृशमेव गोलकं भवति। भगवतस्त्वानन्दमयस्य नैवंविधोऽपि भेदो विद्यते। अतो यावन्तो भगवद्गुणाः पुरुषोत्तमत्वज्ञापकाः, ते सर्वे वक्षसीति ऋषभसम्बन्धेनैव स्वरूपमाहात्म्यमुक्तम्। कार्यतो माहात्म्यं द्विविधम्—ऐहिकं स्त्रीधनाधारत्मकम्, पारलौकिकं परमानन्दहेतुत्वम्। तत् क्रमादाह। विभूतेर्लक्ष्म्याः सर्वैहिकपुरुषार्थरूपायाः निवासस्थानमिति। आनन्दोऽपि बाह्याभ्यन्तरभेदेन द्विविधः; तदुभयमाह—मनसो नयनयोश्च निर्वृतिमानन्दमादधानमिति। कामादिकृतदोषवशात् सुखत्वं वारयति—पुंसामिति। बहुवचनं काकतालीयन्युदासाय; सर्वेषामेव पुंसाम्। कण्ठं च ध्यायेदित्याह—कण्ठमिति। कण्ठो हि द्विविधः—बाह्य आभरणाधारभूतः, आन्तरः सर्ववेदोद्गमहेतुर्जगद्गुरुः। आभरणानि चातिप्रियाणि कण्ठे धार्यन्ते; भगवतस्तु मुख्यभक्तापेक्षया नाऽन्यः प्रिय इति तेषां तत्स्वरूपस्य कौस्तुभमणेरधिकभूषणमर्थो यस्य। मणिना हि न कण्ठो भूष्यते, किन्तु कण्ठेन मणिः। सुवर्णादिकं तस्यापि भूषणं भवति तद्व्यावृत्त्यर्थमधिकं भूषणमित्युक्तम्। चकारात् स्कन्धद्वयमपि। अखिललोकनमस्कृतस्येति वेदोद्गमहेतुरखिलगुरुर्भगवान्निरूपितः ॥ २६ ॥

**बाहूंश्च मन्दरगिरेः परिवर्तनेन निर्णिक्तबाहुवलयानधिलोकपालान्।**
**सञ्चिन्तयेद्दशशतारमसह्यतेजः शङ्खं च तत्करसरोरुहराजहंसम् ॥ २७ ॥**

---

प्रकाशः।

* वक्ष इत्यत्र। नैवंविधोऽपीति। न सादृश्यात्मकोऽपि।

---

१ जीवाधारत्वम् ख. जीवनाधारत्वम् ग घ. ङ  २ स्थानं निवासम् क घ.  ३ आनन्दमयत्वे घ. ङ.

×बाहूंश्च ध्यायेत् । चकारात् बाहुस्थिता देवाः। बाहवो ह्यमृतमथने व्यापृताः, देवेभ्योऽमृतं पायितवन्तः । वलयास्तत्र वेष्टनरूपाः पुरुषार्थाः । मन्दरगिरेः परिवर्तनेन परितो भ्रामणेन, निर्णिक्तान्यन्योन्यं मिलितानि, घर्षणेनोज्ज्वलीकृतानि वा, बाहुवलयानि येषाम् । अधिकृता लोकपालाश्च येषु । तेषु हस्तेषु चक्राद्यायुधानि ध्येयानि । तत्र प्रथमं सुदर्शनं ध्येयमित्याह—सञ्चिन्तयेदिति । दशशतारं चक्रम्, दशशतान्यारा यस्य । कालचक्रं निर्दिष्टम् । शतमित्यपरिमितनाम । दश प्राणा भवन्ति । प्रत्येकं दशानां शतान्याराः कालावयवा भवन्ति । तेन सर्वप्राणहारि कालात्मकं सुदर्शनं चक्रम् । प्रतीकाराभावायाह—असह्यतेज इति । तस्य तेजो यद्दूर्मयः। कालगुणांश्च सोढ्वा प्रतीकारः कर्तव्यः, तदेव त्वसह्यम् । शङ्खं च ध्यायेत् । चकारात् सर्ववेदांश्च तद्गतान् । तस्य भगवतः करसरोरुहे करकमले, राजहंसरूपम् । भगवत ओष्ठकान्त्या आद्यन्तयोरारक्तिमा, स शब्दश्चेति लोहितास्यचरणः कूजन् हंसः कमलमध्यस्थो निरूपितः । स हि क्षीरनीरविवेककर्ता भगवत्प्रीतिबोधकश्च ॥ २७ ॥

कौमोदकीं भगवतो दयितां स्मरेत दिग्धामरातिभटशोणितकर्दमेन ।
मालां मधुव्रतसमूहगिरोपघुष्टां चैत्यस्य तत्त्वममलं मणिमस्य कण्ठे ॥२८॥

कौमोदकीमपि स्मरेत् । सा ह्यासन्यरूपेति । भगवतः प्रिया; अपहतपाप्मत्वाच्च सर्वदैत्यहननहेतुरुक्तः । तदाह—दिग्धां व्याप्तामरातीनां शत्रूणां ये भटास्तेषां शोणितकर्दमेन । यथा निष्पापः पुरुषो महान् भगवत्प्रियः, एवं दैत्यहन्ताऽपि भगवत्प्रियो भवति । मालामपि ध्यायेत्, मधुव्रतसमूहगिरा उपघुष्टाम् । मधुव्रताः मनोहरानियमयुक्ताः, मध्वेव व्रतं यस्येति; वेदा अपि भगवत्प्रतिपादनमेव कुर्वन्तीति । तेषां समूहः; स एव वेदः । तेषां गीर्धर्मज्ञानरूपा, तया उपघुष्टा भगवत्कीर्तिर्भवति, यद्धर्मादिभिर्न भवति तत्कीर्त्या भवतीति । मालायाः कण्ठ एव स्थानमिति पूर्वोक्त एव कण्ठः कौस्तुभभूषणत्वेनोक्तः पुनः स्मार्यते । चैत्यस्य चित्ताधिष्ठातुर्जीवस्य तत्त्वं यत्, सङ्घाते अप्रविष्टं निजं रूपम्, स एव कौस्तुभमणिः; तदस्य भगवतः कण्ठे । मालां च मणिं च कण्ठे ध्यायेदिति सम्बन्धः । भक्तैः सह भगवत्कीर्तिर्ध्येयेति यावत् ॥ २८ ॥

अतः परं वदनारविन्दं ध्यायेदित्याह—

भृत्यानुकम्पितधियेह गृहीतमूर्तेः सञ्चिन्तयेद्भगवतो वदनारविन्दम् ।
यद्विस्फुरन्मकरकुण्डलमण्डितेन विद्योतितामलकपोलमुदारनासम् ॥ २९ ॥
यच्छ्रीनिकेतमलिभिः परिसेव्यमाणं भूत्या स्वया कुटिलकुन्तलवृन्दजुष्टम् ।
मीनद्वयाश्रियमधिक्षिपदब्जनेत्रं ध्यायेन्मनोमयमतन्द्रितमुल्लसद्भ्रु ॥ ३० ॥

---

प्रकाशः।

× बाहूनित्यत्र । 'सहस्राराच्युतोऽव्यय' इति सुदर्शनस्तुतिवाक्यानुरोधेन प्रकारान्तरेण व्याख्यानं कुर्वन्ति—दशेत्यादि ।

---

१ भाय घ २ यद्दूर्मयः ग उर्मयः ग.

*भूत्येति । तदेव वदनारविन्दं ध्येयम्, यत्सर्वजनीनम्; तदेव च सर्वजनीनं भवति, यदि भूमाववतरति; अवतारश्च तदैव भवेत्, यदि भृत्यानां दुःखं भवति। तदाह—भृत्यानामनुकम्पितधिया गृहीता मूर्तिर्येन । अवतीर्णस्याऽन्यथा शङ्काव्युदासायाऽऽह—भगवत इति । दृष्टिमात्रेणैव तापापनोदनादरविन्दत्वम्। तन्मुखारविन्दमनुवर्णयति सार्द्धेन—यद्विस्फुरदिति । यन्मुखारविन्दं विशेषेण स्फुरती मकराकृते कुण्डले ताभ्यां मण्डितेन गण्डयुगलेन; वल्गितेनेति पाठे मकरकुण्डलयोर्यद्वल्गितम्, चालनेनोत्पन्नं तेजः; तेन विद्योतिते अमलकपोले यत्र । उदारा नासा यत्र । यत्पुनर्मुखारविन्दमलिभिः परिषेव्यमाणम्, स्वयैव भूत्या असाधारणकान्त्या च परिषेव्यमाणम् । कुटिलानां कुन्तलानां वृन्दैर्जुष्टम् । मीनद्वयस्य श्रियमधिक्षिपत् दूरीकुर्वत् अब्जसदृशं नेत्रद्वयं यत्र । मनोमयम्, सर्वेषामेव मनांसि तत्र निरन्तरं वर्तन्त इति मनःप्रचुरम् । अतन्द्रितं सावधानतया उल्लसन्त्यौ भ्रुवौ यत्र । एवं नव विशेषणानि मुखे निरूपितानि नवरसजननाय, सर्वेषां च वशीकरणाय । नवविधा भक्तिश्च निरूप्यते । मुखं ह्यानन्दरूपस्य भगवतो भक्तिरसात्मकं फलं भवति; विषयश्चरणौ; आश्रयो जीवः । नवरसा अपि मुखे अभिव्यक्ताः । कपोलौ च भक्तिरसानुभवे भक्तानां समाजस्थानमेव भवति; तत्र क्रियापरा ज्ञानपराश्च भक्ता उल्लसन्ति । साङ्ख्ययोगौ मकरकुण्डले । शाब्दं प्रमाणं श्रोत्रम्, अनुभवरूपं चक्षुः शाब्दे प्रमाणे । साङ्ख्ययोगयोः योऽयमनुभावः, तद्वल्गितम् । तेन विद्योतितत्वं क्रियाज्ञानशक्त्याऽऽविर्भावः । उत्तमभक्तानां परस्परं श्रोतॄणां समाजत्वादमलत्वम् । अनेन श्रवणपरिकरो महान् निरूपितः । उदारे नासे कीर्तनम्; कीर्तनस्य सर्वपुरुषार्थदातृत्वादुदारत्वम् । मुखे हि नासिकैव प्रधानम्, जगति सौन्दर्यदानात् भगवन्नासिकाया उदारत्वम्; भगवत्स्थित्यैव सर्वेषां सर्वपुरुषार्थसिद्धिः । स्थितिप्रतिपादिकाया नासिकाया उदारत्वम् । श्रीनिकेतमिति । लक्ष्म्या स्थितिः स्मृतिरूपा; भक्तौ श्रीः स्मृतिरेव । अलीनां परितः सेवनम्, प्रकारान्तरेण भक्तानां पादसेवनम् । स्वया भूत्या सेवनं चाऽर्चनं स्पष्टमेव । कुटिला वक्रा कुन्तला वन्दनात्मका भवन्ति । वन्दने हि पुरुषः कुटिलाकृतिर्भवति, अन्यथा भगवति कुटिलानां स्थितिर्न स्यात् । कुं पृथिवीं तरन्तीति । यथा जले तरन्तो यादृग्रूपा भवन्ति, तथैव पृथिव्यां नमन्तः । वृन्दं शतादिसङ्ख्यावृत्तिः, तेनाऽपि जुष्टमिति रसैनमनं प्रतिपादितम् । दास्यं प्रत्यक्षं परोक्षमन्तर्बहिश्च; अन्तर्मलदूरीकरणरूपम्, बहिः सौन्दर्यरूपं च । मीना जलस्थमलनाशकाः; तच्च मलं बाह्याभ्यान्तरभेदेन भवतीति मीनद्वयं शोधकद्वयं पापाविधानाशकरूपम् । दास्यं तूभयसामर्थ्यमपि क्षिपद्भवति । आकृतौ वर्णना तु स्पष्टैव; रसार्थं परिभ्रामणे तथैव प्रतीतिः । बहिः शोभार्थमब्जमित्याह । नेत्रद्वयं सर्वानुभवहेतुः, तथैव दास्यमिति । मध्ये पुनर्ध्यानकथनं सतानां

प्रकाशः।

*भूत्येत्यत्र । मकराकृते इति । मकरवदासमन्तात्कृते । युगलेनेति। उपलक्षितमिति शेषः। अनयैवारुच्या पाठान्तरं दर्शयन्तो व्याकुर्वन्ति—वल्गितेनेत्यादि। यच्छ्रीत्यत्र। ध्यानस्य मानसी(?)मूर्तिकल्पनयैव भवनेन मनोमयत्वसिद्धावपि मध्ये तदुक्तिप्रयोजनं वक्तुं मनोमयपदं व्याकुर्वन्ति—सर्वेषामित्यादि। सावधानतयेति एतेनाऽतन्द्रितपदस्य क्रियाविशेषणत्वं सूचितम्। वशीकरणं च भक्तानामेव करोतीति ज्ञापनायाहुः—नवविधेत्यादि। ननु मुखे भक्तिनिरूपणस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः-मुखं हीत्यादि। तथा च, भक्तिविषये आसक्तस्य भक्त्याश्रयस्य भक्तिरसात्मकं फलमनुभावयितुं तन्निरूपणमित्यर्थः। तत्र प्रथमं श्रोतॄणां रसानुभावनप्रकारं व्याकुर्वन्ति-नवरसा इत्यादि । शाब्दे प्रमाणे इति । इदं पदद्वयं सप्तम्यन्तम् । चक्षुषः शब्दान्तःपातित्वं तु सामानाधिकरण्यात् । रलयोरभेदमाश्रित्य कुन्तलपदनिरुक्तिमाहुः—कुं पृथ्वीमित्यादि । तथैव प्रतीतिरिति ।

१ अनुकम्पनधिया. क.   २ अनुभवः. ग.   ३ भक्तानाम् क. ङ   ४ रसानमनन्त्या प., नमनमनन्तम् ङ.

स्वाधीनानां भिन्नतया ज्ञापनार्थम् । मनोमयं सत्यम्, नहीश्वरेण वस्तुतः सत्यं भवति । भ्रुवोरुल्लास आत्मसमर्पणं भवति । फलमुखं चैतल्लक्षणम्, 'तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यम्' इति, आत्मस्थाने ब्रह्मा निवेशित इति 'ये यथा मां प्रपद्यन्ते' इति वाक्यात् आत्मसमर्पणमुक्तं तत्फलनिरूपणेन ।२९।।३०।

एवं नवविधभक्त्यनन्तरं भगवतो ज्ञानशक्तिं मायाशक्तिं च निरूपयति द्वयेन—

**तस्यावलोकमधिकं कृपयाऽतिघोरतापत्रयोपशमनाय निसृष्टमक्ष्णोः ।**
**स्निग्धस्मितानुगुणितं विपुलप्रसादं ध्यायेच्चिरं विततभावनया गुहायाम् ॥३१॥**

* तस्येति । भगवतोऽवलोकमधिकं ध्यायेत् । तस्याऽनिष्टनिवारकत्वमिष्टसाधकत्वं च निरूपयति । अक्ष्णोरवलोकनं लौकिकालौकिकामृतरूपमाध्यात्मिकादित्रिविधमपि तापमुभयविधं नाशयति; यतः कृपया तापत्रयोपशमनाय निसृष्टम् । कृपाहेतुर्भक्तिरुक्ता । फलार्थमाह—स्निग्धं यत् स्मितम्, भक्त्यर्थं यो मोहः, तेन अनुगुणितम् । ज्ञानशक्तिर्भक्तिसहिता न भक्त्यर्थाध्यासेन विरुध्यते । विपुलः प्रसादः स्वतन्त्रभक्तिपर्यन्तः, तावज्ज्ञानं सिध्यति । तद्बहुजन्मभिर्भवतीति तस्य स्वरूपं ज्ञातुं ध्यायेच्चिरमित्युक्तम् । वितता भावना तदुपयोगिसर्वपदार्थानां विचारार्थम् । गुहायामित्यन्येषां विचाराभावाय ॥ ३१ ॥

ज्ञानेऽपि जाते तदुत्तरा भक्तिश्चेन्न भवेत्, तदा फलं न भवेदिति सर्वथा मोहाभावे भक्तिर्न भवेदिति हासं ध्येयत्वेनाऽऽह—

**हासं हरेरवनताखिललोकतीव्रशोकाश्रुसागरविशोषणमत्युदारम् ।**
**संमोहनाय रचितं निजमाययाऽस्य भ्रूमण्डलं मुनिकृते मकरध्वजस्य ॥३२॥**

+हासमिति । भगवतो हासं ध्यायेत् । अतिक्लिष्टानां क्लेशाभावहेतुत्वात् हरेरित्युक्तम् । तदाह—अवनता ये अखिललोकाः, तेषां तीव्रो यः शोको भगवद्विरहजनितः, सर्वभक्तप्रत्ययसाक्षी; तज्जनिताश्रूणां सागरस्य शोषणं येन । मायामोहेनैव एवं भवति, अन्यथा निरन्तरमनिर्वृत एव तिष्ठेत् । न च परमपुरुषार्थहानिरित्याह—अत्युदारमिति । विरहानिवृत्तिः शीघ्रं परमपुरुषार्थदायिनी; तथापि प्रतीत्या दुःखात्मिका भवतीति तां निराकृत्य स्वयमेव तं पुरुषार्थमधिकारमपि सम्पाद्य प्रयच्छतीत्यत्युदारो हासः । ननु दीनेषु भक्तेषु कथं हास उत्पन्न इत्याह—संमोहनायेति । मकरध्वजस्य संमोहनाय । मुनयो हि भगवन्तं ध्यायन्ति, तत्र भगवदैश्वर्यं दृष्ट्वा मुनीनां स्पृहा भवत्विति पूर्वं तैर्निर्जितः कामः बाधकत्वेन भगवता-

---

प्रकाशः ।

* तस्यावलोकमित्यत्र । उभयविधमिति, ननु 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः' इत्यादिवाक्यैर्ज्ञानाज्ञानयोर्वध्यघातकविरोधनिश्चयादज्ञानजनितमोहानुगुणितत्वं कथं सङ्गच्छत इत्यत आहुः—ज्ञानशक्तिरित्यादि । पूर्वं पञ्चमाध्याये ज्ञानेनाऽज्ञाननाशमुक्त्वा ततोऽष्टादशाध्याये 'ब्रह्मभूतः प्रसन्नात्मा' इत्यनेन ब्रह्मभावफलतया भक्तिं वदति । स (?) यद्यप्यात्मधर्मरूपा, तथापि ततः पूर्वं या अर्जुनादीनां सम्बन्धादिभृता सा त्वध्यासकार्यम्, समर्थोपदेशानन्तरमप्यनुवर्तमाना च । तेन ज्ञायते, संसारार्थाध्यासत्वेन भगवज्ज्ञानत्वेन वध्यघातकविरोधः; न तु सामान्यतोऽध्यासत्वेन भगवज्ज्ञानत्वेनेति । अतो न विरोध इति ।

\+ हासमित्यत्र । एवं भवतीति । शोकशोषणं भवति ।

---

१ तथा क घ. ङ  २ दायिनीति क  ३ अनधिकारम् क. च.  ४ सर्वस्पृहा घ. ग. ङ.

न्निध्ये उपतिष्ठति । तदा स चेन्न मुग्धो भवेत्, मुनीनां सर्वमेव कार्यं नश्येदिति कन्दर्पसंमोहनाय हास्योत्पत्तिः । सोऽपि भगवन्मुखसौन्दर्यं दृष्ट्वा विस्मितो मुनीनां मोहं न सम्पादयति । निजमाययेत्याधिदैविकमपि कामं मोहयितुं हासस्य बलं निरूपितम् । अस्य भ्रूमण्डलमपि ध्यायेत् । तस्याऽपि हासवत् कार्यसाधकत्वम् । मृत्युरूपत्वात्परं नाशकत्वं दुष्टविषयकमेव । मोहे जीवानां स्वत एव दुःखाभावः; भ्रूमण्डलध्याने तु भगवत्कर्तृक इति द्वयं निरूपितम् । मकरो हि क्रूरात्मा, ततस्तस्य क्रौर्यं निरूपितम् । मण्डल मण्डलीकृतकार्मुकत्वाय ॥ ३२ ॥

भगवतश्च प्रहसितं ध्यायेत्, पूर्वध्यानेषु सर्वबाधकव्यामोहार्थम्—

**ध्यानायनं प्रहसितं बहुलाधरोष्ठभासाऽरुणायिततनुद्विजकुन्दपङ्क्ति ।**
**ध्यायेत् स्वदेहकुहरेऽवसितस्य विष्णोर्भक्त्याऽऽर्द्रयार्पितमना न पृथग्दिदृक्षेत् ३३**

÷ ध्यानायनमिति । तत्सर्वेषामेव ध्यानानां स्थानम्; सर्वे हि तत्र प्रतिबन्धनिवृत्त्यर्थं भगवतः प्रहसितं ध्यायन्ति । अत्यानन्दे हि भगवतः प्रहसितं भवति । तत् सर्वविस्मारकं कालादीनपि कथं न मोहयेत् ? बहुलमधरोष्ठयोर्या भाः दीप्तिः, लज्जालोभयोः स्वरूपघनसङ्कोचः कार्यमिति; तेनकृत्वा अरुणायिता तनुर्यस्य । द्विजा एव कुन्दपुष्पाणि, तेषां पङ्क्तिर्यत्र । प्रहसिते हि दन्ता अपि प्रकटा भवन्ति, ते च कुन्दपुष्पसन्निभाः । पृथिव्यां स्नेहहेतवो दन्ताः पुत्रादिस्नेहरूपाः । त्रिभिश्च सर्वसङ्कोच' । नन्वेतादृशं प्रहसितं स्वात्मानमपि व्यामोहयतीति कथं ध्येयमित्यत आह—स्वदेहकुहरेऽवसितस्येति । यदि भगवान् स्वहृदये प्रकट एव, तदा स्वस्य मोहो न भवतीति सिद्धम् । सिद्धे भगवति मुख्ये सत्यात्मनिवेदने आह—आर्द्रया भक्त्या अर्पितं मनो यस्य । अपृथग्दर्शनं चाऽऽत्मनिवेदनम् ॥ ३३ ॥

एवं पूर्णा भगवति नवविधा भक्तिः सिद्धा ध्यानेन । तस्यां सिद्धायां मोक्षः फलमावश्यकमिति तदुत्पादकध्यायमानस्य भगवद्रूपस्य निवृत्तिमाह—

**एवं हरौ भगवति प्रतिलब्धभावो भक्त्या द्रवद्धृदय उत्पुलकः प्रमोदात् ।**
**औत्कण्ठ्यबाष्पकलया मुहुरर्द्यमानस्तच्चापि चित्तबडिशं शनकैर्वियुङ्क्ते ॥३४॥**

+ एवं हराविति । सर्वदुःखनिवर्तके, सर्वपुरुषार्थदायके भगवति प्रतिलब्ध एवं पूर्वोक्तो भावो येन । भक्तेरवान्तरकार्यमाह—द्रवद्धृदय इति । यथा तापेन हिमघृतादिकं द्रवति, तथा भक्त्या हृदयम् । तस्य द्रवणे देहे वैक्लव्यं भवति, आनन्दप्रतिबन्धकस्य हृदयस्य द्रुतत्वात् । प्रमोदे जाते उत्पुलको भवति । तदा भगवति प्रेमाभिव्यक्त्या कण्ठनिरोधोऽपि भवति । तत औत्कण्ठ्ये या बाष्पकला उत्पद्यते, तया मुहुरर्द्यमानः, सकलायां भक्तौ सिद्धायाम्, तच्चापि चित्तस्य बडिशं वशीकरणहेतुर्भगवद्रूपं मनःकल्पितमिति शनकैर्वियुङ्क्ते त्याजयति ॥ ३४ ॥

---

प्रकाशः ।

– ध्यानायनमित्यत्र । सर्वसङ्कोच इति । कुं धरतीति निरुक्त्या कुन्दः पृथिवीसङ्कोचः, लज्जालोभौ च स्वरूपघनसङ्कोचकौ । अत्रैतैस्त्रिभिर्ध्यातैः स्वरूपघनपुत्रादिषु स्नेहसङ्कोच इत्यर्थः ।

+ एवं हरावित्यत्र । एवं पूर्णा भगवतीत्यादिना त्रयोदशानां तात्पर्यमुक्तम् । अन्यतो निवृत्तमित्यारभ्य अग्रिमश्लोकस्य मुक्ताश्रयमित्यस्य व्याख्यानं ज्ञेयम् ।

---

१ बहुना ग ङ. १ तन क. ङ. १ पूर्णा

**मुक्ताश्रयं यर्हि निर्विषयं विरक्तं निर्वाणमृच्छति मनः सहसा यथाऽर्चिः ।**
**आत्मानमत्र पुरुषोऽव्यवधानमेकमन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः ॥ ३५ ॥**

* अन्यतो निवृत्तं मनः, भगवन्मूर्तिं कल्पयित्वा, तत्र निर्वृतं स्थितम्; तस्मिंस्तु गते मुक्ताश्रयं निर्विषयं च जातम् । आश्रयत्वविषयत्वे एतावत्कालमेव स्थिते; पूर्वविषयास्तु पूर्वमेव त्यक्ताः । भगवद्रसस्य चाऽऽस्वादितत्वात् इदानीं तत्र विरक्तम् । एवं सर्वथा विषयाभावे, निर्वाणं कारणे लयं स्वयमेव ऋच्छति अपगच्छति । सङ्घाते विद्यमाने न गच्छेदित्याशङ्क्य दृष्टान्तमाह—यथाऽर्चिरिति । दीपार्चिः काष्ठार्चिर्वा, विद्यमानायामेव सामग्र्यां शाम्यति, तथा मनोऽपीत्यर्थः । ततः किमत आह—आत्मानमिति । उपाधिरूपे अन्तःकरणे गते, अत्रैव शरीरे, पुरुषो जीवः, आत्मानं भगवन्तम्, अव्यवधानं व्यवधायकधर्मरहितमेकम्, न तु सजातीयमन्वीक्षते । ननु सत्त्वादिगुणैराध्यात्मिकैर्निरन्तरं रागादिप्रवाहा उत्पाद्यन्ते, भगवदीयैश्च विषयाः । उभयोर्व्यवधायकत्वात्कथमेकत्वप्रतीतिः? तत एव श्रुतिराह ' न तं विदाथ ' इति । तत्राऽऽह—प्रतिनिवृत्तगुणप्रवाह इति । उभयविध इत्येके; अन्यतर इत्यन्ये । एवमात्मज्ञानार्थं चरमा मनसो वृत्तिरपेक्षिता, तदभावे ब्रह्मात्मानुभवो न भवति ॥ ३५ ॥

जाते ज्ञाने तन्निवृत्तिमाशङ्क्याऽऽह—

**सोऽप्येतया चरमया मनसो निवृत्त्या स्वस्मिन् महिम्न्यवसितः सुखदुःखबाह्ये।**
**हेतुत्वमप्यसति कर्तरि दुःखयोर्यत्स्वात्मन्यधत्त उपलब्धपरात्मकाष्ठः ॥ ३६ ॥**

× सोऽप्येतयेति । एवं चरमामेव वृत्तिं स्थापितवान् यः स्वानुभवार्थम्, सोऽपि एतयैव चरमया मनसो वृत्त्या स्वस्मिन्नेव महिम्न्यपवर्गाख्ये स्वयमवसितो भवति, तत्रैव स्थिरो भवति; पुनः पूर्ववत् पूर्वावस्थां न प्राप्नोतीत्यर्थः । तस्या अवस्थायाः पूर्ववैलक्षण्यमाह—सुखदुःखबाह्य इति । वैषयिकसुखदुःखे तस्यामवस्थायां न भवतः । ननु चित्तगतं कर्तृत्वादिकं चित्ते लीने आत्मनिष्ठं चेत् पुनःसुखदुःखे आवश्यके इत्याशङ्क्याऽऽह—हेतुत्वमपीति । यथा सुखदुःखे तत्र न स्तः, तथा सुखदुःखयोर्हेतुरपि तत्र नास्ति । तत्र हेतुः—यतः सुखदुःखहेतुत्वमसति मिथ्याभूते दुष्टे वा कर्तरि अन्तःकरण एव । नन्वात्मन्यपि सुखदुःखहेतुत्वं प्रतीयत एव ! तत्राऽऽह—यः स्वात्मनि पूर्वमधत्तेति । चित्तगतमेव कर्तृत्वं पूर्वमात्मन्यारोपितम्, इदानीं तु उपलब्धा परात्मनः काष्ठा स्वरूपं येन । अधुना परमानन्दः प्राप्त इति नाऽन्यगतकर्तृत्वारोपेण प्रयोजनम् । एवमन्तःस्थितिः सर्वा निरूपिता ॥ ३६ ॥

---

प्रकाशः ।

* मुक्ताश्रयमित्यत्र । तत्र विरक्तमिति मनःकल्पितमूर्तौ विरक्तम् । भगवदीयैरिति । गुणैरित्यर्थः । अत्र गुणप्रवाहनिवृत्तावुभयविधप्रवाहनिवृत्तिरेव मुख्यः पक्षो ज्ञेयः ।

× सोऽपीत्यत्र । मूले निवृत्त्येति पदं नितरां वृत्तिर्निवृत्तिरिति तादृशवृत्तिवाचकम् । स्थापितवान् य इति । यो जीव एवं कृतवान् । मूले दुःखयोरिति द्विवचनं दुःखत्वेन लौकिकसुखस्याऽपि ग्राहकम् । एवं चाऽस्यामवस्थायां परमानन्दः प्राप्तः, असङ्गोदासीन ऐक्यं प्राप्तो भवतीति फलति ।

---

१ पूर्वमेव पाठ क ख.

+याद्या निरूपयति—देहन्त्विति द्वाभ्याम्। स्वानुपयोगो देहस्थितिश्च भेदेन निरूप्यत इति। तत्र प्रथमं स्वानुपयोगमाह—

**देहं तु तं न चरमः स्थितमुत्थितं वा सिद्धो विपश्यति यतोऽध्यगमत् स्वरूपम्।**
**दैवादुपेतमथ दैववशादपेतं वासो यथा परिकृतं मदिरामदान्धः ॥ ३७ ॥**

देहं तु न पश्यति, तत्राऽभिमानो दूरे। तं पूर्वमुपलालितमपि, यतोऽयं चरमो देहोपकारानपेक्ष। घटादिवदपि तस्याऽवस्थामपि न जानातीत्याह—स्थितमुत्थितं वेति। यत्र पूर्वमासने स्थितस्तत्रैव स्थित, तत उत्थितो वेति न वेद, यतोऽयं जीव स्वरूपं ब्रह्मभावमध्यगमत्। गार्हस्थ्यदशाया स्थित गृहादिकं यथा महाराजत्वे जाते नाऽनुसन्धत्ते। तदधिष्ठातृव्यतिरेकेण कथं देहस्थितिरुद्गच्छेद्वेत्याशङ्क्याऽऽह-दैवादुपेतमिति। कालादिप्रेरणयैव वासनावशात् कश्चिद्देशान्तरं उपेतं भवति, तस्मादपेतं च। अतम्भावितं मत्वा दृष्टान्तमाह—मदिरया य उन्मादः, तेनाऽन्धो महामत्तो यथा स्वयमेव परिकृतं वास न वेद; किं स्वामिन् गते गच्छति, अपगच्छति वेति। देहं तु नश्वरम् (?) इति पाठे नश्वरमित्यनुपयोगे हेतुः ३७

देहस्य स्वरूपमाह—

**देहोऽपि दैववशगः खलु कर्म यावत्स्वारम्भकं प्रतिसमीक्षत एव सासुः।**
**तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः॥ ३८ ॥**

देहोऽपीति। दैववशगोऽयं देह कालकर्मस्वभावाधीनः। खल्विति निश्चये। यावत्स्वारम्भकं कर्म, तावत् सासु प्राणसहित। स्वास्थित्यार्थं तत्कर्मापेक्षते। बहुकालमपि तिष्ठति, तथापि तन्नानुसन्धत्त इत्याह—तमिति। प्रपञ्चसहितं त देहम्, अधिरूढ समाधिपर्यन्त च योगो येन। अनेन नित्यारूढसमाधिरुक्त। तादृशस्य बहि संवेदनाभावात् युक्तमेव तस्याऽदर्शनम्। किञ्च, स्वाप्नम्। अयं हि प्रतिबुद्धवस्तु स्वत स्फुरिताऽऽत्मरूप। तस्य स्वाप्नं स्वप्न इव प्रतीत तुच्छम्, अतो रागाभावात् लौकिकवदप्यनुसन्धानं नाऽस्ति ॥ ३८ ॥

इदानीं देहादिव्यतिरिक्तमात्मानं साधयति, तदभावे पूर्वोक्तं नैव सिध्येत्।

**यथा पुत्राच्च वित्ताच्च पृथङ्मर्त्यः प्रतीयते।**
**अप्यात्मत्वेनाभिमताद्देहादेः पुरुषस्तथा ॥ ३९ ॥**

---

प्रकाशः।

+ देहमित्यत्र। याद्या निरूपयतीति पूर्वोक्तावस्था ज्ञापिका याद्यावस्थेति ता निरूपयतीत्यर्थः। 'देहं तु नश्वरम्' इति पाठे विपश्यतीति पठनीयं भाति।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे अष्टाविंशाध्यायविवरणं सम्पूर्णम्।

---

१ परिहृतम ग ङ  २ 'च' इति नास्ति ख ग च

**यथा पुत्राच्चेति** । पुत्रवित्तयोर्लोके आत्मबुद्धिः, शास्त्रतश्च । आन्तरो देहः पुत्रः, बाह्याः प्राणा वित्तम् । तत्र यथा पुत्राद्वित्तादपि, मर्त्यो मरणधर्मा, पुत्रे वित्ते विद्यमानेऽपि स्वयं म्रियत इति तस्मात् पृथक् । नन्वत्र भेदः स्वतः सिद्धः किमत्र साध्यत इत्याशङ्क्याऽऽह—अप्यात्मत्वेनाऽभिमतादिति । येषां तु नात्मत्वेनाभिमतिः तान् प्रति न साधयामः, ये पुनरात्मत्वेनैव मन्यन्ते, तेषामपि देहाद्वे भिन्ना इत्यर्थः । एवमेव देहादेर्देहेन्द्रियप्राणान्तःकरणात् पुरुषो भिन्नः ॥ ३९ ॥

अत्राऽऽत्मनो लोके पृथक् प्रतीत्यभावात् युक्त्या उक्तमपि न सम्यगवगतं भवतीति दृष्टान्तेन स्पष्टयति—

**यथोल्मुकाद्विस्फुलिङ्गाद्धूमाद्वापि स्वसम्भवात् ।**
**अप्यात्मत्वेनाऽभिमतात्तथापि पृथगुल्मुकात् ॥ ४० ॥**

**यथोल्मुकादिति** । अग्नेस्त्रयोऽन्ये सम्बन्धिनः—आधारभूतं काष्ठम्, कार्यं धूमः, स्वाधाराः स्वांशा विस्फुलिङ्गाः। त्रयोऽप्यग्नेर्यथा भिन्नाः, यद्यप्यग्नित्वेनाभिमताः । उल्मुकं ज्वलत्काष्ठम् । अग्नेरेव राजसं रूपं धूमः, तामसमुल्मुकम्, विस्फुलिङ्गाः सात्त्विकाः । **स्वसम्भवादिति** त्रयाणां विशेषणम् । अग्निसम्बन्धादेवोल्मुकत्वम्, अन्यथा काष्ठत्वम् । अनन्यात्मत्वेनाभिमतादित्यपि पाठः। **तथापि पृथगुल्मुकादिति** । धूमादिषु भेदः प्रत्यक्षसिद्धः, उल्मुके सन्दिग्ध इति स एवोक्तः ॥ ४० ॥

दार्ष्टान्तिकमाह—

**भूतेन्द्रियान्तःकरणात् प्रधानाज्जीवसंज्ञितात् ।**
**आत्मा तथा पृथग्द्रष्टा भगवान् ब्रह्मसंज्ञितः ॥ ४१ ॥**

**भूतेन्द्रियान्तःकरणादिति** । भूतानि देहः, इन्द्रियाणि, अन्तःकरणं च; प्रधानं स्वभावात्मकम्; जीवसंज्ञितं लिङ्गशरीरशब्दवाच्यम् । एतस्माच्चतुष्टयादप्यात्मा अग्निवत् पृथक्; यतो द्रष्टा, इदं च दृश्यम् । स चाऽऽत्मा **भगवान्** भगवत्प्रकृतिकः, न तु तत्त्वप्रकृतिकः । अविकृतकार्यत्वादंशत्वाद्वा भगवत्सम्बन्धेनोक्तः । भगवानित्येवोच्यत इति केचित् । भगवच्छब्दः कार्येऽपि वर्तत इति तद्व्यावृत्त्यर्थमाह—**ब्रह्मसंज्ञित इति** । ब्रह्मेति संज्ञा यस्य । अतो वैलक्षण्यस्य स्पष्टत्वात् सङ्घातादात्मा पृथक् ॥ ४१ ॥

एवं पृथगात्मज्ञानानन्तरं यत्कर्तव्यं तदाह—

**सर्वभूतेषु चात्मानं सर्वभूतानि चाऽऽत्मनि ।**
**ईक्षेताऽनन्यभावेन भूतेष्वपि तदात्मताम् ॥ ४२ ॥**

**सर्वभूतेष्विति** । यद्यपि सङ्घातात् पृथगात्मा प्रतीतः, तथापि परिच्छिन्नः प्रतीत इति न कार्यसिद्धिः । न हि परिच्छिन्नज्ञानादपरिच्छिन्नं फलं भवति । अतः सर्वभूतेष्वेवाऽऽब्रह्मतृणस्तम्बपर्यन्तेषु स्वात्मानं पश्येत्, स्वयमेव सर्वत्र वर्तत इति । यथा स्वस्मिन् आत्मनि अयं देहादिसङ्घातः केनचित्सम्बन्धेन वर्तते, एवमेव सर्व एव सङ्घाताः स्वस्मिन्नेव वर्तन्ते, नाऽन्यस्मिन्नित्यपीक्षेत। उपचारात् स्नेहाद्वा नैवं द्रष्टव्यमित्याह—**अनन्यभावेनेति** । न विद्यते अन्यो भावो यस्य । अन्यबुद्धिर्यस्मिन् मनसि न स्फुरति, तादृशमनसा । यथा सङ्घाते निरूपितम्, तथा भूतेष्वपि ज्ञातव्यमित्याह—**भूतेष्वपि तदात्मतामिति** । भू-

---

१ आत्मत्वमेव. ख. ङ     २ इतीमेत. घ. इत्यपेक्षेन. रा. ग

तेषु स्वात्मा द्रष्टव्यः, भूतानि च स्वस्मिन् द्रष्टव्यानीति। तदात्मता भूतात्मता । भूतेष्विवेति पाठे भूतेषु तत्त्वप्रतीतिस्तद्भावापन्नानीति ज्ञानवतो दृष्टान्तः ॥ ४२ ॥

नन्वेकस्य कथं नानात्वप्रतीतिः ? कथं वा सुखदुःखाद्युपपत्तिरित्याशङ्क्याऽऽह—

स्वयोनिषु यथा ज्योतिरेकं नाना प्रतीयते ।
योनीनां गुणवैषम्यात्तथाऽऽत्मा प्रकृतौ स्थितः ॥ ४३ ॥

स्वयोनिष्विति । यथा एक एवाऽग्निः, स्वयोनिषु काष्ठेषु, नाना प्रतीयते । वक्रऋज्वादिभेदेन, श्वेतरक्तादिभेदेन च । तत्र हेतुः–योनीनां गुणवैषम्यम्, आकारो जातिश्च, तथा आत्माऽपि प्रकृतौ विद्यमानः । आत्मनः सकाशाद्यद्यपि तत्त्वानि जायन्ते, ततश्च न तुल्यदृष्टान्तता, तथापि यदा[1] तेषु प्रविश्योद्गच्छति, तदा दृष्टान्त इति ज्ञापयितुं तथाऽऽत्मा प्रकृतौ स्थित इत्युक्तम् ॥ ४३ ॥

शास्त्रार्थमुपसंहरति —

तस्मादिमां स्वां प्रकृतिं दैवीं सदसदात्मिकाम् ।
दुर्विभाव्यां पराभाव्य स्वरूपेणाऽवतिष्ठते॥ ४४ ॥

तस्मादिति । इदं हि शास्त्रं साङ्ख्यम्, योगस्त्वङ्गत्वेनोक्तः; यथा भक्तिः । अतः प्रकृतिव्युदासमेवोपसंहरति–इमामनुभूयमानाम्, स्वभावत्वेन स्वां प्रकृतिम्, स्वस्य जायेव स्वसंसारप्रसवित्रीम्, दैवीं भगवत्सम्बन्धिनीम्, विना भगवत्कृपया, भगवद्भावाभावे वा, अनिवर्तमानाम्; सदसदात्मिकां कार्यकारणरूपामनेकविधां वा अस्थापने हेतुः । दुर्विभाव्यामिति सम्बन्धानिरूपणे हेतुः; अतः स्वतो निवृत्त्यभावः । एतादृशीं पराभाव्य स्वरूपेणाऽवतिष्ठत इति शास्त्रम् । प्रकृतितद्विकारोपधानविलये पुरुषस्य स्वरूपावस्थानं मोक्ष इति सिद्धम् ॥ ४४ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां तृतीयस्कन्धे अष्टाविंशाध्यायविवरणम् ।

---

१ यदि. क.

# एकोनत्रिंशाध्यायविवरणम् ।

× एवं ज्ञानप्रकरण साङ्ग वै सुनिरूपितम् ।
अत परं तु वैराग्य चतुर्भिर्विनिरूप्यते ॥ १ ॥
वैराग्ये कारण कालः परिच्छेदक ईरितः ।
कालस्य भक्तिहेतुत्वं माहात्म्यार्थे स्वतोऽपि तत् ॥ २ ॥
ततो जीवस्य गतयो लोकशास्त्रविभेदत ।
लोको हि द्विविधः मोक्त परलोकस्तथैहिक ॥ ३ ॥
वैदिको ब्रह्मपर्यन्तः कालश्चैव चतुर्गतिः ।
यावन्निरूपित पूर्व तत्कालास्पृष्टमेव हि ॥ ४ ॥
अग्रे सर्वं कालसाध्यमतो वैराग्यहेतुकम् ।
कालस्तु सर्वत्र समः स्वतन्त्रैः स विरुद्ध्यते ॥ ५ ॥
दण्डनेतुर्यथा सर्वे हरिणैव तथा यत ।
अत कालवशानां हि वार्ता प्रकरणे तथा ॥ ६ ॥
एकोनत्रिंशदध्याये कालभक्तिः ससाधना ।
माहात्म्यं चापि कालस्य विस्तरेण निरूप्यते ॥ ७ ॥

---

## गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृत प्रकाशः ।

× अथ एकोनत्रिंशाध्याय विवरिषव प्रकरणस्य भिद्यमानत्वात् सङ्गतिबोधनाय प्रकरणयोरर्थमाहु-एवमित्यादि । तेनैव कार्यत्वमत्र सवादे प्रकरणसङ्गति । शास्त्रे मैत्रेयसंवादे च स्वस्वरीत्याऽवसर एवाऽध्यायसङ्गति । प्रकरणस्य तु तत्राऽप्येषैवेत्यर्थ । ननु चतुर्भिः कुतो वैराग्यनिरूपणमित्याकाङ्क्षाया तत्रोत्तरमध्यायार्थकथनेन सार्द्धाभ्यामाहु—वैराग्य इत्यादि । परिच्छेदक कालो वैराग्ये कारणमीरित, स च काल प्रथमे वैराग्यजनकसगुणभक्तिहेतुत्वेन स्वतो माहात्म्यवत्त्वेन चोक्त, द्वितीये वैराग्यजनकद्विविधजीवगतिहेतुत्वेन, तृतीयचतुर्थयोस्तत्प्रयोजकद्विविधलोकहेतुत्वेनेत्येव चतुर्गतिजनक, अतो वैराग्ये चत्वार अध्याया इत्यर्थ । वैदिक इति चरण परलोकविशेषणम् । न भक्त्यादीनामर्थाना, पूर्वमपि निरूपितत्वात् कथमत्र तस्यैव निरूपण(ण)वैराग्यार्थत्वमित्यत आहु—यावदित्यादि । वैराग्यहेतुकमिति वैराग्य प्रयोजकत्वेन निमित्तीकृत्योक्तम् । तथा च, वैराग्यस्य दु खजनितजुगुप्साहेतुकत्वाद्दुःखस्य कालहेतुकत्वात् पूर्वेषु कालास्पृष्टत्वेन दु खाधजनकत्वान्न वैराग्यहेतुत्वमतोऽत्र कालकृत तदर्थमुच्यत इत्यर्थः । ननु मैत्रेयो हि ' अथ ते भगवल्लीला योगमायोपबृंहिताः ' इति भगवल्लीला कथनाय प्रवृत्तस्तस्य कालवशवार्ता निरूपणे किं प्रयोजनमत आहु—कालस्त्वित्यादि सार्द्धम् । यतो हरिणैव यथा सर्वे दण्डनेतुर्यमस्य वशगा कृताः, तथा कालवशगा अपि । कालस्तु सर्वत्र सम स्वतन्त्रै सह विरुद्धश्च, अतस्तद्वशाना वार्ता जीवस्वातन्त्र्यत्याजनाय, भगवच्चेष्टारूपकालस्वभावस्य भगवदिच्छाधिकारस्य च ज्ञापनायोक्तविधलीलात्वेन रूपेण मैत्रेयो वदतीत्येतत्प्रयोजनमित्यर्थ । एवं प्रकरणार्थं निरूप्याध्यायार्थमाहुः—एकोनेत्यादि सार्द्धम् । अस्येति काल-

---

१ यथा

सर्गे यद्यस्य नोत्पत्तिर्वैराग्यं न भवेत्ततः ।
आधिभौतिकभूतादीन्येतानीत्यपि बोध्यताम् ॥ ८ ॥

पूर्वप्रकरणे ज्ञानं साङ्गं सुविनिरूपितम् । वैराग्याभावे तन्नोपपद्यतेति पूर्वानुवादपूर्वकं वैराग्यहेतुं पृच्छति । यद्यपि भक्त्या वैराग्यं भवतीति पूर्वं सूचितम्, तथापि कीदृशी भक्तिः वैराग्यं जनयतीति भक्तिभेदानपि पृच्छति । तत्र प्रथमं पूर्वानुवादमाह सार्द्धेन—

## देवहूतिरुवाच ।

लक्षणं महदादीनां प्रकृतेः पुरुषस्य च ।
स्वरूपं लक्ष्यतेऽमीषां येन तत्पारमार्थिकम् ॥ १ ॥

लक्षणमिति । त्वया महदादेः प्रकृतिपुरुषयोश्च लक्षणं कथितम् । येन लक्षणेन, स्वरूपात्मरूपम्, लक्ष्यते ज्ञायते; अमीषां च स्वरूपं ज्ञायते । अनेन ज्ञानोपायः सर्वोऽप्युक्त इत्युक्तम् ॥ १ ॥

तत्र प्रमाणमप्युक्तमित्याह—

यथा साङ्ख्येषु कथितं यन्मूलं तत्प्रचक्षते ।
भक्तियोगस्य मे मार्गं ब्रूहि विस्तरतः प्रभो ! ॥ २ ॥

यथा साङ्ख्येषु कथितमिति । साङ्ख्यस्य माहात्म्यमाह—यन्मूलं तत्प्रचक्षत इति । तत्पूर्वोक्तलक्षणादिकं यत्साङ्ख्यमूलमिति प्रचक्षते । यो भगवान् वा, तस्य साङ्ख्यस्य मूलमिति प्रचक्षते । एवमनूद्य वैराग्यहेतुभूतां भक्तिं पृच्छति—भक्तियोगस्येति । मे मह्यम् । मार्गं नानाविधम्, विस्तरतो बहुसाधनभेदतः, ब्रूहि । प्रभो इति तथाकथने सामर्थ्यम् ॥ २ ॥

किं ततः स्यात्तत्राऽऽह—

विरागो येन पुरुषो भगवन् ! सर्वतो भवेत् ।
आचक्ष्व जीवलोकस्य विविधा मम संसृतीः ॥ ३ ॥

विरागो येनेति । भगवन्निति सम्बोधनं वैराग्यस्यापि भगवद्गुणत्वेन भक्तिसाध्यत्वेऽपि न दोष इति ख्यापनार्थम् । येन भक्तिमार्गेण कृत्वा, पुरुषः सर्वतो विरागो भवेत् । इदमेव वाक्यमग्रेऽपि युज्यते । भक्तिर्हि अलौकिकप्रकारेण वैराग्यहेतुः । लौकिकप्रकारेण वैराग्यहेतुं पृच्छति—आचक्ष्वेति । जीवलोकस्य लोकप्राणिनः, विविधाः संसरणमार्गा देवतिर्यङ्मनुष्यादियोनिप्राप्त्युपायाः । मम मह्यम् ॥ ३ ॥

कालश्च वैराग्यहेतुरिति तस्य स्वरूपं कथयेत्याह—

कालस्येश्वररूपस्य परेषां च परस्य ते ।
स्वरूपं यत कुर्वन्ति यद्धेतोः कुशलं जनाः ॥ ४ ॥

कालस्येति । ईश्वरस्य रूपमिव रूपं यस्य । ऐश्वर्यांशो भगवता काले स्थापितः, अतः कालस्य स्वरूपं

---

प्रकाशः ।

माहात्म्यम् । एवं मैत्रेयोक्तोऽवसरः साधितः । शुकोक्तं तं साधयन्ति—आधिभौतिकेत्यादि ।

ज्ञातव्यम् । किञ्च, परेषां ब्रह्मादीनामपि परो नियन्ता । किञ्च, वर्ततेति हर्षे, सर्वे जनाः काल्हेतोः कुशलं कुर्वन्ति । कालाद्भयाभावे कोऽपि कुशलं न कुर्यात् ॥ ४ ॥

ननु मया सर्वं वक्तव्यमिति कोऽयं निर्बन्धस्तत्राऽऽह—

**लोकस्य मिथ्याभिमतेरचक्षुषश्चिरं प्रसुप्तस्य तमस्यनाश्रये ।**
**श्रान्तस्य कर्मस्वनुविद्धया धिया त्वमाविरासीः किल योगभास्करः ॥५॥**

लोकस्येति । लोकस्य निस्तारार्थे, योगभास्करः किल त्वमाविरासीः, अतस्त्वयैव सर्वमज्ञाननिवर्तकं वक्तव्यम्, सूर्येणैव हि सर्वं तमो बाध्यते । ननु लोकाः स्वयमेव स्वाज्ञानं कथं न दूरीकुर्वन्ति । तत्राऽऽह—मिथ्याभिमतेरिति । मिथ्या अभिमतिरभिमानो यस्य । अभिमानेन ग्रस्ता न सन्मार्गं जानन्तीत्यर्थः । किञ्च, चक्षुषा हि मार्गपरिज्ञानम्, लोकास्त्वचक्षुषः। चक्षुरत्र सच्छास्त्रम्, अन्यथा सूर्येणाऽपि कार्यं न किञ्चित् । अत्यन्ताविवेकार्थमाह—अनाश्रये अरक्षके, तमस्यज्ञाने, चिरं प्रसुप्तस्य पूर्वापरानुसन्धानव्यतिरेकेण संसार एव रमतः । तत्रापि कर्मस्वनुविद्धया धिया श्रान्तस्य । कर्मश्रान्तः शयानोऽज्ञः, अन्यः सुप्तस्तमस्यधः । दीनो भवति सर्वेषां ये समर्था दयालवः । तेषां योगप्रकाशको भास्करः; अतश्चक्षुरपि प्रयच्छति, तमोऽपि दूरीकरोति, सुप्तमपि प्रबोधयति, श्रमापनोदनं च करोति, कर्मासक्तिं च त्याजयति, मिथ्याभिमानं च दूरीकरोति, आश्रयश्च भवति, शीघ्रं च कृतार्थं करोतीति अष्टाङ्गोद्धारहेतुरयं भास्करः ॥ ५ ॥

सन्मार्गं पृच्छतीति सन्तुष्टः, वैराग्यहेतुर्नोक्त इति श्रोतृत्वावगत्याऽपि प्रीतः, मातृत्वादनुरुद्धः, तस्या दीनत्वं दृष्ट्वा करुणया पीडितः, अग्रे इयं कृतार्था भविष्यतीति—महामुनित्वात् ज्ञात्वा अभिनन्दनेन सम्मुखीकृत्य बभाष इत्याह—

## मैत्रेय उवाच ।

**इति मातुर्वचः श्लक्ष्णं प्रतिनन्द्य महामुनिः ।**
**आबभाषे कुरुश्रेष्ठ! प्रीतस्तां करुणार्दितः ॥ ६ ॥**

*इतीति । श्लक्ष्णं मनोहरं मातुर्वचः, तथात्वेनाभिनन्द्य, तां पुरुषार्थोपयोगिनीमाबभाषे प्रत्युत्तरं दत्तवान् ६*

मुख्यां भक्तिं वक्तुमादौ गुणैर्भिन्नां भक्तिमाह—

## श्रीभगवानुवाच ।

**भक्तियोगो बहुविधो मार्गैर्भामिनि! भाव्यते ।**
**स्वभावगुणमार्गेण पुंसां भावो विभिद्यते ॥ ७ ॥**

* भक्तियोगो बहुविध इति । मार्गैर्मतभेदैः, पुरुषस्वभावभेदैश्च, बहुविधो भाव्यते । यतः

प्रकाशः ।

* भक्तियोगो बहुविध इत्यत्र । पुरुषस्वभावभेदैरित्ययं हेतुरुत्तरार्द्धे अर्थतः प्राप्यत इति बोधयितुमाहुः—यत इत्यादि । ननु चिदंशानां जीवानां सर्वेषामेकविधत्वात् कथं स्वभावभेद इत्यत आहुः—

१ निवर्तक ख. क. घ. ङ. २ योगप्रकाशः. क. घ. ङ ३ अर्थेयम्, क.

स्वभावगुणमार्गेण पुंसां स्वभावो विभिद्यते । स्वभावो जीवभेदनिमित्तः; जीवा ह्यनेकविधा नानास्वभावाः। गुणा अपि भेदका अन्तःकरणस्वभावहेतवः। मार्गा देशकालनियमेन देहनियामकाः । वर्णाश्रमधर्मपाषण्डादिप्रतिपादनशास्त्ररूपो मार्गः । तेषामावृत्त्या प्राणिनां भावो भिद्यते; अन्यथा श्रुत्वाऽपि स्वभाववशादन्यथा अर्थं कल्पयन्ति, तदनुसारिणश्च तथैव प्रवर्तन्ते; अतो बहुविधा मार्गा भक्तौ ॥ ७ ॥

तत्र प्रथमं तामसान् भक्तिभेदानाह—

**अभिसन्धाय यो हिंसां दम्भं मात्सर्यमेव वा ।**
**संरम्भी भिन्नदृग्भावं मयि कुर्यात् स तामसः ॥ ८ ॥**

* अभिसन्धायेति । शत्रूणां हिंसामुद्दिश्य यस्तु मयि भावं भक्तिं कुर्यात्; स तामसतामसो भवति । तस्माद्दम्भेन यः करोति परप्रतारणार्थं स राजसतामसः; परस्य बुद्धिर्धनं चाऽपह्रियते इति तामसत्वम् । मात्सर्येण परोत्कर्षासहनेन लोकानामसाधारणबुद्धिनिवृत्त्यर्थं यो मयि भावं कुर्यात्स सात्त्विकतामसः । अयं भाव आन्तरबुध्यात्मकः, अभिध्यानरूपः, तपोरूपो वा; न तु श्रवणादिरूपः; तत्र तस्याऽनधिकारात् । भिन्नदृगिति । अभिन्नदृष्ट्याऽप्येते भावा भवन्तीति तद्व्यावृत्त्यर्थमुक्तम्; ' यथा हि भगवानेव वस्तुतः सदसच्च यत् । सत्येनाऽनेन नः सर्वे यान्तु नाशमुपद्रवाः ' इति वाक्यात् । तमसो मूलं संरम्भीति । भगवत्स्तोत्रेषु सर्वेषां संग्रहार्थं बहूनि फलान्युच्यन्ते; अतः फलविशेषकामनयैव स्तोत्रादीनां श्रवणं सम्भवतीति तामसी भक्तिरुक्ता ॥ ८ ॥

एवं राजसीं त्रिविधामाह

**विषयानभिसन्धाय यश ऐश्वर्यमेव वा ।**
**अर्चादावर्चयेद्यो मां पृथग्भावः स राजसः ॥ ९ ॥**

विषयान् स्रक्चन्दनादीन्, यशः कीर्तिम्, ऐश्वर्यं वा क्रमेणाऽभिसन्धाय गुणैर्भिन्नो राजसः प्रतिमादौ यो मां पूजयेत् स राजसः पृथग्भाव इति पूर्ववत् । एवेति समुदायव्यावृत्त्यर्थम्, वेति विकल्पार्थम्, अन्यथा चत्वारो भेदाः स्युः । आदिशब्देन सूर्यादयः ॥ ९ ॥

सात्त्विकभेदानाह—

**कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणम् ।**

---

प्रकाशः ।

स्वभाव इत्यादि । भगवतः सकाशाद्व्युच्चरिता आत्मानो वासनाविशिष्टनानाविधलिङ्गेषु प्रविष्टा जीवशब्दवाच्या भवन्तीत्यतः स्वभावभेद इत्यर्थः। अन्यद्भेदकद्वयमाहुः—गुणा इत्यादि । मार्गा इत्यादि च । मार्गाः कर्मादयः, देशा मगधकुरुक्षेत्रादयः, कालः कृतकलिमुहूर्तनक्षत्रादिरूपः; तत्कृतो यो नियमस्तादृग्देशकाल उत्पत्त्याऽऽचारसंसर्गादिरूपस्तेन तथेत्यर्थः ।

* अभिसन्धायेत्यत्र । मूलस्यभावपदेनोक्तस्यार्थस्य स्वरूपमाहुः—अयमित्यादि । तत्र गमकमाहुः—तत्रेत्यादि । श्रवणादिरूपे तादृशस्याऽधिकारानुक्तेरित्यर्थः । एते भावा इति अभिध्यारूपाः । अभिन्नदृष्ट्या क्रियमाणत्वे उदाहरणमाहुः—यथेत्यादि ।

---

१ देहनियामकवर्णाः''' . ग. च.　　२ अपि भिद्यते. ख. विभिद्यते च　　३ तपो वा. ग. ट.

**यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः ॥ १० ॥**

**कर्मनिर्हारमिति ।** कर्मणः पापस्य निर्हारो दूरीकरणम्, प्रायश्चित्तमिति यावत् । पूर्वकृतकर्मणो वा रोगादिना परिज्ञाने तन्निवृत्त्यर्थं यो भगवन्तं यजेत्, वैदिकतान्त्रिकमार्गेण पूजां कुर्यात्, स तामससात्त्विकः । **परस्मिन्** भगवति वा कृतानां सर्वकर्मणामर्पणं समर्पणमुद्दिश्य यो हरिं यजेत् स राजससात्त्विकः । एवं विधानेन भगवन्तमिष्ट्वा तत्र सर्वाणि कर्माणि समर्पणीयानीति यो यजते, स तथोक्तः । यस्तु नित्यकर्मवद्यष्टव्य एव भगवानिति यजते, स सात्त्विकसात्त्विकः । पृथग्भावः पूर्ववत् ॥ १० ॥

निर्गुणां भक्तिमाह द्वयेन—

**मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ।**
**मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥ ११ ॥**

**मद्गुणेति ।** परिच्छेदका हि गुणाः सत्त्वादय । भगवद्गुणास्तु सर्वोत्कृष्टहेतुत्वेन श्रुताः स्वाश्रयं भगवन्तमनवच्छिन्नमेव बोधयन्ति, अन्यथा स्वस्य उत्कर्षहेतुत्वं न स्यात् । अतः—**सर्वगुहाशये मयि** भगवति, प्रतिबन्धरहिता **अविच्छिन्ना** या **मनोगतिः** । पर्वतादिभेदनमपि कृत्वा यथा गङ्गाम्भोऽम्बुधौ गच्छति, तथा लौकिकवैदिकप्रतिबन्धान् दूरीकृत्य या भगवति मनसो गतिः । मनस इत्युपलक्षणम्, दुर्लभत्वाय वा; यथा कायिकगतिर्गोपिकानाम् । सा गतिर्निर्गुणस्य भक्तियोगस्य भगवति प्रेम्णो गतिर्लक्षणं ज्ञापकमित्युत्तरेण सम्बन्धः ॥ ११ ॥

स्वरूपमुक्त्वा लक्ष्यलक्षणसम्बन्धमाह—

**लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ।**
**अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥ १२ ॥**

**लक्षणमिति ।** निर्गुणस्य भक्तियोगस्य तल्लक्षणमुदाहृतमिति प्रमाणम् । आत्यन्तिकभक्तेर्लक्षणमाह—**अहैतुकीति** सार्धाभ्याम् । या अहैतुकी पुरुषोत्तमे भक्तिः स एव भक्तियोग आत्यन्तिक उदाहृत इति सम्बन्धः। पुरुषोत्तम एव भक्तिः, न तु पुरुषेष्ववतारेषु वा। भक्तिश्च प्रेमपूर्विका सेवा। हेतुः फलानुसन्धानम्, तद्रहिता अहैतुकी, अनिमित्ता वा । अनेन सगुणा निवारिता । अव्यवहितेति कालेन कर्मणा वा यत्र सेवायां व्यवधानं नास्ति, नतु निद्राभोजनादिना; तस्य सेवाहेतुत्वात् । या भक्तिरिति लोकवेदप्रसिद्धा, न तु चौर्यादिना विषयान् सम्पाद्य भगवत्सेवाकरणम् ॥ १२ ॥

तस्या निदर्शनमाह—

**सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ।**
**दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥ १३ ॥**
**स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ।**
**येनाऽतिव्रज्य त्रिगुणं मद्भावायोपपद्यते ॥ १४ ॥**

---

१ परिज्ञानेन निवृत्त्यर्थम् क. ग. २ ख घ. ग. ३ सात्त्विकादय . ख च. ४ इतरेषु. ङ. ५ फलाभिसन्धानम्. ख.ग घ.

सालोक्येति । सैवाऽऽत्यन्तिकी या स्वतो रसभावं प्राप्ता, सैव नाऽन्यत्फलमङ्गीकारयति। अत्यन्तप्रेमोत्पत्तावेवं भवति । सालोक्यं वैकुण्ठे वासः; सार्ष्टिः समानैश्वर्यम्; सामीप्यं भगवत्समीपे स्थितिः, सालोक्येऽप्ययं विशेषः, सारूप्यं स्वस्याऽपि चतुर्भुजत्वम्; एकत्वं सायुज्यम् । उतेति तस्य मुख्यफलत्वं ज्ञापयति । तदपि दीयमानं न गृह्णन्तीत्यत्यन्तानादरे । दीयमानत्वं स्नेहात् । मत्सेवनमिति सेवैवानन्दरूपा जातेति समासाद्बोध्यते; यतस्ते जनाः सेवकाः। भक्तियोग इति तस्यैव नाम। स एवाऽऽत्यन्तिक इत्युदाहृतः । तस्य स्वातन्त्र्याय भगवत इव फलसाधकत्वमाह—येनेति । येन भक्तियोगेन त्रिगुणमतिव्रज्य, मद्भावाय भगवत्त्वाय, उपपद्यते योग्यो भवतीत्यर्थः ॥ १३ ॥ १४ ॥

एतस्या भक्तेः साधनान्याह निषेवितेति चतुर्भिः—

निषेवितेनानिमित्तेन स्वधर्मेण महीयसा ।
क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः ॥ १५ ॥

+ मुख्यं साधनमन्तःकरणशुद्धिः, तदन्तःकरणं षोडशकलं भवतीति तस्य शुद्ध्यर्थं षोडशसाधनान्युच्यन्ते । तान्यपि त्रिविधानि । आधिभौतिकान्येव तानि कृतान्यन्तःकरणशुद्धिं सम्पादयन्ति परमां धर्मार्थम्; तान्येवाऽऽध्यात्मिकानि ज्ञानार्थे शुद्धिं संपादयन्ति परमाम्; तान्येव च पुनराधिदैविकानि परमां शुद्धिं सम्पादयन्ति भक्त्यर्थम् । सा च भक्तिरात्यन्तिकी; इदं वैलक्षण्यं वक्ष्यति—मद्धर्माचरणैरेतैरिति । अन्यथा उक्तानां मद्धर्मत्वं न विहितं स्यात् । अत एव प्रथमं धर्मत्रयमाह—स्मार्तम्, श्रौतम्, तान्त्रिकं चेति, सार्द्धेन । प्रथमं श्रौते रुचिर्न भवतीति स्मार्तं विधत्ते । स्वधर्मेण परिसंशुद्धाशयः पुरुषो मत्संमुखमेतीति सम्बन्धः । एवमन्येष्वपि साधनेषु । स्वधर्मो वर्णाश्रमधर्मो देहप्रयुक्त्या निष्पन्नः । सोऽपि सम्यक् नितरां सेवितश्चेत्, नत्वनुकल्पेन । तत्रापि कामनारहितेन; तत्रापि सजातीयप्रचयसहितेन महीयसा । त्रिविधगुणयुक्तश्चेत् स्वधर्मः स्नानादिरूपः स्मार्तः, स तु पार्थिवांशदोषं दूरीकरोतीति षोडशांशोपकारं करोति । एवं क्रियायोगो वैदिको यज्ञात्मकः प्रशस्तः—येषु ब्राह्मणवाक्यानि अतिप्रशंसकानि भवन्ति, न तु द्वादशाहा(?) हीनवन्निन्दितान्यपि भवन्ति । तत्रापि हिंसाप्रचुरं न कर्तव्यम् । अल्पहिंसा इध्माबर्हिषामर्थे । आलम्भेऽपि तादृशपशुसद्भावे अल्पहिंसा भवति 'मृत्यवे वा एष नीयते' इति श्रुतेः । अतो नाऽतिहिंस्रेणेत्युक्तम् । सोऽपि सर्वदा कर्तव्यः । एवं क्रियायोगोऽपि गुणत्रयसहितः । अयमाध्यात्मिकं दोषं दूरीकरोतीति अपां चाऽऽध्यात्मिकत्वात् तच्छोधको भवति ॥ १५ ॥

एवं स्मार्तश्रौताभ्यां परिशुद्धस्तान्त्रिके अभिनिविष्टः पश्चाद् भगवद्भजनं करोतीत्याह—

मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवन्दनैः ।
भूतेषु मद्भावनया सत्त्वेनाऽसङ्गमेन च ॥ १६ ॥

---

प्रकाशः ।

+ निषेवितेत्यत्र । तादृशपशुसद्भाव इति । इध्मादितुल्यपिष्टपशुसद्भावे ।

---

१ इतीति नास्ति ग. घ. ङ. २ भगवद्भावाय ग. ङ. च. ३ निषेवितेनेति क. ग. ४ निषेवितेनानि क

+मद्धिष्ण्येति। भगवद्धिष्ण्यान्यधिष्ठानानि। धिष्ण्यपदेन च प्रमाणमूलकानि श्रीरङ्गादीनि। तेषां प्रथमतो दर्शनम्; ततश्चरणस्पर्शः, ततः पूजा, स्तुतिरभिवन्दनं चेति पञ्च। पञ्चानां प्रत्येकसामर्थ्यद्योतनाय बहुवचनम्। अनेन सर्वतैजसशुद्धिरुक्ता, पञ्चामावयं जात इति। चतुर्थं साधनमाह—भूतेष्विति। सर्वेष्वेव सङ्घातेषु भगवद्भावना कर्तव्या, भगवानेवैवं जातः, एवमवस्थ इति वा; यथा वायोः। साधनान्तरम्—सत्त्वेनेति। सत्त्वगुणः साधनम्। तत्रिविधम्—सात्त्विककर्मरूपम्, सतां स्वरूपत्वापादकम्, वसुदेवरूपान्तःकरणसाधकं च। अनेनाऽऽकाशशरीरत्वाद्भगवतस्तच्छुद्धिरुक्ता। इन्द्रियशुद्धिमाह—असङ्गमेनेति। सर्वसङ्गनिवृत्तिः कर्तव्या। चकारात्तदिच्छापरित्यागः॥ १६॥

**महतां बहुमानेन दीनानामनुकम्पया।**
**मैत्र्या चैवाऽऽत्मतुल्येषु यमेन नियमेन च॥ १७॥**

स्वापेक्षया महतां बहुमाननम्, पीडितानां दीनानां स्वापेक्षया हीनानामनुकम्पा, तुल्येषु च मैत्री; न तु मात्सर्यम्। अवगणना, स्पर्द्धा च न कर्त्तव्येति चार्थः। चक्षुषो दर्शनस्य स्पर्शस्य च दोषा व्यावर्तिताः। यमेन नियमेन चेति प्रत्येकं द्वादशविधेनाऽपि करपादौ शोधितौ। अहिंसादयो यमाः, स्नानादयो नियमाः। चकारादवान्तरा गृहीताः॥ १७॥

**आध्यात्मिकानुश्रवणान्नामसङ्कीर्तनाच्च मे।**
**आर्जवेनाऽऽर्यसङ्गेन निरहङ्क्रियया तथा॥ १८॥**

आध्यात्मिकानां शास्त्राणां साङ्ख्ययोगादीनाम्, अनुश्रवणं गुरुमुखाच्छ्रवणम्, श्रोत्रसंस्कारकम्। भगवतो निरन्तरं नामकीर्तनं च वाक्संस्कारकम्। चकाराद्गुणकर्मणामपि। म इति विपर्यो व्यावर्तितः। सर्वत्राऽऽर्जवमृजुत्वम्, घ्राणसंस्कार उक्तः। आर्याणां सतां सङ्गो जिह्वासंस्कारकः। त एवेतररसनिवारकाः। अहङ्काराभावस्तु मनःशोधकः सुप्रसिद्धः॥ १८॥

**मद्धर्माचरणैरेतैः परिशुद्धाशयः स्फुटम्।**
**अञ्जसा पुरुषोऽभ्येति श्रुतमात्रगुणं हि माम्॥ १९॥**

×एते सर्वे ये भक्तिजनकाः, ते मद्धर्माः; तैः परितः शुद्ध आशयो भवति। तदैव पुरुषः, अञ्जसा सामस्त्येन, श्रुतमात्रगुणं मामभ्येति। यथा चिरकाल्लिवविदेशगतपुत्रगुणे श्रुते, भर्तृगुणे वा, सर्वतो निवृत्तं मनस्तत्र प्रविशति, स्वयञ्चाऽभिमुखो भवतीति। युक्तमुक्तमिति हि शब्दार्थः। पुरुषस्याऽञ्जसेति पाठे आशय एव कर्ता॥ १९॥

---

प्रकाशः।

+ मद्धिष्ण्येत्यत्र। यथा वायोरिति। येन कृतेन प्रकारेण वायोः शुद्धिरित्यर्थः।

× मद्धर्माचरणैरित्यत्र। तदैव पुरुषोऽञ्जसेत्येवमर्थकथने 'अञ्जसा पुरुषोऽभ्येति' इति पाठो बोध्यः। श्रीधरीये तु 'मद्धर्मणो गुणैरेतैः' इति पाठः।

---

१ अवान्तरभेदाः ख ग. २ परिशुद्ध आशयः पा. ३ पुरुषस्त्वञ्जसाऽभ्येति. प.

* एकं च साधनमाह—

**यथा वातरथो घ्राणमावृङ्क्ते गन्ध आशयात् ।**
**एवं योगरतं चेत आत्मानमविकारि यत् ॥ २० ॥**

**यथा वातरथ** इति । निरन्तरं सेव्यमानो योग एक एव सर्वसाधकः । तत्र शुद्धिरपि नापेक्ष्यत इति दृष्टान्तेन तथात्वमाह—**यथा गन्धो** वातारूढः, स्वभावत एव वा, वातो रथो यस्य । स तु घ्राणमेवावृङ्क्ते, घ्राण एव तस्य ग्राहको भवतीति । एवं योगरतमपि चित्तमात्मानमेव गृह्णातीति आत्मगाम्येव भवति । अत्र पूर्वसाधनान्यपेक्ष्यन्त इत्याशयेनाऽऽह—अविकारि यदिति । यचितं सर्वमेव विकारं त्यक्तवत् २०

एवमुत्तमां भक्तिं ससाधनां साधयित्वा पूर्वोक्तां सगुणां त्रिविधामपि निन्दति—अहमिति चतुर्भिः—

**अहं सर्वेषु भूतेषु भूतात्माऽवस्थितः सदा ।**
**तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनम् ॥ २१ ॥**

**करोति** यत्तन्नटवन्मुख्यस्याऽतिक्रमस्तथा । दोषोत्पत्तिश्च प्रचुरा मर्त्यांतेश्च न साधकम् ॥१॥ तत्र प्रथमं पूर्वभक्तिरनुकरणमात्रम्, न तु भक्तिरित्याह—सर्वेषु भूतेष्वहमात्मा । ‘अवस्थितेरिति काशकृत्स्नः’ इत्यत्र प्रतिपादितं भगवत एवाऽवस्थाविशेषो जीव इति । तदाह—अवस्थितः सदेति । अहमेव वा भूतात्मा सर्वभूतरूपः, तत्स्वरूपः, जीवरूपश्च, सङ्घातरूपश्चेति । अवस्थितः सदेत्यन्तर्यामी । अतः सर्वभावेन सर्वेषु भूतेषु विद्यमानं मामवज्ञाय, भेदबुद्धिं हिंसादिकं च तत्र जनयित्वा, स्वात्मानमपि केवलं मर्त्यं शरीरं मत्वा, यत् कुरुते तदर्चाविडम्बनमेव ॥ २१ ॥

अथ भगवदाकाराभावात् स्वबुद्ध्या शास्त्रमुल्लङ्घ्य यदि भजते, तदा यत्तस्य फलं तदाह—

**यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम् ।**
**हित्वाऽर्चां भजते मौढ्याद्भस्मन्येव जुहोति सः ॥ २२ ॥**

\+ **यो मामिति** । सङ्घाते अहं त्रिरूपो वर्ते—प्रथमं सर्वेषु भूतेषु तद्रूपः, तत आत्मरूपः, तत ईश्वरोऽन्तर्यामी नियामकः । एवं पुरुषे सर्वभावेन विद्यमानं भगवन्तं हित्वा, अर्चां प्रतिमाम्, यो भजते । भजने प्रमाणाभावमाह—मौढ्यादिति । न तु स्वतन्त्रो भगवन्मार्गो निषिद्धः, स गुणातीत इत्येकादशे वक्ष्यते, ‘मन्निकेतं तु निर्गुणम्’ इत्यादिभिः । प्रकरणेन च वाक्यानि सम्बद्धानि तत्प्रकरणस्थमेव गुणदोषं वदन्ति, तत्र पृथग्भावस्तु नोक्तः । द्वादशानुसारेण वा पुरुषो नारायण इज्यः । उभयत्राऽपि भेदगुणयोरभावान्नैतानि दूषणानि भवन्ति, किन्त्वत्रैव तानि पूर्वोक्तसगुणभक्तिदूषकाणि । अर्चायां ज्ञानक्रियाचैतन्यान-

---

प्रकाशः।

* यथेत्यत्र । साधनमाहेति । मुख्यं भगवत्प्राप्तिसाधनमाहेत्यर्थः ।

\+ यो मामित्यत्र । नन्वेकादशस्कन्धे भगवता मदर्चां ‘सम्प्रतिष्ठाप्य’ इत्यादिना महता प्रपञ्चेन प्रतिमापूजनमेव मुख्यतया निरूपितम्, अत्र तु निन्द्यत इति कथमविरोध इत्यत आहुः—न त्वित्यादि । तत्र गमकमाहुः—स इत्यादि । तथा च विषयाधिकारिणोः प्रमाणस्य च भेदान्न विरोध इत्यर्थः । प्रकारान्तरं सम्भन्ति-द्वादशेत्यादि । ‘तान्त्रिकाः परिचर्यायाम्’ इत्यादिनोक्तेः । एवं विरोधं परिहृत्य प्रस्तुतं व्याकुर्वन्ति-अर्चा

न्द्रानामभावात् निष्पादनार्थं व्याप्तान्यप्येतानि पश्चात्त्यक्त्वा गतानीति भस्महुतप्रायं भवति । स इति पूर्वोक्त एव । पूर्वमग्निस्तत्र दृष्ट इति शान्तेऽप्यग्नौ भ्रमाद्धोम इति सोऽत्र दृष्टान्तीकृतः ॥ २२ ॥

परद्वेषादिना अर्चायां भगवद्भजने कामाद्युत्पत्तेः कदाचिदपि न मनःशान्तिर्भवतीत्याह—

**द्विषतः परकाये मां मानिनो भिन्नदर्शिनः ।**
**भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छति ॥ २३ ॥**

* द्विषत इति । स हि मामेव द्वेष्टि, यतो भूतेष्वहमेव वर्ते इति । अतः परकाये मां द्विषतो मनः कदापि न शान्तिमृच्छतीति सम्बन्धः । ननु जीव एव द्वेषाश्रयः सङ्घातो वा; अन्यथा व्यवहारो न स्यात् अतो भेदो व्यवहारार्थं मृग्य एव, ' यं द्विष्यात्तं ध्यायेत् ' इति श्रुतेश्च । तत्र कथमाह भगवान् ' मां द्विषतः ' इति चेत्; सत्यम् । तद्गतापकारक्रियया हि तस्मिन् द्वेषः । सा क्रिया मत्कृता, मत्प्रेरणया वा जातेति तन्निमित्तं चेदन्यं द्वेष्टि, तर्हि मामेव द्वेष्टि । भेदे तु यज्ञपरिपन्थिनो दैत्याः, मदधिष्ठिता अपि, रोगा इव निवर्तनीयाः; तुषादिरिव व्रीह्यादिषु । अतो यज्ञार्थं द्वेषः, न तु द्वेषार्थं यज्ञ उचितः । श्येनादावप्येवमेव, यज्ञभ्रातृव्य एव स्वभ्रातृव्य इति। तत्र तु यज्ञो निरभिमान इति तावदपि कर्तव्यम्; अत्र तु भगवान् साभिमान इति द्विषन्तमपि न द्विष्यात् । कार्यं तु प्रह्लाद इव सेत्स्यति । अतोऽत्र मार्गे सर्वथाऽपि द्वेषोऽनुचितः भगवदर्थं सृष्टिश्चेयम्; अतोऽत्र भगवद्द्वेष एव भवति । किञ्च, मानिनः, भिन्नदर्शिनः, भूतेषु बद्धवैरस्येति दोषत्रयम् । सात्त्विकराजसतामसा दोषा निरूपिताः । न हि त्रिदोषव्याप्तस्य शान्तिरस्ति । अभिमानस्तु सात्त्विकदोष एव, उत्कृष्टकर्मणैवाभिमानो भवतीति । क्रियया हि भेद इति राजसं भेदज्ञानम्, वैरं तु तामसमिति ॥ २३ ॥

प्रकाशः ।

यामित्यादि । ज्ञानक्रिये इत्यत्र ज्ञानं धर्मात्मकं बोध्यम् । निष्पादनार्थं व्याप्तान्यप्येतानीति अर्चकस्यज्ञानादीनि अर्चायां भगवत्त्वनिष्पादनार्थं व्याप्तानि भूतेषु भगवदवज्ञया त्यक्त्वा गतानीत्यर्थः ।

* द्विषत इत्यत्र । अत्र परकाये स्वद्वेषकथनं लोकवेदविरुद्धमित्याशङ्क्य समाधत्ते—नन्वित्यादिना । अन्यथेति । जीवसङ्घातयोर्भगवदभिन्नत्वे । तन्निमित्तमिति । अपकारनिमित्तम् । ननु व्यवहारार्थं भगवतैव भेदः प्रकटित इति तत्प्रयुक्तो द्वेष इति शङ्कायां तत्र व्यवस्थामाहुः—भेदे त्वित्यादि । नन्वेवं सति श्येनादिविधीनां का गतिरित्यत आहु —श्येनेत्यादि । इतीति अस्माद्धेतोः। विद्वेषार्थं श्येनयाग इति तस्याऽपि न भूतद्वेषे तात्पर्यम् । ननु श्येनदृष्टान्तेनाऽत्रापि विद्वेषः सङ्गमनीय इति चेत् तत्राऽऽहुः—तत्र त्वित्यादि। एतेन ' यो मां द्वेष्टि यं च वयं द्विष्मः ' यं द्विष्मस्तस्मिन् प्रतिमुञ्चामि पाशम् ' इत्यादावपि मामित्यनेन यज्ञादिरूपं भगवन्तं निरभिमानम्, वयमित्यनेन यज्ञद्वेषिप्रतिपक्षा इत्यादिरूपं जानीयादिति ज्ञापितम् । नन्वेवं सर्वाद्वेषे कथं कार्यसिद्धिरित्याकाङ्क्षायां भगवतैव सिद्धिरिति दृष्टान्तेनाहुः—कार्यं त्वित्यादि । नन्वेवं सर्वथा द्वेषत्यागे यो मां द्वेष्टीत्यादिषु लक्षणाप्रसक्तिः, 'विश्वामित्रजमदग्नी वशिष्ठेनास्पर्धेताम्' इत्यादिवाक्यैराचारविशेषश्चापयेतेति नेदं युक्तमित्याकाङ्क्षायामाहुः—भगवदर्थमित्यादि । तथा चाऽन्यत्र यथा तथाऽस्तु, यस्तावदस्यां सृष्टावुत्पन्नः स सर्वत्रैतामेवाऽनुसन्दध्यात्, अतः सर्वं समञ्जसमित्यर्थः । द्वेषाभावस्याऽऽवश्यकत्वं फलप्रदर्शनेन समर्थयन्ति—किञ्चेत्यादि । तथा च विद्वेषादीनामशान्तिरूपं

१ अथर्ववेद ।

– अहं तु न संतुष्टो भवामीति गुरुं दूषणमाह—

**अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयाऽनघे ! ।**
**नैव तुष्येऽर्चितोऽर्चायां भूतग्रामावमानिनः ॥ २४ ॥**

**अहमिति** । यद्यपि बहुसुवर्णपुष्पादिकं प्रयच्छति, तथापि उच्चावचैरनेकविधैर्द्रव्यैः पुष्पादिभिरुत्पन्नया क्रियया अहं नैव तुष्ये । तत्र हेतुः–भूतग्रामावमानिन इति । अर्चायामित्युपलक्षणम् । पुरुषविशेषेऽपि भजने भूतग्रामावमानिनो न तोष एव । परं तत्र तादृश एव भजतीत्यर्चायामित्युक्तम् ॥ २४ ॥

× तर्ह्यर्चाविधायकानि वाक्यानि व्यर्थानि स्युरित्याशङ्क्याऽऽह—

**अर्चादावर्चयेत्तावदीश्वरं मां स्वकर्मकृत् ।**
**यावन्न वेद स्वहृदि सर्वभूतेष्ववस्थितम् ॥ २५ ॥**

**अर्चादाविति** । यावत्सर्वात्मकं भगवन्तं न जानाति, तावदर्चायामर्चयेत् । यतोऽहमीश्वरः, अन्यथा मारयेत् । साऽर्चा धर्मरूपेत्याह–स्वकर्मकृदिति । सन्ध्यावन्दनवत् भगवत्पूजाऽपि नित्या ब्राह्मणादीनाम् । अतः स्वकर्मकृत् शालग्रामादौ मां पूजयेत्, यावन्मां सर्वभूतेष्ववस्थितं स्वहृदि न वेद । अनुभवो न भवतीत्यर्थः, न तु शाब्दज्ञानं प्रयोजकम् । यथा साक्षाद्भगवति समागते बुद्धिर्भवति, एवं कृमिकीटादावपि चेद्बुद्धिः, तदा कर्मनिवृत्तिरर्चानिवृत्तिश्चेति साधारणमेतद्वाक्यम्, गुणप्राधान्याभावात् ॥ २५ ॥

* ज्ञानोत्तरं [?] न कर्तव्यमित्यत्र हेतुमाह—

**आत्मनश्च परस्याऽपि यः करोत्यन्तरोदरम् ।**
**तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्बणम् ॥ २६ ॥**

**आत्मन इति** । यदि ज्ञानोत्तरमपि पूजां कुर्यात्, भेदबुद्ध्या स्वसेवामिव कुर्वन् न तुष्यते । स्वसेवया

---

**प्रकाशः**

प्रत्यक्षदोषमनुसन्धाय तया सुखाभावरूपं दोषं प्रत्यक्षात् ' अशान्तस्य कुतः सुखम् ' इति वाक्याद्विमृश्य च द्वेषाभिमानादिकं त्यजेदित्यर्थः ।

– अहमित्यत्र । द्वेषादेर्महान्तं दोषं वदन्ति–अहं त्वित्यादि । पुरुषविशेष इति गुर्वादौ ।

× अर्चादावित्यत्र । अर्चाविधायकानीति । सगुणार्चाविधायकानि । यावदित्यादि, तथा च मुख्याधिकाराभावे कर्तव्यताबोधनेन सार्थक्यान्न तेषां वैयर्थ्यमित्यर्थः । नन्वेवं वाक्यवैयर्थ्याभावे पूजायाः फलाभावात् फलतो वैयर्थ्यं दुर्वारमित्यत आहुः–यत इत्यादि । तथा चानिवृत्तिरीदृशी ततो भवतीति न फलतो वैयर्थ्यमित्यर्थः । तादृशपूजायाः स्वरूपमाहुः–साऽर्चेत्यादि । प्रयोजकमिति पूजादिकर्मनिवृत्तिप्रयोजकम् । एतदेव व्याकुर्वन्ति–यथेत्यादि । साधारणमिति । पूजामात्रसाधारणम् । एतादृशत्वे ' गृहं सर्वात्मना त्याज्यम् ' इत्युक्तरूपस्य त्यागस्यैवाऽधिकारादिति ।

* आत्मन इत्यत्र । आहेति । अभेददर्शनरूपं हेतुं भेदनिन्दामुखेनाह । पूजां कुर्यादिति । भिन्नदृशा पूजां कुर्यात् । तस्याहमेव भयं प्रयच्छामीत्यनेनाऽस्यान्वयः । तेन सिद्धमाहुः–भेदबुद्ध्येत्यादि ।

---

१ भजन् क ग ङ च

**मनसैतानि भूतानि प्रणमेद्बहु मानयेत् ।**
**ईश्वरो जीवकलया प्रविष्टो भगवानिति ॥ ३४ ॥**

**मनसेति** । स्वार्थमेवैतज्ज्ञानं निरूपितम्, नत्वधिकारिणोऽन्यपूजार्थम् । अत एवंविदपि एतानि परिदृश्यमानानि भूतानि प्रणमेत् । स्वापेक्षयाऽपि बहु मानयेत् । तत्र हेतुः—ईश्वरो भगवान् जीवकलया जीवकलारूपेण, सह वा, सद्गुणैः सह प्रविष्ट इति । इति शब्दो हेतौ, ईश्वरत्वात्, अन्यथा स्वस्थानात् प्रच्यावयेत् । जीवे तु न हीनबुद्धिः कर्तव्या, स हि कला । लीलार्थं सा कलेत्यर्थः ॥ ३४ ॥

एवं भक्तिज्ञाने निरूप्य, नमस्कारभगवद्दर्शनाभ्यां च व्यवहारेऽपि तदुभयमुपपाद्य, भक्तिज्ञानयोः समुच्चयः विकल्पो वा, फलहेतुरित्याशङ्क्याऽऽह—

**भक्तियोगश्च योगश्च मया मानव्युदीरितः ।**
**ययोरेकतरेणैव पुरुषः पुरुषं व्रजेत् ॥ ३५ ॥**

* **भक्तियोगश्चेति** । हे मानवि, भक्तियोगोऽष्टाङ्गयोगश्च मया द्वयमुदीरितम् । मानवीति परिज्ञानार्थम् । ययोर्मध्ये एकतरेणैव पुरुषः पुरुषमात्मानं भगवन्तं व्रजेत् । ज्ञाने योग उक्तः, उत्तराङ्गं साक्षात्काराद्यर्थं प्रवेशार्थं च । भक्तिस्तु स्वतन्त्रा । एकप्राधान्ये अन्यद्गौणभावमेवाऽवलम्बते, अतो न समुच्चयः शास्त्रार्थः ३५

एवं पुष्टां भक्तिं निरूप्य, वैराग्यार्थं कालस्य पराक्रमं वक्तुम्, प्रथमतः कालस्य स्वरूपमाह—एतद्भगवत इति द्वयेन—

**एतद्भगवतो रूपं ब्रह्मणः परमात्मनः ।**
**परं प्रधानं पुरुषो दैवं कर्म विचेष्टितम् ॥ ३६ ॥**
**रूपभेदास्पदं दिव्यं काल इत्यभिधीयते ।**
**भूतानां महदादीनां यतो भिन्नदृशां भयम् ॥ ३७ ॥**

× कालस्य कार्ये स्वरूपं चोच्यते, कार्ये निविष्टः स्वरूपं प्राप्नोतीति ज्ञापनार्थम् । एतज्जगत्सर्वं भगवतो रूपम्, अन्यथा कालस्य भगवत्त्वात्कालत्वं विधातुं न शक्येत । अत एतज्जगद्भगवद्रूपमित्युक्तम् ।

---

प्रकाशः

* भक्तियोगश्चेत्यत्र । स्वतन्त्रेति स्वतन्त्रसाधनभूता, न तु योगवज्ज्ञानोपकारकतया तच्छेषा । ननु भक्तियोगयोरुभयोरपि निरूपणे इतरेतराङ्गत्वेनेतरेतरनिरूपणे(ऽ)भयोरपि स्वीकारात् समुच्चय एव कुतो नोक्त इत्यत आहुः—एकेत्यादि । स्पष्टम् ।

× एतदित्यत्र । उभयथा कालनिरूपणस्य प्रयोजनमाहुः—कार्ये इत्यादि । कालस्य कार्ये हि वक्ष्यमाणावुत्पत्तिप्रलयौ, तत्र निविष्टो जीवः स्वरूपं परादिदिव्यान्तं कालस्वरूपं यथाधिकारं प्राप्नोति, तत्र लीनस्तदात्मको भवति, एतज्ज्ञापनार्थमुभयथा निरूपणमित्यर्थः । स्वरूपं विवृण्वन्ति—एतदित्यादि । नन्वत्रतत्त्वमुद्दिश्य मध्ये किमित्युच्यत इत्याकाङ्क्षायामाहुः—अन्यथेत्यादि ।

रूपभेदविदस्तत्र ततश्चोभयतो दतः ।
तेषां बहुपदाः श्रेष्ठाश्चतुष्पादस्ततो द्विपात् ॥ ३० ॥
ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः ।
ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः ॥ ३१ ॥
अर्थज्ञात्संशयच्छेत्ता ततः श्रेयान् स्वकर्मकृत् ।
मुक्तलिङ्गस्ततो भूयानदोग्धा धर्ममात्मनः ॥ ३२ ॥

तत्राऽपीति । ज्ञानेन्द्रियेषु निकृष्टः स्पर्शः; ततो रसना उत्कृष्टा, मधुरादयो हि रसाः स्पर्शापेक्षयाऽपि मोहका इति । ततोऽपि गन्धविदः, पृथिवीगुणत्वात् दूरादपि ज्ञानजनकत्वाच्च । स्पर्शवेदिनः प्रायेण सर्वे कृमयः; ततो मत्स्या रसवेदिनः । गन्धविदो भ्रमरादयः; ततः शब्दविदो हरिणाः, गन्धापेक्षयाऽपि शब्दो दूरादेवाऽर्थं ज्ञापयतीति । ततोऽपि चक्षुः, अतिदूरादर्थं ज्ञापयतीति—रूपभेदविदः काकादयःश्रेष्ठाः। ततश्चोभयतो दतः साधनाधिक्यवन्तः मर्कटादयः श्रेष्ठाः, मूषकादयो वा । तच्च करणमन्तर्नयनार्थमेवेति ततोऽपि बहिःकरणवन्तः श्रेष्ठा इत्याह—तेषां बहुपदाः श्रेष्ठा इति । गोजरादयो बहुपदाः । ततोऽपि चतुष्पादः सर्वे मूषकमार्जारश्वादयः । ततो द्विपात्, सर्वे पक्षिणो मनुष्याश्च । ततो ब्राह्मणादिवर्णा उत्तमाः, धर्मवत्त्वात् । तेषामाद्यः, मुख्यधर्मवत्त्वात् । जातिब्राह्मणापेक्षयाऽपि वेदाध्यायी महान्, ततोऽपि वेदार्थवित् । ततोऽपि वेदार्थे सर्वसन्देहनिवारकः । ततोऽपि यज्ञादिकर्ता श्रेष्ठः । ततोऽपि मुक्तलिङ्गो गलितदेहाभिमान. श्रेष्ठः । ततोऽपि निरभिमानो भूत्वा ऐहिकामुष्मिकार्थं न किञ्चित्करोति, नाऽपि वाञ्छति स उत्तमः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

तस्मात्तादृशो भूत्वा यो भगवद्भक्तः स महानित्याह—

तस्मान्मय्यर्पिताशेषक्रियार्थात्मा निरन्तरः ॥
मय्यर्पितात्मनः पुंसो मयि संन्यस्तकर्मणाम् ॥
न पश्यामि परं भूतमकर्तुः समदर्शनात् ॥ ३३ ॥

च स्वयं सन्तुष्यते, ' यद्यन्यां देवतामुपास्ते, अन्योऽसावन्योऽहमस्मीति यथा पशुरेवं स देवानां पशुः ' इति श्रुतेरात्मेत्येवोपासीत । यस्तु पुनः, आत्मनः परस्याऽपि अन्तरां उत् अरमपि ईषदपि अरं भेदं करोति । अरा हि भेदकाश्चक्रस्य । ' यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति ' इति श्रुतेः । तद्भयमहमेव प्रयच्छामीत्याह—तस्य भिन्नदृश इति । उल्बणं भयं विदधे विशेषेण तस्मिन् स्थापयामि । तद्भयं मृत्युरेव, न ह्यन्येन भयेन प्राणांस्त्यजति । सहजो हि प्रयत्नः प्राणधारकः, अतो भक्तिफलं दूरे; मृत्युस्तु सेत्स्यतीति ज्ञानोचरं मृत्योरभावादेतन्न कर्तव्यमिति फलितम्२६

अज्ञानदशायामभ्यर्चापेक्षया ज्ञानार्थिनः सर्वभूतेष्वेव भजनं श्रेष्ठमित्याह—

**अथ मां सर्वभूतेषु भूतात्मानं कृतालयम् ।**
**अर्हयेद्दानमानाभ्यां मैत्र्याऽभिन्नेन चक्षुषा ॥ २७ ॥**

**अथ मामिति** । अथेति भिन्नप्रक्रमार्थः, पूर्वं ज्ञानिनो निरूपणात । सर्वभूतेषु भजनं भक्तिमार्गेऽपि वर्तेत इति तन्निवृत्त्यर्थमाह—**भूतात्मानमिति** । भूतानामात्मा जीवः । ननु स सर्वत्र वर्तेत, इति कोऽयं भूतेषु विशेषस्तत्राऽऽह—**कृतालयमिति** । यथा कश्चिद्गृहं कृत्वा कचित्तिष्ठति, तदुपलब्धिस्तत्र सुलभा, अत आत्मनोऽपि सङ्घातरूपं गृहं कृत्वा स्थितस्य तत्रोपलब्धिः सुलभा । लोकेऽपि गृहे पदार्थसमर्पणे गृहस्थः प्रीतो भवति, अतो भूतेष्वेव मामर्हयेत् । यथायोग्यं च पूजा, येनैव यः सन्तुष्यति । तत्र मुख्यं दानम्, मानं च, मैत्री च । निकृष्टे दानम्, उत्कृष्टे मानम्, समे मैत्री । एतदप्यभिन्नचक्षुषा सर्वत्राऽऽत्मज्ञानेन कर्तव्यम्, न तु लोकदृष्ट्येत्याह—**अभिन्नेति** ॥ २७ ॥

विशेषपूजायामुत्कृष्टब्राह्मणलक्षणमधिष्ठानं वक्तुं सर्वजीवापेक्षया तस्योत्कर्षमाह—**जीवा इति** सार्द्धैःषड्भिः—

**जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे ! ।**
**ततः सचित्ताः प्रवरास्ततश्चेन्द्रियवृत्तयः ॥ २८ ॥**

**जीवाः** प्राणयुक्ता अजीवानां पाषाणादीनां मध्ये श्रेष्ठा वृक्षादयः । ततः **प्राणभृतः** श्वासोच्छ्वासवन्तो जङ्गमाः श्रेष्ठाः । **शुभे** इति सम्बोधनमुक्तविश्वासाय । देहापेक्षया स्थूलः प्राण उत्कृष्टः, ततोऽप्यासन्यः । एवमेते त्रयो निरूपिताः क्रियाशक्तिप्रधानाः । ततो ज्ञानशक्तिप्रधाना उत्तमा इत्याह—**ततः सचित्ता इति** चेतनाधारभूतमन्तःकरणं चित्तम्; ज्ञानवन्त इति यावत् । **ततश्चेन्द्रियवृत्तय** इति । सविषयज्ञानवन्तः । इन्द्रियाण्येतानि क्रियामयानि ॥ २८ ॥

ततोऽपि ज्ञानवतां श्रेष्ठ्यमाह—

**तत्राऽपि स्पर्शवेदिभ्यः प्रवरा रसवेदिनः ।**
**तेभ्यो गन्धविदः श्रेष्ठास्ततः शब्दविदो वराः ॥ २९ ॥**

---

प्रकाशः

अत्र अकारः पतित इति प्रतिभाति ।.विदध इत्युत्तमपुरुषयोगे मृत्युपदमन्वितमेव तिष्ठतीत्यत आहुः—तद्भयं मृत्युरेवेत्यादि ।

---

१ अन्तरा अरमपि क. ख. ङ. २ मृत्युमप्येतीति घ. ३ नम्यति ङ. ४ आसापेक्षया ङ..

रूपभेदविदस्तत्र ततश्चोभयतो दतः ।
तेषां बहुपदाः श्रेष्ठाश्चतुष्पादस्ततो द्विपात् ॥ ३० ॥
ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः ।
ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः ॥ ३१ ॥
अर्थज्ञात्संशयच्छेत्ता ततः श्रेयान् स्वकर्मकृत् ।
मुक्तलिङ्गस्ततो भूयानदोग्धा धर्ममात्मनः ॥ ३२ ॥

तत्राऽपीति । ज्ञानेन्द्रियेषु निकृष्टः स्पर्शः; ततो रसना उत्कृष्टा, मधुरादयो हि रसाः स्पर्शापेक्षयाऽपि मोहका इति । ततोऽपि गन्धविदः, पृथिवीगुणत्वात् दूरादपि ज्ञानजनकत्वाच्च । स्पर्शवेदिनः प्रायेण सर्वे वृक्षाः; ततो मत्स्या रसवेदिनः । गन्धविदो भ्रमरादयः; ततः शब्दविदो हरिणाः, गन्धापेक्षयाऽपि शब्दो दूरादेवाऽर्थं ज्ञापयतीति । ततोऽपि चक्षुः, अतिदूरादर्थं ज्ञापयतीति–रूपभेदविदः काकादयः श्रेष्ठाः। ततश्चोभयतो दतः साधनाधिक्यवन्तः मर्कटादयः श्रेष्ठाः, मूषकादयो वा । तच्च करणमन्तर्नयनार्थमेवेति ततोऽपि बहिःकरणवन्तः श्रेष्ठा इत्याह–तेषां बहुपदाः श्रेष्ठा इति । गोजरादयो बहुपदाः । ततोऽपि चतुष्पादः सर्वे मूषकमार्जारश्वादयः । ततो द्विपात्, सर्वे पक्षिणो मनुष्याश्च । ततो ब्राह्मणादिवर्णा उत्तमाः, धर्मवत्त्वात् । तेषामाद्यः, मुख्यधर्मवत्त्वात् । जातिब्राह्मणापेक्षयाऽपि वेदाध्यायी महान्, ततोऽपि वेदार्थवित् । ततोऽपि वेदार्थे सर्वसन्देहनिवारकः । ततोऽपि यज्ञादिकर्ता श्रेष्ठः । ततोऽपि मुक्तलिङ्गो गलितदेहाभिमानः श्रेष्ठः । ततोऽपि निरभिमानो भूत्वा ऐहिकामुष्मिकार्थं न किञ्चित्करोति, नाऽपि वाञ्छति स उत्तमः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

तस्मात्तादृशो भूत्वा यो भगवद्भक्तः स महानित्याह—

तस्मान्मय्यर्पिताशेषक्रियार्थात्मा निरन्तरः ॥
मय्यर्पितात्मनः पुंसो मयि संन्यस्तकर्मणाम् ॥
न पश्यामि परं भूतमकर्तुः समदर्शनात् ॥ ३३ ॥

तस्मादिति । व्यर्थत्यागापेक्षया भगवति समर्पणमुत्तममिति । मयि अर्पितोऽशेषः क्रियार्थ आत्मा च येन, आत्मनिवेदी । तादृशोऽपि भूत्वा य आत्मत्वेनैव भगवन्तं जानाति, स महान् । अतोऽपि कश्चित् महानस्तीत्याशङ्क्य परिहरति–मय्यर्पितात्मन इति । मदर्थे संन्यस्तकर्मणां पुंसां मध्ये, मय्यर्पितात्मनः, अकर्तुः समदर्शनादन्यं परमुत्कृष्टं न पश्यामि । यद्यपि तत्तच्छास्त्रे ते ते श्रेष्ठा निरूपिताः, तथापि विचारकाणां हृदये ते नाऽऽयान्तीति न पश्यामीत्युक्तम् । सर्वापेक्षया भक्तिज्ञानयोरुत्कर्षः । भक्तावप्यात्मसमर्पणम्; ज्ञानं तु साङ्ख्यम्, ब्रह्मज्ञानं च । यद्यप्येते त्रयः, केवलपरित्यागिनश्च सर्वे परित्यागिनो भवन्ति, तथापि आत्मनिवेदनं ज्ञानद्वयं च यस्याऽस्ति, ततः किमधिकं भविष्यति । तत्पदत्रयेणोक्तम्, मय्यर्पितात्मनः, अकर्तुः, समदर्शनादिति ॥ ३३ ॥

नन्वेवं सति स एव भजनीयः स्यात्, स च सर्वैरेव स्वत एव सेव्यत इति शास्त्रवैफल्यं पूर्वदोषानिवृत्तिश्चेत्याशङ्क्याऽऽह—

---

१ धर्मपरत्वात् क. धर्मत्वात् ख ग.　२ अर्थज्ञाना क. ख. ग.　३ ' अपि ' इति नास्ति क. ख. ग.

च स्वयं सन्तुष्यते, ' यद्यन्यां देवतामुपास्ते, अन्योऽसावन्योऽहमस्मीति यथा पशुरेवं स देवानां पशुः ' इति श्रुतेरात्मेत्येवोपासीत । यस्तु पुनः, आत्मनः परस्याऽपि अन्तरां उत् अरमपि ईषदपि अरं भेदं करोति । अरा हि भेदकाश्चक्रस्य । ' यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति ' इति श्रुतेः । तद्भयमहमेव प्रयच्छामीत्याह—तस्य भिन्नदृश इति । उल्बणं भयं विदधे विशेषेण तस्मिन् स्थापयामि । तद्भयं मृत्युरेव, न ह्यन्येन भयेन प्राणांस्त्यजति । सहजो हि प्रयत्नः प्राणधारकः, अतो भक्तिफलं दूरे; मृत्युस्तु सेत्स्यतीति ज्ञानोत्तरं मृत्योरभावादेतन्न कर्तव्यमिति फलितम् २६

अज्ञानदशायामप्यर्चापेक्षया ज्ञानार्थिनः सर्वभूतेष्वेव भजनं श्रेष्ठमित्याह—

**अथ मां सर्वभूतेषु भूतात्मानं कृतालयम् ।**
**अर्हयेद्दानमानाभ्यां मैत्र्याऽभिन्नेन चक्षुषा ॥ २७ ॥**

अथ मामिति । अथेति भिन्नप्रक्रमार्थः, पूर्वं ज्ञानिनो निरूपणात् । सर्वभूतेषु भजनं भक्तिमार्गेऽपि वर्तत इति तन्निवृत्त्यर्थमाह—भूतात्मानमिति । भूतानामात्मा जीवः । ननु स सर्वत्र वर्तत. इति कोऽयं भूतेषु विशेषस्तत्राऽऽह—कृतालयमिति । यथा कश्चिद्गृहं कृत्वा क्वचित्तिष्ठति, तदुपलब्धिस्तत्र सुलभा, अत आत्मनोऽपि सङ्घातरूपं गृहं कृत्वा स्थितस्य तत्रोपलब्धिः सुलभा । लोकेऽपि गृहे पदार्थसमर्पणे गृहस्थः प्रीतो भवति, अतो भूतेष्वेव मामर्हयेत् । यथायोग्यं च पूजा, येनैव यः सन्तुष्यति । तत्र मुख्यं दानम्, मानं च, मैत्री च । निकृष्टे दानम्, उत्कृष्टे मानम्, समे मैत्री । एतदप्यभिन्नचक्षुषा सर्वत्राऽऽत्मज्ञानेन कर्तव्यम्, न तु लोकदृष्ट्येत्याह—अभिन्नेति ॥ २७ ॥

विशेषपूजायामुत्कृष्टब्राह्मणलक्षणमधिष्ठानं वक्तुं सर्वजीवापेक्षया तस्योत्कर्षमाह—जीवा इति सार्द्धैःपड्भिः—

**जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे ! ।**
**ततः सचित्ताः प्रवरास्ततश्चेन्द्रियवृत्तयः ॥ २८ ॥**

जीवाः प्राणयुक्ता अजीवानां पाषाणादीनां मध्ये श्रेष्ठा वृक्षादयः । ततः प्राणभृतः श्वासोच्छ्वासवन्तो जङ्गमाः श्रेष्ठाः । शुभे इति सम्बोधनमुक्तविश्वासाय । देहापेक्षया स्थूल' प्राण उत्कृष्टः, ततोऽप्यासन्यः । एवमेते त्रयो निरूपिताः क्रियाशक्तिप्रधानाः । ततो ज्ञानशक्तिप्रधाना उत्तमा इत्याह—ततः सचित्ता इति चेतनाधारभूतमन्तःकरणं चित्तम्; ज्ञानवन्त इति यावत् । ततश्चेन्द्रियवृत्तय इति । सविषयज्ञानवन्तः । इन्द्रियाण्येतानि क्रियामयानि ॥ २८ ॥

ततोऽपि ज्ञानवतां श्रेष्ठ्यमाह—

**तत्राऽपि स्पर्शवेदिभ्यः प्रवरा रसवेदिनः ।**
**तेभ्यो गन्धविदः श्रेष्ठास्ततः शब्दविदो वराः ॥ २९ ॥**

---

प्रकाशः

अत्र अकारः पतित इति प्रतिभाति । विदध इत्युत्तमपुरुषप्रयोगे मृत्युपदमन्वितमेव तिष्ठतीत्यत आहुः-तद्भयं मृत्युरेवेत्यादि ।

---

१ अन्तरा अन्तरमपि क. ख. ङ. २ मृत्युमप्येतीति ग. ३ स्थूलः प्राणः ङ. ४ आत्मापेक्षया ङ.

रूपभेदविदस्तत्र ततश्चोभयतो दतः ।
तेषां बहुपदाः श्रेष्ठाश्चतुष्पादस्ततो द्विपात् ॥ ३० ॥
ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः ।
ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः ॥ ३१ ॥
अर्थज्ञात्संशयच्छेत्ता ततः श्रेयान् स्वकर्मकृत् ।
मुक्तलिङ्गस्ततो भूयानदोग्धा धर्ममात्मनः ॥ ३२ ॥

तत्राऽपीति । ज्ञानेन्द्रियेषु निकृष्टः स्पर्शः; ततो रसना उत्कृष्टा, मधुरादयो हि रसाः स्पर्शापेक्षयाऽपि मोहका इति । ततोऽपि गन्धविदः, पृथिवीगुणत्वात् दूरादपि ज्ञानजनकत्वाच्च । स्पर्शवेदिनः प्रायेण सर्वे कृमयः; ततो मत्स्या रसवेदिनः । गन्धविदो भ्रमरादयः; ततः शब्दविदो हरिणाः, गन्धापेक्षयाऽपि शब्दो दूरादेवाऽर्थं ज्ञापयतीति । ततोऽपि चक्षुः, अतिदूरादर्थं ज्ञापयतीति–रूपभेदविदः काकादयःश्रेष्ठाः। ततश्चोभयतो दतः साधनाधिक्यवन्तः मर्कटादयः श्रेष्ठाः, मूषकादयो वा । तच्च करणमन्तर्नयनार्थमेवेति ततोऽपि बहिःकरणवन्तः श्रेष्ठा इत्याह–तेषां बहुपदाः श्रेष्ठा इति । गोजरादयो बहुपदाः । ततोऽपि चतुष्पादः सर्वे मूषकमार्जारश्वादयः । ततो द्विपात्, सर्वे पक्षिणो मनुष्याश्च । ततो ब्राह्मणादिवर्णा उत्तमाः, धर्मवत्त्वात् । तेषामाद्यः, मुख्यधर्मवत्त्वात् । जातिब्राह्मणापेक्षयाऽपि वेदाध्यायी महान्, ततोऽपि वेदार्थवित् । ततोऽपि वेदार्थे सर्वसन्देहनिवारकः । ततोऽपि यज्ञादिकर्ता श्रेष्ठः । ततोऽपि मुक्तलिङ्गो गलितदेहाभिमान· श्रेष्ठः । ततोऽपि निरभिमानो भूत्वा ऐहिकामुष्मिकार्थं न किञ्चित्करोति, नाऽपि वाञ्छति स उत्तमः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

तस्मात्तादृशो भूत्वा यो भगवद्भक्तः स महानित्याह—

तस्मान्मय्यर्पिताशेषक्रियार्थात्मा निरन्तरः ॥
मय्यर्पितात्मनः पुंसो मयि संन्यस्तकर्मणाम् ॥
न पश्यामि परं भूतमकर्तुः समदर्शनात् ॥ ३३ ॥

तस्मादिति । व्यर्थत्यागापेक्षया भगवति समर्पणमुत्तममिति । मयि अर्पितोऽशेषः क्रियार्थं आत्मा च येन, आत्मनिवेदी । तादृशोऽपि भूत्वा य आत्मत्वेनैव भगवन्तं जानाति, स महान् । अतोऽपि काश्चित् महानस्तीत्याशङ्क्य परिहरति–मय्यर्पितात्मन इति । मदर्थं संन्यस्तकर्मणां पुंसां मध्ये, मय्यर्पितात्मनः, अकर्तुः समदर्शनादन्यं परमुत्कृष्टं न पश्यामि । यद्यपि तत्तच्छास्त्रे ते ते श्रेष्ठा निरूपिताः, तथापि विचारकाणां हृदये ते नाऽऽयान्तीति न पश्यामीत्युक्तम् । सर्वापेक्षया भक्तिज्ञानयोरुत्कर्षः । भक्तावप्यात्मसमर्पणम्; ज्ञानं तु साङ्ख्यम्, ब्रह्मज्ञानं च । यद्यप्येते त्रयः, केवलपरित्यागिनश्च सर्वे परित्यागिनो भवन्ति, तथापि आत्मनिवेदनं ज्ञानद्वयं च यस्याऽस्ति, ततः किमधिकं भविष्यति । तत्तदत्रयेणोक्तम्, मय्यर्पितात्मनः, अकर्तुः, समदर्शनादिति ॥ ३३ ॥

नन्वेवं सति स एव भजनीयः स्यात्, स च सर्वैरेव स्वत एव सेव्यत इति भगवत्स्य पूर्वदोषानिवृत्तिश्चेत्याशङ्क्याऽऽह—

१ धर्ममयत्वात् क. धर्मत्वात् प ब. २ अर्थत्यागा.०क. प ह ३ 'अपि' इति नास्ति क. प. ह.

**मनसैतानि भूतानि प्रणमेद्बहु मानयेत् ।**
**ईश्वरो जीवकलया प्रविष्टो भगवानिति ॥ ३४ ॥**

मनसेति । स्वार्थमेवैतज्ज्ञानं निरूपितम्, नत्वधिकारिणोऽन्यपूजार्थम् । अत एवंविदेपि एतानि परिदृश्यमानानि भूतानि प्रणमेत् । स्वापेक्षयाऽपि बहु मानयेत् । तत्र हेतुः—ईश्वरो भगवान् जीवकलया जीवकलारूपेण, सह वा, सद्गुणैः सह प्रविष्ट इति । इति शब्दो हेतौ, ईश्वरत्वात्, अन्यथा स्वस्थानात् प्रच्यावयेत् । जीवे तु न हीनबुद्धिः कर्तव्या, स हि कला । लीलार्थं सा कलेत्यर्थः ॥ ३४ ॥

एवं भक्तिज्ञाने निरूप्य, नमस्कारभगवद्दर्शनाभ्यां च व्यवहारेऽपि तदुभयमुपपाद्य, भक्तिज्ञानयोः समुच्चयः विकल्पो वा, फलहेतुरित्याशङ्क्याऽऽह—

**भक्तियोगश्च योगश्च मया मानव्युदीरितः ।**
**ययोरेकतरेणैव पुरुषः पुरुषं व्रजेत् ॥ ३५ ॥**

* भक्तियोगश्चेति । हे मानवि, भक्तियोगोऽष्टाङ्गयोगश्च मया द्वयमुदीरितम् । मानवीति परिज्ञानार्थम् । ययोर्मध्ये एकतरेणैव पुरुषः पुरुषमात्मानं भगवन्तं व्रजेत् । ज्ञाने योग उक्तः, उत्तराङ्गं साक्षात्काराद्युत्पत्त्यर्थं प्रवेशार्थं च । भक्तिस्तु स्वतन्त्रा । एकप्राधान्ये अन्यद्गौणभावमेवाऽवलम्बते, अतो न समुच्चयः शास्त्रार्थः ३५

एवं पृष्टां भक्तिं निरूप्य, वैराग्यार्थं कालस्य पराक्रमं वक्तुम्, प्रथमतः कालस्य स्वरूपमाह—एतद्भगवत इति द्वयेन—

**एतद्भगवतो रूपं ब्रह्मणः परमात्मनः ।**
**परं प्रधानं पुरुषो दैवं कर्म विचेष्टितम् ॥ ३६ ॥**
**रूपभेदास्पदं दिव्यं काल इत्यभिधीयते ।**
**भूतानां महदादीनां यतो भिन्नदृशां भयम् ॥ ३७ ॥**

✖ कालस्य कार्यं स्वरूपं चोच्यते, कार्ये निविष्टः स्वरूपं प्राप्नोतीति ज्ञापनार्थम् । एतज्जगत्सर्वं भगवतो रूपम्, अन्यथा कालस्य भगवत्त्वात्कालत्वं विधातुं न शक्येत । अत एतज्जगद्भगवद्रूपमित्युक्तम् ।

---

प्रकाशः।

* भक्तियोगश्चेत्यत्र । स्वतन्त्रेति स्वतन्त्रसाधनभूता, न तु योगवज्ज्ञानोपकारकतया तच्छेषा । ननु भक्तियोगयोरुभयोरपि निरूपणे इतरेतराङ्गत्वेनेतरेतरनिरूपणे(उ)भयोरपि स्वीकारात् समुच्चय एव कुतो नोक्त इत्यत आहुः—एकेत्यादि । स्पष्टम् ।

✖ एतदित्यत्र । उभयथा कालनिरूपणस्य प्रयोजनमाहुः—कार्य इत्यादि । कालस्य कार्यं हि वक्ष्यमाणाव्युत्पत्तिप्रलयौ, तत्र निविष्टो जीवः स्वरूपं परादिदिव्यान्तं कालस्वरूपं यथाधिकारं प्राप्नोति, तत्र लीनस्तदात्मको भवति, एतज्ज्ञापनार्थमुभयथा निरूपणमित्यर्थः। स्वरूपं विवृण्वन्ति—एतदित्यादि । नन्वेतस्यमुद्दिश्य कालत्वे सर्वस्य विधातव्ये भगवद्रूपत्वं मध्ये किमित्युच्यत इत्याकाङ्क्षायामाहुः—अन्यथेत्यादि।

---

१ एवंविदोऽपि. क. ध. ङ. च. २ सा. ख. ग..घ. ३ महात्मानम्. क. ध. ङ. ४ ख. ग. ५ कार्यस्य. क. घ. ङ. ६ कालस्य कार्यं स्वरूपम् घ. घ. ङ. च ७ एवम्. ङ. घ.

श्रुतौ हि प्रकारद्वयेन निरूपणम्–आत्मत्वेन, ब्रह्मत्वेन च । 'आत्मैवेदं सर्वम्' "ब्रह्मैवेदं सर्वम्' इति । बृंहणत्वं व्याप्तिं चापेक्ष्य पदद्वयं प्रवृत्तम् । उभयोः स्वरूपमानन्दः; तथापि सप्रकार आत्मा, निष्प्रकारं ब्रह्म; आत्मनोऽपि ब्रह्मत्वविधानात् ' अयमात्मा ब्रह्मविज्ञानमयः ' इति । विचारे ब्रह्मैव प्रतिज्ञातम् ' अथातो ब्रह्मजिज्ञासा ' इति । जगत उभयरूपत्वमाह–**ब्रह्मणः परमात्मन** इति । मतत्रयं वा सङ्गृहीतम् "ब्रह्मेति परमात्मेति भगवानिति शब्द्यत " इति । लोके ऐश्वर्यादिधर्मान् पुरस्कृत्य भगवत्त्वमाहुः । वैलक्षण्यं पुरस्कृत्यात्मत्वम्, सद्रूपतां पुरस्कृत्य ब्रह्मत्वमिति । तद्रूपं कियदित्याकाङ्क्षायां गणयति–**परं** प्रकृतिपुरुषनियामकम्, **प्रधानं** प्रकृतिः; **पुरुषश्च; दैवं** कालो भगवदिच्छा वा; **कर्मा**ऽदृष्टम्, **विचेष्टितं** विविधचेष्टायुक्तः स्वभावः । रूपभेदास्पदं सर्वमेव जगत् परिदृश्यमानम्, दिव्यमपरिदृश्यमानं च । एतत्सर्वं काल इत्यभिधीयते, कालाधारत्वात्, कालाधीनत्वाच्च । कालस्य कालत्वं साधयति–**भूतानामि**ति । महदादीनामपि यस्मात्कालाद्भयं स कालः । भये भिन्नदर्शनं हेतुः, बहिर्मुखान् कालो ग्रसतीति ॥ ३६ ॥ ३७ ॥

कालस्योपास्यतानिमित्तं कालस्याऽऽधिदैविकं रूपमाह—

**योऽन्तः प्रविश्य भूतानि भूतैरत्त्यखिलाश्रयः ।**
**स विष्ण्वाख्योऽधियज्ञोऽसौ कालः कलयतां प्रभुः ॥ ३८ ॥**

---

प्रकाशः।

पूर्वं काललक्षणकरणे प्रकृते गुणसाम्यस्येत्यनेन प्रकृतिचेष्टाजनको भगवानेव काल इत्युक्तम्, तद्यदि जगतो भगवद्रूपत्वं नोच्येत, तदा तस्य जगतोऽभगवत्त्वात् कालत्वं विधातुं न शक्येत, अतस्तदर्थं तथेत्यर्थः । **ब्रह्मणः, परमात्मनः** इति विशेषणद्वयस्य प्रयोजनमाहुः–श्रुतावित्यादि । हिर्हेतौ । **निरूपणमि**ति । जगतो निरूपणम् । **बृंहणत्वमि**ति । पोषकत्वम् । **उभयोरि**ति । आत्मब्रह्मपदवाच्ययोः । **सप्रकार** इति । अन्तर्यामिब्राह्मणे ' यस्य पृथिवी शरीरम् ' इत्यारभ्य ' यस्यात्मा शरीरम् ' इत्यन्तैः शरीराणां प्रकारतया सिद्धत्वात् सप्रकारः ' एकमेवाऽद्वितीयम् ' इति श्रुतेर्निःप्रकारमित्यर्थः । ननु वाच्याभेदेऽर्थविभागः किं निबन्धन इत्याकाङ्क्षायामाहुः–आत्मनोऽपीत्यादि । इदं सर्वं यदयमात्मा ' ' सर्वं खल्विदं ब्रह्म ' इति श्रुतिद्वये यच्छब्दयोगप्राथम्याभ्यां सर्वसत्त्वस्योऽ(?)नूद्यतया यथोद्देश्यत्वम्, आत्मत्वब्रह्मत्वयोश्चोत्सर्गाद्विधानम्, तथाऽयमात्मा ब्रह्मविज्ञानमय इति श्रुतावात्मनो ब्रह्मत्वेन विधानात्, तस्मिंश्च सति पूर्वप्रकारभेदस्याऽऽवश्यकत्वात् तथा विधाननिबन्धन इत्यर्थः। नन्वस्य विधानस्य बृहदारण्यके शारीरमात्मानमुपक्रम्य दर्शनात् तस्य च विज्ञानमय इत्यारभ्येदंमयोऽदोमय इत्यन्तैर्बहुभिर्विशेषणैस्तथात्वं प्रतिपादितमित्यर्थविभागो युक्तः, प्रकृते तूभयं भगवत एव विशेषणमिति नाऽयं विभागो युज्यते इत्याकाङ्क्षायामाहुः–**विचार** इत्यादि । तथा च, यदि विभागो नाऽभिमेतः स्यात् तदा व्यासचरणा आत्मजिज्ञासामेव प्रतिजानीयुः । तथा च, द्वेधाऽप्यभिप्रेतत्वादेव ' उभयव्यपदेशात्त्वहिकुण्डलवत् ' इति 'पूर्ववद्वा' इति सूत्रद्वयं प्रणीतम्, अतोऽत्रापि विशेषणद्वयं युक्तमिति भावः। तदेतद्व्युदिकृत्याऽऽहुः–**जगत** इत्यादि । **उभयरूपत्वमि**ति प्रकारत्वमभेदं च । ननु भगवत्त्वेनैव प्रकारप्राप्तेः परमात्मन इति विशेषणवैयर्थ्यप्रतीत्यरुच्या पक्षान्तरमाहुः–**मतत्रयमि**त्यादि । तद्व्याकुर्वन्ति–**लोके** इत्यादि । **काल** इति । चिरक्षिप्रादिव्यवहारहेतुत्वेन यो लोकसिद्धः ।

*योऽन्तः प्रविश्येति । यो भगवान् स कालः। स को भगवानित्याकाङ्क्षायाम्—यस्त्वधियज्ञः, यज्ञाधिष्ठात्री देवता विष्णु ' यज्ञो वै विष्णु ' इति श्रुते । एकस्यैव काल इति सञ्ज्ञा विष्णुरिति च । तत्र विष्णुसञ्ज्ञा कथमित्याकाङ्क्षाया व्याप्तिं निरूपयन् अन्त प्रवेशं निरूपयति—यो भूतैं सहाऽन्तः प्रविश्य अखिलाश्रयो जातः । अन्तर्व्याप्ति प्रवेशात्, बहिर्व्याप्तिराश्रयत्वात् । कालत्वमाह—कलयतां प्रभुरिति । यस्तु कलयत्याकलयति, जानाति, भक्षयति वा, क्रियया ज्ञानेन वा यो व्याप्नोति, स कालः । कलयन्तीति कलयन्त , तेषा कलयता ब्रह्मादीनामपि नियन्ता । अत काल इत्यर्थ ॥ ३८ ॥

× इद भगवत केवलं मारणैकस्वभावमिति वक्तुं तस्य सर्वसाधारणत्वमाह—

न चाऽस्य कश्चिद्दयितो न द्वेष्यो न च बान्धवः ।
आविशत्यप्रमत्तोऽसौ प्रमत्तं जनमन्तकृत् ॥ ३९ ॥

न चाऽस्येति । अस्य कालस्य, कश्चिदप्युपासकोऽपि, दयितो नास्ति । यो वा द्वेष्टि सोऽपि न द्वेष्यः । सर्वे एव काले उत्पन्न इति सम्बन्धविशेषाभावात् कोऽपि न बान्धव । परमय सर्वप्रकृति॰ य पश्यति, त न गृह्णाति, किन्तु प्रमत्तमेव जनम् । असावप्रमत्तोऽन्तकर्ता, आविशति भक्षणार्थं त प्रविशति, व्याघ्र इव ॥ ३९ ॥

अस्य कालस्य सर्वे एव जानन्तीति तेषा तज्ज्ञानकार्यं भयमाह—यद्भयादिति पञ्चभि —

यद्भयाद्वाति वातोऽयं सूर्यस्तपति यद्भयात्
यद्भयाद्वर्षते देवो भगणो भाति यद्भयात् ॥ ४० ॥
यद्वनस्पतयो भीता लताश्चौषधिभिः सह ।
स्वे स्वे कालेऽभिगृह्णन्ति पुष्पाणि च फलानि च ॥ ४१ ॥

वातादय स्वस्वकार्यं कालभयादेव कुर्वन्ति, तत्र किं वक्तव्यम् ' प्राणी स्वधर्मं करिष्यति ' इति । अधिकारिणो महान्तो ये ये वा मूढा अचेतनाः । तत्त्वानि देवाः सर्वे च कालाद्भीता इतीर्यते।१। अयं वातः, यत् काले काले याति, सूर्योऽपि यस्मिन् नक्षत्रे यथा ताप उचित , तथा तपति; देवः पर्जन्य स्वकाले वर्षति; नक्षत्राणा गणोऽपि ज्योतिश्चक्र स्वकाले भाति । तद्गता शुक्रादयो यथाधिकार भान्तीत्यर्थ । अतिमूढा वनस्पतयो लताश्च, अश्वत्थादय , कूष्माण्डादिफलप्रधानलता पुष्पप्रधानाश्च चकारात्पत्रप्रधाना अपि । ओषधिभिर्व्रीह्यादिभि सह, स्वे स्वे काले, स्वस्वनक्षत्रदेशविशेषेष्वनति क्रम्य, पुष्पाणि फलानि च गृह्णन्ति ॥ ४० ॥ ४१ ॥

---

प्रकाश ।

* योऽन्तरित्यत्र । प्रवेशादिति । अत्र प्रवेशो मारकत्वेन रूपेण ज्ञेय । अत एव स्वतो वद्यादि नाश सार्वजनीनोऽनुग्रहीभवतीति । भक्षयतीति स्वार्थे णिच्, अचित्त्यार्थ्यानत्वात् ।

× न चाऽस्येत्यत्र । इदमिति । रूपमिति शेष । सर्वप्रकृतिरिति । सर्वमूलकारणम्, न तु यस्याऽपि विकृतिरित्यर्थ ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे एकोनत्रिंशाध्यायविवरण सम्पूर्णम् ।

चैतन्यरहिता अपि भीता इत्याह—

स्रवन्ति सरितो भीता नोत्सर्पत्युदधिर्यतः ।
अग्निरिन्धे सगिरिभिर्भूर्न मज्जति यद्भयात् ॥ ४२ ॥

सरितो नद्योऽपि भीताः सत्यः स्रवन्ति । उदधिर्भूमेरुच्चोऽपि मर्यादातोऽग्रे नोत्सर्पति । अग्निरपीन्धे[1] काष्ठादिभिर्ज्वलितो भवति, अन्यथा स्वयोनिं न दहेत् । गिरिभिः सह यद्भीत्या भूरपि न मज्जति । अग्निर्ज्वलति यद्भीत्येति वा पाठः ॥ ४२ ॥

तत्त्वान्यपि भीतानीत्याह—

नभो दधाति श्वसतां पदं यन्नियमाददः ।
लोकं स्वदेहं तनुते महान् सप्तभिरावृतः ॥ ४३ ॥

नभो दधातीति । यस्य कालस्य नियमान्नभ आकाशम्, पदं स्वर्गादिलोकानां स्थानम्, अदस्तत् प्रसिद्धं दधाति, आकाशोऽपि धारको जातोऽस्तीत्यर्थः । श्रुतावाकाशादिसृष्टिरिति आकाशो निरूपितः, पुराणादौ महदादिरिति सोऽप्युच्यते । महान् स्वदेहमेव लोकात्मकं तनुते । सप्तभिः महत्त्वहङ्कारपञ्चमहाभूतैरावृतः ॥ ४३ ॥

ब्रह्मादयोऽपि भीता इत्याह—

गुणाभिमानिनो देवाः सर्गादिष्वस्य यद्भयात् ।
वर्तन्तेऽनुयुगं येषां वश एतच्चराचरम् ॥ ४४ ॥

गुणाभिमानिन इति । गुणाभिमानिनो देवा ब्रह्मादयः । रजःप्रभृतयो गुणाः, रजोभिमानी ब्रह्मा, सत्त्वाभिमानी आधिभौतिको विष्णुः, तमोऽभिमानी शिव इति । तेऽप्युत्पत्तिस्थितिप्रलयान् सर्वेषां कालानुसारेण कुर्वन्ति । अनुयुगं च एते वशे वर्तन्ते । अनेकधा अवतीर्याऽपि कार्यं कुर्वन्ति । येषां ब्रह्मादीनां वशे एतच्चराचरं जगदिति माहात्म्यम् ॥ ४४ ॥

एवं कालस्य माहात्म्यमुक्त्वा तस्य कार्यं वदन् उपसंहरति—

सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः ।
जनं जनेन जनयन्मारयन्मृत्युनाऽन्तकम् ॥ ४५ ॥

सोऽनन्त इति । स्वयमनन्तः, सर्वेषामन्तकरः; स्वयमनादिः, सर्वेषामादिकृत्; कार्यं जनयन्नप्यव्ययः, इतरबीजादिवद्व्ययरहितः । उत्पत्तिरपि तस्य विचित्रा । जनेनैव उत्पन्नेनैव पित्रादिना, जनं पुत्रादिकं जनयन्, मृत्युना मरणरूपेण मारकमन्तकमपि मारयन्निव वर्तत इति माहात्म्यम् । अत एतत्परिज्ञानेनैव वैराग्यं भवतीत्युक्तम् । यस्तस्मान्न बिभेत्यस्मिन्नेव च तिष्ठति, तस्य गतिरुत्तरत्र वक्ष्यते ॥ ४५ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां
तृतीयस्कन्धे एकोनत्रिंशाध्यायविवरणम् ।

[1] इन्धेत् ख. ग.

# त्रिंशाध्यायविवरणम्।

* अभीतः कालकार्येषु यो मूढो वर्तते गृहे।
नदीप्रवाहे गृहवत् स दुःखीति निगद्यते ॥ १ ॥
बहिर्मुखो हि कालस्य विषयो नाऽस्मदर्शनः।
अतो बहिर्मुखे कालः लोकयोर्दुःखदः स्मृतः ॥ २ ॥
त्रिंशत्तमे तथाऽध्याये गृहस्थस्योभयोर्महत्।
लोकयोरुच्यते दुःखं पुनर्जन्मावधि स्फुटम् ॥ ३ ॥
अष्टादशभिराद्यन्तमरणावधि वर्ण्यते।
पुनर्जन्मावधि परं श्लोकैः षोडशभिः पुनः ॥ ४ ॥

कालस्य भगवतो विष्णोर्बहिर्मुखत्वे बाधकत्वमज्ञात्वा दुःखं प्राप्नोतीति वक्तुं प्रथममज्ञानमाह—

## श्रीभगवानुवाच ॥

तस्यैतस्य जनो नूनं नाऽयं वेदोरुविक्रमम्।
काल्यमानोऽपि बलिनो वायोरिव घनावलिः ॥१ ॥

× तस्यैतस्येति। यः पूर्वं सर्वभयजनकत्वेनोक्तः, स एवाऽयं कालः। एवमपि जनस्तत्रैवोत्पन्नः प्राणी, नूनं विक्रमं न वेद। ननु यावन्न बाधते, तावत्कथं जानीयादित्याशङ्क्याऽऽह—काल्यमानोऽपीति। प्रेर्यमाणः, पीड्यमानो वा; तद्वशवर्त्यपि न जानाति। असम्बन्धिनः पीडा सोढुं शक्या कादाचित्की, अयं तु वायोरिव घनावलिस्तस्य वशे ॥ १ ॥

सर्वकार्येषु तस्य पीडामाह—

यं यमर्थमुपादत्ते दुःखेन सुखहेतवे।
तं तं धुनोति भगवान् पुमान् शोचति यत्कृते ॥ २ ॥

---

गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृतः प्रकाशः।

* अथ त्रिंशाध्यायं विवरिषवः संवादद्वयसङ्गत्योः पूर्वमुक्तत्वात् ते उभे स्फोरयितुमर्थमाहुः—अभीत इत्यादि। तथा च दुःखमेव माया, शोकद्वयमेव चार्थ इति शुकमैत्रेयोक्तिविचारेण बोध्यम्। एवं पूर्वाध्याये भेददृष्टिर्वा दैहिकान्येव भूतानि तत्प्रयुक्त एव भक्त्यादिर्धर्म इत्यपि बोधितम्। कपिलोक्तेः सङ्गतिं प्रदर्शयितुमाहुः—त्रिभिरित्यादि। तथा च कालविक्रमोऽध्यायार्थस्तस्य च वैराग्यजनकत्वादेककार्यत्वमध्यायसङ्गतिरित्यर्थः।

× तस्यैतस्य। अयं काल इति। उत्पत्त्याधारभूतः कालः।

---

१ बहिर्मुखत्व. क.

* यं यमर्थमिति । सुखहेतवे, तदर्थं दुःखेन यं यमर्थं [illegible] ते, तं तमर्थं [illegible] करोति, [illegible] च । ननु [illegible] [illegible] दुःखं [illegible] इत्याशङ्क्य—पुमान् शोचति यत्कृत इति । [illegible] तदा स ईश्वरः पश्चात् हरति; तदर्थं शोचति ततो दुःखोऽतीति भावः । [illegible] नि-रूपितः ॥ २ ॥

तथापि नहृतः किमित्यत्रत आह—

यदध्रुवस्य देहस्य सानुबन्धस्य दुर्मतिः ।
ध्रुवाणि मन्यते मोहाद्गृहक्षेत्रवसूनि च ॥ ३ ॥

यदध्रुवस्येति । तत्र देहस्यार्थमेवं करोति—यतोऽयमध्रुवस्य देहस्य, नश्वरस्य अनुबन्धपुत्रादिसहितस्य सम्बन्धीनि गृहक्षेत्रादिवसूनि ध्रुवाणि मन्यते, तदर्थमायुषं वृथा व्ययीकरोति । यतोऽयम्—दुर्मतिः । तदपि न प्रमाणात्, किन्तु मोहादेव; ततो दूरीकरणार्थं तथा करोतीति भावः ॥ ३

ननु किं धनादिदूरीकरणेन ? निकृष्टयोनौ जातः स्वयमेव विरक्तो भविष्यतीत्याशङ्क्याऽऽह—

जन्तुर्वै भव एतस्मिन् यां यां योनिमनुव्रजेत् ।
तस्यां तस्यां स लभते निर्वृतिं न विरज्यते ॥ ४ ॥

जन्तुरिति । एतस्मिन् संसारे, स्वभावत उत्कर्षापकर्षरहिते, स्वयं जन्तुः प्राणी, यां यां योनिम् श्वयोनिम्, शूकरयोनिं वा, अनुव्रजेत् कर्मवशाद्गच्छेत्; तस्यां तस्यामेव, निर्वृतिं सुखम्, स लभते । लियमत्वं निद्रां च प्राप्नोति, यथा राजशरीरे, इन्द्रशरीरे वा; अतो न विरज्यते । तस्मात् नीचयोनिसम्बन्धे वैराग्यम् ॥ ४ ॥

कर्मणा नरके जाते दारुणदुःखं दृष्ट्वा वैराग्यं भविष्यतीत्याशङ्क्याऽऽह—

नरकस्थोऽपि देहं वै न पुमांस्त्यक्तुमिच्छति ।
नारक्यां निर्वृतौ सत्यां देवमायाविमोहितः ॥ ५ ॥

नरकस्थोऽपीति । कुम्भीपाकादिनरका उक्ताः, तत्र नारकदेहा अपि निरूपिताः । तादृशानपि देहांस्ते त्यक्तुं न वाञ्छन्ति । नरकसम्बन्धिनी या निर्वृतिः, नरकस्थमज्जादिभक्षणसुखम्, यथाऽपाऽमेध्यगर्ते कीटानाम् । अतस्तस्यां निर्वृतौ सत्यां तस्मिन् देहे गते सा गमिष्यतीति भयात्त्यक्तुं वाञ्छति । नन्वेतद्दुःखात्मकं प्रत्यक्षसिद्धम् . कथं निर्वृतिरित्युच्यत इत्याशङ्क्याऽऽह—देवमायाविमोहित इति । मायामोहितो विपरीतमेव मन्यते, तीव्रवेदनामपि सुखत्वेन मन्यत इति । मायाया माहात्म्यख्यापनार्थं देवपदम् ॥५॥

नन्वस्मिन्मानुषे जन्मनि पुत्रभार्यादिभिरवश्यं पोष्यैर्दुःखे दत्ते वैराग्यं भविष्यतीत्याशङ्क्याऽऽह—

आत्मजायासुतागारपशुद्रविणबन्धुषु ।

---

प्रकाशः ।

* यं यमित्यत्र । कृते अर्थ इति । तेन मूले यत्कृते इति सप्तमी, न तु तादर्थ्यबोधकमव्ययम् ।

---

१ इन्द्रादिशरीरे.

नाऽऽद्रियन्ते यथापूर्वं कीनाशा इव गोजरम् ॥ १३ ॥

एवमिति । स्वपोषणासमर्थम् । तत्कलत्रादयः पूर्ववदादरमपि न कुर्वन्ति । भक्ष्यादिकमपि न प्रयच्छन्तीत्यर्थः । अत्र दृष्टान्तमाह—कीनाशा दुष्टकृषीवलाः, गोजरं वृद्धबलीवर्दम्, नाऽऽद्रियन्ते । तस्यान्नं छायां वा यथा न सम्पादयन्तीत्यनुभवार्थे दृष्टान्तः ॥ १३ ॥

एवमपकृतोऽपि न विरक्तो जायत इत्याह—

तत्राप्यजातनिर्वेदो भ्रियमाणः स्वयंभृतैः ।
जरयोपात्तवैरूप्यो मरणाभिमुखो गृहे ॥ १४ ॥

तत्रापीति । पूर्वं स्वयंभृतैरधुना भ्रियमाणो भवतीत्यवैराग्ये हेतुः । अनेन निरभिमानतया तिष्ठतीति दोषार्थमभिमाननाश उक्तः । अवश्यं मरणलक्षणानि च तस्य जातानीत्याह—जरयोपात्तवैरूप्य इति । वलीपलितादिकं वैरूप्यम् । तदाऽयं मरणाभिमुख इति निश्चयः ॥ १४ ॥

आस्तेऽवमत्योपन्यस्तं गृहपाल इवाऽऽहरन् ।
आमयाव्यप्रदीप्ताग्निरल्पाहारोऽल्पचेष्टितः ॥ १५ ॥

तथापि गृह एवाऽऽस्ते । अवमत्या अवमानेन, उपन्यस्तमोदनादिकम्, गृहपाल इव श्वेव, आहरन् स्वयमेव गृहीत्वा भक्षयन्नपि गृह एवाऽऽस्ते । एवं बाह्यक्लेशमुक्त्वा आन्तरं क्लेशमाह—आमयावीति । आमयावी रोगवान्, अजीर्णान्नो वा । तत्र हेतुः न प्रदीप्तोऽग्निर्यस्येति, तदा अल्पाहारो भवति । भोगाभावः पुरुषार्थाभावश्चोक्तः । चेष्टाऽप्यल्पैव भवति । अनेन स्वसिद्धान्यपि करणानि न सुखप्रदानि जातानीत्युक्तम् ॥ १२ ॥

अतिक्लेशमाह—

वायुनोत्क्रमतोत्तारः कफसंरुद्धनाडिना ।
कासश्वासकृतायासः कण्ठे घुरघुरायते ॥ १६ ॥
शयानः परिशोचद्भिः परिवीतः स्वबन्धुभिः ।
वाच्यमानोऽपि न ब्रूते कालपाशवशं गतः ॥ १७ ॥

ननु लोकद्वये सुखाभावेऽपि दुःखमपि न भविष्यतीति नाऽत्यन्तं गृहं निन्दितमित्याशङ्क्याऽऽह—

**अर्थैरापादितैर्गुर्व्या हिंसयेतस्ततश्च तान् ।**
**पुष्णाति येषां पोषेण शेषभुग्यात्यधः पुमान् ॥ १० ॥**

अर्थैरिति। इतस्ततः स्वकीयानां परकीयानां च या गुर्वी हिंसा पीडा, तया आपादितैरर्थैः, तान् पुत्रादीन् पुष्णाति, येषां पोषेण, अधो नरके गच्छति । नरकविशेषेषु सामान्यतः कुटुम्बपोषको रौरवे पततीत्युक्तम् । ' यो राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः । पर्यायेण यातीमान्नरकानेकविंशतिम् । तामिस्रमन्धतामिस्रम् ' इत्यादिमनुवाक्यानि । ' कुम्भीपाके महाघोरे पुनरावृत्तिवर्जिते । तुलापुरुषप्रतिग्राही ऋत्विग्भिः सह मज्जति ' इत्यादिशतशो वाक्यानि अहिंसयाऽप्युत्पादितधने श्रूयन्ते, ये पुनर्घातकास्तेषां किं वक्तव्यम् । अतोऽर्थैस्तत्कृतपोषणेन च सर्वथाऽधो याति । न चाऽत्र भोगः, यतः शेषभुगुच्छिष्टभोजी । ब्राह्मणादीन् हत्वा, स्त्रीणां मलनिवृत्तिस्थानकर्तारोऽपि लोके दृश्यन्ते, कस्तेषामिह लोकः परलोको वा भविष्यति । पुमानिति समर्थोऽपि भूत्वैवं नष्टो भवतीति ज्ञापितम् । स्वयमिति पाठे न पुत्रादयो गच्छन्ति नरके, किन्तु स्वयमेवेत्यर्थः ॥ १० ॥

एवं सामर्थ्यदशायां न कोऽपि धर्मो भोगो वा सिद्ध इत्युक्तम् । असामर्थ्ये तु सुतरां नरको भोगाभावश्चेत्याह द्वयेन—

**वार्तायां लुप्यमानायामारब्धायां पुनः पुनः ।**
**लोभाभिभूतो निःसत्त्वः परार्थे कुरुते स्पृहाम् ॥ ११ ॥**

वार्तायामिति । प्रायेणाऽयं गृहस्थो वार्ताजीवनः । सा वार्ता कालवशात् पुनः पुनरारब्धाऽपि लुप्यमाना भवति । धनव्यतिरेकेण च न पोषः सिद्ध्यति, अतो लोभेनाऽभिभूतो विवेकधैर्यरहितश्च, परस्य श्रेष्ठस्याऽर्थे, गुर्वर्थे देवतार्थे वा, स्पृहां कुरुते चोरयितुं विचारयति । प्राप्तिस्तु दुर्लभेति स्पृहैवोक्ता । अनेन पारलौकिकं महद्दुःखमुक्तम् ॥ ११ ॥

ऐहिकसुखाभावमाह—

**कुटुम्बभरणाकल्पो मन्दभाग्यो वृथोद्यमः ।**
**श्रिया विहीनः कृपणो ध्यायन् श्वसिति मूढधीः ॥ १२ ॥**

कुटुम्बेति । पूर्वोक्तन्यायेन कुटुम्बपोषणे असमर्थो भवति । दैवादपि तस्य धनप्राप्त्यभावमाह—मन्दभाग्य इति । अतोऽल्पमपि वृथा उद्यमो यस्य । सर्वथा धनेन कान्त्या च विहीनो भवति । ततोऽनालोचितयाचकः कृपणो भवति । तदा पूर्वसिद्धविषयान् केवलं ध्यायन् श्वसिति, यतोऽयं मूढधीः । तत्रापि परलोकार्थं यत्नरहितः ॥ १२ ॥

* एवं स्वतः सुखाभावं दुःखं चोक्त्वा परकृते आह—

**एवं स्वभरणाकल्पं तत्कलत्रादयस्तथा ।**

---

प्रकाशः।

* एवमित्यत्र । परकृते इति सुखाभावदुःखे ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे त्रिंशाध्यायविवरणं सम्पूर्णम् ।

निरूढमूलहृदय आत्मानं बहु मन्यते ॥ ६ ॥

आत्मजायेति। आत्मा देहः, जाया स्त्री, सुता पुत्राः, अगारं गृहम्, पशवः, द्रविणानि, बान्धवाश्च; षडङ्गोऽयं प्राकृत आत्मा। साङ्गे तस्मिन्निरूढं मूलं यस्य, तादृशान्तःकरणो भूत्वा, भाराक्रान्तोऽपि दुःखं प्राप्नुवन्नपि, आत्मानम्, बहु कृतार्थम्, मन्यते। अतस्तैः प्रत्युत राग एव तस्य, न तु वैराग्यमिति भावः ६

न च मन्तव्यम्, ते सुखदायिन एवेत्याह—

सन्दह्यमानसर्वाङ्ग एषामुद्वहनाधिना ।
करोत्यविरतं मूढो दुरितानि दुराशयः ॥ ७ ॥

सन्दह्यमानसर्वाङ्ग इति। एषां भार्यादीनामुद्वहनं पोषणम्, तदर्थं य आधिः, तेन सन्दह्यमानानि सर्वाङ्गानि यस्य न केवलमिह लोके तत्कृतं दुःखं प्राप्नोति, किन्तु परलोकेऽपीत्याह—करोतीति। सर्वदा मूढः सन्, बाधकवाक्यान्यविचार्य, स्वतोऽप्यन्तःकरणशुद्धिरहितो दुरितानि दुष्टप्रकारेण धनोपार्जनादीनि, ऐन्द्रियकानि वा पापानि करोतीत्यर्थः ॥ ७ ॥

एतावदपि कृत्वा नैहिकं सुखं प्राप्नोतीत्याह—आक्षिप्तेति त्रिभिः—

आक्षिप्तात्मेन्द्रियः स्त्रीणामसतीनां च मायया ।
रहोरचितयाऽऽलापैः शिशूनां कलभाषिणाम् ॥ ८ ॥

असतीनां व्यभिचारिणीनामुभयलोकनाशिकानां स्त्रीणाम्, मायया कपटेन वञ्चनार्थमेव कृतेन, आक्षिप्तानि स्त्रीवशे जातानि आत्मा इन्द्रियाणि यस्य। न हि परवशैरिन्द्रियैः सुखं भवति, स्त्रीसुखस्यैव प्रधानत्वात्। सा माया भगवद्भजनादिनाऽपि नापगच्छतीति ज्ञापयति—रहोरचितयेति। एकान्ते सा माया रचिता, एकान्तभक्त्यैवाऽपगच्छति; सा तु गृहस्थस्य न सम्भवतीत्यनुसन्धेया। कलभाषिणां सूक्ष्मपुत्राणामव्यक्तमधुरवाक्यानामालापैराक्षिप्तात्मेन्द्रियः, आक्षिप्तानि आत्मा इन्द्रियाणि च यस्य। अनेनैवैहिकसुखाभावो निरूपितः ॥ ८ ॥

स्पष्टं परलोकाभावमाह—

गृहेषु कूटधर्मेषु दुःखतन्त्रेष्वतन्द्रितः ।
कुर्वन्दुःखप्रतीकारं सुखवन्मन्यते गृही ॥ ९ ॥

गृहेष्विति। गृहा धर्मप्रधाना इति लोकप्रसिद्धिः, परं तत्र कपटरूप एव धर्मः, धर्मच्छलः, धर्माभासो वा। यथं प्रतिष्ठार्थं जनसमक्षमेव औदार्यं ख्यापयति, अन्यदा समागतेभ्यो जलमपि न प्रयच्छति, स तथोच्यते। दुःखमेव तन्त्रं परिकरो येषाम्। इह लोके दुःखम्, परलोकेऽपि कपटधर्मात् दुःखम्। तत्रैवाप्यतन्द्रितः सावधानः। स्त्रीणामर्थे धर्मे महत्कार्यं कृत्वा तासामाश्रमे समागतस्तृषया म्रियमाणो यथा कथञ्चित् पानीयं पीत्वा आत्मानं सुखिनं मन्यते, कृतार्थं च। तदाह—कुर्वन् दुःखप्रतीकारं सुखवन्मन्यत इति। अत्र सुखं सुखमन्येगतं वा। गृहीति सर्वदा गृहभाराक्रान्तः। शिरःस्थभारजलपानवत् तस्य सुखमिति निरूपितम् ॥ ९ ॥

१ यथा क ख १ अन्यत्र प. ह.

ननु लोकद्वये सुखाभावेऽपि दुःखमपि न भविष्यतीति नाऽत्यन्तं गृहं निन्दितमित्याशङ्क्याऽऽह—

**अर्थैरापादितैर्गुर्व्या हिंसयेतस्ततश्च तान् ।**
**पुष्णाति येषां पोषेण शेषभुग्यात्यधः पुमान् ॥ १० ॥**

अर्थैरिति। इतस्ततः स्वकीयानां परकीयानां च या गुर्वी हिंसा पीडा, तया आपादितैरर्थैः, तान् पुत्रादीन् पुष्णाति, येषां पोषेण, अधो नरके गच्छति । नरकविशेषेषु सामान्यतः कुटुम्बपोषको रौरवे पततीत्युक्तम् । ' यो राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः । स पर्यायेण यातीमान्नरकानेकविंशतिम् । तामिस्रमन्धतामिस्रम् ' इत्यादिमनुवाक्यानि । ' कुम्भीपाके महाघोरे पुनरावृत्तिवर्जिते । तुलापुरुषप्रतिग्राही ऋत्विग्भिः सह मज्जति ' इत्यादिशतशो वाक्यानि अहिंसयाऽप्युत्पादितधने श्रूयन्ते, ये पुनर्घातकास्तेषां किं वक्तव्यम् । अतोऽर्थैस्तत्कृतपोषणेन च सर्वथाऽधो याति । न चाऽत्र भोगः, यतः शेषभुगुच्छिष्टभोजी । ब्राह्मणादीन् हत्वा, स्त्रीणां मलनिवृत्तिस्थानकर्तारोऽपि लोके दृश्यन्ते, कस्तेषामिह लोकः परलोको वा भविष्यति । पुमानिति समर्थोऽपि भूत्वैवं नष्टो भवतीति ज्ञापितम्। स्वयमिति पाठे न पुत्रादयो गच्छन्ति नरके, किन्तु स्वयमेवेत्यर्थः ॥ १० ॥

एवं सामर्थ्यदशायां न कोऽपि धर्मो भोगो वा सिद्ध इत्युक्तम् । असामर्थ्ये तु सुतरां नरको भोगाभावश्चेत्याह द्वयेन—

**वार्तायां लुप्यमानायामारब्धायां पुनः पुनः ।**
**लोभाभिभूतो निःसत्त्वः परार्थे कुरुते स्पृहाम् ॥ ११ ॥**

वार्तायामिति । प्रायेणाऽयं गृहस्थो वार्ताजीवनः । सा वार्ता कालवशात् पुनः पुनरारब्धाऽपि लुप्यमाना भवति । धनव्यतिरेकेण च न पोषः सिद्ध्यति, अतो लोभेनाऽभिभूतो विवेकधैर्यरहितश्च, परस्य श्रेष्ठस्याऽर्थे, गुर्वर्थे देवतार्थे वा, स्पृहां कुरुते चोरयितुं विचारयति । प्राप्तिस्तु दुर्लभेति स्पृहैवोक्ता । अनेन पारलौकिकं महद्दुःखमुक्तम् ॥ ११ ॥

ऐहिकसुखाभावमाह—

**कुटुम्बभरणाकल्पो मन्दभाग्यो वृथोद्यमः ।**
**श्रिया विहीनः कृपणो ध्यायन् श्वसिति मूढधीः ॥ १२ ॥**

कुटुम्बेति । पूर्वोक्तन्यायेन कुटुम्बपोषणे असमर्थो भवति । दैवादपि तस्य धनप्राप्त्यभावमाह—मन्दभाग्य इति । अतोऽल्पमपि वृथा उद्यमो यस्य । सर्वथा धनेन कान्त्या च विहीनो भवति । ततोऽनालोचितयाचकः कृपणो भवति । तदा पूर्वसिद्धविषयान् केवलं ध्यायन् श्वसिति, यतोऽयं मूढधीः। तत्रापि परलोकार्थे यत्नरहितः ॥ १२ ॥

* एवं स्वतः सुखाभावं दुःखं चोक्त्वा परकृते आह—

**एवं स्वभरणाकल्पं तत्कलत्रादयस्तथा ।**

---

प्रकाशः।

* एवमित्यत्र । परकृते इति सुखाभावदुःखे ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे त्रिंशाध्यायविवरणं सम्पूर्णम् ।

नाऽऽद्रियन्ते यथापूर्वं कीनाशा इव गोजरम् ॥ १३ ॥

एवमिति । स्वपोषणासमर्थम् । तत्कलत्रादयः पूर्ववदादरमपि न कुर्वन्ति । भक्ष्यादिकमपि न प्रयच्छन्तीत्यर्थः । अत्र दृष्टान्तमाह—कीनाशा दुष्टकृषीवलाः, गोजरं वृद्धबलीवर्दम्, नाऽऽद्रियन्ते । तस्यान्नं छायां वा यथा न सम्पादयन्तीत्यनुभवार्थं दृष्टान्तः ॥ १३ ॥

एवमपकृतोऽपि न विरक्तो जायत इत्याह—

तत्राप्यजातनिर्वेदो भ्रियमाणः स्वयंभृतैः ।
जरयोपात्तवैरूप्यो मरणाभिमुखो गृहे ॥ १४ ॥

तत्रापीति । पूर्वं स्वयंभृतैरधुना भ्रियमाणो भवतीत्यवैराग्ये हेतुः । अनेन निरभिमानतया तिष्ठतीति बोधार्थमभिमाननाश उक्तः । अवश्यं मरणलक्षणानि च तस्य जातानीत्याह—जरयोपात्तवैरूप्य इति । वलीपलितादिकं वैरूप्यम् । तदाऽयं मरणाभिमुख इति निश्चयः ॥ १४ ॥

आस्तेऽवमत्योपन्यस्तं गृहपाल इवाऽऽहरन् ।
आमयाव्यप्रदीप्ताग्निरल्पाहारोऽल्पचेष्टितः ॥ १५ ॥

तथापि गृह एवाऽऽस्ते । अवमत्या अवमानेन, उपन्यस्तमोदनादिकम्, गृहपाल इव श्वेव, आहरन् स्वयमेव गृहीत्वा भक्षयन्नपि गृह एवाऽऽस्ते । एवं बाह्यक्लेशमुक्त्वा आन्तरं क्लेशमाह—आमयावीति । आमयावी रोगवान्, अजीर्णान्नो वा । तत्र हेतुः न प्रदीप्तोऽग्निर्यस्येति, तदा अल्पाहारो भवति । भोगाभावः पुरुषार्थाभावश्चोक्तः । चेष्टाऽप्यल्पैव भवति । अनेन स्वसिद्धान्यपि करणानि न सुखप्रदानि जातानीत्युक्तम् ॥ १२ ॥

अतिक्लेशमाह—

वायुनोत्क्रमतोत्तारः कफसंरुद्धनाडिना ।
कासश्वासकृतायासः कण्ठे घुरघुरायते ॥ १६ ॥
शयानः परिशोचद्भिः परिवीतः स्वबन्धुभिः ।
वाच्यमानोऽपि न ब्रूते कालपाशवशं गतः ॥ १७ ॥

वायुनोत्क्रमतोत्तार इति । उत्क्रमता देहं परित्यज्य गच्छता, ऊर्द्ध्वं गच्छता, प्राणेन उद्गते तारे अक्ष्णोर्यस्य, तादृशो भवति। तत्र हेतुः—कफेन संरुद्धा नाड्यो यस्य, तादृशेन वायुना। वायोर्मार्गो मुखगतः, नासागतो वा कफेन रुद्धः; अतः कफरहितेन मार्गेण गच्छामीति विचार्य नेत्रयोराघातं करोति, तदा पुरुष उत्तारो भवति । लोकदृष्ट्या तस्य खेदो निरूपितः। तस्यापि दुःखानुभवमाह—कासेति । कासश्वासौ रोगविशेषौ, ताभ्यां कृत आयासो यस्य । तादृशोऽपि न विरज्यत इत्युक्तम् । कण्ठे[1] पुनर्घुरघुरायते । वाय्वनुकरणशब्दोऽयम्, घुरघुरवदाचरति । विड्वराहानुकरणशब्दोऽप्ययम्, तेनाऽस्य दुर्गतिः सूचिता तदापि गृहमध्य एव शयानो भवति । बन्धुभिश्च परितः शोचद्भिः परीतो भवतीति लौकिकव्यवहारोऽपि । व्यर्थमयं प्राणी स्वात्मानं नाशितवानित्यनुकरणमिव वर्ण्यते, न हि कृतकार्यं कश्चिच्छोचति । तदा कालपाशेनावृतः 'तात' इत्युच्यमानोऽपि न ब्रूते ॥ १६ ॥ १७ ॥

१ कण्ठः प. ८.

एवं सर्वावस्थामुक्त्वा मुख्यं तस्य मरणमाह—

**एवं कुटुम्बभरणे व्यापृतात्माऽजितेन्द्रियः ।**
**म्रियते रुदतां स्वानामुरुवेदनयाऽस्तधीः ॥ १८ ॥**

एवमिति । कुटुम्बभरणे व्यापृतात्मा योजितचित्तः, अग्रेऽपि खेदं प्राप्तुमजितेन्द्रियश्च । अन्यकृत-भगवन्नामश्रवणाभावार्थं स्वानां रुदतां सताम्, स्वयमपि स्मरणरहितः, उरुवेदनया अस्तबुद्धिर्म्रियते प्राणांस्त्यजति । अनेनाऽष्टादशविधानां वैयर्थ्यमुक्तम् ॥ १८ ॥

तस्य परलोकदुःखमाह—यमदूतावित्यादिषोडशभिः—

**यमदूतौ तदा प्राप्तौ भीमौ सरभसेक्षणौ ।**
**स दृष्ट्वा त्रस्तहृदयः शकृन्मूत्रं विमुञ्चति ॥ १९ ॥**

प्राणत्यागे यदि शुद्धो भवेत्, तदा पुत्रादिकृतसंस्कारैरपि सिद्धिं गच्छेत्; तदभावार्थं यमदूतयोरा-गमने भीतः, तयोर्दर्शनेन शकृदमेध्यम्, मूत्रं च, त्रस्तहृदयः सन् विमुञ्चति । प्राणोत्क्रमणसमय एवै-तज्जातमिति न शौचादिविलम्बः ॥ १९ ॥

अतः पुण्याभावात्, तृणजलौकावत् देहसम्बन्धाच्च, यमनिर्मितो यातनादेहस्ताभ्यामेवाऽऽनीतः स्व-देहपरित्यागानन्तरमेव तं गृह्णातीत्याह—

**यातनादेह आवृत्य पाशैर्बद्ध्वा गले बलात् ।**
**नयतो दीर्घमध्वानं दण्ड्यं राजभटा यथा ॥ २० ॥**

यातनादेह इति । तदा यमदूतौ अपानद्वारा निर्गतप्राणम्, यातनादेहे निरुध्य, आज्ञाकारिणमपि बलात्पाशैर्गले बद्ध्वा दीर्घमध्वानं नयतः । यातनापदेन देहसम्बन्ध एव क्लेशो निरूपितः । ननु बद्ध्वा नयनं किमर्थम् ? नरकस्त्वग्रे वक्तव्य इत्याशङ्क्याऽऽह—दण्ड्यं राजभटा यथेति । प्रवृत्तिमार्गस्थितं सर्व-मेव यमदूतौ नयतः तत्र यो दण्ड्यः स बद्ध्वा नीयते । दण्डनज्ञापकं बन्धनम् । यथाऽधिकारिणं राजभटा नयन्त्येव, दण्ड्यं तु बद्ध्वा नयन्तीति ॥ २०

मार्गेऽपि तत्कृतं क्लेशमाह—तयोरिति चतुर्भिः। पुरुषार्थचतुष्टयनाशक इति मार्गे चतुर्भिः क्लेशो निरूप्यते—

**तयोर्निर्भिन्नहृदयस्तर्जनैर्जातवेपथुः ।**
**पथि श्वभिर्भक्ष्यमाण आर्तोऽघं स्वमनुस्मरन् ॥ २१ ॥**

दूतौ पुण्यपापयोरधिष्ठातृरूपौ । पुण्यस्याऽप्यकरणात् स क्रुद्धः, पापस्य करणात् द्वितीयः । उभाभ्यां निर्भिन्नं हृदयं यस्य । तयोरिति स्वरूपेणैव भयोत्पादकत्वात् षष्ठी निर्दिष्टा । महाभयेन हृदये भेदः, तर्जनैर्वा । वाग्दण्डनपूर्वकं ताडनं तर्जनम् । जातो वेपथुः कम्पो यस्य । अहोरात्राभिमानिन्यो देवता विकर्मसाक्षिण्यः श्वानः, तैश्च पथि भक्ष्यमाणो भवति । आर्तश्च भवति, रोगादिभिरिव व्याप्तः । स्वस्य अघमनुस्मरन्नि-ति देवतासान्निध्यात्तस्य पूर्वज्ञानमुत्पद्यत इति ज्ञापितम् । प्राणोत्क्रमणक्षणप्रभृतिक्लेशावश्यकत्वात् पथि शुनां भक्षणमुक्तम् ॥ २१ ॥

---

१ पूर्वावस्थाम् ख. घ. २ दर्शने. च . ङ.

मार्गे दु खान्तराण्यप्याह—

क्षुत्तृट्परीतोऽर्कदवानलानिलैः सन्तप्यमानः पथि तप्तवालुके ।
कृच्छ्रेण पृष्ठे कशया च ताडितश्चलत्यशक्तोऽपि निराश्रमोदके॥ २२॥

क्षुत्तृट्परीत इति । क्षुत्तृषावपि यातनासम्बन्धिन्यौ, अतस्ताभ्या व्याप्तः । अर्कदवानलावपि तथा अनिलश्च । तै सम्यक् तप्यमान । सर्वतः क्लेशो निरूप्य इति अन्त स्थकृतताप, बहि स्थितकृततापश्च वर्णित । मार्गकृतमप्याह—पथि तप्तवालुक इति । मार्गे सर्वत्र वालुकैव, साऽपि तप्ता । कृच्छ्रेण चलतीति तत्कृतपीडानुभवो निरूपित । महावेदनाभावमाशङ्क्य ताडनेनैव तथात्वमिति वक्तु ताडनमाह-पृष्ठे कशया च ताडित इति । वेत्रताडन मुख्यम्, तयो सहजम् । कशा अश्वप्रहरणी, तयाऽपि ताडित । निराश्रमोदक इति यमदूताभ्या नीयमानमार्गे न च्छाया गृहवृक्षादिकृता, नाऽपि जलम् ॥ २२ ॥

गतिसाधनाना क्लेशरूपत्वमुक्त्वा तस्य क्लिष्टा गतिमाह—

तत्र तत्र पतन् श्रान्तो मूर्च्छितः पुनरुत्थितः ।
यथा पापीयसा नीतस्तरसा यमसादनम् ॥ २३ ॥

तत्र तत्रेति । प्रतिपद पतन् श्रान्तो भवति, अतिवेदनया मूर्च्छितश्च । तयाऽपि यातनादेहत्वात् पुनरुत्थितो भवति । तथा नयने तारतम्यं ज्ञापयन् हेतुमाह—यथा पापीयसा नीत इति । पापीयसा घातकेन, अरण्ये वधार्थं नीतो भवति, व्याघ्रादिना वा । यथा पापयुक्तो वा यथा पापीयान् स्वकृतपाप-युक्तो वा स्वकृतपापानुसारेण यो जातो देहः, यथा पापीयान्, तेन तरसा शीघ्रमेव यमसादन नीत इति पापतारतम्ये दु खतारतम्य निरूपितम् ॥ २३ ॥

बहुदूर शीघ्र नीयमान क्लिश्यतीति प्रकारकृतमपि क्लेशमाह—

योजनानां सहस्राणि नवतिं नव चाऽध्वनः ।
त्रिभिर्मुहूर्तैर्द्वाभ्यां वा नीतः प्राप्नोति यातनाः ॥ २४ ॥

योजनानामिति । कर्मभूमे सकाशात् यातनास्थाने एकसहस्रयोजनन्यूनलक्षयोजनानि सन्ति, तदाह सहस्राणि नवतिं नव चेति । भूमेर्दलं तावदेव 'अधस्ताद्भूमेः' इति वचनात् सहस्रं योजनानि तस्या अधोभाग यातनाभूमेर्वा अर्वाक । वराहकल्पानुसारेण चैतदुक्तम्, ब्रह्मकल्पेनाऽपि न विरुध्यते । त्रिभि-र्मुहूर्तैरिति । पापाल्पत्वे । द्वाभ्यामिति पापाधिक्ये । एतावद्दूरमेतावत्कालेन नीतो यातना प्राप्नोति । तावद्दु खं प्राप्नोतीत्यर्थ ॥ २४ ॥

तत्र प्रकीर्णपापाना यथापाप त्रिविध नरकमाह त्रिभि —

आदीपनं स्वगात्राणां वेष्टयित्वोल्मुकादिभिः ।
आत्ममांसादनं क्वापि स्वकृतं परतोऽपि वा ॥ २५ ॥
जीवतः स्वाङ्गाभ्युद्धारः श्वगृध्रैर्यमसादने ।

१ मति ख ड  २ स्वकृतपापयुक्तो वा इति नास्ति ग घ च  ३ पापतारतम्येन ग ड
४ यातनाभूमिरधोभागम् ख ड  ५ आत्मा-था  १ क ड.

**सर्पवृश्चिकदंशाद्यैः स्मरद्भिश्चात्मवैशसम् ॥ २६ ॥**

**कृन्तनं चावयवशो गजादिभ्यो निपातनम् ।**
**पातनं गिरिशृङ्गेभ्यो रोधनं चाऽम्बुगर्तयोः ॥ २७ ॥**

आदीपनमिति सात्त्विके पापे; जीवत इति राजसे; कृन्तनमिति तामसे। ज्वलदुल्मुकानि गात्रेषु वेष्टयित्वा आदीपनं ज्वालनम्[1] । आदिशब्देन तृणवस्त्रादिभिरपि वेष्टयित्वा दाहः । महापातकानामेतत् । अन्येषां तु आत्ममांसादनं क्वापि देशे । स्वेनैव कृतं कृन्तनम्, स्वदेहादुद्धृतम् । परतोऽपि[2] वा अन्योद्धृतं वा । स्वत एव कृते पापे, अन्यप्रेरणया कृते। जीवतः स्वस्य गात्राणां शरीरावयवानामभ्युद्धारः श्वगृध्रादिभिः कृतः । तैरेव भक्ष्यत इति विशेषः । यमसादन इति । सर्वतो भयानकत्वं सूचितम् । श्वानः पूर्वमुक्ताः । गृध्राः पाषण्डाभिमानिनः । सर्पवृश्चिकदंशाद्यैरिति । दंशाः स्थूला मशकाः । आदिशब्देन मत्कुणादयः । आत्मवैशसं पूर्वं स्वमारणम् । तैरपि कृतो गात्राभ्युद्धार इति योजना । इक्षुदण्डानामिवावयवशः कृन्तनम् । गजव्याघ्रादिभ्यो[3] निपातनं भक्षणार्थं प्रक्षेपः । गिरिशृङ्गेभ्यश्चाऽधःपातनम्, जले च निरोधनम्, गर्ते च । यथायथमेतानि पापफलानि ॥ २५ ॥ २६ ॥ ॥ २७ ॥

प्रकीर्णकान्युक्त्वा मुख्यान्याह—

**यास्तामिस्रान्धतामिस्ररौरवाद्याश्च यातनाः ।**
**भुङ्क्ते नरो वा नारी वा मिथः सङ्गेन निर्मिताः ॥ २८ ॥**

यास्तामिस्रेति । अष्टाविंशतियातना या उक्ताः, ता भुङ्क्ते । तासां लक्षणमुत्तरत्र वक्ष्यते । स्त्रिया भोग्यत्वेन नरकानुभवाभावमाशङ्क्याऽऽह[4]—नारी वेति । भोग्यत्वांशेऽपि नरकसम्बन्धार्थमाह—मिथः सङ्गेनेति। अन्योन्यसम्बन्धजनितपापेन निर्मिता यातनाः ॥ २८ ॥

भयमात्रत्वमित्याशङ्क्य लोकदृष्टान्तेन सत्यत्वं साधयति—

**अत्रैव नरकः स्वर्ग इति मातः ! प्रचक्षते ।**
**या यातना वै नारक्यस्ता इहाऽप्युपलक्षिकाः ॥ २९ ॥**

अत्रैव नरकः स्वर्ग इति । इष्टाधिकारिणां राज्यादयः, अनिष्टकारिणां राजदण्डादयश्च प्रत्यक्षमुपलभ्यन्ते । एतत्सर्वं यतोऽस्मिन्नेव लोके दृश्यत इत्यत्रत्या यातनास्तदुपलक्षिकाः ॥ २९ ॥

एतत्सर्वं कुटुम्बपोषनिमित्तमेवेत्याह—

**एवं कुटुम्बं बिभ्राण उदरम्भरिरेव च ।**
**विसृज्येहोभयं प्रेत्य भुङ्क्ते तत्फलमीदृशम् ॥ ३० ॥**

एवमिति । यस्य वा कुटुम्बं नाऽस्ति, सोऽप्येवमनुभवतीत्याह—उदरम्भरिरेव चेति । इहैव कुटुम्बमुदरं च त्यक्त्वा, पश्चात् प्रेत्य, तदुभयपोषनिमित्तं फलमीदृशमनुभवति ॥ ३० ॥

सर्वेषां पापजनकद्रव्यानुभवेऽपि एक एव तत्फलं भुङ्क्ते इत्याह—

---

१ ज्वलनयत्. ग.	२ अपि. ख. ग. च.	३ व्यालादिभ्यः घ.	४ नरकानुभावाभावम्. कु. स. ङ.

एकः प्रपद्यतेऽध्वानं हित्वेदं सकलेवरम् ।
कुशलेतरपाथेयो भूतद्रोहेण यद्भृतम् ॥ ३१ ॥

एक इति । कलेवरसहितमेतत्सर्वं परित्यज्य, एक एव यमलोकाध्वानं प्रपद्यते, कुशलपाथेयः, इतरपाथेयो वा । उभयविधानामपि प्रवृत्तिपराणां यमलोक एव गमनमिति ज्ञापयितुं कुशलेतरपदम् । पाथेयं पथि शम्बलम् । भूतानां प्राणिनां द्रोहेण यद्भृतम् , तदवश्यं भोक्तव्यमिति ज्ञापनार्थं पुनरुक्तम् ॥३१॥

ननु यमलोके वा प्रायश्चित्तं कुर्यात्, विवादं वा, ' न मयैव भक्षितम् ' इति । तथा सति नरको न स्यादित्याशङ्क्याऽऽह—

दैवेनाऽऽसादितं तस्य शमलं निरये पुमान् ।
भुङ्क्ते कुटुम्बपोषस्य हृतवित्त इवाऽऽतुरः ॥ ३२ ॥

दैवेनेति । तत्र भगवदिच्छयैव तस्य शमलमुपस्थितम् , भुङ्क्ते च; न तु तदन्यथा कर्तुं शक्यते । शमलं पापफलम् । निरये नरकभूमौ । पुमानिति स्वतन्त्रः । ननु भगवदिच्छया चेत् कस्य दोषोऽयमित्याशङ्क्याऽऽह—कुटुम्बपोषस्येति । अन्तर्दुःखमपि तस्येत्याह—हृतवित्त इति । यथा रोगग्रस्तदेहो वित्ते गते दुःखमनुभवति, एवं कुटुम्बे देहेऽपि गते तद्वासनाया विद्यमानत्वात् शमलं भुङ्क्ते । धर्माधर्माभ्यां कुटुम्बपोषकस्यैतदुक्तम् ।

केवलाधर्मेण कुटुम्बपोषकस्य फलमाह—

केवलेन ह्यधर्मेण कुटुम्बभरणोत्सुकः ।
याति जीवोऽन्धतामिस्रं चरमं तमसः पदम् ॥ ३३ ॥

केवलेनेति । पापोपार्जितेनैव द्रव्येण, व्याध इव, घातक इव वा, यः कुटुम्बं पोषयति; उत्सुको वा; सोऽन्धतामिस्रं याति । अस्मादन्धतामिस्रात् तद्भिन्नं दैत्यानामन्ते फलरूपम् । तदाह—चरममिति । तत्र गतो न निवर्तते । तत्र च निवृत्त्यभावार्थमाह—तमसः पदमिति ॥ ३३ ॥

तत्र कल्पान्तं स्थित्वा पुनरायातीत्याह—

अधस्तान्नरलोकस्य यावतीर्यातनादयः ।
क्रमशः समनुक्रम्य पुनरत्राऽऽव्रजेच्छुचिः ॥ ३४ ॥

अधस्तादिति । नरलोकस्याऽधस्तात् यावतीर्यातनाः, ताः सर्वा एव क्रमेण, ऊर्द्ध्वमुखः सन्, अनुभूय, न तु सर्वाः सकृत् , किन्तु समनुक्रम्य । एकं नरकमारभ्य, तत् सम्यक् भुक्त्वा, पुनर्नरकान्तरं भोक्तुमारभत इत्यर्थः । पुनरत्रैव लोके शुद्धो भूत्वा आव्रजेदित्यर्थः ॥ ३४ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां
तृतीयस्कन्धे त्रिंशाध्यायविवरणम् ।

---

# एकत्रिंशाध्यायविवरणम् ।

* एकत्रिंशे पुनस्तस्य गर्भादिकृतयातनाः ।
जानतोऽपि पुनर्मोहो दुःखं चापि तथोच्यते ॥ १ ॥
कृतिः प्रधानं न ज्ञानं यावद्देहस्मृतिर्भवेत् ।
अतस्त्यागो विधातव्यो ज्ञानं तस्मात्तु दुर्बलम्[1] ॥ २ ॥
क्रिया चेद्विषमा जाता ज्ञानं तस्य न साधकम् ।
क्रियां चेज्जनयेत्ताद्दिं तदुत्तममिहोच्यते ॥ ३ ॥
अधर्माधिक्यतो धर्मं यः करोति गृही सदा ।
बहुजन्मविपाकेन गर्भे तस्य भवेन्मतिः ॥ ४ ॥
तामसत्वात्तु धर्मस्य न भूमौ नोत्तरे फलम् ।
अतो गर्भे ज्ञानसिद्धिस्त्वादशस्योच्यते हितम् ॥ ५ ॥

पूर्वाध्यायान्ते नरकादिह लोके पुनरागमनमुक्तम् । ततश्च तस्य देहसम्बन्धः कथमित्याशङ्क्य यदा योनौ रेतः निर्जीवमेव तिष्ठति, तदा स आगत्य कर्मणा प्रविशेदित्याह—

## श्रीभगवानुवाच ।

कर्मणा दैवतन्त्रेण[2] जन्तुर्देहोपपत्तये
स्त्रियाः प्रविष्ट उदरं पुंसो रेतःकणाश्रयः ॥ १ ॥
कललं[3] त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम्
दशाहेन तु कर्कन्धूःपेश्यण्डं वा ततः परम् ॥ २ ॥
मासेन तु शिरो द्वाभ्यां बाह्वङ्घ्र्याद्यङ्गविग्रहः
नखलोमास्थिचर्माणि लिङ्गच्छिद्रोद्भवस्त्रिभिः ॥ ३ ॥
चतुर्भिर्धातवः सप्त पञ्चभिः क्षुत्तृडुद्भवः
षड्भिर्जरायुणा वीतः कुक्षौ भ्राम्यति दक्षिणे ॥ ४ ॥

कर्मणेति । भगवदिच्छाधीनेन कर्मणा जन्तुरयं जायमानो देहोत्पत्त्यर्थं पुंसो रेतःकणमाश्रित्य, स्त्रिया-

---

गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृतः प्रकाशः ।

* अथैकत्रिंशाध्यायं विवरिषवः सङ्गतीनां पूर्वमुक्तत्वादर्थमेवाहुः—एकत्रिंश इत्यादि । तथेति, वैराग्यजनकत्वेन प्रकारेण । नन्वस्मिन्नध्याये गार्भज्ञाननिरूपणस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः—कृतिरित्यादि । तस्मादिति । त्यागात् । हितमिति । त्यागरूपं हितम् । तथा च, हीनाधिकारे ज्ञानस्योपकारकत्वेऽपि नैर्बल्येनाऽकिञ्चित्करत्वात्त्यागस्याऽऽवश्यकत्वं बोधयितुं तन्निरूपणमित्यर्थः ।

---

१ सुदुर्बलम्. क. घ. ङ. २ दैवनेत्रेण. ङ. ३ कलिलम्. पा.

उदरं प्रविष्टो भवति। प्रथमत उदरप्रवेशः, पश्चात् रेतःकणाश्रयः। मुखनासिकाद्वारा च प्रवेशः। तस्मिन् प्रविष्ट एव तत्प्रयत्नेन धारितं रेतस्तिष्ठति। दैववशात् समानकाले प्रवेशो रेतःसम्भवश्च भवतः। तत्र दिनमात्रे स्थिते तद्रेतः कललं भवति। शुक्रशोणिते मिलिते भवतः। पञ्चरात्रेण बुद्बुदाकारमुच्छूनं भवति। दशाहेन तु कर्कन्धूर्भवति, बदरीफलबीजसदृशं भवति। ततः परं पेशी, अण्डं वा भवति। अण्डाकारं वृत्तं वा अपूपाकृतिर्भवति। पुरुषश्चेदण्डम्, इतरो चेत्पेशी। यो वा ऊर्द्ध्वं गच्छेत्, सोऽण्डाकृतिर्भवति। यः पुनरधस्तत्र वा तिष्ठेत् स पेशी भवति। ततः परं दशादिवसानन्तरम्। मासेन तु शिरो निष्पद्यते एकदेशेन। मासयोर्द्वाभ्यां बाह्वङ्घ्र्यादिसहितस्य अङ्गस्य देहस्य विशेषेण भेदः। देहाकृतौ निष्पन्नायां तत्राभिमानोऽपि विशिष्टो निष्पद्यत इत्यर्थः। बाहवः अङ्घ्रयश्च अङ्गानि यस्मिन् विग्रहे तादृशो भवतीति वार्थः। नखानि लोमान्यस्थीनि चर्माणि च त्रिभिर्मासैर्भवन्ति। लिङ्गस्य नवछिद्राणां च उद्भवः त्रिभिरेव मासैः। धातवस्त्वगादयः। यद्यप्यस्थि पूर्वं जातम्, तथाऽप्युत्तरोत्तरभावेन[1] न जातमिति चतुर्भिः तथोद्भवः। क्षुत्तृषोः पञ्चभिरुद्भवः। षड्भिर्जरायुणा वीतो भवति। पुरुषत्वाद्दक्षिणे कुक्षौ भ्राम्यति ।१।२।३।४।

तस्य जीविकामाह—

मातुर्जग्धान्नपानाद्यैरेधद्धातुरसत्तमे।
शेते विण्मूत्रयोर्गर्ते सजन्तुर्जन्तुसंभवे ॥ ५ ॥

मातुरिति। भक्षितान्नपानादिभिरेवैधद्धातुर्भवति। तस्यावस्थामाह—असत्तमे स्वस्यात्यन्तमयोग्ये विण्मूत्रयोर्गर्ते शेत इति। अन्येऽपि जन्तवः तत्र शेरते। सजन्तुर्जन्तुभिः सहितः। ननु क्व तत्र जन्तव इत्याशङ्कयाऽऽह—जन्तुसंभव इति। जन्तूनां सम्भवो यस्मिन् गर्ते ॥ ५ ॥

तत्र क्लेशमाह—

कृमिभिः क्षतसर्वाङ्गः सौकुमार्यात्प्रतिक्षणम्।
मूर्छामाप्नोत्युरुक्लेशस्तत्रत्यैः क्षुधितैर्मुहुः ॥ ६ ॥

कृमिभिः क्षतसर्वाङ्ग इति। शरीरमत्यन्तं सुकुमारमिति कृमिभिः क्षतसर्वाङ्गः प्रतिक्षणं मूर्छामाप्नोति। मूर्च्छाप्राप्तिदशायामुरुक्लेशो भवति। कृमीणां क्षते हेतुमाह—क्षुधितैरिति। मुहुर्दशाभिर्[2]तरां दुःखम् ॥ ६ ॥

आध्यात्मिकं दुःखमाह—

कटुतीक्ष्णोष्णलवणरूक्षाम्लादिभिरुल्बणैः।
मातृभुक्तैरुपस्पृष्टः सर्वाङ्गोत्थितवेदनः ॥ ७ ॥

कटुतीक्ष्णेति। मधुर एव न बाधकः, अन्ये कट्वादयो बाधका एव। आदिशब्देन द्रव्याण्यपरिणामतो[3] बाधकानि। तेषां सम्बन्धार्थमाह—मातृभुक्तैरुपस्पृष्ट इति। जीवननाडिकाद्वारा मुखे रसः समायाति; बहिरपि स्पर्शो भवतीति सर्वाङ्गोत्थितवेदनो भवति ॥ ७ ॥

आधिदैविकीं पीडामाह—

उल्बेन संवृतस्तस्मिन्नन्त्रैश्च बहिरावृतः।

१ उत्तरभावेन, ग. २ मध्यरामावः ख. घ. ङ. ३ द्रव्याण्यपि परिणामतः ग. ङ.

आस्ते कृत्वा शिरः कुक्षौ भुग्नपृष्ठशिरोधरः ॥ ८ ॥

× उल्बेनेति । बन्धनरज्जुवत् उल्बेन गर्भवेष्टकेन तस्मिन्नेव गर्ते[1] सम्यक् वृतः, अन्त्रैश्च उल्बाद्बहिरप्यावृतः । एवं पीडितोऽपि शिरः स्वकुक्षौ कृत्वा भुग्नपृष्ठशिरोधर आस्ते । अयमुपद्रवो दैविकः ॥ ८ ॥

उपद्रवाणां फलमाह—

अकल्पः स्वाङ्गचेष्टायां शकुन्त इव पञ्जरे ।
तत्र लब्धस्मृतिर्दैवात्कर्म जन्मशतोद्भवम्
स्मरन् दीर्घमनुच्छ्वासं शर्म किं नाम विन्दते ॥ ९ ॥

* अकल्प इति । स्वाङ्गचेष्टायामप्यकल्पः । स्वतः सामर्थ्यनाशाभावायाऽऽह—शकुन्त इवेति । बाधककृतमेवासामर्थ्यम्; न तु स्वत इत्यर्थः । पूर्वोक्तप्रकारेण पूर्वोपार्जितधर्मवशाद्भगवदिच्छयोर्द्ध्वगन्तुर्गर्भे सर्वज्ञता भवतीत्याह—तत्रेति । स्वस्यैव जन्मशतोद्भवं कर्म स्मरन्, उत्पन्नेन शोकेन दीर्घं श्वसन्, किं नाम शर्म विन्दति, अपि तु न विन्दतीत्यर्थः । कर्माणि तु पूर्वोक्तानि, येषां स्मरणेन सुखसम्भावनाऽपि न भवति । एतादृशस्मरणे हेतुः—दैवाल्लब्धस्मृतिरिति ॥ ९ ॥

पूर्वजन्मस्मरणेन वैराग्ये जातेऽपि 'तरति शोकमात्मवित्' इति श्रुतेर्ज्ञानमवश्यमपेक्ष्यत इति । यथा भगवदिच्छया पूर्वकर्मस्मृतिः, तथा जीवब्रह्मस्वरूपज्ञानमपि तस्य जातमित्याह—

आरभ्य सप्तमान्मासाल्लब्धबोधोऽतिवेपितः ।
नैकत्राऽऽस्ते सूतिवातैर्विष्ठाभूरिव सोदरः ॥ १० ॥

आरभ्येति । सप्तममासमारभ्य सप्तमान्मासादूर्द्ध्वं जन्मपर्यन्तं लब्धबोधो भवति । कालादीनां च पराक्रमं स्मृत्वाऽतिवेपितश्च भवति । वस्तुत्वमाविश्य वेपितो भवतीत्याह—नैकत्राऽऽस्त इति । प्रसूतिवातैर्वेपितः सन् नैकत्राऽऽस्ते । जातेऽपि ज्ञाने क्रियैव बलिष्ठेति ज्ञापयितुमाह—असत्तुल्यतां विष्ठाभूरिवेति । विष्ठायां जातो यथा कृमिः । ननु महतोऽस्य कथमेवं निन्दावचनं तत्राऽऽह—यतोऽयं सोदरः समानं उदरं यस्य । यद्ययं महान् स्यात् सोदरो न स्यात् । भगवत्प्रेरितवस्तुस्वभावानां बलिष्ठतामदर्शनं ज्ञानस्याप्रयोजकत्वं ज्ञात्वा भगवद्भजनार्थम् ॥ १० ॥

अतस्तथा ज्ञात्वा भगवत्स्तोत्रं कृतवानित्याह—

नाथमान ऋषिर्भीतः सप्तवध्रिः कृताञ्जलिः ।

---

प्रकाशः।

× उल्बेनेत्यत्र । अव्ययीभाव एभिः कृते आधिदैविकीति भव(ति)न्ति । देवाश्चात्रेन्द्रियाधिष्ठातार एव । तथा च, तेषु या पीडा सा तादृशी वाच्या । साऽत्र कथमित्याकाङ्क्षायां तत्स्वरूपमाहुः—अयमित्यादि । देवनियामकेन तेषु कृत इत्येवं तत्सम्भव इत्यर्थः ।

* अकल्प इत्यत्र । भगवदिच्छयोर्द्ध्वगन्तुरिति । 'पुनरत्राऽऽव्रजच्छुचिः' इति शुचित्वमुक्त्वा तदुत्तरमेतत्प्रघट्टकोक्त्याऽत्रैवमवसीयते । तथा च, गर्भे न सर्वस्य सर्वज्ञतेति हृदयम् ।

---

[1] गर्ते-क. ह. [2] भग्नपृष्ठशिरोधरः, क ख. [3] कृतत्वमेवा··· क. घ. ङ.

स्तुवीत तं विक्लवया वाचा येनोदरेऽर्पितः ॥ ११ ॥

नाथमान इति। नाथमान उपतप्यमानः। नाथृनाधृ याच्ञोपतापैश्वर्याशीःषु, इति धातुपाठात्। भगवन्तं वा नाथमानः स्तुवीतेत्यपि, अर्थात् स्वनिस्तारम्। ऋषिरित्यलौकिकज्ञानस्य पृष्ठत्वान्मन्त्रदर्शी। मन्त्रेण हि स्तुतः अलौकिक आत्मा प्रसन्नो भवति। ननु प्रसन्ने भगवति आविर्भूते स्तोत्रं कर्तव्यम्। अयमन्तर्यामी भगवान् नाविर्भूतो न प्रसन्नस्तत आह—भीत इति। स्तोत्रमुभयथाऽपि क्रियते, भीतेन, प्रसादविपर्येण च। यद्यप्ययं प्रसादपात्रं न भवति, तथापि भीतः सन् प्रसादार्थं स्तोत्रं कुर्यात्। ननु गर्भान्निर्गमने जाते स्तोत्रं कर्तव्यं किमिदानीं स्तोत्रेणेत्याशङ्क्याऽऽह—सप्तवध्रिरिति। वध्रिश्चर्ममयी यन्त्रिका रज्जु', तादृश्यः सप्त सन्ति त्वगाद्याः, तेन सर्वथा बद्धः विलम्बं न सहते। इयं स्तुतिःप्रार्थनार्थेति ज्ञापयति। कृताञ्जलिरिति। प्रेम्णो जातत्वात्सफलेयं स्तुतिरिति ज्ञापयितुमाह—विक्लवया वाचेति। फलं चेदानीं दुःखनिवृत्तिरेवेति येनोदरेऽर्पित इत्युक्तम् ॥ ११ ॥

+प्राणरक्षां पुरस्कृत्य दशभिः स्तोत्रमूचिवान्। भक्तिप्रपत्ती कर्तव्ये इति शास्त्रार्थबोधनात् ॥१॥ शरणागमनं पूर्वं जीवब्रह्मविभाजनम्। जीवहीनत्वतश्चापि सत्सङ्गादेव तद्भवेत् ॥२॥ एवं हरिस्तु हितकृत् कृपाप्रार्थनमेव च। प्रत्युपकारासामर्थ्यं ज्ञानदातृत्वमेव च ॥ ३ ॥ संसारस्यातिदुष्टत्वं तदभावस्तु याच्यते। प्रथमतः शरणागमनमाह—

## जीव उवाच।

तस्योपपन्नमवितुं जगदिच्छयात्तनानातनोर्भुवि लसच्चरणारविन्दम्।
सोऽहं व्रजामि शरणं ह्यकुतोभयं मे येनेदृशी गतिरदर्श्यसतोऽनुरूपा १२

तस्येति। पूर्वधर्मवशात् अवतीर्णस्य हरेः पूर्वं भावक इति तमेव शरणं गच्छति। अद्याऽपि भक्तिमार्गेण न निविष्ट इति जगद्रक्षार्थं भगवदवतारमाह—उपपन्नं स्वेनैव निर्मितं जगदवितुं स्वेच्छया आत्ताः स्वीकृताः नाना तनवो येन। अत एव तादृशस्य लसच्चरणारविन्दं शरणं व्रजामि। भक्त्यर्थमेवैषा शरणागतिश्चरणनिरूपणात्। युक्तमेव यद्भीतोः रक्षकस्य चरणशरणं गच्छन्तीति। तत्रापि पूर्ववद्बाधश्चेत् व्यर्थ(?) शरणागतिरित्यत आह—अकुतोभयमिति। नन्वयमेव दुःखदाता 'सुखं दुःखम्' इत्यादिवाक्यात्। ततश्च मारकस्य शरणागमनमनुचितमित्याशङ्क्याऽऽह—येनेदृशी गतिरदर्शि। यदि केवलमेतादृशीं गतिं प्रयच्छेत् न तु ज्ञापयेत् तर्हि शरणं न गच्छेत्। यत्पुनर्ज्ञापयति, असत एतादृशी गतिरिति। तेनैवं ज्ञायते सत्त्वे नैवं गतिर्भविष्यतीति ज्ञापयति। तत्र सत्त्वं सति भगवति प्रवेशादेव सदसतोर्विभागः हेयत्वेन, ग्राह्यत्वेन च निर्द्धारितः। प्राकृतमसत् भगवान् सन्निति। यथा जीवस्य स्वरूपतः सतोऽपि असति प्रवेशे असत्त्वम्। तथा सति प्रवेशत्वमिति सत्प्रवेशार्थं भगवच्छरणागतिर्युक्तैवेत्यर्थः ॥ १२ ॥

प्रकाशः।

+ तस्योपपन्नेत्यत्र। कारिकासु। जीवहीनत्वतथाऽपीति जीवहीनत्वतो नमनम्, चकारात् पूर्वश्लोके विभागादपि नमनमित्यर्थः। सत्सङ्गादित्यादि। अतो महदनुग्रहस्तु निरत्यर्थः। शेषं स्फुटम्। हेयत्वेन ग्राह्यत्वेनेति। न तु मिथ्यात्वेन सत्यत्वेनेत्यर्थः। एतदेव प्रदर्शयन्ति—यथेत्यादिना।

१ रुतर्मतातारि पाठ.। २ भीतः—ख. ग ३ गच्छति ख. ग.।

जीवब्रह्मणोः पूर्वोक्तसिद्ध्यर्थं रूपभेदमाह—

**यस्त्वत्र बद्ध इव कर्मभिरावृतात्मा भूतेन्द्रियाशयमयीमवलम्ब्य मायाम् ।**
**आस्ते विशुद्धमविकारमखण्डबोधमातप्यमानहृदयेऽवसितं नमामि ॥१३॥**

+ यस्त्वत्रेति । अत्रैव शरीरे यः शकुन्त इव बद्धः प्रतिभासते स जीवः । तस्य बन्धे हेतुः—कर्मभिरावृतात्मेति । कर्मभिरपि सम्बन्धे हेतुः भूतेन्द्रियाशयमयीमवलम्ब्य मायामिति । भूतानि देहः, इन्द्रियाण्यन्तःकरणं च । आत्मानं व्यामोहयितुमेतद्रूपा माया जाता । अतस्तामवलम्ब्य आत्मत्वेनाधारत्वेन वा य आस्ते, स बद्ध इव जीवः । यस्तु तथाविधां मायां नावलम्ब्याऽऽस्ते, स विशुद्धः । अनेनादेहरूपता निरूपिता । इन्द्रियरूपताव्यावृत्त्यर्थमाह—अविकारमिति । सर्वे विकारा इन्द्रियजन्याः । अखण्डबोधमिति अन्तःकरणरूपताव्यावृत्त्यर्थम् । एवंभूतोऽपि सन् अस्मत्कृपया स्वस्य सखित्वप्रतिपादनार्थमा समन्तात् तप्यमाने हृदये अवसितं मतीतम्, अत एव नमामि । अतो भगवतो दोषाभावो गुणाश्चोक्ताः । जीवस्य च दोषा उक्तास्तन्निवृत्त्यर्थं च नमनमिति निरूपितम् ॥ १३ ॥

ननु किन्नमनेन ज्ञानेन हि माया निवर्तिष्यते, ततः कर्मसम्बन्धाभावे देहसम्बन्धाभावः, ततो मुक्तो भविष्यतीति मुक्त्यर्थं भगवन्नमनं न कर्तव्यमित्याशङ्क्याऽऽह—

**यः पञ्चभूतरचिते रहितः शरीरे छन्नो यथेन्द्रियगुणार्थचिदात्मकोऽहम् ।**
**तेनाविकुण्ठमहिमानमृषिं तमेनं वन्दे परं प्रकृतिपूरुषयोः पुमांसम् ॥१४॥**

* यः पञ्चभूतरचित इति । अयं देहः पञ्चभूतै रचितः, तानि च भूतानि भगवन्नियमितानि भगवदधीनान्येव । ' *अजनि च यन्मयं तदविमुच्य नियन्तृ भवेत्* ' इति वाक्यात् । तादृशे अन्याधीने शरीरे यो रहितस्तम् । तादृश एव शरीरे यश्छन्नः, यथावदिन्द्रियगुणार्थचिदात्मकः सोऽहं वन्द इति सम्बन्धः । शरीरस्याच्छादकत्वं तदैव भवति, यदि पूर्वं चिद्रूपोऽप्यन्यत्र सम्बद्धो भवति । यथा दर्पणगतः सूर्यः स्थाप्यते, प्रतिमागतो वा विष्णुः गन्धादिभिः पूज्यत इति । तदर्थं प्रथमतो देहसम्बन्धात्पूर्वमिन्द्रियादिसम्बन्धो निरूप्यते । यथेति दृष्टान्तेन वा शरीराच्छादनं स्थाप्यते । यथा अयं इन्द्रियाणि गुणाः अन्तःकरणरूपाः, अर्थाः आधिभौतिकः, त्रितये प्रकाशार्थं यश्छिद्रेण प्रविष्टः, स चतुष्टयात्मा भवति । आध्यात्मिकादिरूपत्रितये वेदनरूपश्च । यथा अहमिन्द्रियादिसम्बद्धस्तथाऽऽत्मसम्बद्धोऽपीत्यर्थः । अत एकस्मिन्नेव शरीरे विच-

---

प्रकाशः।

+ यस्त्वत्रेत्यत्र । अत्र मूले यस्त्विति यत्पदेन, नमामीत्युत्तमपुरुषेण च । सोऽहमिति पदद्वयाक्षेपाच्च एवमास्ते सोऽहं नमामीति सम्बन्धो बोध्य. ।

* यः पञ्चभूतेत्यत्र । रहित इति, तत्र विद्यमानोऽपि निरभिमानत्वात् तत्सम्बन्धरहितः । नन्वेकस्मिन् उभयोर्विद्यमानत्वेऽपि कथमेकस्यैवाच्छादत्वमित्यत उपपादयन्ति—शरीरस्येत्यादि । यथापदस्य यथावदिति व्याख्यानं क्लिष्टमिव मत्वा व्याख्यानान्तरमाहुः—यथेतीत्यादि । आच्छादनस्थापनप्रकारमाहुः—यथा अयमित्यादि । अत्रेन्द्रियाण्याध्यात्मिकानि, गुणा आधिदैविका ज्ञेयाः । तथा चैवं चतुष्टयरूपत्वेन सत्ता

---

१ अस्मद्रूपतया क. २ नत्वाराभाव., क घ. ङ. ३ अयम्. क. घ. ङ.

मानयोः एको रहितो भवति, एकश्च छन्नो भवति । तेन कारणेन अविकुण्ठमहिमानं जीवस्यालौकिकोपकारकरणसमर्थम्, अपि मनं पूर्वोपकारिणं पूर्वस्थितबाधकनिवृत्तये प्रकृतिपुरुषयोः परं नियन्तारम्, निराकारपक्षव्यावृत्त्यर्थं पुमांसम् । वन्द इति स्वस्य हीनतां निरूप्य पूर्वोक्तमेवानुवादेनोक्तम् ॥ १४ ॥

+ एवं शरणागतिर्नमनादिकं च भगवद्भक्तकृपयैव भवतीत्यार्षज्ञानेन स्मृत्वा भक्तसङ्गमिव प्रार्थयितुं तदनुग्रहं स्तौति—

यन्मायचोरुगुणकर्मनिबन्धनेऽस्मिन् सांसारिके पथि चरंस्तदभिश्रमेण ।
नष्टस्मृतिः पुनरयं प्रवृणीत लोकं युक्त्या कया महदनुग्रहमन्तरेण ॥ १५ ॥

यन्माययेति । स्वसामर्थ्ये गते शास्त्रतोऽप्यचिकित्स्ये अलौकिकद्वारा भगवद्भक्ता एव सं भगवत्परं कर्तुं शक्नुवन्तीति युक्तम् । अन्यथा स्वतः सामर्थ्ये एवं दुर्दशा न स्यात् । प्रतीकारो हि ज्ञानक्रिययोः सद्भावे भवति । तत्र ज्ञानाऽभावो नष्टस्मृतिरिति । श्रमप्रतिपादनात् क्रिया, शक्त्यभावश्च । श्रमस्य नित्यत्वसिद्ध्यर्थं यस्य भगवतो मायया मोहने करणभूतया उरूणि यानि गुणकर्माणि तैर्निबन्धनं यत्र । एतादृशेऽस्मिन् सांसारिके मार्गे निरन्तरं चरन्निति मुक्तोऽपि निरन्तरं चरन् श्रान्तो भवति, किमुत बद्धः । सोऽपि बन्धः कर्मकृतः स्वतोऽपि मोचयितुमशक्यः । कर्माण्यपि न प्रायश्चित्तादिना निवर्तयितुं शक्यानि, यतो भगवन्माययैव जायन्ते । गुणाश्च स्वभावभूताः, चित्तं तत्परमेव कुर्वन्ति । अस्मिन्निति निरन्तरं परिदृश्यमानत्वेन निवृत्तिर्दुर्घटा सूचिता । पथीति अनिवृत्तिः सूचिता । कया युक्त्येति लौकिक उपायो न सङ्गच्छत इति युक्तम् १५

नन्वेवं भक्तकृपयैव कथं भवतीत्याशङ्क्याऽऽह—

ज्ञानं यदेतददधात्कतमः स देवस्त्रैकालिकं स्थिरचरेष्वनुवर्तितांशः ।
तं जीवकर्मपदवीमनुवर्तमानास्तापत्रयोपशमनाय वयं भजेम ॥ १६ ॥

* ज्ञानं यदेतदिति । यदेतदस्माकं जातं त्रैकालिकवस्तुविषयज्ञानं तद्भगवतैव दत्तम् । अन्यथा यो हृदयस्थितो न भवति स कथं हृदये ज्ञानं दधाति । अयं च स्थिरचरेष्वनुवर्तितः, स्वांशो यस्य येनेति वा । अयं हि स्वांशं जीवमनुवर्तते । अन्तर्यामिरूपो वा अंशः सर्वत्र वर्तत इति, अयमेव ज्ञानमदधात्(?) । ननु(?) सर्वेन्द्रियादौ अधिष्ठातारो देवाः सन्ति, न ते ज्ञानं प्रयच्छन्ति । अयं च सर्वेषु वर्तत इति; तथापि मर्मेव दत्तवान् । अतोऽयं कतमो देवः अत्यन्तं कः परब्रह्मरूपः । अन्यदेवानां न कृत्यम् । कतम इत्यनेन विशेषतो वक्तुमप्यशक्य इत्युक्तम् । अत एवैतादृशमुपकारिणं जीवानां कर्मपदवीं संसारमार्गमनुवर्तमाना

प्रकाशः ।

रिक्ततया आच्छादितत्वमित्येकपद एव दृष्टान्तदार्ष्टान्तिकभाव इत्यर्थः । पूर्वोक्तमेवेति । नमनमेव ।

+ यन्माययेत्यत्र । तदनुग्रहमिति । महदनुग्रहम् ।

* ज्ञानं यदेतादित्यत्र । अन्यथेत्यस्य विवरणं यो हृदयेत्यादि । हृदयस्थितत्वं व्युत्पादयन्ति—अयं चेत्यादि । अनुवर्तित इति । लक्षीकृत्य स्थापित । वर्तत इति, 'य आत्मनि तिष्ठन्' इत्यादि श्रुतेस्तथेत्यर्थः सस्य सर्वत्र साम्यात् पक्षान्तरमाहुः—अन्तरित्यादि । अनुपपत्तिं समादधते—तथापीत्यादि । तथाऽत्र कतम

१ मोहनेन. ग २ शक्नुवन्तीत्युक्तम्. क. ङ. ३ ददाति. घ. ङ. ४ अतः ङ किञ्च घ, ५ अन्यदेवानाम् ख.ग.

वय सर्वे तापत्रयोपशमनाय भजेम । ये केचन जीवभावं प्राप्ता तेषां दास्य परमो धर्मः। देहभाव परित्यज्य ब्रह्मभावात्पूर्वं जीवभाव एव । प्रथमप्रवृत्तत्वात्तापत्रयोपशमनायेत्युक्तम् । वयमिति बहुवचन स्वसमानशीलाना सर्वेषा विज्ञापनार्थम् । भजनेनैव भगवान् कृपयतीति ॥ १६ ॥

एव भजनमुक्त्वा विज्ञापनमाह—

**देह्यन्यदेहविवरे जठराग्निनासृग्विण्मूत्रकूपपतितो भृशतप्तदेहः ।**
**इच्छन्नितो विवसितु गणयन् स्वमासान्निर्वास्यते कृपणधीर्भगवन्! कदा नु**

देहीति । अय स्वलक्षणो देही । अन्यस्य मातृलक्षणस्य देहविवरे उदरे जठराग्निना भृश तप्तदेह, असृग्विण्मूत्रपूर्णे पतित त्रिविधदु खभोक्ता । माता भूतस्थानीया, अग्निर्दैविकः । अतस्त्रिविधदु खपीडित इतो विवसितुं निर्गन्तुमिच्छन् स्वमासान् गणयन् वर्तते पूर्वनिवृत्तान् । अग्रिममासाना नियमाभावात् । हे भगवन् ! कदा वा निर्वास्यते । हे भगवन्निति । अत्र त्वमेव समर्थ । कृपणधीरिति धैर्याभाव उक्त । अनन्तदु खस्मरणात् गणनाकालेनाऽपि दु खनिवृत्तिं मत्वा, भवतेत्यर्थात् । एव तत्र दु खानुभवादन्यत्र गमनं प्रार्थितम् ॥ १७ ॥

ननु कृतोपकारस्य ज्ञानदानलक्षणस्य प्रत्युपकार चेत्कुर्यात्, तदाऽग्रे विवासनमपि कुर्यात् । प्रत्युपकाराऽभावे कथ करिष्यतीत्याशङ्क्याऽऽह—

**येनेदृशीं गतिमसौ दशमास्य ईश ग्राहितः पुरुदयेन भवादृशेन ।**
**स्वेनैव तुष्यतु कृतेन स दीननाथः को नाम तत्प्रति विनाञ्जलिमस्य कुर्यात्१८**

येनेति । येन भवादृशेन, असौ मल्लक्षण, दशमास्य दशभिर्मासै परिच्छिन्न, ईदृशी गतिं ज्ञानं सम्यक् ग्राहित । ननु मात्कोऽन्य कश्चिद्धर्माधिष्ठाता देवता, अह त्वन्य इति किं मा प्रत्युच्यत इत्याशङ्क्याऽऽह–भवादृशेनेति । स एव भवान्, भवत्सदृशो वा । किमनेन विचारेण किन्तु स्वेनैव कृतेन स तुष्यतु । यथा पङ्कमग्ना गामुद्धृत्य स्वयमेव तुष्यति, तथा स्वत एव भगवान् तुष्यतु, को नाम तस्य प्रतिविधिं प्रत्युपकार करिष्यति । स्वनिष्कृत्यर्थ चेत् किञ्चित्कुर्यात्तदाऽञ्जलिं कुर्यात्, न त्वतिरिक्त कर्तुं शक्नोतीत्यर्थ ॥ १८ ॥

ननु कं प्रत्येवमुच्यते(?)यत कोऽपि नाभिव्यक्त इत्याशङ्क्याऽऽह—

**पश्यत्ययं धिषणया ननु सप्तवध्रिः शारीरके दमशरीर्यपरः स्वदेहे ।**
**यत्सृष्टयास तमहं पुरुषं पुराणं पश्ये बहिर्हृदि च चैत्यमिव प्रतीतम्॥ १९॥**

प्रकाशः

इति निर्धारक पदमित्यर्थ । शब्दमहिम्ना तु प्रश्नोऽपीत्याहु —कतम इत्यादि । ननु भवतु उपकारित्वम्, भजनस्य किं प्रयोजनमत आह –ये केचनेत्यादि । दास्य परमो धर्म इति । पूर्वं वन्दनमुक्तम्, ततउत्कृष्टत्वात् । सख्यादेश्च स्वाधीनत्वाद् दास्यमेव तथेत्यतो भजनमेवाऽऽवश्यकमित्यर्थः । प्रथमप्रवृत्तत्वादिति । मुख्याधिकारस्येदानीमजातत्वादित्यर्थ ।

×पश्यतीति । यद्यपि भगवान् नाभिव्यक्तः, अथाप्ययं दमशरीरी शमदमादिसाधकदेहसहितः। स्वयं सप्तवध्रिरपि येन भगवता सृष्ट्या धिषणया बुद्ध्या स्वदेह एव स्वयमपरो नियामकत्वेनाऽन्यो भाति । स्वयं तु नियम्यत्वेन । अतस्तद्दत्तज्ञानेनैव तं पश्ये । सोऽहं कृतोपकारः तमुपकारिणं भगवन्तमहं शारीरः अस्मिन्नेव पुरे शेते यः तमिति प्रतीतिरुक्ता। **पुराणमिति** नागन्तुकत्वम्, अतः परिचयोऽप्युक्तः। देहाद्बहिः हृदि च प्रतीतम्, यथा चैत्यो जीवः तद्वदपि प्रतीतम्, सर्वभावेन सर्वत्र प्रतीतम्, यथा जीवप्रतीतौ न साधनाद्यपेक्षा तथा भगवानपि स्वतः स्फुरतीति तत्संस्कारकत्वेन नाऽन्यापेक्षा। ज्ञानं तु साधनमुक्तमेव । अतो दृष्ट्वैव प्रार्थनादिकमिति न किञ्चिद्दूषणम् ॥ १९ ॥

एवं सर्वत्र भगवद्दर्शने 'अभितो ब्रह्म निर्वाणं वर्तते विदितात्मनाम्' इति भगवद्वाक्यात् किञ्चित्सुखं प्राप्य गर्भ एव गतव्यथः बहिर्बाधकं स्मृत्वा, अन्तरेव स्थितिं प्रार्थयति—

**सोऽहं वसन्नपि विभो बहुदुःखवासं गर्भान्न निर्जिगमिषे बहिरन्धकूपम् ।**
**यत्रोपयातमुपसर्पति देवमाया मिथ्यामतिर्यदनु(?)संसृतिचक्रमेतत् ॥२०॥**

सोऽहमिति । अस्मिन् गर्भे बहुदुःखवासं यथा भवति तथा वसन्नपि, इतो बहिर्न निर्जिगमिषे; यतो बहिरन्धकूपम् । यद्यपीदमपि सर्वतो वेष्टकं कूपप्रायम्, तथाऽप्यत्र ज्ञानमस्ति. बहिर्नास्तीत्यन्धकूपत्वम् । नन्विदं ज्ञानं तत्राऽप्यनुवर्तिष्यत इति चेत् तत्राऽऽह—यत्रोपयातमिति । गर्भाद्बहिर्निर्गतं जीवं भगवतो माया अनुक्षद्धया उपसर्पति । ततो मायामोहितस्य मिथ्यादेहादावहंमतिर्भवति । तदनु संसृतिचक्रं जन्ममरणाद्यावृत्तिश्च भवति । अतः पुनरत्रागन्तव्यम्; अतो निर्गतस्य न कश्चित्पुरुषार्थः । एतदिति परिदृश्यमानमावश्यकमित्यर्थः ॥ २० ॥

नन्वत्र स्थित्वा किं कर्तव्यं तदाह—

**तस्मादहं विगतविक्लव उद्धरिष्य आत्मानमाशु तमसः सुहृदाऽऽत्मनैव ।**
**भूयो यथा व्यसनमेतदनेकरन्ध्रं मा मे भविष्यदुपसादितविष्णुपादः ॥२१॥**

तस्मादहमिति । अत्रैव स्थित्वा वैक्लव्यं परित्यज्य, आत्मानं तमसः सकाशात्सुहृदा आत्मनैव भगवतैव उद्धरिष्ये। सङ्घाते पतितमात्मानं स्वरूपे स्थापयिष्यामि। तत्र सत्सङ्गादिकं नाऽपेक्ष्यते; यतः परमोपकारी भगवानेव सर्वं संपादयति । ननु किमुद्धारेण अत्रैव स्थित्वा भगवानिव कथं न स्वतन्त्रो भवेदित्याशङ्क्याऽऽह—भूय इति । यथाऽनेकरन्ध्रं व्यसनं मे मा भविष्यत्; अत्र स्थित्वैव तथा भगवद्ध्यानलक्षणमुपायं करिष्यामि, यथा व्यसनं न भविष्यति । जाते तु व्यसने प्रतीकारः कठिनः । अत्रापि व्यसनं भविष्यतीति चेत्तत्राऽऽह—मे उपसादितविष्णुपादः । उपसादितौ विष्णुपादौ येन स उपसादितविष्णुपाद्; तादृशस्य मे । तत्र तु मायामोहादुपसादनं भविष्यति नवेति सन्देहः । एवमध्यवसायान्ता स्तुतिरुक्ता, भगवत्स्तोत्रस्य फलं प्रोक्तम् । यत्र क्वचित्स्थित्वा भगवच्चरणोपसादनं कर्तव्यमिति ॥ २१ ॥

---

प्रकाशः।

× पश्यतीत्यत्र । पश्यतीत्यनेनोक्तस्य दर्शनस्य प्रकारमाहुः—स्वयमपर इत्यादि । कृतोपकार इत्यत्र षष्ठ्यर्थे बहुव्रीहिः । तत्संस्कारकत्वेनेति । बुद्धिसंस्कारकत्वेन ।

---

१ इत: पूर्वं भवर्तनानवेन.., प. मतिर्भवतीति. ड.

एवं जीवस्योर्ध्वगमनार्थं बीजसंस्कारमुक्त्वा, तादृशस्योर्ध्वगतिं वक्तुं जननमाह—

## कपिल उवाच ।

**एवं कृतमतिर्गर्भो दशमास्यः स्तुवन्नृषिः ।**
**सद्यः क्षिपत्यवाचीनं प्रसूत्यै सूतिमारुतः ॥ २२ ॥**

एवं कृतमतिरिति। दशमासपरिच्छिन्नो गर्भः स्तुवन् ऋषिर्भूत्वा निश्चयमतिर्जातः । मन्त्राऽदर्शिते भजनं न स्यादिति । 'कृतिर्वलिष्ठा' इति पूर्वमुक्तत्वात् सूतिमारुतस्तादृशमपि प्रसूत्यै प्रसवार्थमवाचीनं क्षिपति । अधोमुखो भवतीत्यर्थः ॥ २२ ॥

ततः किमत आह—

**तेनाऽवसृष्टः सहसा कृत्वाऽर्वाक्शिर आतुरः ।**
**विनिष्क्रामति कृच्छ्रेण निरुच्छ्वासो हतस्मृतिः ॥ २३ ॥**

तेनाऽवसृष्ट इति । तेन वायुना, अवसृष्टः ततः प्रक्षिप्तः कृच्छ्रेण विनिष्क्रामतीति सम्बन्धः । सहसेति सावधानाभावार्थम् । अर्वाक् शिरो मूत्वा, शिरः अर्वागधोमुखं कृत्वा वा प्रथमत आतुरो भवेत्; व्यसनस्य प्राप्तत्वात्; ततोऽतिकृच्छ्रेण निष्क्रामति । निष्क्रमणे हेतुः—निरुच्छ्वास इति । अन्तरुच्छ्वासस्थानाऽभावात् हतस्मृतिरपि भवति । अन्यथा क्रियायाः प्राबल्यं न स्यात्, साधनशास्त्राणां च वैयर्थ्यापत्तेः ॥ २३ ॥

निष्क्रमणानन्तरं कृत्यमाह—

**पतितो भुवि विण्मूत्रे विष्ठाभूरिव चेष्टते ।**
**रोरूयति गते ज्ञाने विपरीतां गतिं गतः ॥ २४ ॥**

पतित इति । विष्ठा स्वस्यैव, मूत्रं गर्भोदकम् । पश्चाद्भुवि पतितः प्रथमतो विष्ठाभूरिव चेष्टते । क्रियाव्यतिरेकेण ज्ञानस्याऽप्रयोजकत्वज्ञानार्थं निन्दावचनम् । तत्तु ज्ञानं ज्ञापकमेवेति प्रसूतिवायुना तदुपहतिमाह—रोरूयतीति । गते ज्ञाने विपरीतां गतिं गतः देहोऽहमिति बुद्ध्वा रोरूयति रोदिति । शब्दमात्रं करोतीति रोरूयतीत्युक्तम् । यथा सर्वस्वे गते प्राणी शब्दं करोति ॥ २४ ॥

उत्पन्नस्य बाल्यदुःखमाह—

**परच्छन्दं न विदुषा पुष्यमाणो जनेन सः ।**
**अनभिप्रेतमापन्नः प्रत्याख्यातुमनीश्वरः ॥ २५ ॥**

परच्छन्दमिति । बालकस्य इच्छामविदुषा जनेन पुष्यमाणो भवति, तेनाऽनभिप्रेतं क्षुधया रोदने औषधम्, व्यथायां [illegible] अन्नमिति । प्रत्याख्यातुं निराकर्तुमनीश्वरः च महद्दुःखमुक्तम् ॥ २५ ॥

पीडाक्षुदभावदशायामपि दुःखमाह—

१ प्रस्तुतम्. क. ख. २ प्रामाणानुसार। क. ट. ३. क. ख. ड. ४ नन्. क ख. ड. ५ [illegible]

शायितोऽशुचिपर्यङ्के जन्तुस्स्वेदजदूषिते।
नेशः कण्डूयनेऽङ्गानामासनोत्थानचेष्टने ॥ २६ ॥

शायित इति। अशुचिपर्यङ्के शायितो भवति। दशदिवसपर्यन्तं सूतीगृहस्थानां पदार्थानां शुद्ध्यभावः। अनेन तस्य ज्ञानोत्पत्तौ प्रतिबन्ध उक्तः। जन्तवो मत्कुणादयः, स्वेदजा मशकाः, तैर्दूषितेति सुतरां सोपद्रव उक्तः। अधर्माद्व्यसनाच्च ज्ञानं नोत्पन्नमित्युक्तम्। व्यसनप्रतीकारे अशक्तिमाह—नेश इति। अङ्गानां कण्डूयने असमर्थः; आसने उत्थाने चेष्टने वा। किन्तु सर्वदा पतितस्तिष्ठतीत्यनिवृत्तौ हेतुः। अनेनाध्यात्मिकं दुःखमुक्तम् ॥ २६ ॥

भौतिकं दुःखमाह—

तुदन्त्यामत्वचं दंशा मशका मत्कुणादयः।
रुदन्तं विगतज्ञानं कृमयः कृमिकं यथा ॥ २७ ॥
इत्येवं शैशवं भुक्त्वा दुःखं पौगण्डमेव च।
अलब्धाभीप्सितोऽज्ञानादिद्धमन्युः[1] शुचार्पितः ॥ २८ ॥

तुदन्तीति। आमा अपक्वा त्वक् यस्य। दंशाः स्थूलमशकाः; मत्कुणा लोहितवर्णाः खट्वाकीटाः। आदिशब्देनान्येऽपि वस्त्रकीटादयः। उभयोर्ज्ञानाभावमाह—रुदन्तमिति। विगतं ज्ञानं यस्य; अतो रोदिति; अन्यथा सहेत्। ततोऽप्यन्यं सजातीयं मत्वा दशन्तीत्याह—कृमयः कृमिकं यथेति। स्थूलकृमिः कृमिकः। इति दुःखमतिबाल्ये। एवंप्रकारकमेव शैशवं पञ्चवर्षपर्यन्तम्। नरकादागतो विद्याधनयुक्ते कुले न भवतीत्यतिदरिद्राणां गृहे दुःखमेतादृशमेव। पौगण्डमपि तत्र दुःखम्। पञ्चमवर्षादूर्ध्वं नववर्षपर्यन्तं पौगण्डम्। तत्राऽप्येतज्जातीयमेव दुःखम्; अतो दुःखाभिभूतस्य न ज्ञानमिति भावः। अग्रे ज्ञानं भविष्यतीत्याशङ्क्य तत्र कामादयो बाधका भवन्तीत्याह—अलब्धाभीप्सित इति। न लब्धमभीप्सितं येन; अभीप्सितमप्यज्ञानात्। अज्ञानादेव इद्धो मन्युर्यस्य। इद्धमन्युना वा शोकेन च अर्पितो भवति। कामक्रोधशोका उत्पन्नाः ज्ञानमुत्पादयितुं न प्रयच्छन्तीत्यर्थः ॥ २७ ॥ २८ ॥

ततः पुष्टस्य सुतरां ज्ञाननाशहेतूनाह—

सह देहेन मानेन वर्धमानेन मन्युना।
करोति विग्रहं कामी कामिष्वन्ताय चात्मनः ॥ २९ ॥

सह देहेनेति। यथा देहो वर्द्धते, तथा मानो मन्युश्च; मन्युस्तु देहवृद्धिमपि नापेक्षते। अभिमानस्यैव तदपेक्षेति पृथग्वचनम्। आत्मनः अन्ताय नाशाय कामिषु विग्रहं करोति। एकवस्तुविषये कामश्चेद्बहूनां तदा बलिष्ठैर्बहुभिरितरो हन्यते। तदा पूर्ववत् स्वतन्त्रयुक्तताभावान्नेष्टसिद्धिः ॥ २९ ॥

वाक्यज्ञानं[2] दूरापास्तमिति वक्तुं प्रत्यक्षतोऽपि दृष्टे यत्र ज्ञानं न भवति तत्र किं वक्तव्यमन्यस्माद्भविष्यतीत्याह—भूतैरिति द्वाभ्याम्—

भूतैः पञ्चभिरारब्धे देहे देह्यबुधोऽसकृत्।

१ विद्धमन्युना ग २ वाक्याज्ज्ञानम् प.

**अहं ममेत्यसद्ग्राहः करोति कुमतिर्मतिम् ॥ ३० ॥**

आकाशादिपञ्चमहाभूतैरारब्धे देहे देही देहाभिमानवान् पूर्वज्ञानरहितः असकृदहममेतिमतिं करोति; यतोऽयं कुमतिः । दृश्यत एव भूतादिजनितत्वं देहे । एवं प्रत्यक्षदृष्टेऽपि चेद्बुध । अबोधे हेतुः–देहाभिमानी, सर्वदा वासनावशाल्लौतिकत्वे ज्ञातेऽप्यहं ममाऽभिमानो भवति । अयमभिमान स्वतो न निवर्तत इत्यसकृदित्युक्तम् । असद्ग्राह इति परोपदेशवैयर्थ्यम् । स्वतो युक्त्यनुसन्धानाऽभावाय कुमतिरिति ॥ ३० ॥

एवं देहे अहममेतिबुद्धौ चिरायां यद्भवति तदाह—

**तदर्थं कुरुते कर्म यद्बद्धो याति संसृतिम् ।**
**योऽनुयाति ददत् क्लेशमविद्याकर्मबन्धनः ॥ ३१ ॥**

तदर्थमिति । देहार्थं कर्म कुरुते । कर्मणा च बद्धो जन्ममरणरूपं संसारं याति । देहोऽपि तं न त्यजतीत्याह–योऽनुयातीति । यो देहः सर्वदा क्लेशं ददत्, अनु पश्चाद्याति । यत आत्मना स बद्धः । प्रथमतोऽविद्या, ततः कामः, ततः कर्माणि, तैर्बन्धनं यस्य । एवं देहाभिमानेन नष्टो भवतीत्युक्तम् ॥ ३१ ॥

एतदुपरि असत्सङ्गश्चेत्, तदा नष्ट एव जात इत्याह—

**यद्यसद्भिः पथि पुनः शिश्नोदरकृतोद्यमैः ।**
**आस्थितो रमते जन्तुस्तमो विशति पूर्ववत् ॥ ३२ ॥**

यद्यसद्भिरिति । पुनः पथि पूर्वोक्त एव संसारमार्गे असद्भिः सह आस्थितः सन् रमते । तदा पूर्ववत् तमो विशति । अतो न तस्य किञ्चिद्वक्तव्यं व्याख्यातत्वात् । असद्भिरिति षष्ठ्यर्थे वा तृतीया । असतां लक्षणम्–शिश्नोदरार्थे कृतं उद्यमो यैरिति न भगवदर्थे । अनेन गृहस्थाः सर्वे एवासन्त इत्युक्तम् । यद्यन्येऽप्येतादृशाः सुतरां असन्त । अवर्जनीयतया यस्तिष्ठेत् यो वा न रतः तयोर्न नाश इत्युक्तम् । जन्तुरित्यल्पबुद्धिः, अतो रमणम् ॥ ३२ ॥

असता सङ्गस्य दोषमाह—

**सत्यं शौचं दया मौनं बुद्धिः श्रीर्ह्रीर्यशः क्षमा ।**
**शमो दमो भगश्चेति यत्सङ्गाद्याति संक्षयम् ॥ ३३ ॥**

सत्यमिति । पुरुषे द्वादशगुणा मोक्षे अन्तरङ्गाः, यैर्मोक्षो भवत्येव । ते नश्यन्तीति तान् गणयति–सत्यं यथार्थता, कायवाङ्मनोगता नश्यति । शौचमपि शुद्धत्वं तथा । दया परदुःखप्रहाणेच्छा । मौनं वृथालापनिवृत्तिः । बुद्धिर्भगवद्विषयिणी, सन्मार्गविषयिणी वा । श्रीर्धनं, शोभा च । ह्रीर्लज्जा । यशः कीर्तिः, क्षमा शान्तिः । शमो मनोनिग्रहः । दम इन्द्रियाणाम् । भगो भाग्यमैश्वर्यादिभगवद्धर्मा । एते असता सङ्गमात्रेणैव गच्छन्ति ॥ ३३ ॥

मोक्षप्रेप्सोः तत्सङ्गो न कर्तव्य इति वदन्, असता विशेषमाह—

**तेष्वशान्तेषु मूढेषु खण्डितात्मस्वसाधुषु ।**

१ ततः काम इति [ ख ] नास्ति । २ वर्जनीयतया ङ.

**सङ्गं न कुर्याच्छोच्येषु योषित्क्रीडामृगेषु च ॥ ३४ ॥**

तेष्विति । यथा भगवत्सम्बन्धिनो भागवताः सन्तः षड्गुणयुक्ता भवन्ति । एवं असन्तोऽप्यसन्मूलदैन्यरूपं षड्दोषयुक्तं प्राप्ता भवन्तीति षट् दोषा उच्यन्ते । तेषामन्तःकरणे कदापि न शान्तिः । अनेन सत्त्वगुणाभाव उक्तः । प्रायिकं रजोऽपि नास्तीत्याह—मूढेष्विति । शास्त्रार्थज्ञानरहिता मूढाः । खण्डित आत्मा विषयैर्येषाम् । पूर्वापरानुसन्धानाभावार्थं खण्डनम् । असाधुषु अनाचारेषु । एवं चतुष्टयमुक्त्वा निषेधमाह-पुरुषार्थचतुष्टयबाधकत्वात्, शोच्येषु साधूनाम् । सत्यामपि प्रज्ञायां भगवदग्रहणात् । योषितां च ते क्रीडामृगाः । एतेतानि लक्षणानि प्रत्येकमसत्त्वसाधकानीति चकारः ॥ ३४ ॥

तत्रापि ये स्त्रीसङ्गिनः, स्त्रियश्च मुख्यतया असच्छब्दवाच्या, इति तत्सङ्गाभावमाह—

**न तथाऽस्य भवेन्मोहो बन्धश्चान्यप्रसङ्गतः ।**
**योषित्सङ्गाद्यथा पुंसो यथा तत्सङ्गिसङ्गतः ॥ ३५ ॥**

न तथाऽस्येति । अस्य पुरुषस्य मोक्षेप्सोः धनैरर्थैर्बलादिभिश्च तथा मोहो न भवेत्, यथा योषितां सङ्गात् । पुंस इति प्रतियोगित्वम् । यथा वा तत्सङ्गिनां सङ्गात्, योषित्सङ्गापेक्षयाऽपि तेषां सङ्गो नाशकः । उपायपूर्वकं नाशजननात् ॥ ३५ ॥

तत्र स्त्रिया नाशकत्वं जातित्वेनैव, न तु व्यभिचारादिदोषत्वेनेति वक्तुमाह—

**प्रजापतिः स्वां दुहितरं दृष्ट्वा तद्रूपधर्षितः ।**
**रोहिद्भूतां सोऽन्वधावदृक्षरूपी गतत्रपः ॥ ३६ ॥**

प्रजापतिरिति । कथा पूर्वमुक्ता । स्वां दुहितरं वाचं तद्रूपेण धर्षितः गतविवेकः । तद्रूपपरित्यागेऽपि न त्यक्तवानित्याह—रोहिद्भूतामिति । तदर्थमात्मानमपि नाशितवानित्याह—ऋक्षरूपीति । रोहिदृक्षौ सजातीयस्त्रीपुरुषवाचकौ । गतत्रप इति मरीच्यादिषु पश्यत्स्वपि नग्नः स्फुटावयवश्च ॥ ३६ ॥

अतः स्वरूपतः कश्चित्सङ्गे जातेऽपि दोषरहितो भविष्यतीति नाशङ्कनीयमित्याह—

**तत्सृष्टसृष्टसृष्टेषु को न्वखण्डितधीः पुमान् ।**
**ऋषिं नारायणमृते योषिन्मय्येह मायया ॥ ३७ ॥**

तत्सृष्टेति । तेन ब्रह्मणा सृष्टा मरीच्यादयः, तत्सृष्टाः कश्यपादयः, तत्सृष्टं सर्वमेव जगत् । को-न्विति वितर्के । न खण्डिता धीर्यस्य । तादृशः कोऽपि नास्तीत्यर्थः । एकोऽस्ति नारायणस्तथाभूतः स इत्येकादशे वक्ष्यते । न केवलं सा नाशयति, किन्तु तस्यामाविष्टा आधिदैविकी भगवन्माया, सा योषिन्मयी । सर्वधनादिरूपाऽपि योषित्प्रधाना । यद्यपि मार्कण्डेयोऽपि तथोक्तः, तथापि कल्पान्तरे सोऽन्यथा भविष्यतीति नारायण एवोक्तः ॥ ३७ ॥

स्त्रीणां मायात्वमुपपादयति—

**बलं मे पश्य मायायाः स्त्रीमय्या जयिनो दिशाम् ।**
**या करोति पदाक्रान्तान् भ्रूविजृम्भेण केवलम् ॥ ३८ ॥**

बलमिति । मे मायाया बलं पश्य । यद्यपि सर्वरूपैव माया बलिष्ठा, तथापि स्त्रीमयी अतिबलिष्ठा ।

१ देख ग घ ङ. २ अभ्यधावत्—ना.

तस्या बलमाह—या करोतीति । दिग्जयिनोऽपि स्त्रीजिता इति ॥ ३८ ॥

सामान्यतः तस्याः सङ्गं दूषयित्वा योगे सुतरां बाधकत्वमाह—

**सङ्गं न कुर्यात्प्रमदासु जातु योगस्य पारं परमारुरुक्षुः ।**
**मत्सेवया प्रतिलब्धात्मभावो वदन्ति यां निरयद्वारमस्य ॥३९॥**

* सङ्गं न कुर्यादिति । प्रमदास्विति योगेन सुरूपास्तरुण्यो निषिद्धाः । जात्विति कदाचिदपि । योगस्य पर पारमारुरुक्षुः । सङ्गत्यागे सामर्थ्यमाह—मत्सेवयेति । प्रतिलब्ध आत्मभावो भगवद्भावो येन । अन्यथा सा मोहयेदेव । योगो हि स्वात्मयोजकः । एतमेवात्मानं संस्कारविशेषैः भगद्भावपर्यन्तं नयति । तस्य रेत एव स्थानम् । तदसति प्रविष्टं नरकं मापयतीत्यस्य योगस्य यां योषितं निरयद्वारं प्राहुः । अनेन स्वत उद्यमो[1] निवारित इति युद्धम् ॥ ३९ ॥

शास्त्रान्तरानुरोधेन स्वत आगतायामबाधामाशङ्क्याऽऽह—

**योपयाति शनैर्माया योषिद्देवविनिर्मिता ।**
**तामीक्षेताऽऽत्मनो मृत्युं तृणैः कूपमिवावृतम् ॥ ४० ॥**

योपयातीति । शनैः शनैरिति हृदयं प्रविशन्ती सा योषिन्मायैव । एतद्व्यामोहार्थमेव देवेन निर्मिता । तस्या व्यामोहकत्वे सिद्धे स्वस्यासुरत्वमपि सिद्धम् । अतः संसारोऽन्धंतमश्च । अतस्तामात्मनो मृत्युमीक्षेत । आपाततस्तथाज्ञानाभावे हेतुः—तृणैः कूपमिवावृतमिति । हस्तिबन्धनार्थे तथा क्रियते ॥ ४० ॥

नचैतदन्यस्त्रीपरं मन्तव्यमित्याह—

**यां मन्यते पतिर्मोहान्मन्मायामृषभायतीम् ।**
**स्त्रीत्वं स्त्रीसङ्गतः प्राप्तो वित्तापत्यगृहप्रदम् ॥ ४१ ॥**

यां मन्यत इति । यां मन्मायां पतिर्भार्यात्वेन मन्यते । भार्या पुनर्ऋषभायतीं पतित्वेन भासमानाम् । एवमुभयोरन्योन्यं माया । पतिमिति पाठे स्त्रिया एव उपदेशः । ननु स्त्रिया मुक्तिर्नास्तीति किमुपदेशेनेत्यत आह—स्त्रीत्वं स्त्रीसङ्गतः प्राप्त इति । न हि स निसर्गतः स्त्रीरूपः, किन्तु स्त्रीसङ्गतः स्त्रीत्वं प्राप्तः, तस्य पतिर्माया । वित्तापत्यगृहप्रदमिति पत्युर्विशेषणं संसारजननाय ॥ ४१ ॥

पूर्वसंस्कारवशादात्मज्ञाने[2] रुचे पातिव्रत्य स्वधर्म इति तत्परित्यागे दोषो भविष्यति नवेति शङ्का न कर्तव्या, किन्तु तं पतिमात्मनो मृत्युमेव जानीयादित्याह—

**तमात्मनो विजानीयात्पत्यपत्यगृहात्मकम् ।**
**दैवोपसादितं मृत्युं मृगयोर्गायनं यथा ॥ ४२ ॥**

---

प्रकाशः।

* सङ्गं नेत्यत्र । तस्य रेत एव स्थानमिति । मनसोऽन्नमयत्वेन श्रुतिसिद्धत्वाद्रेतसो मनोरूपतया चित्ताभेदाच्चित्तवृत्तिनिरोधरूपस्य योगस्य रेत एव स्थानमित्यर्थः । युद्धमिति । शास्त्रेण युद्धम् ।

---

1 तस्याः. ड. 2 अपि. ड. 3 प्रवृत्ते. ग.

तमात्मन इति। पतिरपत्य गृह च। एतदात्मक मृत्युं त प्रसिद्धं विजानीयात्। पूर्वमेव प्रारब्धवशादेव जातम्। अधुनाप्येवभावे सर्वथा नाश इति पुन पुन प्रवृत्तत्वात् देवोपसादितं मृत्यु जानीयात्। नन्वनु भवेन तदनुसारिवाक्यैश्चानन्दजनक वमनुभूयते, तथा सति कथं मृत्युत्वमित्याशङ्क्याऽऽह—मृगयोर्यथनं यथेति। यद्यपि मृगयुर्व्याध मृगान् युनक्तीति धृत्वा मृगान् क्रीडति। आरण्यापेक्षया ग्राम्यानुत्तमान् भक्ष्यान् प्रयच्छति, गीत च श्रवणसुख करोति, तथापि बन्धकः। पारतन्त्र्य च मद्दु रहेतु। अत ऐहिकं सुखं पारलौकिकं च सुखं तत्प्रसङ्गजनित बन्धहेतुत्वादुपेक्ष्यमेवेत्यर्थ ॥ ४२ ॥

एव सङ्गदोष सर्वे निरूप्य देहदोप निरूपयति—देहेनेति चतुर्भि —

**देहेन जीवभूतेन लोकाल्लोकमनुव्रजन्।**
**भुञ्जान एव कर्माणि करोत्यविरतं पुमान् ॥ ४३ ॥**

**नित्यास्मात् संसृति पुंसस्तथापि वशगो ह्ययम्। दोपार्थमेव तत्रापि ने द्वाभ्यां साधन कश्चित्॥ १ ॥** आदौ देहकृत एवास्य ससार इत्याह—जीवस्थान प्राप्तेन देहेन लोकाल्लोकान्तरमनुमजन् कर्मफ लभुञ्जान एवाविरतं कर्माणि करोति। दोषत्रय देहस्य निरूपितम्, निरन्तर परिभ्रमणेन नैकत्र स्थिति, कर्मफलभोग, कर्मकरण चेति। अन्ते कर्मनिरूपणात् पुनरावृत्तिरप्युक्ता ॥ ४३ ॥

दोपार्थं चाऽस्य वशे जात इत्याह —

**जीवस्य ह्यनुगो देहो भूतेन्द्रियमनोमयः।**
**तन्निरोधोऽस्य मरणमाविर्भावस्तु संभवः ॥ ४४ ॥**

***जीवस्येति**। भूतेन्द्रियमनोमय आधिभौतिकादिरूप चैतन्यव्यतिरेकेण न समर्थो भवतीति चिद्रूपस्य जीवस्यानुगो भवति। युक्तश्चायमर्थः। अचेतनो हि चेतनमपेक्षत इति। तथात्वे दोपमाह—तन्निरोध इति। जन्ममरणे दोप, तत्र मरणस्य स्वरूपमाह—तन्निरोधोऽस्य मरणमिति। अस्य जीवस्य तन्निरोधो देहनिरोधो मरणम्। नितरा रोध सजातीयप्रवाहानुत्पादनम्। सूक्ष्मैस्तदवयवैर्ध(?)र्मान्तरसहकृतै पश्चात्सन्त

**प्रकाशः।**

* जीवस्येत्यत्र। सजातीयप्रवाहानुत्पादनम्। सजातीयप्रवाहोत्पत्त्यभाव। स चाऽपक्षयेऽपि वर्तत इति तद्वारणाय प्रतियोगिस्वरूपं लक्षयन्ति—सूक्ष्मैरित्यादि। अत्रैतद्बोध्यम्। यद्यपि भावविकारेष्वस्ति वि परिणामयोर्न विरोधित्वम्, तद्व्यवहाराभावेऽपि रूपान्तरेण तस्यैव सत्त्वात्। वृद्ध्यपक्षययोस्तु प्रवाहप्राति लोम्यानुलोम्याभ्या विरोधित्वम्। एवमुत्पत्तिमरणयोरपि। तत्र नित्यदा ह्यङ्गभूतानामिति वाक्यात् कालिकोत्पत्ति सर्वदा भवतीति सन्ततिप्रवाहरूपा। साऽत्र पश्चात् सन्तत्यन्तरोत्पादनमित्यनेनोच्यते। तत्र प्रत्यक्षविरोधपरिहाराय—सूक्ष्मैरिति। अङ्गरागोपदेहपुत्रादिव्यावृत्त्यर्थम्—तदवयवैरिति। 'त विद्याकर्मणी समन्वारभेते, पूर्वप्रज्ञा च' इति सहकार्यन्तरबोधनाय—कर्मान्तरसहकृतैरिति। तथा चैतादृशोत्पत्तिविरामो मरणमित्यर्थ। नन्वियमुत्पत्तिर्न प्रकृतोपयुक्ता, देहस्य भूतेन्द्रियमनोमयत्वेन अत्र कथनात्। उक्तोत्पत्तेस्तु भूतमात्रनिष्ठत्वेनेन्द्रियादिष्वभावात्। न च नैयायिकादिवदिन्द्रियाणामाशुतरविनाशित्व शक्यवचनम्। सिद्धान्तभङ्गप्रसङ्गात्। तन्मते मनसो नित्यत्वेनाऽपि प्रकृतानुपयोगाच्चेत्यत आहु—

१ नित्यास्मात् क नित्यास्य ट २ द्वाभ्याम्, ल

स्यन्तरोत्पादनम् । इन्द्रियमनसामपि विशिष्टानां भिन्नत्वादन्यत्वमेव । तस्मिन्निरुद्धे तदभिमानात् मृङ् प्राणत्याग इति धातोर्येन प्रयत्नेन धृतः प्राणः स प्रयत्नः शरीरादिसाध्यो भवतीति तेषु निरुद्धेषु प्रयत्नोऽपि गच्छतीति योगस्तथा निरुक्तः । कालकर्मस्वभावानां तत्तद्देवाधिष्ठितानां नियामकत्वादपमृत्युप्रभृतीनां व्यवस्था । उत्पत्तेः स्वरूपमाह—**आविर्भावस्तु सम्भव इति** । यो देहस्याविर्भावः स एव जीवस्य सम्भव उत्पत्तिरित्यर्थः । सर्वत्र हि भगवत्स्वरूपे सर्वे पदार्थाः सन्तीति पूर्वमुक्तम् । यत्र यावद्दूरे पदार्थानाविर्भावयति, तावदाविर्भवन्ति । यत्र पुनः कारणेषु निविष्टो देहमाविर्भावयति तत्राविर्भवतीति तथोक्तम् ४४

नन्तु देहोत्पत्तिप्रलयाभ्यां जीवस्य तथात्वं कथमिति चेत्तत्राऽऽह—

**द्रव्योपलब्धिस्थानस्य द्रव्येक्षायोग्यता यदा ।**
**तत्पञ्चत्वमहंमानादुत्पत्तिर्द्रव्यदर्शनम् ॥ ४५ ॥**

×द्रव्योपलब्धिस्थानस्येति । द्रव्याणां रूपादीनामुपलब्धेर्ज्ञानस्य यत्स्थानं गोलकरूपम्, तस्य यदा द्रव्येक्षायोग्यता द्रव्येक्षायामयोग्यता काचकामलादिभिर्भवति, तदैव चक्षुषोऽप्ययोग्यता भवति, तदैव द्रष्टुरपि । गोलके आच्छन्ने प्रमाणप्रमात्रोरप्ययोग्यता । तदाह—द्रष्टृत्वायोग्यतानयोरिति । दर्शनकरणत्वं कर्तृत्वं च ।

---

प्रकाशः ।

इन्द्रियेत्यादि । विशिष्टानामिति । भूतविशिष्टानाम् । '**अन्नमयं हि सौम्य मन आपोमयः प्राणस्तेजोमयी वाक्**' इति श्रुतौ विकारार्थकप्रत्ययेनान्नादिकृतपोषणस्याऽभिप्रेतत्वान्मनोवाचोरुत्पत्तिसम्भवे तत्समानत्वादितरेष्वपि तथात्वमिति न्यायादिन्द्रियेष्वपि वृद्ध्योत्पत्ते. सम्भवदुक्तिकत्वात्तत्पोषकभूतांशविशिष्टानां तेषां केवलतदपेक्षया विलक्षणत्वादन्यत्वमेवेति । अन्यत्वं चाऽत्राधिभौतिकरूपत्वम् । एवं सत्येव '**सदिव मनस्त्रिवृत्त्वयि विभात्यसदा मनुजात्**' इति वाक्यं च सङ्गच्छते, नाऽन्यथा; एकस्य स्वतो द्वैरूप्यासम्भवात् । तथा चैवमिन्द्रियमनसोरुत्पत्तिसम्भवात् न प्रकृतानुपयोगिनीत्यर्थः । एवं प्रासङ्गिकमुपपाद्य प्रस्तुतमाहुः—तस्मिन्नित्यादि । तस्मिन्निति । देहे । तदभिमानादित्यस्य येनेत्यादिनाऽन्वयः । **योगस्तथा निरुक्त** इति '**मृङ् प्राणत्यागे**' इति धात्वर्थविवरकप्राणत्यागशब्दनिष्ठो, योगो जीवस्येति श्लोकीयपादत्रयेणैवं निरुक्त इत्यर्थः । तथा च, यद्यपि शास्त्रान्तरे देहप्राणवियोगो,मरणपदेनोच्यते, तथापि सूक्ष्मेक्षिकायां प्राणधारणप्रयत्नाभाव एव मरणपदार्थः । अत एव '**मृत्युरत्यन्तविस्मृतिः**' इत्युक्तम् । एवं चैतस्य लिङ्गधर्मत्वम् । स्थूलविचारे तु देहधर्मत्वमिति । नन्तु अपमृत्युप्रभृतिषु सजातीयप्रवाहविरामस्याऽदर्शनान्मरणमव्यापकमित्यत आहुः—कालेत्यादि । तत्तद्देवाधिष्ठितानामिति । कालाद्यधिष्ठातृदेवाधिष्ठितानाम् । तथा च, कालस्य बलिष्ठत्वे तद्द्वेन स्वभावकर्मणोः, स्वभावस्य बलिष्ठत्वे तद्द्वेन कालकर्मणोः, कर्मबलिष्ठत्वे तद्द्वेन कालस्वभावयोर्नियमेन तदुपपत्तिरिति न कोऽपि दोष इत्यर्थः । एवं च वैद्यकोक्तं सर्वेषां त्रिदोषादेव मरणमित्यपि युज्यते, नियामकमन्तरेण दोषाणामाकस्मिककोपासम्भवादिति । नन्तु पूर्वाध्यायोक्तप्रघट्टकेन देहस्य पूर्वमसतः सत्त्वेव प्रतीयते, तत्कथं देहस्याऽऽविर्भाव उच्यत इत्याशङ्कायामुपपादयन्ति—**सर्वत्रे**त्यादि । तथा च, नाऽसतः सत्तालेश इत्यर्थः ।

× **द्रव्योपलब्धीत्यत्र । दर्शनकरणत्वं कर्तृत्वं चेति** । योग्यतारूप उत्पत्तिशेषः । तत्राऽयोग्यताऽत्र मरणमिति देहोत्पत्तिलयकृत्याभ्यां जीवस्योत्पत्तिमरणे इत्येकश्लोकपाठेऽर्थ इत्यर्थः । श्लोकद्वयपाठे प्रथमश्लोककरणकर्त्रोर्योग्यत्वायोग्यत्वे एव प्रतिपाद्ये, द्वितीयश्लोके तूभयाधिष्ठानदेहस्य स्वभावनिवृत्त्या मरणसाधनम्, स्वाभाविककार्यकरणेनोत्पत्तिसाधनम्, जीवस्य तु तदभिमानादुभयसाधनमित्यर्थः ।

अनयोः करणकर्त्रोरयोग्यतेत्येकश्लोकपाठेऽर्थः । श्लोकद्वयपाठे तु द्रव्योपलब्धिस्थानस्य सर्वद्रव्यव्यवहारसाधकस्य देहस्य यदा द्रव्येक्षायां सर्वद्रव्यव्यवहारे अयोग्यता तत्पञ्चत्वं मरणमित्यर्थः । यस्य यः स्वभावः स चेत्सर्वात्मना निवृत्तः, तदा कारणे लीन इति ज्ञातव्यम् । तथा पञ्चभूतेभ्य आविर्भूतो देहः स्वकार्यं चेन्न करोति, तदा कारणत्वात् पञ्चत्वमेव । जीवस्य तु तथात्वमहंमानात् । द्रव्यदर्शनं द्रव्याणामुपलम्भः श्वासादिकार्यकरणसामर्थ्यम्; सैव देहस्योत्पत्तिः । मध्ये प्रविश्याभिमानाज्जीवस्य च ॥ ४५ ॥

तत्र दृष्टान्तमाह—

**यथाक्ष्णोर्द्रव्यावयवदर्शनायोग्यता यदा ।**
**तदैव चक्षुषो द्रष्टुर्द्रष्टृत्वायोग्यतानयोः ॥ ४६ ॥**

यथाक्ष्णोरिति । अक्ष्णोर्गोलकयोः द्रव्यावयवस्य रूपादेः यदैव दर्शनायोग्यता, काचकामलादिभिस्तदैव चक्षुष इत्यादि पूर्ववत् ॥ ४६ ॥

एवं सर्वेषां बाधकत्वे किं कर्तव्यमिति चिन्तां परिहरन् शास्त्रार्थमुपसंहरति—तस्मादिति द्वयेन त्याज्यकर्तव्यभेदेन । तत्र प्रथमं त्याज्यमाह—

**तस्मान्न कार्यः संत्रासो न कार्पण्यं न संभ्रमः ।**
**बुद्ध्वा जीवगतिं धीरो मुक्तसङ्गश्चरेदिह ॥ ४७ ॥**

+ तस्मादिति । त्रयं त्यक्तव्यम्, भयं, दैन्यं, संभ्रमश्च । उत्तालता संभ्रमः । देहादीनां पूर्वमेव सिद्धत्वात्तत्कार्यबाधनमपि पूर्वमेवानुवर्तत इत्यङ्गीकृता ग्लानिर्न दोषायेति न्यायेन भयं त्यक्तव्यम् । एते दुष्टास्त्याज्या एवेति, एतन्निर्वाहार्थं कार्पण्यमपि त्यक्तव्यम् । एतद्बाधकानामस्मन्मित्रत्वात् स्वस्य कर्तव्याभावात् का उत्तालता । जीवस्य गतिरुक्तैव, अतो जीवगतिं बुद्ध्वा देहगतिदोषातिक्रमं सोढ्वा, धीरो भूत्वा, बाधकं सङ्गं त्यक्त्वा चरेन्नैकत्र तिष्ठेदित्यर्थः ॥ ४७ ॥

एवं बहिः स्थितिरुक्ता । अन्तःस्थितिमाह—

**सम्यग्दर्शनया बुद्ध्या योगवैराग्ययुक्तया ।**
**मायाविरचिते लोके चरेन्न्यस्य कलेवरम् ॥ ४८ ॥**

सम्यगिति । सम्यगात्मदर्शनं यस्याम् । तस्या बुद्धेर्योगो वैराग्यं चाङ्गम् । तया स्वात्मानं स्थिरीकृत्य मायया विशेषेण रचिते लोके कलेवरं न्यस्य लोकानुसारिणं कृत्वा स्वयं चरेदुदासीनो भवेदित्यर्थः॥४८॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां तृतीयस्कन्धे एकत्रिंशाध्यायविवरणम् ।

---

प्रकाशः

+ तस्मादित्यत्र । बाधनमिति, जीवश्रेयःप्रतिबन्धः । उत्तालेति । त्रितयाभिमानत्यागेन स्वरूपावस्थानरूपा पूर्वमुक्तैवेत्यर्थः ।

एवं चास्मिन्नध्याये बाल्यादितारुण्यान्तास्ववस्थासु कालकृतः काम उक्तः, गर्भमारभ्य भौतिकेन्द्रियोत्पत्तिश्चोक्तेति(?)संवादद्वयसम्बन्धप्यर्थो बोध्यः ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे एकत्रिंशाध्यायविवरणं सम्पूर्णम् ।

---

१ स चेत्सर्वात्मनेति . ब

# द्वात्रिंशोऽध्यायः ।

\+ कालस्य बाधकत्वे हि निषिद्धात् फलमीरितम् ।
निषिद्धरूपता चोक्ता पुण्यस्य फलमीर्यते ॥ १ ॥
त्रिविधस्यापि धर्मस्य द्वात्रिंशे फलमुच्यते ।
ज्ञानं मुख्यं फलं तस्य ससाधनमिहोच्यते ॥ २ ॥
अधोगतिर्मध्यगति पूर्वमत्र निरूपिता ।
उत्तमा मोक्षपर्यन्तं यथा स्यात्तदिहोच्यते ॥ ३ ॥

तत्र प्रथम तामसधर्म सफलमाह चतुर्भि —[1]

## कपिल उवाच ।[2]

**अथ यो गृहमेधीयान्धर्मानेवावसन्गृहे ।**
**काममर्थं च धर्मान्स्वान्दोग्धि भूयः पिपर्ति तान् ॥ १ ॥**

अथेति । पुरुपार्थत्रयं तस्य तदर्थं साधनं परम् । फल च तादृशं तस्य तस्य नाशश्च वर्ण्यते ॥१॥ प्रथम स्वरूपमाह—अथेति । ऊर्द्ध्वगतिरगाद्भिन्न प्रक्रमः । यो गृहमेधीयानेव धर्मानाचरति, आश्रमधर्मा अपि गृहस्थानुगणा इति गृहमेधीयानेवेत्युक्तम् । धर्मानेवेति निषिद्धव्यावृत्ति । आवसन्नित्युभयत्र सम्बन्ध । धर्मास्ते गृहे तिष्ठन्तीति । सुतरा काम्यकर्मपर इत्याह—धर्ममर्थं च कामं च । धर्मे बहुवचनम्, पश्चान्निरूपणं च, तस्य मोक्षोपयोगमपि ज्ञापयितुम् । यथाऽन्नं भुक्त्वा कृष्यादयन्नमुत्पादयति । धनेन धर्मं वर्द्धयति । धर्मेणापमृत्युं दूरीकृत्य पुनर्धर्म वर्द्धयतीति तथा त पिपर्ति पूरयति ॥ १ ॥

एव धर्मार्थकामपरोऽपि तद्विपयत्वेन भगव पश्चेत्तदापि न काचिचिन्ता, भगवत एव मोक्षपर्यवसानात् । अतस्तादृशोऽपि भगवद्धर्मुख्येनैव सर्वं करोतीत्याह—

**स चापि भगवद्धर्मात् काममूढः पराङ्मुखः ।**
**यजते क्रतुभिर्देवान् पितॄंश्च श्रद्धयान्वितः ॥ २ ॥**
**तच्छ्रद्धया क्रान्तमतिः पितृदेवव्रतः पुमान् ।**
**गत्वा चान्द्रमसं लोकं सोमपाः पुनरेष्यति ॥ ३ ॥**

---

### गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृतः प्रकाशः ।

\+ अथ द्वात्रिंशाध्याय विवरिषव एककार्यत्वरूपा प्रसङ्गरूपा च सङ्गतिं बोधयितु पूर्वस्यार्थं बोधयन्तोऽस्यार्थमाहुः—कालस्येत्यादित्रिभिः । अत्र त्रिविधस्येति कथनाद्धीनमध्ययोर्वैराग्यजनकत्वादेव कार्यत्वम्, तृतीयस्य तु मुख्यमुक्तिवत्प्रसङ्ग इति बोध्यम् । ज्ञानमित्यादिना बुद्धिर्मोक्षश्च स्फुटीक्रियत इति शुकमैत्रेयोक्तयोरप्यवर स्मार्यते इति बोध्यम् ।

---

१ तामसधर्मस्य फलम् क घ ङ ।  २ श्रीभगवानुवाच घ ङ,

स चापीति । भगवान् कामं करीकरोतीति कामरक्षार्थं भगवत्परित्यागः, कामेन विवेकाभावो वा । भगवद्धर्मेषु भगवानेव सेव्यो न त्वन्यः । तद्विमुख्यान् नानाविधैः क्रतुभिर्देवान् पितृंश्च यजते । सर्वत्राग्निहोत्रादिकर्मसु देवेषु पितृषु च तृप्तिर्भवतीति तदर्थं सः कर्माणि करोति स राजस इति । वस्तुतो देवादिश्रद्धया क्रान्तमतिः पितृदेवसन्तर्पणमेव व्रतं यस्य तादृशस्तैः साधितं फलं प्राप्नोतीत्याह—गत्वेति । चान्द्रमसं लोकं गत्वा पञ्चाग्निविद्यया पुनरिहैवेष्यति । सोमपा इति न सोमव्यतिरिक्तयागैरिदं फलं सिध्यतीत्युक्तम् ॥ २ ॥ ३ ॥

तस्य फलस्य परिमितकालत्वमाह—

**यदैवाहीन्द्रशय्यायां शेतेऽनन्तासनो हरिः ।**
**तदा लोकाः क्षयं यान्ति त एते गृहमेधिनाम् ॥ ४ ॥**

+ यदैवेति । यदैव भगवान् शेते, तदैव तेषां लोकाः क्षयं यान्ति । तच्छयनं वर्षास्वपि भवतीति तद्व्यावृत्त्यर्थमाह—अहीन्द्रशय्यायामिति । शेषशायी तदैव शेते । संवत्सरान्तेऽपि तादृशः प्रलयो भवतीति तद्व्यावृत्त्यर्थमाह—अनन्तासन इति । हरिरिति भगवच्छयनं सर्वसुखार्थम् । तदा गृहमेधिनां लोकाः क्षयं यान्ति । तेषामेव लोकानां क्षयो न तु त्रिलोक्याः ॥ ४ ॥

अथ सात्त्विकानां निष्कामानां धर्मं सफलमाह—

**ये स्वधर्मं न दुह्यन्ति धीराः कामार्थहेतवे ।**
**निःसङ्गा न्यस्तकर्माणः प्रशान्ताः शुद्धमेधसः ॥ ५ ॥**

ये स्वधर्ममिति । फलार्थं धर्मं कृत्वा देहादिकं प्रसाध्य तेन पुनर्न धर्मं कुर्वन्ति सोऽदोहः । अपेक्षिताकरणे हेतुः—धीरा इति । धर्मार्थं तु धर्मं दुहन्त्येव, अतस्तद्व्यावृत्त्यर्थमाह—कामार्थहेतव इति । कामः, अर्थश्च हेतुः धर्मदोहे तादृशं धर्मदोहं न कुर्वन्ति । तेषां निवृत्तिधर्मेऽधिकारमाह—निःसङ्गा इति । बहिःसङ्गपरित्यागः, तत्सङ्गेन च यानि कर्माणि क्रियन्ते तेषामपि परित्यागः । अन्यथा सापेक्षत्वादन्यतरपरित्यागो न सम्भवति । प्रशान्ताश्चेति इन्द्रियविक्षेपाभावः, रजोगुणाभाव उक्तः । विवेकवती शुद्धा मेधा येषाम् । एवं साधनचतुष्टयमुक्तम्, वैराग्यम्, संन्यासः, योगः, साङ्ख्यञ्चेति ॥ ५ ॥

तदनन्तरधर्माभावे पातित्यं स्यादिति तद्धर्मनिरूपणपूर्वकं दोषत्रयाभावमाह—

**निवृत्तिधर्मनिरता निर्ममा निरहङ्कृताः ।**
**स्वधर्माख्येन सत्त्वेन परिशुद्धेन चेतसा ॥ ६ ॥**
**सूर्यद्वारेण ते यान्ति पुरुषं विश्वतोमुखम् ।**
**परावरेशं प्रकृतिमस्योत्पत्त्यन्तभावनम् ॥ ७ ॥**
**द्विपरार्धावसाने यः प्रलयो ब्रह्मणस्तु तं ।**

---

प्रकाशः ।

+ यदैवेत्यत्र । संवत्सरान्त इति वैराग्यप्रयुक्ताः ।

---

१ गेहादिश्रद्धया क.

तावदध्यासते लोकं परस्य परचिन्तकाः ॥ ८ ॥

÷ निवृत्तीति । निवृत्तिधर्मा वैराग्योपायाः, भगवद्धर्मा ; चतुर्थाश्रमधर्माश्च । तत्र निरता इति तद्धर्मैरेव निश्चसिद्धिः । अहंममेतिदोषद्वयाभावमाह—निर्ममा निरहङ्कृता इति । अन्तःकरणाशुद्धिश्च महान् दोष इति साधनपूर्वकं तदभावमाह—स्वधर्माख्येनेति । स्वधर्माः दास्यरूपाः, निवृत्तिधर्मास्तूक्ता एव । अत एव स्वधर्म इत्याख्या यस्य । तादृशेन सत्त्वेन गुणेन परितः शुद्धेन चेतसा । एवं ज्ञानकर्मणोः फलम्—सूर्यद्वारेणेति । पुरुषं प्रकृतेः परम् । ब्रह्माण्डात्मकं व्यावर्तयति—विश्वतोमुखमिति । सर्वतोमुखः साकारात्मा । ततोऽपि पुरुषोत्तमं यान्तीति तमेव पुरुषोत्तमं विशिनष्टि—परे कालादयः अवरे ब्रह्मादयः, तेषां नियन्ता सर्वस्यापि समवायी । अस्योत्पत्त्यादिनिमित्तं च । साकारं च नियन्तारं समवायिनिमित्तकम् । तेषां कालनियममाह—द्विपरार्द्धावसान इति । तुशब्दः कल्पान्तरव्यावृत्त्यर्थः । ते तावत् परस्य ब्रह्मणो लोकमध्यासते । यतस्ते परचिन्तकाः, पुरुषोत्तमत्वेन चिन्तयन्ति; परस्य भगवतो वा ॥ ६ ॥ ७ ॥ ८ ॥

भगवद्भक्तानामेव तादृशधर्मयुक्तानां पुरुषोत्तमप्राप्तिः; नान्येषामिति वक्तुमन्येषां प्रकृतावेव लयमाह—क्ष्माम्भोऽनलेति द्वाभ्याम्—

क्ष्माम्भोऽनलानिलवियन्मनइन्द्रियार्थ-
भूतादिभिः परिवृतं प्रतिसञ्जिहीर्षुः ।
अव्याकृतं विशति यर्हि गुणत्रयात्मा
कालं पराख्यमनुभूय पुनः स्वयम्भूः ॥ ९ ॥

* केचित्तु परस्य ब्रह्मणः परत्वेन भगवत्त्वेन चिन्तका इति पूर्वफलमपि हिरण्यगर्भोपासकानामेवेत्याहुः—तद्भिन्नप्रक्रमे निमित्ताभावात् चिन्त्यम् । त्रैविध्यस्यैव वक्तव्यत्वाच्च । क्ष्माम्भोऽनलानिलवियन्ति पञ्च भूतानि, मनश्च इन्द्रियाणि, अर्था विषयाः, भूतादिरहङ्कारस्तैः परितः कृतम्, वृतं वा ब्रह्माण्डम्, सर्वमेव प्रतिसञ्जिहीर्षुः प्रतिकूलेन संहर्तुमिच्छुः । यदा भगवानेवं भवति तदा स्वयम्भूर्ब्रह्मा प्रकृतिं विशति । यर्हि गुणत्रयात्मा न तु भगवद्भक्तः । तस्य ब्रह्मत्वे फलम्—पराख्यं कालमनुभूयेति । परशब्देन ब्रह्मणः शतवर्षमायुः, न [illegible] मुक्त्यर्थं ब्रह्मा जात इति । पुनरिति पूर्वमपि स एवंविध एव ॥ ९ ॥

तत्सहचरा अपि प्रकृतावेव लीना भवन्तीत्याह—

एवं परेत्य भगवन्तमनुप्रविष्टा ये योगिनो जितमरुन्मनसो विरागाः ।
तेनैव साकममृतं पुरुषं पुराणं ब्रह्म प्रधानमुपयान्त्यगताभिमानाः ॥ १० ॥

×एवं परेत्येति । ये परेत्य मृत्वा, लोकान्तरे वा गत्वा, भगवन्तमनुप्रविष्टा नारदादयोऽधिकारिणः, ये वा योगिनः योगाधिकारयुक्ताः । विरागा इति योगफलतत्फलानि निरूपितानि । तानि येषां जातानि

प्रकाशः ।

÷ सूर्येत्यत्र । तमिति । विश्वतोमुखमक्षरात्मकम् ।

* क्ष्मेत्यत्र । भिन्नप्रक्रम इति द्विपरार्द्धेतिश्लोकीयतुशब्दोक्तेः ।

× एवं परेत्येत्यत्र । तत्फलानीति । ब्रह्मसाहचर्यफलानि, लोकान्तरगमनफलानि वा ।

१ सूर्यद्वारेण ते यान्ति. ग. २ सकलात्मा. ख ३ पुरुषम्. क. ग. ङ. ४ परिवृतम्. क.

ते तु ब्रह्मतुल्या । अतस्तेनैव **साकं** ब्रह्मणा सह **अमृतमक्षरात्मक पुरुषं पुराण** पुरुषत्रयादतिरिक्तं ब्रह्मशब्दवाच्यम्, मूलभूतं **प्रधान** प्रकृतिपुरुषोत्पादकमुपयान्ति, न तु पुरुषोत्तमे गच्छन्ति । तत्र हेतु - **अगताभिमाना** । न गत अभिमानो येषाम् । वस्तुतस्तु कर्ता भगवान् । नारदादयस्तु आत्मान मन्यन्ते । अतोऽक्षर एव लय । पुनरागमन च वक्ष्यति । यद्यप्यक्षरमपि भगवानेव, तथापि स्वेच्छावशग इति पूर्वमुक्तम् । अमृतमिति तस्यानानाशाय । पुरुषमिति मतान्तरव्युदासाय । **पुराणमिति** । पुरुषान्तरव्युदासाय । ब्रह्मेति अक्षरत्वस्थापनाय । **प्रधानमिति ' आसीज्ज्ञानमयो ह्यर्थ. '** इत्यत्र एकादशे वक्ष्यति प्रकृतिपुरुषहेतुत्वेन । अत एवाक्षरोपासकानामपि भगवान् स्वसायुज्यमेवाऽऽदद् । एव कारणाक्षरप्रवेशं वारयति—**ते प्राप्नुवन्ति मामेवेति** । ब्रह्मानन्दस्य लक्ष्म्यात्मकत्वादानन्दाभावे फल न किञ्चिदित्यत एतेषामपि निरोधमात्र न तु तद्गतफलसम्बन्ध । श्रोत्रियस्य चाकामहतस्येति तस्यापि तावान् स्वरूपानन्द एव ॥ १० ॥

अतो भगवद्भजनमवश्य कर्तव्य भगवदानन्दार्थमित्याह—

**अथ तं सर्वभूतानां हृत्पद्मेषु कृतालयम् ।**
**श्रुतानुभावं शरणं व्रज भावेन भामिनि ? ॥ ११ ॥**

+ **अथेति** । यतोऽभिमाने महत्यपि ज्ञाने योगे वा न सम्यक् कार्यसिद्धि । अतो भगवद्भजनमेव कर्तव्यम्, न तु ब्रह्मादीनामिव वैयर्थ्यमुचितमित्यर्थान्तरत्वम् । तं पुरुषोत्तमम् । तत्प्राप्त्यर्थमाह—**सर्वभूताना हृत्पद्मेषु कृतालयमिति** । *यतोऽन्तैवान्तर्यामिभजने तत्प्राप्तिर्भविष्यतीति भाव । मन्त्रप्रकारेण भजन* व्यावर्तयति—**श्रुतानुभावमिति** । श्रुतोऽनुभावो यस्य । भगवन्माहात्म्य श्रुत्वा भगवन्मार्गानुसारेण शरण व्रज । **भावेनेति** स्नेहपूर्वकं मनस्या सह वा प्रपन्ना भव । **भामिनीति** सम्बोधनमुत्तमस्यैव विश्वासो भवतीति तदर्थम् । भामिनी महती स्त्री ॥ ११ ॥

---

प्रकाशः ।

मन्यन्त इति । कर्तारं मन्यन्ते । पूर्वमुक्तमिति । तथाऽत्राभेदेऽप्येतावान् भेद(?)पुनरागमन न दूषकमित्यर्थ । *मतान्तरव्युदासायेति । निराकारव्युदासाय । पुरुषान्तरव्युदासायेति । क्षरपुरुषव्युदासाय ।* ननु प्रधानशब्द प्रकृतिवाचकत्वेन प्रसिद्ध इति कथमत्र ब्रह्मणोऽक्षरस्य प्रधानरूपतोच्यत इत्याकाङ्क्षाया तत्तात्पर्यमाहुः आसीदित्यादि । तथाच, 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्' इति वाक्यात् प्रकर्षेण धीयते गर्भ प्रकृतिपुरुषरूपोऽस्मिन्नित्यधिकरणव्युत्पत्त्या, ' योनिश्च हि गीयते '' प्रकृतिश्च प्रतिज्ञा ' इत्यादि सूत्रेभ्योऽत्र प्रधानरूपत्वमुच्यते, न तावता ब्रह्मत्वक्षतिरित्यर्थ । अत्र गमकमाहु—अत एवेति । ब्रह्मत्वादेव । नन्वक्षरस्य ब्रह्मत्वे तत्सायुज्यवारण कुत इत्याकाङ्क्षायामाहु—ब्रह्मानन्दस्येत्यादि । तथा च, तत्रत्य आनन्दो भगवदेकत्रा । न इति तस्याऽन्यसम्बन्धाभावात्, तदभावे चाऽक्षरसायुज्यस्याऽप्यफलत्वबोधनाय तद्वारणमित्यर्थः । तेन सिद्धमाहु—अत एतेषामित्यादि । ननु यदि तादृशामपि फलसम्बन्धाभावस्तदा ' श्रोत्रियस्य चाऽकामहतस्य ' इत्यनेन ब्रह्मानन्दस्याऽपि तादृशसम्बन्धित्वं कुत उच्यत इत्याकाङ्क्षायामाहु—श्रोत्रियस्येत्यादि । तस्याऽपि श्रोत्रियस्यापि तावान जीवानन्द एव साधनाधिक्यादाधिक्योऽभिव्यक्तो भवति, न तु ब्रह्मानन्द इत्यर्थ ।

+ अथेत्यत्र । ब्रह्मानन्दस्याऽऽधिक्य एव सिद्धे तदर्थं साधन वदन्तीत्याहु—अतो भगवदित्यादि । अर्थान्तरत्वमिति । एतच्छ्लोकोक्तस्य पूर्वश्लोकस्य पूर्वश्लोकोक्तादाधिक्यमित्यर्थः ।

यतो न प्रकारान्तरेण पुनरावृत्तिरहितं फलं भवति। अतो भगवानेव सेव्य इति वक्तुं सर्वसाधनसम्पत्तिर्यथा ब्रह्मादीनां तथा नाऽन्यस्य भविष्यति। तेऽपि चेन्न मुक्ताः किं ज्ञानादिसाधनैरिति पूर्वोक्तं भगवद्भजनं दृढीकर्तुं ब्रह्मादीनां वृत्तान्तमाह—आद्य इति चतुर्भिः—

आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः।
योगेश्वरैः कुमाराद्यैः सिद्धैर्योगप्रवर्तकैः॥ १२॥

स्वरूपतो महत्त्वं च दोषस्तत्फलमेव च। पुनरप्यधिकारित्वमन्येषां च निरूप्यते॥ १॥ प्रथमं तेषां सर्वसाधनसहितं रूपमाह—स्थिरचराणामाद्य उत्पादकः, महत्त्वमुक्तम्। वेदगर्भ इति ज्ञानादिसर्वसाधनान्युक्तानि। ऋषिभिः सहेति सत्सङ्गः। ये सनत्कुमारादयोऽपि योगेश्वराः योगफलं नियमयितुं शक्नुवन्ति किं पुनः प्राप्तुम्। कुमारशब्देन तेषां कालजयोऽपि सूचितः। केवलमविद्यात्यागेवन योगनियामकत्वम्, किन्तु योगसिद्धिरप्यस्तीत्याह—सिद्धैरिति। योगप्रवर्तकैरिति अन्येभ्योऽपि स्वसमानफलदानसामर्थ्यं सूचितम्॥ १२॥

तेषां दोषमाह—

भेददृष्ट्याभिमानेन निःसङ्गेनापि कर्मणा।
कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम्॥ १३॥

+ भेददृष्ट्येति। अन्ततो गत्वा वयं मुक्ता नाऽन्यो मुक्त इति; अभिमानो वयमपि कर्तार इति; एव दोषद्वयेन कृत्वा यद्यपि निःसङ्गं कर्म कुर्वन्ति, तथापि कर्तृत्वाभिमानात् सगुणमेव ब्रह्म गच्छन्ति पूर्वोक्तम्। स्वापेक्षया हीनभावव्यावृत्त्यर्थमाह—पुरुषं पुरुषर्षभमिति। पुरुषो विराट् स हि स्वयमेव। स्वोत्तमस्तु प्रकृतिपुरुषो भवति। ततः पुरुषर्षभः अक्षरात्मा॥ १३॥

तत्र गतस्य पुनरावृत्तिमाह—

स संसृत्य पुनः काले कालेनेश्वरमूर्तिना।
जाते गुणव्यतिकरे यथापूर्वं प्रजायते॥ १४॥

स संसृत्येति। स ब्रह्मा अक्षरमपि प्राप्य संसृत्य सम्यक् तत्र परिभ्रमणं कृत्वा पुनः प्रत्यागमनकाले, ईश्वरमूर्तिना कालेन गुणव्यतिकरे जाते प्रकृतिपुरुषयोरुद्गमानन्तरमनुद्गमे वा क्षोभमात्रे जाते यथापूर्वं महदादिद्वारा ब्रह्माण्डे उत्पन्ने तत्र नारायणनाभिकमलात् यथापूर्वं प्रजायते। एवमक्षरे गतस्यापि पुनरावृत्तिरुक्ता॥ १४॥

अन्येषामप्याह—

ऐश्वर्यं पारमेष्ठ्यं तत्तेषां धर्मेण निर्मितम्।

---

प्रकाशः।

— भेदेत्यत्र। पूर्वोक्तमिति। मुख्यजीवाख्यमक्षरम्। स्वयमेवेति। वेदगर्भ एव। प्रकृतिपुरुष इति। प्रकृतिभर्ता पुरुषः।

---

१ शक्नुवन्ति क. २ करोति ख ड च, ३ गच्छति ख.

निषेव्य पुनरायान्ति गुणव्यतिकरे सति ॥ १५ ॥

ऐश्वर्यमिति । परमेष्ठिसभाया यदैश्वर्य प्रसिद्धं तत्तेषा निवृत्तिधर्मेण निर्मितम्, आधिदैविके महत्तत्त्वे, अक्षरे वा अनुभूय गुणव्यतिकरे सति पुनरायान्ति । सतीति सम्बोधन वा । ऐश्वर्य पारमेष्ठ्य वा यान्तीति १५

एव भगवन्मार्गानुसारेण भगवद्भजनाभावे ब्रह्मादीनामप्येषा गतिरिति निरूप्य, ये पुनस्तामसा ऐहिका, ते भजनाभावे सर्वथा नष्टा भविष्यन्तीति किं वक्तव्यमिति वक्तुं तामसधर्मप्रवर्तकाना स्वरूपसाधन-फलान्याह–षड्भि —

ये त्विहासक्तमनसः कर्मसु श्रद्धयान्विताः ।
कुर्वन्त्यप्रतिषिद्धानि नित्यान्यपि च कृत्स्नशः ॥ १६ ॥
रजसा कुण्ठमनसः कामात्मानोऽजितेन्द्रियाः ।
पितॄन्यजन्त्यनुदिनं गृहेष्वभिरताशयाः ॥ १७ ॥

+ ये त्विहासक्तमनस इति । राजसानामिति वा । तेषां स्वधर्मकरणं दोषाश्चापि चतुर्विधाः। भगवद्विमुखाश्चैते लौकिकाश्चापि ते सदा । मामप्राप्य निवर्तन्त इति तेषां निरूप्यते ॥१॥ प्रथमतस्तेषा स्वधर्ममाह–इह संसारे आसक्त मनो येषामिति बहिर्मुखा , कर्ममार्ग एव श्रद्धान्विता , संसारे साधकत्वात्कर्मणाम् । अप्रतिषिद्धानि लौकिकानि कुर्वन्ति । नित्यान्यप्यग्निहोत्रादीनि सर्वाण्येव कुर्वन्ति । इहासक्त्या पुनरागमनम् । कर्मणा पुनर्जन्म । अप्रतिषिद्धकरणान्नाधोगतिः । नित्यकरणात् पितृलोक । ' स्वकर्मणा पितृलोक ' इति श्रुते । रजसा गुणेन कुण्ठित मनो येषाम् । अथ सहजो दोषो विक्षेपात्मा । कामात्मान आगन्तुको दोष. काम एव । अत एवाऽजितेन्द्रियाः संसर्गदोषवन्तः । पितॄन् यजन्तीति स्वपितृपितामहानामेव याग कुर्वन्ति । तेन नालौकिकभजनम् । अथ लोकमध्य एवेति गुणाभावार्थमुक्त । गृहेष्वभिरताशया इति कदाचिदपि मोक्षाभावार्थमुक्त ॥ १६ ॥ १७ ॥

तेषा भगवद्वैमुख्ये हेतु —

त्रैवर्गिकास्ते पुरुषा विमुखा हरिमेधसः ।
कथायाः कथनीयोरुविक्रमस्य मधुद्विषः ॥ १८ ॥

* त्रैवर्गिका इति । धर्मार्थकामेष्वेव ते साधव । अत एव हरिमेधसो वासुदेवाद्विमुखा । हरि स एव संहर्त्री मेधा बुद्धिर्यस्य । बुद्धिमात्रेणैव संसार नाशयिष्यतीति भयाद्विमुखा । कथाया अपि विमुखा , तद्वार्तामपि न कुर्वन्ति । कथनीया उरवो विक्रमा यस्य । पराक्रमश्रवणे सर्वेषामभिरुचिः, लोकरुच्याऽपि न शृण्वन्ति । स्वपुरुषार्थनाशकत्व ज्ञात्वा निषिद्धामिव परित्यजन्तीति भाव । मधुद्विष इति जगत्कर्तृब्रह्मभक्षकनाशकत्वेन भगवन्निरूपणात्तद्भजने कृतघ्नताऽपि सूचिता । पापनाशार्थमपि न भजन्त इति निरूपितम् ॥ १८ ॥

प्रकाशः ।

+ रजसेत्यत्र । अयमिति । पितृयाग ।

* त्रैवर्गिका इत्यत्र । त्रैवर्गिका इत्ययं ठक् ' तत्र साधु ' इत्याधिकारस्थ इति ज्ञापयन्ति धर्मेत्यादि ।

१ यम प्राप्य त ह ख २ मोक्षधर्माभाव ग

ननु ते स्वधर्मनिष्ठाः परधर्मत्वेन ज्ञात्वा न भजन्तीति चेत्तत्राऽऽह—

**नूनं दैवेन निहता ये चाऽच्युतकथासुधाम्।**
**हित्वा शृण्वन्त्यसद्गाथाः पुरीषमिव विड्भुजः॥ १९॥**

नूनमिति। ते हि लोकवार्तां शृण्वन्ति न तु भगवत्कथाम्। अतो धर्मव्यापृता भगवत्कथाया अनवकाशान्निवर्तन्त इति न शङ्कनीयं किन्तु ते दैवेनैव निहताः, प्रतिकूलेन्द्रियदानात्। भगवता ते चेद्बधिराः कृताः स्युः, तदा यथास्थाने एव तिष्ठेयुः। तदपि नास्तीति नूनं दैवेन निहताः। यतः विद्यमानामपि तां कथां हित्वा तत्रापि सुधारूपाम्। असतां गाथाः 'यास्तु श्रुताः' इति वाक्योक्तधर्मयुक्ताः शृण्वन्ति। ननु शास्त्रात्कथं न निवर्तन्ते तत्राऽऽह—पुरीषमिव विड्भुज इति। भगवता तथैव ते उत्पादिताः, विद्यमानेऽपि स्वन्ने सूकरादयः स्वभक्ष्यमेव भक्षयन्ति। तेषां जिह्वा न रसान्तरं गृह्णाति॥ १९॥

एवं तेषां स्वरूपसाधनप्रवृत्तिं दूषयित्वा फलमाह—

**दक्षिणेन पथाऽर्यम्णः पितृलोकं व्रजन्ति ते।**
**प्रजामनु प्रजायन्ते श्मशानान्तक्रियाकृतः॥ २०॥**

दक्षिणेनेति। दक्षिणमार्गा बहवः सन्ति, तद्व्यावृत्त्यर्थमाह—अर्यम्ण इति। अर्यमाऽत्र यमः, मुख्ययमस्य स्वाधिकारप्रच्युतौ स यमो भवतीति पूर्वमुक्तत्वात् 'अबिभ्रदर्यमा दण्डम्' इति वाक्यात्। अनेन मुख्ययमश्चेत्तिष्ठेत्तदा तेषां सापि गतिर्न भवेदिति सूचितम्। तस्य वैष्णवत्वात्, तद्वक्ष्यति षष्ठे। येन मार्गेण यमो गच्छति क्रूरात्मा, स भयानको मार्गः, परं नाधोगतिरूपः, किन्तु तल्लोकात्मकः। यत्राग्निष्वात्तादयः पितरस्तिष्ठन्ति, तेन पथा ते पितृलोकं व्रजन्ति। अनेन मार्गक्लेशः तत्र नीरयभावश्च सूचितः। पुनरावृत्तिमाह—प्रजामनु प्रजायन्त इति। प्रजा स्वस्यान्तःकोशः, तस्य स्वयमन्तःकोशा भवन्ति, पुत्रगृहे पुत्रा भवन्तीत्यर्थः। ननु श्राद्धादिना मोक्षो भवतीति श्रूयते सुदारिद्रोपाख्याने, तत्कथमुच्यते पितृलोकादागतस्य जन्मेत्याशङ्क्य, तेषां पुत्रगृहे जन्मैव मोक्ष इति श्रुत्यर्थं वक्तुं प्रजामनु प्रजायन्त इति श्रौतं पदमुक्तम्। 'प्रजामनु प्रजायन्ते तदु ते मर्त्यामृतम्' इति श्रुतेः। तत्रापि नाल्पस्य तत्, किन्तु श्मशानान्ता निषेकाद्या वैदिक्यः क्रियाः कृता येषु ते श्मशानान्तक्रियाकृतः॥ २०॥

एवं बहुवारगमनागमनाभ्यामिहैव लोके जायस्व, म्रियस्वेति मार्गे गत्वा ततोऽपि सर्वथाक्षीणसुकृताः देवानां चक्षुष्पाग उत्पाद्य तैर्विभ्रंशितोदयाः सन्तः तदवध्यानजनितपापाः पूर्ववदधोलोकेषु गच्छन्तीत्याह—

**ततस्ते क्षीणसुकृताः पुनर्लोकमिमं सति!।**
**पतन्ति विवशा देवैः सद्यो विभ्रंशितोदयाः॥ २१॥**

तत इति। पुनरिमं लोकमिति ततः पुनरूर्ध्वगमनाभावः सूचितः। सतीति सम्बोधनं तेषु रागाभावबोधनार्थम्। देवैरेव विवशाः। सद्य इति विलम्बाभावार्थम्, विलम्बेन नाशे जाते प्रतिक्रियां करिष्यन्तीति तथोक्तम्। अन्तकालेऽपि प्रतिक्रियाकरणनिवृत्त्यर्थं विभ्रंशित उदयो येषामित्युक्तम्। तदैव सर्वस्वनाशो मरणं चेतिवत्। उदयो धनाचैश्वर्याणि॥ २१॥

---

१ वा तिष्ठेयुः ख ग च अवतिष्ठेयुः क. २ यमत्वे क. ड. ३ आवश्च तस्य क. ड.

एवं भगवद्भजनार्थमेव तन्निन्दामुक्त्वा प्रकृतमाह—

**तस्मात्त्वं सर्वभावेन भजस्व परमेष्ठिनम्।**
**तद्गुणाश्रयया भक्त्या भजनीयपदाम्बुजम् ॥ २२ ॥**

* तस्मात्त्वमिति। ये केचिद्यथाकथञ्चिद्भवन्तु नाम, त्वं सर्वभावेन भगवन्तं भजस्व। यावन्ति रूपाणि भजनीयानि ऐहिकपारलौकिकसाधनानि, देहमारभ्येश्वरपर्यन्तं यावन्तो भजनीया यैर्यैर्भावैश्च ते सर्वे भावा भगवत्येव कर्तव्या इति सर्वभाव। **परमेष्ठिनमिति**। परमोत्कर्षस्थानाधिष्ठितं पुरुषोत्तममिति यावत्। भक्त्यैव च भजनं न मार्गान्तरेण, अन्यस्य तथा साधकत्वाभावात्। सापि भक्तिस्तद्गुणानेवाऽऽश्रित्य वर्तते, अन्यथा कालादिभिरुपहता भवति। लोकादिभिः प्रतिबन्धात् कदाचिदपि भजनाभावमाशङ्क्य तन्निराकरणार्थमाह—**भजनीयपदाम्बुजमिति**। सर्वैरेव भजनीयं पदाम्बुजं यस्य। साभिमानमार्गाणां सर्वेषां पुनरावृत्तिहेतुत्वान्निरभिमानमार्गः समाश्रयणीयः, स तु भगवन्मार्ग एवेति निश्चीयते। अन्यथा स्वस्य पूर्वसंस्कारे बलिष्ठे विद्यमाने शास्त्रीयज्ञानं प्रकृत्यविवेकेन कर्तृत्वमित्यादि दुर्बलमेव मत्वा न कदाचिदप्यहङ्कारनिवृत्तिर्भवेत्। भगवानेव सर्वं करोतीत्युक्तेऽपि भजनाभावे न सिद्ध्यतीति भजनमवश्यं कर्तव्यमित्युक्तम् ॥ २२ ॥

तस्य मोक्षपर्यवसायित्वं स्वमार्गानुसारेणाऽऽह—वासुदेव इत्यग्रिमे—

**वासुदेवे भगवति भक्तियोगः प्रयोजितः।**
**जनयत्याशु वैराग्यं ज्ञानं यद्ब्रह्मदर्शनम् ॥ २३ ॥**

। **ज्ञानवैराग्यजननं परीक्षा ज्ञानसम्भवे। ततश्च निरहङ्कारो ज्ञानमेव हरिः परः॥ १॥ वैराग्यस्यापि माहात्म्यं युक्तिस्तज्जननेऽपि च। तदर्थं च जगज्जातं वैराग्ये सर्वनिश्चयः ॥ २ ॥** तत्र प्रथमं भक्तेर्मोक्षसाधकत्वं ज्ञानवैराग्यजननद्वारेति भक्त्या ज्ञानवैराग्योत्पत्तिमाह—वासुदेव इति। **वासुदेवे भगवतीति** हृदये आविर्भूते भगवति प्रत्यक्षतया **भक्तियोगः** फलसाधक इत्युक्तम्। प्रथमतः स्वसामर्थ्यादेवाऽऽशु वैराग्यं ज्ञानं च जनयति। ज्ञानं प्रतीकविषयमपि भवतीति विशिनष्टि—यज्ज्ञानं ब्रह्म दर्शयतीति, ब्रह्मदर्शनरूपं वा। यस्मिन् जाते ब्रह्माऽऽविर्भवति। तद्देवतारूपं ज्ञानम्। मननादिना वा साधने सम्पन्ने साक्षात्कार इति ॥ २३ ॥

ज्ञानस्य परीक्षामाह—

**यदाऽस्य चित्तमर्थेषु समेष्विन्द्रियवृत्तिभिः।**
**न विगृह्णाति वैषम्यं प्रियमप्रियमप्युत ॥ २४ ॥**

---

प्रकाशः।

* तस्मादित्यत्र। अन्यथेति। यदि साभिमानमार्गोऽप्यपुनरावृत्तिहेतुः स्यात्। प्रकृत्यविवेकेन कर्तृत्वमित्यादीनि। प्रकृतीति स्वस्य भेदाज्ञानेन कर्तृत्वमित्यादिरूपमित्यर्थः। भजनाभावे नेत्यत्र भिन्नम्।

। वासुदेव इत्यत्र। ब्रह्म दर्शयतीत्यादिनोक्तं पक्षद्वयं व्याकुर्वन्ति—यस्मिन्नित्यादि। देवतारूपमिति। एतच्च सप्तमस्कन्धे यद्भगवता दत्तं तादृशं ज्ञेयम्।

* यदाऽस्येति । अस्य ज्ञानाधिकारिणः पुरुषस्य, चित्तं वस्तुत समेष्वेवार्थेषु पाञ्चभौतिकेषु भगवदाधारेषु भगवद्रूपेषु वा, इन्द्रियवृत्तिभि स्वरागजनिताभि यदा वैषम्य न गृह्णाति । तस्य वैषम्यस्य स्वरूपमाह–विभिय प्रियमिति । रागकृतमेवेत्युक्तम्–उतेति । प्रकारान्तरमप्युक्त साध्वसाध्वित्यादि ॥ २४ ॥

किमेव निदर्शनसहिते ज्ञाने भवतीत्याकाङ्क्षायामाह—

**स तदैवाऽऽत्मनाऽऽत्मानं निःसङ्गं समदर्शनम् ।**
**हेयोपादेयरहितमारूढं पदमीक्षते ॥ २५ ॥**

× स तदैवेति । ज्ञानरूप मात्रेनाऽऽत्मनैवाऽऽत्मान स्वस्वरूप प्रकृतिसङ्गरहित सर्वत्र समदर्शनरूपम् । प्रकृतितद्विकारोपधानरहितमित्यर्थ । हेयोपादेयरहित प्रवर्तकनिवर्तकसर्वशास्त्राणा पर्यवसानरूप पदमारूढं साध्याशरहितमीक्षते । मुक्तरूप वात्मानमेव पश्यतीत्यर्थ ॥ २५ ॥

– ननु ज्ञान एव जाते कथमेव भवति. न हि ज्ञान वस्तूत्पादयति । अत स्वभावत एवात्मा तादृश इति मन्तव्यम् । ततश्च न साङ्ख्यसिद्धि, किन्तु मायावादिनामिव मत सेत्स्यतीत्याशङ्क्य ज्ञानस्यैव तत्सम्पादकत्वमुपपादयति—

**ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान् ।**
**दृश्यादिभिः पृथग्भावैर्भगवानेक ईयते ॥ २६ ॥**

ज्ञानमात्रमिति । ज्ञान नामाविर्भूत नित्य केवलोपनिषद्वेद्यं चैतन्यम्, तदेव ब्रह्मशब्देनोच्यते ब्रह्मप्रकरणे । तदेव पुन स्वेच्छयाविर्भूतैश्वर्यमीश्वरशब्देनोच्यते । यस्मिन्नाविष्टे प्राकृतोऽपि पुरुषः ' मय्येव सकलं जात मयि सर्वं प्रतिष्ठितम् ' इति मन्यते । अतस्तदेवेश्वररूपं ब्रह्मरूप च । उपाख्यानान्तरेऽपि अन्तर्दृष्ट्या बोधनभेदप्रकारेणाऽऽत्मेत्युच्यते । तदेव ज्ञानमन्तर्दृष्ट्या आत्मत्वेन दृष्ट परमात्मशब्देनोच्यते । तदेव च पुनर्बहिर्दृष्ट्या दृष्टमीश्वरशब्देन कालशब्देनोच्यते । स एव च पुनरुपास्यरूपेण व्यवहाररूपेण

---

प्रकाशः ।

* यदेत्यत्र । अप्युक्तमिति । अपिशब्दोक्तम् । ' इन्द्रो मायाभि ' इत्यत्र मायापदेन इन्द्रियवृत्ति शास्त्रार्थप्रकरणे व्याख्याता, तस्येदमेव पद्य मूल ज्ञेयम् ।

× स तदेत्यत्र । मुक्तरूप वेत्यादि । उक्तरीत्या सिद्धत्वेन वा स्वात्मनि दृष्टे निरहङ्कारो भवतीत्यर्थ ।

– ज्ञानमात्रमित्यत्र । आभासे । न साङ्ख्यसिद्धिरित्यादि । साङ्ख्ये हि वस्त्रमालिन्यवत् आत्मनः प्रकृतितद्विकारसंसर्गेणाऽऽगन्तुको बन्ध इति क्षारेण वसनशोधनवन्नित्यानित्यवस्तूनामुक्तरीत्या विवेकेन तादृश आत्मा साध्यते, न तु स्वत एव । एतादृशस्याऽविद्यानिवृत्त्या विस्मृतकण्ठमणिस्मरणन्यायेन पश्चात्तादृशज्ञानमिति स्वीक्रियते । अत एव ज्ञानेनाऽहङ्काराध्यासनिवृत्त्यङ्गीकारे न साङ्ख्यसिद्धि, किन्तु तथेत्यर्थ । तत्सम्पादकत्वमुपपादयतीति । मोक्षसम्पादकत्वम् । मोक्षो हि ' मुक्तिर्हित्वाऽन्यथारूप स्वरूपेण व्यवस्थिति, इतिलक्षणक । तथा सति यथा वसने क्रियया शोधनम्, तथा अत्रात्मनि ज्ञानेन शोधन विधाय स्वरूपमाविर्भाव्यत इति तथात्वमुपपादयतीत्यर्थ । निवृत्तौ । अत्र श्लोके भिन्नलिङ्गकमीश्वरपद द्वयं भिन्नार्थकमिति बोधयितु प्रथमस्यार्थमाहु –तदेव पुन स्वेच्छयेत्यादि । उपाख्यानान्तर इति । शारीरब्राह्मणमैत्रेयीब्राह्मणादौ । बोधनभेदप्रकारेणेति । द्रष्टृत्वदृश्यत्वादिरूपेण प्रकारेण ।

च दृष्टः पुमान् त्रिविधपुरुषरूपेण भासते। अतो मूलभूते तस्मिन्नाविर्भूते सर्वमेव सङ्गच्छत इति न किञ्चिदनुपपन्नम्। नन्वेकमेव वस्तु कथमनेकधा भवतीत्याकाङ्क्षायामाह—इत्यादिभिरिति। द्रष्टृभावभेदेनैव एक एव भगवान् बहुधा ईयते। भावास्तु पृथक्। यथैक एव देवदत्तः पित्रादिशब्दैरनेकभावैर्व्यवह्रियते, भवति च तथा। तथापि यस्य यो भाव उत्पद्यते, तं प्रति तथैवेति सर्वथार्थसिद्धिः। अतो मूलरूपाविर्भावार्थं यत्नः कर्तव्य इति सिद्धम्॥ २६॥

ज्ञानस्य प्रशंसा स्वरूपं चोक्त्वा वैराग्यस्य प्रशंसास्वरूपाण्याह—एतावानेवेति चतुर्भिः—

**एतावानेव योगेन समग्रेणेह योगिनः।**
**युज्यतेऽभिमतो ह्यर्थो यदसङ्गस्तु सर्वतः॥ २७॥**

* प्रथमतः सर्वेषां शास्त्राणां वैराग्यमेव फलमिति प्रमाणनिर्णयमाह। संपूर्णेनापि योगेन। योगशास्त्रे सर्वेषामेव ज्ञानभक्तिकर्मादीनां योगशब्दवाच्यत्वेव। अतो योगिनः सर्वैरेवोपायैरयमेवार्थो युज्यते। यदा सर्वतश्चेदसङ्गो भवति। तुशब्दः पक्षान्तरं व्यावर्तयति। ये वैराग्यं नाभिमन्यन्ते, वैराग्याभावे ज्ञानमेव न भवेत्। जातं वा न किञ्चित्कार्यं कुर्यात्, दोषस्यानिवृत्तत्वात्। सर्वथा निवृत्ते दोषे स्वप्रकाशरूप आत्मा आविर्भाविष्यतीति कोऽपि न तत्र प्रयासः कर्तव्यः। अतः सर्वशास्त्राणां फलं वैराग्यम्॥ २७॥

+ एवं प्रमाणविचारेण वैराग्योत्कर्षमुक्त्वा प्रमेयविचारेणाप्याह—

**ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम्।**
**अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणा॥ २८॥**

ज्ञानमेकमिति। वस्तुतः सर्वं जगद् बोधान्वयव्यतिरेकानुसरणात् बोधमात्रमित्यवसीयते। यः कश्चन

---

प्रकाशः।

त्रिविधपुरुषरूपेणेति। क्षराक्षरपुरुषोत्तमरूपेण। मूलभूत इति। 'ज्ञानं परमगुह्यं मे' इति श्लोकोक्तरूपे। न किञ्चिदनुपपन्नमिति। तथा च सर्वमतोपपादकत्वात् ज्ञानस्य स्वरूपावस्थानरूपमोक्षसाधकत्वे किं वक्तव्यमिति भावः। भवति च तथेत्यादि। तथाच, 'तं यथा यथोपासते तथैव भवति, तद्धैतान् भूत्वाऽवति' इति श्रुतेः, 'कामं क्रोधम्' इत्यादिषु सिद्धान्तिदर्शनाच्च तथेत्यर्थः। अत इति। मूलज्ञानस्य भगवद्रूपत्वात्।

* एतावानित्यत्र। योगफलकथनेन कथं सर्वप्रमाणनिर्णय इत्याकाङ्क्षायामाहुः—योगशास्त्र इत्यादि। तथा च, योगपदेन सर्वसाधनसङ्ग्रहे तत्फलकथनादेव तद्बोधकप्रमाणनिर्णय उक्तः, तेन वैराग्यमाहात्म्यमत्र साधितमित्यर्थः। न मन्यन्त (?) इति। तेषामिति शेषः।

+ ज्ञानमेकमित्यत्र। प्रमेयविचारेणेति। स्वरूपविचारेण। ननु सर्वस्य कथं बोधान्वयव्यतिरेकानुसरणमित्याकाङ्क्षायां तदुपपादयन्ति—यः कश्चनेत्यादि। तथा च 'अन्वयव्यतिरेकाभ्यां यत्स्यात्' इत्यत्र सर्ववस्तुस्वरूपस्य सदन्वयव्यतिरेकानुसरणात् सद्रूपत्वं यथा सिद्धम्, तथाऽत्र सर्वव्यवहारस्य बोधनान्वयव्यतिरेकानुसरणाद्बोधे पर्यवसानेन बोधमात्रत्वमित्यर्थः। ननु बोधेन जायमानोऽपि व्यवहारो नाभासत इति

---

१ भावार्थवत् ङ,

लौकिको वैदिकः, सर्वोऽपि व्यवहारः बोध एव पर्यवसित इति । यथा सर्वे तरङ्गाः समुद्रे पर्यवसिता इति । अत एकमेव ज्ञानं पराचीनैः[1] प्राकृतैरिन्द्रियैर्व्यापकत्वात्, बृंहणत्वाच्च निर्गुणमेव, गुणानां तदतिरिक्तानामभावाद् घटपटाद्यर्थरूपेण भ्रान्त्याऽवभाति । अतः शुक्तिका रजतवत् प्रतिभासत इति वस्तुविचारेणाऽपि तत्रासक्तिर्नोचिता । ते हि प्राकृताः स्वबुद्ध्यनुसारेणैव तद्गृह्णन्ति । एकदेशग्रहणेन, स्वस्वभावग्रहणेन च तदन्यथा गृहीतं भवति । अतः स्वेन्द्रियादिधर्मा एव तत्रारोप्य गृह्यन्त इति ख्यातिवादा बहुविधा उत्पन्नाः । धर्माणामेव वस्तुतः प्रतिभानमित्यन्यख्यातिः । आधारमपि पुरस्कृत्य तत्र कञ्चनार्थं परिकल्प्य ग्राहकधर्मसम्बन्धादन्यथेत्यप्याहुः । यथा प्रतीतिर्भ्रान्ता तथा कल्पनापीति नात्यन्तमाग्रहः कर्तव्यः । शब्दादि-

प्रकाशः ।

सोऽपि सन्मात्रपर्यवसित एव, न तु बोधपर्यवसित इति शङ्कायामाहुः यथा सर्वे इत्यादि । तरङ्गा यथा जलादुत्पद्यमानाः समुद्रे पर्यवस्यन्ति, अत एव तरङ्गेपूत्पन्नोऽपि फेनः समुद्रफेन एवोच्यते, न तु तरङ्गफेनो जलफेनो वा; तथा सर्वे व्यवहाराः सता उत्पद्यमानाः सति पर्यवस्यन्तोपि सद्व्यवहारस्य ज्ञानमन्तरेणाऽभावाद्बोध एव पर्यवसिता इति मूलज्ञानस्य सतश्चाऽभेद एवाऽध्यवसेय इत्यर्थः । तेन सिद्धमाहुः—अत इत्यादि । तदतिरिक्तानामभावादिति । तज्जन्यत्वेन तदतिरिक्तत्वाभावात् । एवं बहिर्मुखप्रतीतेर्भ्रान्तित्वं व्युत्पाद्य वैराग्यजनिकां युक्तिं तत्र स्फुटीकुर्वन्ति—अतः शुक्तीत्यादि । तथा च, शुक्तिकारजतं यथा बुद्धिरूपत्वेऽपि तदतिरिक्तत्वेन भासते, तथा सर्वं ब्रह्मात्मकज्ञानरूपत्वेऽपि तदतिरिक्तं भासत इति पुरःस्फूर्तिके रूपे आसक्तिर्न कार्येत्यत्र प्रमेयस्वरूपविचार एव तज्जनिका युक्तिरित्यर्थः । नन्वेवं सर्वस्य ज्ञानरूपत्वे कथमर्थत्वेन प्रतीतिरित्याकाङ्क्षायां पराचीनैरिन्द्रियैरित्यनेनोक्तमिन्द्रियदोषं तत्र हेतुत्वेन स्फुटीकुर्वन्तिते हीत्यादि । तथा बुद्धिदोषादर्थत्वेन प्रतीतिरित्यर्थः । ननु सर्वजनीनप्रतीतेः कथं भ्रान्तत्वमित्याकाङ्क्षायां प्रकारमाहुः—एकदेशेत्यादि । व्यापकस्य सर्वाकारस्य ज्ञानस्य य एकदेशः कश्चिदाकारः, परिच्छेदश्च तद्ग्रहणेन, स्वस्य यः स्वभाव- परावत्त्वम्, तद्ग्रहणेन च तद्ब्रह्मात्मकं निर्गुणं ज्ञानम्, अन्यथा अर्थरूपेण गृहीतं भवति । अतो धर्माणां पराक्त्वस्य चाऽनन्तविधत्वात् ख्यातीनामपि बहुविधत्वेन, तासां प्रतीतीनां स्वरूपविचारेऽपि सर्वजनीनत्वाभावेन च भ्रान्तत्वमित्यर्थः । तान् ख्यातिवादान् दिङ्मात्रेण बोधयितुं ख्यातिस्वरूपमाहुः—धर्माणामित्यादि । वस्तुतो वस्तुनः सकाशात् वस्त्वनालोच्य वा धर्माणां शुक्तिरजतादौ रूपस्य, तिक्तगुडादौ रसस्य, दिङ्मोहादौ प्राचीनत्वादेरित्येव केवलानां धर्माणां रजतादौ वस्तुशून्यानामेव बुद्धौ प्रतिफलितानां तथा भानमित्यन्यख्यातिस्वरूपम्, एवं प्रकृतेऽपि ज्ञानरूपधर्मिशून्यानां तदाकारादीनां भानं ज्ञेयम् । अन्यथाख्यातिस्वरूपमाहुः—आधारमित्यादि । आधारमिदंत्वावच्छिन्नं पुरस्कृत्य तत्र कञ्चनार्थं पूर्वदृष्टं वस्तुधर्मं रजतत्वादिकं रजताद्यभेदं वा परिकल्प्य, ग्राहकाणां मनइन्द्रियाणां धर्मरूपो यो दोषः, तत्सम्बन्धात् शुक्तिप्रभृतिः पुरोवर्त्येवाऽन्यरजतादिरूपेणाभास इत्यन्यथाख्यातिरप्याहुरित्यर्थः । एवमनिर्वचनीयं रजतमुत्पद्यत इत्याद्यपि बोध्यम् । एवं तासां सर्वप्रतीतीनामसार्वजनीनत्वं साधयित्वा तासां तद्वादानां चाऽनादरणीयत्वमाहुः—यथेत्यादि । एतेन ' सर्वत्र तस्य सर्वं हि सर्वसामर्थ्यमेव च' इति विवेकधैर्याश्रयग्रन्थोक्तन्यायात् ' सर्वं सर्वमयम् ' इत्यादि तापनीयश्रुतेश्चाख्यातिवाद एव ब्रह्मवादिसिद्धान्त इत्यपि बोधितम् । शब्दादिपदं व्याकुर्वन्ति—शब्देत्यादि ।

[1] पराचीनैरेव. क

धर्मवांश्चायम् । आदिशब्देनार्थः,(?)तद्वच्छब्दधर्मादयो गृहीताः। ते च धर्मा अनादिवासनया स्फुरन्तीति मिथ्यावादिनोऽप्येकदेशिवैराग्यप्रवेशेन सङ्गृहीता भवन्ति ॥ २८ ॥

तानेव भेदान् गणयति युक्त्या विचारयन्निव—

**यथा महानहंरूपस्त्रिवृत्पञ्चविधः स्वराट् ।**
**एकादशविधस्तस्य वपुरण्डं जगद्यतः ॥ २९ ॥**

× यथेति । तत्त्वानां तद्भावापन्नत्वेन तत्त्वशब्दवाच्यत्वोपपत्तेः, यथा महदादयः प्राकृतैर्धर्मैः कृत्वा तत्तच्छब्दवाच्या जायन्ते । वस्तुतोऽन्यधर्मवत्त्वेन ज्ञानमेव तत्तच्छब्दवाच्यम् । एवमिदानीमपि प्रतीयमानमित्यर्थः । अहङ्कारस्यानेकरूपत्वादहंपदस्यात्मशब्दवाच्यत्वाच्च तत्सन्देहनिवृत्त्यर्थं रूपपदम् । त्रिवृत्त्रिविधः । ततः सर्वे पञ्चविधाः, मात्राभूतप्राणादिरूपाः । एकादशविध इन्द्रियरूपः । मध्ये स्वराडिति पुरुषो नारायणः । इन्द्रियाद्यपेक्षारहित इति ततः पूर्वं निरूपितः । तस्य वपुर्विराट्, अण्डं तस्यावरकं जगत्तस्यैव मध्ये कार्यम् । यतो धर्मसहितज्ञानप्रतीत्यैव केवलमवभासते ॥ २९ ॥

साधितं युक्त्या फलमुखेन साधयति—

**एतद्वै श्रद्धया भक्त्या योगाभ्यासेन नित्यशः ।**
**समाहितात्मा निःसङ्गो विरक्तः परिपश्यति ॥ ३० ॥**

एतदिति ।। एतत्पूर्वोक्तं विरक्तः परिपश्यति, नाविरक्तः । एतच्च वैराग्यं भगवतः षष्ठो गुण इति ततः पूर्वं पञ्चभिः पदार्थसाधकैः सिध्यतीति तत्साधकत्वेन पञ्चसाधनान्याह—अत्रार्थे आस्तिक्यबुद्धिर्भगवति बुद्धिः, अष्टाङ्गो योगश्चेति गुणत्रयम् । दोषाभावद्वयमाह—**समाहितात्मा निःसङ्ग** इति । अन्तर्बहिः सङ्गाभावो निरूपितः । एवं सप्तविधः शास्त्रार्थो निरूपितः । भगवत्प्रतिपादकत्वेन, गुणानां प्रत्येकप्रकारप्रतिपादकत्वेन च । अतः शास्त्राणां निरूपणभेदेषु परस्परविरोधो नाशङ्कनीयः ॥ ३० ॥

उपसंहरति—

**इत्येतत्कथितं गुर्वि ! ज्ञानं यद्ब्रह्मदर्शनम् ।**

---

प्रकाशः ।

अयमिति अर्थरूपो ज्ञानधर्मः । अर्थतयेति । अभिधेयतया । तद्वदिति । अर्थवत् । तथा च ज्ञानरूप एव ब्रह्मणि तदविदुषामर्थशब्दतद्धर्मज्ञानरूपो भ्रम इत्यर्थः । एतेन सिद्धमाहुः—ते चेत्यादि । **एकदेशिवैराग्यप्रवेशेनेति** । एकदेशिनोऽभिमतं यद्वैराग्यम्, तत्प्रवेशेन । तथा च मिथ्यावादो मुख्यपदस्यैवैतस्माद्भ्रमस्याप्येकदेश इत्यर्थः ।

× यथेत्यत्र । तद्भावापन्नत्वेनेति । तस्य भावस्तत्त्वम्, तदापन्नत्वेन । यथेति । भ्रान्त्या अनारोपितरूपत्वेन । अन्यधर्मवत्त्वेनेति । हेतुनेत्यर्थात् । एवमित्यादि । तथा च तथा भ्रान्त्या, तथेदानीमपीत्यर्थः । यत इत्यस्यैव विवरणम्—धर्मसहितज्ञानप्रतीत्येति । एतेन वैराग्याभावाज्जगद्भ्रान्तमित्युक्तम् । अग्रिमे वैराग्यात् सर्वनिर्णयः स्पष्ट एव ।

---

१ अर्थतरतद्रूप.ग, अर्थनद्याद्''''त ड. २ उपपत्तौ,क,घ. ३ शब्दवाच्या.क.घ. ४ तत्रार्थे.ध.तत्रास्तिक्य.घ.तत्रार्थे,ङ.

येनावबुद्ध्यते तत्त्वं प्रकृतेः पुरुषस्य च ॥ ३१ ॥

* इत्येतदिति । हे गुर्वि एतावदुपदेशेऽपि नाऽहं गुरुः, किन्तु त्वमेव गुरुः। आज्ञया परं निरूपितमिति । इतीति समाप्त्यर्थे । एतत्सर्वं ज्ञानमेव निरूपितम् । सप्तविधोऽपि सिद्धान्तो ज्ञानविद एवेति तेन उपसंहारः । अनेन ब्रह्माविर्भावो भवतीति ब्रह्माविर्भाव फलमुक्तम् । यद्यपि देवहूत्या पृष्टम्, ' जिज्ञासयाऽहं प्रकृतेः पुरुषस्य ' इति । तदप्यनेनैव भवतीत्याह—येनावबुध्यत इति । एवं सप्तविधं ज्ञानशास्त्रं, भक्तिशास्त्रं चापरम्, तस्य च बहुविधा भेदा उक्ताः । स हि क्रियाप्रधानः । यथा पुरुषस्य स्वरूपम्, गुणाः, कर्माणि चेति । तत्र स्वरूपप्रतिपादकं वैदिकं शास्त्रम्, षडन्यानि गुणप्रतिपादकानि । क्रियाप्रतिपादकं च भक्तिशास्त्रम् । तेषां भिन्नान्येव सर्वेषां फलानि ॥ ३१ ॥

तत्र स्वरूपमुख्यभक्तिशास्त्रयोरेकं फलमित्याह—

ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः ।
द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः ॥ ३२ ॥

ज्ञानयोगश्चेति । मन्निष्ठ इति षण्णां व्युदासः । नैर्गुण्यो भक्तिलक्षण इति निर्दुष्टो भक्तिमार्ग उक्तः । द्वयोरप्येकमेव फलम्, भक्त्याऽपि भगवान् प्राप्यते धर्मी मुख्येनाऽपि ज्ञानेन । अत एव भगवच्छब्देन लक्ष्यते भगवच्छब्दो वा लक्षणं यस्येति । अतः शास्त्रद्वयमेकं षडन्यान्यङ्गशास्त्राणीति सिद्धम् ॥३२॥

नन्वेको भगवान् कथमनेकविधानि शास्त्राणीत्याशङ्क्य दृष्टान्तेन स्पष्टयति—

यथेन्द्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः ।
एको नानेयते तद्वद्भगवान् शास्त्रवर्त्मभिः ॥ ३३ ॥

यथेन्द्रियैरिति । यथा रूपरसगन्धस्पर्शवत् द्रव्यं सर्वैरेवेन्द्रियैः पृथक् पृथक् प्रतीयते । चक्षू रूपपुरस्कारेण पदार्थं गृह्णाति, रसना रसपुरस्कारेण, घ्राणं गन्धपुरस्कारेणेत्यादि । एवमनेकधर्मयुक्तो भगवान् तद्धर्मपुरस्कारेण प्रतिपाद्यत इति सर्वेषां शास्त्राणामेक एव भगवान् तत्तद्धर्ममुख्यतया नाना ईयते॥३३॥

किञ्च, सर्वैरेव साधनैरेक एव प्राप्यत इत्याह—क्रिययेत्यादित्रिभिः—

क्रियया क्रतुभिर्दानैस्तपःस्वाध्यायमर्शनैः ।
आत्मेन्द्रियजयेनाऽपि संन्यासेन च कर्मणाम् ॥ ३४ ॥
योगेन विविधाङ्गेन भक्तियोगेन चैव हि ।

---

प्रकाशः ।

* इतीत्यत्र । तस्येति । ज्ञानरूपस्य हरेः । अन्यानीति । दर्शनानि ।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे द्वात्रिंशाध्यायविवरणं सम्पूर्णम् ।

---

१ ज्ञानमिदमेव. क ज्ञानमेवेति. ख. ज्ञानमिवेति. ड

धर्मेणोभयचिह्नेन यः प्रवृत्तिनिवृत्तिमान् ॥ ३५ ॥
आत्मतत्त्वावबोधेन वैराग्येण दृढेन च ।
ईयते भगवानेभिः सगुणो निर्गुणः स्वदृक् ॥ ३६ ॥

क्रियया स्नानादिस्मार्तक्रियया, क्रतुभिर्यज्ञैः, दानैस्तुलापुरुषादिभिः, तपः, स्वाध्यायो वेदाध्ययनम्, अवमर्शो विचारो मीमांसा । आत्मान्तःकरणमिन्द्रियाणि च तेषां जयः । सन्यासः अहंममेत्यादिसर्वपरित्यागः । कर्मणामित्यावश्यकत्वज्ञापकम् । विविधाङ्गो योगः षडङ्गोऽष्टाङ्ग इत्यादि । भक्तियोगोऽप्यनेकविधः । धर्मो यो विधीयते वैराग्यरागोपाधिभेदेन द्विविधः, अतस्तयोर्भेदमाह—यः प्रवृत्तिनिवृत्तिमानिति । आत्मतत्त्वावबोधः साङ्ख्यम् । दृढेन वैराग्येणेति विरक्तिशास्त्रम् । एवं सर्वैरेव साधनैरेक एव भगवान् पृथक् पृथगीयते । ननु सोपाधीनां गुणप्राप्तिः निरुपाधीनां चाऽऽत्मप्राप्तिरिति कथमेकफलमित्याशङ्क्याऽऽह—स एव सगुणो निर्गुणः स्वदृगात्मा चेत्यर्थः ॥ ३४ ॥ ३५ ॥ ३६ ॥

एवमेकं फलमुपपाद्य, उक्तानां भक्तिभेदानां सगुणनिर्गुणभेदप्रतिपादनार्थं चातुर्विध्यमाह—

प्रावोचं भक्तियोगस्य स्वरूपं ते चतुर्विधम् ।
कालस्य चाऽव्यक्तगतेर्योऽन्तर्धावति जन्तुषु ॥ ३७ ॥

प्रावोचमिति । भेदः पारमार्थिक इति शास्त्रं पुरस्कृत्य त्रिविधो भक्तियोग उक्तः । ते च साम्प्रतं विष्णुस्वाम्यनुसारिणः, तत्त्ववादिनः, रामानुजाश्चेति तमोरजःसत्त्वैर्भिन्नाः । अस्मत्प्रतिपादितश्च नैर्गुण्यः । एवं चतुर्विधोऽपि भगवता प्रतिपादितः "अभिसन्धाय यो हिंसाम्" इत्यादिभिः वैराग्यार्थं कालस्याप्यव्यक्तगतेः स्वरूपमुक्तम् । अव्यक्ततायां हेतुः—योऽन्तर्धावति जन्तुष्विति ॥ ३७ ॥

तस्य वैराग्यशेषत्वप्रतिपादनायाऽऽह—

जीवस्य संसृतीर्बह्वीरविद्याकर्मनिर्मिताः ।
यास्वनुप्रविशन्नात्मा न वेद गतिमात्मनः ॥ ३८ ॥

जीवस्येति । त्रिविधा गतयो जीवस्योक्ताः, प्रत्येकं बहुविधाः, अविद्याकर्मनिर्मिता इति । सर्वा एव अज्ञानोपाधिकर्मनिर्मिताः प्रावोचमितिसम्बन्धः । तासां कथनस्य प्रयोजनमाह—यास्वनुप्रविशन्निति । यासु गतिषु कर्मणा स्वयमनुप्रविशन्नात्मनो गतिं न वेद । अत एव तत्प्रवेशाभाव एवाऽऽत्मगतिर्भवतीति निषेधार्थमुक्तमित्यर्थः ॥ ३८ ॥

एवं सर्वमेव सिद्धान्तमुक्त्वा, इयं सर्गलीलेति, अस्या वक्तारो भाविष्यन्तीति येष्वेतद्वक्तव्यं येषु च न वक्तव्यम्, तानुभयान् भेदेन निर्दिशति नैतत् खलायेति चतुर्भिः—द्वाभ्यां निषेधमाह—

नैतत् खलायोपदिशेन्नाविनीताय कर्हिचित् ।
न स्तब्धाय न भिन्नाय नैव धर्मध्वजाय च ॥ ३९ ॥
न लोलुपायोपदिशेन्न गृहारूढचेतसे ।

---

१ अनु. स. ग. ८.

नाभक्ताय च मे जातु न मद्भक्तद्विषामपि ॥ ४० ॥
श्रद्दधानाय भक्ताय विनीतायाऽनसूयवे ।
भूतेषु कृतमैत्राय शुश्रूषाभिरताय च ॥ ४१ ॥
बहिर्जातविरागाय शान्तचित्ताय दीयताम् ।
निर्मत्सराय शुचये यस्याऽहं प्रेयसां प्रियः ॥ ४२ ॥

खलः सूचकः परमर्मभेदी राजसभासु प्रसिद्धः । अनुरोधात् तस्योपदेशं प्राप्नोति । अविनीतः स्तब्धः श्रद्धारहितः स्पष्टः। भिन्नो मतान्तरैः । धर्मध्वजः पाखण्डी। लोलुप इन्द्रियविषयेष्वतिचपलः। गृहेष्वारूढं चित्तं यस्य सर्वथा गृहस्थः, मम चाऽभक्तः, मम भक्तानां सर्वेषामेव वा द्वेषी । एवं नवविधा अवक्तव्या निरूपिताः । एकादशविधाश्च वक्तव्याः, अन्ये मध्यमाः। श्रवणे परमश्रद्धावान् । भक्तो भगवतः। विनीतो वक्तरि । सर्वत्र च असूयारहितश्च । तथा सर्वप्राणिषु कृता मैत्री येन । शुश्रूषायामभितो रतिर्यस्य । बाह्येष्वर्थेषु जातो विरागो यस्य । शान्तं च चित्तं यस्य । मात्सर्यरहितो निर्मत्सरः । शुचिर्यः पापादिना नाभिभूतः । अथवा शुचय इति सर्वत्र विशेषणं पूर्वोक्तनवविधस्यापि । यस्य चाऽहं प्रेयसामपि प्रियः तस्मै सर्वथा वक्तव्यम् । सर्वगुणदोषविचाराभावेनेति पृथगुक्तम् ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

एवं कथने श्रोतृगुणदोषानुक्त्वा, श्रोतुर्वक्तुश्च फलमाह——

य इदं शृणुयादम्ब ! श्रद्धया पुरुषः स्वदृक् ।
यो वाऽभिधत्ते मच्चितः स ह्येति पदवीं च मे ॥ ४३ ॥

य इदमिति । अम्बेति सम्बोधनं स्नेहसूचकम् । श्रवणे श्रद्धा मुख्यमङ्गम् । पुरुष इति यः पुरुष एव न तु स्त्रिया वञ्चनार्थं मायापुरुषः । स्वदृगित्यात्मदर्शी, अबहिर्मुख उक्तः । बहिर्मुखस्य वक्ष्यमाणं फलं न भवतीति वक्तापि चेन्मच्चितः भगवत्प्रीत्यर्थमेव न धनाद्यर्थं कथयति । युक्तं ह्युभयोर्मत्पदवीगमनम् । चकारात् कामितं च प्राप्नोतीति ॥ ४३ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां
तृतीयस्कन्धे द्वात्रिंशाध्यायविवरणम् ।

# त्रयस्त्रिंशोऽध्यायः ।

× एवमष्टभिरध्यायैर्मताष्टकमुदीरितम् ।
सर्वेषां तु फलं मुक्तिरतः साऽत्र निरूप्यते ॥ १ ॥
त्रयस्त्रिंशे तथाऽध्याये स्त्रिया मुक्तिरुदीर्यते ।
सर्गस्तदवधिर्यस्माद्देवास्ते लीलयोद्धृताः ॥ २ ॥
त्रयस्त्रिंशद्विधा लीला सर्गाख्या देवबान्धवी ।
वसवश्च तथा रुद्रा एक इन्द्रप्रजापती ॥ ३ ॥
आदित्याश्च यतः सत्त्वात्ते चतुर्दशधा मताः ।
मुक्तिः प्रसादाद्धि भवेन्न शास्त्रैः साधनैरपि ॥ ४ ॥
प्रसादश्च स्वतः प्रीते न सम्बन्धादिभिः क्वचित् ।
अतः स्तोत्रं प्रसादश्च मुक्तिश्चापि फलं ततः ॥ ५ ॥
सर्गत्वख्यापनार्थाय वक्तुः स्थितिरुदीर्यते ।
भगवत्त्वात्स्थितौ तस्य सर्वः सर्गः प्रतिष्ठितः ॥ ६ ॥
शास्त्रार्थेऽवगते सम्यक् प्रसादे यत्नवान् भवेत् ।
अतः प्रसादनार्थाय तस्या यत्न उदीर्यते ॥ ७ ॥

गोस्वामिश्रीपुरुषोत्तमजीमहाराजकृतः प्रकाशः ।

× अथ त्रयस्त्रिंशाध्यायं विवरिषवः संवादस्य समाप्तत्वात् तत्सङ्गतिं पूर्वमाहुः—एवमित्यादि । मताष्टकमिति । मुख्यभक्तिः, साङ्ख्यम्, ज्ञानम्, योगः, वैराग्यशेषं मतचतुष्टयं चेत्येवं मताष्टकम् । तथा च हेतुहेतुमद्भावः संवादसङ्गतिरित्यर्थः । शुकोक्तौ योऽवसरः पूर्वमुक्तः, 'मुक्त एव' इति कारिकया तं स्मारयन्तोऽध्यायार्थमाहुः—त्रयस्त्रिंश इत्यादि । तथेति । अवसरसङ्गत्या । तदवधिरिति, मूलप्रकृतिः पूर्वावधिर्यस्य तादृशः, तथा च मूलप्रकृतेर्मुक्तौ पुनरग्रे सर्गो बन्धश्च न भवतीत्युत्तरावधिबोधनार्थं स्त्रीमुक्त्या सर्गः शास्त्रे समाप्यते इत्यर्थः । नन्वेवं सति तत्त्वमुक्तौ सर्गसमाप्तिरिति सिद्धम्, तच्च सङ्ख्यातो विरुद्ध्यते, तत्त्वानामष्टाविंशतिसंख्याकत्वादित्याकाङ्क्षायां निबन्धे स्फुटीकृतं तत्तात्पर्यमाहुः—देवास्त इत्यादि । यस्मादितिपदमत्राऽप्यन्वेति । तथा च यस्माद्देवा एव मुक्तियोग्याः, ते बन्धादिभेदेन त्रयस्त्रिंशत्संख्याका भगवल्लीलया उद्धृताः । सर्गाख्या लीला बन्धमोक्षभेदेन द्विप्रकारिका यस्माद्देवबान्धवी देवहितकारिणी, अतो हेतोर्वसवो रुद्राश्चोनविंशतिप्रकाराः, एके बन्धकोटिनिविष्टाः । इन्द्रादयश्च यतः सत्त्वात् सत्त्वं प्राप्य वर्तमानाः, अतस्ते चतुर्दशधा मोक्षकोटिनिविष्टा इत्येवं वैदिकतया मोक्षपर्यवसायित्वबोधनाय तावत्यध्यायसङ्ख्या उच्यते, इति न तद्विरोधो दोषायेत्यर्थः । एवं शास्त्रसङ्गत्यादिकं प्रदर्श्य विशेषाकारेणाऽध्यायार्थं वदन्तो मैत्रेयोक्तेऽपि सङ्गतिं स्मारयन्ति—मुक्तिरित्यादि सार्द्धम् । तथा च मैत्रेयोक्तौ धर्मादीनां मोक्षमूलकत्वं यदभिप्रेतं तद्बोधनाय हेतुतासङ्गत्याऽत्र मोक्ष उच्यते इति भावः । शेषमतिरोहितार्थम् । एवमध्यायार्थं विशेषाकारेण निरूप्य व्याख्यानुमारभमाणाः कारिकयैवावतारयन्ति—शास्त्रार्थ इत्यादि ।

## मैत्रेय उवाच ।

**एवं निशम्य कपिलस्य वचो जनित्री सा कर्दमस्य दयिता किल देवहूतिः।**
**विस्रस्तमोहपटला तमभिप्रणम्य तुष्टाव तत्त्वविषयाङ्कितसिद्धिभूमिम् ॥१॥**

* एवं निशम्येति । एवं पूर्वोक्तप्रकारेण सर्वसिद्धान्तरहस्यं वचो निशम्य तुष्टावेति सम्बन्धः । एवं शास्त्रार्थपरिज्ञाने तत्प्रसादव्यतिरेकेण शास्त्रज्ञानसाधनफलसिद्धयो न भवन्तीति तत्प्रसादः प्राप्तव्य इति बुद्धिः केन धर्मेण तस्या जाता इत्याकाङ्क्षायामाह—जनित्रीति । येन धर्मेण तादृशं पुत्रमुत्पादितवती । सेति प्रसिद्धा स्वधर्मैस्तपसा च । भर्तृभुक्त्याऽपि स्वस्य कार्यं सिद्ध्यतीति ज्ञापयितुमाह—कर्दमस्य दयितेति । किलेति तस्या धर्मः प्रसिद्धः । देवहूतिरिति देवानां हूतिर्यस्मादिति योगेनाऽपि देवसान्निध्यम् । एवं पञ्चधा तस्या माहात्म्यमुक्तम् । किञ्च, शास्त्रफलमपि तस्या जातमित्याह—विस्रस्तमोहपटलेति । पुत्रादिषु यो मोहः तदेव पटलं ज्ञानाच्छादकं तदधः पतितं यस्याः । अत एव तं पुत्रमप्यभिप्रणम्य, नमस्कारे मोहाभावो हेतुः, गुरुत्वात् । स्तोत्रे भगवानेव हेतुः; अतः स्तोत्रमनुचितमित्याशङ्क्य, भगवतो ज्ञानकलावतार इति साङ्ख्यप्रवर्तकत्वादुपपादयति—तत्त्वविषयाङ्कितसिद्धिभूमिमिति । तत्त्वलक्षणो यो विषयो वाच्योऽर्थः, तेनाङ्किता चिह्निता या सिद्धिः साङ्ख्यशास्त्रम्, तत्त्वविषयेण चाङ्कितं यच्छास्त्रं तेन सिद्धं यज्ज्ञानं तस्य भूमिमाधारम् । पूर्वव्याख्याने प्रवर्तकं वा । तत्त्वविषयं वा ज्ञानं तत्त्वज्ञानं तेनाङ्किता या सिद्धिर्भगवतो ज्ञानकला, तस्या भूमिः ज्ञानकलावतार इत्यर्थः अतः स्तुत्यः ॥ १ ॥

* सर्वसिद्धान्तवक्तारं[3] भक्तेर्विषयमेव च । प्रसादे ह्यात्मदं देवं सप्तभिः स्तौति भास्करैः॥ १ ॥
प्रत्यक्षाश्चर्यहेतूक्तिः जन्मादेः करणाद्बृहत् । अवतारार्भतालीला मचो दारोरिवोद्गतिः ॥ २ ॥
नाम्नः स्तुत्यादिमाहात्म्यं नाम्नश्च हि हरेर्महत् । एवं तं भगवत्त्वेन स्तुत्वाऽन्ते नमनक्रिया॥ ३ ॥
हरौ कृत्यमिहैतावदतस्तुष्ट इतीर्यते । प्रथमं तव दर्शनं दुर्लभमित्याह—

## देवहूतिरुवाच ।

**अथाप्यजोऽन्तःसलिले शयानं भूतेन्द्रियार्थात्ममयं वपुस्ते ।**
**गुणप्रवाहं सदशेषबीजं दध्यौ स्वयं यज्जठराब्जजातः ॥ २ ॥**

अथेति । यद्यप्यजो महान्, अथापि यद्वपुर्दध्यौ, न तु प्रत्यक्षतया दृष्टवान् । तस्य महत्त्वमाह—जातोऽप्यजत्वं प्राप्तः । यज्जठराब्जजातः यस्य नारायणस्य जठराब्जाज्जातः । माता तु भक्ता, पुत्रस्त्वात्मैव । पुत्रेण चेन्न दृष्टः कथमाविर्भावस्थानं द्रक्ष्यति, तच्छक्तेः सर्वस्याः कार्येण सह निर्गमात् ।

प्रकाशः ।

* एवमित्यत्र । अत इति ज्ञानस्य भगवदीयत्वात् ।

* अथेत्यत्र । कारिकासु । प्रत्यक्षाश्चर्यहेतूक्तिरिति । प्रत्यक्षस्य प्रत्यक्षाश्चर्यस्य हेतूक्तिरिति द्वाभ्यां समर्थनम् । तृतीये जगतः कारणाज्जगत्कारणत्वाद् बृहत्त्वब्रह्मत्वसमर्थनम् । तस्य प्रकारः—अवतारार्भतालीलेति । चतुर्थे तु ' मचो दारोरिवोद्गतिः ' समर्थिता । शेषं स्फुटम् । आविर्भावस्थानमिति । ... त्यर्थः । तच्छक्तेरिति । मातृशक्तेः । एवं स्वविचारेण दर्शनस्य दुर्लभत्वमुक्त्वाथ प्रदेयविचारेणो...

१ वाङ्कितम् क ग ङ. २ वे तत्त्वविषयम् क. घ. ङ. ३ घ. ख, ग.

किञ्च, शयानो भगवान् सर्वैरपि द्रष्टुं शक्यते, न तु यो जागर्ति । तत्रापि सलिले शयानः अनन्यस्पष्टतया उपलभ्यत इति । किञ्च, भूतेन्द्रियादिभिर्व्याप्तं स्पष्टमुपलभ्यते, न तु तद्रहितम् । जगतामाधारभूतं च प्रत्यक्षं भवितुमर्हति, कारणं च प्रत्यक्ष भवति; अन्यथा कार्यमप्रत्यक्षं स्यात् । अन्तःसलिले सलिलमध्ये । भूतानि इन्द्रियाणि, अर्थास्तन्मात्रा , आत्मा अन्तःकरणं मनो बुद्धिरहङ्कारः चित्तमिति । एतैर्व्याप्तं 'भूतैर्यदा पञ्चभिरात्मसृष्टैः' इति वाक्यात्पुरुषशरीरं भौतिकं भवति तैर्व्याप्तं तन्मयम् । गुणानां प्रवाहो यस्मिन् । सत् व्यक्तमशेषस्याऽपि जगतो बीजम् , स्वयमजस्तु भगवानेव । एवमपि न दृष्टवान्, मया तु दृष्टमित्याश्चर्यम् ॥ २ ॥

नन्विदं रूपमन्यदेव, न तु ब्रह्मरूपमित्याशङ्क्याऽऽह—

स एव विश्वस्य भवान् विधत्ते गुणप्रवाहेण विभक्तवीर्यः ।
सर्गाद्यनीहोऽवितथाभिसन्धिरात्मेश्वरोऽतर्क्यसहस्रशक्तिः ॥ ३ ॥

* स एवेति । स एव भवान् यो ब्रह्मणा ध्यातः। यतो विश्वस्य सर्गादि विधत्ते । एतस्य जगत्कर्तृत्वं विश्वरूप इव तत्र दृश्यत इति तथोक्तम् । गुणानां प्रवाहेण अन्योन्यमेलनपरम्परया सृष्ट्यादौ करणेन विभक्तं वीर्यं यस्य । ब्रह्मादिरूपेणोत्पत्तिस्थितिप्रलयरूपं वीर्यं विभक्तमित्यर्थः। कर्तृत्वेऽपि लौकिकवन्न कर्तृत्वम्, किन्तु चिन्तामण्यादिवदित्याह—अनीह इति । न विद्यते इहा चेष्टा यस्य । ननु चिन्तामण्यादौ परेच्छा नियामिका, तथा भगवतोऽपि अन्येच्छया सृष्टिकरणे जडता स्यादत आह—अवितथाभिसन्धिरिति । अभिसन्धिरभिसन्धानमिच्छेति यावत्। स्वेच्छयैव करोतीत्यर्थः। ननु तर्हि निमित्तं स्यादत आह—आत्मेति । सर्वस्य जगत आत्मा स्वरूपं समवायिकारणमिति यावत् । नन्वेकस्य कथं द्विरूपता समवायित्वं निमित्तत्वं चेति तत्राऽऽह—ईश्वर इति। सर्वं कर्तुं समर्थो हीश्वरः । नन्वीश्वरोऽपि लोके युक्तिसिद्धमेव करोति, न तु युक्तिबाधितमित्याशङ्क्य युक्तिमाह—अतर्क्यसहस्रशक्तिरिति । अतर्क्याः सहस्रं शक्तयो यस्य । अत एकमाश्चर्यं समर्थितम् ॥ ३ ॥

द्वितीयमाश्चर्यमाह—

स त्वं भृतो मे जठरेण नाथ ! कथं नु यस्योदर एतदासीत् ।
विश्वं युगान्ते वटपत्र एकः शेते स्म मायाशिशुरङ्घ्रिपानः ॥ ४ ॥

× स त्वं भृत इति । स एव त्वं चतुर्दशलोकात्मा मे मम जठरेण कथं भृतो धृतः । नन्वस्मादेव हेतोर्नाहं ॥ इति चेत्तत्राऽऽह—नाथेति । हे नाथ स्वामिन् न ह्यन्यः स्वामी भवितुमर्हति । नन्वहं तवोदरे तदा सूक्ष्म एव स्थित इति चेत्तत्राऽऽह—कथं नु यस्योदर एतदासीति। तदेव भगवद्रूपं यद्विश्वाधारम्; गर्भ-

प्रकाशः।

स्यर्थमाह—किञ्चेत्यादि । एवामिति । दर्शनयोग्यधर्मसद्भावे ।

* स एवेत्यत्र । तत्र दृश्यत इति । कपिलस्वरूपे जगद् दृश्यते। अत इत्यादि। ब्रह्मत्वस्य स्वरूपस समर्थनाद्दौर्लभ्ये दर्शनरूपमाश्चर्यं समर्थितमित्यर्थः।

× ॥ त्वमित्यत्र स्वामीति जगत्स्वामी ।

स्थितिदशायां यदि विश्वाधारता न स्यात्, ब्रह्मत्वमपि न स्यादिति तदानीमपि विश्वाधारता वक्तव्या । तत्कथं जातमित्याश्चर्यम् । एतदिति ब्रह्माण्डरूपं स्थूलं प्रदर्शितम् । ननु ' परस्परविरोधे एकं त्याज्यम् ' इति न्यायेन गर्भस्थितेर्दृष्टत्वात् जगदाधारत्वं नास्तीति मन्तव्यमिति चेत् युगान्ते वटपत्रे एक एव माया-शिशुर्भूत्वा अङ्घ्रिपानः अङ्गुष्ठं पिबन् यः शेते, स मत्पानिति । यथा तदा बाल्यम्, जगदाधारत्वं चोभयमविरुद्धम्, तथोदरेऽपीति भावः ॥ ४ ॥

नन्वेतत्सर्वं सच्चिदानन्दरूपे ब्रह्मणि, न तु देहभाजि मयीत्याशङ्क्याऽऽह—

**त्वं देहतन्त्रः प्रशमाय पाप्मनां निदेशभाजां च विभो ! विभूतये ।**
**यथावतारास्तव सूकरादयस्तथाऽयमप्यात्मपथोपलब्धये ॥ ५ ॥**

+त्वं देहतन्त्र इति । एतदपि मुख्यसिद्धान्तानवगमात् गृहीतलीलाविग्रह इति लोकदृष्टिः, पुराणवाक्यानि च पाप्मनां प्रशमाय, आज्ञाकारिणां विभूतये च, त्वं देहतन्त्रः देहपरिकरः स्वीकृतमूर्तिः, देहाधीन इति वा प्रतीत्या । विभो इति सम्बोधनं प्रकृतोपयोगिसामर्थ्यबोधनाय । अनेन स्वेच्छया देहतन्त्रत्वमित्युक्तम् । तत्र स्वतन्त्रस्य परतन्त्रता न युक्तेत्याशङ्क्याऽऽह—यथावतारा इति । यथा सूकरादयः क्रियावतारास्तद्व्यतिरेकेण क्रिया नोपपद्यत इति, तथैवमवतारव्यतिरेकेण ज्ञानमपि न सम्भवतीति आत्मपथोपलब्धये आत्ममार्गसिद्धये ज्ञानाय अयमवतार इत्याह—तथाऽयमिति । अनेनाऽस्यावतारस्य प्रयोजनद्वयमुक्तम् । सद्रक्षाऽधर्मनाश इति सामान्यम्, आत्ममार्गभूतज्ञानार्थमिति विशेषप्रयोजनम् ॥ ५ ॥

×एवं श्लोकद्वयेन द्वितीयमप्याश्चर्यं स्थापयित्वा, रूपे आश्चर्यद्वयं प्रतिपाद्य, नाम्न्याश्चर्यद्वयमाह—यन्नामधेयेति द्वाभ्याम्—

**यन्नामधेयश्रवणानुकीर्तनाद्यत्प्रह्वणाद्यत्स्मरणादपि क्वचित् ।**
**श्वादोऽपि सद्यः सवनाय कल्पते कुतः पुनस्ते भगवन्नु दर्शनात् ॥ ६ ॥**

नामश्रवणादेर्धर्मस्य धर्मद्वारा नाममाहात्म्यं साक्षान्नाम्नश्च । तत्र प्रथममाह—यस्य भगवतो नामधेयस्य गुरोः सकाशाच्छ्रवणानन्तरं यदनुकीर्तनम्, तेन श्वादोऽपि चाण्डालोऽपि सद्यः सवनाय सोमाभिषवयोग्यत्वाय सद्यस्तस्मिन्नेव जन्मनि अवकल्पते । कुतः पुनस्तव दर्शनात्, सोमाभिषवयोग्यो भवतीति किं वक्तव्यमित्यर्थः । श्रवणानन्तरं कीर्तनकथनाद्वैष्णवदीक्षया मन्त्रोपदेशपर इति केचित् । सद्यः सवनायेति ' सर्वमेधे वायवे चाण्डालम् ' इति वाक्यात्, पर्यग्निकरणपर्यन्तं तद्योग्यत्वमित्यपरे । वस्तुतस्त्वाश्चर्यरूपं

प्रकाशः ।

+ त्वमित्यत्र । एतदिति । देहे तन्त्रत्वकथनम् ।

× यन्नामधेयेत्यत्र । द्वितीयमिति विश्वाधारस्य स्वोदरे स्थितिरूपम् । मन्त्रोपदेशपर इति । अनुकीर्तनशब्दो मन्त्रोपदेशपरः । तथा च, वैष्णवदीक्षाप्रकारेण प्राप्तोपदेशश्चाण्डालोऽपि तस्मिन्नेव जन्मनि सोमाभिषवयोग्यो भवतीति कस्यचिट्टीकाकारस्य मतमित्यर्थः । इदं मतं तंत्रावलम्बि । विष्णुतत्त्वं परिज्ञाय एकं वाऽनेकमेदवत् । 'दीक्षयेन्मेदिनीं सर्वां किं पुनश्चोपसंनतान्' इति विज्ञानोपनिषत्संहितायाः षोडशे पटले कथनादिति । श्रौतावलम्बिमतान्तरमाहुः—सर्वमेध इत्यादि । तत्र द्वितीयेऽस्वरसं स्फुटीकुर्वन्ति—वस्तुत

१ चिदानन्दरूपे ख. ट. २ प्रसाद्य ग ३ अवकल्प्यते क. ट

माहात्म्यमेव लौकिकोपपत्त्या चेत्सिध्येत्, आश्चर्यमेव न भवेत्। अधर्मसंस्कृतभूतविशेषैर्हि चाण्डालादिशरीरमारभ्यते; सर्वोत्कृष्टधर्मसंस्कृतभूतविशेषैस्तु ब्राह्मणशरीरम्। भगवन्नाम्ना दीक्षया प्राप्तेन वा सर्वान् दोषानौत्पत्तिकान् परिहृत्य, तान्येव भूतानि उत्कृष्टसंस्कारेण संस्कृतानि क्रियन्त इति नाम्नो युक्तमेव माहात्म्यम्। अनेन सर्वदोषनाशनपूर्वकसर्वगुणोत्पादकत्वं नाम्न उक्तम्। श्रवणयोग्येनानुकीर्तनेन वा। श्रवणेन दोषनिवृत्तिः कीर्तनेन गुणाधानमिति वा। नन्वेतदत्याश्चर्यमुच्यत इत्याशङ्क्य कैमुतिकन्यायेन तदुपपादयति—यत्प्रह्वणाद्यत्स्मरणादिति। प्रह्वो नम्रीभावो नमनमिति यावत्। नम्रीभावस्याऽऽख्यानमप्रसिद्धम्; स्मरणस्य तु वाल्मीकेः; स हि चण्डाल एव मार्गघातकः, ऋषेरुपदेशात्पूर्वं महर्षिभावनां कृत्वा पश्चाद्रामस्मरणेन तस्मिन्नेव जन्मनि वाल्मीकिर्जात इति न किञ्चिदनुपपन्नम्। अत एव क्वचिदित्युक्तम्। यत्र नाम रूपं वा स्वसामर्थ्यं प्रकटयति, तत्रैवमेवेत्यतिप्रसक्तिरपि निवारिता। श्वादश्चाण्डालानामधमः। उत्कृष्टस्योत्तमत्वे कः सन्देह इत्यपिशब्दार्थः। ते दर्शनात् सवनाय पुनः कुतः कल्पते, पूर्वमेव जातत्वादिःस्यनकाराध्याहारपक्षेऽर्थः। अथवा कुत इति किमित्यर्थे अव्ययम्; किं पुनर्भगवद्दर्शनात्सवनाय कल्पत इति वक्तव्यमित्यर्थात्। एवं पर्यवसानवृत्त्या नामश्रवणादेर्माहात्म्यमुक्तम्॥ ६॥

साक्षान्नाम्नो माहात्म्यं प्रतिपादयन्, महादवत् भगवत्स्पृष्टिमध्यत्वात् ब्राह्मणापेक्षया श्वपचो महानिति वदन् तत्र युक्तिमाह—

**अहो बत श्वपचोऽतो गरीयान् यज्जिह्वाग्रे वर्तते नाम तुभ्यम्।**
**तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृणन्ति ये ते॥ ७॥**

अहो बतेति। न च वक्तव्यं ब्राह्मणाच्छ्वपचः कथं महानिति, न ब्रूमो वयं जात्या, स्वाचारेण, कर्मणा वा, श्वपचो महानिति; किन्तु हेत्वन्तरेणैव स महान्। तदाह—श्वपचोऽतो गरीयानिति। प्रथमतो नाममाहात्म्ये हृदयं प्रविष्टे पूर्वं ब्राह्मणमाहात्म्यं ज्ञातवत्या इदानीं हीनभावे अहो इत्याश्चर्यम्। ब्राह्मण्यदृष्ट्या बतेति खेदे। स्वस्य ब्राह्मण्याभावेनैतावत्कालं खिन्नायाः नाममाहात्म्ये अवगते सति बतेति हर्षे वा। अतो हेतोः श्वपचो गरीयान्। निर्वृतोऽपि ब्राह्मणः स्वस्य स्वकर्मणामुत्कर्षं ज्ञात्वा, कदाचिदन्यदुच्चारयेत्, अभिमानाद्विदोषयुक्तो वा भवेत्; अतस्तत्र नाम न तिष्ठेत्। अतो निरन्तरं नामस्थानं श्वपचजिह्वैव, तस्यैव तथा दर्शनात्; स निरूपितो वाल्मीकिः। किञ्च, यज्जिह्वाग्रे विद्यमानमपि नाम तुभ्यं त्वदर्थमेव; न तु तेनाऽपि शुद्धौ जातायां कार्यान्तरं करोति; किन्तु यथा स रामकथामेव लोके प्रकाशितवान्। एतन्नाममाहात्म्यमसम्भावितं मत्वा युक्त्या साधयति—तेपुस्तप इति। ये पूर्वजन्मनि प्रथमं तपस्तेपुः। ततः शुद्धब्राह्मणजन्मनि जुहुवुः यज्ञादिकं कृतवन्तः। ततोऽप्युत्कृष्टजन्मनि सस्नुः सर्वतीर्थाभिगमनं कृतवन्तः। ततोऽग्रिमजन्मनि आर्याः सन्तो जाताः वेदवेदार्थपरिनिष्ठिताः। ततोऽप्यग्रिमजन्मनि परमोत्कृष्टदेहं प्राप्य, व्यासवाल्मीकिशुकपराशरादिरूपा भूत्वा ब्रह्माऽनूचुः, ब्रह्मोपदेशकर्तारो जाताः। त एव नाम गृणन्ति। अतः श्वपचस्याऽपि तथा नामग्रहणे केवलमल्पपापवशाद्भगवदिच्छया नाममाहात्म्यं ख्यापयितुं श्वपचत्वं जातमिति निरन्तरनामोच्चारणादवसीयते। अयं महानेव तथा जात इति; अतो युक्तमुक्तमित्यर्थः।

प्रकाशः।

इत्यादि। वाल्मीकिरिति वाल्मीकेरुपाख्यानम्। तथा च नाममाहात्म्यपक्ष एव मुख्य इत्यर्थः।

१ हर्षे वा, क. ख २ धर्माणाम् ख. ग. ३ सर्वोत्कृष्टजन्मनि, ग. ङ.

एवं भगवतो माहात्म्यं साक्षात्परम्परया चोक्त्वा, अभिप्रेतार्थसिद्ध्यर्थं तं नमस्यति—

**तं त्वामहं ब्रह्म परं पुमांसं प्रत्यक्स्रोतस्यात्मनि संविभाव्यम्।**
**स्वतेजसा ध्वस्तगुणप्रवाहं वन्दे विष्णुं कपिलं वेदगर्भम्॥ ८॥**

तं त्वामहमिति। तं पूर्वोक्तप्रसिद्धियुक्तम्, त्वां तथैव परिदृश्यमानम्। व्यवहारे पुत्रत्वान्नमस्कारानौचित्यमाशङ्क्याऽऽह—**परं ब्रह्मेति**। जीवानां मध्ये अयं व्यवहारः, न तु परब्रह्मणि; तस्य लौकिकसम्बन्धकृतगुणदोषौ न स्तः। पुमांसमिति स एव सर्वत्र पुरि वर्तत इति। किञ्च, उपास्यो भवानेव। यतः प्रत्यक् स्रोतस्यन्तर्मुखे चित्ते सम्यग्विभाव्यो भवान् 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' इति श्रुतेः। स भवान् अतो भवान् फलरूपः, साधनरूपश्च। एवं भगवदवतारत्वमुक्त्वा, तत्रापि विशेषमाह—**स्वतेजसा ध्वस्तगुणप्रवाहमिति**। स्वस्यैव तेजसा चिच्छक्त्या स्वप्रकाशज्ञानेन ध्वस्तो गुणप्रवाहो देहाद्यध्यासो येन। अतो मोक्षेप्सोः ज्ञानकलावतीर्ण एव सेव्य इत्युक्तम्। अतस्तमेव वन्दे। विष्णुमिति तस्य मूलरूपकीर्तनम्, वेदार्थरूपं वा। प्रमाणमाह—वेदगर्भमिति। तथैव निःश्वसिता वेदा इत्यर्थः॥ ८॥

एवं स्तुते मातुरभिप्रायं ज्ञात्वा प्रसन्नो जात इत्याह—

## मैत्रेय उवाच

**ईडितो भगवानेवं कपिलाख्यः परः पुमान्।**
**वाचा विक्लवयेत्याह मातरं मातृवत्सलः॥ ९॥**

ईडित इति। स्तोत्रमस्य युक्तमिति ज्ञापयितुमाह—भगवानिति। एवमीडितः। कपिल इत्याख्यामात्रम्, वस्तुतः पर एव पुमान्, कार्यभगवत्त्वव्यावृत्त्यर्थमुक्तम्। विक्लवया वाचेति तस्यां दयोत्पत्तिः सूचिता। मातुः स्तोत्रमात्रमेव महदिति मातरमित्याह। अयं च प्रसादः सर्वथा न मर्यादाकृतः, किन्तु पुष्टिकृत इत्याह—मातृवत्सल इति। मातरि वत्सलः॥ ९॥

प्रसादमार्गमाहात्म्ये क्रमेणाऽऽह—

## कपिल उवाच।

**मार्गेणानेन मातस्ते सुसेव्येनोदितेन मे।**
**आस्थितेन परां काष्ठामचिरादवरोत्स्यसि॥ १०॥**

मार्गेणेति। हे मातः! अनेन मदुक्तेन मार्गेण भगवद्ध्यानयुक्तयोगेन कर्तुं सुकरेण। मया उदितेनेति अन्योक्तकथने तद्गताज्ञान्तरापेक्षा अस्ति, नवेति सन्देहोऽपि भवेत्, मयैवोक्तमिति नात्राऽन्यापेक्षा। अत एव सम्यगास्थिता अचिरादेव परां काष्ठामसंप्रज्ञातसमाधिम्, ततो भगवत्सायुज्यं च अवरोत्स्यसि प्राप्स्यसीति वरः॥ १०॥

स्वोक्तमार्गस्योत्कर्षं चाऽऽह—

**श्रद्धत्स्वैतन्मतं मह्यं जुष्टं यद्ब्रह्मवादिभिः।**

---

१ श्रीभगवानुवाच च इ. स्वयम् इ.

**येन मामभयं यायान्मृत्युमृच्छन्त्यतद्विदः ॥ ११ ॥**

श्रद्धत्स्वैतादिति । फलमप्यहमेवेत्याह—महामिति । एतन्मत्सम्बन्धिमतं प्रामाणिकम्, यतो ब्रह्मवादिभिर्जुष्टम् । अवश्यं फलसाधकमित्याह—येन मामभयं यायादिति । येन मतेन, अभयमिति स्वस्य फलत्वम्, एतन्मतानभिज्ञास्तु मृत्युमेव ऋच्छन्तीत्यन्यनिन्दयाऽप्येतद्दृढीकृतम् । मृत्युप्राप्तिस्तु स्वकारणादेव। तस्माद्विधेयप्रशंसार्थमेव एतदुक्तं सर्वभावेन तत्र श्रद्धार्थम् ॥ ११ ॥

एतावदुक्त्वा तां कृतकृत्यां ज्ञात्वा, ततः स्वयं निर्गत इत्याह—

## मैत्रेय उवाच ।

**इति प्रदर्श्य भगवानुशतीमात्मनो गतिम् ।**
**स्वमात्रा ब्रह्मवादिन्या कपिलोऽनुमतो ययौ ॥ १२ ॥**

इतीति । कथनमात्रेणैव वक्तुर्माहात्म्यात्तस्या शास्त्रार्थज्ञानं भविष्यतीत्यभिप्रायेणाऽऽह—भगवानिति। गतिश्चोशती कमनीया। स्वस्यैव गतिरिति स्वेनैव ज्ञायते, नान्येनेति ज्ञापितम्। तयापि तदुक्तोऽर्थो हृदये निश्चित इति ज्ञापयितुमाह—स्वमात्रेति । सापि पूर्वभावं परित्यज्य शास्त्रार्थदार्ढ्याद्ब्रह्मवादिनी जाता । यस्त्वत्यन्तं यन्मताभिनिविष्टः स व्यवहारेऽपि तदेव वदति । तस्य च फलं मोहाभावः । अत एव तयाभ्यनुज्ञातः, स्वयं तु मोहरहितः, ततो ययौ । गन्तव्यो देशः पश्चाद्वक्ष्यते तस्याः सिद्ध्यनन्तरम्, अन्यथा फलविसंवादे सर्वमेवोक्तं व्यर्थं स्यात् ॥ १२ ॥

तस्याः स मार्गः सिद्ध इत्याह—सा चापीत्यादि विंशत्या—

**सा चापि तनयोक्तेन योगादेशेन योगयुक् ।**
**तस्मिन्नाश्रम आपीडे सरस्वत्याः समाहिता ॥ १३ ॥**

योगे परित्यागस्यानङ्गत्वात् स्वस्य परित्यागाधिकाराभावात् तस्मिन्नेवाश्रमे सा स्थितेत्याह—सा चापि पूर्वोक्तापि तस्मिन्नेव स्वाश्रमे स्थिता, तनयोक्तेन योगोपदेशेन योगयुक्ता जाता। स्वगृहे योगो न सिद्ध्यतीति दूषणं तत्र नास्ति, यतः सरस्वत्यास्तदाश्रममापीडं मुकुटस्थानीयम् । गृहमगृहं वा न प्रयोजकं किन्तु विशिष्टदेशत्वमेव । समाहितेति सावधानान्तःकरणा । अनेन यमा उक्ताः ॥ १३ ॥

नियमानाह—

**अभीक्ष्णावगाहकपिशान् जटिलान् कुटिलालकान् ।**
**आत्मानं चोग्रतपसा बिभ्रती चीरिणं कृशम् ॥ १४ ॥**

अभीक्ष्णेति । स्निग्धकुञ्चितकेशा अपि संस्कारव्यतिरेकेण निरन्तरावगाहेन कपिलवर्णा जाताः; केशा जटिलाश्चान्योन्यश्लेषयुक्ताः, पूर्वं कुटिलालकाः, एतादृशान् बिभ्रतीति । देशपरिकराणामसंस्कार उक्तः । शरीरस्याप्यसंस्कारमाह—आत्मानमिति । चकारेण दन्तनखादिसंस्कारा अपि निवर्तिताः । उग्रतपसा युक्तं कृशं वा । तपसैव ज्ञानं भवतीति नियमानन्तरं तपो निरूपितम् । तपः साङ्गं चेत्याह—चीरिणमिति । चीरवासैव तपः कर्तव्यमिति । कृशत्वं च तस्याभिव्यञ्जकम् ॥ १४ ॥

---

१ तस्यैव ङ २ नभिज्ञा ख.

तस्या वैराग्यं वक्तुं पदार्थानामुत्कर्षं वर्णयति—प्रजापतेरिति पञ्चभिः—

**प्रजापतेः कर्दमस्य तपोयोगविजृम्भितम् ।**
**स्वगार्हस्थ्यमनौपम्यं प्रार्थ्यं वैमानिकैरपि ॥ १५ ॥**

* अलौकिकं तदुत्कृष्टं सर्वोपकरणोत्तमम् । गृहं च सर्वशोभाढ्यमुद्यानातिमनोहरम् । मनःसौख्यप्रदं स्वस्य तादृशे ममतां त्यजेत् ॥ १ ॥ अविद्यमानसन्त्यागे लोकयोर्भ्रष्ट एव हि ॥ ऐहिकं सुगमं नो चेत् दूरे ह्यन्यस्य साधनम् ॥ २ ॥ प्रथमं तदलौकिकं गार्हस्थ्यमित्याह—प्रजापतेर्ब्रह्मतुल्यस्य, नाम्नापि तुल्यस्य, तपोयोगाभ्यां विजृम्भितं विवाहप्रभृतिविमानभोगादिकं तपोयोगाभ्यामेव जातम् । यद्यपि भगवता संपादितम्, तथापि त्यागे तत्त्वं हेतुर्न भवतीति तपोयोगाभ्यामेव विजृम्भितमित्युक्तम् । गार्हस्थ्यं गृहस्थाश्रमः सपरिकरः । अनौपम्यमुत्तरलोकानां फलरूपत्वात्, किन्नरादीनां च फलरूपत्वात्, मर्यादात्वेन तथोत्कर्षाभावाच्च, ब्रह्मादीनां गार्हस्थ्याभावात् गार्हस्थ्यं कर्दमस्यानुपममेव । वैमानिकानां किन्नरादीनां तत्संभवमाशङ्क्य परिहरति—प्रार्थ्यमिति । नियतभोगिनां मध्ये वैमानिका उत्तमाः ॥ १५ ॥

परिकराणामुत्कर्षमाह—

**पयःफेननिभाः शय्या दान्ता रुक्मपरिच्छदाः ।**
**आसनानि च हैमानि सुस्पर्शास्तरणानि च ॥ १६ ॥**

पय इति । दुग्धफेनवत् कोमला उज्ज्वला उत्तुङ्गाः शय्या दन्तनिर्मिता रुक्मपरिच्छदाः शय्याः, काष्ठांशाः सुवर्णेन चित्रिता अन्तभागा येषाम् । दन्तानामासनानि चकाराद्भाण्डादीन्यपि हैमानि । सुस्पर्शानि कोमलानि नानाविधानि वस्त्राण्यास्तरणानि । परिकराणि द्विविधानि, भाण्डमयानि वस्त्रमयानि चेति द्वयमुक्तम् ॥ १६ ॥

**स्वच्छस्फटिककुड्येषु महामारकतेषु च ।**
**रत्नप्रदीपा आभान्ति ललना रत्नसंयुताः ॥ १७ ॥**
**गृहोद्यानं कुसुमितै रम्यं बह्वमरद्रुमैः ।**
**कूजद्विहङ्गमिथुनं गायन्मत्तमधुव्रतम् ॥ १८ ॥**
**यत्र प्रविष्टमात्मानं विबुधानुचरा जगुः ।**
**वाप्यामुत्पलगन्धिन्यां कर्दमेनोपलालितम् ॥ १९ ॥**

स्वच्छेति । स्वच्छानि निर्मलानि स्फटिकमयानि कुड्यानि येषु गृहेषु कुड्यान्येव वा । महामरकतनिर्मितेषु च तत्र योजिता रत्नमयाः प्रदीपा आभान्ति । स्त्रीरहिता गृहा अपि न शोभन्त इति ललनाः स्त्रियोऽपि रत्नाभरणसंयुतास्तेषु गृहेष्वाभान्ति । गृहस्योद्यानं पुष्पवाटिका, देवद्रुमैः कल्पवृक्षै

प्रकाशः ।

* प्रजापतेरित्यत्र । नाम्नाऽपि तुल्यस्येति । कर्दमौ दमश्चेत्यन्वर्थनाम इत्यर्थः ।

१ मनःसौख्यप्रदम्, ख. ग. च. २ सम्भावनामाशङ्क्य. ग. ३ दान्तानाम्. क. ग. ङ. ४ गृहाण्यपि. क.

रम्यम्। कूजता विहङ्गाना मिथुनानि यत्र। गायन्तो मत्ता मधुव्रता यत्र। उद्यानस्य सर्वविषयत्वप्रतिपादनाय, उद्दीपनविभावत्वाय च पारावताना कूजनम्, भ्रमराणा च गानमुक्तम्। यत्र विमाने उद्याने, गृहे वा प्रविष्टमात्मान देवहूतिं विबुधानुचरा गन्धर्वादयो जगु। वाप्यां च प्रविष्टमुत्पलगन्धयुक्तायाम्, कर्दमेन चोपलालितम्, कर्दमसहित वाऽऽत्मान जगु ॥ १७ ॥ १८ ॥ १९ ॥

एव गार्हस्थ्य वर्णयित्वा तत्त्यागो भगवद्ध्यानार्थ एव युक्त इति वक्तु कैवल्यशास्त्रे भगवत्स्मरण दृढ न भवतीति निरन्तरभगवत्स्मरणार्थं भगवदिच्छया भगवत्त्वेन, पुत्रत्वेन च पुत्रे स्नेह स्थित इत्याह—

**हित्वा तदीप्सिततममप्याखण्डलयोषिताम्।**
**किञ्चिच्चकार वदनं पुत्रविश्लेषकातरम्॥ २०॥**

हित्वेति। आखण्डलयोषितामिन्द्रस्त्रीणामीप्सिततमं तद्गृह हित्वा, पुत्रे निर्गते पुत्रविश्लेषेण किञ्चित् कातरं वदनं चकार। शास्त्रपुत्रत्वयो सरक्षार्थम्—किञ्चिदिति। किञ्चिदित्यव्ययम्, क्रियाविशेषण वा॥ २०॥

न केवलं वदन एव विकार, किन्तु हृदयेऽपीत्याह—

**वनं प्रव्राजिते पत्यावपत्यविरहातुरा।**
**ज्ञाततत्त्वाऽप्यभून्नष्टे वत्से गौरिव वत्सला॥ २१॥**

वनमिति। पत्यौ प्रव्राजिते सति वन च प्रविष्टे सति प्रव्राजस्तु परित्यागो लोकस्येति लोकस्थितो न परित्यागी। ये तु भिक्षादिनियमा उक्तास्ते आश्रमस्थानाम्, तत्र परित्याग पूर्वसिद्धपदार्थानामेव। स्वतन्त्रपरित्यागे वनप्रवेश एव। तदाह—वन प्रव्राजित इति। अपत्यविरहेण चातुरा भर्तुर्विरहो नित्य उक्त। वनगमनात् तत्सङ्गे पुत्रविरह उक्त इति सोऽपि नित्य, अतः आतुरा। ननु शास्त्रतो ज्ञानेन देहाध्यासे निवृत्ते विरहद्वय न बाधकमिति चेत्तत्राऽऽह—ज्ञाततत्त्वेति। ज्ञात तत्त्वमात्मनो यया। एतादृश्यपि पुत्रे दूर गते वत्से नष्टे गौरिव व्याकुला जाता, यतो वत्सला पुत्रस्नेहाधिक्ययुक्ता॥ २१॥

अथ स्नेह तस्या उपकाराय जात इत्याह—

**तमेव ध्यायती देवमपत्यं कपिलं हरिम्।**
**बभूवाचिरतो वत्स ! निःस्पृहा तादृशे गृहे॥ २२॥**

तमेवेति। तमेव पुत्र भगवन्त योगे ध्यायती अचिरत शीघ्रमेव तादृशे गृहे नि स्पृहा जाता, यत हरि। स्पृहा च दु खात्मिका। वत्सेति विदुरसम्बोधन त्वयाऽप्येवं कर्तव्यमिति बोधनार्थम्। परित्यागलक्षण वैराग्य प्रकृते नास्तीति स्पृहाभाव एवोक्त॥ २२॥

न केवल भगवद्ध्यानेन गृहानासक्ति सिद्धा, किन्तु योगोऽपि सिद्ध इत्याह—

**ध्यायती भगवद्रूपं यदाह ध्यानगोचरम्।**
**सुतं प्रसन्नवदनं समस्तव्यस्तचिन्तया॥ २३॥**

---

१ पारावत ग॰म्, ख  २ केवल क  ३ मा च क

ध्यायतीति। सुतो यदाह भगवद्रूपं सर्वेषामेव योगिनां ध्यानगोचरं सुत एव भगवानिति सुतं ध्यायती । सुत इति वा पाठः । प्रसन्नवदनामिति तस्य ध्याने भगवान् प्रसन्न एवाभिव्यक्त इति कार्यसिद्धि-सूचनार्थं प्रसाद उक्तः । समस्तव्यस्तप्रकारो ध्यान उक्तः इति तथैवाऽऽह—समस्तव्यस्तचिन्तयेति । समस्तचिन्ता प्रसन्नवदनाम्भोजमिति; व्यस्तचिन्ता साञ्चिन्तयेद्भगवत इति ॥ २३ ॥

तादृशध्यानेन यदासीत्तदाह—भक्तिप्रवाहयोगेनेति चतुर्भिः—

**भक्तिप्रवाहयोगेन वैराग्येण बलीयसा ।**
**युक्तानुष्ठानजातेन ज्ञानेन ब्रह्महेतुना ॥ २४ ॥**

चित्तशुद्धेः साधनानि कार्यं शुद्धस्य चेतसः। ज्ञानस्याऽप्युत्तमावस्था दोषाभावश्च सर्वतः ॥१॥ भगवच्चिन्तनेन क्रमेण परमामवस्थां प्राप्तवतीति वक्तुं चिन्तनेन जातं क्रममाह—आदौ भक्तिप्रवाहो जातः। स चोपायभूत इति योगः, ध्यानेन प्रथमं भक्तियोगो जात इत्यर्थः । भक्तेः प्रवाहनित्यतैवेति प्रवाहपदम्; ततो दृढं वैराग्यम्; ततो भगवद्धर्मेषु परमश्रद्धया परलोके युक्तं यदनुष्ठानजातं निवृत्तिधर्मरूपम्; तदनन्तरं ब्रह्मप्रापकं ज्ञानम् । एतावता साधनत्रयसहितेन ज्ञानेन चित्तमत्यन्तं शुद्धं भवति ॥ २४ ॥

तदा शुद्धचित्तकार्यमाह—

**विशुद्धेन तदाऽऽत्मानमात्मना विश्वतोमुखम् ।**
**स्वानुभूत्या तिरोभूतमायागुणविशेषणम् ॥ २५ ॥**

विशुद्धेनेति । तदेति तदैव शुद्धिः, न ज्ञानात्पूर्वं चित्तं शुद्धं भवतीत्युक्तम् । अतो विशुद्धेनाऽऽत्मना आत्मानं ध्यायती जातेति पूर्वेणैव सम्बन्धः। संसारावस्थातः तदानींतनमात्मानं विशिष्टमाह—विश्वतोमुखमिति । पूर्वमात्मा हृदयाभिमुखः शरीरप्रवणः । शुद्धे तु चित्ते सर्वतोमुखमात्मानं दृष्टवती । सर्वत्र विद्यमानः सर्वतोमुखः । पूर्वं चाविद्यावच्छिन्नो देहाभिमानी, साम्प्रतं च तद्रहितमित्याह—स्वानुभूत्यैव तिरोभूता माया प्रकृतिः, तद्गुणाः सत्त्वादयः, तद्विशेषास्तत्कार्याणि परिच्छेदादयो यस्य ॥ २५ ॥

आत्मज्ञाने प्रादुर्भूते मायागुणकार्याणि लीयन्त इति अविद्यातत्कार्यविलये ब्रह्मण्येव स्थितो जात इत्याह—

**ब्रह्मण्यवस्थितमतिर्भगवत्यात्मसंश्रये ।**
**निवृत्तजीवभावत्वात्क्षीणक्लेशाप्तनिर्वृतिः ॥ २६ ॥**

* ब्रह्मण्यवस्थितमतिरिति । तदेव ब्रह्म पूर्वं ध्यातो भगवानिति ततो ज्ञातवती । ततोऽपि स भगवान् न ध्यानमपेक्षते, किन्तु आत्मन्येव स्वस्मिन्नेव सम्यक् आश्रयो यस्य तादृशं ज्ञातवती । एवं स्वस्मिन् भगवत्स्फुरणे जीवभावो निवृत्त इत्याह—निवृत्तेति । आधाराधेयभावोऽपि निवृत्तः ।

---

प्रकाशः ।

* ब्रह्मणीत्यत्र। आधाराधेयभाव इति। स्वस्मिन् ब्रह्मस्फूर्तिर्हि आधाराधेयभावप्रयोजिका तन्निवृत्तौ

---

१ ख. पुस्तके नास्ति । 　　२ नेति नास्ति क. ङ.

स्वस्य परिच्छेदेऽपि तिरोहितानन्दत्वं जीवभावः, प्रकटानन्दः स्वयमेव भगवान् जात इत्यर्थः। एवं सति अविद्यादयः सर्वे क्लेशाः क्षीणा भवन्ति; क्लेशेषु च निवृत्तेषु परमा निर्वृतिः प्राप्यते। प्राप्यं रूपमधिकारातीतमिति ज्ञापनार्थम्। प्राप्तेऽपि भगवद्रूपे पुनर्निर्वृतिरुक्ता। ब्रह्मभावेऽपि वा आधाराधेयभावः स्थित एव। मध्यावस्था वा एषा॥ २६॥

**नित्यारूढसमाधित्वात् परावृत्तगुणभ्रमा।**
**न सस्मार तदात्मानं स्वप्नदृष्टमिवोत्थितः॥ २७॥**

निवृत्तौ जातायामिन्द्रियैः पुनरानयनापेक्षाभावात् नित्यारूढसमाधिर्जाता। नित्यमारूढः समाधिर्यया सा देवहूतिर्नित्यारूढसमाधिः। तस्या भावकथनं तत्स्थैर्यार्थम्, एवं समाधिदार्ढ्ये परावृत्ताः गुणैः कृता भ्रमा यस्याः। आनन्दतिरोभावस्तमसः, परिच्छेदो रजसः, भेदः सत्त्वस्येति त्रयोऽपि निवृत्ताः। एवं सति अध्यासाश्रयभूतस्य देहस्यापि स्फुरणं सर्वदोषहेतुर्न जातमित्याह—**न सस्मारेति**। स्वप्नदृष्टं देहं यथा उत्थितः, अहमिति न मन्यते, तदपेक्षयाऽपि इमं देहमात्मानं न सस्मार स्मृतवत्यपि न॥ २७॥

ननु देहास्मरणे कथं देहस्तिष्ठेदिति शङ्कां परिहरन्, तस्य देहस्यान्तर्ज्ञानप्रकाशेन प्रकाशमानत्वमाह-

**तद्देहः परतः पोष्योऽप्यकृशश्चाध्यसम्भवात्।**
**बभौ मलैरवच्छन्नः सधूम इव पावकः॥ २८॥**

तद्देह इति। परतः योगनिर्मितस्त्रीभिः पोषितोऽप्यकृशः; बहिर्वस्त्रादिनैव पोष्यो न तु भोजनकृतः, तथापि न कृशः। तत्र हेतुः—आध्यसम्भवादिति। आधिर्मनःपीडा। मृत्युः पूर्वमेव जित इति देहवृद्धिश्चानपेक्षितेति केवलं मनःपीडयैव देहह्रासो भवति; तदभावादकृशः। चकारात् कान्तिनाशाभावश्च। अन्तःस्थितज्ञानेन, बहिःस्थितमलेन च मलैरवच्छन्नो बभौ। उभयमेकत्र साधयितुं दृष्टान्तः—**सधूम इव पावक** इति। अन्तःप्रज्वलितो वह्निर्बहिर्निःसृतधूमकः। तादृशो ज्ञानसंपन्नस्तपसा मलिनो बभौ॥१॥२८॥

कदाचिदुत्थानदशायां देहं स्मरिष्यतीत्याशङ्क्याऽऽह—

**स्वाङ्गं तपोयोगमयं मुक्तकेशं गताम्बरम्।**
**दैवगुप्तं न बुबुधे वासुदेवप्रविष्टधीः॥ २९॥**

स्वाङ्गमिति। तपोयोगाभ्यां व्याप्तम्। मुक्तकेशमिति दैवगत्या केशविमोकेऽपि, वस्त्रविमोकेऽपि,

प्रकाशः।

स निवृत्त इत्यर्थः। तद्विवृण्वन्ति—स्वस्येत्यादि। अग्रिमग्रन्थः प्रकटार्थः।

तृतीयस्कन्धविवृतेर्यो भावो हृदि मेऽस्फुरत्। श्रीमदाचार्यकृपया तं प्रकाशितवानहम्॥१॥
यदबुध्वा मया किञ्चिदुदितं बुद्धिदोषतः। तत् क्षन्तव्यं दयालुत्वादीनस्याऽप्यधमस्य मे॥२॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे श्रीमद्वल्लभदीक्षितचरणैकतानपीताम्बरात्मजपुरुषोत्तमदासविरचितं त्रयस्त्रिंशाध्यायविवरणं सम्पूर्णम्।

१ स्त्रीनपानादि. क. ग. घ. ङ. च. २ देहस्येति. नास्ति. ग. ३ मानसी. च. ४ अपीति नास्ति. क. ग.

स्त्रीणां लज्जया अत्यावश्यकेऽपि निमित्ते देहं न बुबुधे । स्थितिस्तु दैवाधीनेत्याह–देवगुप्तमिति । अबोधे हेतुः–वासुदेवे प्रविष्टा धीर्यस्य ॥ २९ ॥

एवं तस्या बाह्याभ्यन्तरव्यवस्थामुक्त्वा, आन्तरं फलितमाह—

**एवं सा कपिलोक्तेन मार्गेणाचिरतः परम् ।**
**आत्मानं ब्रह्मनिर्वाणं भगवन्तमवाप ह ॥ ३० ॥**

एवमिति । सा देवहूतिः कपिलोक्तेन मार्गेण भक्तिज्ञानयोगात्मकेन, अचिरतः शीघ्रमेव, परमात्मानं ब्रह्मानन्दं भगवन्तं सर्वशास्त्रप्रतिपाद्यं अवाप । हेत्याश्चर्ये । स्त्रिया मुक्तिर्दुर्लभेति ॥ ३० ॥

तस्या मुक्तिः सर्वजनीना जातेति क्षेत्रप्रसिद्ध्या निरूपयति—

**तद्वीरासीत्पुण्यतमं क्षेत्रं त्रैलोक्यविश्रुतम् ।**
**नाम्ना सिद्धपदं यत्र सा संसिद्धिमुपेयुषी ॥ ३१ ॥**

तद्वीरासीदिति । वीर इति सम्बोधनं तथा शौर्यकरणार्थम्, स्वधर्मप्रतिपादनेन विश्वासार्थं वा । तत् क्षेत्रं नाम्ना सिद्धशब्दवाच्यम्, सिद्धपदं पुण्यतममासीत्, त्रैलोक्यविश्रुतमिति तन्मुक्तयैवेति तन्मुक्तौ प्रमाणम् । अन्यथा सर्वेषु तीर्थेषु विद्यमानेषु तस्यैव कथं प्रसिद्धिः स्यात् । अतः प्रसिद्धिहेतुमाह–सा संसिद्धिमुपेयुषीति । सा हि सम्यक् सिद्धिमुपेयुषी प्राप्तवती ॥ ३१ ॥

शरीरस्य विनियोगमाह—

**तस्यास्तद्योगविधुतमार्त्यं मर्त्यमभूत्सरित् ।**
**स्रोतसां प्रवरा सौम्य ! सिद्धिदा सिद्धसेविता ॥ ३२ ॥**

तस्या इति । तपोयोगेन विधुतं मार्त्यं मृदंशो यस्य । जलमेव हि घनीभूतं मृद्भवति, यथा हिमः, यथा वा करकाः, यथा वा सैन्धवम्, योगीश्वरो वा, महता तापेन तत् विशकलितं भवति, अत एव एतादृशं मर्त्यं तत् सरिदभूत् । सा स्रोतसि सरस्वत्याः प्रविष्टा स्रोतसां प्रवरा सरस्वत्येवाभूत् । सौम्येति विश्वासार्थम् । यथा वा सोमः अमृतमयः, पाने विशकलितावयवो भवति; नवम्याः सोमकलायाः पातामम इति । ततः प्रभृति सा सरस्वती सिद्धिदा जाता तत्रैव । अतः सिद्धसेविता जाता ॥ ३२ ॥

एवं तस्याः सर्वसिद्धिमुक्त्वा स्त्रीमुक्त्यवधिभूतां सर्गलीलां समाप्य, तस्य सर्गस्य विसर्गसाधकत्व एव सर्गत्वं सेत्स्यतीत्युत्तरोपयोगार्थं कपिलस्य स्थितिमाह–कपिलोऽपीति त्रिभिः—

**कपिलोऽपि महायोगी भगवान् पितुराश्रमात् ।**
**मातरं समनुज्ञाप्य प्रागुदीचीं दिशं ययौ ॥ ३३ ॥**

गतिः स्तोत्रं प्रतिष्ठा च त्रयमाह गुणान्वितम् । तत्र प्रथमं गतिमाह–महायोगी गमनेऽपि प्रयासरहितः, मातुः सिद्धिं च ज्ञात्वा, अग्रे कर्तव्यमपि जानातीति । भगवानिति सर्गनियामकत्वे हेतुः । पितुराश्रमात् मातरं समनुज्ञाप्य प्रागुदीचीं दिशं प्रति ययौ । एषा वै देवमनुष्याणां शान्ता दिक् ॥ ३३ ॥

गमने सिद्धादीनां स्तोत्रमाह—

---

१ च. क. ट  २ वागीश्वरः ग. घ.

सिद्धचारणगन्धर्वैर्मुनिभिश्चाप्सरोरगैः।
स्तूयमानः समुद्रेण दत्तार्हणानिकेतनः॥ ३४॥

सिद्धेति। ये केचित् सिद्धिकामुकाः, ते भगवदंशाः षड्विधा निरूपिताः। उरगा वासुकिप्रभृतयः। गणैरिति पाठे, अप्सरसां गणा येषां ते इन्द्रादयः, तैः स्तूयमानः। यत्र गच्छति तेनाऽपि पुरस्कृत इत्याह—समुद्रेण दत्ते अर्हणनिकेतने यस्य॥ ३४॥

एवं तस्य गमनमध्यस्थितिर्निरूप्य तत्र स्थितस्य कृत्यमाह—

आस्ते योगं समास्थाय साङ्ख्याचार्यैरभिष्टुतः।
त्रयाणामपि लोकानामुपशान्त्यै समाहितः॥ ३५॥

आस्त इति। योगं सम्यगास्थाय सम्यगास्ते। तत्र स्थितो द्वयं कृतवान्—साङ्ख्यमतप्रवृत्तिः, त्रयाणामपि लोकानामुपशान्त्यर्थं शुभाशंसनं च। अतः साङ्ख्याचार्यैः स्तुतः॥ ३५॥

एवं तच्चरित्रमुक्त्वा उपसंहरति—

एतन्निगदितं तात! यत्पृष्टोऽहं त्वयानघ!।
कपिलस्य च संवादो देवहूत्याश्च पावनः॥ ३६॥

एतन्निगदितमिति। कपिलस्य यच्चरित्रं पृष्टं तन्निगदितम्। संवादोऽपि पावन इति निगदितः। एतस्य द्वितीयसर्गरूपत्वात्सर्गोऽपि निगदित इत्यर्थः। चकारद्वयेन द्विविधोऽपि सर्ग उपसंहृतः॥ ३६॥

एतच्चरित्रश्रवणस्य फलमाह—

य इदमनुश‍ृणोति योऽभिधत्ते कपिलमुनेर्मतमात्मयोगगुह्यम्।
भगवति कृतधीः सुपर्णकेतावुपलभते भगवत्पदारविन्दम्॥ ३७॥

य इदमनुश‍ृणोतीति। कपिलमुनेर्मतं साङ्ख्यम्। आत्मयोगेष्वात्मप्राप्त्युपायेषु गुह्यं गोप्यमनुश‍ृणोतीति शिष्यरूपेण, न तु प्रभुरूपेण। योऽभिधत्ते सम्यक् शिष्यहृदये स्थापयति, तावुभावपि भगवति कृतबुद्धी, तस्मिन्नेव सुपर्णकेतौ गरुडध्वजे कालातिक्रमार्थम्, शास्त्रपर्यवसानार्थं च तादृशे निश्चितबुद्धि, तत्पदारविन्दमुपलभते। एतस्य मतस्य श्रवणं भगवति मतिनिश्चयार्थम्। यत्रैतन्मतश्रवणेऽपि भगवत्पदप्राप्तिर्भवति तत्र किं वक्तव्यं तन्मतानुसारेण प्रवृत्तस्य सम्पूर्णसर्गलीलाश्रोतुर्वा॥ ३७॥

तृतीयस्कन्धविवृतिः श्रीकृष्णचरणाम्बुजे। निवेदितातियत्नेन सर्वसिद्धान्तगुम्फिता॥ १॥
सुमेषु भक्तिहृदयेषु निवेदयामि सर्गाभिधा यदि यथार्थतया विचिन्त्या।
लीला सदैव मतियुक्तिभिरन्विताङ्गी भाव्या तदा विवृतिरुज्ज्वलयुक्तियुक्ता॥ २॥
सर्वभक्तसमुद्धारे सर्गोत्पादकं हरिम्। त्रयस्त्रिंशत्सर्गयुतं वन्दे सर्गाय माधवम्॥ ३॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां तृतीयस्कन्धे त्रयस्त्रिंशाध्यायविवरणं समाप्तम्॥
समाप्तोऽयं स्कन्धः।

॥ श्रीहरिर्जयति ॥

## गोस्वामि-श्रीपुरुषोत्तमजीमहाराजकृत–

### श्रीमद्भागवत-तृतीयस्कन्ध-सुबोधिनी–

# प्रथमाध्यायप्रकाशः ।



अथ तृतीयस्कन्धविवरणं चिकीर्षवो निबन्धे स्कन्धार्थस्य संक्षेपेणोक्तत्वात् तत्स्मारयितुं ताभिरेव कारिकाभिस्तदनुवदन्ति–अधिकारीत्यादि । तेन प्रथमस्कन्धार्थो हीनमध्यमोत्तमभेदेन त्रिविधः । सगुणोऽमिनो गुणातीतश्चेति त्रिविधोऽधिकार इति तादृशेष्वधिकारिषु द्वितीये साङ्गं वस्तुनिर्देशश्रद्धाविमर्षाख्यसपरिकराङ्गसहितं श्रवणं स्कन्धद्वयेन कर्तव्यतया सुनिरूपितं कीर्तयित्वा शुकेन स्वव्यसनेन निरूपणात्तत्र विधिविषयत्वाभावेन व्यासपादैः श्रवणं विधिविषयतया मुख्यमुपनिबद्धम् । तत्र विषयापेक्षायां शेषेषु दशसु स्कन्धेषु **विषयाभिधा** अत्र सर्गो विसर्गश्चेति श्लोकोद्दिष्टानां भूतमात्रेन्द्रियधियामित्यादिभिर्लक्षितानां लीलारूपाणां विषयाणां अभिधा अभिधानं परीक्षापूर्वकं निरूपणं क्रियते । तथा येन रूपेण विषयत्वं तदत्र विचार्यत इत्यर्थः । एवं विषयविषयिभावरूपा स्कन्धसङ्गतिः स्मारिता । प्रस्तुतस्कन्धवाक्यार्थं व्याख्यातुमध्यायसङ्ख्यामनुवदन्ति–त्रय इत्यादि । सङ्ख्याप्रयोजनं द्वितीयसुबोधिन्यां निरूपितम्, तन्निबन्धविचारादधिवाक्षितम् । तन्मया तृतीयस्यावरणभङ्गे सम्यगुपपादितमिति ततोऽवगन्तव्यम् । **स्वाभिमत** इति। शुकव्यासयोराशयगोचरे । **सविशेष** इति । "अव्याकृतगुणक्षोभात्" इति द्वादशस्कन्धोक्तमहापुराणसामान्यलक्षणाद्यो विशेषस्तत्सहिते । तदपि तत्रैव व्युत्पादितं सर्गे भगवद्रूपत्वेव विशेष इति । **हरेर्माहात्म्यसूचक** इति । एतेन सविशेषत्वस्य प्रयोजनमुक्तम् । निबन्धे तु "**स्वोपयुक्तार्थसंयुतः**" इति पठितम् । स्वस्य श्रोतुरुपयुक्तो योऽर्थो मोक्षादिफलं तद्युक्त इति तत्रार्थः। तथा सति "**बन्धमेव मोचयति**" इति सर्वदुःखहर्तुर्माहात्म्यसूचकं तद्वर्णनमिति तस्यैवायं निष्कृष्टार्थ उक्तः । ननु सर्गविसर्गयोरुत्पत्तित्वाविशेषात् स्कन्धविभेदे किं बीजम्, एतावद्विस्तारस्य च किं प्रयोजनमित्याकाङ्क्षायामाहुः–लोक इत्यादि । तथा च लीलाभेद एव बीजम्, तदर्थ एव च विस्तार इत्यर्थः । निबन्धे तु लीलयेत्यत्र सार्थकाविति पाठः । अर्थस्तु सार्थकौ पुरुषार्थपर्यवसायिनौ; तेनैकैका लीला स्वतन्त्रेति प्रत्येकमेकैकस्कन्धवाच्यता, तेन स्कन्धविस्तार इति विवृतः । तेन तत्र फलमुखेन भेदः; अत्र तु हेतुमुखेनेति भेदः, तात्पर्यन्त्वेकमेव । इतोऽग्रे कारिका भिद्यन्त इति तत्रत्यं प्रमेयं नानूद्यते। अवान्तरभेदेऽपि पर्यवसान ऐकार्थ्याच्चेति । नन्वत्र सकृदपि सर्गकथने स्कन्धार्थसिद्धेर्वारद्वयं तत्कथनस्य किं तात्पर्यमित्याकाङ्क्षायां सोपपत्तिकं तदाहुः–**भूते**-त्यादिसार्द्धाभ्याम् । अत्राद्येन मूलस्थलक्षणानुवादः । द्वितीये एको ब्रह्मतः स्फुटो जायते । अपरः ब्रह्मार्थे क्रियत इति प्रकाश्यत्वं कार्यत्वं च द्वयोर्भेदकमुक्तम् । यत एवमग्रे द्वैविध्यं दृश्यते । अतोऽत्र लक्षणवाक्ये द्विविधोऽपि सर्गो विवक्षित इत्यर्थः । तथा च लक्षणवाक्ये ब्रह्मण इति सम्बन्धषष्ठी तेन रूपेण कर्तृत्वतादर्थ्ययोरुभयोरपि सङ्ग्राहिकी(१)तेन भगवदुपादानको मायिकश्चेति द्वौ सर्गौ । तत्राद्य इदमुपादानलक्षणं द्वितीये तटस्थलक्षणमिति बोधितम् । इदं चैकादशेऽन्यत्र सर्वत्रैवानुसन्धेयमित्येतदर्थम् । अथवा

---

१ न्यूनेति पाठः । २ उपलब्धपुस्तकेषु नु. 'एकप्' इति पाठः.

घटितपूरितपात्रवद्वा स्त्री, तदा तूपादानलक्षणमेवेति । अयमत्र निबन्धाद्विशेषः । वाक्यपदाक्षरार्थानामत्र वक्तव्यत्वात्; तत्र तु शास्त्रार्थाद्युपयोगिन एवार्थस्योक्तत्वादिति । एवं द्विरुक्तिमुपपाद्य तदवान्तरप्रकरणानि विभक्तुमध्यायान्विभजन्तस्तत्प्रयोजनान्याहुः—भूतेत्यादिभिः पञ्चभिः । प्रथमतं इति । भगवदुपादानकसर्गप्रकरणे । अधिकारादिपदेषु तादर्थ्ये सप्तमी । हरिशब्दः पुरुषशरीरवाचकः । कार्यशब्दो भौतिकसृष्टिपरः । अत्रैतद्बोध्यम् । पञ्चमाध्याये " अथ ते भगवल्लीला योगमायोपबृंहिताः " इत्युपक्रम्य " कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः । पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान् । ततोऽभवन्महत्तत्त्वमव्यक्तात्कालनोदितात् " इत्यादिना अतीन्द्रियभगवत्कर्तृकपुरुषकरणकमायाधिकरणकवीर्याधानेन महत्तत्त्वोत्पत्तेः ततः क्रमेण त्रयोविंशतितत्त्वोत्पत्तिमुक्त्वा, षष्ठे ब्रह्माण्डपुरुषशरीरोत्पत्तिरुच्यते, तस्याद्यावतारत्वं चोच्यते । तेनैकः सर्गस्तच्छरीरनिर्माणार्थः । ततस्तादृशशरीरविशिष्टावतारस्वरूपदर्शनमष्टम उक्त्वा, नवमे तत्प्रसादेन तदाज्ञया दशमे चतुर्दशलोकसृष्टिरुच्यते । तेन तत्प्रकरणस्य समाप्तिरवगम्यते । ततो दशम एवाध्याये "गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः । पुरुषस्तदुपादानमात्मानं लीलयाऽसृजत् " इति कालस्योपादानतामुपक्रम्य " विश्वं वै ब्रह्म तन्मात्रम् " इत्यनेन जगतः सूक्ष्मरूपमादिकारणं ब्रह्मेत्युक्त्वा " सर्गो नवविधस्तस्य " इति प्रतिज्ञाय " आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः " इत्यादिना आत्महेतुगुणवैषम्यरूपं भूतमात्रेन्द्रियधीसङ्घातात्मकतच्छरीरजन्मोक्त्वाऽन्येषां तेन तेन प्रकारेण सर्गपदोक्तिपूर्वोक्तं जन्मोच्यते । तेन स सर्गः कार्यशरीरनिर्माणार्थः । एवं च यद्यपि पूर्वप्रकरणस्याष्टम एव समाप्तिस्तथापि सप्तमाध्याये विभूतिप्रश्नान्नवमे विभूतिमत्त्वं पूर्वोक्तस्य निरूप्य तद्विभूतिः पूर्वमुच्यत इति कालात्पूर्वं निरूप्यमाणस्य सर्गस्य मैत्रेयविचारेण पूर्वशेषत्वम् । व्यासविचारे तु प्रकरणान्तरशेषत्वमेवेत्युभयं समञ्जसम् । तदिदं निबन्धादवगन्तव्यम् । एवमत्र प्रकरणद्वये सर्गभेदस्य निर्धारात्प्रथमेऽधिकारप्रकरणेऽप्यधिकारस्य भगवदेकसाध्यत्वाच्चतुरध्याय्यां तत्रापि भूतादिसर्गः संख्याबलादवगन्तव्य इति त्रिष्वप्यवान्तरप्रकरणेषु चतुर्णां सर्ग इति हृदयम् । यद्यपि द्वितीये भगवत्कर्तृकत्वं न स्पष्टम्, तथापि सिद्धवदनुवादात्पूर्वोक्त एव कर्ताऽत्राऽप्यायातीति भगवत्कर्तृकत्वमप्यक्षुण्णम् । तदेतदभिसन्धायोक्तम्—अधिकारे हरौ कार्ये इति । प्रकृतमनुसरामः । अतश्चेति । प्रयोजनभेदाद्रूपभेदाच्च । यद्यपि भूतमात्रास्तामस्य इन्द्रियाणि राजसानि, धियः सात्त्विक्यस्तथापि तत्तत्कार्यार्थं कारणभूतसत्त्वादीनां तत्राधिक्येन निर्देशाद्गुणभेदकृतो भेदस्तेषु बोध्यः । ततोऽत्रेति । द्वादशाध्यायोत्तरं त्रयोदशेऽध्याये युक्तरूपस्य क्रियाशक्तिप्रधानस्य वराहरूपस्य ब्रह्मणो विशेषेण निरूपणम् । ननु गुणवैषम्ये निरूपणीये कश्यपदित्यादिकथायाः किं प्रयोजनमित्याकाङ्क्षायामाहुः—कर्मादीत्यादि । आदिपदेन भक्तिज्ञाने । फलत इति फलं मोक्षस्तत्प्रापकतया । ततो हेतोस्तन्नाशककामक्रोधाभ्यां कर्मज्ञानयोर्नाशः हेतूपोद्घाततया शुकेनोच्यते, अतः प्रकृतसर्गसिद्धिरेव प्रयोजनमित्यर्थः । ननु ' न मे भक्तः प्रणश्यति ' इति भगवतः प्रतिज्ञयेति भक्तयोर्दौवारिकयोः कथं भक्तिनाश इत्यत आहुः—लोभेनेत्यादि । तथा च दोषवशान्नाश इत्यर्थः । ननु तादृशेषु कथं कामादिदोषोत्पत्तिरित्यत आहुः—धर्मीत्यादि । कामक्रोधलोभाः क्रमेण धर्मिज्ञानीश्वरैः कृताः । अपत्यकामायाः कामपूर्त्यै यथा कामी भवेन्नित्यमित्यादिविध्यनुरोधिना धर्मिणा धर्माभिमानात्कामः, ज्ञानवता ज्ञानाभिमानात्क्रोधः, ईश्वरेण तदभिमानाद्वेषु लोभ इति ते तैः कृताः । मन्थरीरत्वाभावाभिमानो दोषः । लीलात्वाच्च न भगवद्बन्धक इति गुह्यम् । तथा [1] मार्गप्रयत्नासरूप-

१ 'न' इति विशेषः प्रतिभाति । २ ज्ञानवता ज्ञानाभिमानपूर्वेण-इत्यपि पाठः.

सृष्टीच्छाव्यापारबोधनाय तत्कथेति भावः। अग्रे स्फुटम्। एतेन साङ्ख्याद्वैधर्म्यं वैषम्येऽपि बोधितम्। साङ्ख्ये, गुणानां स्वभावादेव क्षोभरूपवैषम्यम्, इह तु भगवदिच्छयेतीयमवान्तरकथाऽपि मूलवैषम्यस्य तथात्वबोधनार्था। एवं पञ्चभिः प्रथमप्रकरणाध्यायसङ्ख्याप्रयोजनोक्तिपूर्वकं प्रथमप्रकरणार्थ उक्तः। एवं द्वितीयस्य सार्द्धाभ्यामाहुः—चतुर्दशेत्यादि। देहतो जन्मेति योजना। तेषामिति।तादृशां भूतादीनां गुणानां च। तदिदं विंशेऽध्याये स्फुटिष्यति। एवमत्र सर्गलक्षणघटकपदार्थानां प्रत्येकं निरूपणेन यथा सृष्टित्वाऽविशेषेऽप्यवान्तरविशेषात्सर्गविसर्गाभ्यां स्कन्धभेदस्तथा प्रयोजनभेदभिन्नाभ्यां सर्गाभ्यां कुतो नेत्याशङ्काऽपि निरस्ता। लक्षणभेदस्याभावादिति निबन्धे तु चतुःप्रकरणी स्थौल्ये सौक्ष्म्ये तु दशधा मतेति प्रकरणविभाग उक्तम्। अत्र तु कथामात्रोपयोगाय ततोऽपि स्थूलतयोच्यते इत्याशयेनाहुः—कथायामित्यादि। अत्र सुबोधिन्यां तु चतुर्भिरध्यायैरधिकार उच्यते; परैरष्टभिरध्यायैः सर्गस्य करणम्। 'तद्विभूतीर्वदस्व नः' इति विशेषप्रश्नात्सविभूतेः सर्गस्य सर्वेष्वेवाध्यायेष्वनुवर्णनम्। तथा च विदुरमैत्रेयसंवादमात्रसिद्धं यत्तन्मात्रमत्रोच्यते, अतो न दोष इत्यर्थः। एतेन विदुरोद्धवकथायां सर्गप्रश्नाभावात्तत्र भूताद्युत्पत्तिव्याख्यानं न युक्तमिति शङ्कापि निरस्ता, तस्यैतत्कथोपनिबन्धकव्यासाशयगोचरत्वादिति। नन्वधिकारस्य प्रथमस्कन्धएवोक्तत्वात्पुनः कथनस्य किं प्रयोजनमत आहुः—उत्तमे त्वित्यादि। कथेति विदुरमैत्रेयसंवादरूपा कथा। तथा च फलोपोद्घातत्वेन शुकेन व्यासपादैश्चोच्यते। लीलोत्कर्षबोधनं प्रयोजनमित्यर्थः।

एवं कथोपयोगिप्रकरणार्थमुक्त्वा प्रथमाध्यायार्थमाहुः—तत्रेत्यादि। तत्र अर्थनिरूपणप्रस्तावे, अधिकारे अधिकारप्रकरणे प्रथमेऽध्याये संस्कृतानां सत्त्वेन शुद्धिं प्राप्तानां भूतानां त्रेधा पञ्चधा वा सर्गो निरूप्यते। भूतादीनां लक्षणं तु पञ्चमाध्याये स्फुटीकार्यम्। आकाशस्य निर्लेपत्वान्मुच्यमानस्यापहतपाप्मत्वात्तत्संस्कारो नापेक्ष्यते, इति शिष्टानां त्रयाणामेव स इत्यतस्त्रेधेत्युक्तम्। अस्मिन्पक्षे भगवदीयं स्मरणं गुणस्मृतिकोटौ निविशतीति ज्ञेयम्। पृथिव्यापस्तेजोवायुराकाशा मे शुद्ध्यन्तामिति विरजाहोममन्त्रलिङ्गेन वाय्वाकाशयोरप्यशुद्धेः पञ्चधेति पक्षान्तरमुक्तम्। नस्यादिशुद्ध्यपेक्षणाच्च। देहवैशिष्ट्यलक्षणमित्यनेन संस्कारे प्रमाणमुक्तम्। अन्यथा उक्तविधवैशिष्ट्यवान् देहो न स्यादिति। कारणमिति पाठेऽपि वैशिष्ट्यरूपकार्येण कारणानुमानात्स एवार्थः। तृतीया सर्वत्र करणार्थे। तेन हरिणेत्यत्र स्मृत्यारूढस्य भगवत एव करणत्वम्। अभिन्ननिमित्तोपादनत्ववत्कर्तृकरणाभेदस्याऽप्यदुष्टत्वादिति। स्मर्यमाणस्य रूपस्य वा करणत्वं द्वितीयस्कन्धेऽङ्गुलीयकविमर्षे स्मर्यमाणरूपाणां नानात्वेन भेदस्य सिद्धत्वात्। व्यापारत्वं तु स्मरणस्यैवेति बोध्यम्। एवं कर्तृकरणव्यापारफलानि सर्वत्रैवानुसन्धेयानि। ननु प्राप्यमिव यत्किञ्चिददृष्टजन्ये देहस्थितानां भूतानां नाशाभावे कथं संस्कृतभूतसर्गः शक्यवचन इत्याशङ्कायामाहुः—अस्मिन्नित्यादि। तथा च यथा वैदिकसाधनाधिकारार्थं शूद्रदेहनाशापेक्षा, तथा 'देवोऽसुरो मनुष्यो वा' इत्यादिवाक्यात्स्वरूपयोग्यतायाः स्वत एव सिद्धत्वान्नात्राधिकारार्थे पूर्वदेहनाशापेक्षा, किन्तु फलोपधानार्थं प्रोक्षणादिवत् संस्कारेण तेषां रूपान्तरापत्तिरेव सर्ग इति स नाऽशक्यवचन इत्यर्थः।

१ एवं सर्गमुपपाद्य व्याख्यातुमारभमाणा अवतारणमुखेन विदुरकथासङ्गतिमाहुः—एवमित्यादि। युक्तेति। उपदेशनार्थं भगवता विचारितत्वेन तत्कथारीत्या बोधस्य शीघ्रं सम्भवाद्युक्तेत्यर्थः। तथा च सूतोक्तौ प्रसङ्गः, शुकोक्तौ तु हेतुतागर्भः स इत्यर्थः। श्रोतुरिति विदुरस्य। एतेनाऽपि युक्तत्वं विशदीकृतं बोध्यम्। तस्येति प्रसादविषयस्य मैत्रेयस्य। न तथा दूषणमिति। तथा च सर्वोपकारत्वात्तस्या मित्रात्वं न तु जबालायदित्यर्थः। नन्वत्र प्रसिद्धेः प्रमाणतया कथनस्य किं प्रयोजनमत आहुः—अन्यथेत्यादि।

१ तनुजबालावत् पाठः.

तदन्वयप्रवेशाभावादिति। संवादावसरे सहचराभावात्। क्षत्रियत्वमिति।निम्नोक्तरीतिकम्। वस्तुतस्तु क्षत्तृत्वमिति पाठः।

२ तस्य स्वगृहेऽपीति। विदुरस्य स्वगृहेऽपि।

३ कुत्रेत्यत्र। कालस्यानादरणीयत्वमिति। तस्य कालस्येदानीमभावेन स्वस्यानुपयोगात्तथेत्यर्थः। बहुपृष्टमिति। एतत्प्रश्नात्पूर्वं बहुपृष्टम्। उपकारित्वादिति। संवादस्योत्तमद्वयसम्बन्धित्वेन शीघ्रफलजनकतया तथात्वात्।

४ न हीत्यत्र। अन्तरुत्साह इति। मैत्रेयस्य सः। परित्यागहेतुप्रश्नः साधुवादोपबृंहणाक्षिप्तो ज्ञेयः।

५ स एवमित्यत्र। भगवद्ज्ञानामिति। ज्ञापकत्वेन शेषाणाम्। स्वहानिरिति। तपोबलादिहानिः। मुख्यभगवत्त्वेनेति। गुणातीतत्वेन साक्षाद्ब्रह्मतया तथात्वेन।

६ यदा त्वित्यत्र। अस्य परित्याग इति। विदुरकर्तृकपरित्यागः। नन्वत्र विदुरस्योत्तमाधिकारबोधनाय गृहत्यागे वक्तव्ये दुर्वाक्यवारितत्वेन निर्गमनकथनं न युक्तम्। उद्वेगप्रसञ्जकत्वेनाधिकारजघन्यापादकत्वादित्यत आहुः—नैमित्तिकत्वादित्यादि। भक्तस्य द्विधा गृहस्थितिः पूर्वमुक्ता। तत्र भगवति पाण्डवान्प्रति प्रचलिते सहस्थितेरभावाद्भगवत्कार्यार्थं स्थितिरवशिष्यते, कार्यं तु पाण्डवरक्षारूपम्, तद्यदा न सिध्यति तदा तदर्थस्थितेरप्यभावात्त्यक्तव्यमिति, गृहत्यागस्य नैमित्तिकत्वादस्थितौ निमित्तभूतानां बहिर्मुखानां कौरवाणां नगरस्य परित्यागकथनमुद्वेगप्रसञ्जकत्वेऽपि नाधिकारन्यूनत्वायेत्यर्थः। नन्वेवं सति तेषां बहिर्मुखत्वमात्रं वक्तव्यम्, किं दोषान्तरकथनेनेत्याकाङ्क्षायामाहुः—अत्र मुख्येत्यादि। तथा च मुख्यदोषकारणबाधनार्थं दोषान्तरकथनमित्यर्थः।

९ यदा चेत्यत्र। धर्मान्तरेणेति। पार्थसहितत्वेन। तन्मध्य इति। पूर्वोक्तदोषत्रयेणाल्पीभूतसुहृत्तमध्ये।

१० यदोपेत्यत्र। यदिति मन्त्रवाक्यम्।

१२ पार्थानित्यादि। पूर्वश्लोक एकस्याजातशत्रोरेव कथनादत्र बहुवचनं किमभिप्रायमिति शङ्कायामाहुः—बहुवचनेनेत्यादि। लक्ष्यत इत्यजहत्स्वार्थया बोधनान्न प्रतिज्ञाहानिः। जरासन्धस्य राजसूयारम्भे जितत्वात्तद्विजिगीषा नेदानीं युज्यत इत्यरुच्याऽर्थान्तरमाहुः—नृदेवदेवा इत्यादि।

१३ स एष इत्यत्र। निदानमिति। रोगोच्छेदमूलकारणम्। अयमिति। एष इत्यस्यार्थनिर्देशः।

१४ इत्यूचिवानित्यत्र। मन्त्रस्य श्लोकत्रयात्मकत्वेन पूर्वोक्ता या आहेति क्रिया एतन्दन्तसम्बन्धे पुनर्वचनक्रिया व्यर्थेत्याशङ्क्य पदसम्बन्धमाहुः—इत्यूचिवानिति सम्बन्ध इति। इत्यूचिवानित्यस्यासकृत इत्यनेन सम्बन्ध इति पूर्वोक्तोपसंहार एवायं न तु क्रियान्तरमित्यर्थः। मन्त्रस्य श्लोकद्वयात्मकत्वे 'स एष' इति वाक्यस्य क्रियाकाङ्क्षित्वात्तदादाय पक्षान्तरमाहुः—इत्यूचिवानिति वा भिन्नमिति। एवमपि येत्यादि एतदारभ्य मन्दपृहणीयशील इत्यस्याभासो बोध्यः। अग्रे तथापीति कथनादत्र यद्यपीत्यध्याहार्यम्। चित्तस्येत्यादि। दुर्योधनादिचित्तस्य तथात्वात्स विदुरकृतं परित्यागमपि न मर्षयति, किन्तु विषमप्रवेशशङ्कया बध्नात्यतो हेतोर्नीत्यैव तथा वचनमित्यर्थः। एवं व्याख्यानस्यातिदुरूहत्वात्प्रयोजनान्तरमाहुः—अथवेत्यादि।

१५ स एनमित्यत्र। विशेषेण द्वयस्यैव दर्शनात्कथं प्रथममित्याकाङ्क्षायामाहुः—क्रियैवेत्यादि। परकृतस्य आस्त इति क्रिया। सभ्यार्हानामिति। सदसदुदासीनादिभावानाम्। चित्त इति। धृतराष्ट्रचित्ते।

१ यदपि पद् प्रशान्तुगनतु भावस्थित    २ अतिप्रगाल्भिव पाठ पुस्तकं

१६ स इत्थमित्यत्र । वाक्यस्यैकत्वाद्वाणैरिति बहुत्वानुपपत्तिमाशङ्क्य तत्समाधानायाहुः—दशेति । सुयोधनतदनुगकृतौ पूर्वश्लोकोक्तावसत्कारावेतच्छ्लोकोक्ता आह्वानाक्षेपादयोऽष्टा इत्येवं दशकर्णबाणपद उत्तरपदलोपिनं बोधयितुमाहुः—कर्णद्वारेत्यादि ।

१७ स निर्गत इत्यत्र कारिकासु । भूसंस्कारनिरूपणे सरित्सरः कथनस्य जलसंस्कारनिरूपणे तेजःसंस्कारकसत्सङ्गकथनस्य किं प्रयोजनमित्यत आहुः—उत्तरोत्तरेत्यादि । पृथिवीजलतेजस्सु पूर्वपूर्वस्योत्तरोत्तरशेषत्वात्तच्छेपः । तस्य संस्कारकस्य जलस्य तेजसश्चांशः शेषित्वाय स्फुट उच्यते । तथा चैतज्ज्ञापनं प्रयोजनमित्यर्थः । यद्यपि संस्कारकस्य संस्कार्यार्थत्वाद्विपरीतः शेषशेषीभावः, तथापि संस्कार्यस्वरूपविचारे पृथिव्यपेक्षया जलस्य तदपेक्षया तेजसश्चान्तरतायाः क्रममुक्तिकथने सिद्धत्वात्पूर्वपूर्वस्यैवोत्तरोत्तरशेषत्वमतो न शङ्कालेशः । पुण्यदेश इत्यत्र गमनमित्यनुषङ्गः । तदङ्गानीति । संस्काराङ्गानि मेध्यविविक्तवृत्तित्वादीनि । फलमिति । स्वशरीरसंस्कारार्थप्रयत्नस्यानुषङ्गिकं भूमेर्देवसम्बन्धित्वरूपं फलम् । जले सामान्यसम्बन्ध इति सरस्वतीसम्बन्धः । तद्गत इति । सरस्वतीगतः । साधनमिति । कृत्रिमतीर्थसेवनम् । फलमिति । भगवदीयसङ्गः । जलोक्तिरिति । जलसंस्कारोक्तिः । तत्त्वाज्ञानादिति । विदुरस्य स्वस्वरूपस्य चाज्ञानात् । ननु सनत्सुजातादिसङ्गस्य जातत्वात्तस्याज्ञानं न युक्तमित्यतः पक्षान्तरमाहुः—परमेश्वरेत्यादि । ननु स्वगृहे भगवत आगमनेन साऽपि सिद्धैवेत्यतः पक्षान्तरमाहुः—अथवेत्यादि । पृथिवीमिति । क्षेत्रादिरूपाम् । दैत्याधिष्ठित इति भूतल इत्यर्थात् । ननु दैत्याधिष्ठानं न शिवालयादिरूप इति नेदं विशेषणतात्पर्यमित्यत आहुः—अनेनेत्यादि । तथा च यथा प्रोक्षणादिक्रियया व्रीह्यादियज्ञनिर्वर्तनरूपोऽतिशय उदेति । तथा क्षेत्रेषु तद्गमनादिना भगवन्मूर्तिष्वनुभावप्रदर्शनादिरूपो योऽतिशयः, सोऽनेन विशेषेण प्रदर्शित इत्यर्थः । एवं चाऽनुभावदर्शनादिरूपो विदुरगोलकसंस्कारोऽत्र मुख्यः, अन्येष्वप्यनुभावप्रदर्शकत्वरूपो भगवन्मूर्तिक्षेत्रादिष्वानुषङ्गिक इति द्विविधोऽप्यत्र विवक्षित इति ज्ञापितम् । ' तीर्थीकुर्वन्ति तीर्थानि ' इति वाक्यस्वारस्यात् । तेन स्वाध्यायनियमाधीतमन्त्राणां यथा पुरश्चरणादिभिः शीघ्रफलदत्वम्, तथा विदुरक्रियया भगवन्मूर्त्यादिषु विशेषानुभावप्रदर्शकत्वमिति सिद्ध्यति ।

१८ पुरेष्वित्यत्र । भक्तिजनकानीति । एतेन वैदुरिकशरीरेऽतिशयो भक्त्याधिक्यानुकूलरूपो बोधितः । अनेनेत्यादि । भूतान्तरगुणानामेव वाच्यत्वादत्र सैव तथाविधा संस्कृतेत्यर्थः । घ्राणस्पर्शनरसनदर्शनक्रियाभिर्विषयस्य जनकस्य च संस्कारो युगपदेव सम्भवति । ननु शब्दस्य ग्रहणजननगोलकयोर्भेदादित्यत आहुः—अनन्यत्वेनेत्यादि ।

२१ तत्राऽथेत्यत्र । तस्येति । श्रवणस्य । विशेषणमिति । सुहृत्पदम् । नन्वेवं सति तृतीयपादोक्तस्य विशेषणान्तरस्य किं प्रयोजनमत आहुः—अनुवाद इत्यादि । बहुकालगमनोत्तरमपि यत्तत्रत्यैरनूद्यते तत्सर्वनाशकत्वरूपधर्मप्राधान्येनैव, न तु कौरवनाशरूपधर्मिप्राधान्येनेति वैपरीत्यं धर्मिणः पूर्वं कथनं विनाशस्यावस्थाभेदेनौदासीन्यशोकयोर्निरूपणार्थमित्यर्थः ।

२२ तस्यामित्यत्र । गतेति नाशश्रवणाद्गता ।

२४ तत इत्यत्र । प्रत्ययजनकमिति । श्रुतस्यार्थस्य प्रकारयाथार्थ्यबोधजनकम् ।

२५ स वासुदेवेत्यत्र । उभयत्रेति आलिङ्गने प्रश्ने च । हेतुरिति शेषः । वायुरिति । स्मरणसमानाधिकरणप्राणरूपो वायुः ।

२६ कच्चित्पुराणावित्यत्र । स्वगतशब्दोऽन्तर्यामिबोधक ।

२८ कच्चिद्वरूथेत्यत्र । शक्त्यतिशयाधानमिति । पूर्ववद्युद्धपराभवो माभूदित्येतदर्थं तथाकृतमित्यर्थ ।

३३ कच्चिच्छिवमित्यत्र । उक्तं भवतीति । अर्थादृष्टान्तेनोक्त भवति ।

३४ अपिस्विदास्त इत्यत्र । लोकसिद्धमिति । मनस आत्माभेदस्य लोके प्रसिद्धत्वादित्यर्थः ।

३६ अपि स्वदोर्भ्यामित्यत्र । गुणद्वयमिति । राजसूयकृत साम्राज्यलक्ष्मीरर्जुनकृता सेवा चेति गुणद्वयम् ।

३७ किं वेत्यत्र । अघमतिपदं ' सुपा सुलुक् ' इत्यनेन लुप्तविभक्तिकमित्याशयेनाहु — अघमति किमिति ।

४० अहो इत्यत्र । म्रियत इत्यत्र विकरणव्यत्ययमभिप्रेत्याहु —अर्थात्प्राणानिति ।

४४ अजस्येत्यत्र । अनेनेति । विदुरेण ।

४५ तस्येत्यत्र । संस्कृताकाशसिद्धयर्थमिति । भगवच्चरित्रस्मृत्या संस्कृतहृदयाकाशभवनार्थम् । अत्र भगवच्चरित्रेत्यादिपदैराकाशादिक्रमेणोल्लेख्ये (?) ज्ञेय ॥

इति श्रीगोस्वामिपुरुषोत्तमजीमहाराजकृत–तृतीयस्कन्धसुबोधिनीप्रकाशे प्रथमाध्यायविवरणम् ॥ १ ॥

# अथ द्वितीयाध्यायप्रकाशः ।



अथ द्वितीयाध्याय विवरिषव सङ्गतिं वक्तुमध्यायद्वयार्थमाहुः–अधिकारेत्यादि । तथा चावसर सङ्गतिरित्यर्थः । ननु द्वितीयाध्याय उद्धवचरित्र भगवद्वार्ता चोच्यते । तत्र मात्रासर्ग आद्ये वाच्यस्तत्रोद्धवचरित्रस्य लौकिकवत्प्रतिभानात्कथं मात्रासर्गरूपतेत्यत आहु –मुख्येत्यादि । मुख्याधिकारिण इति षष्ठी । तथा च तादृशचरित्रप्रयोजकतदवस्थायास्तदानीन्तनत्वेन विदुरानुभूयमानमाहात्म्यरूपतयैव विषयतेति मात्रासर्गस्तेन रूपेणेत्यर्थ । ननु मात्रासर्गे श्रीमदुद्धवमाहात्म्यसूचने हरेर्माहात्म्यसूचकपूर्वमन्यविरोध इत्यत आहु –श्रिया त्वित्यादि । तथा च श्रिया भगवत्सिद्धैवात्र निरूप्यत इति तन्माहात्म्यसूचनस्याभावान्न विरोध इत्यर्थः । ननु मात्राणा पञ्चसङ्ख्याकत्वात् पङ्क्तिस्तन्निरूपण कुत इत्यपेक्षायामाहु –पङ्क्तिरित्यादि । तथा च संस्कारकाणां तावत्त्वेन पङ्क्तिरचितत्वो न दोष इत्यर्थ । नन्वेतावतैव मात्रासर्गोक्तिसिद्धौ शिष्टानामष्टाविंशतीनां कोऽर्थ इत्यत आहुः–पञ्चेत्यादि । तथा च सप्तसहितेनाधिकेनाधेन भगवतोऽभिमेर्गुणानां च निरूपणादरवत संस्कारकारणत्वेन ज्ञानविषया योत्ता, हि यतो हेतो, ते अत्रोच्यमाना सर्व एव यादवा देवा संस्कृताः, तथा च संस्कारकसंस्कृतयोर्बोधनाय तत्तत्कथनमित्यर्थ । एव नुवत्या गर्वाराशयमुक्त्वा विदुरोद्धवसंवादेऽध्यायम्यानुपयोगात्तदर्थं सङ्गत्यन्तरमाहु –कथायामित्यादि । कथायामिति । प्रश्नोत्तरके संवादे । तथा चाऽध्यायचतुष्टये प्रश्नोत्तरभावः सामान्यसङ्गतिरित्यर्थ । कस्य विदु

---

१ अ ममस्वत्माभेदस्य—इति च ट     २ भगवच्चरित्रसर्गदिपदैः पाठा पाट

चरमित्याकाङ्क्षायां विशिष्य तामाहुः—सामान्येत्यादि । पूर्वाध्याये सामान्यकुशलम्, विशेषकुशलम्, भगवच्चरित्रञ्चेति त्रयं क्रमेण पृष्टम् । तत्र सामान्यकुशले त्वष्टादशभिस्तेषोत्तरमित्यर्थः । तथा सति शिष्टा दश चरित्रप्रश्नोत्तरभूता इत्यर्थः सिद्ध्यति । ननु कथायां प्राथमिकानां षण्णां श्लोकानां का सङ्गतिरित्यत आहुः—भक्तीत्यादि । भक्त्युद्रेकयुक्त उद्धवे षड्भिः श्लोकैः पञ्चार्थाः, षडर्था वा उच्यन्त इति शेषः । स्फुटमग्रे । तथा च फलोपोद्घात एव सङ्गतिरित्यर्थः । हेतूक्त्या तस्य साधनमिति । तत्स्वभावकथनेनासामर्थ्यसाधनम् ।

१ इतीत्यत्र । तत्र हेतुरिति । अवक्तव्ये हेतुः । ननु मास्तु स्वतः कथं तथापि प्रश्ने तूत्तरदानमावश्यकमिति कुतो नोक्तवानित्यत आहुः—भगवानितीत्यादि । हेत्वन्तरमाहुः—सा हीत्यादि । ननु निषेधे कुतोऽशक्तिरित्यत आहुः—प्रत्युतेत्यादि ।

२ य इत्यत्र । अत एवेति । अशक्तेः सेवाद्यभावजन्यत्वादेव । एवञ्चायमुद्रिका (?) भक्तिः सेवां विनाऽशक्यत्वात् ? । य एवम्, स एवम्, यो नैवम्, स नैवमित्येवमत्र भक्तिलिङ्गत्वमर्थात्साधितं ज्ञेयम् ।

३ स कथमित्यत्र । प्रकृत इत्यादि । असामर्थ्ये हेतूक्त्या हेत्वभावेन कार्याभावं वदनभावमुखेन कण्ठतो भक्तिलिङ्गतया साधयतीत्यर्थः । आनुषङ्गिकमिति । तत्र 'प्रवयसोऽप्यासन्' इति श्लोकोक्तं भगवद्दर्शनस्य गौणं फलम् । प्रश्न इति । प्रसिद्धौचित्यानुवादात्मकः प्रश्नः । भर्त्ता सन्नित्यादि । तैत्तिरीयारण्यकषष्ठप्रश्नेऽयमनुवाकः, स सर्वोऽप्येतल्लीलाभिप्रायस्वरूपयोर्बोधको मया विद्वन्मण्डनविवरणे व्याख्याय व्युत्पादित इति ततोऽवधेयः । इत्यादिश्रुतेरिति । आदिपदेनाग्रिमानुवाकसङ्ग्रहः ।

४ स मुहूर्तमित्यत्र । ननु सद्यो मुक्तौ प्राणलयस्यावश्यकत्वात्तदभावे को हेतुरित्यत आहुः—सुधापदेनेत्यादि । स्मरण इति केवले स्मरणे । क्रियारूपस्पर्शेन्द्रियेत्यादि । आनन्दनाक्रियानिरूपकस्पर्शेन्द्रियमुपस्थस्तस्यान्तर्मुखत्वमित्यर्थः । विषय इत्यादि । उक्तेन्द्रियविषयो भक्तिरूपो निरूपित इत्यर्थः ।

५ पुलकेत्यत्र । अन्यथेति । सर्वव्यापारराहित्येन भक्तिलिङ्गाजनने पश्यतो भक्त्यजननात् सर्वव्यापारराहित्यस्य भक्तिलिङ्गजनकत्वमाहेत्यर्थः । नन्वेवं संप्लावकस्नेहप्रसरकथनस्य किंप्रयोजनमत आहुः—सा हीत्यादि । तथा च भक्तेः साहजिकत्वज्ञापनाय तदुक्तिरित्यर्थः । पुलकोद्भेदनिरूपणप्रयोजनमाहुः—अनेनेत्यादि । अनेन पुलकोद्भेदकथनेन 'सर्वेषां विसर्गाणां पायुरेकायनम्' इति श्रुत्युक्ता विसर्जनक्रिया निरूपितेत्यर्थः । इदमेव 'अक्षण्वताम्' इत्यत्र 'रोमोद्गमस्तथा' इत्यनेनोक्तं ज्ञेयम् । न चात्र गोलकस्यापि कारणत्वं शङ्क्यम् । इन्द्रियस्थित्यर्थमेव तस्यापेक्षणात् । अन्यथा खड्गादीनां हस्तेन चलनस्यान्येषां पादेन शिल्पस्याऽप्यसम्भावापातात् 'सर्वेषाम्' इति विशेषणश्रुतिवाक्योपपत्तेश्च । इमं न्यायं सजातीयेष्वप्यतिदिशन्ति नियच्छन्ति च । एवमेवेत्यादि । भक्त्युद्रेक इन्द्रियाणां पराक्त्वनिवृत्तौ तैरन्तर्भगवत्साक्षात्कारे भक्तदेहनिष्ठानां मात्राणां 'घ्राणं च गन्धः' इति न्यायेन भगवदिन्द्रियरूपत्वप्राप्तिरेवं बहिर्विषयाणामपीत्येवं मात्रासर्गोऽत्र तेन विदुरस्याऽपि भावीति ज्ञापनायाऽत्र बोधित इति भावः ।

६ शनकैरित्यत्र । गृहीत्वेति सन्निधाप्येत्यर्थः । निद्रापायोत्थितत्वमिति । यथा सुषुप्तौ सति संपद्य निद्रापाये जीवो बहिरायातीति तद्वदागतत्वमित्यर्थः । तादृश इत्यादि । तथा चैतेन नरवत्(१)प्रियत्वसाधकमुख्यभक्तिप्रतिबन्धकीभूतगर्वस्याभावः सूचित इत्यर्थः ।

७ कृष्णद्युमणीत्यत्र । आधिदैविक इति । देवे विद्यमानो मूलाविद्यास्वरूपः । आधिभौतिकमिति ।

१ एवञ्चेयमुद्रिक्ता भक्तिरिति एवञ्चायमुद्रिक्तभाक्तिगिति. पाठः प्रतीयते

भौतिकेन तेजसा प्रत्यमानत्वात् । इतेत्यादि । तथा च भूतरूपतेजोमात्राहारकत्वाद्राध्यात्मिकमित्यर्थः ।

१० देवस्येत्यत्र । रागमिति । स्वस्य यादवेषु स्नेहम् ।

११ प्रदर्श्येत्यत्र । अन्यथा जानीयुरिति । अन्यथा दोषारोपपुरःसरं जानीयुः । अत एवेति । एतदर्थम् । विदुरज्ञानमिति । 'अजस्य जन्म' इति पद्योक्तं स्वेच्छया जनिते देहेऽप्रिवद्भगवदावेश इत्याकारकं ज्ञानम् । तत्र हेतुः—यथेत्यादि । इतिर्हेतौ । ननु लोच्यतेऽनेनेति करणव्युत्पत्त्या लोचनशब्दस्य ज्ञानजनकत्वमेवार्थो युज्यते, न तु ज्ञानरूपत्वमिति चेत्तत्राहुः—न हीत्यादि । तथा च बोधवैशिष्ट्य एव चक्षुषः करणत्वेन ज्ञानजनकत्वस्य बोध एव पर्यवसानात्तत्करणत्वेऽपि ज्ञानरूपत्वं नायुक्तम् । विशिष्टज्ञानं प्रति विशेषज्ञानस्य हानोपादानबुद्धिं प्रति विषयत्वेन विषयज्ञानस्य मणित्वेन मणिज्ञानस्य च करणत्वेऽपि ज्ञानरूपत्वानपायेन ज्ञानरूपत्वव्याख्यानेऽपि दोषाभावादित्यर्थः । ननु तथापि गौण्यापत्तिस्तु दुर्वारैवेत्यत आहुः—चक्षुष इत्यादि । तथा च लौकिक एव प्रत्युत गौणीत्यर्थः । लोचनाधिदैविकत्वात्तद्धर्मानत्राहुः—न हीत्यादि । मध्यरत्वपरिहाराय तु शब्द इत्याहुः—तुशब्देनेत्यादि ।

१२ यन्मर्त्येत्यत्र । सच्चिदानन्दरूपमिति । निरूपयितुमिति । पूर्वं यादवज्ञानानुवादे 'भूतावासममंसत' इति तेषां विरुद्धज्ञानमुक्तम् । तस्य विरुद्धत्वबोधनायाविभक्तसच्चिदानन्दमक्षररूपमिति वक्तुं सजातीयविजातीयस्वगतवर्जितमित्यर्थः । पृथिव्युत्कर्षमिति । पृथिव्यपेक्षयोत्कर्षम् । ननु मर्त्यानां लीलेति समासे सम्बन्धषष्ठ्या आधारतारूप एव सम्बन्धः प्रतीयते । तथा सति मर्त्याधारकलीलायोग्यमित्यर्थो भवति । तेन को वा पृथिव्युत्कर्षः सिद्ध इत्यत आहुः—मर्त्यानामित्यादि । अत्र मर्त्यमिति नोक्तम् । किन्तु नटचेष्टावत् अनुकार्यतच्चेष्टासजातीयचेष्टायोग्यत्वम्, तेन तस्य मर्त्यभेदः सिद्ध इत्येष उत्कर्ष इत्यर्थः । एतदेव प्रथमस्कन्धे स्फुटमुक्तम् ' धत्ते जह्याद्यथा नटः ' इति । कार्यदोषराहित्यादिति भावविकारराहित्यात् । अनन्तरूपकल्प्यां इति । संचायकवद्रूपप्रयोजिकायाः । प्रदर्शनीयमित्यादि । स्वस्वरूपज्ञातृषु प्रदर्शनीयमित्यतो हेतोः तादृशं रूपं संचेयन्यायेन मायायां निर्मितम् । तेन जलोत्कर्षः कथमित्यत आहुः-नानेत्यादि । माया च स्वच्छत्वरूपा, तथा च यथा तेजोरूपस्य चन्द्रादेः प्रतिबिंबो अंशानां किरणानां जले प्रवेशात् भवति, तत्र प्रविष्टे चांशे चन्द्रधर्माः सर्वे मायया प्रत्याय्यन्ते, तथा च संचायकस्थानापन्ना शुद्धसत्त्वात्मिका माया तस्यां संचेयन्यायेन प्रविष्टो योऽशस्तस्मिन् मूलधर्माः प्रत्याय्यन्ते, तयेत्येष मायिकत्वेऽपि मायोत्कर्ष इत्यर्थः । एवं च संचेयतया भगवतो योगमाया समावृतत्वेन सर्वेषां भगवानप्रकाश इति । ' नाहं प्रकाशः ' इति गीतावाक्यम् । मायावच्छिन्नेश्वरवादस्तत्र च मायया मूलधर्मप्रतीतिर्मूले वास्तवास्ते धर्मा आवृते कंपादिवन्मर्त्यधर्मप्रतीतिः, वस्तुतस्तदभाव इति सर्वं यथास्थितं सङ्गतं भवति ।

१३ यद्धर्मसूनोरित्यत्र । दकुस्वस्त्ययनं व्युत्पादयन्ति—सर्वे इत्यादि । नाशका इति । अंशतो नाशकाः । अत एव मणिपरीक्षकादीनां तत् स्थापनार्थं बाल्यादेवोपनयनाऽभ्यासः । ननु ' स सर्वधीवृत्तिः ' इत्यत्रास्मादिन्द्रियाणां भगवद्विषयत्वं व्युत्पादितम् । तथा सति अस्मदृशो भगवद्विषयत्वम्, तथा च न स्वनाशः क्रियत इति पूर्वोक्तमसङ्गतमित्याहुः—येऽपीत्यादि । स्वस्ति पदं ह्यविनाशे कल्याणे च रूढम् । तथा चानाशकत्वाभावे दृष्टेः स्वापोषकत्वान्न तेषामपि कल्याणरूपतेत्यर्थः । एतदेवाहुः—किं बहुनेत्यादि । तर्हि प्रकृतेऽपि विषयत्वात्तथात्वापत्तिरित्यत आहुः—तथा च विषयत्वेऽपि ज्ञानरूपत्वान्न तथात्वमित्यर्थः । तदु-

१ प्रत्याय्यन्ते. पाठ· १ प्रत्याप्यन्ते पाठ

पपादयन्ति--ज्ञानेन्द्रियेत्यादि । सच्चिदानन्दरूपे प्रपञ्चे इन्द्रियाणां स्वसजातीयविषयग्राहकत्वमन्यत्रोपपादितम्, दशमस्कन्धे 'अदर्शनं स्वशिरसः' इत्यत्रोपपादयिष्यते च । एवं सति ज्ञानरूपाणामिन्द्रियाणां तस्यैव स्थानत्वादुक्तरीत्या तथेत्यर्थः । नन्वेवं ज्ञानरूपत्वेऽपि विषयविषयीभावाद्दे(?)काभावेन साजात्याभावात् कथं पोषकत्वमित्यत आहुः--चक्षुष इत्यादि । तथा चैवं साजात्ये सर्वदृशां तत्र प्रवेशेन[१] संसर्गाद्द(?)वर्धने[२] युक्तैव कल्याणरूपेत्यर्थः । अत एव स्वरूपवर्णने मनोनयनवर्द्धनमिति प्रयोगोऽपि । एवं चिद्रूपत्वं प्रतिपाद्य तदुत्कर्षं साधयन्ति--तदेत्यादि । इतोऽर्वागिति । मितोऽर्वाक् । तस्यैव विवरणं सत्त्वसृष्टाविति ।

१४ यस्यानुरागेत्यत्र । आनन्दरूपतामिति । उत्कृष्टानन्दरूपताम् । तदुपपादयन्ति--स्त्रिय इत्यादि । निरुपाधिकदृष्टिविषयत्वं व्युत्पादयन्ति--पूर्वमित्यादि । अनुराग इति एतासां भगवत्यनुरागः । भगवदैक्यमिति । मनसो लये चिदंशस्य स्वात्मनो रसात्मना भगवता सहाभेदप्रतीतिः, तदभावार्थम् । परमप्रेमात्मक इति । वाक्यान्वयाधिकरणोक्तरीतिकब्रह्मधर्मात्मकः । एतेनानुरागस्यानया प्रणाड्या निरुपाधिकत्वं प्रकटीकृतम् । नन्वेवं परमप्रेम्णा अभेद एव संपाद्ये भेदबोधकस्य हासस्य किमिति मध्ये निवेश इत्यत आहुः--उत्साहेत्यादि । 'सास्त्रियः सरपतिं यथा' इति दृष्टान्तबोधितं रासस्य कार्यान्तरमाहुः-रास इत्यादि । ननु तादृशभक्तचभावे कथं रासेन बश्यतेत्यत आहुः--अनेनेत्यादि । आक्षिप्त इति । अर्थाक्षिप्तः । स्वतन्त्रा इति 'सोऽश्नुते' इत्युक्तरीत्या स्वतन्त्राः । आनन्दमय इति । निरवध्यानन्दात्मको भूमेत्यर्थः । एवमानन्दोत्कर्षः समर्थितः । एतद्दार्ढ्यार्थं आनन्दसाधनत्वेन दर्शनविषयत्ववारणायाहुः--कामेत्यादि । अन्यथेत्यादि । तथा च यद्यानन्दसाधनत्वेन भगवान् दर्शनविषयः स्यात्, चेतनायाः सर्वांशेन भगवत्यनुप्रवृत्तिर्न स्यात् । यदि तथा स्यात् तदा सर्वकृत्यशेषत्वेनावस्थानं न स्यात् । एतेन यत्किंचित्कृत्यकरणमपि तासां 'ते तु ब्रह्महृदम्' इति न्यायेन भगवत्कृतमेवेति सिध्यति, तेन न कोऽपि शङ्कालेशः ।

१५ स्वशान्तरूपेष्वित्यत्र । तमर्थमिति । आविर्भावनिमित्तभूतमर्थम् । महानिति । महत्तत्त्वम् । ननु प्रथमपुरुषयुक्तत्वे आभरणादिवत्तत्प्रतीतिः स्यादित्यत आहुः--सृष्टीत्यादि । तथा चान्तर्भावान्न प्रतीतिरित्यर्थः । अन्तर्भावे किं मानमत आहुः--अत एवेत्यादि । एतदेवेति । जन्मादिसूत्रोक्तं जगदाधारत्वं विरुद्धधर्माश्रयत्वं च । अन्यथा व्यावृत्त्यर्थमिति । अक्षरपुरुषव्यावृत्त्यर्थम् । व्याख्यातमिति । विद्यमानस्यैव प्रकटीभावो नत्वागमनमित्येतदाभासग्रन्थ एवोक्तमित्यर्थः । एतेन व्यापिवैकुण्ठे स्थितेरत्र स्थितेश्चैतावान् विशेष इति बोधितम् । तेन 'वृन्दावनं सखि' इत्यस्याभासटिप्पणी यथा श्रुतैव सङ्गच्छत इति ज्ञेयम् ।

१६ मामित्यत्र । एवामिति । त्रिभिः स्वरूपमुक्त्वा तस्मिन्नभिव्यक्तस्थितस्याविर्भावकथनेन । अयुक्तत्वे हेतुमाहुः--किमित्यादि । खेदे हेतुमाहुः-- एतदपेक्ष्येत्यादि । तथा च यदि जन्मानुकरणमेवावश्यकम्, तदा नृसिंहमत्स्यवराहवत्तत्कर्तव्यम्, तदभावात् खेद इत्यर्थः । लौकिकानामिति । लोके उत्कृष्टानाम् । उभयाभावं व्याकुर्वन्ति--नहीत्यादि ।

१७ दुनोतीत्यत्र । एषा गतिरिति । स्वरूपविरोधाद्भगवद्वाक्यान्तरविरोधाच्चानादरणीयत्वम् ।

१८ को वेत्यादि सतानां[३] तात्पर्योक्तौ स्वयं निर्दोषपूर्णगुणविग्रह इति पदद्वयतात्पर्यबोधकम् । मूलगुणा[४] इति । अतिसामर्थ्यादयः । को वेत्यत्र वेत्यनादरस्य यो विषयस्तं स्फुटीकुर्वन्ति--यास्त्वित्यादि । ये चाऽन्ये मन्दा मन्दभाग्या आधुनिकास्तथा कुर्वते, तत्र हेतुं व्याकुर्वन्ति--रेणुरित्यादि । तथा च यद्घ्राणद्वारा

१ दृक्त्वा इति स्यात् ।    २ 'समर्गोद्वर्धने' ।    ३ उपलब्धपुस्तकेषु तु ज्ञायेनेत्येन पाठ ।
४ स्थूलगुणाः ।

॥ रेणुर्नाऽन्तःप्रविष्ट , सोऽनादरविषय इत्यर्थ । परमैश्वर्यं प्रयच्छतीति 'तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यम्' इति वाक्यात्तथेत्यर्थ ।

१९ दृष्टेत्यत्र । निषिद्धेनेति, प्रकारेणेति शेष ।

२० तथैवेत्यत्र । निरूपयन्निति । निरूपयिष्यन् । वर्तमानसामीप्ये वर्तमानवद्वा ।

२१ स्वयं त्वित्यत्र । तथा चेन्न व्यामुग्ध इत्यनेन तदानीमपि येषाममुक्तिस्तत्रोपपत्तिरुक्ता । तादृशीमिति । ईश्वरम् । त्र्यधीश इति । गुणत्रयेशो लोकत्रयेशश्च । स्तुतौ वाच करणत्वेन किरीटकोटौ च तद्भावेन स्तुत्यसंभवमाशङ्क्य तत्रोपपत्तिमाहु —यथेत्यादि । सकृदुच्चारिते पदे पदार्थे बोधिते संस्कारोपनीतपदार्थाना वाक्यार्थबोधकरणत्व शब्दधर्मरूपमशब्देषु पदार्थेषु भाट्टैः स्वीक्रियते तथेत्यर्थ ।

२२ तत्तस्येत्यत्र । भगवतः कर्तव्येति । भगवत्कृतिसाध्या । अयमिति । उपविष्टस्याऽग्रे भगवात्स्थितत्वदर्शनादिरूप । नन्वभिप्राये ज्ञाते कथ क्लेशसत्त्वेत्यत आहु —क्लेश इत्यादि । भगवत्कृतत्वाभावं व्युत्पादयितुं तदाशयमाहु —स हीत्यादि ।

२३ अहो इत्यत्र । फलपूर्णस्येत्यादि । फलेन निरवध्यानन्देन पूर्णस्य स्वस्य तुच्छफलत्वसाधकमित्यर्थ । ज्ञानहेतुपक्ष इति । भगवानविनाशी, तत्रैतद्दोषसम्बन्धो न भविष्यतीति ज्ञानस्य हेतुत्वपक्षे ।

२४ मन्येऽसुरानित्यत्र । इति वचनादिति । अस्मिन् वाक्ये भगवदप्राप्त्यधमगत्योर्हेतुहेतुमद्भाव वचनात् । अप्राप्त्यभावादिति । तद्धेतुभूताया भगवदप्राप्तेरभावात् । तर्हि येषा न मुक्त्यधिकारस्ते क इत्यत आहु —ये तु मामित्यादि । अन्त करणधर्मेणेति । बुद्धिवृत्तिविशेषेण । अत्र मतान्तरमाहु —ये त्वित्यादिमन्यन्त इत्यन्तम् । वैष्णवैरिति । तन्त्रे । तत इति । उक्तवाक्येन तेषा तमोलयनिश्चयात् । एतदर्थमिति । द्विविधाना मुक्त्यमुक्तिव्यवस्थार्थम् । जीवः परमार्थतो ब्रह्मभिन्न इति वाद नैयायिकवदागन्तुकसत्तावादेन दृष्टसृष्टिमुपगम्य प्रातिभासिकसत्तावादेन वा विनाशसम्बन्धिनीं प्रपञ्चप्रक्रिया च मन्यन्ते । स्वमतविरुद्धं भगवद्वाक्यम्, तादृशानि वेदवाक्यानि च मोहकवाक्यवन्मत्वा प्रतिपादकानि मन्यन्त इत्यर्थः । एव तन्मतमनूद्य तत्र दूषणमाहु —ते वहिरित्यादि । वास्तवभेदवैनाशिकप्रक्रिययोरङ्गीकारे 'यथाग्ने क्षुद्रा विस्फुलिङ्गा' इत्युक्त सर्वलोकप्राणदेवात्मना ब्रह्मण सकाशाद्विभागेन व्युच्चरणबोधक श्रुतिवाक्य 'एकोऽह बहु स्याम् प्रजायेय' इत्यागन्तुकभेददृष्टिबोधकानि श्रुतिवाक्यानि; 'ममैवांशः' 'अह सर्वस्य प्रभव' 'एकमग्र आसीत्' 'विश्व वै ब्रह्म तन्मात्रम्' चतु श्लोकीप्रभृतिवाक्यानि जीवद्वयमयेशाङ्गीकारे जयविनयशापबोधकवाक्यानि च विरुध्येरन् । उक्तवाक्याना मोहकवाक्यतुल्यत्वाङ्गीकारे 'यदा ह्येवैष एतस्मिन्नुदरमन्तर कुरुते । अथ तस्य भयं भवति' 'तत्त्वेव भयं विदुषोऽमन्वानस्य' इति 'मां विधत्तेऽभिधत्ते माम्' इत्यादीनि विरुद्ध्येरन्, अतश्चिन्त्या इत्यर्थः । तेषा वैष्णवत्वेन तेषु पक्षपाताभावान्तरमाहु —भक्त्यर्थं वेति । भक्तिस्तु पूर्वोक्ते सिद्धान्तप्रकारेऽपि सिद्ध्यतीति विरोधापरिहाराय पक्षान्तरमाहु —लोकशिक्षार्थमिति । तथा च सिद्धादौ तात्पर्याभावान्न विरोध इत्यर्थ ।

२५ यदुदेवेत्यत्र । चारितार्थ्यात्मु । पूर्वमुद्भवाध्यायनिरूपणे मायासंस्कारो भक्त्युद्रेकेणातद्भेदाय साक्षात्कारेऽप्यन्यत्र उक्त, तथापि साक्षात्कारोत्तर केन प्रकारेण भवतीति नोक्तम्, अतो व्यापारविशेषबोधनार्थं प्रश्न इत्याशयेनाहु —तत्र इत्यादि । अत्र मृत्योरिति पाठः । लोकविशेषेण भगवन्तोऽनुमारत प्रपरि-

१ [illegible]

भकूटकरणे, वेदाविरोधेन भगवद्वागनुसारतः प्रपत्तिर्वेणुस्वनश्रवणादागमने बोध्या। दु खाभावपदेनानुद्भूतः परमानन्दो बोध्य । दु.खस्यानन्दाभावरूपताया सर्वनिर्णये व्युत्पादितत्वेन तदभावस्यानन्दात्मकत्वादिति। एतेनाधुनापि कृपावलोकिताना हृद्येतद्वानेनैतरेव मात्रामस्कार इति बोधितम्, गन्ध एतेषा करणत्व स्मरणादेस्तु व्यापारतेति बोध्यम् । विवृतौ। तात्पर्यस्येति । सर्वमुक्त्यभावाय लोकवचनरूपस्य । सर्वेत्यादि। भगवति प्रतीयमानाना तेषा वचनकरणत्वाय ।

२६ तत इत्यत्र । समुदायेन दशभि प्रत्येक द्वाभ्या निरूपणस्य तात्पर्यमाहु —एत इत्यादि । प्राणात्मका इति इन्द्रियात्मका । विषयात्मकाविति । सृष्ट्युत्तर मात्राणा भूतगुणतया प्रवेशादिन्द्रियैर्मात्राग्रहणे भूतानामपि विषयत्वाच्चेत्यर्थ ।इदं यथा तथा मया प्रस्थानरत्नाकरे व्युत्पादितम्। श्लोकद्वयोक्तं सगृह्णते जनन इत्यादि । हेतुत्रयमिति। स्त्र्यादिसुखचिकीर्षा प्रार्थनाद्वय च। हेतुद्वयमिति। पितुर्भय ब्रह्मप्रार्थना च। एवमनुपक्षे कृते व्रजवासोऽपि ब्रह्मप्रीत्यर्थ इति शङ्का स्यादिति तन्निवृत्त्यर्थमाहु —इदमित्यादि। प्रार्थितपूरणम्। तर्हि किं प्रयोजनमित्याकाङ्क्षायामाहु —इदं चान्तरिक्षेत्यादि । अन्तरिक्ष यथा रुद्रदैवत तेऽन्तरिक्षमजयन्निति श्रुत्या बोध्यते, तथा व्रजोऽपि रुद्रस्य पशुपतित्वाद्रुद्रदैवत इति तथेत्यर्थ । अत्रायमेवाशय इत्यत्र किं गमकमत आहु —अत एवेत्यादि । तुल्यता समर्थयन्ति—वायोरित्यादि । वायो कार्यस्य यथा गूढत्वम्, तथाऽत्रेति वायोर्व्रामोन्तरिक्षतौल्यसमर्थक इत्यर्थ । सबलत्वमिति । बलस्य सङ्कर्षणत्वेन रुद्राधिदैविकत्वात्तत्प्रीत्यर्थं बलसाहित्यमित्यर्थ । एव च तावद्वर्षवासः पूतनामारणाद्या सङ्कर्षणलीला बलसाहित्येन कृता गोचारणाद्या । फलप्रकरणीयपष्ठाध्यायलीला च रुद्रप्रीत्यर्था । केवलकृता मारणव्यतिरिक्ताश्च न तदर्था इति फलति । तथा जन्मस्थानभूमिर्व्रजस्थो गन्धश्चेति विषयद्वय गन्धमात्रासस्कारकमिति च ।

२७ परीत इत्यत्र । भिन्नतयेति वासुदेवनासत्त्वेन । पूर्वोक्तप्रयोजनं भूमभूवीना सुखरूप बोध्यम् । लीलाकर्तु शिरोरूपत्व साधयितुमष्टभि कथने हेतुमाहुः—सप्तेत्यादि । सप्तगोलकाना वाचश्चेत्यष्टाना तत्र स्थित्या तत्साम्येन वासुदेवस्य तथात्वमित्यर्थ । अत्र वासुदेवस्य शिरोरूपत्वकथनेन सङ्कर्षणस्य मध्यभागरूपता बोधिता । आगलाद्रुद्रमीशानमिति प्रकारस्य नृसिंहसहस्रनामोक्तत्वेन तस्याऽन्यत्र वक्तुमयुक्तत्वादिति । नन्वेव सति रसनिरूपण कथमत्र युज्येतेत्यत आहु —वक्रमित्यादि । स्कन्धार्थो हि भूतादिसर्वसर्ग सर्वगत, स च बल विना न भवति, बल च प्राणधर्म प्राणश्चापोमय, ताश्च रसप्रधाना, तद्ग्राहकं मुखम्, अतोऽत्र युक्त रसनिरूपणमित्यर्थ । तर्हि कथं श्रोत्ररूपतेत्यत आहु —श्रोत्रमित्यादि । प्रकरणार्थोऽत्र श्रोतुरधिकार, श्रोता श्रोत्रप्रधानोऽतस्तथेत्यर्थ । तथा च रूपभेदेनोभयमपि [illegible] । अत्र वत्सचारणस्य वायुक्रियात्वं द्रव्यनयनात्मकत्वेन बोध्यम्। नेतृत्वं द्रव्यशब्दयोरिति पाथो फलिष्यणस्य वक्ष्यमाणत्वात् । प्राणक्रियात्व तु कूजनग्रहणानुकूलतया । प्राणानामिति पदृवचनं [illegible] पि तथात्वातिदेशाय । तेन विहारस्यैव भगवदभिप्रेतत्वाद्वत्सचारणस्याप्येतेनैव [illegible] भाव । बालकै सह क्रीडायाः कथ रसत्वमित्यत आहुः—यमुनायाः समीप [illegible] । [illegible] सप्रधानत्वात् सामीप्येन रसत्वमित्यर्थः । श्रोत्रत्वसमर्थनायाहु —भगव[illegible] । [illegible] ति । अक्षरात्मकस्य व्यापिवैकुण्ठस्य दहर इयात्र सत्त्वात् प्रणवबीजस्य [illegible] नारूपेषु तेषु । तथा च कूजनग्रहणाच्छ्रोत्रत्वमित्यर्थ ।

---

१ अय पाठो विशेष । २ इत पूर्वं ' सा ' इत्यधिक पाठः

२८ कौमारीमित्यत्र । प्रथममिति । प्रथमवर्षे । पूर्वं भक्तानिति । ततः प्राक्कालीनान् भक्तान्। अस्मिन्नपि श्लोके वाल्ये स्तन्यादिरसग्रहणस्यैव प्राधान्याद्रसनिरूपकत्वम् ।

२९ स एवेत्यत्र । रूपस्याऽत्र निरूपणात् अग्रिमे बाधकहरं तेजो बोध्यम् । प्राणपक्षे त्वत्र तद्ग्राहकेऽत्र नेत्रे बोध्ये । अत एवाऽत्र श्रीनिकेतनत्वेन गोधनं विशेषितम् । अग्रिमे च बाधकाः कामरूपित्वेन विशेषिताः । तद्विवेकस्य नेत्रकार्यत्वादिति ।

३१ विपन्नानित्यत्र । निग्रहस्योत्थापनस्य च त्वचनेत्रस्पर्शे जननाचाभ्यां कृता मृत्योः सकाशाद्रक्षा स्पर्शरूपा अग्रिमे गोप्रसूतेः स्पर्शकार्यत्वात्तज्जनको याग एव मार्गाद्व्यावर्तकः स्पर्शक्रियारूपो बोध्यः ।

३२ अयाजयदित्यत्र । वैश्यस्तोममिति । गोसवस्य नामान्तरम् । वैश्यस्तोमात्मकमिति । वैश्यराजत्वात्तत्समूहात्मकम् । प्राणपक्षे तु कमस्य लीलायामिवात्राप्यविवक्षितत्वादयाजयदित्यत्र मुख्यम् । शरच्छशीत्यत्र वाक्चेति पारिशेष्याद्विपन्नान् वर्षतीत्येतयोर्घ्राणं बोध्यम् ।

३३ वर्षतीत्यत्र । देवताप्रधानपक्ष इति । विग्रहवती देवतैव यागे मुख्येति पक्षः । पुष्टिलीलामिति । ऐहिकानुग्रहरूपां लीलाम् । व्रजनाशमाशङ्क्येत्यार्तिविह्वलपदतात्पर्यम् । उद्धृता इति आतपत्रपदतात्पर्यम् । रक्षित इति दुष्टचतुष्टयीतो रक्षितः ।

३४ शरदित्यत्र । तस्य मन इत्यादि । 'मनःपूर्वो वागुत्तरम्' इति श्रुतेरित्यर्थः । रसात्मक इति सप्तमीयम् । एवमष्टभिरत्र शिरोरूपवासुदेवव्यूहलीलोक्ता । अत्रैतद्बोध्यम् । इयं सर्वापि लीला वसुदेवगृहे प्रकटस्य, स च परः पुरुषः, तत्स्वरूपं च यन्मर्त्येत्यादिभिरुक्तम्, उत्कृष्टसच्चिदानन्दात्मकम् । तथा सत्यक्षरात्मके पुरुषोत्तमदेहे व्यूहविभागः सिद्ध्यति । अत एव द्वादशे ' वासुदेवः सङ्कर्षणः प्रद्युम्नः पुरुषः स्वयम् । अनिरुद्ध इति ब्रह्ममूर्तिर्व्यूहोऽभिधीयते ' इत्यत्र मूर्तिपदम् । एवं च मथुरायां चतुर्व्यूहरूपेण प्राकट्यम् । गोकुले तु वासुदेवरूपेण स्तन्यजननं तत्प्रयोजनम् । पुरुषोत्तमस्तु अजन एवेति ताभिरेव ज्ञातम् । ' स त्वक्षरात्परतः परः ' इति, ' अतोऽस्मि लोके वेदे च ' इति श्रुतिस्मृतिभ्यां ततः पर उत्कृष्ट उक्तः । स तु 'कापिभूर्वाचकः' इति श्रुत्या सदानन्दः । ' आनन्दमात्रकरपादमुखोदरादिः ' इति स्मृत्या ' आनन्दरूपममृतं यद्विभाति' इति श्रुत्या च साकारः । अयमेव रसात्मा स्वमतिष्ठ एवेति तस्य लीला अर्थोक्तैव; वाङ्निवृत्तिश्रुतेरिति तत्कृपावलोकितैरवधेयमिति दिक् ।

इति श्रीगोस्वामिपुरुषोत्तमजीमहाराजकृत–तृतीयस्कन्धसुबोधिनीप्रकाशे द्वितीयाध्यायविवरणम् ॥ २ ॥

---

## तृतीयाध्यायप्रकाशः ।

अथ तृतीयाध्यायं विवरिषवः संवादे उत्तररूपा, शास्त्रे तु संस्कार्यसंस्कारकभेदेन द्विविधस्य मात्रासर्गस्य पूर्वाध्याय उक्तत्वात्तयोः संसर्गस्य च ' इन्द्रियैर्विषयाकृष्टैः ' इति न्यायेनेन्द्रियद्वारकत्वात्तत्संस्काराभावे भगवदीयमात्राभिस्तदनाकर्षे सम्यक् संसर्गाभावाच्च मात्रासंस्कारसिद्धिरिति तदर्थं हेतुता अव-

---

१ ' त्वङ्नेत्रस्पर्शे. ' इति

सरश्च संज्ञविरिति बोधयन्तस्तस्यार्थमाहुः–तृतीय इत्यादि । पोपक्रमिति । एतेन पूर्वोक्तयोर्भूतमात्रासर्गयोरधिकारजनकत्वं बोधितम् । जातेष्टचधिकरणे संख्यायास्तात्पर्यवत्त्वस्य सिद्धत्वेनात्र श्लोकसंख्यातात्पर्यमाहुः–आविरित्यादि । स्पष्टम् । तत्त्वानि गुणाश्चाहुः–दशेत्यादि ।

१ प्रथमपद्ये । आविर्भावकार्यमिति चतुर्व्यूहरूपेणावतारकार्यम् । ननु स्वरूपस्य वाह्यचेष्टारूपत्वात् कथं मनस्त्वमित्याशङ्कय तत्रोपपत्तिमाहुः–भक्तानामित्यादि । तथा च ' प्राणन्नेव प्राणो भवति वदन्वाक् ' इति श्रुत्युक्तन्यायेन मनःकार्यकरणाद्रूपस्यैव मनस्त्वम्, लीलास्तु करणभूताः स्मरणं च व्यापार इत्यर्थः । एवमग्रेऽपि बोध्यम् । नन्वेवं तन्मनःसंस्कारेऽपि कथमन्येषां मनःसंस्कारसिद्धिरित्यत आहुः–एतादृश इत्यादि । यदिति यस्मात् ।

२ सान्दीपनेरित्यत्र । इयमिति । कालोद्गीर्णगुरुपुत्रदेहरूपा ।

३ समाहुता इत्यत्र । मूलस्थं बुभूषयेतिपदं मूधाप्राविरस्येत्यभिप्रेत्याहुः–भीष्मकेत्यादि । तथा च भीष्मककन्याकर्तृका या एषां राज्ञां प्राप्तीच्छा तया स्वोट्टंकितया हेतुभूतया रुक्मिणा समाहुता इत्यर्थो ज्ञेयः। समाहुता इत्यत्र चोऽऽर्षो ह्रस्वः । श्रियःसवर्णेनेति । श्रियो रुक्मिण्याः समानौ वर्णौ वाचकौ यस्यासौ सवर्णस्तेनेति श्रीधरीये व्याख्यातम् । दत्तमिति भावे क्तः । देयमिति । दानं कर्तव्यम् । पदस्य सर्वानुकरूपत्वं कथमित्यत आहुः–सर्वप्रतिरूपत्वादिति । सर्वप्रपंचरूपमूलत्वात्; प्रतिशब्दस्य मूलस्वरूपवाचकत्वं प्रतिपुस्तकादिपदे प्रसिद्धम् । मोह इति । श्रीरुक्मणीरूपविषयिका आसक्तिः । अस्मिन् पक्षे मूलयोजनामाहुः–भीष्मकेत्यादि । तृतीययोजनायां गान्धर्वत्वप्रकारमाहुः–गान्धर्वेत्यादि । आनियतत्वात् । इच्छाया अनिश्चितत्वात् । भगवतः सर्वप्रतिरूपत्वात् कुत्रापीच्छाभवने भगवत्येव पर्यवसानाद्विवाहस्य गान्धर्वत्वमित्यर्थः । श्रीधरेण त्रिधा व्याख्यातत्वादत्रापि तदादृत्य त्रिधा व्युत्पादितम् । सर्वत्रेति । पक्षत्रयेऽपि । स्कन्धार्थविचारेणाऽत्र बुद्धिसर्गे गमकमाहुः–स्वभागामित्यादि । तथा चेयं संस्कारिकेत्यर्थः । संस्कार्यस्वरूपमाहुः–एषैवेत्यादि ।

४ ककुद्मिन इत्यत्र । तज्जनिकामिति । तस्माद्वेदाद्धर्माद्वा जनिर्जननं यस्याः सा तथा । बुद्धिजनिकामिति वा । अत्राऽपि संस्कारकत्त्वं भगवत एव । एवं सर्वत्र बोध्यम् ।

५ प्रभुरित्यत्र । अयमहङ्कार इति । श्रीसत्यभामानिष्ठः सः सँस्कार्यत्वेन निरूपित इत्यर्थः । संस्कृतस्वरूपमाहुः–भगवदित्यादि । सँस्कारप्रकारं वदन्तः परिचारकमप्याहुः–अस्येत्यादि । तद्रूप इति । अहङ्कारदेवतारूपः ।

६ सुतं मृध इत्यत्र । कृते करणाभावादिति । कृते भौमहनने पुनरहननस्याभावादित्यर्थः । उक्तमिति । संस्कारकमुक्तम् । इदमिति । स्वयं कर्तृत्वाभिमानरूपम् । ननु वामनावतारपुत्रं भौमं कुतो हतवानित्यत आहुः–नरकेत्यादि । ग्रासस्य गिरणात्मकत्वान्मुखकार्यत्वाच्च प्रकृते तदभावेन कर्तृकरणकर्मणामनुपपत्तिमाशङ्कयाहुः–शून्यमित्यादि । तथा च गौण्या अभिप्रेतत्वान्नानुपपत्तिरित्यर्थः । उन्मथने शरीरस्य वाच्ये तस्य भौमविशेषणत्वमयुक्तमित्याशङ्कय तत्तात्पर्यमाहुः–तच्छरीरमित्यादि । छान्दोग्ये " प्राणः पिता प्राणो माता " इति निर्धारणादत्र सुतत्वं मथनं च जीवपर्यन्तं तस्य चाच्छेद्यत्वमपि शास्त्रसिद्धम्; अतोऽत्रोन्मथनेन जीवोद्धारोऽर्थादेव प्राप्यत इति तथेत्यर्थः । वा शब्द एवकारार्थो वाक्यालङ्कारे । ननून्मथनस्य जीवपर्यन्तत्वमर्थादस्तु उद्धारस्य न ततः प्राप्तिरित्याशङ्कायामाहुः–तदन्वरित्यादि ।

१ ' वा ' पाठ

परोक्षवादत्वान्नात्र लक्षणादोषः। बहिर्विचारणे स्वार्थत्यागाभावाच्च। एवं व्याख्याने गुणान्तरमप्याहुः—अत एवेत्यादि। केनाप्यंशेनेति। स्वस्य क्रूरतया बाह्यान्तःपुरस्य पारक्यतया च। हनने दोषाभावस्य हेत्वन्तरमप्याहुः—ता इत्यादि। तथा च, यथा 'देवस्त्रियोऽसुरगृहे पिहिता अनाथाः' इत्यत्र। नृसिंहरूपेण तदर्थं हिरण्यकशिपुवधस्तथेत्यर्थः। बाह्यप्रवेशेऽपि हेतुमाहुः—सम्बन्ध इत्यादि। अतो न केनाप्यंशेन दोष इत्यर्थः।

७ तत्राहृता इत्यत्र। हरिपदस्य विशेषणत्वं प्रकरणबलेन विशेष्यतया च भगवतः प्राप्तत्वाद्बोध्यम्। स्कन्धार्थविचारेणाहुः—अनेनेत्यादि। चित्तमिति। निश्चयात्मकत्वाधिकमन्तःकरणम्। एवमत्र संस्कार्यसंस्कारकयोः स्वरूपमुक्तं ज्ञेयम्।

८ आसामित्यत्र। एवं ग्रहणमिति गान्धर्वेण भैक्ष्यपाणिग्रहणम्। इदमत्र संस्कार्यस्वरूपम्। संस्कारकस्तु स्वयमेव, न स्वयम्। नामसाम्येऽपि स्वरूपभेदादिति।

९ तास्वित्यत्र। स्वरूपत इति पदं शरीरत इत्यादीनां विशेषणं ज्ञेयम्। यागवदिति। यावत्फलसमापनं स्वरूपसतीत्यर्थः। व्यापाराकाङ्क्षायामाहुः—भगवदिच्छयेत्यादि। स्कन्धार्थविचारेणाहुः—अनेनेत्यादि। अनेनेति पद्येन। इन्द्रियप्रवृत्तिरिति। आनन्दजनकेन्द्रियप्रवृत्तिः। प्रवृत्तौ साङ्ख्यतुल्यत्वं स्फुटीकुर्वन्ति—ते हीत्यादि। ते इति साङ्ख्यजीवाः। तत्रापीति। भोगेऽपि। अत्र ह्यपत्यपदेनापगतित्याजकत्वस्य सङ्ख्यया च बाह्यत्वरूपतत्स्वरूपस्य बोधनादेतद्द्वयमुक्तम्। तेषां कदेवताकेन्द्रियकार्यत्वात्तद्वा तदिन्द्रियमपि विशेषाकारेणोक्तमित्यर्थः।

१० कालेत्यत्र। लीलाकृतिक्रमं विहाय करणक्रमेण यदत्र निरूपणम्, तस्य तात्पर्यमाहुः—कामेत्यादि। इन्द्रियमिति। कदेवताकमिन्द्रियम्। स्पर्श इति त्वक्। अत्रैवं प्रतिभाति। तास्वित्यत्रेन्द्रियं कामजनकमुक्तमपत्योत्पादनात्। आसामित्यत्र स्पर्शः, पाणिग्रहणात्। तत्राहृता इत्यत्र चक्षुः तद्दृष्ट्या भगवतोऽपि तासु दृष्टेः। समाहुता इत्यादित्रये श्रोत्रम्, सुतं मृध इति तु दृष्टेरेव शेष इति अत्र मनसोऽनुक्त्या भगवतः साङ्ख्यवदास्थितिरुपपादिता। असक्तः साङ्ख्यमास्थित इति वक्ष्यमाणत्वात्। तथा सति तद्रक्षाऽपि असक्तत्वेनैवेति तद्रक्षका अपि बाह्या एव। जनकसमसङ्ख्याका युक्ता इत्याशयेनाहुः—रक्ष्यत इत्यादि। अत्र कालहा मुचुकुन्द इति तदाविष्टः संवत्सरात्मकः। मागधादिहन्तृषु रुद्रात्मकः। पाण्डवेषु पालकात्मकः। सूर्योस्त्वग्रे यादवाः स्फुटा एवेति। सङ्ख्यातात्पर्यमाहुः—कामेत्यादि। तथा च नाऽत्र स्वरूपेण गुणैश्च सत्त्वं विवक्षितमित्यर्थः। लोभलीलायामपि न स्वरूपस्य कर्तृत्वेन प्रवेश इत्याहुः—पद्भिरित्यादि। त इति श्लोकाः। अत्र क्रोधलीलान्तिमस्यैवं संचिन्त्येति श्लोकस्य देहलीदीपवदुभयत्रोपकारात्लोभेऽपि निवेशो बोध्यः। निवृत्तिः सप्तधा तत इति। ततः त्रिविधलीलोत्तरं तस्यैवं रममाणस्येति सप्तभिर्निवृत्तिरुक्ता। यतश्चतुर्धा लीला अत्रोक्ता, ततो हेतोरत्रैतन्मध्य एव चतुर्मूर्तेः प्रद्युम्नादेर्लीला निरूपिता। सा चानिरुद्धप्रद्युम्नवासुदेवसङ्कर्षणक्रमेणेति ज्ञापनायाहुः—वासुदेवादित्यादि। एवं सङ्ख्यादितात्पर्यमुक्त्वा व्याकुर्वते—तत्रेत्यादि। तत्रेति क्रोधलीलायाम्। त हीत्यादि। कालमागधशाल्वादिमार्गत्रयस्थाः क्रमेण प्रवाहमर्यादापुष्टिस्थाः। तद्विशदयन्ति—लौकिकेत्यादि। कालो गर्गपुत्रत्वाल्लौकिकप्रकारेण ब्राह्मणप्रपन्नः। द्वितीयो मर्यादया वेदप्रपन्नः, तृतीयः पुष्ट्या शिवप्रपन्न इतितथेत्यर्थः। त्रिमूर्तिरपि त्रिविधकामनिपन्नेति। मुचुकुन्दभीमप्रद्युम्नमूर्तिरपि सात्त्विकादीनां त्रयाणां कामपूरकः। तथा चात्र पूर्वोक्तेन्द्रियनियामिका देवता व्यासचरणैः स्कन्धार्थविचारेण बोधितेत्यर्थः।

१ भक्तिरतिनिपदनम्, पा. २ अनुभवस्था.

११ स्कन्धार्थविचारेणाहुः—हस्ताविति । सत्कार्यौ हस्तौ । प्रकारमाहु —भगवदीयैरित्यादि ।

१२ अथेत्यत्र । भिन्नप्रक्रमकथनतात्पर्यमाहु —सार्धामितित्रिभिर्भक्तानामित्यादिभि । अत्रार्द्धेन पूर्वोऽनुवादः । न्यवारयदिति । स्वोद्यमेन न्यवारयत् । देहज इति । राजादिदेहज । शस्त्रेणानिवारणे हेतुमाहुः—उत्तारित इत्यादि । जरासन्धानीतद्विचत्वारिंशदधिकचतु शताक्षौहिणीनां म्लेच्छकोटित्रयस्यान्येषा च दुष्टाना मथुरासमीपे हननेन शाल्वादीना द्वारकासमीपे हननेन पौण्ड्रकादीनां तत्र हननेन चोत्तारित इति स्वयमेव न्यवारयदित्यर्थ । अन्तरन्यामिति । कियानित्यादिश्लोकेषु चिन्तितम् । तन्नाशेनेति । यदुकुलनाशेन । तथा चैव भावबोधनार्थं भिन्नप्रक्रम इत्यर्थ । स्कन्धार्थविचारेणाहु —देवेन्द्रेत्यादि । तथा च सारथिरूपेणानया लीलया स्मरणादिव्यापारेण हस्तदेवता सँस्कृतेत्यर्थ ।

१३ सकर्णेत्यत्र । येषामिति विशेषणमिति । पूर्वश्लोकोक्तं येषामित्यादिक दुर्योधनादीना विशेषणमित्यर्थः । पश्यतिकर्मेति । पश्यते कर्म । स्कन्धार्थविचारेणाहुः—स्पर्शरूपतेत्यादि । त्वगिन्द्रियकार्यकर्तृत्वेन तद्रूपत्वं भगवतो निरूपितमित्यर्थ । सँस्कृतस्य त्वगिन्द्रियस्य कार्यमाहु —भगवदीयानामित्यादि।

१४ कियानित्यत्र । मूले क्षपित इति भिन्न पदम् । तत्र सोर्लुक् । अक्षौहिणीपदे ह्रस्वमार्षम् । स्कन्धार्थविचारेणाहु —वायुरित्यादि । अत्र यादवेषु दुर्विषहबलाधिष्ठाता वायुरन्यानसहमानो भगवत्सम्बन्धिनीमेव स्पर्शबुद्धिं जनयति । तथा च भगवति संनतिं जनयत् इतरासह्यबलप्रयोजक रूपमत्र स्पर्शदेवतेत्यर्थ । तर्हि कुतस्तस्यानन्दनहेतुत्वमित्यत आहु —तत्रेत्यादि । तत्रेति । भगवति । स्पर्शदेवतानिर्णय इति । तस्या सुखाजनकत्वनिर्णय । तथा च तादृशं रूप भगवत्सुखे परिच्छिन्नतुल्यता ज्ञान यदा न जनयति, तदैवाधिकारिनिष्ठस्पर्शदेवतासँस्कारार्थक यथा श्रीमदुद्धवे, इतरथा तु न तत्संस्कारकमितीय निर्णय इत्यर्थः।

१५ मिथ इत्यत्र । एकवचनपक्षे दधत इति दधधारण इत्यस्य रूपम् । उपायान्तराभावे हेतु व्युत्पादयन्ति—नहीत्यादि । अस्या लीलाया भक्तक्लेशादर्शनादक्लिष्टकर्मत्व न स्यादित्याशङ्कते—नन्वित्यादि । समादधते—सर्गार्थमेवेति । अन्यथारूपत्यागेन स्वरूपापत्तिरपि सर्गविशेष एव । कारण संभूतिरूपत्वात् जीवस्य हेतुत्वात् । अतस्तदर्थमित्यर्थः । ननु हेतुत्वदशाया तस्याविद्याकर्मसाहित्यमायास्यतीति चेत्तत्राहु —स्वात्मनेत्यादि । तथा च मुक्तित्वेन भूरितया तुल्यताभिप्रेयत इति स्वात्मयद्धेतुतेति न स इह दोष इत्यर्थ. । अतो नेति । आपाततः प्रतीयमानोऽपि फलतो नेष्टकर्मत्वमित्यर्थ । ननु मुक्तत्वे तुल्यत्वम् । नत्विदानीमिति स्वरूपतस्तु भक्तिविरोधो नापैतीत्यत आहु —स्वत इत्यादि । स्वतो सामर्थ्ये सूर्यकिरणवज्ज्ञेयम् । तथा चेदानीमप्यशक्यत्वात्कर्मत्वजन्योत्पत्तिनाशाभावाच्च तुल्यतेत्यर्थ । अत एव ' न कर्म बन्धनं जन्म वैष्णवानां च विद्यते ' इत्यादीनि पाद्मादिवाक्यानि । ननु यद्येवम् , तदा कथमय प्रकार इत्यतस्तिरोभावप्रकारस्य तात्पर्यमाहु —खेदाभावायेत्यादि । युद्धे तदर्थ तथेत्यर्थः। एतेन सिद्धमर्थान्तरमाहुः सर्गादावित्यादि । तथा च सर्वासु लीलासु तत्साहित्यमित्यर्थ । सिद्धमाहु —तस्मादित्यादि । तथा चापातत क्लिष्टत्वभानम् , न तु वस्तुत क्लेश इति न स्वरूपतोऽपि विरोध इत्यर्थ । एव दोष परिहृत्य स्कन्धार्थविचारेणाऽस्यार्थमाहु —एवमित्यादि । विसर्गपद करणव्युत्पन्नम् । तथा च स्मृतमेतद्रूपमनेन व्यापारेण विसर्गजनकेन्द्रियसस्कारकमुक्तमित्यर्थ ।

१६ एव संचिन्त्येत्यत्र । प्रद्युम्नं निरूप्येति कामलीलाया विधिप्रयुक्तत्वेन तया अनिरुद्धनिरूपणोत्तर क्रोधलीलायास्तिरोधानविचारलीलायाश्च मोक्षात्मकसर्गोपयोगित्वेन तया प्रद्युम्न निरूप्येत्यर्थ । नन्वेन

माध्वीपानार्थं मेरणे प्रद्युम्नस्य कथं मित्रत्वमित्यपेक्षायां तस्याश्चिन्तायाः तात्पर्यं वक्तुं पूर्वमहितभानप्रयोजनमाहुः– यदित्यादि । तथात्वख्यापनायेति । नित्यस्थितिविरुद्धत्वख्यापनाय । तदेतत् कारिकाभिर्व्युत्पादयन्ति–दशेत्यादि । ज्ञानाश्रयस्यात्मरूपत्वे ' अहमात्मा गुडाकेश ' इति वाक्याद्विभूतिरूपत्वेन दशमलीलात्वम् । तथा सति ' दशम्यः परमक्षरम् ' तच्च भगवतः परमं धाम व्यापिवैकुण्ठात्मकम्, " तस्मिन् यदक्षरे परमे प्रजाः " इति श्रुतेः तत्रत्यं सर्वं परब्रह्मात्मकमेवेति सर्वेषां नित्यवत् स्थितिः, एकरसा स्थितिर्न सेव्यसेवकभावः । तत्र हेतुः; यतो भजनं रूपान्तरेण ते च रूपे स्वामिसेवकयोः । एकः स्वामी, इतरः सेवक इति । तत्र स्वामित्वं सेवको हन्ति, स्वस्मिन् विद्यमानं तद्विरुद्धत्वात् दूरीकरोति, एवं स्वामी स्वस्मिन् विद्यमानं सेवकत्वं दूरीकरोति, तेन स्वामिसेवकभावाभावात् नित्यवदेकरस्येन तत्र स्थितिरित्यर्थः । ननु प्रजारूपेण तत्र विद्यमानत्वे एवं स्थितेः किं प्रयोजनमत आहुः–अन्यथेत्यादि । ससाधनायां भक्तौ आण्वी गतिः फलम् । यद्येवं स्थितिर्न स्यात्, तदा तद्गतेरण्वीत्वाभावेन ससाधनो भक्तिमार्गः सफलो न स्यात् । अतो गतेरण्वीत्वमेव प्रयोजनमित्यर्थः । अत्र ससाधन इति विशेषणेन निःसाधने भक्तिमार्गे अयं न प्रकार इति तद्रीत्या शङ्का न कार्येति बोधितम् । एवं फलदशास्थितिमुक्त्वा साधनदशास्थितिमाहुः–सेवेत्यादि । सिद्ध्यभावतेति । सिद्धेरभावता । तथा च विद्यमानाऽपि सिद्धिरसिद्धिरूपेति सेवादशायां स्वामिसारस्यमावश्यकम्, सारस्येन पश्चात् फलदशायां चेत् सेवकत्वं फलं स्यात्, सेवक ईशो न भवेदेव । चोऽवधारणे । तथा चाण्वीत्वार्थं फलदशायामीशत्वमावश्यकम् । अतो दशाद्वयस्थितिसाधनाय यावत् साधनं साधनदशापर्यन्तमात्मानमेव सर्वशास्त्राविरोधिनमुच्छृङ्खलसेवकरूपं कृत्वा, अन्ते साधनदशासमाप्तौ फले देये, पूर्वधर्मस्य सेवकत्वादेर्नाशमपि कुरुते । चोऽप्यर्थे । अतः उच्छृङ्खलत्वात्मवेशात् स्थितिदशायां हि निश्चयेन तत्फलं विचिन्त्य स्वानभिप्रेतविषयान् माध्व्यादिरूपान् भोजयत्येव । तेन प्रविष्टरूपेण स्वयं भुञ्जानस्तानपि भोजयति । नाऽन्यथा नाऽनिष्टार्थम्, तथा चैवं प्रेरणादिचिन्तायास्तात्पर्यात् प्रद्युम्नस्य मित्रत्वं युक्तमेवेत्यर्थः। एवं कारिकाभिर्विचारतात्पर्यम्, तेन मित्राख्यदेवतासँस्कारं च बोधयित्वा निगमयन्ति–तदाहेति । तथेति विचारमात्रेण । एतेन वासुदेवत्वमपि विवक्ष्यमाणलीलाया बोधितम् ।

१७ उत्तरायामित्यत्र । मैवाहादिति । अविच्छिन्नसर्गपरम्परातः । छिन्नस्य कथं पुनरविच्छिन्नतया स्थापनमित्याकाङ्क्षायां छेदस्य वंशस्य स्वरूपं वदन्तो व्युत्पादयन्ति–छिन्न इत्यादि। पूर्वभाग इति। मूलभागः। पूर्वदेह इति। पितृशरीरे। पूर्ववदिति । पितृशरीर इव । सिवेनेन छिन्नवस्त्रवदेकीकृत्य मर्यादाभङ्ग इति । मर्यादाभङ्गे सति ।

१८ सोऽपीत्यत्र (१) । द्विविधधर्मसम्पन्न इति।वैदिकधर्मभगवद्धर्मसम्पन्नः। स्कन्धार्थविचारेणाऽऽहुः–सदेवौ पादाविति । गतिसाधनभूतौ वैदिकभगवद्धर्मौ पादौ, तत्पोषको विष्णुर्देवः । तथा च स्मृतेनैतल्लीलाविशिष्टेन रूपेण पादयोः सदेवयोः सँस्कार इत्यर्थः ।

१९ भगवानित्यत्र । विश्वात्मेत्यत्र । कर्मधारयबोधनायाऽऽहुः–त्रिविधेत्यादि । विश्वतया वस्तुपरिच्छेदाभावः, आत्मत्वेन व्याप्त्या देशपरिच्छेदाभावस्तेनैव नित्यतया कालपरिच्छेदाभावो बोध्यः । स्वत

१ गुणैरभिगुंरुत्तरेषु प्रथमान्तः पाठः २ अत्र ' सेवनेन ' इति पाठो युक्तः

एव सिद्ध इति । " स सर्वधीवृत्त्यनुभूतसर्व आत्मा यथा स्वप्नजनेक्षितैकः " (२-२-३६) न्यायेन सिद्धः । इत्यर्थ इति । अर्थ उच्यत इत्यर्थः । साक्षित्वे पर्यवस्यतीति । तत्त्वानां सङ्घाततया पारार्थ्येन सा तथेत्यर्थः । अनेनेति । एवं जीवेश्वरसाधारणपारार्थ्यबोधनेन । भवतीति । भगवदर्थत्वाभावाद्भवति । स्कन्धार्थविचारेणाऽऽहुः—घ्राणमिति । " पादवर्गिकं जिघ्रति " इत्यत्रोक्ता घ्राणक्रिया । तथा चैतल्लीलाविशिष्टस्मृतं सत् घ्राणेन्द्रियसँस्कारजनकमित्याशयेन निरूपितमित्यर्थः ।

२० स्निग्धेत्यत्र । स्कन्धार्थविचारेणाऽऽहुः—घ्राणदेवतेत्यादि । पुरुषरूपो भौमविस्तारो हि स्निग्धेत्यादिभिरुक्तैः करणैरत्रोच्यते । भूर्लोको गन्धप्रधान इति तत्रत्यानां रमणकथनादनेन कारणेन सा निरूप्यते।

२१ असौ लोको वाक्प्रधान इति वाचेत्यनेनाग्रिमे इममिति वाक् निरूप्यते । अत एवेति वाक्सन्निधानात् । अग्निस्त्वगमकमाहुः—सङ्कर्षणेत्यादि ।

२२ तस्यैवमित्यत्र । प्रकारद्वयेनेति । लौकिकेन वैदिकेन च । विशिष्टेति । अधिभोगजा ।

२३ दैवाधीनेत्यत्र । भगवद्वार्ताकथनप्रस्तावे वार्तान्तरस्य कुतः कथनमित्याकाङ्क्षायामाहुः—रागस्येत्यादि । तुल्यबलत्वाभावादिति । वैराग्योपाधिकेषु, रागोपाधिकेषु च विहितत्वस्य निन्दितत्वस्य तौल्येऽपि परमार्थविचारे बलस्य तुल्यत्वाभावात् । तथा च वैराग्ये प्रस्तुते तत्प्रसङ्गात् कथनमित्यर्थः।

२८ अन्तिमसमाप्तौ । स्कन्धार्थविचारेण षण्णां तात्पर्यमाहुः—शिष्टेषु शिष्टानीति । तथा च "दैवाधीनः " इत्यत्रोक्तरीत्या कामेषु विश्रंभभावश्चक्षुःकार्यम् । "पुर्याम् " इत्यत्र भगवन्मतज्ञानेन प्रेरणं तद्देवतामतस्यार्कस्य कार्यम् । ' ततः ' इत्यत्र शापस्य भगवदाज्ञायाः श्रवणाद्गमनं श्रोत्रकार्यम् । 'तत्र' इत्यत्र स्नानतर्पणादिकं दिग्विशेषनियतत्वात् तत्र प्रेरणं दिकार्यम् । " हिरण्यम् " इत्यत्र शुचिकरधरादाने प्रेरणं रसनेन्द्रियदेवताकार्यम् । " अन्नम् " इत्यत्र रसनकार्यं स्फुटमेवेत्येवमेतानि त्रीणीन्द्रियाणि सदेवताकान्युक्तानीत्यर्थः । वार्तापक्षे अध्यायार्थं सङ्गृह्णन्ति—एवमित्यादि । अत्र मर्यादयेत्यनेन सर्वलीलास्वनिरुद्धसम्बन्धो न बाध्यते । किन्तु मर्यादापदं विभागपरम् । स्कन्धार्थविचारेणेन्द्रियनिरूपणेऽपि किञ्चिद्विशेषमाहुः—इन्द्रियाणामित्यादि । द्विविधान्यपि बहिरिन्द्रियाण्यान्तराणि च कार्यानुमेयानीति कार्यद्वारा तद्भेदः । मध्ये माध्व्या मदेत्यनेनाविहितकार्यस्याऽपि बोधनाद्विहिताविहितभेदश्चोक्त इति । चरित्रोक्तौ श्लोकसङ्ख्यां वदन्तोऽध्यायार्थं कारिकाभ्यां सङ्गृह्णन्ति—अष्टाभिरित्यादि । खमिन्द्रियम् । तथा च भगवानिन्द्रियसर्गकर्ता, चतुर्मूर्तिदेवताचरित्रमिन्द्रियरूपं करणम्, तेन करणेन स्मरणादिना व्यापारेणाधिकारिण एतद्रूपाणीन्द्रियाणि यदा करोति, तदा तानि भगवदतिरिक्तं न विषयतया स्वीकुर्वन्ति । तथा चैवं सर्वत्र लौकिकपदार्थेषु कार्येषु च चतुर्मूर्तिचरित्रत्वेन ग्रहणं यस्य भवति, तदिन्द्रियाणि सँस्कृतानीति ज्ञेयमित्यर्थः। एवमिन्द्रियसंस्कारः कस्य जीवस्येत्यपेक्षायां तत्स्वरूपं बोधयितुं यादवनिरूपणमित्याशयेनाहुः—सर्गेत्यादि । सर्गार्थं लीलासृष्टौ पुनरत्रागमनार्थं हेतुर्जीवोऽस्य सर्गादेरित्यत्रोक्ता अविद्याकर्मणां कारका हेतुभूता जीवा अधिकारित्वेनोक्ताः । तत्र हेतुः—जन्मेत्यादि । तथा चैतादृक्स्वभावविशिष्टानां लीलासृष्टावतारणयोग्यानामेवेन्द्रियसँस्कार इत्यर्थः । एतेन कालमागधादीनामपि " निलयं तदीयम्" इति वाक्यात् क्रोधादिपूर्वकस्मरणेन मुक्त्यर्थमवतारणाय च सँस्कारो बोधितः । तेन कामादिना सर्वात्मभावेन च यथाधिकारं यथाकार्यमिन्द्रियसँस्कारो बोद्धव्य इति ज्ञापितम् ।

इति श्रीगोस्वामिपुरुषोत्तमजीमहाराजकृत–तृतीयस्कन्धसुबोधिनीप्रकाशे तृतीयाध्यायविवरणम् ।

१ पुस्तकेषु ' अ ' इति नास्ति

# चतुर्थाऽध्यायप्रकाशः ।

अथ चतुर्थाध्यायं विवरिषव कथासङ्गतेः स्फुटत्वात् स्कन्धाद्यर्थानुरूपा सङ्गतिं व्युत्पादयन्ति त्रिभि –चतुर्थ इत्यादि । भगवतेति । व्यासेन शुकेन वा । तेनावसर सङ्गति । येन रूपेणावश्यवक्तव्यत्वं तद्वक्तु पूर्वाध्यायार्थमनुवदन्त आहुः–पञ्चधेत्यादि । पञ्चधेति स्मृतिनिश्चयसंशयविपर्ययद्वयरूपेण पञ्चधा तत्र हेतु –पञ्चेत्यादि । यतः पूर्वाध्याये तादृश तदुक्तम्, अतस्तादृश रूप फलमत्र निरूप्यते । तथा च तदनुकूलबुद्धित्वेन रूपेणावश्यवक्तव्यमित्यर्थ । नन्वत्र सर्गावान्तरविशेषे वक्तव्ये फलनिरूपणस्य किं प्रयोजनमत आहु –एतादृश इत्यादि । यथेति । यथावत् । तथा चावेशयोग्यताबोधनाय पूर्वाध्यायान्ते तेषा स्वरूप गुणाश्चोक्ता । यदा आविशेत् तदा सम्यक् तद्गुणा बोद्धु शक्यन्ते, अतस्तेषु भगवदावेशरूप फल तद्गुणज्ञापनायोच्यते, इति तदेव प्रयोजनमित्यर्थ । एतस्यावेशस्याऽपि फलान्तरमाहु अत इत्यादि । यतो लीलार्थं स्वसङ्केऽवतार्णाया, अतो हेतोर्भगवत्कर्तृकेऽधिकारिबुद्धिसर्गेऽयमावेशो हेतुरपि निरूपितः । तथा चाग्रिमलीलार्थमेवायमावेश इति साऽस्य प्रयोजनमित्यर्थः । एन च हेतुतारूपं सङ्गत्यन्तरमपि बोधितम् ।

१ अथेत्यत्र । मूलेऽथ शब्दः पूर्वोक्तमणामान्तकृत्यानन्तर्यस्यापि बोधक इत्याशयेनाहु –भुक्तेत्यन्तं पूर्वसम्बन्धीति । नन्वत्राधिकारोपयोगिबुद्धौ निरूप्याया ज्ञानविभ्रंशादिकथनस्य किं प्रयोजनमत आहु - सर्गमित्यादि । इति बुद्धिरिहोच्यत इति । एवं ज्ञानविभ्रंशबोधनादिना निषिद्धाचरणनिषेधिका बुद्धिरिह श्लोके सूच्यते इति तद्बोधन स्वमहत्त्वानुसन्धानस्य दुष्टत्वबोधन च प्रयोजनमित्यर्थ । एतेन सिद्ध प्रयोजनान्तरमाहु –अतोऽत्रेत्यादि । यतोऽत्र श्लोके निषिद्धाचरणनिवर्तिका बुद्धि सूच्यत्वेन विवक्षिता, सैव च प्रमाणभूता, अत सर्वत्र शास्त्रे तद्विरुद्धाया निषिद्धप्रवृत्तिजनिकाया स्मृतेः सर्वैव प्रामाण्यमित्यपि सूच्यत इत्यर्थ । ननु स्मृते संस्कारजन्यत्वात् तस्य चानुभवजन्यत्वात् तेन संस्कारद्वारा स्वसमानाकारस्मृत्युत्पादन क्रियत इति तज्जनकानुभवस्य प्रामाण्ये कथ स्मृतेरप्रामाण्यमित्याशङ्काया प्रमाणानुभवजन्यत्वेऽपि तस्या अप्रामाण्य व्युत्पादयितुमत्र सिद्धज्ञानस्य स्थिरत्व पूर्व व्युत्पादयन्ति–ज्ञान चेत्यादि । चोऽप्यर्थे । ननु ज्ञानस्य स्थिरत्वे सर्वदा तदनुव्यवसायापत्तिरित्यत आहु –घ्राणेनेत्यादि । यथा गृहादौ व्याप्तो घ्राणसम्बद्धोऽपि गन्ध संयुक्तसमवायेन संयोगेन वा ग्रहण एव स्फुरति, न तु सर्वदा अत्यन्तसम्बन्धेन ग्राहकताया क्लृप्त्यात्, एव मनसा तस्य संयुक्तसमवायेन संयुक्तविशेषणतया वा ग्रहणे स्फुरणम्, अतिसम्बन्धेन ग्राहकता क्लृप्त्ये चास्फुरणम्, अतो न सर्वदा तदापत्तिरित्यर्थ । ननु भवत्वेवम्, तथापि सर्वदा विषयस्फूर्ति केन वार्यतेत्यत आहु –तदित्यादि । तथा च भगवति नित्यसर्वविषयकज्ञानस्य मतान्तरे समतत्वाच्च तत्र तद्वारणापेक्षा । अन्येषा तु अन्यत्वाद्वायविशाराणा तत्रापि वस्तव्यत्वेन तस्योत्पत्तौ पोषे दार्ढ्ये च विषयस्फूर्तिः, तदभावे च तदभाव इति तद्वारगमित्यर्थ । पोषण तु सजातीयसवलनम् . दार्ढ्यन्तु सजातीयस्थितिसाधिका घनता । एव मत्पक्षिन् पक्षे स्मृतिजननार्थ न संस्कारापेक्षा । इन्द्रियैर्जनितेन शोकदौर्म्यादिपुष्टेनाभ्यासादृढेनोद्बोधर्ये रुद्धेन तेनैव कालान्तरे स्मृतिसंभवात्, संस्कारपक्षेऽनन्तसंस्कारतदुत्पत्तिध्वंसादिकल्पनागौरवाधेति विरुद्धवृत्तिविरोदितं सूक्ष्मावस्थ ज्ञानमेव संस्कार । धारावाहिकस्थले चैकमेव प्रकाशमान तदिति वदन्ति । एव स्थिरत्व साधयि वा तत्पोषस्य नाशस्य च बोधनार्थं गीतादिसिद्धान्तस्य प्रकारानाहुः–तथ

१ [illegible] २ [illegible]

त्यादि । एतेन सजातीयविजातीयभेदस्य प्रामाणिकता दर्शिता । ननु भवत्वेवम्, तथापि विषयान्तरविषयकज्ञानेन तन्नाशाभावे तन्नाशः केन वक्तव्य इत्यत आहुः—देशेत्यादि । नन्वेवं सति देशाद्यन्यतमस्य नाशकस्य तत्र तत्र सुलभत्वात् स्थिरत्वं तस्य दुर्घटमेवेत्यत आहुः—विहिता इत्यादि । तथा च नाशकवत्पोषकस्याऽपि सत्त्वात् न स्थैर्यदौर्घट्यमित्यर्थः । एतेन ह्रीर्धीर्भीरित्येतत् सर्वं मन एवेति श्रुतिबोधितं मनोधर्मत्वमपि तस्य स्मारितम् । तेन सिद्धमाहुः—तत्रेत्यादि । तत्रेत्यन्तःकरणे । प्रयत्नेनेति स्थापकव्यापारेण । एवं स्थैर्यहेतुमुक्त्वा सर्वदा सर्वस्फूर्त्यभावे हेतुं स्फुटीकुर्वन्ति—गूढ इत्यादि । तथा चोद्दीपकसमसमवधानस्यासार्वदिकत्वान्न सर्वदा सर्वस्फूर्तिरित्यर्थः । नन्विन्द्रियाणां जनकत्वे सर्वदा कुतो न सर्वज्ञानानां जननमित्याकाङ्क्षायामेतेषामेव सहकारित्वमाहुः—अजनितस्येत्यादि । सामग्री समवधानाभावान्न सर्वदोत्पत्तिरित्यर्थः । अग्रे तत्प्रकाराणां भेदान् वक्तुं तन्नामानि तत्स्वरूपं चाहुः—तदेवेत्यादि । एकत्वे प्रतिशरीरं भिन्नवत्स्थित्यनुपपत्तिमाशङ्क्याहुः—तस्येत्यादि । उपपत्तिरित्याविर्भावः । तथा चैवमाविर्भावभेदात्तानुपपत्तिरित्यर्थः । एतेन व्यापकत्वमपि तस्य बोधितम् । तेन भिजियोनिमलिपविन्यायेन घटाकाशन्यायेन चैकस्यैवानेकत्वं परिच्छिन्नत्वं चोपाधिवशात् सिद्ध्यति । आनन्त्येऽपि तत्प्रकारज्ञानोपायमाहुः—आनन्त्य इत्यादि । तथा चैवं राशिभेदेन तत्प्रकारज्ञानं सुघटमित्यर्थः । दश प्रकारान् स्फुटीकुर्वन्ति—आश्रयेत्यादि । मुख्यमिति । कारणभूतम् । इदमेकं निर्विषयम् । द्वितीयं भगवद्गुणरूपं नित्यं सविषयम् । एतेन जीवरूपं ज्ञानं पूर्वस्य तद्धर्मरूपं तु द्वितीयस्यांश इत्यपि बोधितम् । तदेवेति । गुणरूपम् । सृष्टयर्थमपि । नामसृष्ट्यर्थम्, वैदिकसृष्ट्यर्थं वा । तेन वेदात्मकशब्दशरीरविशिष्टं तृतीयम् । अनन्तमिति । 'अनन्ता वै वेदाः' इति श्रुतेरनन्तम् । इदमेव 'स एष जीवो विवरप्रसूतिः' इत्यत्र वे(?)(मे) व्यक्तिरियं हि वाणीति वैखरीरूपं वेदात्मकत्वेनोक्तम् । ततः शब्दसृष्टिमाहुः—पश्चादित्यादि । 'सर्वेषां स तु नामानि रूपाणि च पृथक् पृथक् । वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः' इति स्मृतौ तथा कथनात्तथेत्यर्थः । इदं विकृतशब्दशरीरविशिष्टं तुरीयम् । पञ्चमादिरूपाणि वक्तुं केवलस्य तस्याश्रयभेदमाहुः—तदेवेत्यादि । आश्रयत इति । अर्थप्रकाशरूपेण लोके प्रकटीभवितुं तदुभयमभितिष्ठति । पञ्चमं रूपमाहुः—तत्रेत्यादि । प्रमेयाश्रयमिति । व्यापकत्वात् प्रमेयावच्छिन्नम् । अन्यानि पञ्चाहुः—प्रमातरीत्यादि । एवेनैतेषामव्यापकत्वं बोधितम् । एकधेति । निर्विकल्पकत्वेनैकधा । ननु बहिरिन्द्रियाणां पञ्चसङ्ख्याकत्वात्तैर्नानाविधसविकल्पकज्ञानजननदर्शनाच्च कथं तत्रैकधेत्यत आहुः—विशेषा इत्यादि । सविकल्पकरूपा विशेषास्तु विषयाश्रये प्रमेयरूपे यज्ज्ञानं तेन कृता या द्विगुणता, प्राथमिकसंयोगेन ज्ञाने जाते तदुत्तरं विषयविमर्षणाय पुनश्चतुष्टयसंयोगे यद्विशिष्टज्ञानं तद्रूपा तया प्रकाशिताकारा भवन्तीति तेषामनुग्राहकान्तरजन्यत्वान्न तैरिन्द्रियै(नि?)र्ज्ञानस्यैकविधत्वभङ्ग इत्यर्थः । तर्ह्यन्तःकरणे कथं चतुर्धेत्याकाङ्क्षायां तत्राकारभेदेन भेदानाहुः—तत्र मनसेत्यारभ्य चित्ताश्रयमित्यन्तम् । अन्यदेति । जाग्रत्स्वप्नयोः चित्तलयप्रकारस्तु सप्तविंशे स्फुटीकार्यः । एवं ज्ञानस्य दशप्रकारान् जन्यस्योत्पत्तिप्रकारं चोक्त्वा स्थितिनाशयोः प्रकारं सप्रमाणमुपपादयन्ति—तस्य चेत्यादि । शास्त्रादिभिरिति । "स्थिरबुद्धिरसंमूढः" प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते " इत्यादिशास्त्रेण स्मृत्यन्यथाऽनुपपत्तिरूपया साधकयुक्त्या त्रिक्षणावस्थायित्वबाधिकया गौरवरूपयुक्त्या चेत्यर्थः । रूप्यत इति हेतुशोधनपूर्वकमुच्यते । नाशप्रकारमाहुः—पूर्वोक्तेत्यादि । पूर्वोक्तमर्यादाभाव इति । विहितार्थसंसर्गाभावे । तत्रेति । मर्यादाभावे सामान्यतो नाशे वा । ननु पूर्वं देशादीनां नाशकत्वमुक्तम्, इदानीं

१ वाणीरिश्वरी पा.

भाव्यमाना ज्ञेयाः । तं चेति । चोऽप्यर्थे । एवं कृतवानित्यन्तेन विचाराकारः सङ्गृहीतः ।

४ अहमित्यत्र । अतो द्वितीयं बीजमिति । एवमिच्छाया आकारात् मोक्षकारणीभूतमात्मैव कार्येति निश्चयरूपं बीजम् । द्वादशात्मेति । 'सैषा त्रय्येव विद्या तपति, य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति श्रुत्युक्तः । अनेनैवेति । नाऽनुध्यायाद्बहून् शब्दानिति श्रुतेरेवमपरविचारस्थानातिक्रमेणैव । ननु यदि पूर्वावस्थात्यागे एतावदेव कारणम्, तदैकादशे स्कन्धे किमित्यन्यथोक्तमित्यत आहुः—मुक्तावित्यादि । अवक्तव्यत्वादिति । अत्रोक्तत्वेन पुनरवक्तव्यत्वात् । अन्यथेति वैराग्येण गोविन्दरणपूर्वकम् । तथा च विस्तारार्थं अन्यथोक्तवानित्यर्थः । अरण्यात्मिकेति । 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके' इति श्रुतेः, 'अरनामामृतम्भोधिर्ण्यनामामृतसागरः' इति स्मृतेश्च ब्रह्मलोकत्वेन तदात्मिका । पदार्थाविस्मरणादिति । यदर्थपदयौगिकार्थाविस्मरणं विधाय ।

५ अथापीत्यत्र । लक्ष्यते इति पृष्ठत इति पदेनाजहत्स्वार्थया बोध्यते ।

कथ मायाया उच्यते इत्यत आहुः—तस्या इत्यादि । ननु तस्या एव ज्ञाननाशकत्वे एतेषामनुपयोगात् । पूर्वोक्तमसङ्गतमित्याशङ्कायामाहु —त इत्यादि । यथायथमिति देशकालाभ्या स्वरूपतः, द्रव्यकर्तृभ्या स्थानतः, मन्त्रकर्मभ्या गुणत इति । तथा च विशेषनाशे तेषामुपयोगान्न पूर्वोक्तमसङ्गतमित्यर्थ । एव नाशं व्युत्पाद्य प्रकृते यदूना बुद्धेर्न सामान्यतो नाश , किन्तु विशेषत इति बोधयितु त विशेषमाहु अत इत्यादि । बुद्ध्याश्रयमिति शरीराभिमानरूपम् । अधस्तात् पतितमिति । बुद्धेर्मलिनभागे तामसेंऽश पतितम् । तथा चैव शरीराभिमतेर्मलिनदेशे पाते कालेन स्वरूपतोऽशाश्राशितम्, निषिद्धया पान क्रियया च गुणतोऽशाश्राशितम्, तदा तेषा स्वस्मिन्नुत्कर्षेऽन्यस्मिन्नपकर्षे च भाते तद्दोषाशस्फूर्तिरभूत् । तेन कार्यान्तरमाहु —माययेत्यादि । विषयाश्रयाधारामिति । विषयो दोष , तदाश्रय पुरुष , स आधार यस्य तत्तथा । तथा च पूर्वं दोषांशे स्फुरिते ततो मायया अविद्यमाने प्रत्यनीकत्वे बुद्धावुपस्थापिते तादृशैर्वाक्यै र्मर्म स्पृष्टवन्त । अत प्रमाणज्ञानोत्पन्नत्वेऽपि तस्मिन् मायया विजातीयसंवलनात् तद्गुणाशनिवृत्तौ तज्जन्या स्मृतिरप्रमाणभूता जातेति तया तथा करणात् तादृश्या स्मृते स्वरूपतो गुणत फलतश्चाप्रामाण्यमित्यर्थ ।

२ तेषामित्यत्र । तेजःप्रकाशापेक्षमिति । विषयालोकसंसर्गेण तमोनाशात् स्वोत्पत्तौ तत्सापेक्षम् ।

३ भगवानित्यत्र । एव तेषामित्यादि । यादवाना स्नेहेन वर्तमानतया च स्थितिं मैरेयपानरूप साधनविपरीतस्मृत्यात्मबुद्धिवृत्तिविशेषरूपसाध्यभावेन पूर्वोक्तरीत्या तिरोभावयित्वा, तथा तिरोभाव प्रापकस्य भगवतो यादववर्तमानत्वस्थापनासामर्थ्यं तिरोभावयितु अनैश्वर्यतिरोभावसाधन स्वात्ममार्गग त्ववलोकन तत्साध्यमसामर्थ्यतिरोभाव चाहेत्यर्थ । तस्य मायाया इति । तद्व्यामोहिकाया मायायाः । पूर्वोक्तामिति । ' मिथो यत् ' इत्यत्र विचारितमर्दनरूपाम् । उत्तरत्रेति । व क्ष्यमाणे कार्ये । द्वयेनेति । गुणाना स्वरूपस्य च स्थापनेन । आश्रयाभावेनानैश्वर्यं निराकृतवा निति । अत्रायमर्थः । यदा भगवान् स्वरूप लीलामुभय वा तिरोधापयितुमिच्छति, तदा व्यामोहिका चिदशमाया विस्तारयति, माययैव तिरोभाव इति । तस्याश्च षडाश्रया पूर्वमुक्ताः । तेषु देशकर्तृ मन्त्राणा प्रकृते अभावात् कालद्रव्यक्रियाभ्यस्तामुत्थापितवान् । ततस्तया तत्तद्बुद्धिषु व्यामोह उत्पादि । ततस्त सद्वकृत्य प्रत्यनीकत्वेन भासमाना विषयतारूपास्ते वे तत्तद्बुद्धि प्रति प्रत्यायिता , त तो व्यामुग्धाना लीलामध्यपातिना शस्त्राहतिद्वारा तेषा प्राकृतानि शरीराण्यन्यथाकृत्य तेभ्यो देहेभ्यो वैकुण्ठपुरवासिन साकारानुद्धृत्य स्वस्थान प्रापितवानिति तेषा विद्यमानत्व लीला, तत्सम्बन्धिनित्यत्वस्था पकैर्वेदवाक्यैस्तदर्थाभिज्ञवैष्णवसङ्केन च ज्ञात भवतीति वेदेषु गुणस्थापनेनैश्वर्यं सिद्धीकृत्य वैष्णवेषु स्व रूपस्थापनेनैश्वर्याधार सिद्धीकृत्य, ऐश्वर्याश्रयाभावेन प्राप्स्यमानमनैश्वर्यं भगवत्त्वेन निराकृतवानित्यर्थ । बीज इति । शुद्धसत्त्वाविर्भूत अक्षरात्मके । ननु सृष्ट्यर्थमेव प्रवेशोक्तौ किं मानमत आहुः—एतदर्थमि त्यादि । यथेत्यादिनोक्तस्यार्थस्य ज्ञापनाय तथोक्तेत्यर्थ । नन्वेव सृष्ट्यर्थं प्रवेशेऽप्यधिकारे क उपयोग इत्यत आहु —अयमित्यादि । अयमिति बुद्धिस्थ । रूपमिति भूतानि । विषय इति मात्रा । नन्वेव तेषा कथमधिकारोपयोगिमृत्तादिरूपतेत्यत आहु —बीजेत्यादि । तथा चैतेषा तत्र तत्र बीजरूपेण प्रवेश एवा- धिकारसिद्धेस्तेषा तथात्वमित्यर्थ । अग्रे ब्रह्मशापापदेशेनेत्यत्र वक्ष्यमाणायाश्चिन्ताया अधिकारकारणत्व बोधयितुं वृक्षमूलोपवेशादिबोधितं तदाकारमाहु —विष्णोरित्यादि । अत इति । वैष्णववद्विद्वद्यादधिकार सृष्टिकारणभूत बीज वृक्षमूलोपदेशात्तनियारूपोपायचातुर्येण स्वजातेषु वैष्णवेषु स्थापयित्वा मोक्षकारणबीज स्वमार्गाभिप्रपदैर्नामिर्यथा स्थापयितु तथा कृतवानित्यर्थ । नवस्वित्यादि । एषा लीलास्तु बीजरूपेणानु

भाव्यमाना ज्ञेया । तं चेति । चोऽप्यर्थे । एवं कृतवानित्यन्तेन विचाराकारः सङ्गृहीतः ।

४ अहमित्यत्र । अतो द्वितीयं बीजमिति । एवमिच्छाया आकारात् मोक्षकारणीभूतमात्रैव कार्येति निश्चयरूपं बीजम् । द्वादशात्मेति । 'सैषा त्रय्येव विद्या तपति, य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति श्रुत्युक्तः । अनेनैवेति । नाऽनुध्यायाद्बहून् शब्दानिति श्रुतेरेवमपरविद्यास्थानातिक्रमेणैव। ननु यदि पूर्वावस्थात्यागे एतावदेव कारणम्, तदेकादशे स्कन्धे किमित्यन्यथोक्तमित्यत आहु –मुक्ताविस्यादि । अवक्तव्यत्वादिति । अत्रोक्तत्वेन पुनरवक्तव्यत्वात् । अन्यथेति वैराग्येण गोविचरणपूर्वकम् । तथा च विस्तारार्थं अन्यथोक्तवानित्यर्थः । अरण्यात्मिकेति । 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके' इति श्रुते, 'अरनामामृताम्भोधिर्ण्यनामामृतसागरः' इति स्मृतेश्च ब्रह्मलोकत्वेन तदात्मिका । पदार्थाविस्मरणादिति । बदरीपदयौगिकार्थाविस्मरणं विधाय ।

५ अथापीत्यत्र । लक्ष्यते इति पृष्ठत इति पदेनाजहत्स्वार्थया बोध्यते ।

६ अद्राक्षमित्यत्र । अभिप्रेतोऽर्थ इति । स्वकुलसंहाररूपः । गुणोपसंहार इति । चतुर्लक्षण्यास्तृतीयाध्यायस्य तृतीये पादे । अनेनेति । निर्व्यग्रतया आसीनत्वेन । मध्ये विचयनोक्तेस्तात्पर्यमाहु –अनेन विचारेत्यादि । गुणोपसंहारे पूर्वोक्ता एव गुणा उपास्ये मननीये च रूपे उपसंहृता इति यत्रैत उक्तास्तत्स्थानमाहु –एव प्रमेय इत्यादि । प्रमेय इति प्रमेयाविरोधप्रतिपादके द्वितीयाध्याये । तत्राद्यपादद्वयेन साङ्ख्यादीनि मतान्यपाकृत्य तृतीयादिपादद्वये वियदादिसर्ववस्तुकारणत्वं प्रतिपादितम् । तत्रापि 'तदभिध्यानादेव तु तल्लिङ्गात् सः' इति सूत्रे आकाशादिकं सृष्ट्वा तेषु तत्तद्रूपेण स्थित्वा तत्तत्कार्यं स्वयं करोतीति प्रतिपादितम् । तेनैकत्वमासीनत्वं च स्फुटमेव सिद्धम् । तत्रैक्यविचार्यमाणं स्वजीवस्याऽपि तदात्मकत्वं बोधयत्तस्यैव निरुपाधिप्रियत्वे पर्यवस्यति । स्थितिस्तु विचार्यमाणात् तत्तद्वस्तुनियामकतां भगवति बोधयन्ती अक्षरादपि परत्वेन तावत्पर्यन्तस्य नियम्यतया अक्षरस्याऽपि भगवान् पतिरित्यत्र पर्यवस्यतीत्येवं चतूरूपं तत्र निरूपितमित्यर्थः । आद्यमं रूपत्रयं प्रथमाध्याये निरूपितमित्याहु –साधनेत्यादि । तत्र हि जन्माद्यधिकरणे सृष्टिस्थितिभङ्गकर्तृत्वं प्रतिपादितम्, तथावान्तरकार्ये ब्रह्मादिरूपेषु नियतमित्यण्डसम्बन्धिष्वपि सृष्ट्यादिषु तदेव त्रिरूपं करणतया सिध्यतीति साधनत्वेन तत्त्रयं प्रतिपादितम्, तथा च समन्वयेक्षत्यानन्दमयाधिकरणेषु क्रमेणार्थादीनां त्रयाणामेव हेतुतया प्राधान्यात् सच्चिदानन्दात्मकं रूपत्रयं फलत्वेन प्रतिपादितमिति द्वेधा रूपत्रयं निरूपितमित्यर्थः । तदेतद्विभजन्ते –तत्रेत्यादि । प्रपञ्चेत्यादि । द्विविधप्रपञ्चकरणाद्विराजः सौभगमाजनत्वाच्च तैर्युक्तः । अनेन सत्फलत्वमुक्तम् । द्वितीये शब्दफलत्वम् । तृतीये आनन्दफलत्वम् । तत्र हेतुमाहु –स्वरूप इत्यादि । भूमस्वरूपे स्वे महिम्नि प्रतिष्ठित इत्यनेन स्वप्रतिष्ठितताया(?)एव श्रवणादित्यर्थः। पुरःस्फूर्तिकमर्थमाहुः–श्रीवत्स इत्यादि । अकेतनपदात् सिद्धमन्यमप्यर्थमाहुः–अनाश्रितत्वेनेत्यादि । एकेनेति । श्लोकेन । अत्र सर्वहेतुवादपरिहारः प्रमेयनिर्णयः । प्रमाणाध्यायसमाप्तौ सर्वाधारत्वेनानाश्रितत्वस्यैव सिद्धत्वादाधाराराहित्यं प्रमाणनिर्णयो बोध्यः । इतरावित्यादि । प्रवाहाद्वेदमार्गान्वितत्वात्पुष्ट्या, अग्रहत्वाद्वैराग्याच्च शिव इत्यर्थः । गुणोपसंहारे तु सर्वविद्याविषयत्वेनैकत्वम्, वेदैकसमधिगम्यत्वं चेति द्वयं सर्ववेदान्तप्रत्ययाधिकरणे सिद्धम् । आसीनत्वं 'व्याप्तेश्च समञ्जसम्' इत्यत्र सर्वव्याप्तिबोधनेन । विशेषतो वैष्णवसर्मापे स्थितिस्तु चतुर्थस्य प्रथमे आसीनः सम्भवादितिसूत्रे । प्रियत्वं कार्याख्यानाधिकरणस्य द्वितीयवर्णके सम्यक् प्रतिपादितम् । पतित्वं तु

१ ब्रन२६

आत्मगृहीत्यधिकरणे । प्रियशिरस्त्वाधिकरणसिद्धस्य निरुपाधिप्रियस्यैवानन्दमयस्य सर्वनियामकत्वबोधनात् आनन्दमयाधिकरणविषयवाक्ये ब्रह्म पुच्छं प्रतिष्ठेति । ब्रह्मणः पुच्छत्वश्रावणेन नियम्यत्वसिद्ध्या पुरुषोत्तमे तन्नियामकत्वमर्थबलादेव सिद्ध्यति । तत एवाकेवलत्वमपि, श्रीनिकेतत्वं पुरुषविद्याधिकरणे पुरुषसूक्ते "स भूमिं विश्वतो वृत्वा" इत्यनेन प्रपञ्चसाहित्यस्य "तं यज्ञं बर्हिषि प्रौक्षन्" इत्यनेन यज्ञसाहित्यस्य, "तद्गात्रं वस्तुसाराणां सौभगस्य च भाजनम्" इति पुरुषसूक्तव्याख्याने स्मृत्या श्रीसाहित्यस्य सिद्धत्वादिति ।

७ श्यामावदातमित्यत्र । श्यामत्वेनाप्रकाशत्वे प्राप्ते तद्वारणायावदातपदमित्याशयेनाहुः—मध्यन्दिनेत्यादि । "तन्मध्ये यत्कृष्णं तदश्नस्य" इति श्रुतेः, पार्थिवं यत्कृष्णं तत्सदृशं यद्धिरण्मयपुरुषस्य भास्वरं श्यामरूपं तद्वदित्यर्थः । ननु तादृशभास्वररूपे किं मानमत आदित्येत्यादि । अत्रादित्यतुल्यवर्णत्वस्य प्रमाणे बोधनादादित्यान्तःस्थितेऽपि तद्वर्णतास्तीति तथेत्यर्थः । सदृशपदाभावे तु प्राग्जलमेव तत् । एतेन सिद्धमन्यमप्याहु.—अनेनेत्यादि । भगवति तत्सारूप्यकथने न तस्मिन्नपि भगवद्धर्मस्यैव संक्रान्तत्वात् सापि भगवदात्मिका उक्ता भवतीत्यर्थः । विरजत्वेन सिद्धं फलरूपत्वमाहुः—व्यापीत्यादि । "क्षयन्तमस्य रजसः पराके" इति श्रुतेरित्यर्थः । उत्पादकेत्यादि । उत्पादकं रजस्तज्जन्य कर्म चादृष्टरूपं तत् संस्कृतभूताभावः । स च रजस्तमोराहित्यबोधनेनैवोक्त इत्यर्थः । एवं सर्वधर्मप्रत्यायनप्रयोजनमाहुः—मुक्तीत्यादि । अनेनेति । उपदेशार्थं तादृग्रूपप्रदर्शनेन । प्रकर्षः साधनसाहित्यमिति । लोचनपदेन विचारक्रियाया अपि लाभादत्र शक्तिद्वयमपि बोध्यते । तत्र ज्ञानशक्तौ शान्तिप्रकर्षः। क्रियाशक्तावारुण्यं साधनसाहित्यमित्यर्थः । एतेन सिद्धं फलरूपमाहु.—अनेन सार्ष्टिरित्यादि । अनेनेति प्रकर्षबोधनेन । प्रकर्षमात्रस्यैव तुल्यैश्वर्यत्वप्रयोजकत्वात् । अन्यथा "न तत्समश्च" इति श्रुतिविरोधापत्तिरिति भावः। इदमित्यस्यैव विवरणं ज्ञानेत्यादि । । एतावानिति । प्रकृष्टज्ञानक्रियाशक्तिमान् । ननु ततोऽधिको रसात्मा तस्यात्राप्राकट्यादिति ; अनेनेत्यादि । ज्ञातवकथनेन । "ब्रह्म वेद ब्रह्मैव भवति" इत्यत्रोक्तं तदुक्तमित्यर्थः । तर्हि पदान्तरस्य किं प्रयोजनमत आहुः—उभयोरित्यादि । उभयोरिति वामदक्षिणभागयोः । ज्ञापितमिति भावे क्तः । ज्ञापनमेवेत्यर्थः । कथं तज्ज्ञापनात्मकमित्यत आहुः—अत्रे-

पयवाक्येऽन्यस्य ब्रह्मणा स्पर्द्धितुमसामर्थ्यस्य प्रतिपादनात् । तस्य च क्रिययैव ज्ञानेनाऽपि तुल्यत्वात् । सारूप्यादिप्रदत्व च हानौ तूपायनेत्यधिकरणे । तत्र ब्रह्मप्राप्त्यर्थं तरं(१) कैर्धर्मैः साम्यमिति विचारे सारूप्यादिचतुर्दातृत्वस्यार्थबलादेव सिद्धेः । भक्त्यादिभि सायुज्यदातृत्व गतेरित्यर्थवत्त्वमित्यधिकरण । तत्र मर्यादापुष्टिभेदेनाङ्गीकारस्य तत्तत्फलहेतुत्वबोधनेन, मर्यादामार्गीयाङ्गीकारे यथाधिकार विहितभक्त्यादिसाधननिवेशादिति । एतेनैव ब्रह्मभावप्रदत्व तत्साधनसगुपनिवेशश्च सिद्ध्यतीति बोध्यम् ।

८ वाम ऊराविल्यत्र । अधिश्रित्येत्यस्य ल्यबन्तत्वाङ्गीकारेऽध्याहारापत्तिरिति तन्निवृत्त्यर्थ पक्षान्तरमाहु — दाक्षिणमित्यादि । तथा चाधिश्रित्यपद क्यबन्त तेन नाऽध्याहार इत्यर्थ । अनेनेति वामोरौ दक्षिणचरणस्थापनकथनेन । तद्व्याकुर्वन्ति—वामा इत्यादि । भगवद्भक्तिसाधनत्वेन मार्गत्वम, जले स्नेहाख्यगुणत्वेन सरोरुहपद प्रेमजन्यश्रवणादिपर बोध्यम् । आश्रित्त इति छायार्थमाश्रित । द्वितीयोऽर्थ श्रीधरव्याख्यात सङ्गृहीत । एतेन कथ कर्मबोध इत्याकाङ्क्षाया व्याकुर्वन्ति—अर्भाणामित्यादि । तथा च बालसुखदायकत्वेनारणिजन्यत्वेन चाऽत्र कर्मबोध इत्यर्थः । सूचितमिति, अपोपसर्गस्य वर्जनेऽपि शक्तत्वाद्वर्जितत्वेनाश्रित इत्यर्थस्य द्योतनेन तादृशकर्मणोऽनभिप्रेतत्व सूचितमित्यर्थ । अस्मिन् पक्षे वृत्तेरपि पारोक्ष्याद्व्याख्यानान्तरमाहु —अपाश्रिता इत्यादि । अस्मिन् पक्षे अपाश्रितार्भकं अश्वत्थे यस्येति गड्वादिसमासो बोधित । परिच्छेदरूपत्वादिति । तत्परिच्छेदेन रूप्यन्त इति रूपाणि, भगवदुपासनाभेदाना तथात्वादित्यर्थ । पुर स्फूर्तिकमर्थमाहु —सर्वेषामित्यादि । तपस्यादिनीति । तपस इद तपस्यम्, यत्प्रत्ययस्त्वद्वितोऽत्र । शब्दविशेषसूचितमर्थान्तरमाहु —असित्यादि । 'रघो कुलेऽखिलं राति राजते यो महीं स्थित । स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः' इति रामतापनीयमन्त्रे । आद्याक्षरमात्रेण धात्वर्थग्रहणदर्शनादत्रापि तथार्थोक्तौ न दोष इत्यर्थः । कर्मफलमित्यत्र कर्मेति भिन्न पदम् । अत्र कर्मत्यागो न सुबोधः इति तदर्थं योगमाहु —पिप्पलानित्यादि (१) अत्र पिप्पल पि पलमिति द्विधा प्रयोगो दृश्यते । तत्र पकारद्वयपक्षे पिप् काल । विसर्गपक्षे पि कालः । तत्रैकस्मिन् पक्षे पिप पान्तीति अन्यस्मिन् पीन् पान्तीति तत्र सकारागमश्च बोध्य । पक्षद्वयसङ्ग्रहायाहुः—अविशेषेणेति । अर्थस्य तौल्येन । तमेवार्थमाहु —सर्वभक्षकत्वादिति । अत्र पिप्पानि च लानि चेति पिप्पलम्, एकवद्भावो विग्रहे बोध्य । एकवचनविग्रहपक्षेऽप्ययमेवार्थ । एवमर्थस्याऽग्रे स्फुटत्वादत्र पाठोऽप्येतदनुसारेण बोद्धव्यः । एतद्विशेषसूचितमर्थमाहु –अनेन वैराग्य इत्यादि । दैहिकानि प्राणधारणोपयोगीनि भिक्षाटनादीनि । नित्याना विवक्षित स्वरूपमाहु —सर्वदेत्यादि । स्फुटमग्रिमम् । साधनाध्याये तु वैराग्य प्रथमपादार्थ । ज्ञान द्वितीयस्य । कर्म तुरीयस्य । भक्तिस्तृतीयस्य । तत्र सर्वात्मभावस्यैव मुख्यतया निर्धारितत्वादिति । गुणोपसहारे तु भक्तिरूपत्व लिङ्गभूयस्त्वाधिकरणे तत्र भक्तिमार्गीयस्य सर्वात्मभावस्य भगवद्रूपत्वनिर्धारणादिति तत्प्राप्यत्व स्फुटमेव । ज्ञानरूपत्व त्वक्षरधियामित्याधिकरणे । अक्षरस्य ज्ञानप्रधानत्वादिति ज्ञानप्राप्यत्व स्फुटमेव । स्वानभिमेतकाम्यकर्मफलदातृत्वं नानाशब्दादिभेदादित्याद्यधिकरणत्रये स्फुटम् । वैराग्य तु तादृशकर्मणा तत्परस्य चानभिप्रेतत्वाचेष्टैव सिद्धम् । न वा तत्सहभावाश्रुतेरित्यधिकरणे । सर्वरूपत्व समहाराधिकरणे । एव षोडशाधिकरण्येमानि विशेषणानि बोधितानीति प्रतिभाति ।

९ तस्मिन्नित्यत्र । ब्रह्मसमानत्वादिति । ब्रह्मणे यथा आश्चर्यलीला उपदिष्टा तथोद्धवायेदानीमुपदेष्टव्येति तच्छ्रवणाधिकारित्वेन तथात्वात् । उक्तमिति । व्यासपादैरेवोपनिबद्धम् ।

१ ब्रह्मप्राप्त्यनन्तरमिति ख्या ।

आत्मगृहीत्यधिकरणे । प्रियशिरस्त्वाधिकरणसिद्धस्य निरुपाधिप्रियत्वस्यैवानन्दमयस्य सर्वनियामकत्वबोधनात्। आनन्दमयाधिकरणविषयवाक्ये ब्रह्म पुच्छं प्रतिष्ठेति । ब्रह्मण पुच्छत्वबाधबोधेन नियन्तृत्वसिद्धया पुरपोषणे तन्नियामकत्वमर्थबलादेव सिद्धयति । तत एवाकेवलनत्वमपि, श्रीनिवेशत्वं पुरुषविद्याधिकरणं पुरुषसूक्ते " स भूमिं विश्वतो वृत्वा " इत्यनेन सर्वव्यापित्वस्य " तं यज्ञं बर्हिषि प्रौक्षन् " इत्यनेन यज्ञसाहित्यस्य, " तद्भाग्रं वस्तुसाराणां सौभगस्य च भाजनम् " इति पुरुषसूक्तव्याख्याने स्मृत्या श्रीसाहित्यस्य सिद्धत्वादिति ।

७ श्यामावदातमित्यत्र । श्यामत्वेनाप्रकाशत्वे प्राप्ते तद्वारणायावदातपदमित्याशयेनाहुः—मध्यन्दिनेत्यादि । " तन्मध्ये यत्कृष्णं तदस्य "इति श्रुतेः, पार्थिवं यत्कृष्णं तस्मादपि यद्धिरण्मयपुरुषस्य भास्वरं श्यामरूपं तद्वदित्यर्थः । ननु तादृशभास्वररूपे किं मानमत आहुः आदित्येत्यादि । अत्रादित्यतुल्यवर्णत्वस्य प्रमाणे बोधनादादित्यान्तःस्थितेऽपि तद्वर्णतास्तीति तथेत्यर्थः । तदृशपदाभावे तु प्राप्नोत्येव तद् । एतेन सिद्धमन्यमप्याहु.—अनेनेत्यादि । भगवति तत्सारूप्यकथने न तस्मिन्नपि भगवद्धर्मस्यैव संक्रान्तत्वात् सापि भगवदात्मिका उक्ता भवतीत्यर्थः । विरजत्वेन सिद्धं फलरूपत्वमाहु.—व्यापीत्यादि । "द्युगन्तमस्य रजसः पराके " इति श्रुतेरित्यर्थः । उत्पादकेत्यादि । उत्पादकं रजस्तज्जन्यं कर्म चादृष्टरूपं तत् संस्कृतभूताभाव. । स च रजस्तमोराहित्यबोधनेनैवोक्त इत्यर्थ । एवं सर्वधर्मप्रत्यायनप्रयोजनमाहुः—मुक्तीत्यादि । अनेनेति । उपदेशार्थं तादृग्रूपप्रदर्शनेन । प्रकर्षः साधनसाहित्यमिति । लोचनपदेन विचारक्रियाया अपि लाभादत्र शक्तिद्वयमपि बोध्यते । तत्र ज्ञानशक्तौ शान्तिप्रकर्षः। क्रियाशक्तावपारण्यं साधनसाहित्यमित्यर्थः । एतेन सिद्धं फलरूपमाहु.—अनेन सार्ष्टिरित्यादि । अनेनेति प्रकर्षबोधनेन । प्रकर्षमात्रस्यैव तुल्यैश्वर्यत्वप्रयोजकत्वात् । अन्यथा " न तत्समश्च " इति श्रुतिविरोधापत्तिरिति भावः। इदमित्यस्यैव विवरणं ज्ञानेत्यादि ।। एतावानिति । प्रकृष्टज्ञानक्रियाशक्तिमान् । ननु ततोऽधिको रसात्मा तस्यात्राप्राकट्यादिति । अनेनेत्यादि । ज्ञात चकथनेन । "ब्रह्म वेद ब्रह्मैव भवति" इत्यत्रोक्तं तदुक्तमित्यर्थः । तर्हि पदान्तरस्य किं प्रयोजनमत आहुः—उभयोरित्यादि । उभयोरिति वामदक्षिणभागयोः । ज्ञापितमिति भावे क्तः । ज्ञापनमिवेत्यर्थ. । कथं तज्ज्ञापनात्मकमित्यत आहुः—अत्रेत्यादि । पदत्रयमिति । असमस्तं पदत्रयं विदितं यस्मादिति समासमभिप्रेत्याहुः—कालेत्यादि । तथा च ज्ञानविषये रूढं विदितपदमुक्तयोगद्वयोपकृतं सदेव तावन्तमर्थं बोधितवदित्यर्थः । अत्र गमकमाहु.—अन्यथेत्यादि । अहन्ताममताभाव इति । " वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो. । आप चैव हलन्तानां यथा वाचा निशा दिशा " इत्यनुशासनात् पीतपदमपीतार्थकं सदहन्ताद्यभावं बोधयतीति तथा । अवस्थात्रयं जाग्रदादिरूपं बोध्यम् । ऐक्यपदसूचितमर्थमाहु —एकमित्यादि । एतत्त्रयं समुच्चितमेव साधनमित्यर्थ । फलाध्याये ब्राह्मणेत्यधिकरणे द्वादशाहसूत्रे सारूप्यदेहेन्द्रियासुहीनानामेव साकारत्वेन सारूप्यात् सिद्धयति । भोगसाधनेनैव सामीप्यसार्ष्टिसालोक्यान्यपि सिद्धयन्ति । सायुज्यं त्वनावृत्तिसूत्रे " अनावृत्तिः शब्दात् "इत्यस्य पुन. कथनेन मुख्याधिकाररहितानां साधितम् । गुणोपसंहारे तु रजस्तमोराहित्येन प्रकाशकत्वं पुरुषविद्याधिकरण एव सिद्धयति । " आदित्यवर्णम् " इति श्रुतेस्तद्विषयवाक्ये सत्त्वात् । रजोराहित्येन निर्दोषत्वं वेधाद्यधिकरणे । तत्र विभूतिरूपस्य मुख्यमाणस्य निर्दुष्टतास्थापनेन कैमुतिकेनैव भगवतो दोषराहित्यस्य सिद्धत्वात् । प्रकृष्टज्ञानक्रियाशक्तिमत्त्वं सम्भृत्यधिकरणे । तद्धि

---

१ इत पूर्वं प्रियशिरस्त्वाधिकरणे इत्यपि लभ्यते २ तत्सारूप्यके भगेनेत्यथ. पुस्तकेषूपलभ्यते.

पयवाक्येऽन्यस्य ब्रह्मणा स्पर्द्धितुमसामर्थ्यस्य प्रतिपादनात् । तस्य च क्रियेयेव ज्ञानेनाऽपि तुल्यत्वात् । सारूप्यादिप्रदत्व च हानौ तूपायमेत्यधिकरणे । तत्र ब्रह्मप्राप्त्यर्थं तरं,(१) कैर्धर्मैः साम्यमिति विचारे सारूप्यादिचतुर्दातृत्वस्यार्थबलादेव सिद्धेः । भक्त्यादिभि सायुज्यदातृत्व गतेरित्यर्थवत्त्वमित्यधिकरणे । तत्र मर्यादापुष्टिभेदेनाङ्गीकारस्य तत्तत्फलहेतुत्वबोधनेन, मर्यादामार्गीयाङ्गीकारे यथाधिकार विहितभक्त्यादिसाधननिवशादिति । एतेनैव ब्रह्मभावप्रदत्व तत्साधनसमुपनिवेशश्च सिद्ध्यतीति बोध्यम् ।

८ वाम ऊरावित्यत्र । अधिश्रित्येत्यस्य ल्यबन्तत्वाङ्गीकारेऽध्याहारापत्तिरिति तन्निरृत्यर्थं पक्षान्तरमाहु — दक्षिणमित्यादि । तथा चाधिश्रित्यपद क्यबन्त तेन नाऽध्याहार इत्यर्थ । अनेनेति वामोरौ दक्षिणचरणस्थापनकथनेन । तद्व्याकुर्वन्ति—वामा इत्यादि । अत्राङ्घ्रेर्गतिसाधनत्वेन मार्गत्वम , जरे स्नेहात्मगुणसत्त्वेन सरोरुहपद प्रेमजन्यश्रवणादिपर बोध्यम् । आश्रित इति छायार्थमाश्रित । द्वितीयोऽर्थ श्रीधरव्याख्यात सङ्गृहीत । एतेन कथ कर्मबोध इत्याकाङ्क्षाया व्याकुर्वन्ति—अर्भाणामित्यादि । तथा च वाग्सुखदात्मकत्वेनारणिजन्यत्वेन चाऽत्र कर्मबोध इत्यर्थः । सूचितमिति, अपोपसर्गस्य वर्जनेऽपि शक्तत्वाद्वर्जितत्वेनाश्रित इत्यर्थस्य द्योतनेन तादृशकर्मणोऽनभिप्रेतत्व सूचितमित्यर्थ । अस्मिन् पक्षे वृत्तेरपि पारोक्ष्याद्व्याख्यानान्तरमाहु —अपाश्रिता इत्यादि । अस्मिन् पक्षे अपाश्रितार्भकं अश्वत्थे यस्येति गडवादिसमासो बोधित । परिच्छेदरूपत्वादिति । तत्परिच्छेदेन रूप्यन्त इति रूपाणि, भक्त्युपासनाभेदाना तथात्वादित्यर्थ । पुर स्फूर्तिकमर्थमाहु —सर्वेषामित्यादि । तपस्यादीनीति । तपस इव तपस्यम् , यत्प्रत्ययस्ताद्धितोऽत्र । शब्दविशेषसूचितमर्थान्तरमाहु —अस्तित्यादि । 'रघो कुलेऽखिल राति राजते यो महीं स्थित । स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः' इति रामतापनीयमन्त्रे । आद्याक्षरमात्रेण धात्वर्थग्रहणदर्शनादत्रापि तथार्थोक्तौ न दोष इत्यर्थः । कर्मफलमित्यत्र कर्मेति भिन्न पदम् । अत्र कर्मत्यागो न सुबोधः। इति तदर्थं योगमाहु —पिप्पलानित्यादि (१) अत्र पिप्पल पि पलमिति द्विधा प्रयोगो दृश्यते । तत्र पकारद्वयपक्षे पिप् काल । विसर्गपक्षे पि काळः । तत्रैकस्मिन् पक्षे पिप पान्तीति अन्यस्मिन् पीन् पान्तीति तत्र सकारागमश्च बोध्य । पक्षद्वयसङ्ग्रहायाहुः—अविशेषेणेति । अर्थस्य तौल्येन । तमेवार्थमाहु —सर्वभक्षकत्वादिति । अत्र पिप्पानि च लानि चेति पिप्पलम् , एकवद्भावो विमर्दे बोध्य । एकवचनविग्रहपक्षेऽप्ययमेवार्थ । एवमर्थस्याऽग्रे स्फुटत्वादत्र पाठोऽप्येतदनुसारेण बोद्धव्यः। एतद्विशेषसूचितमर्थमाहु –अनेन वैराग्य इत्यादि । दैहिकानि प्राणधारणोपयोगीनि भिक्षाटनादीनि । तेषाना विवक्षित स्वरूपमाहु —सर्वदेत्यादि । स्फुटमग्निमम् । साधनाध्याये तु वैराग्य प्रथमपदार्थ । ज्ञान द्वितीयस्य । कर्म तुरीयस्य । भक्तिस्तृतीयस्य । तत्र सर्वात्मभावस्यैव मुख्यतया निर्धारितत्वादिति । गुणोपसहारे तु भक्तिरूपत्व लिङ्गभूयस्त्वाधिकरणे तत्र भक्तिमार्गीयस्य सर्वात्मभावस्य भगवद्रूपत्वनिर्धारणादिति तत्प्राप्यत्व स्फुटमेव । ज्ञानरूपत्व त्वक्षरधियामित्याधिकरणे । अक्षरस्य ज्ञानप्रधानत्वादिति ज्ञानप्राप्यत्व स्फुटमेव । स्वानभिप्रेतकाम्यकर्मफलदातृत्वं तु नानाशब्दादिभेदादित्याद्यधिकरणत्रये स्फुटम् । वैराग्य तु तादृशकर्मणा तत्फलस्य चानभिप्रसत्त्वाचेप्यैव सिद्धम् । न वा तत्सहभावाश्रुतेरित्यधिकरणे । सर्वरूपत्व समाहाराधिकरणे । एव षोडशाधिकरण्येमानि विशेषणानि बोधितानीति प्रतिभाति ।

९ तस्मिन्नित्यत्र । ब्रह्मसमानत्वादिति । ब्रह्मणे यथा आश्रयलीला उपदिष्टा तथोद्धवायेदानीमुपदेष्टव्येति तच्छ्रवणाधिकारित्वेन तथात्वात् । उत्तममिति । व्यासपादैरत्रोपनिबद्धम् ।

१ ब्रह्मप्राप्त्यनन्तरमिति रत्न।

१० तस्येत्यत्र । नहीत्यत्र हिर्हेतौ नोचितं इत्यर्थः ।

११ वेदेत्यत्र । तदेतद्येति । साधनकरणम्, बदरिकाश्रमप्रेषणं च । अन्यार्थभवेन प्रकारमाहुः—अद्भिर्वेत्यादि । श्रुतिस्तु तैत्तिरीयाणां ब्राह्मणे तृतीयाष्टकद्वादशप्रपाठकसप्तमानुवाकस्था । उपाय इति । बदरीगमनरूपः ।

१३ पुरेत्यत्र । स्वस्य पुरुषोत्तमरूपत्वाभावे स्वयं कथं तादृशान् सृष्टवानित्याकाङ्क्षायां नाभ्यादिपदतात्पर्यमाहुः—असम्बन्धेनेत्यादि । कार्यं हि कारणेन सम्बद्धमेवोत्पद्यते अयं तु साक्षात् सम्बन्धाभावेन नाभ्ये पद्मे निषण्णत्वेन समवेतसंयोगेऽपि समवेतत्वाभावेनोभयविधकार्यरूपत्वाभावादित्यर्थः । तर्हि किं तस्य स्वरूपमित्यत आहुः—तस्येत्यादि । अज इति पुरुषोत्तमरूपः । अत इति विद्वत्संमतत्वात् ।

१४ इतीत्यत्र । आदृत एव वेति । अस्मिन् पक्षे सम्बोधनवस्तुनिर्दोषांशावादर एव हेतु इति भेदः । समासस्तु स एव । परमस्येत्यत्र परं—अस्येतिपदच्छेदः । एकपदाभिप्रायेणार्थान्तरमाहुः—ज्ञानेनेत्यादि । निवार्यत इति । भगवतः सकाशान्निवार्यते ।

१६ कर्माणीत्यत्र । फलादाहेति । फलं सेवनम्, स्वरूपज्ञानं वा, तस्माज्जातं दोषमाहेत्यर्थः । अनेनेति । बाधकनिवृत्तिप्रार्थनेन । भजनहेतुभगवत्त्वं तेन ।

१८ ज्ञानमित्यत्र । प्रतिपाद्येतादृशमित्यत्र प्रतिपादीतिपदच्छेदः ।

१९ इत्यावेदितेत्यत्र । आज्ञाया इति । अतो मद्वयुनमितिविचारवाक्यबोधितायाः । तथा सामर्थ्यादिति । उद्धवे गुणार्दनस्याभावेन भगवत्स्थितज्ञानव्यवहारसामर्थ्यात् ।

२३ इत्युद्धवेत्यत्र । स्कन्धार्थविचारेणाऽग्रे का वा बुद्धिरुच्यत इत्याकाङ्क्षायामाहुः—एवमित्यादि । निरूप्येति । सूच्यत्वेनोक्त्वा । अत्राप्रायोजकत्वादिति अधिकारेऽनुकूलत्वात् । द्वयोःफलस्य विवरणं शोके तदपगमे चेति । सन्देहनिवृत्त्यर्थम् । कर्माणीत्यादिश्लोकद्वयोक्तसन्देहनिवृत्त्यर्थम् । नन्वत्र संशयरूपा बुद्धिरुच्यत इत्यत्र किं मानमित्यत आहुः—सन्देहेत्यादि । स इति बुद्धिवृत्तिविशेषः ।

२४ स तमित्यत्र । स्वस्येति परीक्षितः ।

२८ निधनेत्यत्र । स्कन्धार्थविचारेणाऽग्रिमग्रन्थे का बुद्धिरुच्यत इत्यपेक्षायां तामाहुः—विपर्ययबुद्धिमित्यादि । चोऽप्यर्थे । सकारणान्तां कारिकया विवृण्वन्ति—विपर्यय इत्यादि । तादृशाधिकारविरहेण मायया सिद्धान्तगोपने कृते सति शुकेन सिद्धान्तकथनेऽपि अस्य राज्ञो विदुरपृष्टे भगवच्चरित्र एव विपर्ययः, विपर्ययरूपा बुद्धिरुत्पन्नेत्युच्यते । तत्र गमकं पर्यवसानगेति । परिदृश्यमाननिधनरूपदार्थग्राहिकेति । इति सिद्धान्तादिति । अयं सिद्धान्तः प्रथमस्कन्धनिबन्धादवगन्तव्यः । न सप्तार्थी राज्ञा बुद्धेति । अनीहत्वाभवत्वकालात्मत्वात्मारामत्वाकुण्ठिताखण्डसदात्मबोधत्वाप्रमत्तत्वदेवत्वरूपा राज्ञा पूर्वं न बुद्धचरा(?) आकृतिं निश्चाययितुमाहुः—यादवाकृतिमिति । एतमर्थं व्युत्पादयन्ति—यथेत्यादि । भेद इति । आकृतिभेदः । कश्चनेति । प्रायो ज्ञापको नियतव्यञ्जकः । स्वबुद्धिरिति राज्ञो विपर्ययबुद्धिः ।

३० अस्मादित्यत्र । प्रवेशं कुर्वन्निति । अधिकारिवृद्धौ प्रवेशं कुर्वन् । परोक्षवादत्वात् उत्सृजन् शब्दार्थत्वाच्च नात्र लक्षणादोषः ।

---

१ अननुकूलत्वादिति स्यात्.

३२ एवमित्यत्र । शापादेरित्यादि । शापस्य न स्थितिबाधकत्वम्, कालस्य न स्थितिसाधकत्वमित्यर्थः। लोकप्रतीतेत्यस्य तथात्वमित्यनेनाऽन्वयः।

विदुरोऽपीत्यत्र । तच्छेषत्वेनेति विपर्ययशेषत्वेन । एवमत्र स्वांशेन भगवत्प्रवेशात् बुद्धिसंस्कारेण तत्सर्गो निरूपितः ।

इति श्रीगोस्वामिपुरुषोत्तमजीमहाराजकृत–तृतीयस्कन्धसुबोधिनीप्रकाशे चतुर्थोऽध्यायविवरणम् ।

---

## पञ्चमाध्यायप्रकाशः ।

---

अथ पञ्चमाध्यायं विवरिषवः प्रकरणान्तरस्यारभ्यमाणत्वात् पूर्वोत्तरप्रकरणसङ्गतिं निरूपयितुं द्वयोरप्यर्थं वदन्तो द्वाभ्यां पूर्वोत्तरभावं समर्थयन्ति–चतुर्णामित्यादि । अत्र सर्गनिरूपके स्कन्धे हि यतो हेतोराद्यः सर्गोऽधिकारे निरूपितः। ततः कृष्णस्य पुरुषोत्तमस्य प्रथमपुरुषरूपेण प्राकट्यार्थं सर्गान्तरमीर्यते । अतः स एव अधिकार्येव तथा जानाति नाऽन्य इति सोऽत्यन्तमावश्यकः। तथा च हेतुहेतुमद्भावः सङ्गतिरित्यर्थः । एवं सङ्गतिं निरूप्याग्रे निरूपणीये सर्गद्वये न पूर्ववत् संस्कार्यता सृज्यानां किन्तु स्वरूपस्यैवोत्पत्तिरिति बोधनाय पञ्चमे भूतानां स्वरूपं बोधयन्ति–कृष्णार्येत्यादि । तथा च भूतत्वमत्र जातत्वेनैव विवक्षितम्, न तु पृथिव्याद्यन्यतमत्वेनेत्यर्थः । ननु जातत्वस्य साधारणत्वादेतेषु भूतत्वं कथोपपद्यतेत्याकाङ्क्षायां तदुपपादकं रूपमाहुः–वेद इत्यादि । पञ्चभिरिति । आकाशादिभिः । बहुधेति । त्रयोविंशतितत्त्वरूपेण, तथा च वेदोक्तभूतव्यष्टितया तद्भावत्वेन रूपेण भूतत्वमित्यर्थः । अग्रिमाध्यायोक्तानां मात्रात्व उपपत्तिमाहुः–भोग इत्यादि । शरीरे। ब्रह्माण्डात्मके। तत्राध्याये निरूपिताः पदार्था मात्राः। " निर्भिन्नं तालु वरुणः " इत्यादिना भोगस्य कथनात् पुरुषभोग्यत्वमत्र मात्रात्वं विवक्षितम्, न तु भूतसूक्ष्मत्वं शब्दाद्यन्यतमत्वं वेत्यर्थः । तदग्रिमाध्यायोक्तानामिन्द्रियत्वमुपपादयन्ति–नानेत्यादि। अत्र शास्त्राण्युद्देश्यानि। मनो विधेयम् । तत्र युक्तिः–सन्देहविनिश्चयाविति । तेनैवेति । उभयेन्द्रियप्रेरकेण मनसैव । तथा च सन्देहनिश्चयाभ्यां कार्याभ्यामनुमानविधया शास्त्रेषु मनस्त्वं बोधयित्वा उपलक्षणविधयाऽन्येष्विन्द्रियत्वं सङ्गमितमित्यर्थः । ( तदग्रिमाध्यायोक्तानां बुद्धिरूपत्वमाहुः (?) तदग्रिमाध्यायोक्तस्य बुद्धिरूपत्वं पूर्ववदाहुः–बुद्धिरित्यादि । तत्कार्यमिति । 'क एष योऽसौ' इत्याद्युक्तालोचनरूपं बुद्धिकार्यम्। तथा च बुद्धिकार्यकर्तृत्वात् ब्रह्मा भगवतो बुद्धिरित्यर्थः । एवं भगवत्प्रकरणस्थानां चतुर्णां स्वरूपमुक्त्वा कार्यप्रकरणस्थानां चतुर्णामाहुः–स्तुतीत्यादिसार्द्धैस्त्रिभिः । स्तुतिप्रसादौ नवमाध्यायोक्तौ। कार्याणां ब्रह्माण्डान्तर्वर्तिव्यष्टीनां भूतानि(?)जातत्वात सङ्घातहेतुत्वाद्वेत्येव निश्चयः सूक्ष्मेक्षिकया निर्धारः । एवमग्रे भोग्यत्वाच्छरीराणि मात्रा यथा पूर्वप्रकरणे भगवतः स्वासकमृत्युहेतुत्वरूपकार्यात् काल एव तदिन्द्रियाणि यदस्मात्तत्राऽध्याय उक्तैर्वेदादिभिः नैतत्पूर्वैः कृतं कर्मेत्यादिकं तेषां कार्याणां हिताय शुकमुक्तम् । तदस्माद्धेतोस्ते महात्मान

एव बुद्धिरूपा इत्यर्थः । अत्रेदं बोध्यम् । लक्षणे भूताद्युत्पत्तिरेव सर्गत्वेन प्रतिपाद्य तत्परीक्षकेऽस्मिन् स्कन्धे चतुरध्याय्युत्तर पञ्चमे महदादिसर्वतत्त्वोत्पत्तिम्, ततो ब्रह्माण्डोत्पत्तिम्, ततः शास्त्रकृतसन्देहनिश्चयौ, ततो ब्रह्मोत्पत्तिम्, ततो ब्रह्मस्तुत्यादिकम्, ततः पुनर्महदादिसर्गम्, ततः कालम्, ततो ब्रह्मादीन् वक्ष्यति, एवमग्रे वराहावतारणादिकथामन्यच्च वक्ष्यति, तेनैव ज्ञायते । यत्सर्वसाधारणभूतादिसर्गो नाऽत्र सर्गत्वेन विवक्षितो भूतादयश्च न ते विवक्षिताः, किन्तु लीलारूपः सर्गः; तदुपयोगितया विचारिता एव च तत्प्रतियोगिनो भूतादय इति । वक्ष्यति च " रजोभाजो भगवतो लीलेयम् " इति । एवं सति पृथिव्याद्यन्यतमत्व शब्दाद्यन्यतमत्व चक्षुराद्यन्यतमत्व चित्ताद्यन्यतमत्वमन्यद्वा न भूतमात्रेन्द्रियधी लक्षणमभिप्रेतम्, किन्तु विशिष्टदेहादिरूपस्थूलकार्यजनकत्वं भूतत्वम्, भूतसूक्ष्मरूपत्वे सति भोग्यत्व मात्रत्व ज्ञानक्रियान्यतरकरणत्वे सति दुर्ज्ञेयत्वमिन्द्रियत्वम्, इन्द्रियाऽनुग्राहकत्व बुद्धित्वमिति फलोपहित लक्षणम भिप्रेतम् । एवमग्रिमप्रकरणेऽपि द्रष्टव्यम् । तेनानायासेन भूतादिकार्यं कुर्वते भगवत एव भूतादि रूपत्वम्, तेन तेन रूपेण भवनमेव च सर्ग इति फलति । अयमर्थोऽग्रे पञ्चविंशाध्यायारम्भे भगवद्रूपनिष्पत्तानित्यादिकारिकाद्वयेन स्फुटीकरिष्यत इति नाऽत्र चोद्यं किञ्चित् । एवं सङ्क्षेपेणाऽष्टा ध्याय्या अर्थं प्रदर्श्य प्रस्तुताध्यायार्थं विशेषाकारेण प्रदर्शयन्ति—कार्येत्यादि । कार्यं विराजः शरीरम्, तदुपयोगिनां तत्त्वानामुत्पत्तिः, च पुनः याहशैस्तैस्तत्कार्यं सिध्यति, तद्भानस्ताहशसामर्थ्यवत्ता प्रकारश्च पञ्चमे निरूप्यत इत्यर्थः । ननु तर्हि प्रश्नाद्युपनिबन्धनस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः— प्रश्नेत्यादि । भगवत्कृतिनिरूपणे यतः एतयोरङ्गत्वमतो हेतो सृष्टिरूपे भगवज्ज्ञानोपाये भगवद्गुणाना विपरीतप्रवेशात् विरक्तो जिज्ञासति(?)ज्ञानी श्रयते, श्रितो यत्र श्रद्धत्ते, यशस्यतृप्तो वीर्याणि जिज्ञासति(?) ज्ञातवीर्यस्तमीश्वरत्वेनाऽनुसन्धत्त इत्येवं षोढा भगवत्प्रश्नस्तत्त्वानामेव ज्ञानार्थं निरूप्यते, अत उपोद्घातत्वेन तद्बोधनमेव प्रयोजनमित्यर्थः ।

२ सुखायेत्यत्र । मूले । अन्यदुपारममित्यत्र वर्णागमः, वा शब्दावप्यर्थौ, अथवा अन्यद्वा न तस्यैव व्याख्यानमुपारममिति, दुःखाभाव इत्यर्थः । लिङ्गमाशिष्यम् । एतं पक्षमभिप्रेत्याहुः—प्रति· बन्धकेत्यादि ।

३ जनस्येत्यत्र । भगवदीयस्य तद्बहिर्मुखस्य चाऽत्र जन्मकथनात् तावन्मात्रे न वैमुख्यगमकमि· त्यत आहुः—प्रवृत्तेत्यादि । दुःखितभवनप्रयोजनमाहुः—अन्यथेत्यादि । यदि दुःखं न प्राप्नुयात्, सुख लेशजमदव्याप्त सत्कुलजन्मादिरूपं भगवदनुग्रहमपि नानुसन्दध्यादित्यर्थः ।

४ तदित्यत्र । दुःखस्याऽनिवृत्तत्वादिति । अयं हेतुरपरितोषज्ञापको ज्ञेयः । प्राहितामिति । प्रकर्षेण हितम् । सोमवदिति । यथा सोमो वल्लीविशेषो वैदिकेन मार्गेण संस्कृतः फलसाधकत्वात् पूतो भवति तद्व· दित्यर्थः । ननु ज्ञानार्थं प्रेरयत्येव अन्यथा ज्ञानाशसा तव कथं स्यात्—अतः किमर्थं तादृशो प्रेरणो पायप्रश्न इत्याशङ्कायामाहुः—पूर्वेत्यादि । ब्रह्मज्ञानन्यायेन वैराग्यमप्येतत्सजातीयमेव द्रष्टुं ज्ञेयम् । अत्र· विधस्य ज्ञानान्तरवदपायप्रसङ्गेनास्थिरत्वादिति ।

५ करोतीत्यत्र । अयं चेत्यादिश्लोकपद्यत्वेन क्रियमाणः व्युत्क्रमेण तृतीयस्य ख्यात्यस्य गुणस्य प्रश्न इत्यर्थः । इयमिति । पृच्छमाना । प्रकारा इति । तत्त्वभेदेन स्वरूपादिभेदेन द्विविधाः प्रकाराः ।

---

१ पारसे पा २ दन पा ३ मन्तुरोपयम्

नन्वेकप्रश्नमध्ये सप्ताना किमिति निवेश इत्याकाङ्क्षाया निवेशे हेतुमाहु —सप्तानामित्यादि । तथाहि वस्तूना स्वरूपभेद प्रत्यक्षसिद्ध । स च कारणभेदाभावेऽघटमान कारणीभूततत्त्वभेद साधयति । तत्त्वभेदश्च प्रवेशभेद । अन्यथा भगवत एकत्वात्तत्त्वानि न भिद्येरन् । प्रवेशभेद प्रलय साधयति । अन्यथा प्रतिकल्पमेकविधमेव ब्रह्माण्ड तिष्ठेत् । प्रलय स्थिति (?) स्थितिरित्याद्यम् । सा च जन्माद्यस्येतिन्यायेन भगवत(?)साधयतीत्यत सप्तानामेकत्र निवेश । ननु तस्य तस्य तत्तदुपपादकत्वं ज्ञायत एव चेत् प्रश्नस्य कि बीजमित्याकाङ्क्षाया तदाहु —तत्रेत्यादि । व्यर्थेति । उत्पत्ते संसारार्थत्वादवतारकर्मभिर्मोक्षे सा तथेति कथमुभयसामञ्जस्यमिति प्रश्नबीजम् । उभयोरेकत्वादिति । जीवोत्पत्त्यवतारकर्मणोरेकेनैव कार्यसिद्धावितर वैयर्थ्यादित्यर्थ । ननु सहकारित्वान्नान्यतरवैयर्थ्यमिति चेत्तत्राहु —अमोहकत्वेनेत्यादि । तथा चावतारकर्माणि व्यर्थानीत्यर्थ । ज्ञातव्येति । परस्पराविरोधेन ज्ञातव्या । ननूत्पत्तेः स्थितिद्वारैव मुक्त्यर्थत्वमिति चेत्, तत्राहु —यदीत्यादि । तन्नाशयेदिति । स्थितौ मोहं नाशयेत् । तन्न नाशयेदिति पाठे त मोह न नाशयेदित्यर्थ । एतेन नाशलीलाया अपि प्रयोजने सन्देहो बोधितः । सपद्येतेति । अतोऽन्तर्यामिस्वभावभेदोऽपि सहेतुको ज्ञातव्य इत्यर्थ । निर्गमनमिति । तत्त्वभेदेन स्वरूपभेदेन च भेद । भिन्नानीति । न स्युरिति शेष । अतो जगतो द्विधा भेदोऽपि ज्ञातव्य इत्यर्थ । सर्वमिति(?) । तत्कारणभूततत्त्वभेद । अत इति । उत्तरोत्तरज्ञानस्य पूर्वपूर्वज्ञानसाधकत्वात् । श्रीरत्र वासुदेवस्य माया ज्ञेया । अत एव प्रश्नबीजमुक्त्वा व्याकुर्वते—कृतेत्यादि । प्रसिद्धिरुक्तेति । तथा च न करोतीत्युत्तर न जातु शक्यमित्यर्थ । तेषां कर्मत्वमिति । कर्तुरीप्सिततमत्व तेषा केन रूपेण । एतस्यैव विवरणम्—तानीत्यादि । तस्याऽपि निष्क्रियो भगवत इत्यादि । तव्यत्प्रत्ययावश्यकार्थः । ननु कारकर्मस्वभावाधीनः करोतीत्येव वक्तव्यमिति चेत्, तत्राहु —दोषेत्यादि । स्वमध्यपातादिति । आत्मतत्त्वपदैकदेशबोधितस्वमध्यपाताभावात् (?)। अत्रेति । विविधाया जीविकायाम् ।

६ यथेत्यत्र । संगोप्य इति । स्वस्वरूपमज्ञापनीय ।

७ क्रीडनित्यत्र । मरणनिवर्तकत्वं चेति ' क्षुत् खलु वै मनुष्यस्य भ्रातृव्यः ' इति श्रुते क्षुधस्तथात्वात्तन्निवारकत्वेन तथात्वमित्यर्थ । चरित्रे मरणनिवारकत्वस्यानुभवसिद्धत्वाभावात्तत्समासमभिप्रेत्य पक्षान्तरमाहुः—भक्षणेत्यादि । कर्मणा श्रवणासेचनत्वेनात्मास्वादनेऽपि न तेषा हानिसभावनेति तथेत्यर्थ । अद्भुतकर्मत्वमेव व्युत्पादयन्ति—कर्माणीत्यादि । नित्यानीति । ध्वंसाप्रतियोगीनि । अर्थद्वयस्याऽप्यत्र विवक्षितत्वबोधनायाहु —प्रलयेत्यादि ।

८ येरित्यत्र । मूले । अधिलोकनाथपदम्, लोकनाथाधिपतित्वबोधकम् । सहलोकपालानित्यनेन अलोकेष्वपि तत्साहित्यस्य प्रतीयमानत्वाल्लोकालोकपरभागे तदभावादलोकपदं न तत्परमित्याशयेनाहु —अरुपायमित्यादि । मनुष्याणामिति । मनुष्यतुल्यचक्षुष्काणाम् । तदभाव इति । उलूकादिषु आलोकापेक्षाभाव । लोकालोकपरभागस्य अलोकत्व हृदि कृत्वा आहु —अत्रेत्यादि । तथा च लोकालोकपरभागपक्षे इद प्रश्नबीजमित्यर्थ । तेन सिद्धमाहु —अत इत्यादि । तत्रापीति । उलूकादिष्वपि । त्रिलोकपदेन पिपीलिकादिसग्रहार्थमाहु —चक्षुरभावो वेति । अलोकपदेन व्याख्याताना सत्त्वविशेषत्वेनाधेयत्वायत्ते त्याधारवाचकपदविरोध इत्यरुच्या पक्षान्तरमाहु —अथवेत्यादि । तत्कथयेति लोकादिजनकतत्त्वभेदाधिकरणं कथयेत्यर्थ । अधिकारिण इति । नियतकार्ये नियुक्ता । तत्रार्थप्रमाणत्वेनाहु —अन्यथेत्यादि ।

१ भगवत्त्वम् भगवन्तमिति स्यात्

९ येनेत्यत्र । अकृतमिति । हेतुं विनैव । पूर्वोक्तमिति । नारायणादिपदद्वयोक्त हेतुद्वयम् । एतेनैश्वर्यं पृष्टं ज्ञेयम् । यशोवीर्ययोरग्रे स्फुटत्वादिति । यशो वाऽत्र । तथा सति "तदस्य" इति श्लोके वीर्यम्, शिवायेति परपक्षनात् । स विश्वेत्यैश्वर्यम्, ईश्वरपदस्य तत्र प्रयोगादिति ।

१६ स विश्वेत्यत्र । विश्वेत्यादिविशेषणप्रयोजनमाहुः—पार्थान्तरेत्यादि । तथा च पूर्वप्रश्नादस्मिन् वैलक्षण्यज्ञापनाय विशेषणमित्यर्थः ।

१७ एवमित्यस्याभासे । अध्यायद्वयेनेति । तेन विदुरमैत्रेयसंवादे प्रश्नोत्तररूपावान्तरप्रकरणसङ्गतिर्बोधिता । द्वाभ्यां कथने हेतु—अवतारादिति । अवतारश्च तदादिश्चेत्यवतारादी तयोरपर्ययोर्यत् प्रयोजनं तद्भेदादित्यर्थः । पूर्वोक्तेति । यन्मर्त्यलीलेत्यत्र पूर्वं द्वितीयस्कन्धे चानन्दशक्तित्वेनोक्ता ।

२२ अथ स इत्यत्र । अन्तिमप्रश्न इत्यादि 'स विश्वजन्म' इत्यनेनोक्ते ईश्वरकृतिप्रश्ने या (?) कालादिशक्तिभिर्विश्वजन्मादिसंभवेऽपि स्वयं तानि किमर्थं चकारेत्याशङ्का तत्परिहारस्तेषामेव प्रयोजनत्वकथनात् लीलात्वेनोच्यत इत्यर्थः । सर्वदोषाभाव इति । 'करोति कर्माणि' इत्यत्र भगवदवतारकर्माणि किमर्थमित्यादिना वैयर्थ्यादिदोषा उद्भावितास्तेषामभावः । पुरुषोत्तमत्वाय च लीलेति । यदि लीलां न कुर्यात् तदा सर्वस्यैकरूपत्वेन तरतमभावाभावात् पुरुषोत्तमत्वं न सिध्येत् इति तदर्थं सेत्यर्थः । योगमायोपबृंहितत्वकथनप्रयोजनमाहु—उपायेनेत्यादि । सर्वमुक्त्यनन्तरमाश्रयलीलामात्रस्थितौ पुरुषोत्तमत्वमप्यागन्तुकं स्यादिति तन्निवृत्त्यर्थं सा माया योगार्थमेवोपायरूपेति तथा भगवति सम्बद्धा लीला कदापि भगवतो नापैतीति पुरुषोत्तमत्वं नित्यमित्यर्थः । सर्ववशीकरणमिति । मुक्तानां मुमुक्षूणां भक्तानां च वशीकरणम् । आनुपूर्वीकथनस्य प्रयोजनान्तरमाहु—तासामित्यादि ।

२३ भगवानित्यत्र । एवं प्रकारेण भवतीति । अहिकुण्डलवत् स्वत एव सर्वरूपोऽस्तीत्यर्थः । इति भगवत्त्वमिति । एतेन स यथा सैन्धवखिल्य उदके प्रास्त इत्यादि यो लयप्रकारः प्रवेशे सत्यभेदमतीतिविषयत्वं यज्ज्ञापितम्, यश्च तत्र परे देव एकीभवतीति श्रुतिच्छायामालम्ब्य रामानुजाचार्यैर्विशिष्टाद्वैतमात्रमुच्यते, तदेतल्लीलामूलकमिति ज्ञापितम् । उच्यत इति । अतिपौरुषाणीति प्रश्नोत्तरत्वेनोच्यते । शुद्धलीलाया भिन्नतया कर्तृत्वस्य कुतो नोत्तरत्वमित्याकाङ्क्षायां तयोः प्रकारमाहु—स्वयमित्यादि । तथा च तत्र प्रयासाभावान्न तदुत्तरत्वमित्यर्थः । अन्यथा काठिन्यमिति । चिति लयाभावे पृथक्करणे प्रयासः । चित्येव लये गमकमाहुः—स्वयमित्यादि । अमुक्तेत्यादि । तथा च जीवानाश्रितस्य सति लयाङ्गीकारेऽपि जीवाश्रितस्य तस्य जीवात् पृथग्भावे तेषां मुक्तिप्रसङ्गात्तदाश्रितं तच्चित्येव लीयत इति मन्तव्यम् । तथा च मुक्तजीवसम्बन्धिन सति शेषस्य चितीति निष्कर्ष इत्यर्थः । अनुगतिरिति । पृष्ठतस्तत्र गमनम् । पूर्वार्धे आत्मपदस्य सत्त्वेऽप्युत्तरार्धे यदुक्तं तत्प्रयोजनमाहु—तदेत्यादि । नानामतिसद्भावे सम्यक् लय उपपद्यत इत्यरुच्या सूक्ष्मेक्षिकया प्रकारान्तरं तथात्व एवाहु—अथवेत्यादि । तेनेति । आत्मत्वे आत्मेच्छानुगतेर्हेतुत्वकथनेन । तथेति एकांशेन विष्टम्भ ।

२४ स वा इत्यत्र । तिरोभावप्रकारेणेति । पराभिध्यानसूत्रोक्तप्रकारेण । कुतो नास्तीत्यपेक्षायामाहु—औपाधिकेत्यादि । औपाधिका धर्मा येषां तादृशां पदार्थानाम्, तदभावे तदभावान्नास्तीत्यर्थः ।

२५ सा वेत्यत्र । जगतः पूर्वावस्थायां भगवदतिरिक्तस्याभावात् सेत्यन्येन जाग्रती का वा शक्तिः प-

---

१ इतोऽग्रे 'रेवसङ्गतीर्नतु पृथक् । च (?) सङ्गतिरपीति बोधितम् । इति पाठोऽप्यस्ति २ तयो । ३ विष्टम्भ ।

रामर्शणायेत्यपेक्षायां तस्यास्तत्र सिद्धं स्वरूपं वदन्तः श्लोकमवतारयन्ति–एतानीत्यादि । यदात्मानमित्यत्र यत् आत्मानमिति पदच्छेदः । पूर्वोक्तेति । द्वितीयस्कन्धे चिच्छक्तित्वेनोक्ता । तदाहुः–अयमित्यादि। सतः सकाशादसदात्मिकेत्यभिप्रेत्याहुः–तस्या वेत्यादि । तथा च तमोरूपेत्यर्थः । पक्षान्तरमाहुः–त्रितयेत्यादि । आत्माऽसत्त्वज्ञानानां पिण्डिभावरूपा मायापदेऽणप्रत्ययोत्तरमादिवृद्धिर्बोध्या । भावरूपेति । अभिप्रायरूपा, धर्मरूपा वा । जगत् कृतवानिति । पूर्वस्माद्भिन्नं व्यावहारिकं जगत्कृतवानित्यर्थः ।

२६ कालवृत्त्या इत्यत्र । गुणक्षोभो जात इति । पूर्वोक्तेषु आत्मादिषु मानविषयीभूतेष्वात्मांशः सत्त्वत्वेन, असत्त्वांशस्तमस्त्वेन ज्ञानांशो रजस्त्वेन परिणममानो गुणसाम्यावस्थारूपं तत्स्वरूपं कृतवान् । तेन सा गुणमयी प्रथमकार्यरूपा जातेति बोध्यम् । तत एवं तस्या गुणक्षोभ इत्यर्थः ।

२७ तत इत्यत्र । तस्यामित्यादि । एतेन पुराणान्तरस्थाः शक्तिनाभिकमलाच्चतुर्मुखोत्पत्तिरेतत्सृष्टिसमानेति ज्ञापितं बोध्यम् । सर्ववेदेतिहाससारत्वात् श्रीभागवतस्य ।

३१ तैजसानीत्यत्र । पूर्वमुक्तैवेति । द्वितीयस्कन्धे उक्तैवेत्यर्थः । भूतसूक्ष्मपदस्याहङ्कारविशेषणत्वेऽहङ्कारादेव मात्राणां भूतानां च पृथगुत्पत्तिः । मात्राभ्यो मात्राः । भूताद्भूतमिति । तदाहुः–तदेत्यादि । तदा शब्दतन्मात्रस्यार्थबलादेव लाभ इत्याशयेनाहुः–यत इत्यादि ।

३४ अनिलेत्यत्र । ज्योतिरित्यस्य साधनमिति । ज्योतिःपदोक्तस्याम्भःकारणस्य सहकारि वा निर्वाहकं चेत्यर्थः ।

३७ एते देवा इत्यत्र । ज्ञानकर्मणोर्देवतेन्द्रियगोलकाधीनत्वात् प्रकृतदेवानां त्रितयस्याप्यसिद्धत्वात् स्तुतिः कथं सङ्गच्छत इत्याकाङ्क्षायां तदुपपादनं प्रतिजानते–एतेषामित्यादि । तत्र पूर्वं साङ्ख्याद्विलक्षणमेषां स्वरूपमाहुः–तत्त्वानीत्यादि । सामान्यकारणतेति । तेन सत्तासामान्यं धर्मान्तरं वा । तथा च यत्समाससाङ्ख्ये अष्टौ प्रकृतयः, षोडशविकारा इत्यारभ्य समाप्तौ एतत्परं याथातथ्यमित्युपसंहारादनारोपितरूपत्वेनैतेषां तत्त्वता रूढा बोधिता, साऽत्र नाऽभिप्रेता, किन्तु तस्य भावस्तत्त्वमिति यौगिक्यभिप्रेता, सा चैवं रूपा तु वैयाकरणप्रतिपन्नेत्यर्थः । नन्वेवं भगवद्भावरूपत्वे सच्चिदानन्दात्मकदेहादिकं सिद्धमेवेति काऽनुपपत्तिरित्यत आहुः–भावेत्यादि । तर्हि सच्चिदानन्दतिरोभावे कः प्रकार एतेषु शिष्ट इत्यत आहुः-यावदित्यादि । तादृशा इति । मूले देवा इत्युक्तत्वात् पुलिङ्गनिर्देशः । तथा च तत्त्वत्वजडत्वादिरूपसामान्यधर्मस्य मायात्वादिरूपविशेषधर्मस्य प्राकट्यमेतेषु क्रियत इति तावन्मात्रधर्माणो भवन्ति । किं बहुना, संदेशोऽपि(?)तेषु सत्ताख्यधर्मरूपेणान्तःप्रविष्ट इति तद्योगेनैते सन्तो न तु स्वरूपत इत्येवंरूपा भवन्तीत्यर्थः । तर्हि कथं देहवचनादिकं तत्राहुः–भगवत इत्यादि । प्रतिरूपतयेति । प्रतिनिधिरूपतया । कारणप्रतिरूपेति । कारणात्मकप्रतिरूपाणां मूलेन्द्रियाणाम् । तथा च तत्र यानि गोलकापन्नानि तान्यत्रेन्द्रियाणीत्यर्थः । एवमत्रेन्द्रियगोलकयोः सत्ता विचारिता । देवतासत्तां विचारयन्ति–अभिमानीत्यादि । नन्वभिमानिनां देवत्वे किं मानमित्यपेक्षायां धर्म एव मानमित्याहुः–अत एवेत्यादि । नाधिकबलत्वमिति । "कानीयसा एव देवाः" इति श्रुत्युक्तं न्यूनबलत्वम् । तथा चेदं देवत्वगमकमित्यर्थः । ननु श्रुतौ प्राजापत्यानुपक्रम्य पाठेनाऽत्र तदभावतस्तया वक्तुमशक्यत्वान्नेदं गमकमिति शङ्कायां तथात्वमुपपादयन्ति-

१ सतत्त्वेन　　२ सदंशोऽपीति स्यात्.

वेदे त्वित्यादि । तत्रेति । प्रजापतौ । तथा च तत्र तत्त्वाभावेऽपि चक्षुरादीनामुद्गानविचारे तेषामप्यभिमानिदेवतेन्द्रियगोलकान्यास्थेयानि । तत्र गोलकेन्द्रिययो पूर्वोक्तरीत्या कल्पना कृत्वा देवनाम्ब्धेऽभिमानिन एव तथात्वेन कल्पनीया । अतो न्यायसाम्यात् तत्र सिद्धं न्यूनवरत्वमत्राऽपि कार्यकरणान्नत्वा व्यक्ताभवत्सुखेनाभिमानिषु देवत्वं गमयिष्यतीत्यर्थः । न्यायसाम्यं स्फुटीकुर्वन्ति—यथात्वादि । तेषां प्रयत्नत इति । वेदद्यदितपात्रवत्स्थिरिति प्रजापत्यादीना चतुर्णां प्रयत्ने जगदाकारप्रयोजक इत्यर्थ । ननु तेषु यद्यभिमानिना जीवानामेव स्वदेहेन्द्रियनियामकत्वम्, तदा तद्वदस्मदादिदेहेष्वपि तैरेवेन्द्रियैरभिमानिना च कार्यसिद्धे किं तेषा नियामकत्वकल्पनेत्यत आहुः—आधिदैविकत्वादित्यादि । अस्मदिन्द्रियमूलभूतेन्द्रियात्मकदेवदेहाभिमानित्वात्तथोच्यत इत्यर्थः । ननु यदि तेषामेवं नियामकत्वम, तदाऽस्मदिन्द्रियाभिमानित्ववद्देवान्तरसर्वेन्द्रियाभिमानित्वमपि स्यादित्यत आहुः—अन्यथेत्यादि । यद्येव स्यात् तदा कनीयस्त्वज्यायस्त्वरहिता सौम्यत्वोच्छृङ्खलत्वादयो गुणदोषा , सर्वेन्द्रियनियमनं च प्रत्येकं स्यात् । भगवदाज्ञा च सृष्टिकृतिविषयिणी प्रत्येकं स्यात् । सर्वेषु सर्वसामर्थ्येन प्रत्येकमण्डनिर्माणे शक्तत्वात् यतो नेवमतः स्वदेहमात्र एव तेषा तथात्वम् . अन्यत्र तु अनियतकार्यकर्तृत्वमेवेत्यर्थ । सिद्धमाहु —अत इत्यादि। विसर्गे जीवेष्विति । पुरुषादुत्पन्नेषु ब्रह्माण्डस्य ब्रह्मादिदेवाना देहेषु । न काप्यनुपपत्तिरिति । तदिन्द्रियदेवतयोस्तेषामस्मदादीना वैलक्षण्ये चाऽनुपपत्तिर्नेत्यर्थ ।

एव तत्त्वाना वचनादिक विचार्य तत्कर्तृकस्तुतेस्तदनुप्रसङ्गेन ब्रह्मकृतर्षिकृतवक्ष्यमाणस्तुत्योश्च तात्पर्यं वदिष्यन्त प्रस्तूयमानस्यार्थस्य प्रकृतोपयोगायाहु —सृष्टौ त्वित्यादि । तुः सृष्टिसामर्थ्येऽपेक्षिते भक्त्यादिनिरूपण किंप्रयोजनमिति शङ्कानिरासे । सृष्टौ भक्त्यादेः सकाशात् यन्मोक्षसाधकं तत्तत्त्वादिस्तोत्ररूपेण निरूप्यते । तु पुन स्थितौ सर्वासु लीलासु तत् निर्धारत्रयं सृष्टिहेतुकमतस्तैस्तत्स्थिते सृष्टेश्च मोक्षसाधकरूपनिरूपणाय भक्त्यादिकथनमित्यर्थः । रूपम्यरूपमाहु —भगवदित्यादि । तथेति । मोक्षसाधकम् । तत्र गमकमाहु —साधकमित्यादि । भक्त्यादौ कामादिसाहित्यस्य दोषत्वादेवाऽग्रे कर्मादिनाश उच्यते । अतस्तद्रहितमेव तद्रूप तथेत्यर्थ । भक्त्यादिकथनप्रयोजनमुक्त्वा श्लोकसङ्ख्यया निर्धार्य तत्स्वरूपमाहु —कालेत्यादि । यतो ब्रह्मकल्पीयसृष्टिप्रकाराद्भिन्नप्रकारेणाऽत्र सृष्टिकरणं तच्च शुद्धया भक्त्या नैव भवेदत सा कालप्रयुक्ता त्रयोदशविधा निर्धार्यत इत्यर्थ । आद्याना चतुर्णामर्थमाहु —भक्तिमपत्नी इत्यादि । आद्ययोरिच्छायेच्छाबोधनाद्वसन्तभाव , द्वितीययो सरित्कथनात् ग्रैष्मभावो बाध्यः । अग्रिमाणा चतुर्णामाहु —राजस इत्यादि । पुरा प्रथमश्लोके । तदर्थं स्मृत्याद्यर्थं प्रार्थना । पश्चात् तृतीये इतरनिन्दया शरणगतिसाधनम्, चतुर्थे ज्ञानवैकुण्ठप्राप्तिरूप फलद्वयमित्यर्थ । अत्रायोक्ता प्रार्थनाऽन्तिमोक्त फल च राजसत्वगमकम् । आद्ययोर्मेघवदागमनानिकटवसन्तभावबोधक ज्ञेयम् । तदग्रिमाणामा(?)दूरत्वकथन वर्षाभावबोधकम् । अन्त्ययोः पदव्यासविलासानुगमनकथन शरद्भावबोधक ज्ञेयम् । तदग्रिमाणामाहु —तामस इत्यादि । अत्राद्ये ज्ञाननिन्दा तामसत्वबोधिका । अग्रिमेषु तु ज्ञाना भावः । अत्राद्ये वलस्याऽग्रे वियुक्तासामर्थ्यस्य कथन हेमन्तभावस्य, ततोऽन्नादनगर्भाधानस्य कथन शिशिरभावबोधक ज्ञेयम् । त्रयोदशस्याहु —मलवदित्यादि । द्विविधेति । परिपानसहृदानभेदेन द्विविधा । अत्र प्रार्थनावाक्यस्यान्यत्रान्वय । ससर्पन्मरत्त्वबोधकम् । द्वैविध्य चांहस्पतिसङ्ग्राहकम् । तस्य क्षयरूपत्वाच्च न सङ्ख्याधिक्यमिति ज्ञेयम् ।

---

१ आस्थेयानि २ स्वचीभवेत् ३ प्रतिनिया ४ देया- ५ सगम

३८ नमामेत्यत्र । प्रत्यक्ष इति । उचितामिति शेष । अनोक्तस्य पदार्थस्वरूपस्य स्थितिर्लीलारूपयोगात् । तत्र तत्र तद्बोधयितुं विवेचयन्ति–यत्रेत्यादि । एव नमनादिस्वरूपेऽपि बोद्धव्यम् । सगुणत्वादित्यादिहेतुद्वयं वक्तृगत प्रकारद्वयेनेत्यनेन सबद्धयते । निरूपयतीति । व्यासो निरूपयति । यतिशब्दोऽत्र योगारूढ इति बोधयितुमाहु–भगवन्मार्ग इत्यादि । ससारदु खमारभदशायामेवेति ज्ञापनायाहुः–बहिरित्यादि । बहिरिति । बाहिर्मुख्ये । हेतुरिति नमने हेतु । येपामित्यादिफक्किकार्थो नररत्ने " अज्ञानादथवा ज्ञानात् " इत्यत्र अनुसन्धेय ।

३९ धातारित्यत्र । अन्यार्थमित्यस्यैव विवरणम्–स्वप्रयर्थमिति । मूलस्थस्य आत्मन्नित्यस्य विवरणम्-स्वाभाविकमिति । आत्मनि विद्यमानमित्यर्थ । अङ्घ्रिमाश्रयेमेत्यनुक्त्वा छायामाश्रयेमेति यदुक्त तत्तात्पर्यमाहु –छायाप्राधान्येत्याऽन्यभाव (?) इत्यन्तम् । साक्षात् सम्बन्ध इति । उचित इति शेष ।

४० मार्गन्तीत्यत्र । पत्रपदतात्पर्यमाहु –यथा पत्र इत्यादि । छन्दसा सुपर्णत्वनिरूपण तत्त्वानामप्युपयोगीति ज्ञापनार्थम् । तेषा प्रजापतिस्थानापन्नत्वज्ञापनार्थं चाहु –छन्दांसि मे रथ इत्यादि । श्रुतिस्तु तैत्तिरीयब्राह्मणे । छन्दांसि मे रथो भवतेति, सोऽब्रवीत्प्रजापति युष्माभिरहमेतमध्वानमनुसञ्चराणीति । तस्य गायत्री च जगती च पक्षावभूताम्, उष्णिक् च त्रिष्टुप् च अनुष्टुप् च पङ्क्तिश्च धुर्यौ बृहत्येवोद्धिरभवत् । स एव छन्दोरथमास्थाय, एतमध्वानमनुसमचरदिति । तथा च वेदे यथा छन्दसा प्रजापतिहित उपयोगस्तथाऽत्रैपा हित इति ज्ञापनायाऽत्र सुपर्णत्वकथनमित्यर्थ । रथत्व तेपामामन्त्रणकृत पाश्चात्यम् । ननु स्वाभाविकामित्यतस्तस्य तात्पर्यान्तरमाहु –सुपर्णपदेनेत्यादि । मन्त्रायुर्वेदेति स्मृतिस्तु पतञ्जलेर्गौतमस्य वा सूत्रभूता बोध्या ।

४३ यस्सानुबन्ध इत्यत्र । द्वितीयामिति । शरणागतिरूपा कक्षाम् । प्रकारान्तरेण द्वितीयत्व बोधयन्ति– दोपेत्यादि । दोपेति द्वितीयपक्षे । मूले आग्रहविषयस्य त्रिधोक्तत्वादुभयत्र दोपस्य कथनाच्च स्वरूपविषयभेदेन त्रैविध्यं द्विधाभिमेतम्, तत्र पूर्वं विवृण्वन्ति–केवलेत्यादि । यथाकथञ्चिन्निर्वाह इति । यया कयाचिद्वृत्त्या सर्वथा देहगेहनिर्वाहार्थम् । तथा च फलविचारेणैवमाग्रहस्वरूपकृतम्, तत इत्येकं त्रैविध्यं भवतीत्यर्थ । द्वितीयमाहुः–देहेत्यादि । कल्पनाक्लेश इत्यरुच्या पक्षान्तरमाहु –अनुवादो वेत्यादि । आग्रहे स्वरूपदोपस्य नियमेन सिद्धत्वात् तस्यानुवाद एव असत्त्व देहगेहयोरेवाभिप्रेतम् । तर्ह्यनुवादस्य किं प्रयोजनमत आहु–तत्रेत्यादि । तथा च ऊढत्वैवानुवादप्रयोजनमित्यर्थ । चरणारविन्दाविति । चरणशब्दस्य पुलिङ्गत्वम्, उपमितसमासे पूर्वपदार्थप्राधान्यञ्चाभिप्रेत्य पुलिङ्गनिर्देश । पूर्वोक्तपक्षद्वयसिद्धमर्थमाहु –अतो येपामित्यादि ।

४४ तान् वा इत्यत्र । अन्त पदस्य कृत्यमाहु–मनसो रूपद्वयमित्यादि । विषयैरिन्द्रियाणामिन्द्रियैर्मनसश्चाकर्ष कामिनीकुचकुम्भदर्शनादर्शनादौ प्रत्यक्षेण शास्त्रेण च सिद्ध । तत्र मनसो यद्येकमेव रूप स्यात्, तदा आकर्षकाले विषयान्तरज्ञानं न स्यात् । न च यौगपद्याभिमान एव तत्रेति न तत्काले विषयान्तरज्ञानमिति वाच्यम्, तथा सत्यैकाग्र्यदशाया यन्नानाविषय ज्ञानं यच्च पुस्तकदर्शने चक्षु सन्निकृष्टनानाक्षरविषयमुपेक्षाज्ञानम्, तन्न स्यात् । यच्च योगेन व्यापकात्मज्ञान तदपि न स्यात् । तत्र वेगस्य प्रतिरुद्धत्वात् निवृत्तत्वात् । अतो रूपद्वयमेव युक्तमित्यर्थ ।

४५ पानेनेत्यत्र । राजसादिति । ल्यब्लोपे पञ्चमी ।

४६ तथापरे चेत्यत्र। अत्र ज्ञानिनां निरूपणात् कथं भक्तत्वमित्यत आहुः—फलत इत्यादि । आत्मविषयको वेति । समाधिरिति शेषः । तामसवासनामिति। प्रकृतिशब्दविवरणमिदम् । फलभक्ता इति फलदशायां भक्ताः ।

४७ तत्त इत्यत्र । स्वस्येति । स्वकर्तृकम् । अन्यथेति । भगवत्स्रष्टत्वाभावे ।

४८ यावदित्यत्र । अत एवेति । चक्षुरभावादेव ।

४९ स्वम्र इत्यत्र । कल्पनोपदेश इति । सारूप्यकल्पनाप्रयुक्तगौणाभियुक्त इत्यर्थः । तदुपपादयन्ति-अन्यथेत्यादि । स्फुटमग्रे । एवमत्र भगवत्कर्तृकसर्गे भूतोत्पत्तिर्निरूपिता ।

इति श्रीगोस्वामिपुरुषोत्तमजीमहाराजकृत–तृतीयस्कन्धसुबोधिनीप्रकाशे
पञ्चमाध्यायविवरणम् ।

---

## श्रीमद्भागवततृतीयस्कन्धश्लोकानामकारादिवर्णानुक्रमः ।

## तृतीयस्कन्धसुबोधिन्यां कारिकाणामनुक्रमः ।

॥ इति ॥

## श्रीनाथद्वारस्थतिलकायितमहाराजानां वंशावलिः ।

---

१ श्रीआचार्यजी महाप्रभुजी ( श्रीवल्लभाचार्यजी )

२ श्रीगुसांईजी ( श्रीविठ्ठलनाथजी )

३ श्रीगिरिधरजी.

४ श्रीदामोदरजी.

५ श्रीविठरायजी.

६ श्रीगिरिधारीजी.

७ श्रीवडेदाऊजी.

८ श्रीविठ्ठलेशजी.

९ श्रीगोवर्धनेशजी.

१० श्रीवडेगिरिधारीजी.

११ श्रीदाऊजी.

१२ श्रीगोविंदजी.

१३ श्रीगिरिधारीजी.

१४ श्रीगोवर्धनलालजी.

१५ चि० श्रीदामोदरलालजी.



### सविनयमभ्यर्थना ।

---

इह मुद्रणोपयोगिप्रशस्ततरवस्तूनां यथासमयमसुलभतया मुद्रणादिकर्मणां बहुद्रव्यसाध्यतया प्रज्ञास्थितेरप्यनैकान्तिकतया सर्वात्मनैवास्मद्दुरवगाहग्रन्थविमर्शनापटुतया प्रकाशपुस्तकस्य शुद्धस्याऽनुपलभ्यतया च यथास्थानमङ्कदाने पाठसंवादे च यदत्र विधातुं न पारितं तद्गुणग्रहयालुभिः सद्भिः समीकरिष्यत इति शुभम् ।